शासननायकश्रीवर्द्धमानस्वामिने नमः ॥

श्रीमान् गणाधीशो विजयतेतमाम् ॥

# प्रास्ताविकम्

श्रीमद्‌भिः वीतरागसर्वज्ञपरमात्मभिः जगज्जन्तूद्धाराय सम्यग्दर्शनसहित-ज्ञानपरिपूत-क्रियात्मका-ऽऽत्मकल्याणमार्गः ज्ञानिनिश्रा-विधिसमुपसेवासमुपबृंहितः प्रज्ञप्तः त्रिपमकर्मावरणविलयनप्रभुः । नैकत्र विप्रतिपत्तिः यदेतस्मिन् राजमार्गे सञ्चरणे सत्यपि कर्मावरणानपगमो वाऽऽत्मिकसुखानवाप्तिश्च । नैकैराराधकपुण्यात्मभिरेतन्मार्गस्याव्याहतत्वमुद्‌घुष्टं पुरा कोटिलक्षाधधिविपुलसमूहात्मकसिद्धिगमनेनेदानीमपि विवेकिभिः पुण्यात्मभिः विषमदुष्षमारप्रभावमपसर्पयद्‌भिः विविधव्यामोहजनकविषमनिमित्तानुपजीवकैः विषयवासनाव्यावर्त्तवर्द्धकमोहकपदार्थप्रलोभनं निष्फलयद्‌भिः सद्धर्माराधनपरैरिति ।

परन्तु नहि सर्वे आराधकपुण्यभाजः तादृशसत्त्वगुणसनाथाः भवन्तीत्यतः कर्मणां च कषायलेश्यावशेन चिरप्ररूढानां निकाचितानामनिकाचितानां द्रव्य-क्षेत्र-काल-भाव-भवस्वरूपनिमित्तपञ्चकेनोदयः विपाकरूपः भवतीत्यतश्च पुराऽज्ञानादिबलेनोपार्जितानां कर्मणामशुभद्रव्यादिपञ्चकबलेन जायमानाऽशुभोदयसन्निरोधार्थं सकामनिर्जरार्थं च परिपुष्टप्रगुणतमविशिष्टसामग्रीसहयोगसम्पत्तये उपयोगिपापह्रासपुण्योदयप्राबल्याधानाय जम्बूद्वीपगतैतद्‌भरतक्षेत्रातिरिक्तचतुर्दशकर्मभूमिषु लोकत्रये वा यदधिकं यत् सदृशं वा कर्मक्षयायानन्यथासिद्धहेतुभूतयात्रास्पर्शनादिवत्तीर्थं भूमिश्च न वर्त्तते । एतादृशसुमहिमशालिपरमप्रभावसम्पन्नं विशिष्टशुद्ध-शुभाऽध्यवसायप्राप्तये उपयोगि कर्मनिर्जरार्थं विशिष्टतमक्षेत्रावलम्बनरूपैतच्छ्रीविमलाचलक्षेत्रप्रभावेण बहूनां पुण्यशालिनां सुविशदभावाध्यवसायप्राप्तिश्च सुतरां भवत्येवेत्यतः पारगतगदितागमानुसारिश्रद्धालुजनेषु 'श्रीशत्रुञ्जयसमं तीर्थं न भूतं न भविष्यती' ति सूक्तिः सुप्रसिद्धतरा वर्त्तते ।

अत एव श्रीमज्जिनेन्द्रशासनधुराधरणधौरेयमनोबलभ्राजिष्णुनिष्कारणकरुणावरुणालय-मुमुक्षुभव्यजीवजीवजीवनजीवातुसमजिनपतिगदितविशुद्धात्मस्वरूपपरिचायकजिनवाणिमर्मस्पर्शिसुदेशनादक्ष-सीमातीत वर्णनातिगगुणगरिमाञ्चित-सुविशुद्धक्रियासम्यग्ज्ञानपरिपूत-श्रीमत्तपागणगगनाहर्मणिसमप्रभयथार्थाभिधानुगुणचिरप्ररूढकर्मप्रपञ्चोच्छेदनक्षमधर्मघोषकरणप्रत्यल—सुधीराञ्चितधिषणाप्राग्भारपराभूतसुरगुरुसुरगुरुपूजिताऽहर्निशस्मरणीयनामधेयैः श्रीमद्‌भिः धर्मघोषसूरीश्वरमतल्लजैः विषमारकालसहज-मेधा-श्रद्धाऽऽयु-धारणाशक्तिह्रासमवगत्य सर्वजीवात्मतुल्यभावप्रकर्षेण भववनप्रजायमानममतारण्यानी समूलङ्कषोच्छेदनसमजिनशासनाराधना-सुभगाध्यवसायनैर्मल्यप्रवृद्धेन भावदयारूपेण विशुद्धपरिणामव्रातेन मनुजत्वाऽऽर्यक्षेत्रोत्तमकुल — पञ्चेन्द्रियपाटवसद्धर्माराधनसफलसामग्रीपरिकलितश्राद्धकुलोत्पत्तिसन्मार्गश्रवणादि यथोत्तरदुर्लभतमधर्माङ्गप्राप्तिसनाथाराधकपुण्यात्मनां श्रेयःप्रेप्सूनां हिताय प्रत्नातिप्रत्नपूर्वगतोद्धृतवृद्धश्रीशत्रुञ्जयकल्पादेरुद्धृत्य एकोनचत्वारिंशद्‌गाथात्मक-श्रीशत्रुञ्जयलघुकल्पः प्रग्रथितः ।

यमुपजीव्य विषमभववारिधिनिमज्जज्जन्तूद्धारे यानपात्रायमानमकलभुवनानन्यश्रेष्ठं तीर्थाधिराजं श्रीसिद्धगिरिराजं संस्मरेयुः शब्दकलेवरलघुतया मुखपाठकरणेन च प्रत्यहं कल्पपठित स्वात्मानं गिरिराजसंस्मरणोद्भवविशुद्धपरिणामव्रातेन विषमेभ्यः कर्मनिगडेभ्यो मोचयेयुः इति ।

परं संक्षिप्तरुचीनां परमपवित्रश्रीशत्रुञ्जयतीर्थराजस्मृत्याऽन्तःकरणं गिरिराजस्पर्शनाभावनाबलेन विनिर्मलीकृत्य श्रीविमलाद्रियात्रातुल्यलाभस्य प्राप्तावपि तीर्थोत्तंसस्य सिद्धक्षेत्रस्यैतस्य पवित्रगिरिराजस्य विशदतरमहिमानभिज्ञबालजीवानां संक्षिप्तगाथापद्धतिना बीजकरूपेण ग्रथितस्य श्रीविमलाद्रेः सातिशयं सप्रभावं माहात्म्यं यथावत् बुद्धिगम्यं स्यात्, येन च जनिमृतिविषमचक्रेऽवस्थितिमूलभूतकर्मबीजसन्तानोच्छेदाय गिरिराजस्य विमलाद्रेः यथार्थाभिधानस्य सद्भूतं गुणगरिमाणमवगम्य भावोल्लासेनैतत्तीर्थस्पर्शन-दर्शन-वन्दन-अर्चा-पूजा-स्मरणादिप्रकारैः विविधमुपचच्छेयुः स्वात्मशुद्धिलक्ष्यं च सफलयेयुरितिहेतोः तपागच्छाधिराज-श्रीयुत-सहस्रावधानिसूरिसत्तम-श्रीमुनिसुन्दरसूरिशिष्यैः नैककथाप्रबन्ध-चरित्रग्रन्थादिप्रणेतृभिः श्रीशुभशीलगणिभिः लघुकल्पस्यैतस्य गाथानां प्रतिपदं व्याख्यात्मकं मन्दबुद्धितत्त्वज्ञानबोधनेऽपटुबुद्धिमतां हिताय च सरसैतिह्यसत्यघटनारूपविविधपुण्यशालिजीवदृष्टान्तबहुलतासनाथं विवरणं ब्रह्मचर्यभेद (१८) कर्मभूमिप्रमित (१५) (१५१८) वैक्रमेऽब्दे बालजीवानां प्रबोधायाऽकारि ।

महाकायश्चैष ग्रन्थः नाद्यावधि मुमुक्षूणां वाचनश्रवणगोचर आसीदिति विभाव्य प्राचीननैकहस्तलिखितसङ्ग्रहानवलोक्य विविधप्रतीः गवेषय्य सुगृहित-नामधेयाऽऽगमतलस्पर्शिमर्मज्ञ-प्रौढप्रतिभोद्रेकविराजिताऽऽगमवाचनादायक-ध्यानस्थ- स्वर्गताऽऽचार्याऽऽगमोद्धारकापराह्व-श्रीआनन्दसागरसूरीशैरेतद्ग्रन्थस्य सुतरां सम्यग्दर्शननिर्मलताऽवन्ध्यबीजस्य श्रीसिद्धाचलतीर्थाधिराजमन्महिमख्यापकस्य ग्रन्थराजस्य योग्यस्वच्छप्रतिलिपिः भूयसा श्रमेण विविधागमसाहित्यमुद्रापण-शिला-ताम्रपत्रोत्कीरण-व्याख्यान-विवेचनादिकार्यजाते व्यापृतत्वेऽपि तीर्थाधिराजमहिमानं विविधकल्मषक्षालनप्रभविष्णु विभाव्य स्वपरोपकाराय कारिताऽऽसीत् । सा च सूर्यपुरीयाऽऽनन्दपुस्तकालयसद्मन-पूज्याऽऽगमोद्धारकाचार्यश्रीश्रुतभक्तिस्मारक-विपुलतमसङ्ग्रहे सुरक्षिताऽऽसीत् ।

परमेतस्याः प्रकाशनं तु काललब्धिसापेक्षं एवं हि सञ्जातं यत् पूज्यपादागममर्मज्ञाऽऽचार्यश्रीजन्मना नवाङ्गवृत्तिकारश्रीमदभयदेवसूरीश्वरस्वर्गवासेन च परिपूतश्रीकर्पटवाणिज्यद्रङ्गे यतिधर्म (१०) तत्पालनरूपेण च परित्यज्यमानहिंसाया विश्वा (२०) संज्ञमेदमित-(२०१०) वैक्रमेऽब्दे श्रीचिन्तामणिपार्श्वनाथजी गेोद्धारितं नूतनप्रासादे वर्णप्रमाणचतुर्विंशतिविम्बाञ्जनशलाकादिमहोत्सवप्रसङ्गे पूज्यागमोद्धारकपट्टप्रतिष्ठित-शास्त्रैदम्पर्यबोधक-मूलीशरेनप्रतिबोधक-वात्सल्यसिन्धु-पूज्यतमगच्छाधीश्वर-श्रीमन्माणिक्यसागरसूरीश्वरप्रभुनिश्रायां पूज्यागमोद्धारकाचार्यश्रीलघुशिष्योत्तंस-सप्तवर्षमितलघुवयसि पित्रा-

मात्रा स्वस्रा सत्रा सुदीक्षित-सप्तविंशतिसंख्यसुदीक्षितस्वजनसम्बन्धिक-कर्मग्रन्थादिविचारचतुरसुनिपुणमतिराजित-पूज्य-गणिवर्यश्रीसूर्योदयसागरजिन्महाराजप्रेरणया पूज्याऽऽचार्यपादसुभक्तिरागाश्रित-श्राद्धवर्यैः पूज्यागमोद्धारकाचार्यैराजीवन वाचना-पठन-पाठन-व्याख्यानुयोगादिरूपेण कृताया: श्रुतभक्ते-रुपबृंहणाय तैः प्रस्थापितां श्रुतभक्तिं समुपजीवयन्ती 'श्रीआगमोद्धारक-ग्रन्थमाला' पूज्यागमोद्धारका-चार्यश्रीसन्दृब्धविविधसाहित्यं तैः पूज्यपुरुषैश्च मुद्रणाय सङ्कलितग्रन्थराशिगतं महत्त्वपूर्णं साहित्यं पूज्य-गच्छाधिपतिनिश्रया प्रकाशमाप्नुयादिति निर्णयस्य मूर्त्तस्वरूपभूता संस्थापिता ।

एतया ग्रन्थमालया च षोडशवर्षीययाऽद्ययावत् विविधानि भव्यजनोपयोगीनि पुस्तकानि पूज्या-गमोद्धारकाऽऽचार्यविरचितानि प्रकाशितानि ततश्च यथोत्तरमेषा च ग्रन्थमाला सुविशदोज्ज्वलयशः-ख्यातिमाप्नुवती, शिरोरत्नभूतो ह्येष ग्रन्थ एतस्या ग्रन्थमालायाः नाऽद्यावधि कुत्रापि प्रतिशर्करमनन्त-सिद्धावासभूतस्य गिरिराजस्य विमलाद्रेः विविधविषयविवेचकः माहात्म्यख्यापकः सुन्दरतमदृष्टान्तोप-निबद्धव्याख्यासनाथः बालजीवोपयोगी प्रकाशितो वर्त्तते ।

अत एव वार्धक्यशरीरापाटवनैकविधशासनसम्बन्धिकार्यजातव्यापृतिप्रभृतिप्रत्यपायानविगणय्य तत्त्वविवेचक-शान्तमूर्त्ति-करुणावात्सल्यपरिपूर्णान्तःकरण-श्रीमद्गच्छाधिपतिभिः गुरुभक्तिसेवापरायण-विद्वन्मतल्लिकाज्योतिषशास्त्रसुनिपुण-प्राचीनशास्त्रसंशोधनादिकार्यसुदक्ष-पूज्यगणिवर्यश्रीलाभसागरजिन्म-हाराजद्वारैतद् ग्रन्थमुद्रापणं विहितमेतद्धि अतिशयेन प्रमोदावहं गुणगरिमाश्चितविदुषां सरलाशयमुमुक्षु-ताविभ्राजिबालजीवानां चेति ।

प्रान्ते च प्रार्थये समधिकपवित्रपरमाणुपुञ्जमय-श्रीशैलेन्द्रनगाधिराज-श्रीशत्रुञ्जयस्य तीर्थस्य महिमव्यावर्णनगर्भस्य कल्पस्यैषा भूरिप्रथितैतिह्यचरितकथासन्दर्भात्मिकां सुविशदतरां वृत्तिं सम्प्रधार्य सुरुचिपूर्वं भावोल्लासवृद्धये एतद्वाचनादि समुपयुज्य समेऽपि भव्यजीवाः कल्याणपथगामिनो भवेयुरिति शुभाशंसापूर्वं प्रचुरपुण्यसन्दोहलभ्यस्य विमलाद्रेरेतस्य लघुकल्पव्यावर्णनस्वरूपस्य ग्रन्थस्य 'प्रास्ताविक' लिखनसौभाग्यं वात्सल्यवारांनिधि-प्रशमपयोनिधि-पूज्यतमगच्छाधीश्वरप्रेरणया सहृदयिजनोत्तंसविद्वन्मत-ल्लिकाश्रीलाभसागरगणिवरैः सम्पादितमिति च भूयोभूयोऽनुमोदये एतादृशं स्पृहणीयसेवाऽवसरप्राप्त्या शासनपद्धत्या कर्मनिर्जरापथि समुत्सर्पणलाभाधिगत्येति विनिवेदये क्षयोपशमवैचित्र्यमूलक-स्वस्खल-नासम्बन्धि मिथ्यादुष्कृतदानपूर्वं पूज्यागमोद्धारकाचार्यश्रीपट्टविनेय-श्रीसिद्धचक्राराधनतीर्थोद्धारक-वैयाक-रणकेशरी स्वर्गताचार्यश्रीचन्द्रसागरसूरिवरश्रीपरमविने-यशान्तमूर्त्ति-तपस्विधुरीण-शासनसंरक्षक-सुगृ-हितनामधेयतारकवर्य-पूज्यगुरुदेवोपाध्यायश्रीधर्मसागरजिन्महाराजचरणारविन्दमिलिन्दायमानोऽभयाब्धिः श्रमणसङ्घस्य सेवकः इति ।

जैन उपाश्रयः इन्द्रपुरं (इन्दोर) (म. प्र)

वीर नि. सं. २४९६ वि. सं. २०२६.

शुभं भूयात् सर्वजीवानाम् ।

# विषयानुक्रमः


| विषय | पृष्ठाङ्क |
|---|---|
| मङ्गलाचरणम् | १ |
| एकविंशतिः नामानि । | २ |
| विमलगिरिनामविषये सूरभूपर्षिकथा । | २ |
| मुक्तिनिलयनामदाने वीरसेननृपकथा । | ५ |
| शत्रुञ्जयनामोपरि शुकभूपकथा । | ८ |
| सिद्धक्षेत्रनामोपरि दण्डवीर्यनृपकथा । | १४ |
| पुण्डरीकनामोपरि श्रीवृषभजिन-प्रथमगणधरपुण्डरीककथा । | १५ |
| सिद्धशेखरनामोपरि पद्मभूपकथा । | १६ |
| सिद्धपर्वतोपरि निर्जरकथा । | १८ |
| सिद्धराजोपरि चन्द्रचूडादिभूपकथा । | १९ |
| वाहुवलीनामोपरि केलिप्रियभूपकथा । | २० |
| मरुदेवोपरि चन्दनमहीपतिकथा । | २१ |
| भगीरथनामोपरि सगरचक्रिपुत्र-भगीरथकथा । | २२ |
| सहस्रपत्रनामोपरि सहस्रपत्रकुमारकथा । | २३ |
| शतावर्त्तनामोपरि सोमदेवमहीपतिकथा । | २४ |
| कूटशताष्टोत्तरनामोपरि वीरनृपतिकथा । | २५ |
| नगाधिराजोपरि निर्जरकथा । | २६ |
| सहस्रकमलोपरि वीरभूपकथा । | २७ |
| ढङ्कनामोपरि हरभूपकथा । | २८ |
| कोटिनिवासोपरि धर्मनन्दनभूपतिकथा । | २९ |
| लौहित्यनामोपरि लौहित्यर्षिकथा । | ३० |
| तालध्वजनामोपरि धरापालभूपकथा । | ३१ |
| कदम्बकनामोपरि इन्द्रश्रेष्ठिकथा । | ३२ |
| रत्नाकरविषये सोमभीमकथा । | ३६ |
| विवरविषये भीमभूपकथा । | ३७ |
| ओषधिविषये पद्मसेननृपकथा । | ३८ |
| रसकूपिकोपरि सुन्दरकथा । | ३९ |
| षट्सु अरकेषु गिरिप्रमाणम् । | ४१ |
| उच्चादि प्रमाणम् । | ४१ |
| असंख्याता तीर्थकरा अत्र सिद्धिं गताः । | ४१ |
| ऋषभजिनस्य शत्रुञ्जयागमनसम्बन्धः । | ४४ |

| विषय | पृष्ठाङ्क |
|---|---|
| पद्मनाभादि भाविजिना अत्र मुक्तिं गमिष्यन्ति । | ४२ |
| भाविजिनानां शत्रुञ्जये मुक्तिगमन-सम्बन्धः । | ४२ |
| नेमिनाथं विना त्रयोविंशतिः जिनाः शत्रुञ्जये समवासार्षुः । | ४५ |
| अजितजिनसम्बन्धः । | ४५ |
| सम्भवजिनसम्बन्धः । | ४६ |
| अभिनन्दनजिनसम्बन्धः । | ४७ |
| सुमतिजिनसम्बन्धः । | ४९ |
| पद्मप्रभजिनसम्बन्धः । | ५० |
| सुपार्श्वजिनसम्बन्धः । | ५२ |
| चन्द्रप्रभजिनसम्बन्धः । | ५३ |
| सुविधिजिनसम्बन्धः । | ५४ |
| शीतलजिनसंबन्धः । | ५५ |
| श्रेयांसजिनसंबन्धः । | ५६ |
| वासुपूज्यजिनसंबन्धः । | ५८ |
| विमलजिनसंबन्धः । | ५९ |
| अनन्तजिनसंबन्धः । | ६१ |
| धर्मजिनसंबन्धः । | ६२ |
| शान्तिजिनसंबन्धः । | ६३ |
| कुन्थुजिनसंबन्धः । | ६४ |
| अरजिनसंबन्धः । | ६५ |
| मल्लिजिनसंबन्धः । | ६७ |
| मुनिसुव्रतजिनसंबन्धः । | ६८ |
| नमिजिनसंबन्धः । | ६९ |
| पार्श्वजिनसंबन्धः । | ७० |
| वीरजिनसंबन्धः । | ७५ |
| श्रीनेमिनाथस्य शत्रुञ्जयगिरेरूर्ध्वानारोहणस्वरूपम् । | ७६ |
| चन्द्रवेगजिनस्य शत्रुञ्जसमागमन-संबन्धः । | ७७ |
| पुण्यपालकथा । | ७८ |

| विषयः | पृष्ठाङ्कः |
|---|---|
| महाबाहुभूपत्रिविक्रमराजर्षिमुक्तिः । | ८० |
| सर्पजीवसम्बन्धः । | ८८ |
| सुधासेनभूपकथा । | ९० |
| धरापालभूपादीनां मुक्तिगमनम् । | ९१ |
| नीलपुत्रादिसम्बन्धः । | ९३ |
| शत्रुञ्जयानदीप्रभावे शान्तनभूपकथा । | ९७ |
| चन्द्रप्रभासतीर्थसम्बन्धः । | ९८ |
| नेमिस्थापनासम्बन्धः । | ९९ |
| भरतचक्रिसम्बन्धः । | १०० |
| श्रेयांसकुमारसम्बन्धः । | १०२ |
| पुण्डरीकसिद्धिगमनम् । | १०४ |
| बाहुबलिकारितश्रीमरुदेवीभवनम् । | १०५ |
| नमिविनमिमुक्तिगमनम् । | १०६ |
| नमितत्पुत्रीमुक्तिगमनम् । | १०८ |
| आदित्ययशोभूपानां सम्बन्धः । | १०९ |
| ईशानेन्द्रोद्धारः । | ११३ |
| प्रथमनाकीन-वीर्यसारनृपोद्धारः । | ११३ |
| कियतां सङ्घेशानां सम्बन्धः । | ११४ |
| सगरचक्रिसम्बन्धः । | ११४ |
| व्यन्तरेशकृतोद्धारः । | १२१ |
| शान्तिनाथस्य चतुर्मासस्थितिः शत्रुञ्जयेऽभूदिति । | १२७ |
| द्राविडवालिखिल्लादि-भूपालर्षिमुक्तिः । | १३२ |
| जैनगीता । | १३५ |
| नारदमुक्तिगमनम् । | १९८ |
| नन्दिषेणसूरि-अजितशान्तिस्तवसम्बन्धः । | २०० |
| श्रीकृष्णचरितम् । | २०१ |


द्वितीयो विभागः


| विषयः | पृष्ठाङ्कः |
|---|---|
| स्थापत्यसुत-शुकसूरिमुक्तिगमनम् । | १ |
| असङ्ख्योद्धारविषये कथा । | ४ |
| द्विप्रहररामकथा । | ८ |
| कुलध्वजकुमारकथा । | १२ |
| वागडचन्द्रप्रभजिनसम्बन्धः । | १५ |
| पाण्डवचरित्रम् । | १९ |
| गुहास्थश्रीऋषभजिननमनत एकावतारी । | ५२ |
| „ भवत्रयमुक्तिगमने नन्दभूपकुमारः । | ५३ |
| देवमङ्गलविबुधदेवनमस्कारः । | ५५ |
| सम्प्रत्यादीनामुद्धाराः । | ५५ |
| सम्प्रतिनृपचरित्रम् । | ५६ |
| विक्रमार्ककृतोद्धारः । | ७३ |
| आम्रभटमन्त्रिकथा । | ७४ |
| वाहडेनपट्टकूलका पत्तने आनीता । | ७६ |
| वाहडोद्धारप्रबन्धः । | ७७ |
| सातवाहननृपोद्धारः । | ८० |
| पादलिप्तोद्धारः । | ८२ |
| आमभूपकृतशत्रुञ्जयोद्धारः । | ८६ |
| बप्पभट्टिसूरिचरित्रम् । | ८७ |
| आमभूप-तत्पुत्रदुन्दुक-भोज-बप्प-भट्टिसूरिसम्बन्धः । | ९७ |
| शिलादित्यभूप-धनेश्वरसूरिसम्बन्धः । | १०३ |
| कालकसूरिसम्बन्धः । | १०५ |
| जावडिप्रबन्धः । | १०६ |
| शिलादित्यप्रबन्धः । | ११७ |
| ललितासरोऽनुपमासरःसम्बन्धः । | ११७ |
| मरुदेवीसंतिभवणगाथासम्बन्धः । | ११९ |
| तिरश्चामपि मुक्तिगमने निःपुण्यककथा । | १२१ |
| व्याख्याते भीमकथा । | १२४ |
| जलोपसर्गनिवारणे मीनध्वजभूपकथा । | १२९ |
| ज्वलनोपशमे विद्याधरकथा । | १३१ |
| रणे जयप्राप्तिविषये मित्रसेनकथा । | १३२ |
| हरिविषये क्षमर्षिकथा । | १३४ |
| करिविषये चतुर्मित्रकथा । | १३५ |
| विषहरविषये देवसेनकथा । | १३६ |
| रोगोपशमे कुष्ठिककथा । | १३७ |
| भद्रबाहुरचितकल्पसम्बन्धः । | १३७ |
| वज्रस्वामिसम्बन्धः । | १४१ |
| पादलिप्तसूरिसम्बन्धः । | १४४ |
| शत्रुञ्जयस्मरणे पृथ्वीपालभूपकथा । | १४७ |
| शत्रुञ्जययात्रायां साधुगुणराजसम्बन्धः । | १४८ |

# प्रकाशकीय-निवेदन

સાડા બાર હજાર શ્લોકપ્રમાણ વૃત્તિસહિત 'શત્રુંજય-કલ્પ' નામના આ મહાકાય ગ્રંથને આગમોદ્ધારક-ગ્રંથમાલાના ૪૧મા રત્ન તરીકે પ્રગટ કરતા અમને બહુ આનંદ આવે છે

આ ગ્રંથ જલ્દી પ્રકાશિત થાય એ માટે જુદા જુદા બે પ્રેસમાં છપાવવામાં આવ્યો છે. તેથી એના બે વિભાગ પાડવામા આવ્યા છે પરંતુ એ ગ્રંથકારના કરેલા નથી

આનું સંશોધન એક પ્રતિ 'જૈનાનંદ-પુસ્તકાલય-સુરત'ની અને બીજી છાણીના ભંડારની વિધિવાળા સોમચંદભાઈ હરગોવિંદદાસ દ્વારા પ્રાપ્ત થએલી હસ્તલિખિત પ્રતિના આધારે કરવામાં આવ્યું છે.

આ ગ્રંથનું સંશોધન પૂજ્ય ગચ્છાધિપતિ આચાર્ય **શ્રીમાણિક્યસાગરસૂરીશ્વરજી** મહારાજની પવિત્ર-દૃષ્ટિ નીચે શતાવધાની મુનિરાજ લાભસાગરજી ગણિએ કરેલ છે. તે બદલ તેઓશ્રીનો તથા પ્રતિ અને દ્રવ્ય આપવાની સહાય કરી છે. તે બધાનો આભાર માનીએ છીએ.

લી.

પ્રકાશક

आनन्दोदधिसूरिराड् जिनमते दीपोपमो योऽभवत्  
पट्टे तस्य च योऽस्ति सूरिपदभृद् माणिक्यसिन्धुः सुधीः ।  
पानाचन्द्रसुश्रावकस्य तनयः सच्छीलगङ्गाऽङ्गजः  
श्रीशत्रुञ्जयकल्प एष विवृति-स्पृक् तेन सम्पादितः ॥१॥

संशोधक

# —: शुद्धिपत्रकम् :—

तथाहि–तपागच्छाम्बरादित्याः श्रीमद्देवेन्द्रसूरयः । आसँस्तेषां विनेयास्तु श्रीविद्यानन्दसूरयः ॥१४॥

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २१ | निलय-पुंडरिओ | निलयं-पुंडरीओ |
| २ | २६ | जओ | जयउ |
| ३ | ४ | शैंकं | शैंकां |
| ३ | १२ | नंस्यते | नश्यते |
| ३ | २० | धनैः | धनाद्यैः |
| ३ | २६ | राज्य | राज्यं |
| ४ | २२ | ज्ञान्युदित | ज्ञान्युदितं |
| ४ | २५ | कुवन् | कुर्वन् |
| ५ | ५ | वर्ध | वर्य |
| ६ | २३ | कुर्वतो | कुर्वन्तो |
| ८ | ११ | वलं | चलं |
| ८ | ११ | पृच्छं चलः | पुच्छाश्चलः |
| ८ | १२ | वृषा | मृषा |
| ९ | १६ | मेदनी | मेदिनी |
| ११ | ३ | सभीयि | समीयि |
| ११ | ५ | ध्वजपिं | ध्वजपिं |
| ११ | १० | कस्त्व | करत्वं |
| ११ | १६ | रवेच्छया | स्वेच्छया |
| १३ | २६ | रुवतं | रुवतं |
| १६ | १५ | तिर्जि | तिं ज |
| १७ | १९ | महीं | महीं |
| १८ | १७ | सभा | समा |
| २१ | १ | यन् | यत् |
| २१ | ६ | प्राप्य | प्राप |
| २२ | १३ | यथौ | ययौ |
| २४ | २ | न्तहृष्टो | न्तर्हृष्टो |
| २४ | १४ | वलं | वलं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६ | २७ | मुक्तिर्य | मुक्ति य |
| ३१ | ७ | द्रतम् | द्रुतम् |
| ३१ | १० | प्रकुटो | प्रकटो |
| ३२ | २५ | ततप्रिये | तत्प्रिये |
| ३२ | २८ | दध्यौ | दध्यौ |
| ३३ | २८/२९/३० | श्वसुर | श्वशुर |
| ३४ | २४ | त्व | त्वं |
| ३५ | १० | ज्ञातं | ज्ज्ञानं |
| ३५ | १६ | कैलाशः | कैलासः |
| ३६ | २८ | वरिंदा | वरिंदा |
| ३९ | १७ | सुनु | सूनु |
| ३९ | २४ | श्रेष्टया | श्रेष्ठया |
| ३९ | २८ | मंत्रि | मित्र |
| ४१ | १७ | गजाहि | गजादि |
| ४२ | २२ | मो | मे |
| ४२ | २६ | सम्पूर्णा | सम्पूर्णाः |
| ४२ | २८ | धृनियि | धूनयि |
| ४५ | ९ | गुरू | गुरु |
| ४६ | ५ | कारितः | चारितः |
| ४८ | १६/२३/२८ | श्रेष्टय | श्रेष्ठय |
| ४८ | २८ | सूनोर्य | सूनोर्य्य |
| ४९ | २४ | हस्ता | हस्ती |
| ५० | ८ | हस्तः | हस्ताद् |
| ५० | १५ | उत्तीर्य | उत्तार्य |
| ५१ | ८ | कमा | क्रमा |
| ५१ | २७ | वा-पं | चा-पं |
| ५२ | २७ | त्वं सु | त्व–ग |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | ६ | सुन्दरे | सुन्दरा |
| ५५ | ५ | कमर | कर्मर |
| ५६ | १० | पुएर्णां | पुण्णं |
| ५७ | १६ | पत्र्यंङ्क | पत्र्यङ्क |
| ५८ | १ | वैत्रित्र्यं | वैचित्र्यं |
| ५९ | १६ | मुम् | म् |
| ६० | ६ | लला | ललौ |
| ६१ | ८ | ह्वपु | ह्वये पु |
| ६८ | १६ | वका | वंका |
| ७० | १३ | दीक्षां | शिक्षां |
| ७० | २० | कदचि | कदाचि |
| ७७ | ७ | कर | करः |
| ७७ | २६ | नाथीवतं | नाथोक्तं |
| ७९ | १० | द्रुह्वि | द्रुह्वि |
| ८० | १० | वान्धवा | वान्धवाः |
| ८१ | ४ | नृप | नृपं |
| ८१ | २६ | स्तरा | स्तरो |
| ८१ | २८ | भोक्तव्य | भोक्तव्यं |
| ८१ | २९ | वाणं | वाणाद् |
| ८४ | ५ | पुष्पैः | पुष्पैः |
| ८४ | २१ | सरा | सरो |
| ८५ | ७ | द्रवम् | रवम् |
| ८५ | १७ | एव | एवं |
| ९१ | १५ | कार्ति | कीर्तिं |
| ९१ | २४ | क्वचिश्च | क्वचिच्च |
| ९२ | १ | तदा नहि | तदा सोऽपि |
| ९४ | १५ | उपत्ति | उपात्ति |
| ९४ | १७ | श्लाध्या | श्लाघ्या |
| ९८ | ९ | नेशु | नेमु |
| १०१ | २५ | चक्रीराट् | चक्रिराट् |
| १०२ | ३ | सहस्त्रा | सहस्रा |
| १०२ | १४ | भवच्छिदे | भवतमच्छिदे |
| १०२ | २२ | यशो | यशा |
| १०२ | २३ | तेपां | तेषां |
| १०३ | २ | सङ्ग्रहः | सङ्ग्रहः |
| १०३ | ८ | लोह् | लोह |
| १०३ | २१ | मय | मयं |
| १०३ | २१ | अतिष्ठ | अतिष्ठि |
| १०४ | ५ | तं | तयं |
| १०४ | ५ | पुंडरीय | पुंडरी |
| १०४ | ८ | गुरु | गुरुः |
| १०५ | ५ | अतिष्टपद् | अतिष्टिपद् |
| १०५ | ११ | बाहुवली | बाहुबलि |
| १०५ | १३ | गिरि | गिरी |
| १०५ | २७ | अतिष्टपत् | अतिष्टिपत् |
| १०७ | १ | थ | य |
| १०७ | ५ | मुष्टियतो | मुष्टिर्यतो |
| १०७ | २८ | येऽप्यभवत् | येप्यभवत् |
| १०७ | २९ | वंस | वंस |
| १०८ | १ | अचलभद्र | अ चलभद्र |
| १०८ | २४ | निक्षिप्वा | निक्षिप्या |
| १०९ | २३ | द्वयुत्तर | द्वयु त्तर |
| ११० | १२ | सङ्ख्यां | सङ ख्यां |
| १११ | २९ | श्रुत्वेदु | श्रुत्वैतदु |
| ११२ | २१ | प्रशंस्येति | प्रशशंसे |
| ११५ | ५ | यादे | याद्दे |
| ११६ | २३ | व हारा | वसुहारा |
| ११६ | ३० | शीति | शीते |
| ११७ | ८ | प्रभौः | प्रभौ |
| ११८ | ४ | शास्वतः | शाश्वतः |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११८ | १४ | खड्गैः | खड्गैः |
| १२५ | २ | व्यजन | व्यजन |
| १२६ | २३ | मूर्ध्वोर्ध्वं च | रूर्ध्वमूर्ध्वं |
| १२९ | १६ | निक्षप्क्रयं | निष्क्रयं |
| १३० | २ | पुष्य | पुष्प |
| १३० | ८ | सुतान्ते ते | सुतान्तिके |
| १३१ | १ | ध्वजादा | ध्वजदा |
| १३१ | ३१ | नामकु | नागकु |
| १३३ | २० | पुन र्वहिता | पुनर्विहिता |
| १३३ | २१ | देह सुद्यो | देहमुद्यो |
| १३४ | २९ | त्तति | त्तत्ते |
| १३५ | १ | गमि | गम |
| १३६ | १० | धरे | धरेइ |
| १३६ | २१ | राज्यं | प्राज्यं |
| १३६ | २३ | ज्जं | ऊर्जं |
| १३७ | ७।१६ | हरिण्य | हिरण्य |
| १३७ | १४ | मान्धात | मान्धातृ |
| १३८ | २४ | वृद्धिश्च | वृद्धिश्च |
| १३९ | २६ | वत्या | वत्याः |
| १४१ | ३ | दधन् | दधद् |
| १४३ | १२ | कर्म्मणो | कर्म्मणा |
| १४३ | २४ | लया | लयाः |
| १४४ | ६ | मेदनी | मेदिनी |
| १४४ | ३१ | ककेय | केकय |
| १४५ | २७ | वग् | दृग् |
| १४८ | १३ | तिन्नि | तस्स |
| १४८ | १८ | त्ता सो | त्तामो |
| १४८ | १९ | कहं | कहंति |
| १४८ | २२ | य वर | पवर |
| १४८ | २३ | होहिइ-य जुत्तं | होइ पजत्तं |
| १४८ | २४ | वरिंदे-उरे | वरिंदे-उर |
| १४८ | २८ | सरुग् | सरुड् |
| १४९ | १ | पयक्केणं | पयत्थेणं |
| १४९ | १९ | मिद्धाय | समिद्धा |
| | | सिद्धिओ | सिद्धीअ |
| १४९ | २१ | लिमाइ | लघिमा य |
| १४९ | २२ | य खोहा | अखोहा |
| १४९ | २३ | इत्तो | य एत्तो |
| १४९ | २३ | निव | अव |
| १४९ | २४ | खीरा-तरु | वीरा-वरु |
| १४९ | २६ | ब्भा-का- | ब्भ-को- |
| १४९ | २६ | जोगिसी | जोगेसी |
| १४९ | २६ | चंडाभा | चंडाली |
| १४९ | २८ | रहइ | रुहरइ |
| १४९ | २९ | निव्वाया | निव्वाधाया |
| १५१ | ५ | न्नरी | न्नरि |
| १५३ | १ | कुल | कूल |
| १५३ | ११ | मत्या | मत्यां |
| १५३ | २२ | भीमं | भीम |
| १५३ | २४ | शूः | शू |
| १५६ | १२ | ससरं | सशरं |
| १५७ | ३ | अक्षपर्णां | क्षपर्णां |
| १५८ | ८ | हता | हृता |
| १५८ | १४ | रम्यहं | रम्यहं |
| १५८ | १४ | क्वासित | क्वास्ति/सि |
| १५९ | २१ | दढः | दृढः |
| १६० | ६ | कोणपापिनो | कोणपादिनो |
| १६० | १९ | पिदं | मिदं |
| १६३ | १० | विघी | विधी |
| १६३ | १२ | संशि | शंसि |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६४ | २४ | दशास्य | दशास्यं |
| १६७ | १३ | उतरी | उत्तरि |
| १६७ | १५ | तस्सेव य पाव | तस्सेवं चेव |
| १६७ | २१ | चाएम्पा | चाएम्या |
| १६७ | २२ | जावज्जीवं | जावच्चिय |
| १६९ | २३ | निःपाना | निःपादना |
| १७० | ६ | मर्त्य | मन्य |
| १७१ | १ | भीभे | भीमे |
| १७१ | २७ | दृशा | सदृशा |
| १७७ | १ | मधु | मधुः |
| १७८ | २ | हम्ते | हस्ते |
| १७९ | २४ | पभइं | पभिइं |
| १८२ | २४ | उचि | ऊचि |
| १८३ | १३ | राज्यंकार्यं | राज्यकार्यं |
| १८४ | ६ | स्वस्वोल | स्वस्वोल्ल |
| १८४ | ३० | नन | नंन |
| १८४ | ३१ | मुघा | मुधा |
| १८५ | ६ | नेव | नैव |
| १८५ | २३ | जानक्या | जानक्याः |
| १८५ | ३१ | जिह्व | जिह |
| १८६ | ३० | क्त्ता | क्रिता |
| १८७ | २ | दत्ताश्र | दत्तोऽथ |
| १८७ | २४ | व वं | वइवं |
| १८८ | १९ | न्दो | न्द्वो |
| १८८ | २५ | ललो | ललौ |
| १८६ | २५ | स्वम्भू | स्वयम्भू |
| १९० | १ | दोरं | वोरं |
| १९१ | २४ | पुत्रो | पुत्रौ |
| १९१ | २ | यत्रा | यत्या |
| १९२ | १३ | दातः | दानतः |
| १९२ | १८ | विंश | विंश |
| १९५ | २० | एव | एवं |
| १९५ | १९ | पृप्टे | पृष्टे |
| १९६ | १५ | अवधि | अवधि |
| १९६ | २० | भवोद्भूतः | भवोद्भूतः |
| १९६ | ३१ | यस्मिन् | न्यस्मिन् |
| १९८ | २० | उद्ध | ऊढ्ढ |
| १९४ | २० | युतो | युतौ |
| १९९ | ७ | च्युतो | च्च्युतो |
| २०१ | २५ | ञ्चकुः | ञ्चक्रुः |
| २०४ | २८ | प्ना | प्नां |
| २०७ | ७ | द्सुजान् | द्सुजम् |
| २०९ | ५ | सर्वेः | सर्वैः |
| २०९ | १२ | वृप्णि | वृष्टि |
| २१० | २८ | रतदा | हृदो दा |
| २११ | ३१ | विघ्नेयु | विघ्नयेयु |
| २१२ | ५ | श्येत् | श्येच्च |
| २१२ | २६ | हेपितो | हे पितो |
| २१४ | २७ | क्षणो | क्षणे |
| २१६ | ११ | रानि | राणि |
| २१८ | २५ | मुखा | मुखाः |
| २१६ | ३ | कंसारी | कंसारि |
| २१६ | २३ | स्ववन्धो | स्ववन्धौ |
| २२० | २६ | वोधा | वोध्यो |
| २२४ | १४ | तयोभूत् | तयोरभूत् |
| २२८ | ६ | चदण | चंदण |
| २२८ | २१ | पडपि | पडपीयुः |
| २२८ | २१ | च ते | ते |
| २२६ | १४ | भूयिष्ठ | भूयिष्ठ |
| २३३ | ८ | प्रद्युम्नाद्या | प्रद्युम्नाद्याः |

पादलिप्तपुरे श्रीवर्धमानजैन-आगममंदिर तथा सूर्यपुरे श्रीवर्धमान-जैनताम्रपत्र-आगममंदिरना संस्थापक आगमवाचनादाता आगमदिवाकर शैलाना-नरेशप्रतिबोधक-

प० पू० आगमोद्धारक-आचार्यप्रवरश्री आनन्दसागरसूरीश्वरजी महाराज.

जन्म-कपडवंज-
विक्रम संवत्-१९३१
आषाढ कृष्णा०))
दीक्षा-लींबडी-
विक्रम संवत्-१९४७
माघशुक्ला-५



पंन्यासपद-राजनगरे
विक्रम संवत् १९६०
आषाढ शुक्ला-१३
आचार्यपद-सूर्यपुरे
विक्रम संवत् १९७४
वैशाख शुक्ला १०
निर्वाण सूर्यपुरे
विक्रम संवत् २००६
वैशाख कृष्णा-५

येऽदत्तागमवाचनाः सुशमिनां येनोद्धृता आगमा
यश्चारोहितवान् श्रुतान् वरशिला-सत्ताम्रपत्रांस्तथा ।
ग्रन्था येन परःशता विरचिता यस्याऽमलः संयमः
श्रीआनन्दपयोनिधिर्विजयते पूज्यः स सूरीश्वरः ॥

जेओश्रीनी आजीवन-अद्वितीय आगमसाहित्य सेवानुं सौ कोई अभिवादन करे छे।

❀ णमोत्थु ण समणस्स भगवओ महावीरस्स ❀

॥ पू० आगमोद्धारक-आचार्य-श्रीआनन्दसागरसूरीश्वरेभ्यो नमः ॥

तपागणाधीश-श्रीधर्मघोषसूरिवररचितः

# ❀ शत्रुञ्जय-कल्पः ❀

श्रीशुभशीलगणिविहितवृत्तियुतः ।

यस्यादेशादुपेत्य प्रथमगणधरः पुण्डरीकाभिधानः, सिद्धाद्रौ पञ्चकोटीमितयतिसहितः केवलज्ञानमाप्य ।
श्रेयःपुर्यामयासीदमरनरपतिश्रेणिसंसेविताङ्घ्रिः, स श्रीमानादिदेवः शिवसुखमचिरात् प्राणभाजां प्रदेयात् ॥१॥
यत्र तीर्थेऽखिलं कर्म-राशिं क्षिप्त्वा चिरार्जितम् । असङ्ख्या यतयो जग्मु-र्यास्यन्ति च शिवश्रियम् ॥२॥
तस्मिँस्तीर्थे जिनाधीशान् वृषभादीन् सुरार्चितान् । नृणां पूजयतां ध्यानं कुर्वतां शिववशं भवेत् ॥३॥
यतः शत्रुञ्जये दृष्टे दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं च पूजास्नात्रविधानतः ॥४॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥५॥
सिद्धाद्रौ पक्षिणः सन्ति क्षुद्रा अन्येऽपि येऽङ्गिनः । हिंसका अपि सेत्स्यन्ति ते भवैस्त्रिभिरुत्तमाः ॥६॥
तावद् गर्जन्ति हत्यादि-पातकानीह सर्वतः । यावच्छत्रुञ्जयेत्याख्या श्रूयते न गुरोर्मुखात् ॥७॥
शास्त्रान्तरेऽप्युक्तं-अष्टषष्टिषु तीर्थेषु यात्रया यत्फलं भवेद् । आदिनाथस्य देवस्य स्मरणेनापि तद्भवेत् ॥८॥
इत्यादि भूरिशो यस्य माहात्म्यं श्रूयते जने । तस्य तीर्थस्य वर्ण्येत तत्कथं मन्दबुद्धिभिः ॥९॥
सुधर्मस्वामिना यस्य माहात्म्यं ग्रन्थकोटिभिः । वर्णितं तच्च सङ्क्षिप्तं भद्रबाहुगुरूत्तमैः ॥१०॥
तच्च वज्रर्षिणा भव्योपकाराय लघूकृतम् । ततः श्रीपादलिप्तेन सूरिणापि हितेच्छुना ॥११॥
ततो धनेश्वरसूरी-श्वरः सङ्क्षिप्तवाँस्तदा । ततोऽन्येऽपि गुरूत्तंसाः सञ्चिक्षिपुश्च तत्पुनः ॥१२॥
ततस्तपागणाधीशो धर्मघोषगुरूत्तमः । श्रीशत्रुञ्जयकल्पं तु चकारामुं तमोऽपहम् ॥१३॥
तयोर्जाते मृतेऽकस्मात्त्रयोदशदिनान्तरे । धर्मकीर्तिरुपाध्यायोऽजनि तस्मिन् गणे तदा ॥१४॥
क्रमात्तस्य पदे सूरेर्जाते सति शुभोदये । धर्मघोषगुरुरिति नामाऽजनि जनेऽभितः ॥१५॥
तेनैव धर्मघोषेण सूरिणा विदधेतराम् । श्रीशत्रुञ्जयकल्पोऽयं भव्याङ्गिबोधहेतवे ॥१६॥

तच्चेदं स्तवनं तथाहि—'सुयधम्मकित्तिअं तं तित्थं'

धर्मघोषगुरूत्तंस-कृतस्यास्य स्तवस्य तु । वृत्तिर्विधीयते तत्तत्कथायुक्ता मया किल ॥१७॥
तथाहि-सोमसुन्दरसूरीशस्तपागच्छवियद्रवेः । पट्टालङ्करणे जातो मुनिसुन्दरसूरिराट् ॥१८॥
तस्य पट्टोदयाद्रिं तु भासयन्त्यधुना ध्रुवम् । रत्नशेखरसूरीशस्सूर्याः प्रतापिनः पुनः ॥१९॥
मुनिसुन्दरसूरीश-शिष्येण मुग्धबुद्धिना । शुभशीलाभिधेनैव भव्याङ्गिबोधहेतवे ॥२०॥
धर्मघोषगुरूत्तंस-कृतस्यास्य स्तवस्य तु । वृत्तिस्तत्तत्कथायुक्ता क्रियते साम्प्रतं किल ॥२१॥ ॥युग्मम्॥

तस्य स्तोत्रस्य प्रथमगाथायाः सम्बन्ध आदौ प्रोच्यते । तथाहि—

सुयधम्मकित्तिअं तं तित्थं देविंद [विंद] वंदिअं थुणिमो ।
पाहुडए विज्जाणं देसिअमिगवीसनामं जं ॥ १ ॥

व्याख्या-श्रुतस्य धर्मः-बोधः श्रुतधर्मः-सिद्धान्तः । अथवा श्रुत एव धर्मः । स च द्विधा-श्रमणधर्मः श्राद्धधर्मश्च, शास्त्रे उक्तं च—

दुह दव्वभावधम्मो दव्वे दव्वस्स दव्वमेवऽहवा । तित्ताइसहावो वा गम्मा इत्थी कुलिंगो वा ॥१॥ [आव०]
दुह होइ भावधम्मो सुअ चरणे वा सुअम्मि सज्झाओ । चरणम्मि समणधम्मो खंतीमाई भवे दसहा ॥२॥

एवंविधे श्रुतधर्मे-धर्मशास्त्रे तस्मिन् कीर्तितं-व्याख्यातं गणधरादिभिः 'तीर्थं' शत्रुञ्जयाभिधं तीर्थम् । तीर्यते संसाराम्भोधिरनेनेति तीर्थम्, भवोद्भूततापोपशामकत्वात् तीर्थम्, उक्तं च—

नामं ठवणातित्थं दव्वतित्थं च भावतित्थं च । इक्किक्कंपि अ इत्तोऽणेगविहं होइ नायव्वं ॥१॥
दाहोवसमं तण्हाइ छेअणं मलपवाहणं चेव । तीहिं अत्थेहि निउत्तं तम्हा तं दव्वओ तित्थं ॥२॥
कोहम्मि अ निग्गहिए दाहस्सोवसमणं भवे तित्थं । लोहम्मि अ निग्गहिए तण्हावुच्छेअणं होइ ॥३॥
अट्ठविहं कम्मरयं बहुएहिं भवेहिं संचिअं जम्हा । तव-संजमेण धोवइ तम्हा तं भावओ तित्थं ॥४॥
दंसण-नाण-चरित्तेसु निउत्तं जिणवरेहिं सव्वेहिं । तिसु अत्थेसु निउत्तं तम्हा तं भावओ तित्थं ॥५॥

'देविंद'त्ति । देवाः-सुरास्तेषामिन्द्राः-स्वामिनः तेषां 'वृन्दानि' समूहाः तैर्वन्दितं 'वदि स्तुत्यभिवादनयोः' क्ते रूपं, 'थुणिमो' स्तवीमि, तत्तीर्थं 'पाहुडे'त्ति प्राभृतं-अधिकारविशेषः विद्यानां—चतुर्दशपूर्वाणां प्राभृते 'देशितं' कथितं, एकविंशतिः नामानि यस्य तत्, स्तुमः । द्वितीयोऽर्थः कथ्यते—'श्रुतो' विख्यातो धर्मकीर्तिरुपाध्यायस्तस्यापरं नाम धर्मघोषसूरिस्तेन कीर्तितं-स्तुत, तीर्थं 'देविंद'त्ति धर्मघोषसूरेर्गुरुः देवेन्द्राचार्यः, तेन 'वन्दितं' स्तुतं 'थुणिमो' सु (स्तुमो) विद्यानन्दसूरिणा देशितं-त्वं कुरु कल्पं धर्मघोषस्याग्रे प्राभृते-अधिकारे अधिकारविशेषे वा कथितं विद्यानन्दैर्देशितं 'एकविंशतिनाम' यस्य तत् । शत्रुञ्जयतीर्थस्य एकविंशतिर्दत्तानि यानि सुरनृपनरैर्मुनिभिश्च तेषां नामकथनाय गाथात्रयमुच्यते—

[1]विमलगिरि [2]मुत्तिनिलय [3]सित्तुंजो [4]सिद्धखित्त [5]पुंडरिओ ।
[6]सिरिसिद्धसेहरो [7]सिद्धपव्वओ [8]सिद्धराओ अ ॥२॥
[9]बाहुबली [10]मरुदेवो [11]भगीरहो [12]सहसपत्त [13]सयवत्तो ।
कूड[14] य अट्ठुत्तरओ[15] नगाहिराओ सहसकमलो[16] ॥३॥
ढंको[17] कोडिनिवासो[18] लोहिच्चो[19] तालज्झओ[20] कयंबुत्ति[21]
सुरनरमुणिकयनामो सो विमलगिरी जओ तित्थं ॥४॥

तत्रादौ विमलगिरेर्नाम्न उत्पत्तिः प्रोच्यते, तथाहि—

अभ्रंलिहमहेभ्यार्हन्-महीरमणमन्दिरैः । रराज नगरं नाम्ना पद्माढ्यं भूमिभूषणम् ॥१॥
तत्रासीन् मदनः क्षोणी-पतिर्न्यायैकमन्दिरम् । तथाऽपात् पृथिवीं सौख्य-भाजोऽभूवन् यथा प्रजाः ॥२॥

यतः–दुर्बलानामनाथानां बालवृद्धतपस्विनाम् । अन्यायैः परिभूतानां सर्वेषां पार्थिवो गुरुः ॥१॥
तस्य प्रेमवती पत्नी मन्त्रीशो मतिसागरः । सूराह्वो नन्दनो वर्य-रूपोऽभूवन्नमी क्रमात् ॥३॥
साधयन् विषयान् भूपः प्रत्यर्थिपार्थिवान् बहून् । स्वीयाज्ञां ग्राहयामासाऽर्जयामास यशोऽमलम् ॥४॥
एकदा भूप उद्याने गतः सारपरिच्छदः । कुर्वन् क्रीडां ददर्शैकं श्वेताम्बरधरां स्त्रियम् ॥५॥
अप्राक्षीद् भूपतिर्नारीं काऽसौ त्वं कुत आगता ? । स्त्री प्राह किं तवेदानीं नामादिपृच्छनैरिह ॥६॥
राजाऽऽचष्ट करोषि त्वं किं लोकस्य सुखासुखे । नार्याहैमि गृहे यस्य तस्य स्यात् कमला बहु ॥७॥
राजाऽवक् तर्हि मे सद्म कृतार्थय निजागमात् । देव्यभाणीत् प्रगे गेहे समेष्यामि तवेश्वर ! ॥८॥
हृष्टो नृपो गृहेऽभ्येत्य द्वितीये दिवसे प्रगे । यावद्विलोकते देव्या आगमं संसदि स्थितः ॥९॥
तावद् भम्भारवं कुर्वन् नरोऽभ्येत्य जगावदः । स्वामिन् ! सिंहरथोऽरिस्त्वद्राज्यं लातुमिहागमत् ॥१०॥
भूप उत्थाय सन्नह्य युद्धं कर्तुं पुराद् बहिः । ययौ यावद्रिपोः सैन्यं महद्वीक्ष्येत्यचिन्तयत् ॥११॥
यद्यहं करवै युद्ध-मनेन रिपुणा समम् । तदाऽहं हत एवास्मि नूनं स्त्रीजल्पनच्छलात् ॥१२॥
नंस्यते साम्प्रतं चेद्धि तदा मे जीवितं भवेत् । जीवन् पुनर्नरो भद्र-शतानि लभते किल ॥१३॥
ततः प्रविश्य पुर्यन्तर्दत्त्वा वप्रारारिं दृढम् । विमृश्य मन्त्रिणा सार्द्धं नंष्टुकामोऽभवन्नृपः ॥१४॥
कियतीं कमलां लात्वा पत्नीनन्दनमन्त्रियुक् । राजा छन्नं पुराद्रात्रौ निर्ययौ जीवितेच्छया ॥१५॥
यतः- अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा समं मृत्युभयं द्वयोः ॥१॥
सव्वे जीवावि इच्छन्ति जीविउं न मरिज्जिउं । तम्हा पाणवहं घोरं जावज्जीवाइ वज्जए ॥२॥
गतं भूपं प्रगे ज्ञात्वा वैर्यभ्येत्य पुरान्तरे । मदनक्ष्मापते राज्य-मलंचक्रे सुखेन सः ॥१६॥
यावन्मदनभूपालो गच्छन् पल्लयां ययौ क्रमात् । तावद्भिल्लैर्हृता सर्वा लक्ष्मीस्तस्य महीपतेः ॥१७॥
यतः–गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥१॥
सम्पदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः किं धनैः कुरुत धर्ममनिंद्यं ।२।
गतायां श्रियि निःशेषः परिवारोऽपि गतः क्वचित् । एक एव स्थितो मन्त्री स्वामिभक्तिपरायणः ॥१८॥
बुभुक्षापीडितो भूपः पत्नीतनयमन्त्रियुग् । स्वनिर्वाहं फलैश्चक्रे जीवितेच्छुरनारतम् ॥१९॥
चलन्नुमापुरेऽभ्येत्य भूपः स्थित्वा क्वचिद् गृहे । काष्ठादिविक्रयाच्चक्रे निर्वाहं कष्टतो निजम् ॥२०॥
तदा मन्त्र्यपि कष्टेन बिभ्राणः स्वोदरं स्वयम् । भूपपृष्ठिं न मुञ्चेत क्षणमेकं सुभक्तितः ॥२१॥
यतः-'चित्तज्ञः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः । यथोक्तवादी स्मृतिमान् मन्त्रीशः श्लाघ्यते जनैः' ॥१॥
गते-वर्षाष्टके भूप एधान्यानेतुमेकदा । यावद्ययौ वने तावद् वनितैका जगावदः ॥२२॥
तव गेहेऽहमेष्यामि यदि ते रोचतेऽधुना । चटिष्यति पितृ राज्यं हस्ते रिपोः शयान्ननु(हस्ते मेऽतिशयात् ननु)॥२३॥
राजाऽवग् वाहितः पूर्व-महं नार्यैकया छलात् । राज्यापहारतः किं मे साम्प्रतं लास्यते त्वया ? ॥२४॥
नार्यभाणीद्यया राज्यं गमितं तव भूपते ! । सा तु दारिद्रिणी देवी समेता ते कुकर्मतः ॥२५॥
अहं शुभोदयाद्राज्या–धिष्ठात्री देवताऽधुना । आगताऽस्मि प्रदातुं ते राज्यं पैतामहं द्रुतम् ॥२६॥
भूपोऽभणद्वचोदम्भात् किं वाहयसि मामिह ? । देव्याचष्ट व्रज स्वीय-पुरे तिष्ठ रहोऽधुना ॥२७॥

मासत्रये गते श्वेत-पञ्चम्यां दिवसात्यये । अनपत्यो रिपुर्याता तवैव यममन्दिरम् ॥२८॥
तदा त्वामागतं ज्ञात्वा मन्त्र्याद्या राज्यमञ्जसा । तुभ्यं दास्यन्ति सद्भाग्यो-दयादेवावनीपते ! ॥२६॥
ततो भूपः सूरीवाक्याद् गत्वा स्वीयपुरे रहः । मृते तस्मिन् नृपे रात्रौ राज्यं प्राप स्वकं क्रमात् ॥३०॥
स्वराज्यगमनोदन्तो राज्ञा पृष्टोऽन्यदा मुनिः । जगौ पूर्वे भवे भीम-पुरेऽभूत् क्षत्रियस्त्वकम् ॥३१॥
तत्र कस्याः स्त्रिया रत्नं हृत्वा छन्नं त्वया ननु । अष्टयामान्तिके दत्तं पश्चादेवानुकम्पया ॥३२॥
सा स्त्री मृत्वाऽभवत् सिंह-रथो राजा रिपुस्तव । क्षत्रियो मरणं प्राप्तस्त्वमभून्मदनो नृपः ॥३३॥
अष्टौ यामान् त्वया रत्नं हृतं यस्याः पुरा भवे । तेनाष्टौ हायनान् यावद्राज्यं तत्र ललेऽरिणा ॥३४॥
यतः-'फरुसवयणेण दिणतवं अहिक्खिवंतो हणेइ मासतवं । वरिसतवं सवमाणो हणइ हणंतो अ सामन्नं' ॥१॥
तिव्वयरे उ पओसे सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा ॥२॥
श्रुत्वैतन्निजपुत्राय दत्त्वा राज्यं सदुत्सवम् । प्रान्तेऽनशनतो मृत्वा मदनः स्वर्गमीयिवान् ॥३५॥
सूरः कुसङ्गतेर्योगात् आप व्यसनसप्तकम् । दिनं प्रति पशून् भूरीन् हन्ति पापर्द्धिसङ्गतः ॥३६॥
एकदा शूकरो हन्य-मानो भूमीभुजा दृढम् । दंष्ट्रया भूपतिं पृष्ठे जघानातीव निर्दयम् ॥३७॥
यथा यथा विधीयेत चिकित्सा भूपविग्रहे । तथा तथाऽभवत्कुष्ठं गलत्पीडाविधायकम् ॥३८॥
राजा चिकित्सितो वैद्यैर्भूरिभिर्विविधौषधैः । सज्जो नाभूद्यदा दुःखी तदार्त्तिं कुरुते हृदि ॥३९॥
गङ्गा-गयादितीर्थानां पयोभिः स्नपितो नृपः । नीरोगो न यदा जातस्तदा मन्त्रीश्वरान् जगौ ॥४०॥
पावकेन करिष्यामि प्राणत्यागमहं लघु । ततो राजा ययौ प्रेत-वने त्यक्तुं तनूमसौ ॥४१॥
तदा तत्रागतो ज्ञानी जगौ म्रियस्व मा नृप ! । राजा प्राह न शक्नोमि क्षण कुष्ठप्रपीडितः ॥४२॥
यदि कुष्ठं व्रजेद् देहान्मदीयात् साम्प्रतं द्रुतम् । तदा मे जीवितं भूयान्नान्यथा मरणं पुनः ॥४३॥
ज्ञानी प्रोवाच चैत्रस्य पूर्णिमाया दिने प्रगे । गत्वा शत्रुञ्जये चन्द्र-कुण्डे नीरेण हारिणा ॥४४॥
स्नात्वा कृत्वा मुदा राजा-दन्या अधःस्थमृत्स्नया । रूपयित्वा तनुं स्नानं क्रियते शतसङ्ख्यया ॥४५॥
ध्यानं युगादिदेवस्य क्रियते प्रतिवासरम् । तदा पञ्चदशे घस्रे कुष्ठं याति न संशयः ॥४६॥
श्रुत्वैतां ज्ञानिनो वाणीं राजा ज्ञान्युदित मुदा । कुर्वन् कुष्ठं निजाद् देहाद् गमयामास वेगतः ॥४७॥
विमले विग्रहे जाते भूपोऽसङ्ख्यनृपान्वितः । शत्रुञ्जयस्य नामादाद्विमलाद्रिरिति ध्रुवम् ॥४८॥
ततः स एव भूपालस्तीर्थे विमलनामनि । यात्राः शतप्रमाश्चक्रे-ऽसङ्ख्यक्ष्मापसमन्वितः ॥४६॥
कुर्वन शत्रुञ्जये यात्रां भूपोऽसङ्ख्यजनाश्रितः । अर्जयामास कल्याण-गमकृत्कर्म धर्मतः ॥५०॥
यतः-यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्घेशार्हन्त्यपदकृत् स जीयात विमलाचलः ॥१॥
स्वपुत्राय निजं राज्यं वितीर्य सूरभूपतिः । शत्रुञ्जये गिरौ लात्वा (गत्वा) तपश्चक्रेऽतिदुष्करम् ॥५१॥
सूरस्तीव्रं तपः कुर्वन् केवलज्ञानमाप्तवान् । ततः प्राबूबुधद् भव्य-जनान् धर्मं जिनोदितम् ॥५२॥
सहस्रत्रयसत्साधु-सहितः सूरसंयतः । विमलो विमलक्ष्माध्रे मुक्तिपुर्यां समीयिवान् ॥५३॥
यतः-'कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । तपोऽस्मिन् ये वितन्वन्ति ते गच्छन्ति शिवालयम्' ॥५४॥
मुनिसुन्दरसूरीशां तपागच्छखमास्वताम् । शुभशीलेन शिष्येण वृत्तिरेषा विनिर्मिता ॥५५॥

इति विमलगिरिनामविषये सूरभूपर्षिकथा

यत्र साधून् बहून् मुक्तिं गतान् वीरनृपः समम् । निरीक्ष्य प्रददौ मुक्तिनिलयेत्यभिधा यथा ॥१॥
तथाहि-भूभूषणे पुरे भीम-सेनस्य मेदिनीपतेः । आसन् पत्न्यः शतं तास्वा-दिमा पद्मावती प्रिया ॥२॥
कृतर्णे नृपतौ राज्यं सुखिनी जनताऽजनि । धर्मकर्म करोति स्म सर्वैव भूपसंयुता ॥३॥
यतः-'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्त्तन्ते यथा राजा तथा प्रजा' ॥१॥
उच्चस्थे तरणौ वर्ष-वासरे विशदक्षणे । सारस्वप्नोचितं पद्मा-त्यसूत सुतं वरम् ॥४॥
यतः-"अजवृषमृगाङ्गनाकर्कमीनवणिजांशकेष्विनाद्युच्चाः । दशशिख्यष्टाविंशतितिथीन्द्रियत्रिघनविंशेषु ॥१॥
उच्चान्नीचं सप्तम-मर्कादीनां त्रिकोणसञ्ज्ञानि । सिंहवृषाजप्रमदा-कार्मुकभृत्तौलिकुम्भधराः ॥२॥
सुखी भोगी धनी नेता जायते मण्डलाधिपः । नृपतिश्चक्रवर्त्ती च क्रमादुच्चग्रहे फलम् ॥३॥
नीचो नीचरतश्चौरो निष्प्रजो बुधवर्जितः । शत्रूपपीडितो रोगी अर्काद्यैर्नीचगैः क्रमात् ॥४॥"
जन्मोत्सवं पिता कृत्वा, सर्वसज्जनसाक्षिकम् । पुत्रस्य वीरसेनेति नामाऽदात् शोभनेऽहनि ॥५॥
वर्द्धमानः क्रमात् पित्रा विमुच्य लेखसद्मनि । धर्मकर्म्मादिशास्त्राणि पाठितस्तनयः क्रमात् ॥६॥
यतः—"प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्मश्चतुर्थे किं करिष्यति ? ॥१॥
जायम्मि जीवलोए दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ जेण मुओ सुग्गइं जाइ ॥२॥"
इतः-पद्मपुरे वैर-सिंहस्य मेदिनीपतेः । चन्द्रलेखामुखाः पत्न्य आसन्नष्टौ सदाशयाः ॥७॥
तासामासन् क्रमात्पुत्राः पञ्च पञ्च पृथक् पृथग् । एकैका तनया वर्य-रूपाः प्रत्येकतोऽभवन् ॥८॥
पद्मा रामा रमा लक्ष्मी कमला विमलाऽचला । श्रीमतीति सुता अष्टौ बभूवुर्गुणमन्दिरम् ॥९॥
पठन्त्यः पण्डितोपान्ते सर्वाः शास्त्राणि भूरिशः । बभूवुः कोविदोत्तंसा भारतीव तनूभवाः ॥१०॥
यतः-"जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः" ॥१॥
भगिन्योऽन्येद्युरेकत्र मिलित्वेति जगुर्मिथः । अस्माकं कान्त एकः स्या-द्यदि विद्वांस्तदा वरम् ॥११॥
मूर्खश्चेज्जायते कान्तो यदा नार्याः कुकर्मतः । यावज्जीवं तदा दुःखं पृष्ठिं नैव विमुञ्चते ॥१२॥
अस्मत्कृतसमस्यानां पूरणं यः करिष्यति । स एव रमणोऽस्माकं भवताद् वह्निरन्यथा ॥१३॥
एवं कृतां प्रतिज्ञां तां पुत्रीभिरवगत्य च । भूप आकारयामास भूपानुद्वाहहेतवे ॥१४॥
वीरसेनोऽपि तत्रागाद् मानितो मेदिनीभुजा । सुस्थानदानतोऽन्येपि नृपाः सन्मानिताः स्थिताः ॥१५॥
सद्वेषभूषणाः सर्वा भगिन्यः सखिसंयुताः । अभ्येत्य भूभुजां पार्श्वे समस्यामपृच्छन्निति ॥१६॥
सव्वन्नू हुंति अरिहंता[1] सा नारी मम कथ्यताम्[2] । तइआ गवरावए गीअं[3] मूलं च सुकृतस्य कः[4] ।
तओ लग्गउ पग्गत्थि[5] किं कुर्वन्ति तपोधनाः[6] जग सकलओ जिणि ऊधरिओ[7] दिवसकृत्यं किं हरइ पावं[8] ? ।
एतासां तु समस्यानां पूरणं न महीधरैः । यदा कृतं तदा वीर-सेनः प्राहेति ताः प्रतिः ॥१७॥

घरमज्झे घररहिआ चउवीस जिणा (जया) निरावरणा ।
केवलनाणसमग्गा सव्वन्नू हुंति अरिहंता ॥१८॥ [ धुट् २४ ]
रोचते या सुपुण्यानां पापानां या न रोचते ।
गौराङ्गी वल्लभा पत्युः सा नारी मम कथ्यताम् ॥१९॥ [ राका पूर्णिमा ]

भिल्लस्स तिन्नि भज्जा एगा पभणेइ पाणीयं पाइ ।
बीआ मग्गइ मंसं तइआ गवरावए गीयं ॥२०॥ [ सरो नत्थि ]
किमाशीर्वचनं राज्ञां ? का शंभोस्तनुमण्डनम् ? ।
कः कर्त्ता सुखदुःखानां ? मूलं च सुकृतस्य कः ? ॥२१॥ [ जीव-रक्षा-विधिः ]
नयरि भमंतइ दिट्ठ मइं केसरि चडिओ हत्थि ।
जलनिही परवरि रमइ तओ लग्गउ परमत्थि ॥२२॥ [ क्षुरपलकः ]
कथं सम्बोध्यते राजा ? सुग्रीवस्य च का प्रिया ? ।
निर्धनास्तु किमिच्छन्ति ? किं कुर्वन्ति तपोधनाः ? ॥२३॥ [ देव-तारा-धनं ]
एकनारि वनगहनि उप्पन्ना, सव्वसुलक्खण जग सइ वनि ।
हसिउ वेटउं कूरपइं धरिओ जग सकलो जिणि ऊधरिओ ॥२४॥ [ चउणि ]
का चीवराणं पवरा ? किं दुलहं मरुदेसमज्झम्मि ? ।
किं पवणाओ चवलं ? दिवसकयं किं हरइ पावं ? ॥२५॥ [ पडि-क्क-मणं ]

पूरितासु समस्यासु वीरसेनेन भूभुजा । तं वत्र भूपनन्दिन्यो रुचिरोत्सवपूर्वकम् ॥२६॥
वीरसेनकुमाराय हस्त्यश्वमणिसञ्चयान् । ददौ महीपतिर्वर्य-वस्त्रदानपुरस्सरम् ॥२७॥
अष्टकन्यायुतो वीर-सेनोऽभ्येत्य निजे पुरे । मातापित्रोः पदौ नत्वा प्रमोदं चक्रवांस्तराम् ॥२८॥
भीमसेनोऽन्यदा वीर-सेनपुत्राय सत्सवम् । राज्यं दत्त्वा गुरूपान्ते संयमश्रियमाप्तवान् ॥२९॥
कुर्वंस्तीव्रं तपः प्राप्य केवलज्ञानमन्यदा । भीमसेनमुनिः पुत्र-प्रबोधायागमत् क्रमात् ॥३०॥
वीरसेनो ययौ धर्मं श्रोतुं तातान्तिकेऽन्यदा । तदा ज्ञानी ददौ धर्मो-पदेशमिति सादरम् ॥३१॥
कः सकलः ? सुकृतरुचिः कः सद्बुद्धिर्विधेयकरणगणः । कः सुभगः ? शुभवादी को विश्वजयी ? जितक्रोधः॥३२॥
मैथुनं ये न सेवन्ते ब्रह्मचारिदृढव्रताः । ते संसारसमुद्रस्य पारं गच्छन्ति सुव्रताः ॥३३॥
उत्तमजणेण संगो जइ किज्जइ कइवि नेहपडिबंधो । सो जम्मेवि न विहडइ सच्चं चिय पत्थरे रेहा ॥३४॥
यः सिद्धाद्रौ जिनान् पूजा-ध्यानमौनविधानतः । आरराध स यात्येव कल्याणनगरीं रयात् ॥३५॥
कृतानेककुकर्माणो जीवा विमलपर्वते । कुर्वतो ध्यानमौनादि स्वर्गादि वृणुते सुखम् ॥३६॥
यत्राऽसङ्ख्या जना ध्यान-मौनपूजातपःपराः । ययुर्यान्ति च यास्यन्ति मुक्तिं स सेव्य एव तु ॥३७॥
इत्यादितीर्थमाहात्म्यं श्रुत्वा वीरनृपो जगौ । यावच्छत्रुञ्जये नैव नमस्यामि जिनाधिपम् ॥३८॥
तावन्मयैकशो जेम-नीयं शेयं भुवस्तले । पाल्यं शीलव्रतं त्याज्यं पत्रपूगीफलादि च ॥३९॥युग्मम्॥
मेलयित्वा बहुं सङ्घं वीरसेनः शुभेऽहनि । चचालाध्वनि तन्वान उत्सवं च पदे पदे ॥४०॥
उत्तमानां सदा धर्म-करणे वर्द्धते मनः । नदीवाहीव नीरवन नीचानां हीयते पुनः ॥४१॥
तीर्थे दृष्टिपथायाते भूपः सङ्घसमन्वितः । तत्र स्थित्वा दिने तस्मिन् प्रथमं तीर्थमानमत् ॥४२॥
अर्हत्स्नात्रमहः कृत्वा प्रलम्ब्य लपनश्रियम् । सङ्घमध्ये नृपः साधून् प्रत्यलम्भत भक्तितः ॥४३॥
जिनेन्द्रगुणगीतानि गायन् सङ्घः पदे पदे । आरुरोहाऽनवं तीर्थं सिद्धशैल तमश्छिदे ॥४४॥

अष्टापदिकपदे देवं प्रपूज्य प्रथमं जिनम् । सङ्घेशो ददते दान-मर्थिभ्यो मुखमार्गितम् ॥ ४५ ॥
स्नात्रपूजाध्वजादान-मुख्यकृत्यान्यनेकशः । कृत्वा मुख्यार्हतश्चक्रे नृपः पादुकयोः पुनः ॥४६॥
भूपः प्रदक्षिणीकृत्य राजादन्या वराक्षतैः । वद्धापनं व्यधाद् भूपो गीतगानपुरस्सरम् ॥४७॥
तदा तीर्थस्य माहात्म्यात् साधूनां कोटिपञ्चकम् । सम्प्राप्य केवलज्ञान-मलञ्चक्रेऽत्तयां पुरीम् ॥४८॥
मुक्तिं गतान् बहून् साधून् निरीक्ष्यावनिनायकः । तीर्थस्य प्रददौ मुक्ति-निलयेत्यभिधां यदा ॥४९॥
तदाऽन्येपि जनाः प्रोचु-रेवं तीर्थस्य तस्य तु । एतच्च मुक्तिनिलयं तीर्थं मुक्तिप्रदानतः ॥५०॥
एवं विस्तरतो यात्रां विधायाऽवनिनायकः । निजे पुरे समायातः प्रवेशोत्सवपूर्वकम् ॥५१॥
वीरसेनः प्रजां न्याय-मार्गेण पालयन् सदा । चकार दानशीलादि-धर्मं चतुर्विधं मुदा ॥५२॥
तुर्ये वयसि पुत्रस्य मीनकेतोरिलापतिः । दत्त्वा राज्यं ललौ दीक्षां श्रुतसागरसन्निधौ ॥५३॥
कुर्वाणो गुरुणा सार्द्धं विहारं वीरसेनकः । ययौ विमलभूमिध्रे तीर्थे मुक्तिसुखप्रदे ॥५४॥
तत्र वितन्वतो ध्यानं वीरसेनस्य सुन्दरम् । उत्पन्नं केवलज्ञानं लोकालोकप्रकाशकम् ॥५५॥
सर्वकर्मक्षयाद् वीर-सेनवाचंयमो मुनिः । तत्रैव निर्वृतिं प्राप भूरिसाधुसमन्वितः ॥५६॥
मुनिसुन्दरसूरीशस्तपागच्छखभास्वतः । शुभशीलेन शिष्येण वृत्तिरेषा विनिर्मिता ॥५७॥

❀ इति मुक्तिनिलयनामदाने वीरसेननृपकथा ❀

शुकभूमिपतिः शत्रु-ञ्जयेत्याह्वां यथा ददौ । तथा सङ्क्षेपतोऽत्रैव कथ्यते मयका किल ॥१॥
श्रीभद्दिलपुरे वर्ये जितारेर्मेदिनीपतेः । हंसी च सारसी पत्न्या-वभूतां वरमानसे ॥२॥
स्वभावात् सरला हंसी सारसी कुटिलाशया । नरोत्पत्तिभवं कर्म हंसी बबन्ध सद्वृषात् ॥३॥
शत्रुञ्जये नृपो यात्रां कृत्वाऽभ्येत्य निजालये । प्रासादमर्हतः प्रौढं कारयामास सुन्दरम् ॥४॥
कृतपुण्योऽपि भूपालोऽन्यदा मृत्युक्षणे किल । प्रासादशिखरे कीर-मुपविष्टं व्यलोकत ॥५॥
शुभध्यानान्नृपो मृत्वा वने चन्द्रवराभिधे । शुकोऽजनि यतः प्रान्ते या मतिः सा गतिर्भवेत् ॥६॥
भर्तुर्मरणकर्त्तव्यं कृत्वा ते वल्लभे वरे । व्रतं जगृहतुस्तीव्रं तपश्च चक्रतुः सदा ॥७॥
मृत्वा द्वे अपि ते देव-लोके गत्वाऽवधेर्बलात् । ज्ञात्वा निजं पतिं कीरं तत्रैत्येत्यूचतुः स्फुटम् ॥८॥
जितारिस्त्वमभूद्राजा भद्दिलाह्वे पुरे वरे । इत्यादि चरितं मृत्यु-प्रान्ते कीरपुरस्तदा ॥९॥ (युग्मम्)
त्वं चेदनशनं लाहि साम्प्रतं कीरभावतः । देवलोके सुरस्फार-रूपधारी भविष्यसि ॥१०॥
गृहीत्वाऽनशनं कीर-स्तयोर्देव्योरभूत् पतिः । च्युत्वा देव्यौ ततो मर्त्य-भवं चालभतां क्रमात् ॥११॥
ततस्तत्र सुरावासे कीरस्य वल्लभे वरे । अभूतां पूर्वपुण्येन हृष्टोऽभूत्स सुरस्तदा ॥१२॥
हंसी देवी च्युता स्वर्गात् क्षितिप्रतिष्ठपत्तने । मृगध्वजोऽभवद् भूपो रूपलावण्यसुन्दरः ॥१३॥
सारसी स्वर्गात् च्युत्वा गागलेश्च तपस्विनः । पुत्री कमलमालेति बभूवार्हतधर्मकृत् ॥१४॥
जितारिर्निर्जरोऽन्येद्युः पप्रच्छ ज्ञानिसन्निधौ । भविष्यत्यर्हतो धर्म-प्राप्तिर्मे न वा निगद्यताम् ॥१५॥
केवल्याहाभवद् हंसी मृगध्वजमहीपतिः । क्षितिप्रतिष्ठनगरे मरुत्पुरसहोदरे ॥१६॥
गागलेस्तापसस्यासीत् सारस्या असुमान् पुनः । नाम्ना कमलमालेति रूपनिर्जितनिर्जरी ॥१७॥

मृगध्वजस्य कमल-मालायाः पाणिपीडने । जाते त्वं चैतयोः पुत्रो भविष्यसि शुकामर ! ॥१८॥
तदा ते सर्वविद्धर्म-प्राप्तिर्भवति निश्चितम् । श्रुत्वैतत् स सुरः कीररूपभृदभवत् क्षणात् ॥१९॥
क्षितिप्रतिष्ठनगरे यावद्यातः शुकामरः । तावद् भूपः पुरोद्याने चूतस्याधःस्थितो मुदा ॥२०॥
क्षणाद्ध्या (स्त्राः) प्रिया दृष्ट्वा सर्वा दध्याविदं हृदि । ममान्तःपुरनारीणां तुल्या नारी न विद्यते ॥२१॥
तदा माकन्दशाखायां स्थितः सुरः शुकः स च । जगौ गर्वो न कर्त्तव्य उत्तमैर्मानवैरिति ॥२२॥
यतः-'स्वचित्तचिन्तितो गर्वः कस्य नाम न विद्यते ? । उत्क्षिप्य टिट्टिभः पादौ शेते भङ्गभयाद् भुवः ॥१॥

रे ! पक्षिन्नागतस्त्वं कुत इह सरसः तत् कियद्भो ! विशालं,
किं मद्धाम्नोपि बाढं नहि नहि सुमहत् पाप ! मा जल्प मिथ्या ।
इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं,
नीचः स्वल्पेन गर्वीभवति विषया नापरे येन दृष्टाः ॥२॥

दन्ताः सप्त बलं विषाणयुगलं पुच्छं चलः कर्बुरः, कुक्षिश्चन्द्रकितो वपुः कुसुमितं सत्त्वच्युतं चेष्टितम् ।
अस्मिन् दुष्टवृषे वृषाग्रिमगुणग्रामानभिज्ञात्मनो, ग्रामीणस्य तथापि चेतसि चिरं धुर्येति विस्फूर्जितम् ॥३॥
शुकोक्तं भूप आकर्ण्य जगौ मेऽन्तःपुरं वरम् । यादृशं विद्यते तादृक् शुक ! क्वापि न वीक्ष्यते ॥२३॥
शुकोऽवग् भूपते ! गर्वः क्रियते न सता क्वचित् । यतो हि विद्यते तार-तम्यं विश्वत्रयेऽपि हि ॥२४॥
श्रीपुरनगरे वर्ये बभूव गागलिनृपः । स चोत्पन्नविरागः सन् जग्राह तापसं व्रतम् ॥२५॥
सगर्भापि प्रिया कान्त-पृष्ठावजनि तापसी । ऋषभस्य जिनेशस्यो-पास्ति तौ कुरुतः स्म च ॥२६॥
वने सा तापसी पुत्रीं प्रसूय सूतिरोगतः । प्राप मृत्युं ततस्तातो वर्द्धयामास तां क्रमात् ॥२७॥
यादृक् कमलमाला सा सुरूपा विद्यतेऽबला । तादृगेकापि नो ताव-कीनाऽस्ति सहचारिणी ॥२८॥
यद्यस्ति वीक्षितुं कन्यां तां वाञ्छाऽस्ति तवाधुना । तदा पृष्ठौ ममाऽऽगच्छ दर्शयामि यथाऽद्भुतम् ॥२९॥
इत्युक्त्वा चलिते कीरे वायुवेगं तुरङ्गमम् । आरुह्य नृपतिस्तस्य पृष्ठे चचाल वेगतः ॥३०॥
तथाऽश्वो वेगतोऽचालीद् यथा गच्छति कीरराट् । क्रमाद्ययौ महाटव्यां महीशः कीरपृष्ठितः ॥३१॥
दृष्टाऽऽद्यार्हद्गृहं स्फारं गत्वा मध्ये जिनेश्वरम् । यावन्ननाम तावच्च स शुकः क्वचिदीयिवान् ॥३२॥
ततो भूपो विशिष्टार्थ-स्तोत्रैश्चाक्षरैस्तदा । तुष्टावेति जगद्वन्द्यं युगादीशं जिनाधिपम् ॥३३॥
सुरासुरमहीनाथ-मौलिमालानतक्रम! । श्रीनाभिभूपपुत्र ! त्वं स्तवीमि शिवशर्मणे ॥३४॥
संसारविपुलाम्भोधि-तारणैकतरीनिभ ! । दत्तानन्तसुख ! श्रीसद्वृषभ ! त्वं चिरं जय ॥३५॥
श्रुत्वैतद् गागिलिस्तत्राऽऽगत्य नत्वा जिनेश्वरम् । स्वाश्रये नृपतिं नीत्वाऽभोजयत् स्वान्नदानतः ॥३६॥
ततो गागिलिराचष्ट कन्यामेनां ममाऽधुना । परिणीय व्रज स्वच्छ ! ततो भूपो जगावदः ॥३७॥
अज्ञात्वा मत्कुलं मह्यं त्वं दास्यसि कनीं कथम् । ऋषिः प्राह शुकेनोक्त समेत्येति ममाश्रमे ॥३८॥
अहं मृगध्वजं भूप-मानेष्येऽत्र ऋषे ! द्रुतम् । तस्मै दत्त्वा सुतां कुर्या भक्तिं श्रीवृषभप्रभोः ॥३९॥
तेनोक्तस्त्वमगा अत्रो-द्वाहयाङ्गभवां मम । ततः कमलमालां तु परिणीय मृगध्वजः ॥४०॥
यियासुं स्वपुरीं कान्त मत्वा तापसनन्दिनी । वृषभावसथे नत्वा युगादीश जगाविति ॥४१॥
सामी सुणइ अतुलबल बल जाणीसि इहेव हीअडा । अब्भितर मइ गहिओ जइसकि नीकलि देव ! ॥४२॥

एवं स्तुत्वा प्रभुं भक्त्या गागल्यङ्गभवा तदा । प्रणम्य पितरं पत्युः समीपं समुपागमत् ॥४३॥
मृगध्वजोऽपि सर्वज्ञं प्रणम्य गागलिं पुनः । यावच्चलितुकामोऽभूत् तावत्कीरो जगाविदः ॥४४॥
मत्पृष्ठौ भवताऽऽगम्यं त्वरितं त्वरितं नृप ! । ततोऽचलद् नृपः कीर-पृष्ठौ पत्नीसमन्वितः ॥४५॥
इतश्चन्द्रवतीपत्न्या पत्यूराज्ये स्वसोदरम् । आनीय वेष्टयामास नेतुं नगरमञ्जसा ॥४६॥
सोऽपि मृगध्वजं भूप-मागतं चावगत्य तु । गत्वा सन्मुखमाचष्ट पातुं ते पुरमागमम् ॥४७॥
त्वत्सेवकैरहं शत्रुः कृत्वेति पुरमध्यतः । सम्प्रविशन्निषिद्धस्तु पूर्या बहिः स्थितस्ततः ॥४८॥
मृगध्वजो जगौ वर्यं कृतं तु भवताऽधुना । रक्षितं नगरं यस्मात् त्वया मे चन्द्रशेखर ! ॥४९॥
ततोऽभ्येत्य पुरीमध्ये मृगध्वजो लसन्महम् । तस्यै पत्न्यै ददौ सद्म स्फारं वासकृते तदा ॥५०॥
मृगध्वजविसृष्टोऽथ चन्द्रशेखर ईयिवान् । मृगस्ततः पपालोर्वीं न्यायमार्गेण सन्ततम् ॥५१॥
कीरो जितारिजीवस्तु स सुरः स्वर्गतश्च्युतः । अवातरत् ऋषेः पुत्र्याः गर्भे शोभनवासरे ॥५२॥
क्रमाज्जाते सुते पित्रा कृत्वा जन्मोत्सवं महत् । शुकेति प्रददे नाम सर्वस्वजनसाक्षिकम् ॥५३॥
कौमुद्या उत्सवेऽन्येद्यु-र्भूमीनाथः प्रियायुतः । गत्वोद्याने निविष्टः सन् चूतस्याधो जगाविति ॥५४॥
अस्मिन् चूते स्थितो गर्वं कुर्वन् शुकेन केनचित् । निषिद्धोऽहं पुरा श्लोक-जल्पनात् प्रेयसि ध्रुवम् ॥५५॥
'स्वचित्तचिन्तितो गर्व' इत्यादि ऋषिनन्दिन्या स्वगेहानयनान्तिमे । प्रोक्ते विवाहसम्बन्धे शुको मूर्च्छामुपागमत्
वायुक्षेपादिना पुत्रो लब्धचैतन्यवैभवः । जातिस्मृत्या भवं पूर्वं दृष्ट्वा जजल्प नो मनाग् ॥५७॥
उपचारेषु भूयस्सु कृतेषु भूभुजा तदा । शुकोऽजल्पद् यदा नैव तदेति मनुजा जगुः ॥५८॥

यतः— "शशिनि खलु कलङ्कं कण्टकाः पद्मनाले, उदधिजलमपेयं पण्डिते निर्धनत्वम् ।
दयितजनवियोगो दुर्भगत्वं सुरूपे, धनपतिकृपणत्वं रत्नदोषी कृतान्तः ॥१॥"

द्वितीयवत्सरे लोकाभ्यर्थितो मेदनीपतिः । कौमुद्या उत्सवे वाह्ये चूते पूर्ववदीयिवान ॥५९॥
पुत्रयुतो जगौ राजा तस्मिन्नाम्रतरौ त्वया । मयापि च न गन्तव्यं यतो मूकोऽभवत् सुतः ॥६०॥
जल्पत्येवं नृपे कश्चिदागत्य सेवको जगौ । तस्मिन् आम्रतले साधो-रुत्पन्नं ज्ञानमव्ययम् ॥६१॥
राजा राज्ञीयुतस्तत्र गत्वा नत्वा मुनीश्वरम् । धर्म्मं श्रोतुमुपाविष्टः भूरिलोकसमन्वितः ॥६२॥

सद्वंशजन्म गृहिणी स्पृहणीयशीला, लीलायितं वपुषि पौरुषभूषणश्रीः ।
पुत्राः पवित्रचरिताः सुहृदोऽपदोषाः, स्युर्धर्मतः खलु फलानि पचेलिमानि ॥१॥
विरोधिता बन्धुजनेषु नित्यं, सरागता मूर्खजने प्रसङ्गः ।
क्रूरस्वभावः कटुवाक् सरोषा, नरस्य चिह्नं नरकाऽऽगतस्य ॥२॥
स्वर्गच्युतानामिह जीवलोके, चत्वारि नित्यं हृदये वसन्ति ।
दानप्रसङ्गो विमला च वाणी, देवार्चनं सद्गुरुसेवनं च ॥३॥

देशनान्ते महीपालो योजयित्वा करद्वयम् । पप्रच्छ भगवन् ! केन हेतुना वक्ति नो सुतः ॥६३॥
ज्ञान्याचष्ट भवो ह्येष विद्यते गहनो भृशम् । पिता पुत्रो भवेत् पुत्रः पिता वा जननी पुनः ॥६४॥
यतः—"मातापितृसहस्राणि पुत्रदारशतानि च । संसारेऽत्र व्यतीतानि कस्याऽहं कस्य बान्धवः" ॥६५॥

नृपोऽभाणीत् सुतः स्वामिन् ! जल्पन्नेव (ल्पेदेवं) विधीयताम् । ततो ज्ञान्यखिलं पूर्वं भवं प्रोक्त्वा जगावदः ॥६६॥
स्वपूर्वभवसम्बन्धो मातापित्रादिसम्भवः । ज्ञातोऽपि ज्ञानतो जीवैश्चिन्तनीयो न चेतसि ॥६७॥
पुत्रपित्रादिसम्बन्धा विद्यन्ते नैकशो मिथः । नृणां स्त्रीणां भवेत्तेन सम्बन्धो नैव चिन्त्यते ॥६८॥
यतः–"अतीतं नैव शोचन्ते भविष्यं नैव चिन्तयेत् । वर्त्तमानेन कालेन वर्त्तन्ते च विचक्षणाः ॥६९॥
यत्त्वं चिन्तयसि स्वान्ते माता तातो प्रिये मम । अतो माता पितेत्यत्र कथं जल्पामि साम्प्रतम् ॥७०॥ इत्यादि ।
ततः प्राग्भवसम्बन्धं त्यक्त्वाशेषं शुकाऽधुना । वन्दस्वाऽस्मान् पितुर्मातुर्नाम लाहि ग्रहं त्यज ॥७१॥
श्रुत्वेति शुक उत्थाय वन्दित्वा विधिवद् गुरुम् । लात्वा मातुः पितुर्नाम्नी ननाम चरणौ मुदा ॥७२॥
ततः सम्यक्त्वमूलानि श्रावकस्य व्रतानि हि । राजा राज्यन्यलोकाश्च ललुः केवलिसन्निधौ ॥७३॥
मृगध्वजो जगौ मे क्व वैराग्यं प्रभविष्यति ? । ज्ञान्याचष्ट यदा चन्द्र-वत्याः पुत्रं निरीक्षसे ॥७४॥
ततः स केवली स्वीय-चरितं गहनं तदा । प्रोक्त्वा भव्यप्रबोधाय विजहार धरातले ॥७५॥
क्रमात्पुत्रोऽभवद्धंसनामा तस्य महीपतेः । ऋषिपुत्री सुतौ द्वौ तु वर्द्धयामास सन्ततम् ॥७६॥
अन्यदा गागलिर्गत्वा मृगध्वजनृपान्तिके । आपृच्छ्य भूपतिं पुत्रीं शुकं स्वावटजेऽनयत् ॥७७॥
तत्र तीर्थावनकृते मुक्त्वा शुकं सुतासुतम् । सिद्धाद्रौ ऋषभं नन्तु-मचालीद् गागलिर्मुदा ॥७८॥
शुकः कुर्वन् युगादीश-पूजां सततमन्यदा । देवौकस्थां स्त्रियं वीक्ष्याप्राक्षीत् त्वमागमः कुतः ? ॥७९॥
नारी साऽऽचष्ट चम्पाया-मरिमर्दनभूपतेः । श्रीमतीगेहिनीजाता पद्मावत्यभवत् सुता ॥८०॥
धात्र्या मात्रा च सा पाल्य-माना यौवनमासदत् । पिता विलोकमानोऽभूद्वरस्य कन्यकाकृते ॥८१॥
पद्मावतीं मया सार्द्धं गवाक्षस्थां दिनोदये । वायुवेगः खगो लात्वा विमानस्थोऽम्बरेऽचलत् ॥८२॥
विमानात् पतिताऽत्राहं प्रासादे समुपागमम् । खेटः पद्मावतीं लात्वा क्वाप्यगात्तेन रोदिमि ॥८३॥
ततः शुको व्रजन् द्रष्टुं तां कन्यामासन्नान् धुरि । ततोऽग्रे यान् नरं त्वेकं क्रन्दन्तं वीक्षते स्म सः ॥८४॥
शुकोऽवक् क्रन्द्यते कस्मात् सोऽवक् पद्मावतीं कनीम् । लात्वा विमानमारूढो यावदत्राहमागमम् ॥८५॥
तावदेकाऽबला यानात् पपाताऽनघबालिका । ततोऽहमपतं नष्टं विमानं च क्वचिन्मम ॥८६॥
खगामिनी गता विद्या तेन रोदिमि साम्प्रतम् । स्त्र्यपहारो मयाऽकारि यत्ततः श्वभ्रगाम्यहम् ॥८७॥
पापादुपरतं तं तु ज्ञात्वाऽऽनीय जिनाश्रये । नत्वा देवं खगस्त्रीयुक् स्वाश्रये शुक ईयिवान् ॥८८॥
वनेयान्नप्रदानेन भोजयित्वाऽऽदराच्च तान् । शुकोऽवग् व्योमगा विद्याऽऽयाति वा विस्मृता तव ॥८९॥
खगोऽवक् प्रथमं पद्य समेति मम साम्प्रतम् । शुकोऽवक् श्रावय त्वं तत् कर्णयोर्व्योमगाऽधुना ॥९०॥
खगामिनाऽऽदिमे पद्ये प्रोक्ते सति शुकस्तदा । सम्पूर्णां व्योमगां विद्यां शिक्षयामास तं तदा ॥९१॥
शुकेनापि (खगेनापि) खगा विद्या शुकाय प्रददे मुदा । द्वावप्यथ खगौ जातौ वायुवेगशुकावपि ॥९२॥
शत्रुञ्जये जिनान् नत्वा गागलौ समुपागते । शुकः खगयुतश्चम्पा-नगरीं समुपेयिवान् ॥९३॥
खगोऽरिमर्दनक्षोणी-पतेरग्रे जगाविति । मया पापात्मना पद्मा-वती तव हृता सुता ॥९४॥
इत्यादि सकलं स्वीय-वृत्तं तत्रागमान्तिकम् । वायुवेगो जगौ वृत्तं शुकस्य च नृपाग्रतः ॥९५॥
शुके पद्मावतीचेतो ज्ञात्वाऽरिमर्दनस्तदा । शुकाय प्रददौ चारु-महोत्सवपुरस्सरम् ॥९६॥

वायुवेगस्ततो नीत्वा स्वपुरे शुकमादरात् । वायुवेगां सुतां तस्मै व्यश्राणयद्वरोत्सवम् ॥९७॥
तत्र शाश्वतचैत्यानि वायुवेगयुतः शुकः । ववन्दे चार्चयामास सुमनोभिर्वरैर्मुदा ॥९८॥
वरं विमानमारुह्य शुकः पत्नीद्वयीयुतः । वायुवेगखगाऽऽसेव्यः स्वपुरान्ते समीयिवान् ॥९९॥
मुहूर्ते रुचिरे चारु-महोत्सवपुरस्सरम् । मातापित्रोः पदाम्भोजं विनयेनाऽनमत् शुकः ॥१००॥
वायुवेगस्ततोऽशेषं शुकस्य चेष्टितं तदा । मृगध्वजर्षिनन्दिन्योः पुरतः प्रोक्तवान् मुदा ॥१०१॥
मृगध्वजनृपो वायु-वेगव्योमगपुत्रयोः । विशेषाद् गौरवं चक्रे स्वन्नपानादिदानतः ॥१०२॥
परिधाप्याम्बरैर्वायु-वेगं मृगध्वजो नृपः । विससर्ज यदाऽनंसीत् शुकः सोपि पुरस्सरम् ॥१०३॥
भूपोऽथ शुकहंसाभ्यां पुत्राभ्यां सह सन्ततम् । पालयन् पृथिवीं सौख्य-सहितां विदधेतराम् ॥१०४॥
वैराग्यं मेऽभवन्नैव चन्द्रवत्यां सुतोऽपि च । ध्यायत्येवं नृपे कश्चिद् बालोऽभ्येत्य नतिं व्यधात् ॥१०५॥
कस्त्वं कुतः समायातो जल्पत्येवं महीपतौ । खेऽभूद् वाणी तदा तेऽसौ पुत्रश्चन्द्रवतीभवः ॥१०६॥
यद्यस्ति तव सन्देहो तदा चम्पककानने । गत्वा यशोमतीं पृच्छ योगिनीं सा च वक्ष्यति ॥१०७॥
श्रुत्वैतद् भूपतिस्तत्र गत्वा चन्द्रवतीजयुग् । पप्रच्छाऽयं सुतो मेऽसौ कथं योगिनि ! जल्पताम् ॥१०८॥
ततोऽवग् योगिनी भूप-चन्द्रवत्यां तवाङ्गजः । विषमोऽयं भवोऽसारो यतो न कस्य को निजः ॥१०९॥
कोऽहं कस्त्वं कुत आयातः का मे जननी को मे तातः।यद्यैवं दृष्टः संसारः सर्वोऽयं (ते) स्वप्नविचारः॥११०॥
चन्द्राह्वपुरि सोमक्षमा-पतेर्भानुमतीप्रिया । असूत पुत्रनन्दिन्यावेकस्मिन् वासरे किल ॥१११॥
क्रमाज्जातिस्मृतिं प्राप्य दृष्ट्वा स्वं युगलिनो भवम् । मिथो विवाहमीहानौ तौ पृथक् परिणायितौ ॥११२॥
दूरस्थावपि सङ्गं न प्रापतुर्द्वौ यदा नृप ! । आराधितस्तदा देवश्चन्द्रेण प्रोक्तवानिति ॥११३॥
मृगध्वजप्रिया चन्द्र-वती सुतं सुविष्यति । य तं पश्यति नो यावद् मृगध्वजो नरेश्वरः ॥११४॥
तावद् विद्या तवादृश्य-कारिणी चन्द्रशेखर ! । भविष्यति ततश्चेतश्चिन्तितं स्वेच्छया कुरु ॥११५॥
ततश्चन्द्रवतीजातं चन्द्राङ्कं तनयं रहः । आनीयाऽत्रामुचच्चन्द्रो मयाऽस्थापि सुतस्तव ॥११६॥
त्यक्ता भोगसुखेनाहं पत्याऽन्येद्युरतवाङ्गजम् । अवचं भुंक्ष्व मां भोगांश्चन्द्राङ्क ! विलसत् सुखम् ॥११७॥
ततश्चन्द्राङ्क आचष्ट मातरेवं किमुच्यते ? । मया प्रोचे न मे पुत्र-स्त्वं तु मृगध्वजेशितुः ॥११८॥
तेन त्वं देहि मे भोग-सुखं चन्द्राङ्क ! साम्प्रतम् । चन्द्रोऽवग् धिग् भवतीं तु धिग् भवं धिग् मनोभवम् ॥११९॥
यतः-राजपत्नी गुरोः पत्नी मित्रस्य प्रेयसी तथा । स्वमाता पत्नीमाता च पञ्चैता मातरः स्मृताः॥१२०॥
त्यक्त्वा मां जननीं सद्यश्चन्द्राङ्कस्ते पदद्वयम् । नन्तुं चेतोऽचलत् सायं योगिन्यामं ततोऽहकम् ॥१२१॥
चन्द्रवत्या स्वसोदर्यो भोगाय चन्द्रशेखरः । स्थापितोऽस्ति भवद्गेहे दृश्यतेऽतो न केनचित् ॥१२२॥
अवधिज्ञानतो मत्वा मयैतत्ते निवेदितम् । ततः क्रुद्धस्य भूपस्योपशमाय जगाद सा ॥१२३॥
पुत्ता मित्ता हुइ अनेरा नरह नारि अनेरी। मोहइ मोहियओ मूढउ जंपइ मुहीआ मोरी मोरी ॥१२४॥
अतिहिं गहना अतिहिं अपारा संसारसायरखारा । बूझउ बूझउ गोरख बोलइ सारा धर्मविचारा ॥१२५॥
कवण केरा तुरंगम हाथी कवण केरी नारी। नरकी जाता कोइ न राखइ हीअडइ जोइ विचारी ॥१२६॥
क्रोध परिहरि मान म करी माया लोभ निवारे । अवर वयरी मनि म आणे केवल आपू तारे ॥१२७॥

इत्याकर्ण्य नृपो मुक्त-क्रोधश्चन्द्रकसंयुतः । स्वपुर्या बहिरुद्याने समेत्याऽस्थात् व्रतेच्छया ॥१२८॥
व्रतेच्छं नृपतिं मत्वा तत्रैत्य सचिवा जगुः । राज्यं वितीर्य पुत्राय लातव्यः संयमस्त्वया ॥१२९॥
राजाऽऽचष्ट न मे किञ्चिद् विद्यते विग्रहादिकम् । ततो दिनोदये गत्वा गुर्वन्ते संयमं श्रये ॥१३०॥
जिघृक्षोः संयमं बाह्यो-द्यानस्थस्य सुचेतसः । मृगध्वजस्य भूपस्य शुक्लध्यानजुषो भृशम् ॥१३१॥
अनित्यतादिकाऽशेष-भावनाभावितात्मनः । बभूव केवलज्ञानं लोकालोकावलोककम् ॥१३२॥ (युग्मं)
स्वर्णपद्मे विहिते सद्य उपविश्य मृगध्वजः । धर्मोपदेशनं चक्रे भव्यानां पुरतस्तदा ॥१३३॥
व्याख्यान्ते हंसचन्द्राङ्कौ युतौ कमलमालया । जगृहाते व्रतं श्रेयः सुखदं ज्ञानिसन्निधौ ॥१३४॥
उत्पन्नेऽप्यव्यये ज्ञाने पत्न्या वृतं मृगध्वजः । कस्याप्यग्रे जगौ नैव धर्मवृद्ध्यादिहेतवे ॥१३५॥
इतश्चन्द्राङ्कमायातं मृगध्वजस्य चक्षुषोः । मत्वा स्पष्टतनुश्चन्द्र-शेखरः स्वपुरं ययौ ॥१३६॥

चकार राजर्षिरथो विहारं, भव्याब्जि-राजीवविबोधनार्थम् ।
शुकः क्षितीशश्च चकार राज्यं, प्रवर्त्तयन् न्यायपथे जनौघम् ॥१३७॥

आराध्याथ सुरं चन्द्र-शेखरो भक्तिपूर्वकम् । भोक्तुं चन्द्रवतीं रूपं शुकस्यामार्गयत्तमाम् ॥१३८॥
चन्द्रशेखरभूपालो राज्यं वाञ्छन् शुकस्य हि । विदेशगमनं तस्य ववाञ्छ प्रतिवासरम् ॥१३९॥
शुकः पद्मावतीवायु-वेगापत्नीयुतोऽन्यदा । शाश्वतानर्हतो नन्तुं चचाल शुभवासरे ॥१४०॥
शुकरूपधरश्चन्द्रशेखरः शुकसद्मनि । गत्वा निश्यमिलत् चन्द्र-वत्या भोगस्य हेतवे ॥१४१॥
शुकरूपधरो देव-प्रभावात् चन्द्रशेखरः । कुर्वाणो निशि पूत्कार-मुत्तस्थाविति तत्क्षणात् ॥१४२॥
मम पत्नीद्वयं व्योम-विद्यां च कोऽपि खेचरः । लात्वा ययावहं तेन पश्चादत्र ममागमम् ॥१४३॥
मन्त्रिणो जगदुः स्वामि-स्तवास्ति कुशलं तनौ । शुकोऽवक् कुशलं मेऽस्ति शरीरे साम्प्रतं किल ॥१४४॥
उक्तं च मन्त्रिभिः स्वामिन् ! लक्ष्मीपत्नीसुतादयः । भवन्ति भूरिशो भूयो जीवितं न कदाचन ॥१४५॥
यतः—"मातापितृसहस्राणि पुत्रदारशतानि च । संसारेऽत्र व्यतीतानि कस्य कोऽयं भवेज्जनः" ॥१४६॥
शुकदेहधरो देव-प्रभावात् चन्द्रशेखरः । प्रजाः पाति सदा सत्य-शुकवत् निखिलाः खलु ॥१४७॥
चन्द्रवत्या समं भोग-सुखं श्रयन् मुदा सदा । मायायाः सदनं चन्द्र-शेखरोऽभून् महीपतिः ॥१४८॥
इतः शाश्वततीर्थेषु नत्वा देवान् प्रियायुतः । उद्याने समगाद्यावत् तावत् कूटशुको जगौ ॥१४९॥
भो मन्त्रीश ! प्रिये व्योम-विद्यां हृत्वा य ईयिवान् । स एवात्र समायातो राज्यं लातुं ममाधुना ॥१५०॥
स चास्ति मायिकः कूट-कपटादिविधौ पटुः । कार्यस्तस्य न विश्वासो भवद्भिर्वचने मनाग् ॥१५१॥
ये पत्न्यौ मोहिते तस्मिन् परस्त्रीलम्पटे नरे । तयोरपि न विश्वासः कार्यो भवद्भिरेकदा ॥१५२॥
चक्रे कूटः शुकः सर्वान् स्ववशान् सचिवांस्तदा । यथा सत्यशुकस्याऽद्दि-गोचरे ते ययुर्नहि ॥१५३॥
यतः—आसन्नमेव नृपतिर्भजते मनुष्यं, विद्याविहीनमकुलीनमसंस्तुतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च, यत्पार्श्वतो भवति तत् परिवेष्टयन्ति ॥१५४॥
अश्वः शास्त्रं शस्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥१५५॥
यदा कोपि प्रधानादि-जनः सत्यशुकं मनाग् । न मन्यते तदा दध्यौ शुको राज्यं गतं मम ॥१५६॥

प्रतिकूले विधौ किञ्चिन्नैव स्यादात्मनः क्वचित् । ममाधुनाऽखिलो मन्त्रि-वर्गो विघटितः खलु ॥१५७॥

यतः—तावच्चन्द्रबलं ततो ग्रहबलं तावद् बल भूबलं, तावत्सिद्ध्यति वाञ्छितार्थमखिलं तावज्जनः सज्जनः ।
मुद्रामण्डलमन्त्रतन्त्रमहिमा तावत्कृतं पौरुषं, यावत्पुण्यमिदं महद्विजयते पुण्यक्षये क्षीयते ॥१५८॥

ततस्तस्मात् पुरात्तस्य यातोऽन्यत्राऽम्बराध्वना । विमानं स्खलितं यत्र तत्रेति ध्यातवान् शुकः ॥१५९॥

क्षते प्रहारा निपतन्त्यवश्यं, धान्यक्षये स्फूर्जति जाठरोऽग्निः ।
आपत्सु मित्राणि विसंवदन्ति, छिद्रेष्वनर्था बहुलीभवन्ति ॥१६०॥

ततोऽधस्तात् शुको दृष्ट्वा दिशन्तं धर्ममार्हतम् । तातं तत्रैत्य शुश्राव देशनां नतिपूर्वकम् ॥१६१॥

देशनान्ते शुकोऽप्राक्षीद्राज्यं केन हृतं मम । तातेनाऽनर्थदण्डस्य भियोक्तं तस्य नाम न ॥१६२॥

यतः—'शरीराद्यर्थदण्डस्य प्रतिपक्षतया स्थितः । योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ॥१॥'

वैरिघातो नरेन्द्रत्वं पुरघाताग्निदीपने । खचरत्वाद्यपध्यानं मुहूर्त्तात् परतस्त्यजेत् ॥२॥

वृषभान् दमय क्षेत्रं कृष षण्डय वाजिनः । दाक्षिण्याऽविषये पापोपदेशोऽय न कल्पते ॥३॥

यन्त्रलाङ्गलशस्त्राग्नि-मुशलोदूखलादिकम् । दाक्षिण्याविषये हिंस्रं नार्पयेत् करुणापरः ॥४॥

कुतूहलाद् गीतनृत्य-नाटकादिनिरीक्षणम् । कामशास्त्रप्रसक्तिश्च द्यूतमद्यादिसेवनम् ॥५॥

जलक्रीडाऽऽन्दोलनादिर्विनोदो जन्तुयोधनम् । रिपोः सुतादिना वैरं भक्तस्त्रीदेशराट्कथाः ॥६॥

रोगमार्गश्रमौ मुक्त्वा स्वापश्च सकलां निशाम् । एवमादि परिहरेत् प्रमादाचरण सुधीः ॥७॥

विमृश्येति तदा ज्ञानी कृत्यं निष्पापमञ्जसा । प्राह द्वयो रिपोः सून्वोर्हिताय हितकृद्यथा ॥१६३॥

गच्छ सिद्धाचले चन्द्र-गुहायां वृषभं जिनम् । स्मरंस्तिष्ठैकभक्तः सन् षण्मासान् ब्रह्मचर्ययुग् ॥१६४॥

यदा तस्यां गुहायां तु तेजः स्फुरति सर्वतः । तदा यास्यत्यरिर्नंष्ट्वा करे ते राज्यमेष्यति ॥१६५॥

नत्वा तातं शुको गत्वा सिद्धशैले गुहान्तरे । स्थिरवाऽऽदिमं जिनं चित्ते दध्यौ तातोक्तयुक्तितः ॥१६६॥

तेनोक्तविधिना सर्वं स्मरतस्तस्य तत्र तु । षण्मासान्तेऽस्फुरत्तेजो गुहायां सर्वतो बहु ॥१६७॥

इतश्चन्द्रो निज रूपं निरीक्ष्य प्रकटं रहः । मृत्युभीतो निजं स्थानं तरसा समुपागमत् ॥१६८॥

शुकस्तु स्वपुरेऽभ्येत्य पत्नीद्वययुतस्तदा । निजं राज्यमलञ्चक्रे नानोत्सवपुरस्सरम् ॥१६९॥

एत्य मन्त्र्यादयो लोकाः प्रणम्य भूपतेः पदौ । भक्त्या निजापराधं तु क्षमयामासुरञ्जसा ॥१७०॥

ततो भूपो बहुं सङ्घं भूरिभूपसमन्वितः । गत्वा सिद्धगिरौ स्नात्रा-द्युत्सवं निखिलं व्यधात् ॥१७१॥

ततो राजा जगौ भूरि-भूभुजामग्रतस्तदा । ममाऽस्मात् तीर्थमाहात्म्यात् जयः शत्रोरजायत ॥१७२॥

अतोऽस्य भूभृतः शत्रुञ्जयेत्याह्वा विधीयते । भूपैरुक्तं तवाभीष्टं नामास्याऽस्तु नरेश्वर ! ॥१७३॥

अयं शत्रुञ्जयः शैलो घोषयन्नभितो नृपः । सप्तक्षेत्रे धनं भूरि व्ययति स्म सदुत्सवम् ॥१७४॥

इतस्तत्राऽऽगतश्चन्द्र-शेखरः प्रथमं जिनम् । नत्वा दध्यौ मया पाप कृतं दुर्गतिदायकम् ॥१७५॥

ध्यात्वेति संयमं पार्श्वे महोदयमुनेस्तदा । लात्वाऽऽत्मना भृशं निन्दन् चन्द्रश्चिक्षेप पातकम् ॥१७६॥

शुकोऽप्राक्षीत् गुरूपान्ते कृत्वा मद्रूपमत्र तु । येन राज्यं लले तस्य नाम साम्प्रतमुच्यताम् ॥१७७॥

मुनिः प्राह भवादस्माद् द्विपञ्चाशत्तमे भवे । भवतोद्दालितं यस्य ललौ स धरणीधरः ॥१७८॥

यस्यात्र च्णतो ज्ञानं विश्वविश्वावलोककम् । उत्पत्स्यते तमेव तं भूपं जानीहि भूपते ! ॥१७६॥
चन्द्रशेखरराजर्षेः केवल्युत्सवमादरात् । मुहूर्त्तात् कुर्वतो देवान् दृष्ट्वा जज्ञौ रिपुं तकम् ॥१८०॥
ततस्तत्र समेत्याऽऽशु च्मयित्वाऽतिभक्तितः । शुकोऽपि श्लाघयामास ज्ञानिनं चन्द्रशेखरम् ॥१८१॥
यात्रां विस्तरतः कृत्वा शुको भूपो निजे पुरे । समेत्य स्वीयपुत्राय राज्यं दत्त्वा व्रतं ललौ ॥१८२॥
सहस्रद्वितय भूपाः सामान्याः स्वामिभक्तितः । जगृहुः सयमं ज्ञानि-पार्श्वे विशदमानसाः ॥१८३॥
पालयन् निरतीचारं चारित्रं शुकसंयतः । शत्रुञ्जये ययौ तुर्य-तीर्थेशसमये क्रमात् ॥१८४॥
सर्वकर्मच्यात् प्राप्य ज्ञानं शुकयतीश्वरः । कोटिसाधुयुतो मुक्तिं ययौ सिद्धमहीधरे ॥१८५॥

卐 इति शत्रुञ्जयनामोपरि शुकभूपकथा सङ्क्षेपादुक्ता, विस्तरात् मत्कृतविक्रमार्कचरित्राद् ज्ञातव्या 卐

---

सम भूरिनृसङ्घातान् सिद्धान् वीक्ष्य सुमानसः । दण्डवीर्यो ददौ नाम सिद्धक्षेत्रेति तस्य तु । ॥१॥
अयोध्यायां पुरि श्रीमन्नाभेयस्यान्वये क्रमात् । बलवीर्यनृपस्याभूद् दण्डवीर्याभिधो नृपः ॥२॥
दिग्यात्रां कुर्वता तेन भुवः खण्डत्रयं क्रमात् । तथाऽसाधि यथा सर्वे तस्यासन् वशगा द्विपः ॥३॥
यतः—'राया आइच्चजसे महाजसे अइबले अ बलभद्दे । बलविरिअ कत्तविरिए जलविरिए दण्डविरिए अ' ॥१॥
एएहिं अद्धभरहं सयलं भुत्तं सिरेण धरिओ अ । जिणसंतीओ मउडो सेसेहिं न चाइओ बोढुं ॥२॥
धर्म्माचार्यान्तिकेऽन्येद्युर्दण्डवीर्यमहीपतिः । धर्म्मं श्रोतुं ययौ यावत्तावच्चेति जगौ गुरुः ॥४॥
धम्मो मगलमउल ओसहमउलं च सव्वदुक्खाणं । धम्मो बलं च विउलं धम्मो ताणं च सरणं च ॥५॥
इत्यादिदेशनां श्रुत्वा दण्डवीर्यनृपोऽलपत् । तीर्थे शत्रुञ्जये गच्छन् योऽस्मिन् मार्गे समेष्यति ॥६॥
त तं सर्वं लसद्भक्तदानात् सन्मान्य भक्तितः । जेमितव्यं मया प्राणात्ययेऽपि नान्यथा पुनः ॥७॥
लक्षकोटिमितान् श्राद्धान् तत्र मार्गे समागतान् । भोजयित्वा स्वयं दण्ड वीर्यो जेमति भूपतिः ॥८॥
इतः सुरालये शक्रो दण्डवीर्यमहीपतेः । शश्लाघाऽभिग्रहं घोरं सभायां द्युसदां पुरः ॥९॥
दण्डवीर्यो नृपः स्वीया-भिग्रहात् निर्जरादिभिः । न चाल्यते ततश्चैकः सुरः स्वर्गाद्विनिर्ययौ ॥१०॥
इतो देवगृहे देवं पूजयित्वा वरैः सुमैः । दण्डवीर्यनृपो गेह-दैवौकस्यर्चयज्जिनम् ॥११॥
उपविष्टे नृपे जग्धुं यावत् सूपकृतो वराः । मुञ्चन्ति भाजने भक्तं तावद् भृत्यो जगावदः ॥१२॥
शत्रुञ्जये व्रजन् सङ्घः समेतोऽस्ति पुराद् बहिः । राजोत्थाय गतः सङ्घं तत्राऽऽकारयितुं द्रुतम् ॥१३॥
सङ्घं निमन्त्र्य लेहायानीय भोजितवान्नृपः । यावत्तावत् समायातो महान् सङ्घोऽपरः पुनः ॥१४॥
जेमयित्वाऽखिलं सङ्घं यावद् भूपोऽत्तुमिच्छति । तावदन्यः समायातो महान् सङ्घः पुराद्बहिः ॥१५॥
एवं जेमयतः सङ्घं भूपस्याऽस्तं ययौ रविः । पुनः प्रौढः समायातः सङ्घः प्रातः पुराद् बहिः ॥१६॥
तस्मिन् भुङ्क्ते तदा सङ्घे पुनः सङ्घः समीयिवान् । तं च जेमयतः सङ्घं भूपस्याऽस्तं ययौ रविः ॥१७॥
एवं सप्तदिना याता अभुक्तस्य महीपतेः । ततो देवोऽवधिज्ञानाद् जज्ञौ भूपं स्थिराशयम् ॥१८॥
प्रादुर्भूय ततो देवो वर्यभूषणभूषितः । जगौ धन्यो महीश ! त्वं स्थिरं चेतोऽस्ति ते यतः ॥१९॥

सङ्घमेनं विकुर्व्याहं तेऽकरिष्यं परीक्षणम् । त्वं तु नो चलितः स्वीयाभिग्रहाद् भूप ! साम्प्रतम् ॥२०॥
सप्त चिन्तामणीन् दत्त्वा दण्डवीर्यमहीभुजे । तत्प्रशंसापरः स्वर्गं समगाद् भूरिसातदम् ॥२१॥
ततःप्रभृति भूपालो विशेषाद् धर्मकृत्यकृत् । सप्तक्षेत्रे धनं स्वीयं वपते स्म सदा मुदा ॥२२॥
दण्डवीर्यो नृपः श्रुत्वा तीर्थमाहात्म्यमद्भुतम् । यात्रायै मेलयामास सङ्घमेवंविधं क्रमात् ॥२३॥
महीपालाः सहस्राणि षोडशोत्तसबद्धकाः । पञ्च कोट्यो महेभ्यानां कुलान्यष्टौ नृणां पुनः ॥२४॥
जाम्बूनदमया देवा-लयाः सप्तशतप्रमाः । एकादशशती रौप्य-मयदेवौकसां पुनः ॥२५॥
मनुष्या विंशतिः कोट्यः स्त्रियः कोटयो द्विसप्ततिः । महिषाः कोटिरेकं च जलानयनहेतवे ॥२६॥
स्यन्दनाः स्थगिता वस्त्रैर्विंशतिः कोटिरद्भुताः । एवमन्यदपि ज्ञेयं सङ्घे तस्य महीपतेः ॥२७॥
एवंविधेन सङ्घेन दण्डवीर्यः समन्वितः । चलन् शत्रुञ्जये तीर्थे ययौ कुर्वन् महोत्सवम् ॥२८॥
स्नात्रार्चाध्वजदानादि-कृत्यानि समहोत्सवम् । दण्डवीर्योऽर्जयामास कर्म मुक्तिगमोचितम् ॥२९॥
तस्मिन् सङ्घे स्थिते तत्र सप्त कोट्यो नराः स्त्रियः । लेभिरे केवलज्ञानं ययुर्मुक्तिं क्रमात् पुनः ॥३०॥
सिद्धक्षेत्रे गतेष्वेषु नरादिषु तदा क्रमात् । सिद्धक्षेत्रमिति क्षमापो नाम तीर्थस्य दत्तवान् ॥३१॥
यात्रां कृत्वा समेतः स्व-नगरे मेदिनीपतिः । राज्यं दत्त्वा स्वपुत्राय जग्राह संयमश्रियम् ॥३२॥
क्रमात् सूरिपदं प्राप्य केवलज्ञानमप्यथ । ययौ शत्रुञ्जये मुक्तिं दण्डवीर्यनरेश्वरः ॥३३॥

★ इति सिद्धक्षेत्रनामोपरि दण्डवीर्यनृपकथा ★

॥ अथ पुण्डरीकनामोपरि श्रीवृषभजिन-प्रथमगणधरपुण्डरीककथा ॥

तृतीयस्याऽरकस्यान्तेऽवसर्पिण्यामिहाऽधुना । आसन् कुलकराः सप्त युगलित्वेन शोभिताः ॥१॥
तथाहि-'पढमित्थ विमलवाहण चक्खुम जसमं चउत्थमभिचंदे । तत्तो अ पसेणइए मरुदेवे चेव नाभी य ॥२॥
चदजस चंदकंता सुरूव पडिरूव चक्खुकंता य । सिरिकंता मरुदेवी कुलगरपत्तीण नामाइं' ॥३॥
नाभेः कुलकरस्यासीन्मरुदेवाभिधा प्रिया । तयोः ऋषभनामाभूत् पुत्र आद्यो जिनाधिपः ॥४॥
सुमङ्गला प्रिया तस्य भरतं भारतीयुतम् । असूत युग्मतश्चैकोनपञ्चाशत्सुतद्वयम् ॥५॥
पुत्रं बाहुबलिं पुत्रीं सुन्दरीं युग्मयोगतः । आदिदेवप्रियाऽसूत, सुनन्दाऽन्या शुभेऽहनि ॥६॥
भरतस्यादिमः पुत्रः पुण्डरीकाभिधोऽभवत् । अन्ये तु नन्दनाः कोटि-प्रमाणा अभवन् क्रमात् ॥७॥
निवार्य युग्मधर्मं तु व्यवहारपथं समम् । प्रकाश्य वृषभो राज्यं विदधे समयं बहुम् ॥८॥
इत्यादि शास्त्रान्तराद् ज्ञेयं स्वयम् ॥
अयोध्याया ददौ राज्यं भरतायाऽऽदिमो जिनः । विभज्य राज्यमन्येभ्यः पुत्रेभ्यो नीवृतां पुनः ॥९॥
लात्वा व्रतं प्रपद्याऽथ ज्ञानं श्रीवृषभः प्रभुः । प्रबोधितुं जनान् भव्यान् विजहाराऽवनीतले ॥१०॥
पुण्डरीको गृहीत्वादौ व्रतं श्रीवृषभान्तिके । गणभृत्सु पदं धुर्यं लभते स्माखिलेष्वपि ॥११॥

पुण्डरीको जनान् भव्यान् बहून् प्रबोधयन् नृपे । पूर्वाण्यनेकेशो निन्ये जीवितव्यस्य सन्ततम् ॥१२॥
वृषभान्तेऽन्यदाऽप्राक्षीत् पुण्डरीको गणाधिपः । मम कुत्र शिवं भावि स्वामिन्नादिश्यतामिति ॥१३॥
स्वाम्याचष्ट सुराष्ट्रासु तुङ्गोऽस्ति धरणीधरः । तत्र ते गमनं मोक्षे भविष्यति न संशयः ॥१४॥
श्रुत्वा प्रभोर्वचः सम्यग् भूरिसाधुसमन्वितः । पुण्डरीकोऽचलद् गन्तुं तुङ्गं महीधरं प्रति ॥१५॥
सुराष्ट्रासु स्थितं तुङ्गं पर्वतं भूविभूषणम् । दृष्ट्वा चक्रे नतिं भक्त्या पुण्डरीको गणाधिपः ॥१६॥
तुङ्गपर्वतमारूढः पुण्डरीको गणाधिपः । ध्यानमौनपरो जातो भूरिवाचंयमान्वितः ॥१७॥
पालयन् शुद्धचारित्रं वर्षं क्रियाकलापकृत् । पुण्डरीको ददौ धर्मो-पदेशं भविनां पुरः ॥१८॥
धर्मोपदेशोऽत्र वाच्यः-तदानीं पञ्चकोटीभिर्वर्यसाधुभिरन्वितः । पुण्डरीको गणी ध्यान-लीनचित्तोऽभवत्तदा ॥
मासक्षपणमुच्चर्य पुण्डरीकादयस्तदा । सर्वे वाचंयमाः शुक्लध्यानारूढा बभूवुः शम् ॥२०॥
चैत्रस्य पूर्णिमारात्रौ पुण्डरीको गणाधिपः । सम्प्राप केवलज्ञानं ततोऽन्ये साधवोऽश्रयन् ॥२१॥
पुण्डरीके गते मुक्तौ कृत्वा मोक्षमहोत्सवम् । देवास्तस्यैव तीर्थस्य पुण्डरीकाभिधां ददुः ॥२२॥
यतः-"चित्तस्स पुण्णिमाए समणाणं पंचकोडीपरिवरिओ । निम्मलजसपुण्डरीअं सो विमलगिरी जयउ तित्थं" ॥
भरतस्तत्र कल्याण-मयं स्फारं जिनालयम् । कारयामास कल्याण-कोटिकोटिशतव्ययात् ॥२४॥
तत्र रत्नमयं बिम्बं श्रीयुगादिजिनेशितुः । स्थापयामास भरतः प्रतिष्ठोत्सवपूर्वकम् ॥२५॥
द्वाविंशतिर्जिनावासान् द्वाविंशत्यर्हतां पुनः । भरतः कारयामास भूरिस्वर्णव्ययात् पुनः ॥२६॥

उक्तं च पुण्डरीकप्रकीर्णके—

"चित्तस्स पुण्णिमाए मासक्खमणेण केवलं नाणं । उप्पन्नं सव्वेसिं पढमं वर पुंडरीअस्स ॥१॥
केवलिमहिम दट्ठुं पुंडरीए सुरगणेहिं कीरंतं । उप्पन्ननाणरयणा केवलि जाया तओ सव्वे ॥२॥
देवेहि कया महिमा सिद्धिं पत्ताण सव्वसाहूणं । पुंडरीयकेवलिस्स वि सरीरपूया कया विहिणा ॥३॥
पूअं काऊणं तओ देवा वच्चंति अप्पणो ठाणं । पुंडरीअकेवलिस्स वि भरहेण कयं तु जिणभवणं ॥४॥
देवेहिं इमं घुट्ठं जिणेण परिसागएण भविआणं । पुन्नो एस नगवरो नामेण य पुंडरीओत्ति ॥५॥"

इति पुण्डरीकनामोपरि श्रीवृषभजिन-प्रथमगणधरपुण्डरीककथा

॥ अथ सिद्धशेखरनामोपरि पद्मभूपकथा ॥

यथा सिद्धान् जनान् भूरीन् दृष्ट्वा पद्ममहीपतिः । तीर्थस्याऽस्य ददौ सिद्ध-शेखरेत्युच्यते तथा ॥१॥
लक्ष्मीपुर्यामभूत्पद्म-महीशो न्यायतः प्रजाः । पालयन् कुरुते जैनं धर्मं शिवसुखप्रदम् ॥२॥
तस्याऽऽसीत् प्रेयसी प्रीति मती लावण्यशालिनी । पालयन्ती सदा शीलं सीतेव रामभूपतेः ॥३॥
पुत्रः पद्मकुमारोऽभूत् मन्त्री मुकुन्दनामकः । मन्त्रिसूनुर्धरो नाम्ना सर्वशास्त्रविशारदः ॥४ ।
यतः-"विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥५॥

मध्यरात्रेऽन्यदा नारी-रोदनं नगराद्बहिः । श्रुत्वैकाकी ततः पद्मो गत्वा तस्यन्ते जगावदः ॥६॥
किं त्वया रुद्यते नारि ! किं दुःखमस्ति तेऽधुना ? । नारी जगावहं राज्या-धिष्ठातृकाऽस्मि देवता ॥७॥
रक्षां करोमि राज्यस्य सर्वविघ्नापहारतः । मन्त्रीशनन्दनो योऽस्ति पुण्यवान् मदनोपमः ॥८॥
स एव योगिनाऽऽनीतो वनेऽत्र हन्तुमिच्छता । अग्निकुण्डे प्रक्षिप्याऽथ साध्यते रैनरोऽचिरात् ॥९॥
कोऽपि पाता न तस्याऽस्ति साहसी भुवि साम्प्रतम् । यो रक्षति सुतं मन्त्रि-नाथस्य कष्टतोपि च ॥१०॥
पद्मः प्राह स कुत्रास्ति ? देव्याहाऽस्य तरोः पुरः । अग्निकुण्डान्तिके योगि-समीपे विद्यतेऽधुना ॥११॥
पातयित्वाऽग्निकुण्डान्तस्तं वरं योगिराट् दृढं । साधयिष्यति कल्याण-पुरुषं दुष्टमानसः ॥१२॥
पद्मस्तत्रैत्य मन्त्रीश पुत्रं विमोच्य बंधतः । योगिनं पातयामास वह्निकुण्डे दुराशयम् ॥१३॥
वह्निकुण्डे तदा योगी पतितो हेमपुरुषः । अभूत् तं वारिणा सिक्त्वा शीतं चक्रे नृपाङ्गजः ॥१४॥
इतो मन्त्रिसुतं योग्यपहृतं स्वसुतं गतम् । ज्ञात्वा मन्त्रियुतो भूपोऽचालीत् तयोर्विलोकितुम् ॥१५॥
अवीक्ष्य स्वसुतं मन्त्रिसुतं चाभून्नृपोऽसुखी । यतो मोहोऽस्ति संसारे बन्धनं महतामपि ॥१६॥
निषिध्य गीतगानादि समेत्य स्वगृहे नृपः । प्राह यः कथिता पत्र-धरयोः शुद्धिमञ्जसा ॥१७॥
तस्मै ग्रामशतं वर्य-वाजिविंशतिसंयुतम् । दास्येऽहं विलसन्मान-दानपूर्वं न संशयः ॥१८॥
इतोऽभ्येत्य जगौ काष्ठ-विक्रयी कोऽपि मानवः । भवतो नन्दनो हेम-नरयुग् वीक्षितो वने ॥१९॥
भूपालोऽग्रेसरं तं च कृत्वाऽचालीद् यदा पुरात् । तदाऽकस्मात् सुतो मन्त्रिसुतयुग् मिलितोऽध्वनि ॥२०॥
पुत्रं हेमनृसंयुक्तं प्रेक्ष्य भूपो जगावदः । भो ! मन्त्रिपुत्र ! कुत्रायं हेमना प्रापि सूनुना ? ॥२१॥
ततो मन्त्रिसुतः प्राह सर्वं योगिविचेष्टितम् । समहं नन्दनं स्वीये गेहेऽनैषीन् नृपस्ततः ॥२२॥
काष्ठवाहकमर्त्याय स्वोक्तं भूपो ददौ धनम् । मन्त्रिसूनोर्विशेषेण भक्तिरासीन्नृपात्मजे ॥२३॥
सुवर्णमर्त्यसान्निध्याद् राजाऽनृणां महीं व्यधात् । सप्तक्षेत्र्यां धनं भूरि व्ययति स्म यथाविधि ॥२४॥
'जिणभवण-बिंब-पुत्थय-संघसरूवेसु सत्तखित्तेसु । ववित्रं धणंपि जायइ सिवफलयमहो अणंतगुणं ॥२५॥
लक्षभूपः स्वपुत्राय दत्त्वा राज्यं सदुत्सवम् । जग्राह संयमं मुक्ति-सुखश्रीकारणं रयात् ॥२६॥
पद्मोऽथ पृथिवीं पाति न्यायमार्गात् तथा सदा । विसस्मार प्रजा लक्ष-महीशं निजचेतसः ॥२७॥
रैनराद् विभवं भूरि प्राप्य प्रगे प्रगे सदा । अर्थिभ्योऽदात्तथा जाता इभ्यास्तेऽपि श्रिया क्रमात् ॥२८॥
राजा सङ्घमसङ्ख्यातं मेलयित्वा शुभेऽहनि । यात्रां कर्त्तुं चचालाथ शत्रुञ्जयगिरिं प्रति ॥२९॥
सिद्धभूमीधरारूढः पद्मभूपो जिनेशितुः । स्नात्रार्चारात्रिकादीनि कृत्यानि विदधेतराम् ॥३०॥
धर्मघोषो गुरुः साधुकोटिद्वयनिषेवितः । कुर्वन् ध्यानं तदा प्राप केवलज्ञानमञ्जसा ॥३१॥
स्तोकैर्दिनैर्गतान् सिद्धि-पुर्यां तांस्तान् मुनीन् नृपः । दृष्ट्वाऽदात्तस्य तीर्थस्य सिद्धशेखरनाम तु ॥३२॥
तदा भूपोऽपि तत्रस्थो भावनां भावयन् हृदि । सर्वकर्म्मक्षयान्मुक्ति-नगरीं समुपेयिवान् ॥३३॥
राज्ञोऽङ्गरक्षकाः पञ्च-शतं ध्यानपरायणाः । क्षीणकर्माष्टकाः सिद्धि-पुरीं प्रपेदिरे रयात् ॥३४॥
तदाऽभ्येत्य सुरास्तत्र कृत्वा सिद्धमहोत्सवम् । ययुः स्वर्गे ततः पद्म-पुत्रो हीरो व्यधान्महः ॥३५॥
ततो हीरः समेत्य स्व-नगरे सङ्घमादरात् । भोजयित्वाम्बरैर्वर्यैर्मुदा पर्युदधापयत् ॥३६॥

पद्मपट्टे मिलित्वाथ, मन्त्रिमुख्यैस्तदङ्गजः । हीरोऽस्थापि शुभे घस्रे महोत्सवपुरस्सरम् ॥३७॥

॥ इति सिद्धशेखरोपरि पद्मभूपकथा ॥

॥ अथ सिद्धपर्वतोपरि निर्जरकथा ॥

यत्र केवलिनः पार्श्वे ज्ञात्वा मुक्तिगतिं निजाम् । सिद्धपर्वत इत्याख्यां दधतुर्निर्जरौ यथा ॥१॥
श्रीपुरे धनदेभ्यस्य पत्नी धन्याभिधाऽभवत् । नाम्ना हरहरीपुत्रौ वर्गौ बभूवतुः क्रमात् ॥२॥
व्यवसायं करन् (रचन्) श्रेष्ठी (रैणां) रायां कोटित्रयं क्रमात् । अर्जयन्न तथाऽप्याप लोभस्यान्तं स्वचेतसि

यतः- "अर्थी नराणां पतिरङ्गनानां, वर्षा नदीनां ऋतुराट् तरूणाम् ।
सद्धर्मचारी नृपतिः प्रजानां, गतं गतं यौवनमानयन्ति ॥१॥"

तृष्णा खनिरगाधेयं दुष्पूरा केन पूर्यते ? । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥५॥
धनेषु जीवितव्येषु स्त्रीषु चाहारकर्म्मसु । अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च ॥६॥
एवंविधं धनं प्राप्या-व्ययित्वा च वृषे क्वचित् । प्रथमं नरकं प्राप धनदोऽपुण्यवान् क्रमात् ॥७॥
ततो हरहरी कृत्वा मृत्युकृत्यं पितुर्धनात् । व्यवसायं वितन्वानौ न क्षणं निवृतः स्म तौ ॥८॥
यथा यथा वितन्वाते व्यवसायं हरो हरिः । तथा तथा त्रुटत्येव धनं ग्रीष्मे यथा पयः ॥९॥
के वंका के पद्धरा पहा दीहा हुंति नराण । हरिम विसाय न आणीइ निअ हिअडइ अप्पाण ॥१०॥
क्रमान्निर्विभवौ जातौ सोदरौ तौ हरो हरिः । धनार्थं गणकान् नित्यं पप्रच्छतुः कृतादरौ ॥११॥
यतः-रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां गणकाः क्षीणसम्पदाम् ॥१२॥
तत्रान्यदा समायाताः श्रीधनेश्वरसूरयः । गत्वा तेषां समीपेऽतो पप्रच्छतुः कृताञ्जलि ॥१३॥
विलोक्य ज्योतिषं यूयं ब्रूथावयोः कदेन्दिरा । भविष्यति गृहे प्रोचु-स्ते तु तौ नैगमौ प्रति ॥१४॥
ज्योतिष्क-मन्त्र-तन्त्रादि कथितुं कल्पते नहि । साधूनां निर्वृतीच्छूनां मनाक् पातकहेतुकात् ॥१५॥
यतः-"जोइसनिमित्तअक्खरकोऊआएसभूइकम्मेसु । करणाणुमोअणेहि अ साहुस्स तवक्खओ होइ ॥१६॥"
कृतपुण्यस्य जीवस्य स्थितस्य शयितस्य वा । अनुद्यमस्य सद्मेति लक्ष्मीर्नद्य इवाम्बुधिम् ॥१७॥
यद्यस्ति भवतो वाञ्छा सुखायाऽत्र परत्र च । तदा जैनं वृषं भावात् कुरुतां वां शिवप्रदम् ॥१८॥
ततस्तौ प्रोचतुर्लक्ष्मीः सदनेऽस्त्यावयोर्नहि । धर्मस्थानेषु तेन श्री-रावाभ्यां व्ययते कथम् ? ॥१९॥
गुरवो जगदुस्तर्हि कुरुतं सन्ध्ययोर्द्वयोः । प्रतिक्रान्तिं नमस्कारान् स्मरतं च शतत्रयम् ॥२०॥
गुरूदितं वितन्वानौ धर्म्मं द्वावपि सोदरौ । ययतुः पुण्डरीकाद्रौ नन्तुं श्रीवृषभं जिनम् ॥२१॥
तत्र देवान् नमस्कृत्य ध्यानमौनपरायणौ । मृत्वा तौ सोदरौ स्वर्गे प्रथमे ययतुः समम् ॥२२॥
अवधिज्ञानतो ज्ञात्वा प्राग्भवं स्वं सुरौ च तौ । आगत्य पुण्डरीकाद्रौ स्थितौ यावत् प्रमोदितौ ॥२३॥
तावत्तत्र रमापुर्याः स्वामी मुकुन्दभूपतिः । असङ्ख्यसङ्घसंयुक्तः समागान्नन्तुमर्हतः ॥२४॥

भूपे स्नात्रं वितन्वाने जिनस्य तौ सुरौ तदा । अपूर्वं चक्रतुर्नाट्यं नमन्तौ श्रीजिनाधिपम् ॥२५॥
मुकुन्दो भूपतिः पूजां ध्वजान्तां विधिपूर्वकम् । कृत्वा केवलिनः पार्श्वे धर्म्मं श्रोतुं समीयिवान् ॥२६॥
तदोचतुः सुरौ द्वौ तु क्वाऽऽवां मुक्तिर्भविष्यति ? । केवल्याहाऽत्र सिद्धाद्रौ गमिष्यतो युवां शिवम् ॥२७॥
ततस्तौ प्रोचतुर्देवौ सिद्धपर्वत एव तु । आवयोर्मुक्तिगमनाद् गीयताममरैरपि ॥२८॥
तौ देवौ पर्वते तत्र सेवित्वाऽर्हत्क्रमाम्बुजम् । नत्वा च ज्ञानिनं स्वर्गे जग्मतुर्मुदिताशयौ ॥२९॥
ततश्च्युत्वा सुरौ तौ तु प्राप्य मर्त्यभवं क्रमात् । लात्वा दीक्षां गतौ सिद्धिं सिद्धपर्वतमस्तके ॥३०॥

※ इति सिद्धपर्वतोपरि निर्जरकथा ※

॥ अथ सिद्धराजोपरि चन्द्रचूडादिभूपकथा ॥

यात्रां कृत्वा नृपश्चन्द्र-चूडो धर्मपरायणः । सिद्धाद्रेः सिद्धराजेति नाम चक्रे सदुत्सवम् ॥१॥
कलाकेलिपुरे लक्ष्मी-धरस्य मेदिनीपतेः । लक्ष्मीवत्यभिधा पत्नी बभूवानघशीलभाग् ॥२॥
बहूपयाचितैः पुत्रोऽजनिष्ट शुभवासरे । तस्य राज्ञोऽभवत् प्राणादपि वल्लभ एव सः ॥३॥
जन्मोत्सवं नृपः कृत्वा भूयिष्ठविभवव्ययात् । चन्द्रचूडेति नामाऽदात् सूनोः सज्जनसाक्षिकम् ॥४॥
धर्मकर्मकला या या विद्यन्ते विबुधान्तिके । तास्ताः सर्वाः कुमारेण शिक्षिता लीलया किल ॥५॥
कुमारः केनचिद्व्योम-गामिना पूर्ववैरिणा । अपहृत्य महारण्ये मुमुचे दुःखहेतवे ॥६॥
जलाभावात्तृषा लग्ना यावत्प्राणापहारिका । तावत् स केनचिद् व्योम-गतिनोत्पाट्य यत्नतः ॥७॥
मुक्तो जलाशये पातुं पानीयं राजनन्दनः । यतः पुण्यवतां पुण्यं जागर्ति विपदि ध्रुवम् ॥८॥ युग्मम् ।
यावद् पिबति पानीयं कुमारो माररूपभृत् । तावदुत्पाट्य तं व्योम्नि हन्तुं विद्याधरोऽचलत् ॥९॥
आस्फालयति कीराद्रि-प्रस्थे तं यावता खगः । तावदेको बली व्योम-गामी तत्राऽऽगतो जगौ ॥१०॥
दुष्ट ! पापिष्ठ ! विद्याभृत् ! किमेनं नरपुङ्गवम् । हंसि ? बिभेषि नो पापात् मत्तो वा किल साम्प्रतम् ॥११॥
उक्त्वेति व्योमगो व्योम-गमरिं त दुराशयम् । हत्वा पृष्ठौ दृढं कुब्जं व्यधान्मुष्टिप्रहारतः ॥१२॥
खगो भग्नकटिः सोऽपि रुदन् क्रन्दन् बहुस्वरम् । रोदयामास पार्श्वस्थान् मृगफेरुरुरूनपि ॥१३॥
तदा खगो जगौ व्योम-गामिन् ! किं रुद्यते त्वया । खगोऽवग् मम देहेऽस्ति वेदना प्राणहारिका ॥१४॥
व्योमगामिन् ! त्वया भूमी-पतिपुत्रापहारतः । यत्पापं विहितं तस्य बीजमात्रमिदं फलम् ॥१५॥
परलोकफलं श्वभ्र-पातरूपं भविष्यति । तत्र या विद्यते पीडा तस्या (सा हि) वक्तुं न शक्यते ॥१६॥
स दुष्टव्योमगोऽवादीत् मया पापं कृतं बहु । अतः परं कुमारस्यो-परि दुष्टं न चिन्त्यते ॥१७॥
ततोऽन्यो व्योमगो विद्या-प्रभावात् तस्य विग्रहात् । अपाचक्रेऽचिराद् दूरं वेदना दुःखदायिनी ॥१८॥
ततो द्वाभ्यां खगाभिभ्यां मिथो मैत्रीं प्रपद्य च । ददिरे तस्य सद्विद्या व्योमगाद्या मनोहराः ॥१९॥
इतोऽप्रेक्ष्य सुतं भूपो दुःख्यरण्ये जनेऽभितः । न्यवर्त्तयत् पुरीमध्ये गीतगानादि सर्वतः ॥२०॥

दुःखितो नृपतिर्यावदुपाविष्टः सभान्तरे । तावत्पुत्रो युतो द्वाभ्यां खगाभ्यामीयिवान् प्रुतम् ॥२१॥
विद्याधरं सुतं मत्वा तयोर्व्योमगयोर्मुखात् । राजा हृष्टो ददौ राज्यं तनये नयशालिने ॥२२॥
लक्ष्मीधरो नृपः कृत्वाऽष्टाहूनिकां जिनसद्मसु । अग्रहीत् संयमं धीर-सूरीश्वरान्तिके मुदा ॥२३॥
लक्ष्मीधरयतिस्तीव्रं तपः कुर्वन् सदादरात् । ययौ शत्रुञ्जये तीर्थे सार्द्धं गुरुभिरन्यदा ॥२४॥
इतस्तत्र नृपश्चन्द्र-चूडोऽपि भूरिसङ्घयुग् । अभ्येत्य सङ्घकृत्यानि चक्रे स्नात्रपुरस्सरम् ॥२५॥
लक्ष्मीधरयतेस्तत्र शुक्लध्यानं वितन्वतः । उत्पन्नं केवलज्ञानं विश्वविश्वप्रकाशकम् ॥२६॥
ततो लक्ष्मीधरस्यर्षेः केवलज्ञानसूत्सवम् । क्रियमाणं सुरैः श्रुत्वा सङ्घः शेषः समागमत् ॥२७॥
देवैर्विनिर्मिते हेम-पद्मे निविश्य केवली । श्रीसङ्घस्य पुरो धर्मोपदेशमिति दत्तवान् ॥२८॥
"दिवसनिसाघडिमालं आऊ-सलिल जणस्स घित्तूणं । चंदाइच्च-बइल्ला कालरहट्टं भमाडंति ॥२९॥
जलनिहिसंठिअपवहण इक्कावनभागसरिसागहकज्जे । बावन्न-भागसरिसो जिणधम्मो होइ कायव्वो ॥३०॥
छायामिसेण कालो सयलजिआणं छलं गवेसंतो । पासं कह नवि मुंचइ तो धम्मे आयरं कुणह ॥३१॥
दोहाः—कम्मह वारह रूपउओ धम्मह मंडी हेह । आपणसग्गिमो चोरडी तई किसु सीखी एह ॥३२॥
एवं धर्म्मोपदेशं तु श्रृण्वतां भव्यदेहिनाम् । कोटिद्वयप्रमाणानां जज्ञे ज्ञानमनुत्तरम् ॥३३॥
सर्वेषां ज्ञानिनां तेषां ज्ञानोत्पत्तिमहोत्सवम् । आदौ चक्रुः सुरा भूपास्ततो भूरिभिनव्ययात् ॥३४॥
अस्मिंस्तीर्थे तपोध्यान-मौनार्हत्पूजनादिभिः । भवन्ति भविनः सिद्ध-राजानोऽनेकशः क्षणात् ॥३५॥
अतोऽस्य तीर्थराजस्य सिद्धराजाभिधा वरा । उच्यतां निखिलैर्लोकैरित्यवक् स नरेश्वरः ॥३६॥युग्मम्॥
सिद्धराजेति लोकेषु ध्यायत्सु भूरिषु स्फुटम् । बभूव केवलज्ञानं देवा ज्ञानोत्सवं व्यधुः ॥३७॥
चन्द्रचूडस्तदा ज्ञानि-पार्श्वे श्रयन् नृपं वरम् । शत्रुञ्जयस्य माहात्म्य-मश्रृणोदिति सादरम् ॥३८॥
पञ्चाशद्योजनो मुक्तिर्दर्शनात् स्पर्शनादपि । ये जानास्ते गमिष्यन्ति कालेनापि परां गतिम् ॥३९॥
तेषां जन्म च चित्तं च जीवितं सार्थकं च ये । सिद्धक्षेत्राचलं यान्ति परेषां व्यर्थमेव तत् ॥४०॥
चतुर्विंशतयोऽनन्ताः सिद्धाः सिद्धाचलेऽर्हताम् । सेत्स्यन्ति चैवानन्ता याः तत्सङ्ख्यां वेत्ति केवली ॥४१॥
श्रुत्वेति चन्द्रचूडक्ष्मा-पतिः पुष्पैः सुगन्धिभिः । अपूजयन्मुदा सिद्ध-राजं तीर्थं च सङ्घयुग् ॥४२॥
विधाय विस्तराद्यात्रां चन्द्रचूडावनीधवः । आजगामोत्सवाद्धैतं स्वपुरोद्यानभूतले ॥४३॥
भोजयित्वाऽखिल सङ्घं परिधाप्याम्बरैर्वरैः । विसृज्य नृपतिः स्वीय-सद्माऽगात्समहोत्सवम्॥४४॥

॥ इति सिद्धराजोपरि चन्द्रचूडादिभूपकथा ॥

---

॥ अथ बाहुबलिनामोपरि केलिप्रियभूपकथा ॥

यात्रां शत्रुञ्जये कृत्वा केलिप्रियमहीपतिः । सिद्धाद्रेः प्रददौ बाहु-बलिनाम सदुत्सवम् ॥१॥
कलाकेलिपुरे केलि-प्रियस्य मेदिनीपतेः । केलिप्रिया प्रिया जाता शीलादिगुणशालिनी ॥२॥
शोभनेऽह्नि सुतं केलि प्रियाऽसूत सुलक्षणम् । पिता बाहुबलिर्नाम ददौ सूनोः सदुत्सवम् ॥३॥

वर्द्धमानः क्रमाद्बाहु-बलिः पण्डितसन्निधौ । अशिक्षयन् कला वयस्तथाऽजनि यथा बुधः ॥४॥
तत्रोद्याने समायाता मानमर्दनसूरयः । ददते देशनां भव्या-ङ्गिभ्यः शिवसुखप्रदाम् ॥५॥
जन्तूनामवनं जिनेशमहनं भक्त्याऽऽगमाकर्णनं, साधूनां नमनं मदापनयनं सम्यग् गुरोर्माननम् ।
मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं, चेतः शोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥६॥
तदा राजा प्रियापुत्र-मित्रादिपरिवारयुग् । धर्मं श्रोतुं ययौ श्रेयः-सुखसन्ततिदायकम् ॥७॥
कुमारो बाहुवल्याह्वः कृत्वा पूजां जिनेशितुः । कुर्वन् ध्यानं सित प्राप्य केवलज्ञानमञ्जसा ॥८॥
विहिते केवलज्ञानो-त्सवे देवैः प्रमोदतः । बाहुबलिर्ददौ धर्मोपदेशमिति सादरम् ॥९॥
तदा वाचंयमाः कोटि-मिताः प्राप्य व्रतश्रियम् । क्रमात् क्षीणतमोव्राताः प्रापुर्ज्ञानमनुत्तरम् ॥१०॥
तत्रैव क्षीणनिश्शेषा-युषो वाचंयमाः समे । मुक्तिपुर्यां ययुर्देवाश्चक्रुश्चारूत्सवं पुनः ॥११॥
तत्राऽऽयुषः क्षये बाहु-बलिर्मुक्तिं यदा ययौ । तदा राजा ददौ बाहु-बलिनाम्नाऽस्य भूभृतः ॥१२॥
अथवा श्रीऋषभजिनस्य बाहुबलिपुत्रोऽत्र तीर्थे सिद्धिं गतः अतोऽस्य तीर्थस्य बाहुबलिनाम दत्तं देवैः ॥

● इति बाहुबलिनामोपरि केलिप्रियभूपकथा ●

॥ अथ चन्दनमहीपतिदत्त-मरुदेवभूधरेति सम्बन्धः श्री शत्रुञ्जयकथा ॥

मुक्तिगतं निजं तातं मत्वा चन्दनभूपतिः । सिद्धाद्रेर्मरुदेवेति नामाऽदात् लसदुत्सवम् ॥१॥
तथाहि-वीराह्वे नगरेऽनङ्ग-सेनस्य धरणीपतेः । मरुदेव्यभिधा पत्नी बभूवाऽनघशीलभाग् ॥२॥
राज्यन्यदा सुखं सुप्ता मरुदेवा लसत्तनुः । स्वप्नेऽपश्यत्तमां नाभि-नन्दनं पूजितं सुमैः ॥३॥
प्राता राज्ञी नृपस्याग्रे स्वप्नवृत्तान्तमूचुषी । राजाऽऽचष्टात्मनः पुत्रः पुण्यवाँश्च भविष्यति ॥४॥
ततो राज्युदरे पुण्य-वति प्राणिनि सद्दिने । अवतीर्णेऽभवन्नेवं दोहदाः प्रतिवासरम् ॥५॥
अर्चयामि जिनं दानं शुद्धं ददामि साधुषु । यात्रां कुर्वे सुतीर्थेषु सुश्राद्धान् भोजयाम्यहम् ॥६॥
उच्चस्थे तरणौ चन्द्रे राज्यसूत सुतं वरम् । तस्य नाम महीपालो मरुदेवेत्यदान्मुदा ॥७॥
यथा यथा कुमारोऽय ववर्द्धे मदनोपमः । तथा तथाऽवनीपाल-राज्यं वृद्धिमुपैति च ॥८॥
चन्द्रपुरे हरच्मापनन्दिनीं कमलाभिधाम् । पित्रा परिणायितः पुत्रो मरुदेवो वरेऽहनि ॥९॥
कृत्वा जिनार्चनं भावात् प्रतिलाभ्य यतीन् मुदा । भोजयित्वा वरश्राद्धान् कुमारोऽत्ति निरन्तरम् ॥१०॥
यतः-'पढमं जईण दाऊण अप्पणा पणमिऊण पारेइ । असई अ सुविहियाणं भुंजेइ अ कयदिसालोओ ॥११॥
साहूण कप्पणिज्जं जं नवि दिन्नं कहिंचि किंपि तहिं । धीरा जहुत्तकारी सुसावगा त न भुंजंति ॥१२॥
"वसहीसयणासणभत्तपाणभेसज्जवत्थपत्ताई । जइ वि न पज्जत्तधणो थोवावि हु थोवयं देइ" ॥१॥
राजा राज्येऽभिषिच्य स्वं नन्दनं सूरिसन्निधौ । प्रव्रज्यामग्रहीत् मुक्ति-सुखसंपत्तये क्रमात् ॥१३॥
मरुदेवनृपो न्याया-दपालीज्जनतां तथा । यथाऽभूत् सुखिनी बाढं धर्म्मकर्म्मणि कर्म्मठा ॥१४॥
यतः-"राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्त्तन्ते यथा राजा तथा प्रजा" ॥१५॥

हृष्टः शक्रस्तदा शेप-ज्ञानिनां रैमयान्यपि । चक्रे सहस्रपत्राण्यु-पवेशाय पृथक् पृथक् ॥ २२ ॥
प्रत्येकमखिलज्ञान-वतां पार्श्वे सुराधिपः । धर्मोपदेशमाकर्ण्य स्वान्तहृष्टोऽभवद् भृशम् ॥२३॥
यदा तत्र महाशैले सहस्रपत्रसूरिराट् । मुक्तिपुर्यां ययौ शक्र-श्चक्रे चारूत्मवं तदा ॥२४॥
सहस्रपत्रगेहिन्यः समेत्य सिद्धपर्वते । संप्राप्याऽनुत्तरं ज्ञानं मुक्तिपुर्यां समागमन् ॥२५॥
सहस्रपत्रसूरीशे मुक्तौ याते मरुत्पतिः । ददौ सहस्रपत्रेति नाम तीर्थस्य सूत्सवम् ॥२६॥

卐 इति सहस्रपत्रनामोपरि सहस्रपत्रकुमारकथा 卐

॥ अथ शतावर्तनामोपरि सोमदेवमहीपतिकथा ॥

यात्रां शत्रुञ्जये कृत्वा सोमदेवो नरेश्वरः । शतावर्त्तेति नामाऽदा-च्चारूत्सवपुरस्सरम् ॥१॥
कुण्डकेलिपुरे सोम-देवो न्यायेन मेदिनीम् । पालयन् कुरुते धर्म-कर्माणि सततं मुदा ॥२॥
साधयन् विषयान् भूपः क्रमाद्दक्षिणदिक्तटे । अरिमर्दनभूपालं स्वाज्ञामग्राहयद् बलात् ॥३॥
सोमदेवे महीपाले पालयति क्षमां नयात् । प्रजा प्रमुदिता जाता सोमे सत्युडुपङ्क्तिवत् ॥४॥
यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा । तथा यथार्थनामाऽभूद् राजा प्रकृतिरञ्जनात् ॥५॥
भेदयित्वाऽन्यदा सर्वं परिवारं धनार्पणात् । मदनोऽरिनृपः कुण्ड-केलिपुर्यां समागमत् ॥६॥
सोमदेवो नृपः पुर्या निर्गत्य बहिरञ्जसा । युद्ध्यन् सहाऽरिणा जज्ञे बलं विघटितं निजम् ॥७॥
दध्यौ सोमोऽधुना कर्त्तुं युद्धं मे नाऽरिणोचितम् । यतो विघटितं सर्वं बलं दुष्कर्मयोगतः ॥८॥
विमृश्येति तदा सर्वं बलं विमुच्य वेगतः । पत्नीयुक्तो रहो रात्रौ निःससार पुराद् बहिः ॥९॥
मार्गे तस्य महीशस्य पुत्रोऽसावि सुतो वरः । तस्य नाम ददौ देव-कुमारेति पिता तदा ॥१०॥
चन्द्रपुर्यन्तिके चन्द्राऽऽचार्योपान्ते स भूपतिः । धर्मं श्रोतुमुपाविष्टः प्रणम्य गेहिनीयुतः ॥११॥
पूआ जिणिंदेसु रुई वएसु, जत्तो अ सामाइअ पोसहेसु। दाणं सुपत्ते सवणं च सुत्ते सुसाहुसेवा सिवलोअमग्गो ॥
नाणं नियमग्गहणं नवकारो नयरुई य निद्दा य । पंच नयविभूसिआणं न पयारो तस्स संसारे ॥१३॥
के रोगा कानि कष्टानि कानि पापानि भूतले । पुरतः पुण्डरीकाद्रे स्तमांसीव विवस्वतः ॥१४॥
राजाऽप्राक्षीद् गतं राज्यं वलिष्यति कथं मम ? । गुरवो जगदुर्गच्छ तीर्थे शत्रुञ्जयाभिधे ॥१५॥
तत्र श्रीशान्तिनाथस्य पूजां कृत्वा वरैः सुमैः । षष्ठं तपः सदा कार्यं भवता मेदिनीपते ! ॥१६॥
श्रुत्वैतन्नृपतिः शत्रुञ्जये गत्वा निरन्तरम् । गुरूदितं तपः कुर्वन् ध्यायति प्रभुमन्वहम् ॥१७॥
तत्र तुष्टेन गरुड-यक्षेण शान्तिसेविना । शतावर्त्तं महाचक्रं दत्त्वा तस्मै च जल्पितम् ॥१८॥
लात्वा करे शतावर्त्तं चक्रं गच्छ निजे पुरे । यस्ते नाज्ञां तु मन्येत तस्य कृन्तति मस्तकम् ॥१९॥
लात्वा भूपः शतावर्त्त-मायान्तं तं महीपतिम् । श्रुत्वा वैरी भियाऽभ्येत्य सन्मुखं प्राणमन्मुदा ॥२०॥
जगौ वैरी गृहाण त्व-मिदं राज्यं तवाधुना । अहं ते किङ्करोऽस्म्येष कार्यमादिश्यतां मम ॥२१॥
सोमदेवो निजं राज्यं प्राप्य शस्त्रेणानेन तु । अनेकशो रिपून् स्वाज्ञां ग्राहयामास वेगतः ॥२२॥

कृत्वा देवालयान् स्वर्ण-मयान् पञ्च शतान् वरान् । वर्यदारुमयान् सप्त-दशैव च शतानि च ॥२३॥
सप्तकोटिनृसंयुक्तः सोमदेवोऽवनीपतिः । कुर्वाण उत्सवं शत्रु-ञ्जये तीर्थे समीयिवान् ॥२४॥
स्नात्रपूजा-ध्वजारोप-कृत्यानि निखिलानि तु । कृत्वा सोममहीपालः तुष्टाऽऽदिजिनेश्वरम् ॥२५॥
श्रीसङ्घसन्मुखं भूय-स्तीर्थस्य शिवदायिनः । शतावर्त्तेति नामाऽदात् शतावर्त्तायुधाश्रितः ॥२६॥
शतावर्त्तान् गुहारूपान् निरीक्ष्य मेदिनीपतिः । शतावर्त्तेति नामाऽदात् शतावर्त्तायुधाश्रितः ॥२७॥ पाठान्तरं।
सोमदेवोऽन्यतीर्थेषु यात्रां कृत्वाऽतिविस्तरात् । स्वपुर्यामेत्य पुत्राय निजं राज्यं वितीर्णवान् ॥२८॥
सहस्रै रष्टभिर्भूत्यैः पञ्चाशद्भूमिपैः समम् । सोमदेवो ललौ दीक्षां चन्द्रसूरीश्वरान्तिके ॥२९॥
पठन् गुर्वन्तिके सोम-देवराजर्षिरन्वहम् । गुरुभिः स्वपदे न्यस्तः सर्वशास्त्रार्थपारगः ॥३०॥
प्रबोध्य भविनो भूरीन् विहरन् सोमयतीश्वरः । शत्रुञ्जये ययौ भूरि-मुमुक्षुसहितोऽन्यदा ॥३१॥
तत्र ध्यायन् जिनं सोम-देवसूरीश्वरः क्रमात् । प्राप्तज्ञानो ययौ मुक्तिं लक्षसाधुसमन्वितः ॥३२॥

❀ इति शतावर्तनामोपरि-सोमदेवमहीपतिकथा ❀

॥ अथ कूटशताष्टोत्तरनामोपरि वीरनृपतिकथा ॥

वीराह्वो भूपतिर्भूरि-पापकृत् सिद्धभूभृतः । अष्टोत्तरशतकूटं नाम व्यश्राणयन्मुदा ॥१॥
वीरपुर्यां नृपो वीरः कुर्वन् पापं निरन्तरम् । न मन्येत गुरुं देवं मातृपितॄनपि क्वचित् ॥२॥
पापर्द्धि-परनारी-स्व-हरणादिपापकृत् सदा । वारितोऽपि क्षणं नैव विरराम स भूपतिः ॥३॥
एकदाऽन्यधनं हृत्वा यावदागात् स्ववेश्मनि । भूपस्तावदमुं श्लोकं शुश्राव वनवर्त्मनि ॥४॥
धर्माद्धिगतैश्वर्यो धर्ममेव निहन्ति यः । कथं शुभायतिः स्वामि-द्रोहकस्येह तस्य तु ॥५॥
अमुं श्लोकार्थमुर्वीशो ज्ञात्वा दध्याविदं हृदि । भूरिपापकृतो मे न छुट्टनं हि भविष्यति ॥६॥
तस्यैनसश्छिदे वह्नौ प्रविशामि जलेऽथवा । ध्यायन्नेवं ययौ यावद् बहिः पुर्या नरेश्वरः ॥७॥
तदाऽकस्मात् समायाता गौर्घ्नन्ती मनुजान् बहून् । हताऽसिना महीशेन तेन वीरेण निर्दयम् ॥८॥
तदा काचित् समेत्य स्त्री कर्त्रिकां दधती करे । जगौ रे नृप ! किं जघ्ने गौरियं भवता मुधा ॥९॥
आरब्धपापशुद्धिना हता गौरस्त्ववर्जिता । यद्यस्ति कापि ते शक्तिस्तद् युध्यस्व मया सह ॥१०॥
श्रुत्वैतद् वनिता-प्रोक्तं कठोरं मेदिनीपतिः । नारीं प्रति जगावुच्चै-स्तरं चोत्पाटयन्नसिम् ॥११॥
भवन्ती युवती काचित् कदलीदलकोमला । अहं तु क्षत्रियः शूरः शस्त्रशास्त्रविशारदः ॥१२॥
स्त्री प्राह यदि ते शक्ति-र्युध्यस्वाऽमा मया तदा । तदा भूपो न्यहंस्तां च खड्गेन निर्दयं दृढम् ॥१३॥
ततः सा चाऽर्जुनी भूत्वा भाषते स्म नृभाषया । कथं गो-स्त्रीवधात् पापात् छुटिष्यसि नरेश्वर ! ॥१४॥
यतः-तावद् बलं महस्तावत्-तावत् कीर्तिरखण्डिता । यावत् पुराकृतं पुण्यं नो म्लानिमधिगच्छति ॥१५॥
पुण्यमेव प्रमाणं स्याद ङ्गिनां शुभकर्मभिः । क्षीणतेजाः कियत्कालं तपत्यपि प्रभाकरः ॥१६॥
पुण्यैः सम्भाव्यते सर्वं सुखदायि सदाऽऽयतिः । तदेव हीनपुण्यस्य विपद्वद् दुःखदायकम् ॥१७॥

मरुदेवनृपस्याऽभून् नन्दनश्चन्दनाभिधः । धर्मकर्मरतोऽकार्षीद् जिनार्चां च दिवानिशम् ॥१६॥
जिनधर्मरतं भूप-सूनुं वीक्ष्य प्रजाऽपि च । जैनधर्मं वितन्वन्ति कल्याणस्रोतहेतवे ॥१७॥
मरुदेवः सुतं राज्ये विन्यस्य संयमश्रियम् । लात्वा गुर्वन्तिकेऽपाठीद् भूरि शास्त्राणि यत्नतः ॥१८॥
मरुदेवं विनीतं च सर्वशास्त्राब्धिपारगम् । मत्वा सूरिपदं सूरिर्ददौ शोभनवासरे ॥१९॥
क्रमात् पञ्चशती वाचं-यमानां शुद्धचेतसाम् । सेवते मरुदेवस्य सूरीशस्य पदाम्बुजम् ॥२०॥
क्रमेण विहरमाणो मरुदेवो यतीश्वरः । तीर्थे शत्रुञ्जये देवान् नन्तुं साधुयुतो ययौ ॥२१॥
तस्मिंस्तीर्थे शुभध्यानान्मरुदेवो यतीश्वरः । प्रापाऽऽदौ केवलज्ञानं ततोऽन्येऽपि यतीश्वराः ॥२२॥
प्रबोध्य भूरिशो जीवान् मरुदेवो यतीश्वरः । सिद्धशैले ययौ मुक्ति-मन्येऽपि भूरिसाधवः ॥२३॥
शिवप्राप्तिं पितुः श्रुत्वा तस्मिन् सिद्धमहीधरे । चन्दनक्ष्मापतिर्भूरि-सङ्घयुक् चलितोऽध्वनि ॥२४॥
गत्वा शत्रुञ्जये पूजां कृत्वा स्तुत्वाऽर्हतः पुनः । पितुर्मुक्तिगमस्थाने प्रासादं चन्दनो व्यधात् ॥२५॥
पितुर्मुक्तिगमस्थानं मत्वा शत्रुञ्जये गिरौ । मरुदेवेति तीर्थस्य तस्य नाम ददौ नृपः ॥२६॥
चन्दनक्ष्मापतिस्तीर्थ-पूजां कृत्वाऽतिविस्तरात् । स्वपुरेऽभ्येत्य सस्मार शश्वच्छत्रुञ्जयं गिरिम् ॥२७॥
चन्दनोऽपि स्मरन् नित्यं तीर्थं शत्रुञ्जयं हृदि । स्वपुरस्थोऽपि सम्प्राप्य ज्ञानं मुक्तिपुरीं ययौ ॥२८॥

इति चन्दनमहीपतिदत्त-मरुदेवभूधरेति सम्बन्ध शत्रुञ्जयस्य कथा

॥ अथ भगीरथनामोपरि सगरचक्रिपुत्रभगीरथकथा ॥

सगरक्षोणीनाथस्य पुत्रो भगीरथाभिधः । यात्रां कृत्वा निजं नाम तीर्थस्याऽदाद् वरोत्सवम् ॥१॥
अयोध्यानगरे चक्री द्वितीयः सगरोऽजनि । सूनु भगीरथो नाम्ना तस्याऽऽद्योऽजनि रूपवान् ॥२॥
अन्येऽभूवन् सुताः षष्टि-सहस्रप्रमिता वराः । तस्यैव चक्रिणोऽशेष-विद्याम्भोनिधिपारगाः ॥३॥
सगरश्चक्रिराट् तीर्थ-माहात्म्यमजितान्तिके । श्रुत्वा श्रीआदिदेवस्य सद्म स्फारमकारयत् ॥४॥
मेलयित्वा बहुं सङ्घं सगरश्चक्रिराट् क्रमात् । शत्रुञ्जयादितीर्थेषु यात्रां विस्तरतो व्यधात् ॥५॥
भगीरथोऽन्यदा यात्रां कर्तुं शत्रुञ्जये गतः । सङ्घेशः सर्वकृत्यानि विधिवद्विदधेतराम् ॥६॥
कोटीकोटियतीशानां तत्र ध्यानं वितन्वताम् । बभूव केवलज्ञानं तदा विश्वावलोककम् ॥७॥
तत्र तेषां क्रमादायुः-क्षयान्मुक्तिरजायत । सिद्धोत्सवः सुरैश्चक्रे गीतनृत्यपुरस्सरम् ॥८॥
यत्र स्थाने गता मुक्तिं साधवश्चायुषः क्षयात् । कोटाकोट्यभिधं सद्म तत्र व्यधाद् भगीरथः ॥९॥
अजितस्वामिनं मूल-नाथं तत्र जिनालये । सगरस्याऽऽदिमः पुत्रोऽतिष्ठिपत् रुचिरोत्सवम् ॥१०॥
प्रासादमादिदेवस्य कारयित्वा भगीरथः । बिम्बं रत्नमयं पञ्च-कोटिसूरिभिरतिष्ठिपत् ॥११॥
तीर्थरक्षाकृते दण्ड-रत्नेन मेदिनीं क्रमात् । खनित्वाऽब्धिप्रवाहं तु तत्रानयद् भगीरथः ॥१२॥
तदा तत्र समेत्येन्द्रः प्रोवाच भो ! भगीरथ ! । अब्धिना वेष्टिते तीर्थे नन्तुं को जन एष्यति ? ॥१३॥
भगीरथः सुरेशेन वारितो नाग्रतोऽम्बुधिम् । अनैषीत् सलिलं तत्रा-द्याप्यब्धौ दृश्यते जनैः ॥१४॥

तेनेन्द्रदिशि पाथोधि-जलं तीर्थस्य तस्य तु । वेष्टयित्वा स्थितं स्तम्भ-तीर्थं यावन्निरन्तरम् ॥१५॥
भगीरथस्ततस्तीर्थे गत्वा श्रीऋषभप्रभोः । भगीरथाभिधं सार्व-सद्म भगीरथो व्यधात् ॥१६॥
ततो देवा ददुस्तत्रा-ऽऽगतास्तीर्थस्य तस्य तु । भगीरथेति नामाऽभून् नानोत्सवविधानतः ॥१७॥
भगीरथोऽपि निश्शेषकर्म्म क्षिप्त्वा तपोबलात् । शत्रुञ्जये ययौ मुक्तिं तथाऽन्येऽपि महीधराः ॥१८॥

★ इति भगीरथनामोपरि सगरचक्रिपुत्रभगीरथकथा ★

॥ अथ सहस्रपत्रनामोपरि सहस्रपत्रकुमारकथा ॥

यतेः सहस्रपत्रस्य केवलज्ञानसूत्सवम् । कुर्वन् शक्रो ददौ नाम सहस्रपत्र इत्यपि ॥१॥
रमापुरे महाजिष्णु-भूपतेः श्रीमती प्रिया । सहस्रपत्रः पुत्रोऽभूद् विनीतः कोविदोत्तमः ॥२॥
सभायां मेदिनीशस्य पुरतो दूत एककः । समागत्य प्रणम्याङ्घ्री लेखमेकं समर्प्पयत् ॥३॥
उत्खिल्य मुद्रितं लेखं भूमीपतिः शनैः शनैः । वाचयामासिवानेवं स्वयं मन्त्रिसमन्वितः ॥४॥
वीरपुर्यामहं भूपो रोधनी (सु) कनीकृते । माघस्य श्वेतपञ्चम्यां शुक्रस्य वासरे वरे ॥५॥
मण्डपिष्यामि रोचिष्णु-सत् स्वयं वरमण्डपम् । शीघ्रं तत्र समागम्यं भवद्भिर्विशदाशयैः ॥६॥युग्मम्॥
वाचयित्वा तदा पुत्रं मनोरमपरिच्छदम् । प्रेषयामास भूपालः शोभने वासरे क्रमात् ॥७॥
तत्र दूत्या महीशानां बहूनां कीर्त्तने कृते । वृणुते स्म महीसुभ्रूः सहस्रपत्रमादरात् ॥८॥
तदा तत्राऽऽगता भूपाः शतद्वयमिता वराः । एकैकां कन्यकां तस्मै महाजिष्णुसुवे ददुः ॥९॥
असङ्ख्यरैतुरङ्गादि प्राप्य जिष्णुतनूभवः । आययौ स्वपुरोद्याने यावत् तादृक्प्रियायुतः ॥१०॥
तावत्तत्राऽऽगतो मोह-मर्द नामिपकेवली । उपविष्टः सुवर्णाब्जे प्रददौ धर्मदेशनाम् ॥११॥
क्ष्माभृद्रङ्कयोर्मनीषिजडयोर्नीरोगरोगार्त्तयोः, श्रीमद्दुर्गतयोर्बलाबलवतोः सद्रूपनीरूपयोः ।
सौभाग्यासुभगत्वसङ्गमजुषोस्तुल्येऽपि नृत्वेऽन्तरं, यत्तत् कर्म्मनिबन्धनं तदपि नो जीवं विना युक्तिमत् ॥१२॥
भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं, बली कालश्चौरो नियतमसिता मोहरजनी ।
गृहीत्वा ध्यानासिं विरतिफलकं शीलकवचं, समाधानं कृत्वा स्थिरतरदृशो जाग्रत जनाः ! ॥१३॥
तैलोदकायोऽनलवारिदुग्ध-लोहोल्लसज् सिद्धरसाः क्रमेण । सद्धर्मरङ्गो भविनां बहूनां दृष्टान्तभावं बिभराम्बभूव ॥
श्रुत्वा गुरुवचः सर्व-पत्नीयुग् जिष्णुनन्दनः । प्रबुद्धः पितरं पर्य-नसाप्य विनयान्वितः ॥१५॥
ललौ दीक्षां गुरूपान्ते संसाराम्भोधितारिणीम् । राजा तदा व्यधात् पुत्र-दीक्षोत्सवमनुत्तरम् ॥१६॥
प्रवर्त्तिन्याः समीपे ताः सहस्रपत्रवल्लभाः । मुक्ताः केवलिना शुद्ध-चारित्राराधनाकृते ॥१७॥युग्मम्॥
पठित्वैकादशाङ्गानि सूत्रार्थाभ्यां नरेन्द्रसूः । प्राप्तसूरिपदो भव्यान् बहून् प्राबोधयत् क्रमात् ॥१८॥
विहरन् सूरिराट् शत्रु-ञ्जये गत्वा सुसाधुयुग् । शुक्लध्यानेन सम्प्राप केवलज्ञानमुत्तमम् ॥१९॥
सूरेः सहस्रपत्रस्य कुर्वन् ज्ञानोत्सवं हरिः । सहस्रपत्रमम्भोजं रैमयं व्यरचन्मुदा ॥२०॥
तदा तत्र यतीनां तु कोटेर्ज्ञानमनुत्तरम् । उत्पन्नं धवलध्यान-योगात् कर्मक्षयात् किल ॥२१॥

एवं प्रोक्तो यदा राजा व्यरमन्न ततोऽघ(घ्न)तः । तदोत्पाट्य महारण्ये मुक्तस्तया सुरस्त्रिया ॥१८॥
बुभुक्षितस्तदा हिंसन् जीवान् तृषार्दितो भृशम् । राजापि सहतेऽत्यन्तं दुःखं नरकसन्निभम् ॥१६॥
तदैको हरिरागच्छन् सन्मुखं भूभुजा हतः । ततश्चैको मृगो जघ्ने मृगीव पवनाशनः ॥२०॥
ततो राजा व्रजन्नेकं साधुं दृष्ट्वाऽतिरोषतः । जघानाऽथाऽसिना तावद् यावत् प्राणा गता द्रुतम् ॥२१॥
ततो भ्रमन् गतः शत्रुञ्जयाद्रौ वीरभूपतिः । स शत्रुञ्जयमाहात्म्य-मशृणोद् यतिसन्निधौ ॥२२॥
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि । सुकर्त्तव्यं तु कर्त्तव्यं प्राणैः कण्ठगतैरपि ॥२३॥
मयूर-सर्प्प-सिंहाद्या हिंस्रा अप्यत्र पर्वते । सिद्धाः सेत्स्यन्ति सिध्यन्ति प्राणिनो जिनदर्शनात् ॥२४॥
वज्रलेपायितैः पापै-र्जन्तुरत्यन्तदुःखभाग् । तावद् यावन्न सिद्धाद्रि-मधिरुह्य जिनं नमेत् ॥२५॥
श्रुत्वैतन्नृपतिः प्राह जीवो नैको मया क्वचित् । हन्तव्यश्च विधातव्यं तपः षष्ठं निरन्तरम् ॥२६॥
गोरूपादिककृद् देवी नत्वा भूपं तदा जगौ । अहं ते भगिनी पूर्व-भवभूता नरेश्वर ! ॥२७॥
बोधितोपि मया नैव बुद्धस्त्वं भूमिभुग् यदा । तदोत्पाट्येह सिद्धाद्रौ नीतो जानीहि साम्प्रतम् ॥२८॥
भूपोऽभ्येत्य पुरे स्वीये भूरिसङ्घसमन्वितः । शत्रुञ्जये पुनर्यात्रा-कृते कुटुम्बयुग् ययौ ॥२६॥
अष्टयुग्शतकूटेषु तालध्वजादिषु क्रमात् । गच्छतः संयतान् भूरीन् मुक्तिं ददर्श भूपतिः ॥३०॥
तेषु कूटेषु सर्वेषु प्रत्येकं श्रीजिनालयान् । कारयित्वा नृपः सर्व-बिम्बान्यस्थापयन्मुदा ॥३१॥
अष्टोत्तरशतकूटं पर्वतोऽयं निगद्यताम् । जगादेति नृपः मर्त्य-लोकभूमिभुजां पुरः ॥३२॥
ततोऽभ्येत्य पुरे स्वीये राज्ये न्यस्य निजं सुतम् । दीक्षां वीरमहीपालो जग्राह गुरुसन्निधौ ॥३३॥
प्राप्तसूरिपदो भूरि-साधुयुग् वीरसूरिराट् । शत्रुञ्जये गतो ज्ञानं प्रपेदेऽनुत्तरं तदा ॥३४॥
लक्षत्रयमुमुक्षूणां तत्र सिद्धमहीधरे । उत्पन्नं केवलज्ञानं वीरसूर्युपदेशतः ॥३४॥
वीरभूमिपतिर्लक्ष-त्रयसाधुसमन्वितः । अलञ्चकार कल्याण-पुरीं सिद्धमहीधरे ॥३५॥

इति कूटशताष्टोत्तरनामोपरि वीरनृपतिकथा

॥ अथ नगाधिराजोपरि निर्जरकथा ॥

एत्य स्वयम्प्रभो देवः शत्रुञ्जयमहीधरे । ददौ नगाधिराजेति नाम भूपसुसात्त्विकम् ॥१॥
तथाहि-स्वर्गेऽन्यदा हरिः प्राह सभायां भुवनत्रये । शत्रुञ्जयसमं तीर्थं विद्यते नहि कुत्रचित् ॥२॥
तदा स्वयम्प्रभो देवो जगावेवं हरेः पुरः । प्रभुत्वात् प्रभुणा यद्यद् जल्प्यते तद्धि मन्यते ॥३॥
इन्द्रोऽवक् सर्वतीर्थेभ्यस्तीर्थे शत्रुञ्जये गिरौ । पदे पदे शिवं जग्मु-रसङ्ख्याता मुमुक्षवः ॥४॥
तीर्थेऽन्यस्मिंस्तपोदाना-दिभिर्यद् जायते वृषम् । ततः शत्रुञ्जयेन तं फल भवति निश्चितम् ॥५॥
सर्वशाश्वततीर्थेषु विलोकयन् स्वयम्प्रभः । ददर्शाल्पान् शिवं यात-स्तीर्थेषु कृत्रिमेष्वपि ॥६॥
ततः शत्रुञ्जये याव-दायातः स सुरो भ्रमन् । यावन्मुक्तिर्ययुर्लक्ष-मिता वाचंयमा लघु ॥७॥
द्वितीये दिवसे कोटि-मिता वाचंयमाः किल । तृतीये दिवसे पञ्च-सहस्रप्रमितान् यतीन् ॥८॥

चतुर्थेऽह्नि शतं पञ्च-साधून् षष्ठे यतीन् दश । सप्तमेऽष्टौ शतान्यष्ट-विंशतिः षड् दिनेऽष्टमे ॥९॥
एवं दिने दिने मुक्तिं यातोऽसङ्ख्ययतींस्तदा । दृष्ट्वा स्वयम्प्रभो देवो जगादेवं नृणां पुरः ॥१०॥
असङ्ख्यस्त्रीनृणां मुक्ति-गमनादस्य भूभृतः । नगाधिराज एषोऽस्तु पर्वतः सुकृतास्पदम् ॥११॥
ततोऽन्यैर्मनुजैर्देवै-र्भूपैर्वाचंयमैरपि । नगाधिराजनामाय-मिति घुष्टं तदाऽभितः ॥१२॥

★ इति नगाधिराजोपरि निर्जरकथा ★

॥ अथ सहस्रकमलोपरि वीरभूपकथा ॥

मेलयित्वा बहुं सङ्घं गत्वा शत्रुञ्जयाऽचले । रणवीरो ददौ नाम सहस्रकमलाभिधम् ॥१॥
कल्याणकोटिनगरे कल्याणधरणीपतिः । कल्याणिन्यभिधा पत्नी शीलभूषणशालिनी ॥२॥
रणवीराभिधः पुत्रो रणनिर्जितशात्रवः । विनीतोऽभूद् भृशं माता-पित्रोः सेवनतत्परः ॥३॥
निर्गच्छन्नन्यदा पुर्या बहिः शण्डद्वयं दृढम् । मिथो युध्यन्तमैक्ष्योर्वी-पतिर्दध्याविदं हृदि ॥४॥
इदं शण्डद्वयं पीनं जीविष्यति चिरं ननु । तेन केलिकृते स्वीय-सदने स्थाप्यते मया ॥५॥
गत्वोद्याने समागच्छन् पश्चाच्छण्डद्वयं मृतम् । दृष्ट्वा महीपतिर्दध्यौ संसारासारतामिति ॥६॥
आयुर्वारितरङ्गभङ्गुरतरं श्रीस्तूलतुल्यास्थितिः, तारुण्यं करिकर्णचञ्चलतरं स्वप्नोपमाः सङ्गमाः ।
यद्वान्यद् रमणीमणीप्रभृतिकं वस्त्वस्ति तच्चास्थिरं, विज्ञायेति विधीयतामसुमता धर्मः सदा शाश्वतः ॥७॥
इत्याद्यनित्यतां ध्यायन् गत्वोद्याने महीपतिः । स्वयम्प्रभगुरूपान्ते प्रव्रज्यामग्रहील्लघु ॥८॥
तदाऽभ्येत्य पितुः पार्श्वे रणवीरो जगाविति । तात ! राज्यमिदं कस्या-धारे सम्प्रति वर्त्तते ॥९॥
अहमप्यस्मि ताताऽद्य कस्याधारेऽधुना वद । त्वां विना निखिलं राज्यं विनश्यति न संशयः ॥१०॥
राजाऽऽचष्ट न मेऽसि त्वं नाहं तव कदाचन । एकोऽस्म्यहं निराधारो निष्पुण्यो नन्दनोत्तम ! ॥११॥
निषिद्ध इति तातेन रणवीरो नृपाङ्गजः । तत्पट्टस्थापितो मन्त्रि-सामन्तैर्लसदुत्सवम् ॥१२॥
रणवीरोऽन्यदा धर्म्म-सूरिपार्श्वे गतो वने । धर्म्मोपदेशमश्रौषी-देवं कृताञ्जलिस्तदा ॥१३॥
प्रासाद-प्रतिमा-यात्रा प्रतिष्ठादिप्रभावना । अमायुर्द्घोषणादीनि महापुण्यानि गेहिनाम् ॥१४॥
श्रुत्वेति देशनां सम्यग् रणवीरमहीपतिः । शत्रुञ्जये जिनागार-मकारयन् महत्तमम् ॥१५॥
सहस्रस्तम्भरोचिष्णौ तस्मिन् श्रीवृषभालये । अस्थापयद् युगादीश-बिम्बं रणमहीपतिः ॥१६॥
तदा सहस्रसाधूनां ज्ञाने जातेऽव्यये क्षणात् । उपवेशाय शक्रो रै-मयान्यब्जानि संव्यधात् ॥१७॥
तदा ज्ञानोत्सवं तेषां कृत्वा भूपो जगाविदः । सहस्रकमलो ह्येष गिरिर्विजयतां चिरम् ॥१८॥
रणवीरोऽपि पुत्रं स्वं राज्ये न्यस्य सदुत्सवम् । दीक्षां ललौ श्रुताचार्य-पार्श्वे बहु व्यधात्तपः ॥१९॥
प्राप्य सूरिपदं कालाद् रणवीरो यतीश्वरः । भूरिसाधुयुतः शत्रु-ञ्जये तीर्थे समीयिवान् ॥२०॥
प्राप्य तत्राव्ययं ज्ञानं साधुलक्षत्रयान्वितः । आयुःक्षयाद् ययौ मुक्तिं रणवीरयतीश्वरः ॥२१॥

इति सहस्रकमलोपरि-वीरभूपकथा

## ॥ अथ ढङ्कनामोपरि हरभूपकथा ॥

शत्रुञ्जये युगादीश-पूजां कृत्वाऽतिविस्तरात् । ढङ्केति प्रददौ नाम हरक्षोणीपतिर्मुदा ॥१॥
हीराह्वे नगरे ढङ्क-भूपस्य न्यायशालिनः । ढङ्कश्रीः प्रेयसी चञ्चद्-गुणमाणिक्यभूरभूत् ॥२॥
सत्स्वप्नसूचितं पुत्र-मसूत ढङ्कगेहिनी । जन्मोत्सवं पिता कृत्वा हरेत्याह्वां ददौ सुते ॥३॥
कुमारोऽन्येद्युरानन्द-सूरिक्षमणयामलं । प्रणम्य देशनां श्रोतु-मुपविष्टः कृताञ्जलिः ॥४॥
पूजा पच्चक्खाणं पडिक्कमणं पोसहो परुवयारो । पंच पयारा जस्स य न पयारो तस्स संसारे ॥५॥
शुद्धं धर्मं करन् जीवो लभते सुखमुत्तमम् । पापं कुर्वन्नवाप्नोति श्वभ्रे दुःखपरम्पराम् ॥६॥
तत्र भूपसुतः प्राह नमस्कारशतत्रयी । गणनीया मया नम्यो जिनेन्द्रः प्रतिवासरम् ॥७॥
राज्यभारं समारोप्य सुतस्कन्धे निजांसतः । अलञ्चकार चारित्र-रमां ढङ्कमहीपतिः ॥८॥
पठित्वा भूरिशास्त्राणि गुरूणां सन्निधौ क्रमात् । बृहस्पतिसमो जातो विद्यया ढङ्कसंयतः ॥९॥
प्राप्य सूरिपदं कुर्वन् विहारं वसुधातले । बोधयामास सर्वज्ञ-धर्मं भूरिजनान् क्रमात् ॥१०॥
शत्रुञ्जये गतोऽन्येद्यु-र्ढङ्कसूरिः सुसाधुयुग् । ढङ्ककूटे तपस्तीव्रं चकार शिवशर्मदम् ॥११॥
ढङ्कसूरिः शुभध्यानात् केवलज्ञानमाप्तवान् । तदाऽन्ये बहवो वाचं-यमा ज्ञानजुषोऽभवन् ॥१२॥
आयुःक्षयेऽखिला वाचं-यमा मुक्तिं यदाऽगमन् । तदा सिद्धोत्सवं तेषां चक्रुरेत्य सुधाभुजः ॥१३॥
पितुर्मुक्तिगतिं तुङ्गे कूटे शत्रुञ्जयाचले । श्रुत्वा हरमहीपालो हृष्टोऽजनि स्वचेतसि ॥१४॥
असङ्ख्यसङ्घसंयुक्तः कुर्वन् हरः क्षमापतिः । शत्रुंजये ययौ देवान् नन्तुं पूजयितुं मुदा ॥१५॥
मूलनाथस्य कृत्वाऽर्चां तुङ्गे कूटे नृपो ययौ । तत्र स्फारं जिनागारं भूपश्चाचीकरन् मुदा ॥१६॥
तत्र युगादिदेवस्य बिम्बं रत्नमय वरम् । शुभेऽह्नि स्थापयामास सङ्घयुग् मेदिनीपतिः ॥१७॥
तत्राष्टकोटयो हेम्नां व्ययिता मेदिनीभुजा । ततस्तीर्थं समं पुष्पै-रपूजयन् नरेश्वरः ॥१८॥
अनेकभूपमर्त्यानां साक्षिक हरभूधरः । ढङ्केति प्रददौ नाम शत्रुञ्जयक्षमाभृतः ॥१९॥
यात्रां विस्तरतः कृत्वा हरोर्वीशो निजे पुरे । समेत्य मानसेऽस्मार्षीद् ढङ्क ढङ्केति मुक्तिदम् ॥२०॥
ढङ्क ढङ्क इति ध्यायन् चित्ते शत्रुञ्जयाचलम् । भूपः स्वकपुरे तिष्ठन् ज्ञानं प्रापाऽक्षयं क्षणात् ॥२१॥
तदा कोटिद्वयं वाचं-यमाः प्राप्तलसच्चिदः । कल्याणनगरीनारी-भूषणा अभवन् क्रमात् ॥२२॥
अन्तकृत्केवली धर्म्म-घोषसूरीश्वरः पुनः । अलञ्चकार कल्याण-नगरीमायुषः क्षये ॥२३॥

※ इति ढङ्कनामोपरि हरभूपकथा ※



॥ अथ कोटिनिवासोपरि धर्मनन्दनभूपतिकथा ॥

धर्ममाराधयन् जैनं शुद्धं धर्म्ममहीधरः । नाम कोटिनिवासेति सिद्धाद्रेर्हर्षतो ददौ ॥१॥
धरणीभूषणे नाम्ना पुरे चन्द्रमहीपतेः । पत्नी प्रेमवती पुत्रं प्रासूत शुभवासरे ॥२॥
कारयित्वा महिपालः सूनोर्जन्मोत्सवं महत् । धर्म्मनन्दन इत्याह्वां ददौ सज्जनसाक्षिकम् ॥३॥
द्वितीयो नन्दनो दामो-दराह्वोऽजनि तस्य तु । द्वावेव पाठितौ धर्म-कर्मशास्त्राणि भूरिशः ॥४॥
क्रमाच्चन्द्रः कुसङ्गत्या द्यूतादिसक्तमानसः । राज्यचिन्तां विसस्मार चित्तादधर्ममर्त्यवत् ॥५॥
क्रमात् समागते तत्र द्विट्सैन्ये प्रबले सति । धर्मपुत्रो बलं लात्वा युद्धं कर्त्तुं समुत्थितः ॥६॥
तथा युद्धं कृतं धर्म-नन्दनेनाऽरिभिः समम् । यथा दिशोदिशं भग्ना नेशुर्निश्शेषवैरिणः ॥७॥
ततस्तत्र महानन्द-सूरिराट् समुपागमत् । पुत्रयुक्तो नृपो धर्म-माकर्णयितुमीयिवान् ॥८॥
तदेति गुरुभिर्धर्म्म-देशना विहिताऽऽदरात् । धर्मेण लभ्यते राज्यं कल्याणकमला पुनः ॥९॥
द्यूतादिव्यसनं यस्तु सेवते मानवः खलु । स एव लभते दुःख-मिहामुत्र निरन्तरम् ॥१०॥
द्यूतं सर्वापदां धाम द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन कुलमालिन्यं द्युताय श्लाघ्यतेऽधमः ॥११॥
वैर-वैश्वानर-व्याधि-वाद-व्यसनलक्षणाः । महानर्थाय जायन्ते वकाराः पञ्च वर्द्धिताः ॥१२॥
श्रुत्वेति भूपतिस्त्यक्त्वा द्यूतस्य व्यसनं तदा । राज्यं वरोत्सवं वृद्ध-सूनवे दत्तवान् मुदा ॥१३॥
युवराजपदं दत्त्वा लघुपुत्राय भूपतिः । धर्मसेनगुरूपान्ते जग्राह संयमं तदा ॥१४॥
शत्रुञ्जयस्य माहात्म्य-माकर्ण्य धर्मभूपतिः । बहुसङ्घयुतोऽचालीद् वन्दितुं जिननायकम् ॥१५॥
गत्वा शत्रुञ्जये मूल-नायकप्रतिमां धुरि । पूजयित्वा नृपोऽन्येषां जिनानामर्चनं व्यधात् ॥१६॥
विस्तरादादिदेवस्य ध्वजान्तामर्चनां तदा । कृत्वाऽऽनर्च प्रभोः पादौ प्रियालोश्च प्रदक्षिणाम् ॥१७॥
शान्तिनाथस्य कृत्वाऽर्चां निशीथिन्यां महीपतिः । ध्यानं वितन्वतः प्रादुर्भूत्वा यक्षो जगाविदः ॥१८॥
तीर्थभक्तेस्तवेदानीं तुष्टोऽस्मि मेदिनीपते ! । इश्या श्रीशान्तिनाथस्य समस्ति रसकूपिका ॥१९॥
तां मुत्कलमुखामद्य करिष्यामि दिनोदये । त्वया ग्राह्यो रसस्तस्यास्ततो हेम भविष्यति ॥२०॥
यक्षदर्शितकूपात्तु रसं लात्वा यथेप्सितम् । कोटिभारमितं हेम व्यरचन् मेदिनीपतिः ॥२१॥
दशवारप्रमाणानि शतबिम्बानि रुक्मिनाम् । चतुर्विंशतिसार्वाणा-मकारयन् महीपतिः ॥२२॥
लक्षबिम्बानि रूप्यस्य पित्तलस्य वरस्य च । नवलक्षमितान्येव नवतिं प्रास्तराणि च ॥२३॥
एवं कोटिमितान्येव बिम्बानि सिद्धपर्वते । स्थापयित्वा नृपः सङ्घं भक्तितः पर्यथापयत् ॥२४॥
तदा धर्मधनाचार्यः प्राह नृप ! नृणां पुरः । अयं कोटिनिवासाह्वो गिरिर्निगद्यतां जनैः ॥२५॥
धर्मभूपः क्रमाद् राज्ये न्यस्य स्वनन्दनं गजम् । दीक्षां लात्वा तपः शत्रु-ञ्जये तीर्थे बहु व्यधात् ॥२६॥
क्षिप्त्वा कर्माऽखिलं धर्म-राजर्षिर्ज्ञानमव्ययम् । प्राप्य शत्रुंजये मुक्तिं ययौ भूरिसुसाधुयुग् ॥२७॥

卐 इति कोटिनिवासोपरि धर्मनन्दनभूपतिकथा 卐

## ॥ लौहित्यनामोपरि लौहित्यर्षिकथा ॥

लौहित्यादियतीन् भूरीन् दृष्ट्वा सिद्धिपुरीगतान् । लौहित्याह्वां व्यधा-दिन्द्रः श्रीमत्सिद्धमहीभृतः ॥१॥
पद्मे पुरे धनः श्रेष्ठी धर्मं श्रुत्वाऽन्तिके गुरोः । अदत्तं लाति ना कस्य तृणमात्रमपि क्वचित् ॥२॥
स्थानाधिष्ठायकं देव-मनुज्ञाप्यैव सन्ततम् । श्रेष्ठी तिष्ठति भुङ्क्ते च करोति कायिकामपि ॥३॥
नाऽदत्तं लाति कस्यापि धन इत्युदिते सति । शक्रेणैकः सुरश्चाल-यितुं तं निर्ययौ दिवः ॥४॥
पातयित्वा बहुं लक्ष्मीं मार्गे स निर्जरोऽनिशम् । यदा चालयितुं नेश-स्तदेति प्रोक्तवान् स्फुटम् ॥५॥
यादृशो वर्णितो नाकि-पतिना तादृशः स्फुटम् । अतो रत्नद्वयं दत्त्वा सुरलोकं समीयिवान् ॥६॥
श्रेष्ठ्यन्येद्युर्बहिर्भूमौ देहचिन्ताकृते गतः । यत्र यत्रानुजानाति स्थानाधिष्ठायकं प्रति ॥७॥
तत्र तत्र जगौ स्थाना धिष्ठाता निर्जरः स्फुटम् । श्रेष्ठिन् ! माऽत्रोपविश त्वं गच्छाऽन्यत्र यथेप्सितम् ॥८॥
एवं सन्ध्याक्षणं यावद् भ्रमन् श्रेष्ठी वनान्तरे । तं यक्षं वञ्चयित्वाऽऽशु कायिकामकरोल्लघु ॥९॥
यक्षः प्राहाऽत्र तुष्टोऽस्मि याचस्व त्वं यथेप्सितम् । श्रेष्ठ्यवग् यदि मे धर्मो विद्यते किं तदा नहि? ॥१०॥
अलोभिनं तदा श्रेष्ठि-राजं मत्वा मणीन् दश । कोटीमूल्यान् वितीर्यावग् यक्षो ध्येयोऽस्म्यहं सदा ॥११॥
गते यक्षे मणीन् लात्वा समेत्य श्रेष्ठिराड्गृहम् । पञ्च रत्नानि विक्रीय जनेभ्यो राजमानितः ॥१२॥
भूरिसङ्घयुतः श्रेष्ठी गत्वा श्रीसिद्धपर्वते । पञ्चभिर्मणिभिः पूजां चकाराऽऽदिजिनेशितुः ॥१३॥
तदा तुष्टो जगौ यक्षः श्रेष्ठिन् ! मार्गय वाञ्छितम् । श्रेष्ठ्यवग् विद्यते सर्वं जिनेन्द्राङ्घ्रिप्रसादतः ॥१४॥
ततो यक्षो मणीन् पञ्च विंशतिकोटिमूल्यकान् । प्रददौ श्रेष्ठिने किं किं जायते न जिनार्चनात् ? ॥१५॥
विक्रीय तान् मणीन् श्रेष्ठी स्फारं जिनवरालयम् । कारयामास तत्राऽऽदि-जिनबिम्बमतिष्ठिपत् ॥१६॥
धनश्रेष्ठी तदा ध्यायन् जिनेशं प्रथमं मुदा । प्राप्य ज्ञानं ययौ मुक्ति-पुर्यां क्षीणाघसन्ततिः ॥१७॥
इतः पुण्यपुराधीशो लौहित्यो धरणीधरः । राज्ये न्यस्याऽङ्गजं दीक्षा-मलात् कोटिजनान्वितः ॥१८॥
भणितद्वादशाङ्गीकः प्राप्तसूरिपदः क्रमात् । कोटिसाधुयुतः शत्रु-ञ्जये तीर्थे समागमत् ॥१९॥
जिनागारे जिनागारे नत्वा तीर्थङ्कराधिपान् । लौहित्यर्षिः पुनर्मूल-नाथं स्तौति च नौति च ॥२०॥
धनेन श्रेष्ठिना नाभि-पुत्रसद्मनि कारिते । लौहित्यर्षिर्ययौ देवं नन्तुं भूयिष्ठसाधुयुग् ॥२१॥
श्रीयुगादिजिनस्याग्रे ध्यानं तस्य वितन्वतः । बभूव केवलज्ञानं हेमाब्जं निर्जरैः कृतम् ॥२२॥
तस्मिन् हेमाम्बुजे ज्ञान्यु-पविश्य धर्मदेशनाम् । तथा चक्रे यथा सर्वे साधवो ज्ञानिनोऽभवन् ॥२३॥
लौहित्यादियतीन् सिद्धि-गतान् ज्ञात्वा हरिर्जगौ । लौहित्याह्वमिदं तीर्थं नाम्ना जयतु भूतले ॥२४॥

इति लौहित्यनामोपरि लौहित्यर्षिकथा



## ॥ अथ तालध्वजनामोपरि धरापालभूपकथा ॥

श्रीसिद्धधरणीध्रस्य धरापालः क्षमापतिः । तालध्वजेति नामाऽदात् नानोत्सवपुरस्सरम् ॥१॥
कुम्भपुर्यां धरापाल-भूपस्य न्यायशालिनः । बभूव प्रेयसी पद्मा नाम्ना श्रीः श्रीपतेरिव ॥२॥
पुत्रः पुरन्दरस्तस्य पुरन्दरपराक्रमः । मातापित्रोस्तनोतिस्म हर्षं सद्विनयो नयी ॥३॥
राजाऽन्यदा गुरोः पार्श्वे धर्म्मं श्रुत्वा जिनोदितम् । पूजां श्रीजिननाथस्य तनुते स्मोपवैणवम् ॥४॥
इतः स्वर्गे सुरेन्द्रोऽवग् धरापालो महीपतिः । पूजां कुर्वन् प्रभोर्नैव चाल्यते निर्जराऽसुरैः ॥५॥
अश्रद्दधत् सुधाभोजी मुकुन्दाह्वो जगावहं(दः) । अहं तं चालयिष्यामि भूपं स्वाभिग्रहात् द्रुतम् ॥६॥
उक्त्वेति स्वर्गतः कुम्भ-पुर्यामेत्य स निर्जरः । भूपस्य कुर्वतः पूजां हस्तात् पुष्पाण्यपाहरत् ॥७॥
एवं यदा यदा भूपः पुष्पाणि स्वकरे ललौ । तदा तदाऽहरद्देवः पुष्पाण्यलक्ष्यरूपभाग् ॥८॥
एवं दिनत्रयीं यावद् विना पूजां नरेश्वरः । बुभुजे न यदा तावत् स सुरः प्रकटोऽवदत् ॥६॥
धन्योऽसि त्वं यतस्ताव-कीनं चेतोऽचलन् नहि । लाहि चिन्तामणिं चित्त-चिन्तितार्थप्रदं वरम् ॥१०॥
चिन्तामणिं समाराध्य याचं याचं च वैभवम् । व्ययति स्म नृपः सप्त-क्षेत्रेषु प्रतिवासरम् ॥११॥
राजा स्फटिकपाषाणै-रष्टोत्तरशतप्रमैः । मण्डपैः कारयामास जिनौकः स्वगृहाङ्गणे ॥१२॥
प्रासादमण्डपच्छत्र-पर्यङ्कासनविग्रहैः । निर्दोषमूर्त्या दध्यौ च देवो नास्ति जिनात् परः ॥१३॥
प्राच्यरत्नमयी मूल-नाथमूर्तिररप्रभोः । तस्मिन् जिनालयेऽस्थापि भूपेन लसदुत्सवम् ॥१४॥
तत्राऽरजिननाथस्य मणीमयविभूषणैः । भूषयामास भूपालो मूर्त्तिं सद्गतिहेतवे ॥१५॥
दिने दिनेऽर्हतः पूजां नव्यां नव्यां लसत्सुमैः । कुर्वाणः कारयामास भूपो नृत्यं नवं नवम् ॥१६॥
चतुष्कोटिनृसंयुक्तो भूत्वा सङ्घपतिर्नृपः । ग्रामे ग्रामे महं कुर्वन् तीर्थे शत्रुञ्जये ययौ ॥१७॥
तत्र मुख्यजिनावासे स्नात्रपूजाध्वजादिभिः । स्वजन्म सफलं चक्रे भूपः सङ्घयुतो मुदा ॥१८॥
तस्मिन् सङ्घे जिनध्यानाद् लक्षमेकं जनास्तदा । सम्प्राप्य केवलज्ञानं मुक्तिपुर्यां ययुः क्रमात् ॥१९॥
यत्र तालध्वजः सूरि-र्लक्षसाधुसमन्वितः । सर्वकर्मक्षयाद् ज्ञानं प्राप्य मुक्तिपुरीं ययौ ॥२०॥
तत्र शृङ्गे जिनागारं कारयित्वा महत्तमम् । स्थापयामास नाभेयं धरापालो महीधरः ॥२१॥
श्रीसिद्धभूभृतस्ताल-ध्वजेति नाम भूपतिः । सार्थिकं सर्वसङ्घस्य व्यश्राणयद् वरोत्सवम् ॥२२॥
धरापालः पुरे स्वीये समेत्य स्वकमङ्गजम् । न्यस्य राज्ये ललौ दीक्षां पद्माचार्यान्तिके क्रमात् ॥२३॥
पठित्वाऽनेकशास्त्राणि गुरूपान्ते सुभक्तियुग् । प्राप्य सूरिपदं चक्रे विहारं स यतीश्वरः ॥२४॥
प्रबोध्य भविनो भूरीन् गत्वा शत्रुञ्जयाचले । प्राप्तज्ञानोऽगमन्मुक्तिं धरापालगणाधिपः ॥२५॥

❀ इति तालध्वजनामोपरि धरापालभूपकथा ❀



॥ अथ कदम्बकनामोपरिकथा ॥

स्वर्गादागत्य देवेशोऽमरमानवमाश्रितम् । ददौ कदम्बकेत्याह्वां श्रीसिद्धगणीभृतः ॥१॥
लक्ष्मीपुरे पुरे भीम-भूपतेर्न्यायशालिनः । लक्ष्मीवती प्रिया पुत्रः पद्मोऽभूतां मनोहरौ ॥२॥
तत्रैव नगरे भीम-श्रेष्ठिनः श्रेष्ठचेतसः । रतिप्रीत्यभिधे पत्न्यौ सुरूपे बभूवतुः ॥३॥
ते द्वे प्रिये अपि प्रीति-रोचिष्णू सततं मिथः । न पृथक् तिष्ठतः कस्मिन् वासरे क्षणमेककम् ॥४॥
श्रेष्ठी दध्याविदं चित्तेऽन्यदेति गृहिणीद्वयम् । कथं प्रीतियुतं त्यक्त्वा सपत्नीभावमस्ति मे ! ॥५॥
ध्यायन् छन्नं निशि श्रेष्ठ्य-न्यदा पत्न्योर्निरीक्षितुम् । चरित्रं तस्थिवान् यावत् तावत्ते उत्थिते शनैः ॥६॥
वटवृक्षं समारुह्य द्वे अपि श्रेष्ठिनः प्रिये । नभोऽध्वना क्वचिद्याते हुंकारारावतत्परे ॥७॥
श्रेष्ठी दध्याविमे पत्न्यौ मदीये व्योमवर्त्मना । यत्राऽद्य जग्मतुः स्थानं तज्ज्ञातव्यं मयाऽचिरात् ॥८॥
एवं चिन्तयतस्तस्य यामादनु प्रिये तके । समेत्योत्तीर्य तरुतः स्वस्थाने तस्थतुः शनैः ॥९॥
श्रेष्ठी दध्यौ मया पत्न्यो-रमुयोश्चरितं पुरा । ईदृशं वीक्षितं नैव कदाचित्तिष्ठता गृहे ॥१०॥
एवं निशि नितम्बिन्यो याः प्रयान्ति निजेच्छया । तासां सुशीलता नैव दृश्यतेऽत्र महीतले ॥११॥
यतः-"यात्रा-जागर-दूरनीरहरणं मातुर्गृहेऽवस्थिति-र्वस्त्रार्थं रजकोपसर्पणमपि स्याच्चिकामेलकः ।
स्थानभ्रंश-सखीविवाहगमन नृत्यप्रवासादयो, व्यापाराः खलु शीलजीवितहराः प्रायः सतीनामपि ॥१२॥
ततोऽन्येद्युर्निशि श्रेष्ठी तस्य वृक्षस्य कोटरे । पत्न्योः पूर्वं समेत्यास्थात् तयोश्चरितमीक्षितुम् ॥१३॥
ते गेहिन्यौ समारूढे तस्मिन् महीरुहे द्रुतम् । व्योमाध्वना गते स्वर्ण-द्वीपे लक्ष्मीपुरान्तिके ॥१४॥
सरःपालौ तरुं न्यस्य तत्पुरं वीक्षितुं तदा । जग्मतुः श्रेष्ठिनः पत्न्यौ निर्गतोऽथ स कोटरात् ॥१५॥
इतः तत्पुरवास्तव्यः श्रेष्ठी श्रीदः कुलामरीम् । आराध्य स्वनन्दिन्या वरार्थं पूजयन् सुमैः ॥१६॥
तया सन्तुष्टया प्रोक्तं भो ! श्रेष्ठिन् पञ्चमे दिने । सरःपालौ निशामध्ये यः समेति नरो वरः ॥१७॥
तस्मै त्वया प्रदातव्या तनया सुरसुन्दरी । विचारोऽत्र त्वया श्रेष्ठिन् ! विधातव्यो न चेतसि ॥१८॥
यतः-जं जेण किंपि विहियं सुहं व दुक्खं व पुव्वजम्मम्मि । तं सो पावइ जीवो वच्चइ दीवंतरं जइवि ॥१९॥
श्रुत्वैवद्वचनं श्रेष्ठी सरःपालौ समाययौ । वराकारं वरं वीक्ष्य श्रेष्ठी च मुमुदेतराम् ॥२०॥
तमानीय गृहे सद्यः श्रेष्ठी प्राहेति सद्गिरा । गृहाणोद्वाहतः (मे) पुत्री-मिमां त्वं सुरसुन्दरीम् ॥२१॥
ततो विवाहवस्त्रादि-भूषितो भीमनैगमः । माहरे श्रीदहस्तां तां गृहीत्वा समुपाविशत् ॥२२॥
इतस्ते तत्प्रिये तत्राऽऽगते वीक्ष्य वरं वरम् । जजल्पतुर्वरो ह्येष दियते रत्नपतेः समः ॥२३॥
भ्रमद्भिर्भूतले तुल्य-रूपा नार्यो नरा अपि । वीक्ष्यन्ते तेन न भ्रान्तिः कार्याऽऽवाभ्यामिहाधुना ॥२४॥
प्रोक्त्वैवं वरमालोक्य द्रष्टुमन्यं वरं पुनः । जग्मतुस्ते नितम्बिन्यौ पुरमध्ये कृतत्वरे ॥२५॥
श्रेष्ठी दध्यौ मृगाक्षीणां विद्यते चपलं मनः । कौतुकानि यतो द्रष्टुं ययतुर्मे प्रिये पुनः ॥२६॥
यतः-पुरतोपि स्थितं वस्तु नैवान्धो द्रष्टुमीशते । अहो ! चित्रं यदीक्षन्ते रागान्धा रैमयं जगत् ॥२७॥
इतः पाणिग्रहं तस्या विधाय भारपट्टके । स्वाह्वां निजपुराह्वां च लिलेख भीमनैगमः ॥२८॥
देहचिन्ता-छलं कृत्वा समेत्य वटकोटरे । तस्थौ श्रेष्ठी रहो याव-त्तावत्ते समुपागते ॥२९॥

वृक्षमारुह्य तत्कालं समेत्य निजसद्मनि । उत्तेरतुः तरोस्तस्माच्छ्रेष्ठिपत्न्यौ प्रमोदतः ॥३०॥
श्रेष्ठी तु रहसि स्वीय-तल्पे समेत्य तत्क्षणात् । सुष्वाप यावता तावत् स्वस्थाने ते अपि स्थिते ॥३१॥
श्रेष्ठी दध्यौ मृगीनेत्रा अबलाः शास्त्रमध्यतः । यत्कथ्यन्ते तदेवात्र स्त्रियोवृथा विलोक्यते ॥३२॥
यतः–"जीवतोऽपि गलन् मत्स्यान् मुनिवद् दृश्यते बकः । मृतानपि न गृद्धोऽत्ति धिगाकारदुरन्तताम् ॥३३॥"
प्रातः सुप्तं विवाहोढवस्त्रयुक्तं निजं पतिम् । दृष्ट्वोचतुर्मिथश्छन्नं छन्नं भीमप्रिये इति ॥३४॥
येन लक्ष्मीपुरे कन्याऽङ्गीकृता सुरसुन्दरी । स एवायं पतिः स्वीयो विवाहाम्बरसंयुतः ॥३५॥
आवां तत्र गते ज्ञाते पत्याऽनेन बलात्मना । तेन जागरितो वां प्राग् हनिष्यति पतिः स्फुटम् ॥३६॥
विचार्येति तदा ताभ्यां निबध्य मूलिकां कटौ । शुकं कृत्वा पतिं काष्ठ-पञ्जरे स्थापितो द्रुतम् ॥३७॥
इतः श्रीदो धनी प्राह पुत्रीं प्रत्यन्यदा स्फुटम् । त्वां परिणीय जामाता जगाम किं करिष्यते ॥३८॥
पुत्री प्राह पितर्भार-पट्टे स्वकीयसद्मनः । लिखिताऽस्त्यक्षरश्रेणी जामात्रा गच्छता तव ॥३९॥
वाचयित्वाऽक्षरश्रेणीं जगाद सुरसुन्दरी । श्रीपुरेऽस्ति पतिर्भीमनामा मम पितर्वरः ॥४०॥
तेन विश्राणयाऽऽदेशं मह्यं तत्र प्रयाम्यहम् । पिताऽऽचष्ट न ते पुत्रि ! गमनं युज्यते तव ॥४१॥
आदौ तत्र तव भ्राता-गत्वोपलक्ष्यते पतिम् । आयात्यत्र ततो गच्छेस्त्वमपि स्वेशसन्निधौ ॥४२॥
एकाकिन्या स्त्रियः स्वेच्छं गच्छन्त्या दूरनीवृति । शोभा भवति नो, याति प्रतिष्ठा स्वयमेव च ॥४३॥
विचार्येति तदा श्रीदः स्व पुत्रं चन्द्रनामकम् । प्रेषयामास जामातुः शुद्धिं ज्ञातुं कृतत्वरः ॥४४॥
चन्द्रोऽब्धिवर्त्मना गत्वा श्रीपुरे भीमसद्मनि । मिलितो भीमगेहिन्योः सन्नमस्कृतिपूर्वकम् ॥४५॥
चन्द्रोऽप्राक्षीत् क्व ते कान्तो जगामाऽत्र निवेद्यताम् । ताभ्यामुक्तं तवेदानीं किं कार्यं विद्यते वद ॥४६॥
चन्द्रस्ततो जगौ स्वीया-गमनोदन्तमादितः । सपत्नीभ्रातरं ज्ञात्वा ताभ्यामुक्तं छलात् तदा ॥४७॥
भूरि-लक्ष्मीं समादाय व्यवसायायाऽन्यनीवृति । भवतो भगिनीकान्तश्चलितोऽस्ति परेऽहनि ॥४८॥
ततस्ताभ्यां विशिष्टान्न-पानदानविधानतः । चन्द्रो भ्राताऽऽदरेणैव भोजितो मुदितोऽभवत् ॥४९॥
ताभ्यामूचे भवद्यामि-पतिर्दूरे गतोऽस्ति हि । तेन मासा लगिष्यन्ति बहवस्तत्र तस्य हि ॥५०॥
भवतो भगिनीकान्तो यदैष्यत्यत्र पत्तने । तदा तत्र समेत्येव (त्वेव) नेतुं तु सुरसुन्दरीम् ॥५१॥
चन्द्रो दध्याविदं काष्ठ-पञ्जरं शुकभासुरम् । नीयते चेत् पुरे स्वीये भगिन्याः स्यात्तदा च मुद् ॥५२॥
ततश्चन्द्रो रहः काष्ठपञ्जरं शुकभासुरम् । नीत्वा निजपुरे स्वीये भगिन्यै दत्तवान् द्रुतम् ॥५३॥
रमयन्ती शुकेनाऽमा स्वमनः सुरसुन्दरी । समयं गमयामास बहु पितुर्गेहे स्थिता ॥५४॥
एकदा मूलिकां कीर-पक्षमध्यस्थितां वराम् । दृष्ट्वा सुरसुन्दर्याऽऽशु छोटयामास यावता ॥५५॥
तावदाविर्भूत् कान्तस्त्यक्त्वा शुकत्वमञ्जसा । तदा श्रीदसुता हृष्टा मातृपितृयुताऽभवत् ॥५६॥
तया समं सदा भोगान् भुञ्जानो भीमनैगमः । श्वसुरस्य गृहे कालं गमयामास भूरिशः ॥५७॥
अन्यदा रहसि प्राह श्रीदपुत्री पतिं प्रति । श्वसुरस्य गृहे शोभा न स्यात् पुंसः स्थितस्य हि ॥५८॥
यतः–"उत्तमा स्वगुणैः ख्याता मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याताः श्वसुरैश्चाधमाधमाः ॥५९॥"
भीमोऽवग् भो ! प्रिये पत्न्यौ द्वे स्तो मम गृहे पुरा । कौटिल्यकुशले तेन गन्तुं तत्र स्पृहा न मे ॥६०॥

सुरसुन्दर्यवक् कान्त ! पुरुषैर्नैव कर्हिचित् । कातर्यं क्रियते तस्मात् त्वमत्र साहसं कुरु ॥६१॥
"अपमानं पुरस्कृत्य मानं कृत्वाऽद्य पृष्ठतः । कार्यमुद्धरते प्राज्ञः कार्यभ्रंशो हि मूर्खता ॥६२॥
दोषेणैकेन न त्याज्यः सेवकः सद्गुणोधिपैः । धूमदोषभयाद्वह्निर्नहि केनाप्यपास्यते ॥६३॥
अत्याचारमनाचार-मतिनिन्दामतिस्तुतिम् । अतिशौचमशौचं च षडेते जडबुद्धयः ॥६४॥
तेजस्विनां मनस्तुङ्गं नभखदन्तदशास्वपि । गच्छतस्तरणेरस्तं स्फुटमूर्ध्वमरीचयः ॥६५॥
जल्पितं सुरसुन्दर्याः श्रुत्वा भीमो जगाविदः । भो पत्नि ! यत्त्वया प्रोक्तं तद्वयं रोचते मम ॥६६॥
यदि ताभ्यां गृहिणीभ्यामहं पशुः करिष्यते । तदा किं क्रियते तत्र मया त्वया च तत्र हि ॥६७॥
सुरसुन्दर्यवक् कान्त ! मां लात्वा स्वगृहे व्रज । सर्वं ते सुकरं तत्र करिष्येऽहं सुखग्रहम् ॥६८॥
यतः-'महिषविषाणे मशकः शशकः शैले पिपीलिका पङ्के । सच्चरित्रे गुणिनि जने पिशुनः कुपितोऽपि किं कुरुते ?'
आकर्ण्येति प्रियावाक्यमायतौ हितकारकम् । भीमो दध्यौ गुणैः श्लाघ्या ममेयं गेहिनी किल ॥७०॥
यतः-"ऋतुर्वसन्तः प्रियवादिनी प्रिया, प्रभुर्गुणज्ञो गुणगौरवक्रिया ।
सुतो विनीतः समये घनाघनः, करोति नो कस्य मुदास्पदं मनः ? ॥७१॥"
गृहिणीप्रेरितो भीमः सप्रियः स्वपुरं प्रति । चलन् ततो निजे ग्रामे समागात् मुदिताशयः ॥७२॥
द्वाभ्यां सहचरीभ्यां स सप्रिय आगतस्तदा । निरीक्ष्य स्वागतं चक्रे तस्यास्तस्य च सादरम् ॥७३॥
आलोचि पूर्वपत्नीभ्यां स्थिता रहसि तत्क्षणम् । आवाभ्यां विहितः कीर एष पूर्वं पतिः स्वयम् ॥७४॥
न तदा निहतो मह्यां, (भूयः) कृतः पञ्जरगः शुकः । आवयोः कीरकरणं ज्ञातं भाव्यमुना ननु ॥७५॥
आगतः प्रेयसीयुक्तोऽधुनाऽत्र रमणः खलु । मण्डयित्वा छलं छन्नमावामेव मनिष्यति ॥७६॥
तेनाऽऽवाभ्यां विधातव्य उपाय एव साम्प्रतम् । स्वीयजीवितरक्षायै अभीष्टा असवो यतः ॥७७॥
यतः-" सव्वे जीवावि इच्छंति जीविउं न मरिज्जिउं । तम्हा पाणिवहं घोरं निग्गंथा वज्जयंति णं ॥७८॥"
विचार्येति तदा ताभ्या-मुक्तं विनयपूर्वकम् । भो पते ! त्वं कुरु स्नानं कृतमुष्णं जलं वरम् ॥७९॥
भीमः स्नानं यदा कर्त्तुमुपविष्टः सुविष्टरे । तदा ताभ्यां पयःपूर्णा कुल्या नीता गृहान्तरे ॥८०॥
स्नानं वितन्वतस्तस्य भीमस्य तन्निकेतनम् । अपूर्णं पयसा शीर्षं यावत् सर्वत्र तत्क्षणात् ॥८१॥
जले भीमो न् डन्नाइ आक् सुरसुन्दरीं प्रति । मग्नोऽहं साम्प्रतं पत्नि ! पूर्वोक्तं त्वं कुरु द्रुतम् ॥८२॥
सुरसुन्दर्यवक् कान्त ! मा त्व भीतिं कुरु प्रभो ! । अहमत्र स्थिता त्रातुं त्वां नीराच्च प्रदत्तदृग् ॥८३॥
मज्जन्तं मानवं वार-त्रयं स्वोदूर्ध्वं पयः स्वयम् । उच्छालयति निष्पाप-कृते ख्यातिः समस्ति हि ॥८४॥
उच्छलितेऽम्भसा वार-त्रयं पत्यौ तदोर्ध्वतः ।फुम्फया सुरसुन्दर्या गमितं निखिलं पयः ॥८५॥
द्वाभ्यां हुंकाररावाभ्यां द्वे सपत्न्यौ दुराशये । शकुन्यौ विहिते मन्त्रात् श्रीदनन्दनया तदा ॥८६॥
ततः पाणिगृहीतीनां तिसृणां दुष्टचेष्टितम् । मत्वा भीम इदं दध्यौ किमत्र स्थीयते मया ? ॥८७॥
एवं ध्यात्वा क्षणं त्यक्त्वा गेहिनीत्रितयं तदा । अययौ बहिरुद्याने सुव्रताचार्यसन्निधौ ॥८८॥
श्रीगुरुभिस्तदा ज्ञान-शालिभिः करुणात्मभिः । उपदेशो ददे तस्मै कैवल्यसौख्यदायकः ॥८९॥
तथाहि-अशुभं वा शुभं वापि स्वस्वकर्मफलोदयम् । भुञ्जानानां हि जीवानां कर्त्ता हर्त्ता न कश्चन ॥९०॥

मृतप्रायं यदा वित्तं मृतप्रायं यदा वपुः । मृतप्रायं यदाऽऽशा-मृद्धंपक्वं तदा सुखम् ॥९१॥
कायेन मनसा वाचा यत् कर्म कुरुते यदा । सावधानस्तदा तत्र धर्मान्वेषी भवी भवेत् ॥९२॥
इष्टानिष्टेषु भावेषु सदाऽव्यग्रमना मुनिः । सम्यग्निश्चयतत्त्वज्ञः स्थिरीकुर्वीत सात्त्विकः ॥९३॥
इत्यादिदेशनां श्रुत्वा भीमः श्रीगुरुसन्निधौ । जग्राह संयमं सद्यः संसारार्णवतारकम् ॥९४॥
गुरूक्तं विधिवद् यत्नं सर्वजीवेषु सर्वदा । कुर्वन् भीमयतिस्तीव्रं तपस्तपति भावतः ॥९५॥
पालयित्वा चिरं वृत्तं क्षिपन् दुष्कृतसन्ततिम् । भीमवाचंयमो मृत्वाऽऽदिमे स्वर्गेऽभवद्धरिः ॥९६॥
सवासवोऽन्यदा शत्रु-ञ्जये श्रीप्रथमं जिनम् । प्रणम्य ज्ञानिनः पार्श्वे सुश्राव धर्मदेशनाम् ॥९७॥
तदा कदम्बकाचार्या लक्षसंयतसंयुताः । शत्रुञ्जये समायाता नन्तुं श्री जिननायकान् ॥९८॥
पार्श्वे केवलिनस्तस्य सिद्धाद्रिमहिमां किल । सूरिः कदम्बकः श्रोतु-मुपविष्टो मुमुक्षुयुग् ॥९९॥
तेषां कदम्बमुख्यानां साधूनां शृण्वतां वृषम् । शुक्लध्यानादभूज्जातं केवलं सर्वलोकगम् ॥१००॥
तेषां ज्ञानशिवप्राप्त्यु-त्सवं स निर्जराधिपः । कृत्वा कदम्बकेत्याह्वां सिद्धाद्रेर्दत्तवान् मुदा ॥१०१॥

★ इति कदम्बकनामोपरि इन्द्रश्रेष्ठिकथा ★

उक्तं च "शत्रुञ्जयस्य नामानि—

शत्रुञ्जयः पुण्डरीकः सिद्धिक्षेत्रं महाबलः । सुरशैलो विमलाद्रिः पुण्यराशिः श्रियः पदम् ॥१॥
पर्वतेन्द्रः सुभद्रश्च दृढशक्तिरकर्मकः । मुक्तिगेहं महातीर्थं शाश्वतः सर्वकामदः ॥२॥
पुष्पदन्तो महापद्मः पृथ्वीपीठं प्रभोः पदम् । पातालमूलः कैलाशः क्षितिमण्डलमण्डनम् ॥३॥
शतमष्टोत्तरं नाम्नामित्याद्युक्तममुष्य हि । महाकल्पे विजानीयात् सुधर्मोक्तेऽतिशर्मदे ॥४॥ चतुर्भिः कलापकम् ॥
नामान्यमूनि यः प्रातः पठत्याकर्णयत्यपि । भवन्ति सम्पदस्तस्य व्रजन्ति विपदः क्षयम् ॥५॥

## रयणायरविवरोसहि रसकूवजुआ सदेवया जत्थ ।
## ढंकाइ-पंचकूडा सो विमलगिरी जयउ तित्थं ॥५॥

व्याख्या-रत्नानां "आकरः" खानिः वर्त्तते "विवराणि" गुहारूपाणि यक्षौषधाद्यधिष्ठितानि, औषधयो विविधाः याभिरनेके रोगा यान्ति, वशीकरणादिर्भवति "रसकूपिका" स्वर्णरसकूपिका एकगुदी-आनकमात्रो रसः तन्मध्ये चतुःषष्टिगुदीआनका लोहं ताम्रं वा क्षिप्यते, अग्निसंयोगात् सुवर्णं भवति, ढङ्कादयः पञ्चकूटा यत्र सन्ति, स "विमलगिरिः" शत्रुञ्जयपर्वतः "जयउ" जयतात् "तित्थं" तीर्थम् ॥
आदौ रत्नाकरस्य सम्बन्ध उच्यते—

॥ अथ रत्नाकरविषये सोमभीमकथा ॥

श्रीपुरेऽभवतां सोम-भीमाह्वौ सोदरद्वयम् । तयोः पत्न्यौ रमागामे बभूवतुर्मनोरमे ॥१॥
पृथग् जातावपि द्वौ तु सोदरौ विहर्ति सदा । एकत्र कुरुतः स्मैव स्नेहलौ तु परस्परम् ॥२॥
गुरूपान्तेऽन्यदा सोम-भीमौ वन्दितुमीयतुः । तदेति देशनां श्रीमद्गुरवो दद्गादरात् ॥३॥
हस्तौ दानविधौ मनो जिनमते वाचः सदा सूनृते, प्राणाः सर्वजनोपकारकरणे वित्तानि चैत्योत्सवे ।
येनैवं विनियोजितानि शतशो विश्वत्रयीमण्डनं, धन्यः कोपि न विद्यते कलितिलकं काले कलौ श्रावकः ॥४॥
दौर्भाग्यं प्रेष्यतां दास्य-मङ्गच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् ॥५॥
देशनान्ते ललौ सोमोऽभिग्रहं चातिसादरम् । अतः परमदत्तं नो मया ग्राह्यं मनागपि ॥६॥
भीमो जग्राह नादत्ता-भिग्रहं गुरुणोदितः । यतः सर्वे न जायन्ते सदृशाः मनुजाः क्वचित् ॥७॥
एकोदरसमुत्पन्ना एकनक्षत्रजातकाः । न भवन्ति समाः शीलैः (समशीला) यथा बदरीकण्टकाः ॥८॥
द्रव्यार्जनार्थमन्येद्युर्द्वावेव सोदरौ मुदा । गच्छन्तौ विषयेऽन्यत्र गतौ वीरपुरान्तिके ॥९॥
ततः सोमो व्रजन्नग्रे मणीखचितकुण्डलम् । कोटिमूल्यं निरीक्ष्याला-न्न निर्लोभितया तदा ॥१०॥
भीमश्छन्नं गृहीत्वा तद् सोदरस्यामिलत् पथि । सोमोऽवक् किं त्वया दृष्टं भीमः प्राह मया नहि ॥११॥
ततस्तावपि पश्चायां पुर्यंगातां सहोदरौ । कुर्वाणौ व्यवसायं तौ लक्ष्मीमर्जयतः क्रमात् ॥१२॥
विक्रीय कुण्डलं छन्नं भीमो भूरिक्रयाणकम् । यदाऽगृह्णात्तदा पृष्टं सोमेनेति कृतादरम् ॥१३॥
भूरिक्रयाणकं ताव-क्रीनोपान्ते किमीक्ष्यते ? । भीमोऽभाणीन्न प्रष्टव्यं त्वया भ्रातरिहाधुना ॥१४॥
पृष्टः बह्वाग्रहाद् भ्राता भीमः कुण्डलसङ्ग्रहम् । यदाऽगदत्तदा सोमः प्राहेति सोदरं प्रति ॥१५॥
कुण्डलेन क्रयाणं यद् गृहीतं भवताऽधुना । तदस्तु तव नो लामि विभागं तस्य सोदर ॥१६॥
व्यवसायमतः कुर्म आवां पृथक् सहोदरौ । परकीयं धनं प्राणा त्ययेपि लामि न क्वचित् ॥१७॥
ततः पृथक् पृथक् स्वीयं क्रयाणं द्वौ सहोदरौ । लात्वाऽऽगत्य पुरे स्व-स्वसदने निन्यतुश्च तत् ॥१८॥
तस्यामेव निशीथिन्यां भीमस्यैव निकेतने । प्रविश्य धाटिकाऽहार्षीन् सर्वं विभवमक्षयम् ॥१९॥
गतं सर्वं धनं दृष्ट्वा कुट्टयन्नुदरं दृढम् । भीमोऽभणन्ममाऽऽवासो धाट्याऽद्य मुषितो निशि ॥२०॥
सोमोऽभ्येत्य जगौ भ्रात ! रुदनेन तवाऽस्ति किम् । अदत्तं द्रविणं लातं त्वया तन्न वरं कृतम् ॥२१॥
अदत्तो विभवो लातोऽग्रेतनविभवं समम् । नाशयत्येव भूपाग्नि-तस्करादिकपार्श्वतः ॥२२॥
अन्यायोपार्जितं द्रव्यं दश वर्षाणि तिष्ठति । प्राप्ते षोडशमे वर्षे समूलं च विनश्यति ॥२३॥
वरं वह्निशिखा पीता सर्पस्य डङ्कितं वरम् । वरं हलाहलं पीतं परस्वहरणं न तु ॥२४॥
चौरश्चौरापको मन्त्री भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति चौरः सप्तविधः स्मृतः ॥२५॥"
हरिऊणं परदव्वं पूअ जो करइ जिणवरिंदाणं । दहिऊण चंदणतरुं कुणइ अंगारवाणिज्जं ॥२६॥"
अतः परं त्वयाऽन्यस्याऽदत्तं द्रव्यं मनागपि । न ग्रहीतव्यं ततस्ते स्या-दिहामुत्र सुखं खलु ॥२७॥
सन्तोषं कुर्वतां पुंसां सुखं चात्र परत्र च । जायते सततं दुःख-मसन्तोषान्न संशयः ॥२८॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते, शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं, सन्तोष एव पुरुषस्य परं निधानम् ॥२९॥
ततो भीमो जगादेति परद्रव्यं मया मनाग् । अदत्तं न ग्रहीतव्यं सदा सद्गतिहेतवे ॥३०॥
एकदा सोदरौ द्वौ तु गतौ श्रीगुरुसन्निधौ । अश्रोष्टामिति माहात्म्यं शत्रुञ्जयावनीभृतः ॥३१॥ 'रयणायरे' त्यादि ।
भीमोऽभणद् गतःसिद्ध-शैलेऽपश्यत् पदेपदे । अपश्यन्न मणीस्तेन त्वयेत्थमुच्यतां किमु ? ॥३२॥
गुरुराह मणीखानिर्देवताधिष्ठिताऽस्ति हि । अतो भाग्यं विना नैव कोपि पश्यति मानवः ॥३३॥
ततो भीमः समेत्याद्रौ तस्मिन्नभ्यर्च्य तीर्थपम् । जगौ यदा मणीखानिं द्रक्ष्याम्यन्नं तदा ह्यहम् ॥३४॥
गतेषु दशघस्रेषु सुरोऽभ्येत्येवमूचिवान् । उत्तिष्ठ भीम ! ते रत्न-खनिः प्रादुर्भविष्यति ॥३५॥
यावदुत्थाय भीमोऽग्रे वीक्ष्यते तावदेव तु । रत्नखानिरभूद् दृष्टि-गोचरेऽथ सुरो जगौ ॥३६॥
तुष्टोऽस्म्यहं मणीन् पञ्च गृहाणाऽनुगृहाण माम् । साहसी त्वमसीदानीं चालितोऽप्यचलन्नहि ॥३७॥
ततः पञ्च मणीन् प्राप्य तस्या रत्नखनेर्वणिग् । प्रासादं रत्नखन्याह्व-मकारयदथार्हतः ॥३८॥
सोमभीमौ क्रमाल्लात्वा चारित्रं गुरुसन्निधौ । गतौ शत्रुञ्जये कर्म-क्षयान्मुक्तिं समीयतुः ॥३९॥

इति रत्नाकरविषये सोमभीमकथा

॥ अथ विवरविषये भीमभूपकथा ॥

विवराणि गुहारूपाणि सन्ति बहूनि, येषु विवरेषु साधवस्तपस्तपन्तो मुक्तिं गच्छन्ति जग्मुर्यास्यन्ति, यक्षादिदेवा रक्षां कुर्वते, चन्द्राह्वविवरस्य स्वरूपं प्रोच्यते––

वाराणस्यां प्रजापाल-भूपस्य प्रेयसी रमा । अजनिष्टाऽनघाङ्गश्री-जितप्रीतिसुराङ्गना ॥१॥
अनपत्या सुतप्राप्त्यै ज्योतिष्कादिककोविदान् । पृच्छन्ती ददते तेभ्यो धनधान्यादि भूरिशः ॥२॥
यतः–"रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां गणकाः क्षीणसम्पदः ॥३॥"
तथापि न सुतो जातस्तस्या दुष्कर्मयोगतः । ततः सन्तोषमाधाय तस्थौ सा नृपगेहिनी ॥४॥
यतः–'सर्पाः पिबन्ति पवनं न च दुर्बलास्ते, शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं, सन्तोष एव पुरुषस्य परं निधानम् ॥५॥
निरीहस्य निधानानि प्रकाशयति काश्यपी । अङ्गोपाङ्गानि डिम्भानां न गोपयति कामिनी ॥६॥
शुभकर्मोदयेऽन्येद्यु-रागत्यैकः सुरो जगौ । एकस्मिन् हायने याते तव पुत्रो भविष्यति ॥७॥
ततो राज्ञाऽन्यदा पृष्ट एको ज्योतिषिकस्त्विति । कस्मिन् क्षणे सुतो जातो भविष्यति लसत्तमः ॥८॥
ज्योतिष्किको जगावुच्च ग्रहेषु यो भवेत् सुतः । स एव जायते चक्री वासुदेवोऽथवा बलः ॥९॥
यतः-"अजवृषमृगाङ्गनाकर्कमीनवणिजांशकेष्विनाद्युच्चाः । दशशिख्यष्टाविंशति तिथीन्द्रियत्रिघनविंशेषु ।१०।
सुखी भोगी धनी नेता जायते मण्डलाधिपः । नृपति [illegible] पादुच्चगृहे फलम् ॥११॥

यस्मिन् क्षणे ग्रहा उच्चा द्वित्रा भवन्ति वासरे । तस्मिन्नौषधयोगेन राज्यसूत सुतं वरम् ॥१२॥
जनिते तनये तस्मिन् राज्ञीमृत्युमुपाययौ । चिन्तितं नहि कस्यापि जायते दुष्कृतोदयात् ॥१३॥
अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति यानि पुमान् नैव चिन्तयति ॥१४॥
स्तन्यपानादिदानेन धात्र्या संवर्धितोऽनिशम् । भीमनामा सुतोऽभीष्टोऽभवत् तातस्य सन्ततम् ॥१५॥
ततोऽन्या भूमिभृत्पत्नी सूते स्म नन्दनं वरम् । तस्याऽदाज्जनको नाम हरेत्याह्वां नरेश्वरः ॥१६॥
राज्ञी स्वसुनवे राज्यं दातुकामा सपत्निजम् । निहन्तुं ददते धान्य-मध्ये क्ष्वेडं निरन्तरम् ॥१७॥
दृढायुष्कतया तस्य लग्नं न गरलं मनाग् । विमातृचेष्टितं सर्वं भीमो जज्ञे नृपाङ्गजः ॥१८॥
भीमो दध्यौ न राज्येच्छा विद्यते मम चेतसि । विमात्रेयं मुधा हन्तुं मां वाञ्छति सदा दृढम् ॥१९॥
निर्गत्य नगराद् भीमो ययौ शत्रुञ्जयाचले । ददर्श तत्र भूरीणि विवराणि वराणि सः ॥२०॥
तेषु किन्नर-किन्नर्यो गीतानि वृषभप्रभोः । गायन्ती रञ्जयन्त्येव सुरान् यक्षान् नरानपि ॥२१॥
निर्झरेषु पिबन्त्यम्बु व्याघ्र-पञ्चास्य-फेरवः । अदन्तः स्नेहितं भिन्नं तत्र तिष्ठन्ति मौख्यतः ॥२२॥
तपन्तः सन्तत तीव्रं तपोध्यानपरायणाः । गमयन्ति सुखात् काल-मर्जयन्ति शिवश्रियम् ॥२३॥
औषधीभिः सदोद्योतो जायते तत्र सन्ततम् । केलिं कुर्वन्ति यक्षाद्या निर्जरा भूरिशो मुदा ॥२४॥
विलोक्य कौतुकान्येवं भीमः पदे पदे मुदा । पूजयित्वा प्रभुं झम्पां शैलाद्दातुं यदोद्यतः ॥२५॥
तदा तत्र स्थितो ज्ञानी जगादेति नरोत्तम ! । आत्मनो घाततो जीवा न छुटन्ति स्वकर्मतः ॥२६॥
तेन त्वं कुरु तीव्रं तु तपः ते स्याद्यतः सुखम् । चन्द्राह्वविवरे गत्वा कुरुष्व च तपोऽनिशम् ॥२७॥
तत्र गत्वा तपस्तस्य भीमस्य कुर्वतः सतः । श्रीपुरस्याऽभवद्राज्यं चतुरङ्गचमूयुतम् ॥२८॥
राज्यं कृत्वा चिरं शत्रुञ्जये गत्वा व्रतं स च । लात्वा तपो व्यधात्तीव्रं चन्द्राह्वविवरस्थितः ॥२९॥
तत्र भीमऋषेस्तीव्रं तपो वितन्वतः सतः । बभूव केवलज्ञानं जगत्त्रयावलोककम् ॥३०॥
तत्रैत्य निर्जरा ज्ञानोत्सवं चक्रुस्तयाऽऽदरात् । यथा तं पश्यतां नृणां ज्ञानमासीन्निरत्ययम् ॥३१॥
तत्र भीमोऽगमन्मुक्तिमन्येऽपि बहवः पुनः । साधवश्च ययुः केचित् प्रथमादिसुरालये ॥३२॥

॥ इति विवरविषये भीमभूपकथा ॥

॥ अथ औषधविषये पद्मसेननृपकथा ॥

'ओसह'त्ति-व्याख्या-औषधयो रोगाद्यपहाः सन्ति, तथाहि—

क्षितिभूषापुरे वीर-भूपनेर्न्यायशालिनः । पत्नी पद्मावती पुत्रः पद्मसेनाभिधोऽभवत् ॥१॥
वर्धमानः क्रमात् पित्रा पुत्रः पण्डितसन्निधौ । पाठितोऽभूद्यथाधर्म-कर्मशास्त्रेषु कोविदः ॥२॥
यतः—"जायम्मि जीवलोए दो चेव नरेण सिक्खियव्वाइं । कम्मेण जेण जीवइ जेण मुओ सुग्गइं जाइ ॥३॥"
भूपतीनां सुताः पञ्च शतानि परिणायितः । पुत्रः पिता सुखी जातो दो(गुन्दुक)दुंगककुमारवत् ॥४॥
सन्ततं गीतनृत्यादि कारयन् नृपनन्दनः । अस्तोद्गमे न जानाति मार्तण्डस्य मनागपि ॥५॥

एवं सुखातिलीनस्य कुमारस्य निरन्तरम् । राजयक्ष्माभिधो रोगो जातस्तीव्रार्त्तिकारकः ॥६॥
ततश्चिकित्सका राज्ञाऽऽकारिताः सुतरुक्छिदे । औषधानि ददुस्तस्य यानि तानि मुधाऽभवन् ॥७॥
राज्ञाऽऽकार्योदिता विज्ञा गणकाः पुत्ररुक्छिदे । जगुस्तव सुतस्यैति क्षयं रोगोऽष्टभिर्दिनैः ॥८॥
तेषामप्युदितं नैव मिलितं च यदाऽभवत् । तदा शान्तिकपौष्ट्यादि कारयामास भूपतिः ॥९॥
तस्मिन्नपि मुधो जाते कृत्ये नन्दनदुःखतः । महीपालोऽभवद्दुःखी बाढं नारकजीववत् ॥१०॥
मेलयित्वा ततः सङ्घं भूपः पुत्रसमन्वितः । ययौ शत्रुञ्जये तीर्थे नन्तुं श्रीजिननायकान् ॥११॥
गेहे गोमुखयक्षस्य कृत्वा क्षपणसप्तकम् । उपविष्टो जगौ भूप-सुनुरेवं तदग्रतः ॥१२॥
भो यक्ष ! वद्वि मे रोगच्छिदे स्वमौषधं हि तत् । येन मद्विग्रहाद् याति राजयक्ष्मा क्षयं क्षणात् ॥१३॥
गोमुखः प्रोक्तवान् राज-पुत्राऽमुष्य तरोः फलम् । आस्वादयाऽधुना रोगः सद्यस्ते यास्यति क्षयम् ॥१४॥
यक्षोक्तवृक्षतो लात्वा फलान्यास्वाद्य भूपभूः । नीरोगोऽभूत्तदा देवकुमार इव वेगतः ॥१५॥
पद्मसेनस्ततो गत्वा श्रीयुगादि-जिनालये । पूजयित्वा जिनं चक्रे पारणं भवतारणम् ॥१६॥
ततो वीरनृपो मत्वा नीरोगं तनयं तदा । प्रासादं कारयामास तुषाराचलसोदरम् ॥१७॥
ततः श्रीशान्तिनाथस्य प्रतिमां रैमयीं वराम् । स्थापयित्वा नृपः स्वीय-नगरं समुपेयिवान् ॥१८॥

❀ इति औषधविषये पद्मसेननृपकथा ❀

॥ अथ रसकूपिकोपरि सुन्दरकथा ॥

कुन्तलाह्वपुरे श्रेष्ठी धनदो धनदोपमः । धनवत्यभिधा पत्नी शीलादिगुणभूषिता ॥१॥
क्रमात् सोमामरश्रीदसुन्दराह्वास्तनूभवाः । चत्वारो जनिताः श्रेष्ठि-पत्न्या शोभनवासरे ॥२॥
सुवस्त्राभरणैः सर्वान् पुत्रान् विषयान् सदा । सदन्नपानतः श्रेष्ठी पुपोष मुदिताशयः ॥३॥
भूरिरैव्ययतो धर्म-कर्मशास्त्राणि सूरिभिः । पाठिता नन्दनाः सर्वे पित्रा च परिणायिताः ॥४॥
श्रेष्ठी पृथक् पृथक् सर्व-पुत्रेभ्यो धवलालयान् । वितीर्य जनको मोदं तनुते वीक्ष्य नन्दनान् ॥५॥
क्रमाच्छ्रेष्ठिसुताः सर्वे स्वस्वपत्नीवशीकृताः । धनं लात्वा पृथग् भूताः पशुवत्पितृपार्श्वतः ॥६॥
लक्ष्म्यर्जनकृते सत्सु चतुर्षु तनयेष्वपि । रलति श्रेष्ठिराट् रात्रिं दिवं विश्रामवर्जितः ॥७॥
एकदा श्रेष्ठिनं सर्पिरानयन्तं स्वयं गृहे । दृष्ट्वाऽऽह विमलो मित्रं श्रेष्ठिन् ! रलसि किं स्वयम् ! ॥८॥
श्रेष्ठ्याह वसति ग्रामे नारीभिर्मुषितोऽस्म्यहम् । श्रेष्ठी बभाण का नार्यो याभिस्त्वं मुषितः सुहृत् ? ॥९॥
श्रेष्ठ्यवक् पश्यतो मेऽत्र स्नुषाभिर्मुषिताः सुताः । विमलोऽवक् स्नुषाः किं स्युस्तस्कर्यस्तव सम्प्रति ? ॥१०॥
श्रेष्ठ्यभाणीद् वरं स्तेनास्ते ये लात्वा धनं गृहात् । नायान्ति चक्षुषोरेताः स्नुषास्त्वाऽऽयान्ति सन्ततम् ॥११॥
सुहृज्जगौ वधूभ्यस्ते वालयिष्यामि नन्दनान् । त्वया दुःखं न कर्त्तव्यं कार्यो धर्मादरः पुनः ॥१२॥
ततो मंत्रिसुतोपान्तेऽभ्येत्यैति विमलो जगौ । मातुः पितुः समं तीर्थं विद्यते न जगत्त्रये ॥१३॥
यतः-'ते पुत्रा ये पितुर्भक्ता स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥१४॥

जनेता चोपनेता च यस्तु विद्यां प्रयच्छति । अन्नदः प्राणदश्चेति पिता पञ्चविधः स्मृतः ॥१५॥
स एव कथ्यते पुत्रः यः स्वीयं कुलमन्वहम् । पितुः कीर्तिं च धर्म्मं च गुणांश्चापि विवर्द्धयेत् ॥१६॥
इत्यादि सूपदेशेन श्रेष्ठिपुत्रास्त्रयः क्रमात् । वालिताः सुहृदो भेजुस्तातं सद्भक्तिपूर्वकम् ॥१७॥
मित्रेण वालितान् पुत्रांस्त्रीन् मत्वा श्रेष्ठिपुङ्गवः । हृष्टः करोति पुण्यानि स्वदानादीन्यनेकशः ॥१८॥
यतः—"वज्रलेपस्य मूर्खस्य नारीणां मर्कटस्य च । एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥१९॥"
चतुर्थस्तनयो निःस्वी-भूतस्त्यक्त्वा पुरं निजम् । ययौ शत्रुञ्जयोपान्ते भीमे कच्छे दिवात्यये ॥२०॥
प्रातस्तत्र यतीन् दृष्ट्वा गत्वा नत्वा सुभक्तितः । मुख्यसाधोः पुरोऽश्रौषी-देवं सुन्दरनैगमः ॥२१॥
अस्मिन् शत्रुञ्जये तीर्थे श्रीशान्तिदृष्टिगोचरे । रसकूपी समस्त्येव स्वर्णकृद्रसपूरिता ॥२२॥
यः श्रीशान्तिजिनस्याग्रे षष्ठादि कुरुते तपः । कुल्माषान् पारणे भुङ्क्ते विंशतिप्रमितान् पुनः ॥२३॥
रसकूपीसुरस्तस्य स्मरतः शान्तिमर्हतम् । दर्शयेच्च रसस्याशु करिं स्वर्णविधायिकाम् ॥२४॥
उक्तं च-श्रीशान्तिचैत्यस्य पुरो हस्तानां त्रिंशतः पुनः । पुरुषैः सप्तभिरधः (नीचैः) खानी द्वे स्वर्णरूप्ययोः ।२५।
ततो हस्तशतं गत्वा पूर्वद्वारेऽस्ति कूपिका । अधस्तादष्टभिर्हस्तैः श्रीसिद्धरसपूरिता ॥२६॥
श्रीपादलिप्ताचार्येण तीर्थोद्धारकृते किल । अस्ति सस्थापितं रत्न-सुवर्णं तत्समीपगम् ॥२७॥
पूर्वस्यामृषभबिम्बा-दधश्चर्षभकूटतः । धनूंषि त्रिंशतं गत्वोपवासांस्त्रीन् समाचरेत् ॥२८॥
कृते बलिविधानादौ वैरोट्या स्वं प्रदर्शयेत् । तदाज्ञया समुत्पाट्य शिलां रात्रौ प्रविश्यते ॥२९॥
तत्रोपवासतः सर्वाः सम्पद्यन्ते च सिद्धयः । तत्रर्षभार्चानमनाद् भवेदेकावतारभाक् ॥३०॥
पुरो धनुःपञ्चशत्या सप्तपाषाणकुण्डिका । ततः सप्त क्रमान् नीत्वा कुर्याद्बलिविधिं बुधः ॥३१॥
शिलोत्पाटनतस्तत्र कस्यचित् पुण्यशालिनः । उपवासद्वयेन स्यात् प्रत्यक्षा रसकूपिका ॥३२॥
श्रुत्वैतत् सुन्दरो गत्वा तीर्थे तस्मिन् गुरूदितम् । तपश्चक्रे तथा प्रादु-रभूत् कूपीसुरोऽचिरात् ॥३३॥
जगौ सुरस्तवेदानीं तुष्टोऽस्मि रसकूपिकाम् । दर्शयिष्याम्यहं तुभ्य गृहाण रसमञ्जसा ॥३४॥
रसभारत्रयं स्वर्णकरं प्राप्य ततस्तदा । आगतः स्वपुरेऽकार्षीत् सुन्दरः कनकं बहुम् ॥३५॥
सुरोक्त्या सुन्दरो माता-पित्रोर्भक्तिपरः सदा । प्रासादं कारयामास कैलासगिरिसोदरम् ॥३६॥
तन्मध्ये शान्तिनाथस्य प्रतिमां रैमयीं वराम् । त्रिशङ्गुलमितामस्था-पयत् सुन्दरनैगमः ॥३७॥
प्रतिमां प्रवरां स्वर्ण-मयीं शत्रुञ्जयाचले । कारयित्वाऽर्हतः शान्ते-र्गेहे सोऽतिष्ठिपन्मुदा ॥३८॥
सुन्दरो विस्तरान् मातृ-पितृभ्रातृसमन्वितः । यात्रां वितनुते सिद्ध-पर्वते भूरिरैव्ययात् ॥३९॥
तत्र शान्तिजिनस्याग्रे श्रीशान्तिं ध्यायतः सतः । सुन्दरस्याभवज्ज्ञानमव्ययं पातकक्षयात् ॥४०॥
देवतादत्तलिङ्गः सन् सुन्दरः केवली तदा । तथा दिदेश सर्वज्ञा-गमोपदेशमादरात् ॥४१॥
यथा लक्षत्रयी वाचं-यमानां शृण्वतां वृषम् । उत्पेदे केवलज्ञानं विश्वत्रयप्रकाशकम् ॥४२॥

※ इति रसकूपिकोपरि सुन्दरकथा ※

ढङ्कादिपञ्चकूटेषु याता यास्यन्ति यान्ति ये । शिवं तेषां न छद्मस्थैः संख्या ज्ञायेत च क्वचित् ॥१॥
इत्यादि ढङ्कादिपञ्चकूटवर्णनं पुरापि कृतमप्यस्ति । तेनाऽत्र नोच्यते ।

जो अरयछग(च्छक्क)म्मि असीसत्तरिसट्ठीपन्नबारजोयणए ।
सगरयणीविच्छिन्नो सो विमलगिरी जयउ तित्थं ॥६॥

'यो' गिरिः अरकेषु षट्सु क्रमात् अशीति-सप्तति-षष्टि-पञ्चाशत्-द्वादश-सप्तहस्तप्रमाणोऽस्ति, स विमलगिरिस्तीर्थं जयतात् चिरम् ॥६॥

जो अट्ठजोअणुच्चो पन्ना-दसजोअणं च मूलुवरिं ।
विच्छिन्नो रिसहजिणे सो विमलगिरी जयउ तित्थं॥७॥

'यो' गिरिः-पर्वतः श्रीऋषभदेवे विजयमाने अष्टौ योजनान्युच्चः, "मौलौ" धुरि पञ्चाशद्योजनानि क्षितौ विस्तीर्णः "उपरि" ऊर्ध्वं दशयोजनानि विस्तीर्णः, प्रथमजिने वर्त्तमाने स विमलगिरिर्जयतात्तीर्थम् ॥७॥

जहिं रिसहसेणपमुहा असंख तित्थंकरा समोसरिआ ।
सिद्धा य सिद्धसेले सो विमलगिरी जयउ तित्थं ॥८॥

यत्र ऋषभसेनप्रमुखारतीर्थंकरा असङ्ख्याताः समवसृताः 'सिद्धाः' सिद्धिं गताः 'सेले' शैले, स च विमलगिरिस्तीर्थं जयतात् । अत्र कथा—

॥ अथ ऋषभजिनस्य शत्रुञ्जयागमनसम्बन्धः ॥

अयोध्यायां जनानन्दा-भिधो भूमीपतिर्नयी । पत्नी शीलवती नाम्ना तस्यासीच्छीलशालिनी ॥१॥
गजाहिवह्निपर्यन्तैः स्वप्नैश्चतुर्दशप्रमैः । सूचितस्तनयोऽसावि शीलवत्या सुखं निशि ॥२॥
"गयवसहसीहअभिसेयदामससिदिणयरं झयं कुंभं । पउमसरसागरविमाणभवणरयणुच्चयसिहिं च" ॥३॥
जन्मोत्सवः कृतः शक्र-पितृभ्यां तस्य तु क्रमात् । पिता ऋषभसेनेति नामाऽदाल्लसदुत्सवम् ॥४॥
वर्द्धमानः क्रमात् प्राप्य राज्यं पैतृकमद्भुतम् । त्यक्त्वा च तृणवद्राज्यं जग्राह संयमं स च ॥५॥
छद्मस्थतां व्यतिक्रम्य श्रीमान् ऋषभसेनकः । सम्प्राप्य केवलज्ञानं सुरासुरनमस्कृतः ॥६॥
वप्रत्रये मणीरूप्य-जाम्बूनदमये वरे । उपविश्याऽऽसने तीर्थ-ङ्करोजगौ वृषं तदा ॥७॥
अपि लभ्यते सुराज्यं लभ्यन्ते पुरवराणि रम्याणि । नहि लभ्यते विशुद्धः सर्वज्ञोक्तो महाधर्मः ॥८॥
चत्वारः प्रहरा यान्ति देहिनां गृहचेष्टितैः । तेषां पादे तदर्द्धे वा कर्तव्यो धर्मसङ्ग्रहः ॥९॥
उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् । आयुषः खण्डमादाय रविरस्तमुपागतः ॥१०॥
अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः॥११॥

अन्यदा बोधयन् भव्य-जीवान् वृषभसेनकः । ययौ शत्रुञ्जये शैले कल्याणकमलाप्रदे ॥१२॥
देवैर्वप्रत्रये रत्न-स्वर्णरूप्यमये कृते । उपविश्य ददौ धर्म-देशनामिति शर्मदाम् ॥१३॥
अन्यायन्यायभेदेन चतुर्भङ्गी धने ततः । सतां सर्वोत्तमी भङ्गी न्यायार्जितस्य सद्व्ययात् ॥१४॥
पादमायान्निधिं कुर्यात् पादं वित्ताय घट्टयेत् । धर्मोपभोगयोः पादं पादं भर्तव्यपोषणे ॥१५॥
संसाराम्बुनिधौ सत्त्वाः कर्मोर्मिपरिघट्टिताः । संयुज्यन्ते वियुज्यन्ते तत्र कः कस्य बान्धवः? ॥१६॥
श्रुत्वेति तत्र सर्वज्ञधर्मं धर्मशरीरिणः । सम्यक्त्वसहितं श्राद्ध-धर्मं जगृहुरादरात् ॥१७॥
आयुःप्रान्ते जिनः सोऽपि भूरिसाधुसमन्वितः । शत्रुञ्जये ययौ मुक्ति-नगरीं क्षीणपातकः ॥१८॥
ततश्चन्द्रध्वनः सार्वः क्षीणाष्टकर्म्मसञ्चयः । अस्मिन् सिद्धगिरौ भूरि-मुमुक्षुयुक् शिवं ययौ ॥१९॥
ततोऽनन्तजिनः कुर्वन् विहारमायुषः क्षये । अत्रैव पर्वते मुक्ति-नगरीं समुपेयिवान् ॥२०॥
एवं चासङ्ख्यसर्वज्ञा युक्ता असङ्ख्यसाधुभिः । शत्रुञ्जये समाजग्मु-र्ययुर्मुक्तिपुरीं क्रमात् ॥२१॥
उत्सर्प्पिण्यामतीतायां सम्प्रत्याह्वो जिनेश्वरः । तस्याऽजनि कदम्बाख्यो गणेशः प्रथमो वरः ॥२२॥
स च शत्रुञ्जयेऽभ्येत्य मुनिकोटिसमन्वितः । सिद्धिं ययावतः कादम्बक एष गिरिः स्मृतः ॥२३॥
सन्त्यत्र दिव्यौषधयः प्रभावपरिपेशलाः । रसकूपोऽपि रत्नानि कल्पवृक्षास्तथा परे ॥२४॥
दीपोत्सवे शुभे वारे सङ्क्रान्तावुत्तरायणे । न्यसेन् मण्डलमत्रैत्य स्युः प्रत्यक्षा हि देवताः ॥२५॥
न ता ओषधयः काश्चित् ह्रदकुण्डानि तानि न । सिद्धयोऽपि न ताः पृथ्व्यां या न सन्ति गिराविह ॥२६॥
सुराष्ट्रामण्डलजुषो दारिद्र्येण कथं जनाः । पीड्यन्ते यत्र कादम्ब-गिरिः सिद्धिनिकेतनम् ॥२७॥
तुष्टो यस्याऽस्त्ययं शैलः कामधेनुः सुरद्रुमः । चिन्तामण्यादयस्तस्य सर्वे तुष्टाः समन्ततः ॥२८॥

**तह पउमनाहपमुहा समोसरिस्संति जत्थ भाविजिणा ।**
**तं सिद्धखित्तनामं सो विमलगिरी जयउ तित्थं ॥९॥**

व्याख्या-'तह' तथा पद्मनाभप्रमुखा जिनेश्वराः असङ्ख्याता भाविनो यत्र सिद्धगिरौ समवसरिष्यन्ति, तत् सिद्धक्षेत्रं नाम नाम्ना वर्तते, अतः स विमलगिरिः पर्वतो जयतात् । अत्र कथा—

मगधाविषये राज-गृहे सुरपुरोपमे । आसीत् प्रसेनजिद् भूपो वैरिमातङ्गकेसरी ॥१॥
तस्याऽऽसीत् प्रथमः पुत्रः श्रेणिकोऽमलविक्रमः । पृथक्पृथक् प्रिया-जाताः सुता नवनवप्रभाः ॥२॥
राजा दध्यौ ममेदानीं पुत्राः सन्ति शतं पुनः । न परीक्षा विना ज्ञेयो राज्ययोग्योऽधुना सुतः ॥३॥
स्वर्णरूप्यमणीकुम्भि-वाजिनृस्त्रीमु(सु)खादि वा । परीक्ष्य सत्तमंग्राह्यं यथा धर्मोऽत्र धर्मिणा ॥४॥
ततः पक्वान्नसम्पूर्णा करण्डाः कोरका घटाः । जलपूर्णाः गृहस्यान्तो मोचिता मेदिनीभुजा ॥५॥
पुत्रानाऽऽकार्य भूपोऽवग् भोज्यं पेयं पयः पुनः । करण्डका घटा नैवोद्घाट्या बद्धा अपावृतम् ॥६॥
बुभुक्षितेषु सर्वेषु भ्रातृषु श्रेणिको जगौ । धूनयित्वा करण्डांश्च कुम्भानाऽऽछाद्य वाससा ॥७॥
निष्पीड्य भोजयामास पाययामास सोदरान् । अभोजयन् स्वयं तेषु भुक्तेषु सोदरेष्वपि ॥८॥ युग्मम् ।
श्रेणिकस्य धियं मत्वा राजाऽध्यासीत् स्वचेतसि । सकुरेषु समस्त्येव राज्ययोग्यो परे नहि ॥९॥

यतः—वाजिवारणलोहानां काष्टपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं विद्यते महत् ॥१०॥
ततः सिताघृतक्षीर–भृतेषु भाजनेष्वथ । नन्दनेषूपविष्टेषु भोक्तुं भूपनिदेशतः ॥११॥
बुभुक्षितान् शुनस्तेषु भाजनेष्वत्तुमञ्जसा । मोचयामास भूपालः परीक्षार्थं रहः पुनः ॥१२॥ युग्मम् ।
क्षीरमत्तुं समेतेषु श्वसु नष्टा नृपाङ्गजाः । एकः श्रेणिक उत्तस्थौ न तदा बुद्धिभाजनम् ॥१३॥
खरण्टितान्यमत्राणि कुमारैरुज्झितान्यथ । तेभ्यः श्वभ्यः क्षिपन्नाद श्रेणिको नृपनन्दनः ॥१४॥
भूपाऽऽवासे ज्वलत्याशु भम्भा लात्वाऽऽदिमः सुतः । निर्ययौ निर्ययुश्चान्ये दुकुलादि गृहान्तरात् ॥१५॥
ततो भूपो जगौ रे रे ! श्रेणिकाऽतो व्रजाऽधुना । भम्भा त्वं वादयन् स्वीयोदरं भर गृहे गृहे ॥१६॥
आकारणं विना नात्राऽऽगन्तव्यं भवता पुनः । त्वया शुना समं भुक्त-मतोऽसि त्वं शुना समः ॥१७॥
श्रेणिकोऽथ निशि च्छन्नं निर्गत्य स्वपुरात्तदा । गतोऽटव्यां ददर्शैकं स्वप्नं सत्सातदायकम् ॥१८॥
कल्ये गच्छन्नदीतीरे दृच्यस्यश्वत्थ-सागरौ । तन्मूलयोः समस्त्येका शिला मध्ये महत्तमा ॥१९॥
मणयोऽष्टादश प्रौढ-प्रभावाः सन्ति सुन्दराः । पयोग्निव्याघ्रसिंहेभ-शाकिनीस्तम्भकारकाः ॥२०॥
अन्धत्वशूलशीर्षार्त्ति-स्फेटका वश्यकारकाः । मौढ्योत्पादकसन्तान-वर्धकः कमलाप्रदः ॥२१॥
भयहृत् प्रीतिदः पुष्टि-शान्तिदो रोगहारकः । एतान् मणीन् गृहीत्वा त्वं श्रेणिकाऽदुःखवान् भव ॥२२॥
प्रातस्तांस्तान् मणीन् लात्वा ग्रन्थौ बद्ध्वा पृथक् पृथग् । प्रभावं च स्थिरीकृत्य श्रेणिकोऽचलदग्रतः ॥२३॥
भिल्ल्येका मिलिता मार्गे प्राह मां वृणु सत्तम ! । भिल्लोऽसि मत्पिता लक्ष-ग्रामस्वामी मनोरम ! ॥२४॥
अहं बिभेमि नो व्याघ्राद् भूतात् प्रेतात् मतङ्गजात् । अन्यस्मादपि नो कस्माद् भीति र्मेऽस्त्यस्ति वाऽग्नितः
श्रेणिकोऽवग् न ते पाणि-ग्राहं कुर्वेऽत्र भामिनि ! । अहं भूपसुतोऽस्मि त्वं भिल्लीत्येवं कथं वद ॥२६॥
एवं जल्पन् कुमारस्तु तत्राऽऽयाते दवानले । स्मृत्वा वह्निमणिं शीघ्रं प्रविश्याऽवक् च तां प्रति ॥२७॥
आगच्छाऽत्र वृणु त्वं मां ततो भिल्ली जगावदः । मौढ्यान्मयोदितो भेदस्तेनाहं वञ्चिता त्वया ॥२८॥
ततो गच्छन् कुमारस्तु गतो विन्नानदीतटे । यावद् वृक्षेऽचटन् तावन्मूलात् पपात वारिणि ॥२९॥
आरुह्य तं तरुं भूप-पुत्रो वेन्नाटपत्तने । ययौ यावत्तदा जज्ञे करेषु चन्दनं द्रुमम् ॥३०॥
इभ्येभ्यस्तं वितीर्य द्रुं प्राप्य भूरीन् मणीन् वरान् । श्रेणिकः प्रययौ हट्टे धनावहरमावतः ॥३१॥
तस्मिन् हट्टस्थिते भूरि-लाभे जाते वणिग् जगौ । कस्य प्राघूर्णकोऽसि त्वं ? स प्राह भवतोऽस्म्यहम् ॥३२॥
स्वगृहे श्रेष्ठिनाऽऽनीतं दृष्ट्वा च रुचिराकृतिम् । नन्दापुत्री जगौ ताताऽमुना मां परिणायय ॥३३॥
श्रेष्ठिना भोजयित्वा तं तस्मै नन्दां निजाङ्गजाम् । वितीर्य स्वगृहेऽस्थापि स श्रेणिको नृपाङ्गजः ॥३४॥
धूलिं पूर्वागतां यान-पात्रेभ्यः स धनावहः । हट्टस्याग्रेऽक्षिपद्यां तु तां दृष्ट्वा श्रेणिकोऽगदत् ॥३५॥
एवं कथं त्वया क्षिप्ता धूली तेजनतूरिका । श्रेष्ठी प्राहाऽनया धूल्या विद्यते किं प्रयोजनम् ? ॥३६॥
श्रेणिकः प्रोक्तवानेषा न धूलिर्विद्यते वणिग् ! । इयं क्षिप्ताऽनले स्वर्णं जायते त्रपुयोगतः ॥३७॥
श्रेष्ठ्यपि स्वर्णमादाय धूलितो धनवानभूत् । श्रेणिकोऽन्धां महीपाल-पुत्रीं दिव्यदृशं व्यधात् ॥३८॥
सगर्भां गेहिनीं मुक्त्वा तातेनाऽऽकारितो रहः । श्रेणिकोऽभ्येत्य तातस्य ननाम चरणौ मुदा ॥ ३९॥
प्रसेनजिन्नृपो राज्यं दत्त्वा श्रेणिकसूनवे । तपो लात्वाऽऽयुषः प्रान्ते स्वर्गसातमवाप्तवान् ॥४०॥

अथ पश्चात् सुतोऽसावि नन्दया शुभवासरे । तस्याऽभयकुमारेति नाम तत्राऽभवत् क्रमात् ॥४१॥
वर्द्धमानः क्रमात्तातं मत्वा राजगृहाधिपम् । दर्शयित्वा धियं स्वीया-ममिलत् पितुरञ्जसा ॥४२॥
चतुर्बुद्धिनिधिं पुत्रं मत्वा श्रेणिकभूपतिः । सर्वमन्त्रिषु मुख्यं तं तद्गुणै रञ्जितस्तदा (तो व्यधात्)॥४३॥
अनाथिसाधुपार्श्वे तु श्रुत्वा धर्म्मं जिनोदितम् । श्रीवीरस्याऽर्हतः सेवां चकार श्रेणिकः सदा ॥४४॥
पूजयित्वा प्रभुं प्रात-रष्टोत्तरशतं यवान् । रैमयान् ढोकयित्वैव श्रेणिकोऽचि निरन्तरम् ॥४५॥
प्रभोः पूजां वितन्वानः श्रेणिकोऽखण्डभक्तितः । तीर्थकृत्पदवीयोग्य-मर्जयत् कर्म सुन्दरम् ॥४६॥
पूर्वं मृगवधाद् बद्धकर्मा श्रेणिकभूधवः । प्रथमे नरके यातो मध्यमायुषि शीघ्रतः ॥४७॥
इतश्चोत्सर्पिणीकाले द्वितीयारावसानके । भविष्यन्ति क्रमात् सप्त वर्याः कुलकरोत्तमाः ॥४८॥ तथाहि-
'पढमित्थ विमलवाहण बीओ सुदामो तइअ संगमओ, चउत्थ सुपासो दत्तो पंचमओ छट्ठो सुमुहो सत्तमो समुची'
आदिमः कुलकृज्जाति-स्मृत्या पुर्यादिकं समम् । स्थापयिष्यति सञ्जाते प्रकटे ज्वलने भुवि ॥४९॥
उत्सर्पिण्यरकद्वैता-तिक्रमे भरतान्तरे । पुण्ड्रवर्द्धनदेशे तु शतद्वाराह्वये पुरे ॥५०॥
समुचिच्क्ष्मापतेर्भद्रा-भिधा सहचरी वरा । भविष्यति लसद्रूपा पराभूतामरप्रिया ॥५१॥युग्मम्॥
सुखसुप्ताऽन्यदा भद्रा स्वप्नान्येवं चतुर्दश । गजादीनि विशन्त्यास्ये निजे द्रक्ष्यत्यहोऽत्यये ॥५२॥
रत्नप्रभाभिधे श्वभ्रे प्रस्तटे रोरकाह्वये । चतुरष्टसहस्राब्दीं पालयित्वाऽऽयुषः स्थितिम् ॥५३॥
श्रेणिकस्यासुमान् भद्रा-देव्याः कुक्षौ शुभे क्षणे । अवातरिष्यति क्षोणीं क्षणं सुशं (स्थां) करिष्यति ॥५४॥
उच्चेषु रविचन्द्रादि-ग्रहेषु सकलेष्वपि । शुक्लचैत्रत्रयोदश्यां भद्रा सोष्यते सुतम् ॥५५॥
करिष्यतो हरि-क्ष्मापौ तस्य जन्मोत्सवं क्रमात् । पद्मनाभेति भूपालोऽभिधां दास्यति सूत्सवम् ॥५६॥
सप्तहस्ततनुः स्वर्ण-वर्णः पञ्चाननध्वजः । पद्मनाभमहीभुग्भूः सेविष्यते नृपादिभिः ॥५७॥
वर्द्धमानः क्रमाद्वैरि-मर्दनक्षितिभुक्सुताम् । पद्मनाभकुमारः सः समहं परिणेष्यति ॥५८॥
त्रिंशद्वर्षेषु जातेषु मार्गकृष्णदशम्यथ । पद्मनाभस्य दीक्षाया दात्री क्रमाद्भविष्यति ॥५९॥
वैशाखस्य सिते पक्षे दशमी ज्ञानदायिनी । भविष्यति क्रमात् पद्म-नाभस्य प्रथमार्हतः ॥६०॥
कृते सालत्रये देवैः रूप्य-स्वर्ण-मणीमये । उपविष्टो जिनो धर्म्मं कथयिष्यति मुक्तिदम् ॥६१॥
देशनान्ते जिनो गच्छ-नायकान् स्थापयिष्यति । ग्राहयिष्यति सुश्राद्ध-धर्मं श्राद्धान् बहूनथ ॥६२॥
प्रतिबोध्य चिरं भव्य-जीवान् धर्मे शिवप्रदे । कार्त्तिकामावसी-रात्रौ गमिष्यति स निर्वृतिम् ॥६३॥
सूरदेवः सुपार्श्वश्च स्वयंप्रभो जिनेश्वरः । सर्वानुभूतिः सर्वज्ञो देव-श्रुतोदयौ जिनौ ॥६४॥
पेढालः पोट्टिलश्चापि श्रीशतकीर्तिसुव्रतौ । अममो निष्कषायोऽथ निष्पुलाकश्च निर्ममः ॥६५॥
चित्रगुप्तसमाधी च संवर-श्रीयशोधरौ । विजयो मल्ल-देवौ चाऽनन्तवीर्यश्च भद्रकृत् ॥६६॥
एते जिनाः क्रमाच्छत्रु-ञ्जये तीर्थे शिवप्रदे । समेत्य भव्यजीवेभ्यो दास्यन्ति धर्मदेशनाम् ॥६७॥
तदा कोटिमिता भव्य-जीवाः क्षिप्त्वा तमोऽखिलम् । कल्याणकमलां सद्यो लभिष्यन्ति न संशयः ॥६८॥

एव भाविनस्तीर्थङ्करा असंख्याता मुक्तिं गमिष्यन्ति शत्रुञ्जये तीर्थे --

**सिरिनेमिनाहवज्जा जत्थ जिणा रिसहपमुहवीरंता।**
**तेवीस समोसरिआ सो विमलगिरी जयउ तित्थं ॥१०॥**

व्याख्या--'श्रीनेमिनाथो' द्वाविंशस्तीर्थकृत् तेन वर्जिता-रहिताः श्रीऋषभाजिताद्याः श्रीवर्द्धमान-पर्यन्तास्त्रयोविंशतिर्जिनाः समवासार्षुः यत्र गिरौ स विमलगिरिः-शत्रुञ्जयनामा पर्वतो जगद्वन्द्यो जयतात् इति सम्बन्धः। तत्रादौ श्रीऋषभजिनस्य समवसृतिस्वरूपं प्रोच्यते—

विहरन् वृषभः स्वामी साधूनां शिवहेतवे। सुरार्च्यः समवासार्षीत् तीर्थे शत्रुञ्जयेऽन्यदा ॥१॥
तत्रेति सुरमर्त्यानां पुरतो वृषभः प्रभुः। धर्म्मोपदेशनां चक्रे पापहन्त्र्या गिरा किल ॥२॥
विरोधिता बन्धु जनेषु नित्यं सरोगता मूर्खजनेषु सङ्गः। क्रूरः स्वभावः कटुवाक् सरोषो नरस्य चिह्नं नरकागतस्य
स्वर्गच्युतानामिह जीवलोके चत्वारि नित्यं हृदये वसन्ति। दानप्रसंगो विमला च वाणी देवार्चनं सद्गुरुसेवनं च
दुर्वारा वारणेन्द्राः जितपवनजवा वाजिनः स्यन्दनौघाः, लीलावत्यो युवत्यः प्रचलितचमरैर्भूषिता राज्यलक्ष्मीः।
उच्चैः श्वेतातपत्रं चतुरुदधितटी संकटा मेदिनीयं, प्राप्यन्ते यत्प्रभावात् त्रिभुवनविजयी सोऽस्तु नो धर्मलाभः॥
तत्रस्थस्य प्रभोर्लक्ष-मिता वाचंयमा वराः। आसाद्य केवलज्ञानं मुक्तिपुर्यां समागमन् ॥६॥
ततः श्रीवृषभः कृत्वा विहारं बोधयन् जनान्। भूयश्च समवासार्षीन्मुमुक्षुमुक्तिहेतवे ॥७॥
तदा तत्र प्रभोरर्द्ध-लक्षं तपस्विनो वराः। अलञ्चक्रुः क्रमात् प्राप्य ज्ञानं मुक्तिपुरीं पुनः ॥८॥
एवं वारानसङ्ख्याता-नेत्य तत्रादिमो जिनः। साधून् भव्यजनान् भूरीन् प्रापयन्निर्वृतेः पुरीम् ॥९॥
यतः 'नवनवई पुव्वाइं विहरंतो आगतो अ सित्तुंजे। उसभो देवेहिं समं समोसढो पढमतित्थम्मि'॥१०॥
६९८५४४०००००००००० एकोनसप्ततिः कोटाकोट्यः पञ्चाशीतिः कोटिलक्षाः चतुश्चत्वारिंशत् कोटि-सहस्रा एतावान् वारान् वृषभः शत्रुञ्जये समवासार्षीत्।
तत्र प्रभोर्गिरं श्रुत्वा ये लात्वा संयमं खलु। मुक्तिं जग्मुर्न हि तेषां संख्या ज्ञायेत कोविदैः ॥११॥

★ इति ऋषभजिनस्य शत्रुञ्जयागमनसम्बन्धः ★

॥ अथ अजितजिन-शत्रुञ्जयसमागमनसम्बन्धः ॥

अजिततीर्थकृत् भव्य-जनान् भूरीन् प्रबोधयन्। आगात् शत्रुञ्जये तीर्थे भव्याङ्गिमोक्षहेतवे ॥१॥
सालत्रये कृतेऽमर्त्यै-र्हेमरूप्यमणीमये। उपविश्याऽजितस्वामी धर्ममाख्यातवानिति ॥२॥
वरपूजया जिनानां धर्मश्रवणेन सुगुरुसेवनया। शासनभासनयोगैः सृजन्ति सफलं निजं जन्म ॥३॥
अवाप्य धर्मावसरं विवेकी कुर्याद्विलम्बं नहि विस्तराय। ततो जिनस्तक्षशिलाधिपेन रात्रि व्यतिक्रम्य पुनर्न नेमे
तथाहि—छद्मस्थावस्थितो नाभि-पुत्रस्तक्षशिलान्तिके। कायोत्सर्गे स्थितः सायं स्वकर्मक्षयहेतवे ॥५॥
वनपालाननाद् बाहु-बलिर्ज्ञात्वाऽऽगमं पितुः। दध्यौ प्रभोर्नतौ रात्रौ शोभा भवति नो मनाग् ॥६॥

तेनाहमुपसि न्यच्च-विभूत्या चरणौ प्रभोः । वन्दिष्ये कृतशोभायां नगर्यां भूरिभूपयुग् ।.७॥
सामग्रीं रुचिरां कृत्वा बाहुबलिः सदुत्सवम् । वन्दितुं वृषभं यावद-चालीद् बहुभूपयुग् ॥८॥
इतस्तावत् प्रगे स्वामी वायुवच्चलितोऽग्रतः । तत्राऽऽयातः सुतस्तात-मनीच्येत्यरुदत् स च ॥९॥
स्वामिन् ! किं न त्वयाऽदर्शि दर्शनं स्वं ममैकशः । अलच्यत्वं कथं जातो दृग्पथात् साम्प्रतं प्रभो ! ॥१०॥
इत्यादि विलपन् बाहु-बलिः सचिवपुङ्गवैः । कारितः कारयामास स्तूपं जिनाङ्घ्रिराजितम् ॥११॥युग्मम्॥
धर्मेच्छुर्यो जनश्चक्रे विलम्बं चणमेककम् । स एवं शोचति स्वस्मिन् बाहुबलिनरेन्द्रवत ॥१२॥
इत्यादि धर्ममाकर्ण्य बहवो भविनो जनाः । मुक्तिं तत्र गिरौ जग्मुः सर्वकर्मस्थितिक्षयात् ॥१३॥
एकदाऽजिततीर्थेशे कुर्वाणे धर्मदेशनाम् । साधु-लत्तत्रयं मुक्ति-मीयिवत् सिद्धपर्वते ॥१४॥

❀ इति अजितजिन-शत्रुञ्जयसमागमनसम्बन्धः ❀

॥ अथ सम्भवजिनस्य शत्रुञ्जयागमनसम्बन्ध ॥

एकदा सम्भवस्तीर्थं-करः प्रबोधयन् जनान् । बहुसंयतसंयुक्तः सिद्धाद्रौ समुपेयिवान् ॥१॥
कृते वप्रत्रये देवैः रूप्य-स्वर्ण-मणीमये । उपविश्य ददौ धर्मो-पदेशं सम्भवो जिनः ॥२॥
नन्दीश्वरेषु यत्पुण्यं द्विगुणं कुण्डले नगे । त्रिगुणं रुचके हस्ति-दन्तेषु च चतुर्गुणम् ॥३॥
एतद् द्विगुणितं जम्बू-चैत्ये यात्रां वितन्वताम् । षोढा तु धातकीखण्डे तच्छाखिजिनपूजनात् ॥४॥
पुष्करोदरबिम्बानां द्वात्रिंशद्गुणमम्मितम् । मेरुचूलार्हदर्चायां पुण्यं शतगुणं भवेत् ॥५॥
शत्रुञ्जये कोटिगुणं स्वभावात् स्पर्शतो मतम् । मनोवचनकायानां शुद्ध्याऽनन्तगुणं नृणाम् ॥६॥
वर्द्धमानपुरे पद्म-श्रेष्ठिनः श्रीमती प्रिया । तिस्रः पुत्र्योऽभवन् पद्मा-लक्ष्मी-चन्द्रावती क्रमात् ॥७॥
तिस्रोऽपि पाठिताः पित्रा धर्मकर्मकलाः समाः । सन्ध्याद्वये प्रतिक्रान्तिं जिनार्चां च वितन्वते ॥८॥
एकमेव वरं तिस्रो भगिन्यः कोविदोत्तमम् । वाञ्छन्त्यो जनकस्याग्रे जगदुश्चित्तचिन्तितम् ॥९॥
ततः पिता धनश्रेष्ठि-नन्दनं श्रीदमञ्जितम् । विज्ञमाकर्ण्य शास्त्राणा-मर्थं पप्रच्छ सादरम् ॥१०॥
लक्षणालङ्कृतिच्छन्दो-मुख्यशास्त्रार्थमद्भुतम् । श्रेष्ठी पप्रच्छ यं यं च तं तं सोऽचकथद् द्रुतम् ॥११॥
ततः श्रेष्ठी व्ययन् भूरि विभव लसदुत्सवम् । तिस्रः पुत्रीर्ददौ श्रीद-वराय धनसूनवे ॥१२॥
वर्षद्वये गतेऽकस्मादुत्पन्ने विषमामये । चिकित्सितोपि वैद्यैः स पञ्चत्वमगमत्क्रमात् ॥१३॥
यतः-मातापिता भैषजमिष्टदेवो विद्याप्रियानंदनबान्धवाश्च । गजाश्व भृत्या बलपञ्चरासे नेशा जनं रक्षितुमन्तकाले
अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैःसह । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥१५॥
ततस्तिस्रः सहोदर्यःमिथः प्रोचू रहः स्थिताः । अस्माभिर्न कृतं पुण्य-मखण्डं पूर्वजन्मनि ॥१६॥
तेनेदानीं समायातं वैधव्यं नः कुकर्मतः । अखण्डं चेद् विधीयेत पुण्यं वरं तदा भवेत् ॥१७॥
यतः-पत्यौ मृतेपि या योषिद् वैधव्यं पालयेत् क्वचित् । सा पुनः प्राप्य भर्त्तारं स्वर्गभोगान् समश्नुते ॥१८॥

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥१९॥
ध्यात्वेति ताः सहोदर्यो भावारीन् जेतुमन्वहम् । धर्मकर्मक्रियास्वेव-मस्थापयन् मनो निजम् ॥२०॥
इतः संसदि मोहस्य जगादेति स्मरानुगः । शश्वत् श्रेष्ठिसुतास्तिस्र-स्तथा धर्म्मं वितन्वते ॥२१॥
पश्चात् स्तोकैर्दिनैरेव भवन्तं भवतोऽनुगान् । जित्वा पञ्चसुताः स्वाज्ञां ग्राहयिष्यन्ति नून् पुनः ॥२२॥
तेनाऽधुना विजेतुं ता भवतोऽवसरोऽस्ति हि । उद्गच्छन्नेव नो शत्रुर्हतः सैव हनिष्यते ॥२३॥
ता जेतुं मोहभूपेन वीटके स्वकरे कृते । प्रमीला-विकथे मोहं नत्वेति प्रोचतुस्तदा ॥२४॥
आवयोर्वीटकं देहि प्रसद्य मोहभूपते ! । तवाज्ञां ग्राहयिष्यावो गत्वा तास्तत्र शीघ्रतः ॥२५॥
ता निद्रा-विकथे जेतुं चलन्त्यौ स्वामिपार्श्वतः । पञ्चनार्यन्तिके गत्वा प्रथमं चेति जल्पतः ॥२६॥
वीरश्रेष्ठिप्रिया वर्य-रसवत्यादिदानतः । भोजयामास भूयिष्ठाः श्राद्धीः किमजमीस्त्वकम् ॥२७॥
पञ्चाऽवक् चिन्तया किं मे तथा सम्प्रतिवार्तया । गुणवन्त्यश्च ताः श्राद्धयो भोजिता नागुणास्पदम् ॥२८॥
एवं निद्राविकथाभ्यां कुर्वतीभ्यां कथां पृथग् । विकथा कारिता पञ्चा निद्रापि ग्राहिता पुनः ॥२९॥
प्रमीला-विकथे एवं लक्ष्मीमपि क्रमात् तदा । ग्राहयामास तु स्वाज्ञां विकथादिविधानतः ॥३०॥
चन्द्रावती तु भक्तादि-कथाभिर्भूरिभिर्भृशम् । चालिता न मनाग् धर्मध्यानान्निर्जरशैलवत् ॥३१॥
पञ्चा-लक्ष्म्यौ तु भक्तादि-कथाकरणतत्परे । मृत्वा श्वभ्रे गते भूरि-दुःखभाजौ बभूवतुः ॥३२॥
चन्द्रावती वितन्वाना शुद्धं धर्म्मं जिनोदितम् । अस्मिंस्तीर्थे समायाता नन्तुं श्रीवृषभं जिनम् ॥३३॥
कुर्वाणा सततं ध्यानं तपश्च पुरतः प्रभोः । सम्प्राप्य केवलज्ञानं ययौ मुक्तिपुरीं क्रमात् ॥३४॥
एवं श्रीसम्भवप्रोक्तं वचः श्रुत्वा जना मुदा । बहवः क्षीणकर्माणः कल्याणनगरीं ययुः ॥३५॥

॥ इति सम्भवजिनस्य शत्रुञ्जयागमनसम्बन्ध ॥

॥ अथ अभिनन्दनस्य शत्रुञ्जयागमनसम्बन्ध. ॥

विहरन्नेकदा पृथ्व्या-मभिनन्दनतीर्थकृत् । सिद्धाद्रौ समवामार्षीत् भूरिसंयतसेवितः ॥१॥
धर्मं श्रोतुं समेतेषु भव्येषु बहुष्वन्यदा । अभिनन्दनतीर्थेशो जगौ भव्याङ्गिशर्मणे ॥२॥
एकेऽह्निभ्यां जना लक्ष्मीं हस्ताभ्यां मौलिना धिया । अर्जयन्ति क्रमात्तत्र पादाभ्यामर्जने कथा ॥३॥
वीणापुरे वणिग् भीमो दुःस्थो महेभ्यभूभुजाम् । लेखं लात्वा व्रजत्येव दूरदेशे श्रियः कृते ॥४॥
प्राप्य लेखाद् धनं स्वस्य निर्वाहं स वणिग् व्यधात् । लेखवाहक इत्यासीन्नाम तस्य जने क्रमात् ॥५॥
सन्ध्याद्वये प्रतिक्रान्ति गच्छन् मार्गे ततान सः । मध्याह्ने जिननाथस्य पूजां वितनुते स्म च ॥६॥
गुरुयोगो भवेद् यत्र तत्र श्री गुरुपादयोः । वितीर्य वन्दनं नीरमपि पिबति ( व्ययति ) सर्वदा ॥७॥
चने तथाविधे दुःखो-पार्जितं धर्मकर्मणि । एकं लौहडिकं सोऽपि व्ययति स्म सुभावतः ॥८॥
एवं पञ्चयां धनं भीमो ऽर्जयित्वा धर्मकर्मणि । व्ययित्वा च व्रतं कृत्वा स्वर्गलोकेऽगमद् वणिग् ॥९॥

ततश्च्युत्वा नरभवं प्राप्य भीमः सुरः स च । कल्याणनगरे यातः क्षिप्त्वा कर्माष्टकं क्रमात् ॥१०॥
इत्यादि धर्ममाकर्ण्य बहवो भव्यमानवाः । श्रेयःपुरीमलञ्चक्रुः सिद्धतीर्थे शिवप्रदे ॥११॥
श्रीपुरे मण्डनश्रेष्ठी हस्ताभ्यां वस्तु तोलयन् । अर्जयामास यद् द्रव्यं तदर्द्धं व्ययति व्रपे ॥१२॥
हस्ताभ्यां जिननाथस्य पूजां कुर्वन् सुभावतः । शत्रुञ्जये ययौ नन्तुं नाभिभूपतिनन्दनम् ॥१३॥
पूजां श्री ऋषभेशस्य कुर्वन् प्राप्याऽव्ययां विदम् । मुक्तिमत्र गिरेः शृङ्गे ययौ स च तमःक्षयात् ॥१४॥
चन्द्राह्वनगरे चन्द्र-वणिग् वस्तु स्वमौलिना । आनीयानीय विक्रीय निर्वाहं स वणिग् व्यधात् ॥१५॥
मस्तकेन प्रणम्याऽऽदिजिनं शत्रुञ्जयाचले । क्षीणकर्मा ययौ चन्द्रः कल्याणनगरीं क्रमात् ॥१६॥
वीराह्वनगरे वीर-श्रेष्ठिराड् बुद्धिविक्रमात् । अर्जयित्वा धनं शत्रु-ञ्जये यात्रां व्यधान्मुदा ॥१७॥
बुद्धया श्रीजिननाथार्चा भङ्गिभिर्बहुभिः सदा । कुर्वन् शत्रुञ्जये प्राप पञ्चमं ज्ञानमन्यदा ॥१८॥
क्रमाद् भूरिजनान् जैन-धर्मे प्रबोधयन् सदा । शत्रुञ्जये ययौ मोक्षं भूरितपस्विसंयुतः ॥१९॥
इत्यादि बहवो भव्या अभिनन्दनसार्वतः । धर्मं श्रुत्वा ययुर्मुक्तिं सिद्धपर्वतमस्तके ॥२०॥
तारापुरे हरो भार-वाहो भूरिभरं वहन् । एकाद्विविंशतिप्रान्तान् मणान् स्कन्धेऽवहत् परम् ॥२१॥
दिनं प्रति द्रमान् पञ्च-सप्ताष्टौ वाऽर्जयन् सदा । द्रममेकं व्रपे पञ्च गृहे कोशे द्रमद्वयम् ॥२२॥
हरो व्ययन् सुखे दुःखे धर्मकृत्यं न मुञ्चते । प्रत्याख्यानं यथाशक्ति तनुते गुरुसाक्षिकम् ॥२३॥
मस्तकेनार्जिता लक्ष्मी-र्धर्मकृत्ये व्ययन् हरः । अभिनन्दनसर्वज्ञं सेवते स्म सुभावतः ॥२४॥
अभिनन्दनजिनस्यान्ते दीक्षां लात्वा क्रमात् हरः । सर्वकर्मक्षयान्मुक्तिं ययौ सिद्धमहीधरे ॥२५॥
जम्बूपुरे मधुश्रेष्ठी विक्रीणन् सुमतीर्नराः । वर्यवेषधरोऽनर्घ्ये हट्टे तस्थौ निरन्तरम् ॥२६॥
एकदा तत्र वास्तव्य-श्चम्पकश्रेष्ठिनन्दनः । तत्रैत्याऽवग् तवाट्टेऽत्र क्रयाणं किं न दृश्यते ? ॥२७॥
श्रेष्ठ्यवग् धीः क्रयाणं मे विद्यतेऽट्टे मनोहरम् । तद् यो गृह्णाति नित्यं स सुखवान् जायते खलु ॥२८॥
द्रमान् पञ्चशतीं तस्मै स दत्त्वैकां धियं ललौ । न स्थेयं भवताऽऽस्थेयं द्वयोः कुर्वाणयोः कलिम् ॥२९॥
तदा कश्चिन्नरोऽभ्येत्य श्रेष्ठिनोऽग्रे जगाविति । भवत्पुत्रो ललौ वर्यं पण्यं लाभो भविष्यति ॥३०॥
ततः श्रेष्ठी मधुपान्ते गत्वाऽवक् त्वं वरोऽसि न । यतो धीदानतः पुत्रोऽदण्डयन्मम नन्दनम् ॥३१॥
श्रेष्ठ्यवग् यदि ते नैव रोचते मे क्रयाणकम् । तदा पश्चाद् धियं देहि धनं त्वं स्वं गृहाण भो ! ॥३२॥
अनेन श्रेष्ठिपुत्रेण द्वयोः कलिं वितन्वतोः । स्थेयं न चेद्यदा देयं मह्यं दशशतीं द्रमान् ॥३३॥
चम्पकः प्रतिपद्येति दत्त्वा पश्चाद् धियं च ताम् । लात्वा स्वां स्वं ययौ स्वीय-गृहे जनकसंयुतः ॥३४॥
मन्त्रिणः सेल्लहस्तस्य सुनोर्वितन्वतोः कलिम् । पार्श्वेऽस्थात् श्रेष्ठिसूर्याव-त्ताभ्यां साक्षीकृतः स च ॥३५॥
कुर्वाणौ कलहं मन्त्रि-सेल्लहस्तसुतौ क्रमात् । गत्वा भूपान्तिके दोषं मिथो जजल्पतुस्तदा ॥३६॥
आकारितस्तदा साक्षी द्वाभ्यां श्रेष्ठ्यङ्गजस्तदा । मन्त्रिसूनोर्व्यधात् पक्षं सेल्लहस्तोऽरुपत्तदा ॥३७॥
सेल्लहस्तोऽथ भूपान्तात् छलेन चम्पकं क्रमात् । दण्डयामास भूयिष्ठ-पञ्चाया अपहारतः ॥३८॥
ततो भूरिधनं दत्त्वा धीदाय चम्पको धियम् । लात्वा तस्थौ त्रिके मार्गे धीदप्रोक्ते प्रमोदतः ॥३९॥
चम्पकस्त्रिकमार्गे तु तिष्ठन् पृच्छति मार्गगान् । भवद्भिर्वीक्षितं दृष्टं किं किं सम्प्रति जल्पताम् ॥४०॥

एकः पान्थो जगौ लब्धो मयैकः प्रस्तरोऽधुना । रोचते यदि ते लाहि दत्त्वा द्रमाष्टकं मम ॥४१॥
पथिकाय द्रमानष्टौ वितीर्य चम्पकस्तदा । ग्रहीत्वा प्रस्तरं तं च समाययौ स्वमन्दिरे ॥४२॥
तस्मात् प्रस्तरतः कोटि-द्रमानासाद्य विक्रयात् । महेभ्यो राजमान्योऽभूत् चम्पकश्रेष्ठिनन्दनः ॥४३॥
मृत्युं गतेऽथ जनके चम्पको गृहनायकः । अभिनन्दनसर्वज्ञ-पार्श्वे जैनं वृषं ललौ ॥४४॥
क्रमात् स्वसूनवे गेह-भारं वितीर्य रङ्गतः । अभिनन्दनसार्वान्ते संयमं प्राप्तवान् ध्रुवम् ॥४५॥
गुरूपान्ते वृषं श्रुत्वा मधुः श्रीजिनपूजनम् । कुर्वन्नुपार्जयामास पुण्यं मुक्तिगमोचितम् ॥४६॥
धर्मिणां धर्मधिषणां कर्मिणां कर्मशेमुषीम् । मधुश्रेष्ठी ददन् नित्यं श्लाघ्योऽजनि नृपादिषु ॥४७॥
क्रमान्मधुर्जिनोपान्ते लात्वा दीक्षां दरांद्गवः (दराद्गतः) । साधुना चन्दनेनाऽमा विहारं तनुते मुदा ॥४८॥
गत्वा शत्रुञ्जये तीर्थे कृत्वा तीव्रं तपः पुनः । चन्दनो मधुना सार्द्धं केवलज्ञानमाप्तवान् ॥४९॥

★ इति अभिनन्दनस्य शत्रुञ्जयागमनसम्बन्धः ★

॥ अथ सुमतिजिनस्य शत्रुञ्जयसमवसृतिस्वरूपम् ॥

सुमतिस्तीर्थकृद् भव्य-जीवान् धर्मे विबोधयन् । कोटाकोटिसुरैः सेव्यः सिद्धाद्रौ समवासरत् ॥१॥
तत्र स्थिते प्रभौ वाचं-यमाः लक्षद्वयप्रमाः । क्षीणकर्माष्टका मुक्तिं नगरीं समुपागमन् ॥२॥
व्ययन् धर्मे धनं जीवो न्यायमार्गार्जितं खलु । लभते शाश्वतं शर्म कुन्तलश्रेष्ठिवत् क्रमात् ॥३॥
पद्मानन्दपुरे पद्म-नामो वणिग्भूद्वरः । तस्य पत्नी कलादेवी कलासु कुशला किल ॥४॥
व्यवसायं वितन्वानः श्रेष्ठी लक्षं द्रमान् क्रमात् । अर्जयामास नो धर्मे व्ययति स्म च कर्हिचित् ॥५॥
तस्याभूत्नन्दनश्चन्द्र-नामा मञ्जुलविग्रहः । ताते मृतेऽभवत् स्वामी विभवस्यासमस्य स ॥६॥
चन्द्रस्याभूत् क्रमाद् द्रव्यं लक्षद्वयमितं स्फुटम् । मृते तस्मिन् सुतो लक्ष-त्रयस्वामी मनोऽजनि ॥७॥
मने मृते च तत्पुत्रः सिंहाह्वोऽजनि सुन्दरः । तस्याभवच्चतुर्लक्ष-प्रमितो विभवः क्रमात् ॥८॥
सिंहे मृत्युं गते हस्ति-नामाऽजनिष्ट तत्सुतः । पश्चलक्षद्रमस्वामी सोऽप्यभूदर्जयन् धनम् ॥९॥
तस्याऽजनि प्रिया गङ्गा-देवी गङ्गेव निर्मला । गङ्गा वक्ति प्रियेदानीं धर्मे व्यय धनं सदा ॥१०॥
धर्मकृत्येषु या लक्ष्मी स्थाप्यते साऽतिसुन्दरा । अन्याऽवकेशभूमीव लक्ष्मीवान्नैव शस्यते ॥११॥
यतः-'अधः क्षिपन्ति कृपणा वित्तं तत्र यियासवः । सन्तस्तु गुरुचैत्यादौ तदुच्चैः फलकाङ्क्षिणः' ॥१२॥
एकदा श्रीगुरूपान्ते हस्ती नत्वा गुरुक्रमौ । धर्मं श्रोतुमुपाविष्टो यावत्तावद् गुरुर्जगौ ॥१३॥
अभयं सुपत्तदाणं अणुकंपा-उचिअ-कित्तिदाणं च । दोहिवि मुक्खो भणिओ तिन्निवि भोगाइअं दिंति ॥१४॥
न कयं दीणुद्धरणं न कयं साहम्मिआण वच्छल्लं । हिअयम्मि वीयराओ न धारिओ हारिओ जम्मो ॥१५॥
व्याजे स्याद् द्विगुणं वित्तं व्यवसाये चतुर्गुणम् । क्षेत्रे शतगुणं प्रोक्तं पात्रेऽनन्तगुणं भवेत् ॥१६॥
श्रुत्वा धर्मं जगौ हस्तो मया जिननतिं विना । नो भोक्तव्यं पयः पेयं शयितव्यं कदाचन ॥१७॥
सोऽप्रणम्यैकदा सार्वं भोक्तुं यावदुपाविशत् । तावत् पत्नी जगौ स्वामिन् ! न नतोऽद्य त्वया जिनः ॥१८॥

हस्तेऽथाभ्युच्छिते(ष्टे) पत्नी प्राह हस्तं पवित्रय । हस्तोऽवग् धावने पाणे-र्घृतं याति च तत्स्थितम् ॥१६॥
स्थगयित्वा शयं गत्वा जिनौकसि जिनं स च । नत्वा यावच्चचालाऽऽशु पश्चात्तावत् सुरो जगौ ॥२०॥
यक्षोऽहं गोमुखस्तुष्ट-स्तुभ्यं जिनेन्द्रभक्तितः । वरं याचस्व चित्तेष्टं दास्येऽदस्तव साम्प्रतम् ॥२१॥
श्रेष्ठ्यवग् गेहिनीं पृष्ट्वा मार्गयिष्यामि वाञ्छितम् । ततो हस्तस्तथावस्थो गत्वा भार्यान्तिके जगौ ॥२२॥
तुष्टो मे गोमुखो यक्षः किं याचेऽहं प्रिये ! वद ? । प्राणप्रियाऽऽह याचस्व सद्बुद्धिं यक्षसन्निधौ ॥२३॥
याचित्वा सुमतिं यक्षात् श्रेष्ठ्यैत्य सदने जगौ । आनयाम्भः शयं प्रक्षा-लयिष्यामि प्रियोत्तमे ! ॥२४॥
प्रियाऽभाणीद् घृतं हस्त-लग्नं तत्र गमिष्यति । हस्तोऽवग् न शयास्यांहीन्(न) प्रक्षाल्याद्म्यहं ननु ॥२५॥
पत्नी दध्याविदं कान्तो जातोऽस्ति मतिमान् मम । प्रतिक्षाल्य ततो हस्तं हस्तः प्रास्फेटयद् घृतम् ॥२६॥
इतस्तत्र पुरे राजा स्वकारितसरोवरे । संस्थाप्य स्तम्भमाहेति पौराणां पुरतस्तदा ॥२७॥
यो ना पालिस्थितः स्तम्भं गुणेन वेष्टयिष्यति । तोलयिष्यति पट्टेभं निजबुद्धिप्रपञ्चतः ॥२८॥
मन्त्रिमुख्यपदं तस्मै दास्येऽहं मानदानतः । हस्तः श्रुत्वेति भूपेन समं सरोवरे ययौ ॥२९॥
लम्बां रज्जुं सरःपालौ मुक्त्वाऽऽदौ परितस्तदा । शये लात्वैकरज्जुं तं द्वितीयं कर्षयन् पुनः ॥३०॥
सरःकण्ठस्थितो हस्तः स्तम्भं बबन्ध रज्जुना । तदा सन्मानयामास राजा त हस्तनैगमम् ॥३१॥
यानमध्यस्थिते पट्ट-गजे तेन कृते तदा । यावन्मात्रं जले मग्नं यानं रेखा कृता तदा ॥३२॥
उत्तीर्य कुञ्जरं यानं भृत्वाऽश्ममिश्र तान् पुनः । तोलयित्वा च जज्ञौ स कुम्भिभारं प्रमाणतः ॥३३॥युग्मम्॥
ततो ग्रामशतं तस्मै दत्त्वा मन्त्रिपदं पुनः । भूभुजा सत्कृतः सर्व-मन्त्रिमुख्यः सदुत्सवम् ॥३४॥
राजकार्यं प्रजाकार्यं कुर्वन् हस्तः सः मन्त्रिराट् । धर्मकृत्यानि सर्वाणि चकार मुक्तिहेतवे ॥३५॥
हस्तमन्त्री त्रिसन्ध्यां तु कुर्वन् पूजां जिनेशितुः । प्रतिक्रान्तिं करोति स्मो-भयकालं निरन्तरम् ॥३६॥
सिद्धाचलादितीर्थेषु प्राप्य सङ्घपतेः पदम् । चकार हस्तमन्त्रीशो यात्रां भूरिधनव्ययात् ॥३७॥
अस्मिन्नेव गिरौ सिद्ध-ध्यानं कुर्वन् स मन्त्रिराट् । सम्प्राप्य केवलज्ञानं ययौ मुक्तिपुरीं क्रमात् ॥३८॥
धर्मोपदेशमित्यादि दत्त्वा तत्र महीधरे । सुमतिस्तीर्थकृच्चक्रे विहारमन्यनीवृति ॥३९॥
एवं सुमतितीर्थेशो वारान् सहस्रशः क्रमात् । सिद्धाद्रौ समवासार्षीद् भव्याङ्गिबोधहेतवे ॥४०॥

इति सुमतिजिनस्य शत्रुञ्जयसमवसृतिस्वरूपम्

॥ अथ पद्मप्रभस्य शत्रुञ्जयसमवसृतिस्वरूपम् ॥

कौशाम्ब्यां पुरि भूपस्य धरस्य शासतो महीम् । सुसीमा गेहिनी शुद्ध-शीलमाणिक्यशालिनी ॥१॥
इतो ग्रैवेयकाद् देव-श्च्युत्वा धरमहीपतेः । सहचर्याः सुसीमाया उदरेऽवतरन्निशि ॥२॥
तदा राज्ञी महास्वप्नान् चतुर्दशमितान् वरान् । मुखे प्रविशतोऽपश्यन् निशीथसमये मुदा ॥३॥
यतः-"गयवसह-सीह-अभिसेय-दामससिदिणयरं झय कुंभं । पउमसरसागरविमाण-भवणरयणुच्चयसिहिं च"
जन्म जन्मोत्सवं राज्य-प्राप्तिदीक्षाग्रहौ पुनः । ज्ञानप्राप्तिस्वरूपं च प्रोच्यान्येतानि कोविदैः ॥५॥

पद्मप्रभप्रभुः पृथ्वीं क्रमाभ्यां पावयन् क्रमात् । भूरिसाधुयुतः शत्रु-ञ्जयेऽथ समवासरत् ॥६॥
तत्र द्वादश पर्षत्सु-पविष्टासु यथाक्रमम् । पद्मप्रभोऽतिदिशति देशनां भविनां पुरः ॥७॥
सुपात्रेभ्यो ददद्दानं भव्यजीवः सदादरात् । धर्म्मं श्राद्ध इवाप्नोति कल्याणकमलां किल ॥८॥
तथाहि-अयोध्यायामभूद्धर्म-श्रेष्ठी पत्नी मनोरमा । पुत्रः पद्मरथो धर्म्म-कर्मैककरणादरः ॥९॥
श्रेष्ठी प्रोवाच पुत्राग्रे श्रीरिक्तो भाति नो नरः । तेनान्यविषये गत्वाऽऽनेष्यामि विभवं बहुम् ॥१०॥
यतः-"जाई रूवं विज्जा तिन्नि वि निवडंतु कंदरे विवरे । अत्थुच्चिअ परिवड्ढउ जेण गुणा पायडा हुंति ॥११॥
रूप्यकाञ्चनमञ्जिष्ठा-मुख्यभूरिक्रयाणकैः । भृत्वाऽनोऽह्नि शुभे धर्मोऽचालीदन्यपुरं प्रति ॥१२॥
मार्गे गच्छन् क्रमाद्धर्म आयातांस्तस्करान् बहून् । निरीक्ष्य सम्मुखं गत्वा तेषां नतिं व्यधुर्धु रि ॥१३॥
हसन्तस्तस्कराः प्रोचु-र्भो वणिग् ! मायिकोत्तम ! । यतः आदौ समेत्याऽस्मानमश्चक्रे मलिम्लुचान् ॥१४॥
यतः—"मायासीलह माणुसह किमु पतीज ण जाई । नीलकंठ महुरं लवइ सविषभुयंगम खाइ" ॥१५॥
श्रेष्ठ्याह यस्य यद्वस्तु ग्रहिष्यति बलादिह । स परत्र गतो लक्ष-कोटिगुणं च दास्यति ॥१६॥
यतः-वहमारणअब्भक्खाण-दाणपरधणविलोवणाईणं । सव्वजहन्नो उदओ दसगुणिओ इक्कसि कयाणं ॥१७॥
तिव्वयरे उ पओसे सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा ॥१८॥
हसन्तो जगदुः स्तेना अस्मभ्यं वस्तु देहि भो ! । इहैव दास्यते वस्तु तुभ्यमस्माभिरञ्जसा ॥१९॥
श्रेष्ठ्यवक् कोऽत्र साक्ष्यस्ति यत् साक्षी पूरयिष्यति । चौराः प्रोचुरयं साक्षी मार्जारोऽरण्यवासकः ॥२०॥
ततो वस्त्वखिलं त्यक्त्वा गणयित्वा स नैगमः । तस्करेभ्यो वितीर्याथ नमश्चक्रे स धीरवाग् ॥२१॥
हसन्तस्तस्करा वस्तु गृहीत्वा श्रीपुरे ययुः । वणिक् छन्नं चलस्तत्र नगरे समुपेयिवान् ॥२२॥
मिलित्वा भूपतेर्धर्मः प्राहेति त्वं प्रजापतिः । अशरणस्य शरणं शिष्टमङ्ग्रहकारकः ॥२३॥
दुष्टस्य दमको दीन-दुःस्थानाथादिपालकः । दाता भोक्ता विवेकी त्वं चिरं नन्द चिरं जय ॥२४॥
राजाऽभाणीद् वणिक् ! किं ते कार्यं सम्प्रति विद्यते । धर्म्म आचष्ट मे वस्तु गृहीतं तस्करैः पथि ॥२५॥
ततो भूपतिराकार्य मन्त्रीशान् प्रत्यवग् दृढम् । अस्य वस्तु गृहीतं यै-स्तान् विलोक्याऽर्प्यतां च तत् ॥२६॥
ततस्ते मन्त्रिणोऽभ्येत्य प्रोचुः क्व सन्ति तस्कराः ? । धर्मश्चौरगृहं तेभ्यो दर्शयामास तत्क्षणात् ॥२७॥
ततस्तत्र स्थिताश्चौराः प्रोक्ता मन्त्रीश्वरैरिति । युष्माभिरस्य यद्वस्तु गृहीतं तत् समर्प्यताम् ॥२८॥
स्तेनास्ते जगदुः स्तैन्यं वयं कुर्मः कदापि न । यद्यस्माभिर्गृहीतं चेद् वस्तु साक्ष्यस्ति कोऽत्र च ॥२९॥
प्रोचुर्मन्त्रीश्वराः धर्मं साक्षिणं त्वमिहानय । ततो धर्म्मोऽऽनयत्तत्र मार्जारं कृष्णदेहभम् ॥३०॥
तदा ते तस्कराः प्रोचुः सोऽभूद् रक्ततनुच्छविः । तेनायं वक्ति कूटं तु ग्रहीतुं मे धनं ध्रुवम् ॥३१॥
ततो मन्त्रीश्वराः प्रोचुर्भो ! स्तेना यूयकं ध्रुवम् । धनं जगृहिथाऽस्यवा-र्पयतास्मै ततः किल ॥३२॥
ततस्तान् कुट्टयित्वाऽलं मन्त्रीशास्तस्य तद् धनम् । निखिलं दापयामासु-श्चौरेभ्यः प्रसभं तदा ॥३३॥
ततस्ते तस्करा लक्ष्मी-हरणान्मेदिनीभुजा । स्वदेशं त्याजिता धर्मः श्रेष्ठी सन्मानितः पुनः ॥३४॥
धर्मो द्विगुणमूल्येन तद्वस्तु निखिलं तदा । विक्रीय टङ्कान् लक्ष मर्जयामास कर्मतः ॥३५॥
क्षेत्रेषु सप्तसु ततो व्ययन् स्वं विभवं तदा । धर्मश्चकार सद्धर्म्मं प्रतिपन्नं पुरापि यत् ॥३६॥

यतः-'वरमग्गिम्मि पवेसो वरं विसुद्धेण कम्मुणा मरणं। मा गहिअव्वयभंगो मा जीअं खलियसीलस्स' ।३७।
अर्चयित्वाऽन्यदा देवं ध्यानं धर्मस्य कुर्वतः । उत्पन्नं केवलज्ञानं सर्वविश्वप्रकाशकम् ॥३८॥
देवतादत्तलिङ्गः स निविष्टः स्वर्णविष्टरे । भव्येभ्यः प्रददौ धर्मो-पदेशं शिवशर्मदम् ॥३९॥
स धर्मः केवली भव्यान् बोधयन् भूरिशो भुवि । भूरिसाधुयुतः शत्रुञ्जये तीर्थे समागमत् ॥४०॥
सहस्रसाधुसंयुक्तः स धर्मः केवली तदा । शत्रुञ्जयेऽत्र कल्याण-पुरीमेयुः क्रमाच्च ते ॥४१॥
इत्यादिदेशनां पद्म-प्रभस्याकर्ण्य शर्मदाम् । अनेके भविनः स्वर्गे मुक्तिपुर्यां ययुस्तदा ॥४२॥

❀ इति पद्मप्रभस्य शत्रुञ्जयसमवसृतिस्वरूपम् ❀

॥ अथ सुपार्श्व जिन-कथा ॥

वाणारस्यां प्रतिष्ठस्य भूपस्य पृथिवी प्रिया । प्रासूत तनयं वर्य-रूपलक्षणलक्षितम् ॥१॥
शक्रपितृकृते जन्मो-त्सवे प्रतिष्ठभूपतिः । सुपार्श्व इति नामाऽदात् सूनोः सज्जनसाक्षिकम् ॥२॥
राज्यं प्राप्य क्रमात्त्यक्त्वा दीक्षां लात्वा तमःक्षयात् । प्राप्तज्ञानः प्रभुर्भव्य-बोधाय व्यहरद् भुवि ॥३॥

अत्र सुपार्श्वचरित्रं ज्ञान-प्राप्तिं यावद् वाच्यम् ।

सततं विहरन् पृथ्व्या-मन्येद्युः सिद्धपर्वते । बोधाय भव्यजीवानां सुपार्श्वः समवासरत् ॥४॥
तत्र सुपार्श्वतीर्थेशो मेघगम्भीरघोषया । वाण्या धर्मोपदेशं प्रददौ मुक्तिशर्मदम् ॥५॥
चरिअं च कप्पिअं च आहरणं दुविहमेव नायव्वं । भव्वजीवबोहत्थं इंधणमिव ओअणट्ठाए ॥६॥
हस्ती बद्धो यथा दुःखी मुक्तः स्यात् सुखवान् यथा । तथैव कर्मणा जीवो जायते जगति ध्रुवम् ॥७॥
भीमघोषाभिधारण्ये सप्तशत्या करेणुभिः । युक्तो मतङ्गजो मत्तः सल्लकीर्भक्षयन्नभूत् ॥८॥
तस्योपान्तेऽन्यदाऽभ्येत्योन्दरः प्राह गजाधिपम् । यदि ते रोचते सेवां तदा करोम्यहं सदा ॥९॥
अहं ते रक्षणं कुर्वे दुष्टारातिसमीपतः । मया तु रक्षिताः सिंहा-द्यः सत्त्वा अनेकशः ॥१०॥
हसन्निभो जगौ त्वं चेन्मां रक्षसि कुकष्टतः । तदाऽस्माकं समं कार्यं सिद्धमुन्दर ! वेगतः ॥११॥
उन्दरोऽवक् कदाचित् स्यात् रक्षको महतां लघुः । रक्षितुं नहि शक्येत महतापि लघोः क्वचित् ॥१२॥
हसन् हस्ती जगौ विघ्ने पतितं मामवेर्यदा । तदाऽहं त्वां वरं मन्ये भृत्यं विश्वोपकारकम् ॥१३॥
भक्षयन् सल्लकीर्भ्राम्यन् स्वेच्छया सर्वतो वने । पाशे व्याधकृते हस्ती न्यपतत् कर्मयोगतः ॥१४॥
विस्मयन्मृ युभयाद्धस्ती निर्गन्तुं पाशतो दिशः । ततो विलोकयामास पाशच्छेदनहेतवे ॥१५॥
तदोन्दरः समागत्य नत्वा गजं जगाविति । स्वामी चतुःपदेषु त्व-मस्यतो मे प्रभुः पुनः ॥१६॥
त्वां व्याधाः प्रहनिष्यन्ति तेनातो निस्सराऽधुना । हस्त्यवक् पाशतोऽमुष्मात् छुट्टनं दुश्शकं मम ॥१७॥
यदि शक्तिस्तवास्तीह छोट्टने मम साम्प्रतम् । तदोद्यमं कुरुष्व त्वं सुन्दरोत्तम ! वेगतः ॥१८॥
आखुर्वहनाऽऽखून् मेलयित्वा क्षणात्तदा । पाशमार्द्रं व्यधादास्य-थूत्कृतेनाऽम्भसेव सः ॥१९॥

दन्तैश्च त्रोटयामास पाशमाखुस्तथा तदा । यथाऽऽसन् शतशः खण्डाः स्वस्थोऽभवदतो गजः ॥२०॥
निर्गत्य पाशतो हस्ती सर्वानाखूंस्तदा द्रुतम् । धान्यौघदर्शनेनैव प्रीणयामास सादरम् ॥२१॥
एवं गजसमो जीवो मनो व्याधसमं मतम् । व्याघ्रपाशोपमं कर्म्म भवोऽरण्यसमः पुनः ॥२२॥
जीवः कुमनसा बद्धः शुक्लध्यानाऽऽखुना पुनः । मोचितः सुखवान् सद्यो जायते सामयोनिवत् ॥२३॥
एष दृष्टान्तः कल्पितोऽस्ति "चरिअं च कप्पिअं वा आहरणं दुविहमेव नायव्वं० ॥
अत एव विधातव्यं सन्मार्गे देहिना मनः । मन एव नयत्याशु जीवं श्वभ्रे शिवेऽपि च ॥२४॥
इत्यादिदेशनां श्रुत्वा भविनस्तत्र भूरिशः । दीक्षां लात्वा ययुर्मुक्तिं सर्वकर्मत्रजक्षयात् ॥२५॥

卐 इति सुपार्श्व–जिनकथा 卐

॥ अथ चन्द्रप्रभजिनस्य समवसृतिस्वरूपम् ॥

चन्द्रपुर्यां महीशस्य महासेनस्य लक्ष(क्ष्म)णा । पत्नी शीलगुणेनाऽऽप रेखां सर्वाऽबलासु च ॥१॥
चतुर्दशमहास्वप्न सूचितः शोभनेऽहनि । सुतो लक्ष(क्ष्म)णयाऽसावि सर्वलक्षणलक्षितः ॥२॥

इन्द्रपितृकृतजन्मोत्सवादिज्ञानप्राप्तिपर्यन्तं वाच्यम् ।

चन्द्रप्रभप्रभुः पृथ्वीं पावयन् पदरेणुभिः । शत्रुञ्जये महातीर्थे सुरार्च्यः समवासरत् ॥३॥
तत्र द्वादशपर्षत्सु-पविष्टेषु सुरादिषु । वाण्या योजनगामिन्या चन्द्रप्रभो जगाविति ॥४॥
क्षेत्रेषु सप्तसु स्वीय-श्रियं व्ययन् सदाऽऽदरात् । वीरसेनेभ्यवन् मुक्ति-सातवान् जायते भवी ॥५॥
रामपुर्यां महेभ्यस्य वीरसेनस्य सन्मतेः । चन्द्रकेत्वभिधः पुत्रो-ऽजनि मन्मथरूपवान् ॥६॥
पित्राऽथ पाठितो धर्म-कर्मादिशास्त्रपद्धतिम् । चकार धर्मकृत्यानि तातेन सह सन्ततम् ॥७॥
श्रीपुरे मदनश्रेष्ठि-पुत्रीं त्रैलोक्यसुन्दरीम् । परिणीन्ये शुभे लग्ने चन्द्रकेतुः सदुत्सवम् ॥८॥
गेहकृत्यं वितन्वाना त्रैलोक्यसुन्दरी सदा । वितताल प्रतिक्रान्ति सन्ध्ययोर्द्वितये किल ॥९॥
गृहेऽन्यदा स्नुषा दीपं यावच्चक्रे दिनात्यये । तावद्दीपादधः पेतु-स्तैलस्य बिन्दवो नव ॥१०॥
मेदिनीपतितान् बिन्दून् दृष्ट्वा श्रेष्ठी उपानहोः । सद्यश्चोपडयामास (स्निग्धयामास तत्कालं) तैलत्रजनभीतितः ।
स्नुषा दध्यावयं श्रेष्ठी कृपणः किं करिष्यति ? । व्रतं द्वादशमं पाल-यिष्यतेऽत्र मया कथम् ? ॥१२॥
मया सप्तसु क्षेत्रेषु धनं चेद् व्ययते मनाक् । तदाऽसौ श्वसुरो मर्त्ता-ऽथवा मां मारयिष्यति ॥१३॥
परीक्षार्थं प्रगे सुप्तां स्नुषां वीक्ष्य स नैगमः । पप्रच्छ किं स्नुषे ! सुप्ताऽधुना दुःष्यति किं ज्वरः ? ॥१४॥
स्नुषाऽवग् विद्यतेऽत्यन्तं शिरोऽर्त्तिः प्राणहारिका । अचीकरत् ततः श्रेष्ठ्यौ-षधानि भूरिशस्तदा ॥१५॥
वधूः प्राह नहीदृक्षै-रौषधैर्याति वेदना । श्रेष्ठ्यभाणीच्च कीदृक्षैः शिरोऽर्त्तिर्व्रजति क्षयम् ॥१६॥
वध्ववग् मे शिरःपीडा साम्प्रत वर्द्धतेतराम् । मुक्ताचूर्णैः शिरोलिप्तैः शिरोऽर्त्तिर्मे क्षयं व्रजेत् ॥१७॥
जाता(त्य)मुक्तास्ततः श्रेष्ठी नीत्वा तत्राऽश्मना द्रुतम् । चूर्णीकर्तुं यदा लग्न-स्तदोचे स्नुषया पिता ॥१८॥

मा मुक्ताश्चूर्णयेदानीं शिरोऽर्त्तिर्मे गता क्षयम् । श्रेष्ठ्याह किं स्नुषे ! शीर्ष वेदना त्वरितं ययौ ॥१६॥
वधूः प्राह तवौदार्य-गुणौषधिनिरीक्षणात् । शिरोऽर्त्तिर्मे ययौ सद्यो ध्वान्तं रविकरादिव ॥२०॥
भूमीपतिततैलस्य बिन्दून् गृह्णन् मयेक्षितः । अतः कृत्वा मिषमिदं परीक्षा ते कृता पितः ! ॥२१॥
श्रेष्ठ्याहाऽव्यवहारेण यद्याति तद् वृथाऽखिलम् । व्यवहारे तु भूयिष्ठो विभवो व्ययते ध्रुवम् ॥२२॥
विशेषाद्धर्मकृत्येषु व्ययंल्लक्ष्मीमहं सदा । खेदं कुर्वे मनाग् नैव व्ययत्सु नन्दनादिषु ॥२३॥
ततो वधूर्जगौ तात ! त्वं धन्यः पुण्यवानसि । यतस्तवेदृशी बुद्धि-र्धर्मकर्म्मणि सुन्दरे ॥२४॥
सद्व्ययः क्रियते सद्भिः सदा सद्गतिहेतवे । असद्व्ययो विधीयेत मूढैर्दुर्गतिहेतवे ॥२५॥
अन्यायन्यायभेदेन चतुर्भङ्गी धने भवेत् । अन्त्यः सर्वोत्तमो भङ्गो न्यायार्जितस्य सद्व्ययात् ॥२६॥
श्रेष्ठिस्नुषे ततो याव-ज्जीवं लक्ष्मीं लसद्व्ययात् । सफलीचक्रतुः सप्त-क्षेत्रेषु विभवव्ययात् ॥२७॥
प्रान्ते श्रेष्ठिस्नुषे मृत्वा-ऽऽदिमे स्वर्भवतां सुरौ । ततश्च्युतौ धरापुर्यां भीमभूपाङ्गजौ पुनः ॥२८॥
द्वावपि भ्रातरौ श्रीति-चन्तौ गुर्वन्तिके गतौ । धर्मं दयामयं श्रुत्वा ललतुः संयमं पुनः ॥२६॥
पालयित्वा व्रतं भूरि वर्षाण्याप्तविदौ क्रमात् । महोदयपुरीं सद्यो-ऽलञ्चक्रतुः सहोदरौ ॥३०॥
पुण्योपदेशमित्यादि श्रुत्वा भूरिजनास्तदा । व्रतं लात्वा शिवं जग्मु-स्तीर्थे विमलपर्वते ॥३१॥

★ इति चन्द्रप्रभजिनस्य समवसृतिस्वरूपम् ★

॥ अथ श्रीसुविधिजिनस्य समागमनस्वरूपम् ॥

काकन्द्यां पुरि सुग्रीव-भूपस्य न्यायशालिनः । मार्गस्यासितपञ्चम्यां रामाऽसूत सुतं प्रिया ॥१॥
इन्द्रजन्मोत्सवकरणादि ज्ञानप्राप्ति यावद्वाच्यम् ।
बोधयन् भविनो जीवान् सुविधिर्जिननायकः । सिद्धाद्रौ समवासार्षीत् भूरिसाधुसमन्वितः ॥२॥
तत्र द्वादशसत्स्व-पविष्टासु जिनेश्वरः । धर्मोपदेशनां दातु-मारेभे शिवशर्मणे ॥३॥
अन्धीभूताऽबला वृद्धा वैद्योक्तौषधयोगतः । दिव्यनेत्रा यथा जाता तथा भव्यो गुरूक्तितः ॥४॥
मीनाह्वनगरे भीम-वैद्यस्य सुतवस्त्रयः । काम-राम-मुकुन्दाह्वा बभूवुः श्रीप्रियाभवाः ॥५॥
त्रयोपि पाठिता विद्याः पित्रा पुत्रा धनार्जनात् । धन-चन्द्र-वनेभ्यानां नन्दिनीः परिणायिताः ॥६॥
श्वश्वा समं स्नुषाः सर्वाः कुर्वन्त्यः कलहं सदा । क्षणमेकं न विश्रामं लेभिरे कारुलोकवत् ॥७॥
कुर्वत्सु तेषु कलहं वृद्धाऽथैका नितम्बिनी । प्रष्टुकामौषधं वैद्यो-पान्तेऽभ्येत्य जगावदः ॥८॥
अन्धत्वस्फेटकं दृष्ट्यो-रौषधं रुचिरं मम । वैद्यराड् यच्छ कृत्वा त्वं प्रसादं मयि साम्प्रतम् ॥६॥
पुनः पुनस्तयेत्युक्ते रुष्टो वैद्यो जगाविति । अस्याऽर्कस्य क्षिप क्षीरं दृष्ट्योरन्धत्वभिद् ध्रुवम् ॥१०॥
तया तथा कृतेऽर्कस्य क्षीरक्षेपविधानतः । दिव्यनेत्राऽभवद् दृष्टि-वैद्यप्रोक्तविधेस्तदा ॥११॥
टङ्कानां शतं लात्वा वृद्धा नारी कुटुम्बयुग् । वैद्योपान्ते समेत्यावक् प्रमद्यैतद्धनं वृणु ॥१२॥

अहं त्वया कृता दिव्य-चक्षुः स्वौषधदानतः । सत्योऽसि त्वं महान् वैद्यः परोपकृतिकारकः ॥१३॥
वैद्यो जगौ मया कुत्र ददे तवौषधं वद । वृद्धाऽऽह भवता प्रोक्त-मर्कस्य क्षीरमौषधम् ॥१४॥
वृद्धादत्तं धनं लात्वा वैद्यस्तस्य तरोरधः । खनित्वा घृतसम्पूर्णं भाजनमाप्तवान् रहः ॥१५॥
घृतेन तेन लोकाना बहूनामन्धतां दृशोः । स्फेटयित्वा महेभ्योऽभूद् विख्यातो देशमध्यतः ॥१६॥
क्रमात् स वैद्यराट् प्राप्त-वैराग्यो गुरुसन्निधौ । लात्वा व्रतं तपश्चक्रे तीव्रं कमरजश्छिदे ॥१७॥
वैद्यपुत्रास्त्रयः पितृ-दत्तरिक्था धनं निजम् । दीनदुःस्थादिलोकेभ्यो ददते सादरं सदा ॥१८॥
ततोऽशेषतमश्छेद कृते वैद्य-तपोधनः । मासे मासे करोति स्म पारणं भवतारणम् ॥१९॥
क्षिप्त्वा सर्वं तमो वैद्यः प्राप्तकेवलवित् क्रमात् । उपविश्य ददौ धर्मो-पदेशमिति देहिने ॥२०॥
धर्म्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सोभाग्यार्थिषु तत्प्रदः किमथवा नानाविकल्पैर्नृणाम् ।
वैद्यज्ञान्युपदेशेन गुर्वाद्या बहुसाधवः । सम्प्राप्तकेवलज्ञाना ययुर्मुक्तिपुरीं क्रमात् ॥२२॥
श्रुत्वेति जिननाथोक्तं धर्मं भूयिष्ठभाविनः । जिनधर्मं व्रतं चापि तदा प्रपेदिरे सुखम् ॥२३॥
क्षिप्त्वा निःशेषकर्माणि केचित्तत्र यतीश्वराः । अभवन् स्वामिनो मुक्ति-नितम्बिन्या गिरौ क्रमात् ॥२४॥
एवं श्रीसुविधिः सार्वः प्रबोध्य भविनो बहून् । अन्यत्र विजहाराऽथ भव्याङ्गिबोधहेतवे ॥२५॥

❀ इति श्रीसुविधिजिनस्य समागमनस्वरूपम ❀

॥ अथ शीतलजिनस्य शत्रुञ्जयसमागमनस्वरूपम् ॥

भद्दिलाह्वपुरे वर्यो, भूपो दृढरथोऽजनि । तस्य नन्दाभिधा राज्ञी बभूवाऽनघशीलभाग् ॥१॥
चतुर्दशमहास्वप्न-सूचितो नन्दया सुतः । असावि माघमासस्य, कृष्णस्य द्वादशीतिथौ ॥२॥
शक्रकृतजन्मोत्सव-ज्ञानप्राप्तिं यावद्वाच्यम् ।
शीतलतीर्थकृत् कुर्वन्, विहारं वसुधातले । सिद्धाद्रौ समवासार्षी-दनेकसाधुसंयुतः ॥३॥
तत्राऽऽगतेष्वसङ्ख्येषु, यात्रार्थं भविषु ध्रुवम् । धर्मोपदेशनां चक्रे, शीतलस्तीर्थनायकः ॥४॥
परिग्रहप्रमाणं तु, यश्चकार धनादिषु । कालनैगमवद् याति, मुक्तिपुर्यां स मानवः ॥५ ।
कुन्तपुर्यां वणिक् कालो, यद् यल्लाति क्रयाणकम् । द्वित्रिचतुर्गुणलाभै-र्विक्रीणीते स्म तत्तदा ॥६॥
भाग्योदये भवेत् पुंसां पुत्रपौत्रादिकं धनम् । अभाग्यस्योदये दुःखं जायते च भवे भवे ॥७॥
यथा यथा गृहेऽभ्येति, लक्ष्मीस्तस्य निरन्तरम् । तथा तथा भवेत्तृष्णा वर्द्धमानाऽन्तरिक्षवत् ॥८॥
यतः-तृष्णाखानिरगाधेयं, दुष्पूरा केन पूर्यते ? । या महद्भिरपि क्षिप्तैः पूरणैर्वर्द्धतेतराम् ॥९॥
अर्जयन् कमलां कालो, विश्रामं लाति नो यदा । तदा रमा प्रिया प्राह कष्टं किं क्रियतेऽधिकम् ? ॥१०॥
यतः-"अर्थानामर्जने दुःख-मर्जितानां च रक्षणे । आये दुःखं व्यये दुःखं, धिग् द्रव्यं दुःखभाजनम् ॥११॥
परत्र गच्छतः कस्य (कैश्चित्) सह याति रमा नहि । तेन श्रीर्व्ययते सप्त-क्षेत्रेषु स्याद् यतः स्थिरा ॥१२॥

एवं बहूपदेशेषु, दत्तेषु प्रियया तदा। कालः स्तोकं धनं नैव, वितताार नृपे क्वचित् ॥१३॥
कालेऽन्यदा प्रसुप्तस्य, स्वप्ने श्रीदेवतेत्यवग्। यास्याम्यहं त्वदावासात्, पुण्यं क्षीणं यतस्तव ॥१४॥
इह त्वया न दानादि-धर्मः स्तोकोऽपि निर्ममे। यस्य पुण्यं भवेत्तस्य गृहे तिष्टाम्यहं सदा ॥१५॥
यतः–'गुरवो यत्र पूज्यन्ते वित्तं यत्र नयार्जितम्। अदन्तकलहो यत्र तत्र शक्र! वसाम्यहम्' ॥१६॥
'द्यूतपोषी निजद्वेषी धातुवादी सदाऽलसः। आयव्ययम(स्या)नालोची तत्र तिष्ठाम्यहं नहि' ॥१७॥
प्रातः पत्न्याः पुरः प्रोक्ते नैशे वृत्ते श्रियोदिते। प्रिया प्राह मयाऽप्युक्तं व्यय धर्मे धनं प्रिय! ॥१८॥
अधुना व्ययते लक्ष्मीं दानधर्म्मे पते! यदि। तदा स्थिरा भवेल्लक्ष्मीः पुण्यबद्धा यतो रमा ॥१९॥
व्ययित्वा निखिलां लक्ष्मीं क्षेत्रेषु सप्तसु क्रमात्। रात्रौ स्मृतनमस्कारः सुष्वाप सुखनिद्रया ॥२०॥
यतः–जे कुच्छिएसु दाणं दिंति सुहभोगकारणनिमित्तं। ते कुजंराइ जाया भुंजंति हि दाणजं सोक्खं ॥२१॥
जह खेत्तम्मि सुकिट्ठे वड्ढइ (धन्नं) न तस्स परिहाणी। एवं सुमाहुदाणे विउलं पुण्णं समज्जिणइ ॥२२॥
एक्कम्मि जह तलाए गो-सप्पेणं च पाणियं पीयं। सप्पे परिणमइ विसं धेणुसु खीरं समुब्भवइ ॥२३॥
तह निस्सीलसुसीला-दीणं दाणं फलं अफलयं च। होही परम्मि लोए पत्तविसेसेण से पुन्नं ॥२४॥
कालेन व्ययितां लक्ष्मीं सर्वां ज्ञात्वा रमासुरी। तत्पुण्यगुणबद्धाऽवक् श्रिया त्वत्सदनं भृतम् ॥२५॥
एवं तेन धने घस्रे तस्मिंश्च व्ययिते सति। द्वितीयेऽह्नि प्रगे पूर्णं श्रियाऽपश्यत् स्वमन्दिरम् ॥२६॥
एवं विंशतिघस्रान्ते कालोऽभ्येत्यान्तिके गुरोः। परिग्रहप्रमाणं तु ललावेवं प्रमोदतः ॥२७॥
टङ्कानां चतुःपञ्च सहस्राणि दशालयाः। महिष्योऽष्टौ प्रिया चैका गावो दश नृपा दश ॥२८॥
घोटका विंशतिर्हेम-रूप्ययोः पलसप्ततिम्। इत्याद्यभिग्रहं लात्वा कालः सुख्यभवत्तदा ॥२९॥
तदाऽकस्मात् मृते भूपे निष्पुत्रे मन्त्रिपुङ्गवैः। राज्यं दत्तं बलात्तस्मै कालाय ससदुत्सवम् ॥३०॥
कालो राज्ये युगादीश-बिम्बं निवेश्य तत्क्षणात्। स्वयं तु सेवकीभूतः सेवते स्म प्रभुक्रमौ ॥३१॥
परिग्रहप्रमाणं तु पालयन् कालभूपतिः। जिनभूपधनेनैव व्यधाद् भूरि जिनालयान् ॥३२॥
कालः स्वं तनयं भीमं स्थापयित्वा निजे पदे। सहस्राएववणिग्राहु-जातैः सह व्रतं ललौ ॥३३॥
पठित्वा जिनसिद्धान्तं प्राप्य सूरिपदं क्रमात्। भविनो बोधयामास लक्षशो जिनधर्म्मिणि ॥३४॥
अयुतप्रमितैर्वाचं-यमैर्युक्तः स सूरिराट्। बोधयन् भविनः शत्रुञ्जये शैले समीयिवान् ॥३५॥
तत्र कर्मक्षयं कृत्वा केवलज्ञानमाप्य च। कालः सूरिर्ययौ मुक्तिं भूरिवाचंयमान्वितः ॥३६॥
एवं धर्मोपदेशेन प्रबोध्य भविनो बहून्। श्रीशीतलो जिनोऽन्यत्र विजहार ततोऽद्रितः ॥३७॥

X इति श्री शीतलजिनस्य शत्रुञ्जयसमागमनस्वरूपम् X

॥ अथ श्रेयांसजिनस्य शत्रुञ्जयसमागमनस्वरूपम् ॥

सिंहाभिधे पुरे विष्णु-भूपतेः शासतो महीम्। विष्णुदेवी प्रिया विष्णो-र्लक्ष्मीरिवाभवद्वरा ॥१॥
चतुर्दश-महास्वप्न-सूचितो विष्णुभार्यया। फाल्गुनासितगौरीश तिथावसावि नन्दनः ॥२॥

शक्रेण काञ्चनच्माग्रे नीत्वा प्रभुं जनुर्महः । कृत्वा मुक्तोऽन्तिके मातु-र्जग्मे त्रिदशमन्दिरम् ॥३॥
प्रातः पिता विधायाऽथ जन्मोत्सवं मनोहरम् । श्रेयांसेत्यभिधां सूनो र्ददौ स्वजनसाक्षिकम् ॥४॥

राज्यप्राप्ति-ज्ञानप्राप्तिं यावत् सम्बन्धोऽत्र स्वयं वाच्यः ।

श्रीश्रेयांसो जिनो भव्य-जीवान् भुवि विबोधयन् । सिद्धाद्रौ समवासार्षीद् भूयिष्ठसंयतान्वितः ॥५॥
तत्र स्थितः प्रभुर्भव्य-जीवान् बोधयितुम् दृढम् । पुण्योपदेशमाधातुं प्रावर्त्तत लसद्गिरा ॥६॥
देवपूजा गुरूपास्तिः स्वाध्यायः संयमस्तपः । दानं चेति गृहस्थानां षट् कर्माणि दिने दिने ॥७॥
चन्द्राह्वे नगरे चन्द्र-वीरस्य मेदिनीपतेः । चन्द्रावती प्रिया चञ्चच्छीलसौभाग्यवत्यभूत् ॥८॥
अन्यदा नृपतिर्यावत् सभायां समुपाविशत् । तावच्छुक-शुकीयुग्मं कुर्वत् कलिं समागमत् ॥९॥
किमर्थं क्रियतेऽत्यन्तं, युवाभ्यां कलहोऽधुना । इत्युक्ते भूभुजा शुक्या, प्रोक्तमेष सुतो मम ॥१०॥
शुकोऽवग् मम पुत्रोऽय-मेष एव नरेश्वर ! । भूपोऽवग् क्रियते नैव विवादो हितमिच्छता ॥११॥
यतः—"विवादं कुर्वतां पुंसां, पशुनामिव जायते । दुःखं परत्र पातः स्यात् श्वभ्रे शङ्का (सङ्ख्या) सुखे पुनः
सुतोऽयं युवयोरेष, युवाभ्यां जनितो यतः । स्वकुले कलहो दुःख-दायी स्यादुभयोरपि ॥१३॥
ततो मुक्तविवादः सन्, शुकः पत्नीसुतान्वितः । ययौ युगादिदेवस्य, गृहे तस्थौ समाहितः ॥१४॥
तत्रासन्नप्रदेशे तु, ज्ञानतुङ्गगुरूत्तमान् । नत्वा शृण्वत्सु भव्येषु, धर्मं कीरः समागमत् ॥१५॥
श्रीमज्जिनेशनमनं तिलकत्यलीके, वक्षःस्थले विमलमालति सद्विवेकः ।
ताडङ्कति श्रवणयोः सुगुरूपदेश-स्त्यागस्तु कङ्कणति पाणितले सतां हि ॥१६॥
पूआ पच्चक्खाणं पडिकमणं पोसह-परोवयारो य । पंच पयारा जस्स य न पयारो तस्स संसारे ॥१७॥
अर्हत्पूजाफलं ज्ञात्वा, प्रत्यहं बहवो जनाः । समेत्य सदने भावात्, कुर्वते जिनपूजनम् ॥१८॥
तदा शुकोऽपि पत्न्यङ्गभूशाली दिवसोदये । ढौकयित्वा प्रभोरग्रे, शस्यशीर्षाणि गच्छति ॥१९॥
अर्हत्पूजाप्रभावेण, मृत्वा कीरः समाधिना । चन्द्रवीरस्य पुत्रोऽभूत्, चन्द्रदेवाभिधानतः ॥२०॥
अर्हत्पूजाप्रभावेण, मृत्वा शुक्यमरे पुरे । लक्षभूपसुता जाता, सुन्दरी नामतः क्रमात् ॥२१॥
चन्द्रदेवकुमारोऽयं, लक्षभूपतिनन्दिनी । परिणिन्ये शुभे लग्ने, तातस्यादेशतः क्रमात् ॥२२॥
क्रमात् शुकसुतः कीरो मृत्वा पूजाप्रभावतः । चन्द्रदेवकुमारस्य पुत्रोऽभूत् कमलाभिधः ॥२३॥
वीरभूपः सुतं न्यस्य स्वपट्टे गुरुसन्निधौ । दीक्षां लात्वा चकारोग्रं, तपो मुक्तिसुखप्रदम् ॥२४॥
गुरूपान्ते पठन्नित्य-मागमं कोविदोऽजनि । ततः सूरिपदं प्राप्य प्राप ज्ञानमनुत्तरम् ॥२५॥
चन्द्रदेवोऽन्यदा पत्नी-पुत्रयुक्तो दिनोदये । युगादिजिनगेहेऽगाद् नन्तुं श्रीवृषभं प्रभुम् ॥२६॥
केनचिड्ढौकितं शस्य-शीर्षं वीक्ष्य नरेश्वरः । पत्नीपुत्रयुतो मूर्च्छामवाप्य न्यपतत् क्षितौ ॥२७॥
शीतोपचारतः स्वस्थी-कृतो भूपः प्रियादियुग् । स्वं प्राग्भवस्वरूपं च, प्रोवाच मन्त्रिणां पुरः ॥२८॥
अर्हत्पूजाफलं ज्ञात्वा भूपात्तस्माच्च तत्र तु । प्रभुपूजापरा आस-न्ननेके मनुजास्तदा ॥२९॥
पत्नीपुत्रयुतो राजा, पूजयित्वा प्रभुं सदा । अन्नपाने मुखे स्वीये क्षिपत्येवान्यथा न हि ॥३०॥

संसारासारतां मत्वा गुरोरास्याद्धराधवः । वितीर्य सूनवे राज्यं संयमं सप्रियो ललौ ॥३१॥
तस्मिन्नेव भवे कर्म्मैधांसि दग्ध्वा तपोऽग्निना । चन्द्रदेवयतिः प्राप महोदयपुरं रयात् ॥३२॥
राज्ञी तप्त्वा तपो गत्वा तृतीये ताविषे क्रमात् । प्राप्य मर्त्यभवं मुक्तौ गन्ता सर्वतमःक्षयात् ॥३३॥
कमलः स्वं तनूजातं स्वपट्टे न्यस्य सूत्सवम् । लात्वा दीक्षां ययौ मुक्तिं प्राप्य ज्ञानमनुत्तरम् ॥३४॥
एवं प्रभोर्गिरं श्रुत्वा भूयांसो भव्यदेहिनः । छित्त्वा निःशेषकर्माणि जग्मुः शत्रुञ्जये शिवम् ॥३५॥

इति श्रीश्रेयांसस्य शत्रुञ्जयसमागमनस्वरूपम्

॥ अथ श्रीवासुपूज्यजिनस्य श्रीशत्रुञ्जयतीर्थे समागमनस्वरूपम् ॥

चम्पायां वसुपूज्यस्य भूपस्याऽभूज्जया प्रिया । चतुर्दशमहास्वप्न-सूचितं गर्भमादधौ ॥१॥
फाल्गुनासितमार्त्तण्ड-तिथावुच्चग्रहेष्वथ । जयाऽसूत सुतं वर्य-लक्षणैर्लक्षितं शुभैः ॥२॥
शक्रेण विहिते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वाऽदात् वासुपूज्येति नाम सूनोः सदुत्सवम् ॥३॥

अत्र ज्ञानप्राप्ति यावच्चरित्राद् ज्ञेयं त्व(स्व)यम्—

विहरन्नन्यदा वासु-पूज्यस्तीर्थङ्करो भुवि । सिद्धभूमीधरस्योर्ध्व-धरणौ समवासरत् ॥४॥
तत्रानेके जना स्वामि-वाणीं योजनगामिनीम् । सर्वपापछिदं श्रोतुं समीयुर्दूरदेशतः ॥५॥
तथाहि—प्रासादप्रतिमाधर्म-शालादिपुण्यतः किल । लभन्ते मनुजाः स्वर्गा-पवर्गादिरमां रयात् ॥६॥
यतः—अङ्गुष्ठमात्रमपि यो बिम्बं कारयति वरम् । वृषभादिमवीरान्त-जिनानां स शिवं श्रयेत् ॥७॥
अङ्गुष्ठमात्रमपि यः प्रकरोति बिम्बं, वीरावसानवृषभादिजिनेश्वराणाम् ।
स्वर्गप्रधानविपुलर्द्धिसुखानि भुक्त्वा, पश्चादनुत्तरगतिं लभते स धीरः ॥८॥
अर्हत्प्रासादबिम्बानि कारयन्ति जनाश्च ये । तेषां स्वर्गादिशर्म स्या-द्वीरभूपकलत्रवत् ॥९॥
आसंश्चन्द्रपुरे वीर-भूपस्याष्टौ प्रियाः प्रियाः । आसीत्तासु वरा पट्ट-राज्ञी वीरमतिः क्रमात् ॥१०॥
जैनधर्मं वितन्वानो-पदेशं ददतीतराम् । पट्टराज्ञ्यन्यराज्ञीभ्य-स्तासां तत्राभवद् गुरुः ॥११॥
आदौ जिनालयं वर्यं कारयित्वा धनव्ययात् । पट्टराज्ञी ददौ तासा-मुपदेशं शिवप्रदम् ॥१२॥
आरोग्यभाग्याभ्युदयप्रभुत्वं, सत्त्वं शरीरे स्वजने महत्त्वम् ।
तत्त्वं च चित्ते सदने च सम्पत्, सम्पद्यते पुण्यवशेन पुंसाम् ॥१३॥
पट्टराज्ञीजिनावासा-दन्या भूपप्रियाः प्रियाः । अधिकान् स्वान् जिनागारा-नचीकरन् मनोहरान् ॥१४॥
तासां जिनालयान् प्रौढान् वीक्ष्य दध्यौ च सा हृदि । मया मोधाद् ददे धर्मो जैन आसां पुरोऽधुना ॥१५॥
आभिर्ये कारिताः सर्वा(सार्वा)-लया उच्चतरा वराः । ते पतिष्यन्ति चेच्छीघ्रं जायते मे तदा वरम् ॥१६॥
प्रायो विभूतिमन्येप्र[illegible]ष्य मानवाः सदा । ईर्ष्यां वितन्वते शश्वत् कर्त्तुं तानि सदादरात् ॥१७॥

एवं दुर्ध्यानतो जात-शूला भूपप्रियाऽऽदिमा । मृता तत्र शुनी जाता वैचित्र्यं कर्मणामहो !॥१८॥
प्रविशन्तीं शुनीं तत्र देवमन्दिरमध्यतः । कुट्टयित्वा बहिर्निष्का-शयन्ति मनुजाः सदा ॥१६॥
अकस्मादेकदा बिम्बं प्रभोर्वीक्ष्य प्रगे शुनी । प्राप्य जातिस्मृतिं दृष्ट्वा प्राग्भवं रोदिति ध्रुवम् ॥२०॥
कुट्टितापि जनैरश्रु-प्रवाहोन्मोचका सदा । प्रभूवोकोद्वारतोऽन्यत्र न याति कुत्रचित् शुनी ॥२१॥
पुनर्निजं कृतं कर्म परेर्ष्याविहितं शुनी । निन्दन्ती पशुभावत्वात् शक्नोति जल्पितुं नहि ॥२२॥
लोका दध्युः कुतो हेतोः शुनीयं याति न क्वचित् । विना केवलिनं तच्चा-ज्ञानिभिर्ज्ञायते नहि ॥२३॥
इतस्तत्राऽऽगतो ज्ञानी सर्वराज्ञीभिरादरात् । वन्दितः शुश्रुवे धर्मो-पदेशः शिवशर्मदः ॥२४॥
उपदेशोऽत्र । देशनान्ते महीपाल-पत्न्यः पप्रच्छुरादरात् । अस्माकं गुरुणीवीर-मत्युत्पन्नाऽस्ति कुत्र नु ॥२५॥
केवल्यवग् जिनागार-द्वारे तिष्ठति या शुनी । सैव वीरमती मृत्वा जाताऽस्तीर्ष्याविधानतः ॥२६॥
ताभिः प्रोक्तं कथं पुण्य-वती वीरमती शुनी । ज्ञान्यवक् प्राप्यते तिर्यग्भव आर्त्तिविचिन्तनात् ॥२७॥
यतः आर्त्ते तिर्यग्गतिस्तथा गतिरधो ध्याने च रौद्रे सदा, धर्मे देवगतिस्तथा भवति हि शुक्ले च जन्मक्षयः ।
केवली प्राह यद्यत्रा गता मामनमत् स्फुटम् । आदिनाथार्चकप्रोक्ता शुनी चेद् वीक्ष्यते त्वथः ॥२६॥
तदा ज्ञेया भवन्तीभिः स्वकीया गुरुणी शुनी । कर्मयोगादियं भाग्य-वती मुक्तिं गमिष्यति ॥३०॥
तत्राऽऽनीता शुनी ताभि-र्गुरूक्तं विदधेऽखिलम् । गुरुः प्राहाऽधुना पुण्यं कुरु तस्माच्छिवं भवेत् ॥३१॥
ततोऽनशनमादाय शुन्यगात् ताविषे क्रमात् । दिवश्च्युता महावीर-भूपपुत्री भविष्यति ॥३२॥
शुद्धं धर्मं विधायाऽथ पालयित्वा च संयमम् । गमिष्यति शुनीजीवो महोदयपुरीं रयात् ॥३३॥
ददतो देशनामेवं वासुपूज्यार्हतो जनाः । केचित् प्रपेदिरे श्राद्ध-धर्मं केचिद्यतेर्वृषमम् ॥३४॥
अन्या अपि महीपाल-पत्न्यः सप्ताऽऽर्हतं वृषम् । पालयन्तो व्रत प्राप्य ययुर्मुक्तिपुरीं क्रमात् ॥३५॥
तत्रस्थस्य प्रभोर्वाणीं श्रुत्वाऽनेके तपस्विनः । अलभ्वकुः क्रमान्मुक्ति-नगरीं कर्मणां क्षयात् ॥३६॥

॥ इति श्रीवासुपूज्यजिनस्य श्रीशत्रुञ्जयतीर्थे समागमनस्वरूपम् ॥

॥ अथ विमलजिनस्य शत्रुञ्जयागमन-समवसृतिस्वरूपम् ॥

काम्पीलाह्वे पुरे भूपः, कृतवर्माभिधोऽभवत् । श्यामादेवी लसल्लीला, तस्याऽऽसीन् प्राणवल्लभा ॥१॥
फाल्गुनासितभूतेष्टा तिथावुच्चग्रहव्रजे । श्यामाऽसूत सुतं कुम्भि मुख्यस्वप्नाभिसूचितम् ॥२॥
इन्द्रेण विहितजन्मो-त्सवे कृत्वा जनुर्महम् । पिताऽदाद् विमलेत्याह्वां, सूनोः सज्जनसाक्षिकम् ॥३॥
ततः प्राप्य क्रमाद्राज्यं, त्यक्त्वा लात्वा व्रतं पुनः । क्षिप्त्वा कर्माण्ययं ज्ञानं विमलो जिन आप्तवान् ॥४॥
विमलो विमलां भूमीं, कुर्वन् निजाङ्घ्रिरेणुभिः । कोटाकोटिसुरैः सेव्यः सिद्धाद्रौ समवासरत् ॥५॥
तत्र द्वादशपर्षत्सु-प्रविष्टासु जिनाधिपः । धर्मोपदेशनां दातुं प्रवर्त्तते लसद्गिरा ॥६॥
प्राणिभिर्यं समारूढै-र्लोकाग्रमतिदुर्लभम् । प्राप्यते तस्य तीर्थेशः, शाश्वतोऽयं गिरिर्वरः ॥७॥
अनादितीर्थमेतद्धि, सिद्धास्तीर्थकृतोऽत्र वा । अनन्तमुनयश्चापि क्षिप्त्वा स्वं कर्म्मसञ्चयम् ॥८॥

मुक्तेषु तीर्थनाथेषु, गते ज्ञाने महीतले । लोकानां तारकः सोऽयं, श्रवणात् कीर्त्तनादपि ॥९॥
भाग्यं वर्यं भवेद् यस्य, पुंसः पूर्वभवागतम् । जायते तस्य चित्तेष्ट-योगोऽत्र च परत्र च ॥१०॥
धरापुर्यां वणिग् मीना-भिधोऽजनि विचक्षणः । तस्याभूद् गेहिनी गौरी नाम्ना गौरगुणावली ॥११॥
भग्ने तस्मिन् पुरे द्विड्भि-र्गौरी लाताऽरिणा तदा । वैरिसैन्यं चलत्तस्थौ मध्याह्ने ग्रहिसन्निधौ ॥१२॥
तत्रैत्य गृहिणीं छोट-यितुं टङ्कशताष्टकाम् । मानयित्वा गतो मीनो धनं लातुं निजालये ॥१३॥
सर्वशून्यं गृहं दृष्ट्वा भूमिस्थं द्रविणं रहः । लात्वा मीनोऽचलद् यावत्तावदेको द्विजोऽमिलत् ॥१४॥
मीनपार्श्वे धनं भूरि ज्ञात्वा विप्रश्छली सदा । लातुं वाञ्छन् नहि प्रापा-चमरं विपिने क्वचित् ॥१५॥
यतः-मीनश्चलन् क्रमात् कूपो-पान्ते यावत् समीयिवान् । तावद् विप्रो जगावत्र स्थीयते पीयते पयः ॥१६॥
तापतप्ततनुर्मीनः पयः पीत्वा धनं यदा । शीर्षे दत्त्वा च सुष्वाप तावच्छिद्रं द्विजो लला ॥१७॥
उत्पाट्य तं ग्रहौ चिप्त्वा धनं लात्वा द्विजो ययौ । कटिदघ्ने जले मीनो न्यपतद् वयोगतः ॥१८॥
चणात्तत्र प्रियां दृष्ट्वा मीनो हृष्टो जगावदः । त्वं प्रिये ! कथमत्रागाः ? केनाऽऽनीता वदाऽधुना ॥१९॥
पत्नी प्राह धृताऽहं तु वैरिणा दुष्टचेतसा । वाञ्छन्ती सरणौ नष्टुं न शक्ता वैरितस्ततः ॥२०॥
अत्रायाते द्विषः सैन्ये छलं कृत्वा ग्रहाविह । पतिताया ममाभूवन् घस्रा पञ्च कुकर्मतः ॥२१॥
ततोऽन्धुपतनोदन्ते मीनेन कथिते सति । पत्नी प्राहाऽन्धुतोऽस्माद्धि कथं च निःसरिष्यते ॥२२॥
स कोपि संनिधावस्य ग्रहेः कण्ठे समाययौ । यः कर्षयति मामस्मान् कृपाकवचिताशयः ॥२३॥
तदाऽकस्मात् ग्रहेस्तस्या-धस्या(स्ता)द्विवरतः शिवा । पयः पातुं समायाता दृष्ट्वा ताभ्यां प्रमोदितम् ॥२४॥
पयः पित्वा शिवा यस्मिन् विवरे निर्गता तदा । तस्माद्विवरतः क्रोश-द्वयान्मीनो विनिर्ययौ ॥२५॥
पातालस्थधरान्तस्थ-विवरद्वारि नित्यशः । प्रायः (पयः) शिवा पिबत्येव न सदा सरसीस्थितम् ॥२६॥
कूपान्तरस्थां प्रियां मीनो मञ्चिकायाः प्रयोगतः । कर्षयामास निन्येऽथ स्वकीये सदने क्रमात् ॥२७॥
उपलक्ष्य द्विजं स्वीय-धनापहारकं क्रमात् । स्वां लक्ष्मीं वालयामास मीनः प्रोक्त्वा नृपान्तिके ॥२८॥
ज्ञापयित्वा स्वविभवा-पहारं मेदिनीपतेः । द्विजान्ताद् वालयामास लक्ष्मीं मीनो वणिक् क्रमात् ॥२९॥
ततो मीनः प्रियायुक्तो व्ययित्वा निखिलं धनम् । गुरूपान्ते व्रतं लात्वा तप्यते स्म तपः सदा ॥३०॥
आराध्य संयमं मीनो ययौ षष्ठे सुरालये । गेहिनी ताविषे तुर्ये ययावायुःक्षये सति ॥३१॥
यतः-"ठाणं उच्चुच्चयरं मज्झं हीण च हीणतरगं वा। जेण जहिं गन्तव्व चिट्ठावि से तारिसी होइ ॥३२॥
ततो मर्त्यभवं प्राप्य मीनजीवः प्रियायुतः । शत्रुञ्जये ययौ मुक्तिं सर्वकर्मगणक्षयात् ॥३३॥
विमलस्य प्रभोः पार्श्वे श्रुत्वेति धर्ममादरात् । अनेके भविनो जग्मु-र्महोदयपुरीं रयात् ॥३४॥
केचित्तत्र गिरौ स्वामि-वचः श्रुत्वा शिवं ययुः । केचिद् देवालये जग्मुः केचिद्राज्यमनुत्तरम् ॥३५॥
विमलस्य प्रभोस्तत्र तिष्ठतः साधवस्तदा । लक्षमेकं ययुर्मुक्ति-नगरीं पातकक्षयात् ॥३६॥

卐 इति विमलजिनस्य शत्रुञ्जयागमन-समवसृतिस्वरूपम् 卐

॥ अथ अनन्तजिनस्य शत्रुञ्जयागमन समवसृतिस्वरूपम् ॥

अयोध्यायां पुरि क्ष्मापः सिंहसेनोऽभवन्नयी । तस्यासीत् सुयशाः पत्नी लक्ष्मीरिव रमापतेः ॥१॥
वैशाखासितपक्षस्य त्रयोदश्यां शुभे क्षणे । सुयशाः सुपुत्रे पुत्रं गजादिस्वप्नसूचितम् ॥२॥
हरिणा विहिते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा सुनोरनन्तेति नाम दत्ते स्म सादरम् ॥३॥
प्राप्य राज्यं पितुः पार्श्वात् त्यक्त्वा लात्वा च संयमम् । कर्मक्षयादनन्तोऽर्हन् केवलज्ञानमञ्जसा (माप्तवान्)
वीरं अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च । एए मोत्तूण जिणे अवसेसा आसि रायाणो ॥५॥
अनन्तस्तीर्थकृत् पृथ्वीं बोधयन् स्वविहारतः । सिद्धाद्रौ समवासार्षीत् कोटाकोटिसुरार्चितः ॥६॥
तत्रामङ्ग्ल्ये षु भव्येषु मिलितेषु शिवाचले । अनन्तेशो ददौ धर्मो-पदेशमिति शर्मदम् ॥७॥
आर्यदेशकुलरूपबलायु र्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः पोतमुज्झति पयोधिगतः सः
"मज्जं विसयकसाया निद्दा विगहा य पंचमी भणिया । एए पंच पमाया जीवं पाडंति संसारे ॥९॥"
जीवस्याभयदानेन मनुजोऽत्र परत्र च । सुखवान् जायते श्रेष्ठि-वदेव बहुकालतः ॥१०॥
पुरे श्रीनिलये जीर्ण-श्रेष्ठिनस्तनयास्त्रयः । कम्मा-ऽमर-मुकुन्दाह्वा बभूवू रूपशालिनः ॥११॥
पृथक् पृथग् महेभ्यानां नन्दिनीर्निजनन्दनाः । तातेन कुर्वता चारू-त्सवं तु परिणायिताः ॥१२॥
परिग्रहप्रमाणं तु गृह्णता श्रेष्ठिना पुरा । महिष्येका च गौरेका मुत्कले मोचिते ननु ॥१३॥
वत्सस्य कुरुते चिन्तां, वारकेण वधूत्रयम् । चारि-पानीयदानेन सुस्थानबन्धनेन च ॥१४॥
जायमानेऽन्यदोद्वाहो-त्सवे पुत्र्या बुभुक्षितः । विस्मृतो वत्सकश्चारि-पानीयदानतस्तदा ॥१५॥
द्वितीये दिवसे श्रेष्ठी वत्सं वीक्ष्य बुभुक्षितम् । जगाद भो स्नुषा ! वत्सः कृशो जातः कथं भृशम् ? ॥१६॥
"तिरिआ कसंकुसारानिवायवहबंधजंतणसयाइं । नवि इहयं पाविंता परत्थ जइ निअमिआ हुंता ॥१७॥"
स्नुषाः प्रोचुरयं वत्सः पुत्र्या विवाहवासरे । विस्मृतोऽतस्तृणादीनां दानात्तस्मात् कृशोऽभवत् ॥१८॥
दत्ते तृणजलादौ च वत्सो मन्दोऽभवत्तदा । ततः सर्वप्रकारेण चिकित्साः कारिताश्च तैः ॥१९॥
विश्राणिते नमस्कारे मृत्वा वत्सः सुरालये । गतोऽवधिविदा जज्ञौ श्रेष्ठिनं स्वोपकारिणम् ॥२०॥
अभ्येत्य स्वर्गतो वत्स-देवः श्रेष्ठिमतल्लिकाम् । प्रणम्याऽवग् ममासि त्वं गुरुर्नमस्कृतिप्रदः ॥२१॥
अहं वत्सो गृहे तात्र-कीनेऽभूवं मृतः पुनः । तत्र त्वया नमस्कारा दत्ता मे म्रियतः सतः ॥२२॥
त्वत्प्रदत्तनमस्कार-प्रभावात्ताविषे सुरः । अहं वत्सो मृतस्ताव-कीने गेहे तदा ध्रुवम् ॥२३॥
कोटिमूल्यानि रत्नानि दश दत्त्वा दृढाग्रहात् । श्रेष्ठिने तत्स्नुषाणां तु हारं पृथक्पृथग् ददौ ॥२४॥
ततः श्रेष्ठी विशेषेण धर्मं जीवदयामयम् । आराध्य ताविषि तुर्ये ययौ वधूत्रयं पुनः ॥२५॥
वत्सादयोऽपि ताविषाच् च्युत्वा सुरपुरे वरे । धर्मश्रेष्ठिसुतो राम-नामाऽजनि मनोहरः ॥२६॥
रामोऽन्यदा गुरूपान्ते श्रुत्वा धर्मं विरागवान् । दीक्षां लात्वा तपस्तीव्रं चक्रे कल्याणशर्मदम् ॥२७॥
यतः-पोरिसि चउत्थछट्ठे काउं कम्मं खवंति जं मुणिणो । तं नो नारयजीवा वाससयसहस्सलक्खेहिं ॥२८॥
अत्र सिद्धगिरौ राम-यतिरेतोऽन्यदा क्रमात् । तपःषष्ठादि बहुश-श्चकाराऽनघमानसः ॥२९॥

तीर्थस्यास्य प्रभावेण प्राप्य ज्ञानमनुत्तरम् । प्रबोध्य भविनो भूरीन् रामोऽत्र मुक्तिमीयिवान् ॥२०॥
श्रेष्ठि-स्नुषासुराः सर्वे च्युताः स्वर्गाद् धरापुरे । प्रजापतेः सुता जाताः सोमो भोमो धनाभिधः ॥२१॥
श्रेष्ठिजीवसुरः सोऽपि च्युत्वा स्वर्गात्ततोऽन्यदा । प्रजापतेरभूत् सूनु-रमराह्वो वराकृतिः ॥२२॥
चत्वारोऽपि मिथः प्रीति-भाजः सहोदराः क्रमात् । धर्मघोषगुरूपान्ते जैनं धर्मं प्रपेदिरे ॥२३॥
प्रपाल्य धर्ममनिशं चत्वारोऽप्यच्युतं ययुः । ततश्च्युताः कलापुर्यां जाताः श्रीदसुताः पुनः ॥२४॥
अत्र शत्रुञ्जये यात्रा-कृते समागताश्च ते । लात्वा दीक्षां तपस्तीव्रं चक्रिरे शिवसातदम् ॥२५॥
क्रमात् कर्मक्षयाज्ज्ञान-मासाद्यानुत्तर खलु । कल्याणनगरीं जग्मु-श्चत्वारोऽपि सहोदराः ॥२६॥
इत्याद्यनन्तनाथस्य वाणीं योजनगामिनीम् । आकर्ण्य भविनोऽनेके महोदयपुरीं ययौ ॥२७॥

❀ इति अनन्तजिनस्य शत्रुञ्जयागमन-समवसृतिस्वरूपम् ❀

॥ अथ धर्मजिनस्य शत्रुञ्जयागमनस्वरूपम् ॥

पुरे रत्नपुरे भानु-भूपस्य सुव्रता प्रिया । माघशुक्लतृतीयस्यां सुषुवे नन्दनं वरम् ॥१॥
शक्रेण विहिते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा धर्मेति नामाऽदात् सुनोः सज्जनसाक्षिकम् ॥२॥
राज्यं प्राप्य पितुः पार्श्वात् पालयित्वा प्रजाश्चिरम् । लात्वा दीक्षां क्रमात् प्राप केवलज्ञानमञ्जसा ॥३॥
धर्मो जिनोऽन्यदा शत्रु-ञ्जये तीर्थे समागतः । ददौ धर्मोपदेशं तु भव्याङ्गिभ्यः शिवप्रदम् ॥४॥
शुद्धं क्रियाकलापं ये कुर्वते गुरुजल्पितम् । ते लभन्ते जनाः स्वर्गा-पवर्गादिसुखश्रियम् ॥५॥
धर्मादधिगतैश्वर्यो धर्ममेव निहन्ति यः । कथं शुभगतिर्भावी स स्वामिद्रोहपातकी ॥६॥
अङ्कस्थाने भवेद्धर्मः शून्यस्थाने ततः परम् । अङ्कस्थाने पुनर्भग्ने सर्वशून्यं दरिद्रता ॥७॥
अत्र कथा-कुण्डाह्वनगरे सोम-वीर-धीरा-मराह्वयाः । चत्वारः सुहृदः प्रीति-भाजो मिथोऽभवंस्तदा ॥८॥
धनार्जनकृतेऽन्येद्युश्चलिताः सुहृदः समे । मञ्जुशैले वरं सिद्ध-पुरुषं भेजुरादरात् ॥९॥
षण्मासान्ते नृणां तेषां कुर्वतां तस्य सेवनम् । पुमान् सिद्धो जगौ यूयं वरं मार्गयताऽधुना ॥१०॥
ते नरा जगदुर्देहि धनं दारिद्र्यभेदकम् । सिद्धो जगौ च तुम्ब्या हि फलानि लात पूर्वकम् ॥११॥
योगे पुष्यार्कयोर्मध्यं-दिने वारान् शतं महीम् । खेटयित्वा प्ररोप्यन्ते तुम्बीबीजानि भावतः ॥१२॥
मण्डपः क्रियते तस्यो-परि छायाकृते वरः । ओँ ह्रीँ मिति जल्पेत लक्षमेकं रहःस्थितः ॥१३॥
इत्यादिविधिनोप्तानि तुम्बीबीजानि सादरम् । तासां बीजानि गृह्यन्ते पुनर्वपनहेतवे ॥१४॥
चूर्णीकृत्य च पत्राणि स्थाप्यन्ते निजसन्निधौ । त्रपुकर्षं कष्टयन्तश्च चूर्णं वालमितं क्षिपेत् ॥१५॥
क्षिप्त्वाऽमत्रे च तद्वह्नौ धम्यते प्रहराष्टकम् । सर्वं भविष्यति स्वर्णं जात्यं दारिद्र्यभेदकम् ॥१६॥
एव चेद्यदि युष्माभि-र्मदुक्त क्रियतेऽधुना । तदा गच्छति दारिद्र्यं भवतो मन्दिरान्ननु ॥१७॥
श्रुत्वैतत् सिद्धमानस्य बीजानि तानि तत्क्षणात् । लात्वा ते सुहृदः स्वस्व-सदनं समुपागमन् ॥१८॥

गुरूक्तविधिना येन बीजान्युप्त्वाऽवनीतले । कृत्वा चामीकरं भूरि सुखीभूतं चिरं पुनः ॥१९॥
[ विधिनैव कृता धर्मक्रिया शिवप्रदा भवेत् ]
द्वितीयेन नरेणार्द्धक्रियां कृत्वान्तरान्तरा । साधितं रजतं किञ्चित् सुखीजातो नरः स च ॥२०॥
तृतीयेन गुरुप्रोक्ते स्तोके विधौ कृते सति । कृतं लोहं चतुर्थश्च तस्मिँश्चक्रे च हीलनाम् ॥२१॥
स च लोहमपि प्राप्य(५) दुःखी जातो भृशं सदा ।
एवं पुण्यमपि कृतं सुख [ पुण्यात् सुखं पापात् ध्रुवं ] दुःखादि जायते ॥२२॥
देवपूजाप्रतिक्रान्ति-मुख्यानि निखिलान्यपि । कुर्वन् जीवः समाप्नोति सुखदुःखादि (माह्लादि) सन्ततम् ॥२३॥
सोमः सङ्घेन संयुक्तो गत्वा शत्रुञ्जयाचले । भूरि धनं व्ययित्वाऽऽशु पुण्यौघमार्जयद् बहु ॥२४॥
क्रमात् स्वं विभवं सप्त क्षेत्रे वप्त्वाखिलं मुदा । दीक्षां जग्राह देवेन्द्र-सूरिपार्श्वे शिवाप्तये ॥२५॥
सोमर्षिः सिद्धभूमिश्चे तपस्तप्त्वा बहु क्रमात् । अवाप्य केवलज्ञानं ययौ कैवल्यपत्तने ॥२६॥
वीरधीरावपि प्रौढ-भावाच्छत्रुञ्जयाचले । यात्रां कृत्वाष्टमे स्वर्गे ययतुः स्वायुषः क्षये ॥२७॥
चतुर्थो भावरहितोऽप्राप्य द्रव्यमसातवान् । यावज्जीवमभूद्दुःखी विना धर्मं भवे भवे ॥२८॥
अस्मिन् शत्रुञ्जये देवान् नौति यः कुरुते तपः । स एव लभते स्वर्गा-पवर्गादिसुखं द्रुतम् ॥२९॥
यतः–"अन्यतीर्थेषु यद् यात्रा-शतैः पुण्यं भवेन् नृणाम् । तदेकयात्रया पुण्यं शत्रुञ्जयगिरौ स्फुटम् ॥३०॥
एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः प्रमुच्यते ॥३१॥
धर्मोपदेशमित्यादि श्रुत्वा धर्मजिनान्तिके । अनेके भविनो मुक्तिं ययुः शत्रुञ्जयाचले ॥३२॥

इति धर्मजिनस्य शत्रुञ्जयागमनस्वरूपम्

## ॥ अथ श्रीशान्तिजिनस्य शत्रुञ्जयागमनस्वरूपम् ॥

हस्तिनागपुरे विश्व-सेनस्य मेदिनीपतेः । अचिराह्वा प्रिया जाता शीलादिगुणशालिनी ॥१॥
चतुर्दशमहास्वप्न-सूचितं नन्दनं वरम् । ज्येष्ठासितत्रयोदश्या-मचिरा सुपुत्रे सुखम् ॥२॥
हरिणा विहिते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा शान्तिकुमारेति नामाऽदात् तनयस्य तु ॥३॥
क्रमाच्चक्रिपदं प्राप्य त्यक्त्वा च संयमश्रियम् । लात्वा कर्मक्षयात् प्राप शान्तिर्ज्ञानमनुत्तरम् ॥४॥
बोधयन् भविनो भूरीन् शान्तिस्तीर्थङ्करः क्षितौ । सिद्धाद्रौ समवासार्षीद् भूरिसाधुसमन्वितः ॥५॥
शुद्धधर्मौषधेनैव भावयन्नात्मनो मनः । भवी भवति कल्याण-सातभाक् तमसां क्षयात् ॥६॥
भीमाह्वनगरे भीम-भूपस्याभूत् सुरी प्रिया । बहूपयाचितैः पुत्रोऽजनि जीवाभिधानभृत् ॥७॥
वर्धमानः क्रमात् पुत्रो जीवितादतिवल्लभः । आसीद् भूपस्य लोकानां सदारामकुमारवत् ॥८॥
राज्ञा ध्यातं सुतायाऽस्मै वैद्यैर्दास्यामि स्वौषधम् । तथा यथा भवेत् सूनुर्नीरोगोऽय चिरं खलु ॥९॥
तत आकार्य चत्वारो वैद्याः पृष्टा इति स्फुटम् । दत्तौषधं तथा सूनो-र्यथा रोगो न जायते ॥१०॥
आद्यो वैद्यो जगावग्रे-तनं हन्ति ममौषधम् । यदि रोगो भवेन्नैव तदा हिनस्ति तं द्रुतम् ॥११॥

राजा प्रोवाच भो वैद्य ! सृतं तवौपधैर्मम । सदसद्रोगसत्तां तु केवली वेत्ति नापरः ॥१२॥
द्वितीयः प्राह यद्यस्ति रोगस्तं हन्ति स्वौपधम् । न चेत्तदा गुणं नैव दोष नैव करोत्यलम् ॥१३॥
राजा प्राहौषधैस्ताव-कीनैः सृतं सुतस्य मे । रोगस्य सदसत्सत्तां वेत्ति ज्ञान्येव नापरः ॥१४॥
तृतीयो वैद्यराट् प्राह रोगो यद्यस्ति पूर्वतः । तदा तं हन्ति नान्यं तु भवन्तं हन्ति चौपधम् ॥१५॥
चतुर्थोऽवक् पुराचीन-विद्यमान-भविष्यतः । रोगान् ममौषधं हंति पुष्टिं च कुरुते तनोः ॥१६॥
दापितं भूभुजा तुर्य-मौषधं सूनवे तथा । आजन्माऽजनि नीरोगो यथा भूपतिनन्दनः ॥१७॥
उपनयोऽत्र—दानशीलतपोभावा बलिनः स्युर्यथोत्तरम् । भावना विद्यते तुर्यौ-षधतुल्या शिवप्रदा ॥१८॥
इत्यादिधर्ममाकर्ण्य भव्या जीवा अनेकशः । लात्वा व्रतं ययुर्मुक्तिं सिद्धपर्वतमस्तके ॥१९॥
तत्र वर्षाचतुर्मासं स्थितः षोडश तीर्थकृत् । बोधयामास भूयिष्ठ-भव्यान् जिनमते क्रमात् ॥२०॥
एवं विहारमातन्वन् शान्तिनाथोऽवनीतले । शत्रुञ्जये समायातो बहून् वारान् सुसाधुयुग् ॥२१॥

★ इति श्रीशान्तिजिनस्य शत्रुञ्जयागमनस्वरूपम् ★

॥ अथ श्रीकुन्थुतीर्थङ्करस्य शत्रुञ्जयागमन-समवसृतिस्वरूपम् ॥

हस्तिनागपुरे सूर-भूपस्य श्रीरभूत् प्रिया । वैशाखासितभूतेष्टा-तिथौ सूतेस्म सा सुतम् ॥१॥
वासवेन कृते जन्मो-त्सवे जनुर्महः पिता । कृत्वा सूनोर्ददौ नाम कुन्थुः मज्ञतसात्त्विकम् ॥२॥
साधयित्वाऽथ षट्खण्डां भुवं त्यक्त्वा च रेणुवत् । जग्राह संयमं दत्त्वा दानं हायनमात्रतः ॥३॥
क्षिप्त्वा कर्म्म क्रमात् प्राप्य ज्ञानं श्रीकुंथुतीर्थकृत् । बोधयन् भविनः शत्रु-ञ्जये तीर्थे समोयिवान् ॥४॥
तत्र द्वादश पर्षत्सु-पविष्टासु जिनेश्वरः । दातुं धर्म्मोपदेशं तु प्रववर्त्ते शिवप्रदम् ॥५॥
अत्र कथा—सिद्धाह्वनगरे सिद्ध-सेनस्य मेदिनीपतेः । प्रजाः पालयतः सर्वाः सुखवन्त्योऽभवन् क्रमात् ॥६॥
तत्र भीमाभिधः कुम्भ-कारोऽतीव विचक्षणः । परजल्पनभूत्यादौ कुरुतेऽणक्षरं सदा ॥७॥
परेषां गमने वस्त्र-भूषादिपरिधापने । जल्पनं वीक्ष्य कुरुतेऽणक्षरं कुम्भकृत् सदा ॥८॥
अणक्षरोऽयमायाति याति शेते प्रजल्पति । जल्पन्निति जनो नाम तस्य कुम्भकृतो ददौ ॥९॥
लोकानां जल्पनादीनि कृत्यानि वीक्ष्य कुम्भकृत् । अनीशः सहितुं वास-मरण्ये विजने व्यधात् ॥१०॥
तृणात्मके कुटीरे तु तिष्ठन् नित्यं स कुम्भकृत् । अश्वापहृतभूपेन तत्राऽऽयातेन वीक्षितः ॥११॥
बुभुक्षितो नृपः स्वान्न-पानदानेन तत्क्षणम् । भक्त्या कुम्भकृता स्वश्री-चक्रे च मुमुदे यथा ॥१२॥
पुरीमध्ये तमानीय वितीर्य सदनं नृपः । भूरिद्रव्यप्रदानेन कुम्भकारममोदयत् ॥१३॥
इतोऽरण्ये वदरिका-फलानि तैलिकाङ्गजाम् । चुटन्तीममरीतुल्यां वीक्ष्य रागी नृपोऽजनि ॥१४॥
तामुद्वाह्य लसद्वस्त्रा-भरणां स्फारसद्मनि । स्थापयामास भूपालः पौलोमीं निर्जरेशवत् ॥१५॥
लमतसुखामनासीनां वर्यवेषधरां मे ताम् । मोटयन्तीं मुखं राज-मार्गे यान्तीं सखीयुताम् ॥१६॥

प्रजल्पन्तीं निजोत्कर्षं राज्ञीं तैलपनन्दिनीम् । निरीक्ष्येर्ष्यां वितन्वानां (नो) प्राहेत्यणच्चरस्तदा ॥१७॥
"कल्ले घोरज वीणती अज्ज न जाणइ खंख (तैल) । पुणरवि अडविं करसि घर न सहू एह अणक्ख ॥१८॥
ततश्च कुम्भकृद् गत्वा पुराद्बहिर्निकेतनम् । कृत्वा तस्थौ वितन्वान ईर्ष्यां सर्वजनेष्वपि ॥१६॥
इतस्तत्र समायाता धर्म्मसुन्दरसूरयः । अणच्चरस्य पुरतो जगदुर्धर्मदेशनाम् ॥२०॥
यतः–"कोहो पीइं पणासेइ माणो विणयनासणो । माया मित्ताणि नासेइ लोभो सव्वविणासणो ॥२१॥
कोह पयठो देहघरि तिन्नि विकार करेइ । अप्पं तावइ परतपइ परतह हाणि करेइ ॥२२॥
जल्पनादि परेषां ये लक्ष्मीं चैच्य रुपन्ति च । ते लभन्ते इहाऽमुत्र विपदश्च पदे पदे ॥२३॥
अणच्चरो जगावीर्ष्यां परेषु कुर्वता मया । उपार्जितं तमो यद्य-च्छुट्टनं स्यात्ततः कथम् ? ॥२४॥
गुरुगोक्तं महेला-गो-बाल-संयतघातिनाम् । शुद्धिर्भवति सिद्धाद्रौ तपो वितन्वतां नृणाम् ॥२५॥
यतः–"सिंहव्याघ्राहिशंबर-पक्षिणोऽन्येऽपि पापिनः । दृष्ट्वा शत्रुञ्जयेऽर्हन्तं भवन्ति स्वर्गगामिनः ॥२६॥
न रोगो न च सन्तापो न दुःखं न वियोगिता । न दुर्गतिर्न शोकश्च पुंसां शत्रुञ्जयस्पृशाम् ॥२७॥
श्रुत्वैतद् गुरुणा प्रोक्त-मणच्चरोऽपि कुम्भकृत् । ययौ शत्रुञ्जये क्षेप्तुं पापपुञ्जं पुरार्जितम् ॥२८॥
तत्र षष्ठाष्टमादीनि तपांसि तस्य कुर्वतः । उत्पन्नं केवलज्ञान-मणच्चरस्य गेहिनः ॥२६॥
देवतादत्तलिङ्गोऽथ स्वर्णपद्मे निविश्य च । कुम्भकृत्केवली धर्मो-पदेशं प्रददाविति ॥३०॥
यतः–"धम्मो मंगलमउलं ओसहमउलं च सव्वदुक्खाण । धम्मो वलं च विउलं धम्मो ताणं च सरणं च ।३१।
इत्यादि देशनां तस्य श्रुत्वा भव्याङ्गिनस्तदा । श्राद्धधर्म्मं यतिधर्म्मं जगृहुः शिवशर्मदम् ॥३२॥
दो चेव जिणवरेहिं जाइजरामरणविप्पमुक्केहिं । लोगम्मि पहा भणिया सुसमणु-सुसावओ वावि ॥३३॥
अनेकसाधुसंयुक्तः कुम्भकृत् केवली क्रमात् । आयुःक्षये ययौ मुक्ति-नगरीं सिद्धपर्वते ॥३४॥
एवं धर्मोपदेशेन प्रबोध्य भविनो बहून् । कुन्थुतीर्थङ्करोऽन्यत्र व्यहार्षीत् सिद्धपर्वतात् ॥३५॥

卐 इति श्रीकुन्थुतीर्थङ्करस्य शत्रुञ्जयागमनसमवसृतिस्वरूपम् 卐

---

॥ अथ अरजिनस्य शत्रुञ्जयागमनसम्बन्ध ॥

हस्तिनागपुरे वर्ये सुदर्शनमहीपतिः । पपाल पृथिवीं सुष्ठु न्यायमार्गेण सन्ततम् ॥१॥
तस्य देव्यभिधा भार्या गजादिस्वप्नसूचितम् । असूत तनयं चञ्च-ल्लक्ष्मलक्षणलक्षितम् ॥२॥
वासवेन कृते जन्मो त्सवे जन्मोत्सवं पिता । कृत्वा सूनोररेत्याह्वा-मदात् सज्जनसाक्षिकम् ॥३॥
साधयित्वा क्रमात् पृथ्वीं षट्खण्डां चक्रिराडरः । पपाल पृथिवीं न्याय-मार्गेण सन्ततं ध्रुवम् ॥४॥
त्यक्त्वा राज्यं व्रतं लात्वा तप्त्वा तीव्र तपः पुनः । अवाप केवलज्ञान-मरतीर्थकरः क्रमात् ॥५॥
अरस्तीर्थेश्वरः क्षोणीं पावयन् पदरेणुभिः । अनेकसाधुसंशोभी सिद्धाद्रौ समवासरत् ॥६॥
तत्रेति भव्यजीवानां पुरतो धर्म्मदेशनाम् । चकारारजिनाधीशो वाण्या मधुरया तदा ॥७॥

महीशानपुरे श्रीदः श्रेष्ठी श्रीदोपमः श्रिया । पुत्रोऽभून्मदनस्तस्य पत्नी प्रीतिमतिः सती ॥८॥
कामाभिलापकोऽत्यन्तं मदनो गेहिनीयुतः । क्षणमेकं विना पत्न्या स्थातुं शक्नोति साऽपि न ॥९॥
मदनो जनकं पृष्ट्वा सार्थवाहाभिधानभृत् । भूरिक्रयाणकैः पृष्ठ-वाहानभृत भूरिशः ॥१०॥
सुदिने मदनो लक्ष्मी-कृतेऽन्यविषयं प्रति । यियासुः भामिनीं प्राह त्वमत्रास्थाः सुखं प्रिये ! ॥११॥
पत्न्यवग् न विनाऽत्र त्वां क्षणं स्थातुं प्रभुः प्रभो ! । मदनः प्राह न स्थातुं त्वां विनेह प्रियोत्तमे ! ॥१२॥
साम्प्रतं दुष्करं दूर-गमनं विद्यते प्रिये ! । तेन त्वमत्र तिष्ठाद्य रमाहेतोर्व्रजाम्यहम् ॥१३॥
स्थापितापि बलात् पत्या पत्न्यचालीत् समं तदा । मदनो नगराद् बाह्योद्याने वासमुपागमत् ॥१४॥
तत्र तुङ्गपटीं कृत्वा मदनो गेहिनीसखः । तस्थौ रात्रौ तदाऽभाणी-देवं सहचरीं प्रति ॥१५॥
यदि पत्या समं पत्नी विदेशं व्रजति स्वयम् । प्रतिबन्धात् तदा पत्न्याः पतिः स्याद् दुःशको दृढम् ॥१६॥
अतिष्ठन्तीं प्रियां सुप्तां मुक्त्वा तत्र तथास्थिताम् । अचलन्मदनश्छन्नं जजागार प्रिया प्रगे ॥१७॥
चलितं रमणं मुक्त्वा गतं ज्ञात्वा प्रिया तदा । रोदं रोदं भृशं स्थित्वा तत्र दध्याविदं हृदि ॥१८॥
अहं मुधा समं पत्या चलन्त्यस्मि जडाशया । सद्वस्त्राभरणा नारी विना कान्तं न शोभते ॥१९॥
यतः-भत्तारविरहिआणं होइ पिया आलओ महिलीआणं । अह पुण पुण्णेहिं विणा सो पुण वइरी समो जाओ ॥
तावच्चिअ हिययइट्ठा माऊणं पिऊण बंधवाणं च । जाव न धाडेइ पई महिलं नीआओ गेहाओ ॥२१॥
ताव सिरी सोहग्गा ताव य गुरुआउ होंति महिलाओ । जाव य पई महग्घं सिणेहपक्खं समुव्वहइ ॥२२॥
माया पिईया भाया वच्छल्लं तारिसं करेऊणं । अवराहविरहिआए कमहुज्झणासियं मव्वं ॥२३॥
ध्यात्वेत्याभरणादीनि बद्ध्वा पोट्टलके स्वयम् । श्वेताम्बरधरा स्वौकः समागान्मदनप्रिया ॥२४॥
पपात पादयोः श्वश्र्वाः स्नुपा यावत्सुभक्तितः । तावत् श्वश्रूर्जगौ किन्तु सूनोर्मङ्गलमस्ति मे ॥२५॥
स्नुपाऽवक् कुशली पुत्र-स्तव मां पदबन्धकम् । मत्वा मुक्त्वा रहोऽचालीत् दूरदेशं प्रति ध्रुवम् ॥२६॥
सद्वस्त्राभरणा गेहे यदि पत्या विना कृता । स्थास्याम्यहं तदा मे न सन्मार्गे तिष्ठते मनः ॥२७॥
एवं ध्यात्वा मयोत्तार्य भूषणादि शरीरतः । एवंविधा समायाता भवत्या श्वश्रु सन्निधौ ॥२८॥
सबलाहारताम्बूला-दिकं रागविधायकम् । शीलरक्षाकृते प्रीति-मती समत्यजत् तदा ॥२९॥
पत्यौ समागते प्रीति-मती सद्वसनादिभृत् । पत्युर्यथोचितं चक्रे विनयं जल्पनादिभिः ॥३०॥
मातापित्रोर्गिरा पत्नी-विहितं सत्यु(सू)चितं च तत् । मत्वा सन्मानयामास प्रियां भूषणदानतः ॥३१॥
पितुरग्रे बहुलक्ष्मीं ढौकयित्वा नतिं व्यधात् । ततो मातुः पदौ भक्त्या ननाम मदनः सुतः ॥३२॥
क्रमाद् गुर्वन्तिके श्रुत्वा चारित्रस्य फलं शिवम् । सप्रियो मदनो दीक्षां जग्राह निर्वृतिप्रदाम् ॥३३॥
शुद्धं चारित्रमाराध्य मदनः संयतः क्रमात् । शत्रुञ्जये तपस्तप्त्वा श्रेयःपुर्यां समीयिवान् ॥३४॥
प्रीतिमत्यपि चारित्रमाराध्य शुद्धमादरात् । प्रथमे ताविषे जातोऽमरो भासुरविग्रहः ॥३५॥
इत्याद्यरजिनाधीश-वचः श्रुत्वा जनो बहुः । तत्र तीर्थे ययौ मुक्तिं सर्वकर्म्मक्षयात् क्रमात् ॥३६॥
तीर्थे तत्र दिनान् भूरीन् स्थित्वा श्रीअरतीर्थकृत् । भव्यान् बोधयितुं चक्रे विहारमन्यनिर्वृति ॥३७॥

❀ इति अरजिनस्य शत्रुञ्जयागमनसम्बन्धः ❀

॥ अथ मल्लिजिनस्य शत्रुञ्जयागमनसम्बन्ध ॥

मिथु(थि)लाह्वपुरे कुम्भ-भूपपत्नी प्रभावती । असूत तनयं कुम्भि-मुख्यस्वप्नादिसूचितम् ॥१॥
जृम्भारिणा कृते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा मल्लिकुमारीति नाम पुत्र्या अदान्मुदा ॥२॥
गृहावासं क्रमात्यक्त्वा लात्वा वृत्तमनुत्तमम् । मल्लिः प्रापाऽमलं ज्ञानं समस्ततमसां क्षयात् ॥३॥
मल्लिनाथोऽन्यदा कुर्वन् विहारं बोधयन् जनान् । सिद्धाद्रौ समवासार्षीद् भूरिसाधुसुरश्रितः ॥४॥
सुरैर्वप्रत्रये रूप्य-रत्नहेममये कृते । उपविश्य दिदेशेति मल्लिनाथोऽथ देशनाम् ॥५॥
वन्दे जन्म मनुष्यसम्भवमहं किं तद्विहीनं गुणै स्तानेव त्वरितं स्तुमः किमसमां लक्ष्मीं विना तैर्गुणैः।
तां लक्ष्मीं समुपास्महे किमनया दानादिभिर्वन्ध्यया, दानं स्तौमि वृथैव भावरहितं भावो हि भरतं (हितैषी) ततः
अत्र कथा—रमापुरे धरापाल-राज्ञो मन्त्री धनाभिधः । राज्यकार्यं वितन्वानो ररञ्ज जनता-नृपौ ॥७॥
यतः—नरपतिहितकर्त्ता द्वेष्यतामेति लोके, जनपदहितकर्त्ता त्यज्यते पार्थिवेन ।
इति महति विरोधे वर्त्तमाने समाने, नृपतिजनपदानां दुर्लभः कार्यकर्त्ता ॥८॥
एकदाऽवग् नृपो मन्त्रिन् ! परीक्ष्यैव भटास्त्वया । स्थापनीया ममोपान्ते राज्यवर्द्धनहेतवे ॥९॥
अपरीक्ष्य कृते कार्ये दुःखं भवति निश्चितम् । सुपरीक्ष्य कृते कार्ये जायते सुखमङ्गिनाम् ॥१०॥
अत्रान्तरे समायाता भटाः पञ्चशती वराः । मिलिताः क्ष्मापतेः प्रोचु-र्भविष्यामोऽनुगा वयम् ॥११॥
रैदानेन तु सन्मान्य भूपोऽवग् मन्त्रिणं प्रति । शिष्टादिज्ञप्तये कार्या परीक्षैषां त्वयाऽधुना ॥१२॥
दापयित्वा धनं तेषां परीक्षणकृते वरम् । शयनाय ददे शय्या सायमेका तु मन्त्रिणा ॥१३॥
ममेयमर्पिता शय्या मन्त्रिणा शयनाय तु । स्वपिहि त्वं धरापीठे वक्तव्यं नाधिकं त्वया ॥१४॥
एवं ते कलहं वाढं कुर्वाणाः सुभटा मिथः । विरामं तेनिरे नैव क्षणमेकं क्षु(क्रु)धाकुलाः ॥१५॥
दृष्ट्वा तद् मन्त्रिराट् तत्र सर्वसुभटचेष्टितम् । जगाद भूपतेरग्रे समेत्यामूलचूलतः ॥१६॥
भटा मूर्खतमा एते कुर्वते कलहं मिथः । अतो नैको भटो भृत्यो विधेयो ह्येषु साम्प्रतम् ॥१७॥
यतः-सर्वस्यात्मा गुणवान् सर्वः परदोषदर्शने कुशलः । सर्वस्य चास्ति वाच्यं न चात्मदोषान् वदति कश्चित् ॥१८॥
परवादे दशवदनः परदोषनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥१९॥
मुक्ता भूमीभुजा ते तु गता अन्यावनीभुजाम् । पार्श्वे न मानितास्तैस्ते कृत्वा परीक्षणं पुनः ॥२०॥
यावज्जीवं ततस्ते तु कुर्वन्तः कलहं मिथः । बभूवुर्दुःखिता अत्र परत्र च पदे पदे ॥२१॥
एवं विरोधिनो ये ये मिथो न मन्वते गुरुम् । ते तेऽत्र परलोकेऽपि भवन्ति दुःखिनश्चिरम् ॥२२॥
ये ये जना गुरुं देवं तातं च जननीं (च मन्वते) वृषम् । ते ते स्वर्गापवर्गादि-सुखभाजो भवन्ति हि ॥२३॥
इत्यादि श्रीजिनेन्द्रोक्तं श्रुत्वा भूरिजनास्तदा । स्वर्गापवर्गसातानि लेभिरे तत्र पर्वते ॥२४॥
एवं परीक्ष्य मन्त्रीशो भटान् पञ्चशतीं वरान् । चक्रे यान् कुर्वते सेवां ते भक्त्या भूपतेः क्रमात् ॥२५॥
एकदा स नृपो मंत्रि-भटादिबहुसंयुतः । शत्रुञ्जये ययौ नन्तुं युगादिजिनपुङ्गवम् ॥२६॥
तत्र श्रीऋषभं तेषां भटानां ध्यायतां मुदा । उत्पन्नं केवलज्ञानं मन्त्रीशस्य तदा पुनः ॥२७॥

क्रमात् सर्वेऽपि सिद्धाद्रौ मन्त्रीशाद्या भटाश्च ते । मुक्तिपुर्यां समाजग्मु-र्निःशेषकर्म्मणां क्षयात् ॥२८॥
मल्लितीर्थकृतो वाचं-यमा अष्टायुतं तदा । शत्रुञ्जये इहैवेयु-र्मुक्तिपुर्यां तमःक्षयात् ॥२९॥

इति मल्लिजिनस्य शत्रुञ्जयागमनसम्बन्धः

॥ अथ मुनिसुव्रतजिनस्य शत्रुञ्जयागमनस्वरूपम् ॥

श्रीमद्राजगृहे राजा सुमित्राह्वो नयी धनी । तथाऽरक्षद् जनान् सर्वे यथा ते सुखिनोऽभवन् ॥१॥
तस्य पद्मा प्रिया कुक्षि-मुख्यसत्स्वप्नसूचितम् । ज्येष्ठासिताष्टमीरात्रौ सुषुवे नन्दनं वरम् ॥२॥
जम्भारिणा कृते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा सूनोर्ददौ नाम मुनिसुव्रत इत्यपि ॥३॥
क्रमात् प्राप्य व्रतं क्षिप्त्वा सर्वकर्म्मव्रजं समम् । लेभे च केवलज्ञानं मुनिसुव्रततीर्थकृत् ॥४॥
श्रीमुनिसुव्रतो भूरि-भव्यान् प्रबोधयन् भुवि । सिद्धाद्रौ समवासार्षीत् साधु-निर्जरसंयुतः ॥५॥
तत्र द्वादश संसत्सु-पविष्टासु यथास्थिति । श्रीसुव्रतो ददौ धर्मो-पदेशं भविनां पुरः ॥६॥
तथाहि—कल्याणनगरे भानु-भूपस्य रुक्मिणी प्रिया । सूते स्म तनयं चारु-लक्षणैर्लक्षितं वरम् ॥७॥
जन्मोत्सवं नृपः कृत्वा सूनो रूपाभिधां ददौ । धात्रीभिः पञ्चभिः स्तन्य-पानैः संवर्द्धितः स च ॥८॥
पाठितो यौवनप्राप्तः पुत्रो भीमनृपाङ्गजाम् । तातेनोद्वाहितो भोगान् भुङ्क्ते स्म गेहिनीसखः ॥९॥
मोदका एव रोचन्ते तस्य सूनोर्निरन्तरम् । मोदकप्रिय इत्यासी-न्नाम लोकेऽभितः पुनः ॥१०॥
वसन्ते सोऽन्यदा प्रात-रुत्थाय मोदकप्रियः । नर्त्तनं कारयामास नर्तकान् नर्त्तकीयुतान् ॥११॥
मध्याह्ने मोदकान् वर्यान् जनन्या प्रेषितांस्तदा । आदौ परिजनस्यादात् कुमारोऽत्ति ततः स्वयम् ॥१२॥
यतः—"उत्तमैः सह साङ्गत्यं पण्डितैः सह संकथाम् । अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति"॥१३॥
अमृतं शिशिरे वह्नि-रमृतं क्षीरभोजनम् । अमृतं राजसन्मान-ममृतं प्रियदर्शनम् ॥१४॥
वैकालिकं पुनः कृत्वा मोदकैरनुगान्वितः । रात्रियामान्तिके नृत्यं विससर्ज नृपाङ्गजः ॥१५॥
स्वयं पञ्च नमस्कारान् गुणयित्वा शतत्रयम् । यावत् स्वपिति तावत्तु वायुर्विनिर्गतो गुदात् ॥१६॥
नाशायां पूतिगन्धं तु प्रविष्टमसुखप्रदम् । ज्ञात्वा मोदकरुग् दध्यौ वस्तुनोऽशुचितेदृशी ॥१७॥
मिष्टान्नान्यपि विष्ठासा-दमृतान्यपि मूत्रसात् । स्युर्यस्मिन्नङ्गकस्यास्य कृते कः पापमाचरेत् ? ॥१८॥
रसासृग्-मांसमेदोऽस्थि-मज्जाशुक्रान्त्रवर्चसाम् । अशुचीनां पदं कायः शुचित्वं तस्य तत्कुतः ? ॥१९॥
नवस्रोतःश्रवद्विस्र-रसनिःष्यन्दपिच्छले । देहेऽपि शौचसङ्कल्पो महन्मोहविजृम्भितम् ॥२०॥
अशुचिसुभाषितान्यत्र वाच्यानि—
यद्येवं मोदका वर्या अपि दुर्गन्धतां श्रिताः । तदायं विग्रहो दुष्टगन्धतां नाश्रयिष्यति ? ॥२१॥
कस्तूरीप्रभृतीन्येव वस्तून्यङ्गाश्रितान्यपि । क्षणादशुचितां भेजु-रहो ईदृग् जगत् खलु ॥२२॥
इत्याद्यशुचितां सर्व-विश्वस्य मोदकप्रियः । मत्वा त्यक्त्वेमराज्यादि गुर्वन्ते संयमं ललौ ॥२३॥
तलितं गुलितं सर्वं स्निग्धाहारमतः परम् । गृहीष्याम्यहकं नैव ह्येवमादाद‌भिग्रहम् ॥२४॥

यतः–जह चयइ चक्कवट्टी पवित्थरं तत्तिग्रं मुहुत्तेण । न चयइ तहा अहन्नो दुब्बुद्धी खप्परं दमग्रो ॥२५॥
तीव्रं तपो वितन्वानः सम्प्राप्तावधिचित् क्रमात् । बोधयन् भविनो भूरीन् सिद्धाद्रौ यतिरीयिवान् ॥२६॥
वितन्वानः शुभं भावं मोदकप्रियसंयतः । तत्राद्रौ केवलज्ञानं प्राप्य सिद्धिं समीयिवान् ॥२७॥
यतः-संसारबीजभूतानां कर्म्मणां जरणादिह । निर्जरा सा स्मृता द्वेधा सकामा कामवर्जिता ॥२८॥
ज्ञेया सकामा यमिना-मकामा त्वन्यदेहिनाम् । कर्मणां फलवत्पाको यदुपायात् स्वतोऽपि च ॥२९॥
सदोपमपि दीप्तेन सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमान-स्तथा जीवो विशुद्धयति ॥३०॥
अनशनमौनोदर्यं वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ॥३१॥
प्रायश्चित्तं वैयावृत्त्यं स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभं ध्यानं षोढेत्याभ्यन्तरं तपः ॥३२॥
दीप्यमाने तपोवह्नौ बाह्ये चाभ्यन्तरेऽपि च । यमी जरति कर्म्माणि दुर्जराण्यपि तत्क्षणात् ॥३३॥
इत्यादि-रुचिरां धर्म्म-देशनां मुनिसुव्रतः । वितीर्य भविनो भूरीन् गमयामास निर्वृतिम् ॥३४॥
तत्रस्थस्य प्रभोर्लक्ष-त्रयं वाचंयमा वराः । सम्प्राप्य केवलज्ञानं मुक्तिपुर्यां समीययुः ॥३५॥

❀ इति मुनिसुव्रतजिनस्य शत्रुञ्जयागमनस्वरूपम् ❀

॥ अथ नमिजिनेश्वरस्य शत्रुञ्जयसमागमनस्वरूपम् ॥

मिथिलायां पुरि श्रीमान् विजयक्षोणिनायकः । प्रशशास प्रजां न्याय-मार्गेण धर्म्मतत्परः ॥१॥
तस्य वप्रा प्रिया कुम्भि-मुख्यसुस्वप्नसूचितम् । श्रावणस्यासिताष्टम्या-मसूत तनयं वरम् ॥२॥

इन्द्रकृतं जन्मोत्सवादि ज्ञानप्राप्तिपर्यन्तमत्र वाच्यम् ।

नमिनाथो बहून् भव्यान् बोधयन् पृथिवीतले । सिद्धाद्रौ समवासार्षीद् भूरिसाधुसुरार्चितः ॥३॥
तत्रैवमुपदेशं ददौ-मुञ्जाभिधे पुरे मुञ्ज-श्रेष्ठिनो धर्म्मशालिनः । पद्मापत्नीभवः पुत्रो मण्डनोऽजनि सुन्दरः ॥४॥
वर्धमानः क्रमाद् विज्ञ समीपे पाठितस्तथा । यथा कर्म्मसु धर्म्मेषु कुशलोऽजनि मण्डनः ॥५॥
यतः–"विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥६॥
श्रेष्ठिनोक्तं सदा कार्यं चकार मण्डनाङ्गजः । विनीतः सरलस्वान्तः सर्वेषां रोचितोऽभवत् ॥७॥
श्रेष्ठी शिक्षां ददानस्त्व-न्यदा प्राह सुतं प्रति । वृद्धस्य नोत्तरो देयः कदाचिद्धितमिच्छता ॥८॥
अङ्गीकृत्य पितुर्वाणी मन्येद्युर्मदनः सुतः । वितीर्य सदनद्वारं शय्यायां समुपाविशत् ॥९॥
इतः श्रेष्ठी समेतोऽवग् भोः पुत्रोत्तिष्ठ साम्प्रतम् । उद्घाटय गृहद्वारं कार्यमस्ति ममाऽधुना ॥१०॥
पितुर्वचः स्मरंश्चित्ते मदनः सरलाशयः । ददौ प्रत्युत्तरं नैव मनाग् बिभ्यन् तमोभयात् ॥११॥
पित्रा बहूदितः पुत्रो घटीचतुष्टयान्तिके । द्वारमुद्घाटयामास गेहस्य स्वार्थहेतवे ॥१२॥
पिता प्राह कथं सूनो ! त्वया नोद्घाटितं गृहम् । पुत्रो जगौ मया तात ! भवदीयं वचः कृतम् ॥१३॥
पिताऽवग् मद्वचश्चक्रे कथं ? ततोऽङ्गजो जगौ । तात ! त्वयोदितं पुत्र ! देयः प्रत्युत्तरो न च ॥१४॥

वृद्धस्य दीयते तस्मा-न्नार्दा प्रत्युत्तरं तव । यतः पितुर्वचः पाल्य मुत्तमैः सुखमिच्छुभिः ॥१५॥
पिताऽऽचष्टे हशो कार्ये देयः प्रत्युत्तरः सुत ! । ततः पुत्रो ददौ मिथ्या-दुष्कृतं पितरि ध्रुवम् ॥१६॥
आराध्य जनकं भूरि कालं सद्विनयाद् दृढम् । प्रव्रज्यां श्रीगुरूणान्ते ललौ मण्डननन्दनः ॥१७॥
पालयित्वा चिरं दीक्षां प्राप्य ज्ञानं चतुर्थकम् । शत्रुञ्जये ययौ भूरि-मुमुक्षुसुरसंश्रितः ॥१८॥
बाह्याभ्यन्तरभेदेन तपो द्वादशधा सदा । कुर्वाणः मदनः साधुः पञ्चमं ज्ञानमाप्तवान् ॥१९॥
ततोऽनेकजनान् जैन-धर्मे प्रबोध्य मण्डनः । पुण्डरीकाचले मुक्ति-नगरीं समुपेयिवान् ॥२०॥
इत्यादि भूरिशो धर्म्म-कथां नमिजिनेश्वरः । कथयित्वा जनांस्तत्र ग्राहयामास संयमम् ॥२१॥
नमितीर्थपतेर्धर्मो-पदेशाद् बहवो जनाः । प्राप्य ज्ञानं ययुर्मुक्तिं केचिच्च त्रिदिवं ययुः ॥२२॥
इत्यादि भूरिशो भव्यान् बोधयित्वा नमीश्वरः । विजहाराऽवनीपीठे जनान् बोधयितुं बहून् ॥२३॥

❀ इति नमिजिनेश्वरस्य शत्रुञ्जयसमागमनस्वरूपम् ❀

॥ अथ पार्श्वनाथस्य शत्रुञ्जयसमागमनस्वरूपम् ॥

वाणारसीपुरे वर्ये-ऽश्वसेनस्य महीपतेः । वामादेवीभवः पार्श्व-नामाऽभूत् तनयो वरः ॥१॥
क्रमाज्ज्ञात्वा व्रतं दीक्षां गृहीत्वा लब्धवित्तमः । शत्रुञ्जये ययौ भूरि-साधुसन्ततिसंयुतः ॥२॥

अत्र श्रीपार्श्वजिनेश्वरेण धर्म्मदेशना कृता । तथाहि—

गुरुभ्योऽप्यधिकः शिष्यः कोऽपि स्याद्गुणराजवत् । करभी-तुरगेभादि-रूपैर्योऽबूबुधद् गुरुम् ॥३॥
ददानो भीमवद् दानं जीवः प्राप्नोति स क्रमात् । जिनार्चां भक्तिभिः कुर्वन् सोमवल्लभते शिवम् ॥४॥
तथाहि—वसन्तनगरे वीर-श्रेष्ठिनोऽभूत् प्रिया रमा । कोटिद्वयमितं हेम्नां व्यवसायात् क्रमात् गृहे ॥५॥
अपत्याऽभावतः श्रेष्ठि-श्रेष्ठिन्यौ दुःखितौ सदा । पृच्छतोऽपत्यसिद्ध्यर्थं नैमित्तिकविदो जनान् ॥६॥
यतः—'देवहीनं देवकुलं यथा राज्यं विना नृपम् । विना नेत्रे मुखं नैव यथा राजति भूतले ॥७॥
तथा सत्यपि भूयिष्ठे विभवेऽभ्रंलिहे गृहे । कुलं न शोभते नृणां कदाचिन्नन्दनं विना ॥८॥
यतः—यत्र न स्वजनसङ्गतिरुच्चै-र्यत्र नैव लघुलघूनि शिशूनि ।
यत्र नास्ति गुणगौरवचिन्ता, हन्त तान्यपि गृहाण्यगृहाणि॥९॥
तयोः कुर्वाणयोर्धर्म्मं कुलायातं निरन्तरम् । रमाया उदरे जीवो-ऽवततार निशात्यये ॥१०॥
ददे दानं सुपात्रेभ्यः कुर्वेऽर्चां श्रीजिनेशितुः । पालयिष्याम्यहं शुद्धं शीलं चित्राङ्गवाणिभिः ॥११॥
इत्यादिदोहदेष्वेव जायमानेषु सन्ततम् । तस्यास्तांस्तान्वितन्वत्यास्त्रुटत्येव रमा गृहे ॥१२॥ युग्मम्
श्रेष्ठी प्राह प्रिये वर्य-दोहलेषु तवाधुना । जातेषु किं रमा याति नीरवच्छिद्रहस्ततः ॥१३॥
रमा प्राहाऽऽगतं नूनमभाग्यमात्मनो गृहे । कस्याप्यभाग्यवद्गर्भा-वतारदम्भतोऽधुना ॥१४॥
क्रमाज्जातेऽङ्गजे जन्मो-त्सवे पित्रा कृते सति । पुत्रस्य वत्सराजेति ददौ नाम शुभे दिने ॥१५॥
एवं पुत्रे द्वितीयेऽपि जाते पित्रा जनुर्म्महे । कृते नाम ददौ तस्य गुणराजेति च क्रमात् ॥१६॥

पित्रा द्वौ तनयौ लेखगृहे मुक्तौ बुधान्तिके । पठन्तौ बहुशास्त्राणि बभूवतुर्विशारदौ ॥१७॥
श्रेष्ठिनः सदने सर्व-धान्याभावेन कष्टतः । निर्वाहो दुःशको जातो दुःखी श्रेष्ठी ततोऽजनि ॥१८॥
समीपे गणकादीनां लक्ष्यार्थं श्रेष्ठिराट् सदा । पृच्छन् वितनुते सेवां वागङ्गाभ्यां सुभक्तितः ॥१९॥
यतः—रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां गणकाः चीणसम्पदाम् ॥२०॥
परगेहेषु कर्म्माणि कारं कारं दिवानिशम् । धान्य किञ्चित् समासाद्यो-दरं श्रेष्ठी बभार सः ॥२१॥
श्रेष्ठी पत्न्या समं वार्त्ता-मेव वितनुते सदा । एतयोः पुत्रयोरात्म-सद्मन्यायातयोः सतोः ॥२२॥
गता लक्ष्मीः समायातं दारिन्द्र्यं दुःखदायकम् । लक्ष्मीं विना नरा नैव शोभन्ते कर्हिचित् क्वचित् ॥२३॥
यतः—"जाई रूवं विज्जा तिन्नि वि निवडंतु कंदरे विवरे। अत्थुच्चिय परिवड्ढउ जेण गुणा पायडा हुंति" ॥२४॥
तेन तौ तनयौ कस्मै-चिन्नरायाऽर्थसाधवे । वितीर्यावां सुखी स्यावो दारिन्द्र्यं नो यतो वरम् ॥२५॥
यतः—"अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैः सह। अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम्" ॥२६॥
एवं वितन्वतो वार्त्तां श्रेष्ठिनः प्रियया समम् । एको योगी समेत्यावग् भिक्षां देहीह मेऽधुना ॥२७॥
ताभ्यामुक्तं कथं भिक्षा दीयते भवतोऽधुना । यतो न मुञ्चतेऽस्माकं गृहं दारिन्द्र्यपादपः ॥२८॥
यतः—सहोदरव्ययाः(थाः) पंच दारिद्र्यस्यानुजीविनः । ऋणं दौर्भाग्यमालस्यं बुभुक्षाऽपत्यसन्ततिः ॥२९॥
विपुलमतेरपि बुद्धि-र्नश्यति पुरुषस्य विभवहीनस्य । घृतलवणतैलतन्दुल-वस्त्रेन्धनचिन्तया सततम् ॥३०॥
योग्याचष्टाऽनयोस्सून्वो-र्लसल्लक्षणशालिनोः । सतोर्भवद्गृहे दुःखं दारिद्र्यसम्भवं कथम् ? ॥३१॥
श्रेष्ठयमाणात् सदाकारं बहिर्वर्यतमद्युति । अन्तःकटु कथं मोद-प्रदं स्यादिन्द्रवारणम् ? ॥३२॥
योगी जगौ गृहे यस्य नास्त्येकोऽपि तनूभवः । शून्यं तस्य समस्त्येव गेहं जानीहि नैगम ! ॥३३॥
यतः—"अपुत्रस्य गृहं शून्यं दिशः शून्या अबान्धवाः । मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता" ॥३४॥
श्रेष्ठयवक् क्रियते तेन हेम्ना किं येन शालिना । त्रुटतः श्रवणे दुःखं जायते देहिनां यतः ॥३५॥
योग्यवक् तनयावेतौ मह्यमर्पय सम्प्रति । येन सर्वाः कलाः कल्पाः (ल्याः) शिक्षयाम्येतयोर्द्रुतम् ॥३६॥
श्रेष्ठी बभाण तनयावर्प्येते भवतः कथं ? । त्वं तु लात्वा मम सुतौ नंष्ट्वा यास्यसि दूरतः ॥३७॥
योग्यवक् शिक्षयिष्यामि तथा ते तनयौ कलाः । यथा ताभ्यां महीशाद्या नरा रज्यन्त एव च ॥३८॥
तयोर्मध्ये भवेद् वर्य-तमो यस्तनयस्तव । स एव भवता ग्राह्यो देयोऽन्यो मम नैगम ! ॥३९॥
एवं चेत् क्रियते श्रेष्ठि-स्त्वया ममोदितं ध्रुवम् । तदा तवालये लक्ष्मी-र्भूयसी भवति ध्रुवम् ॥४०॥
मयैव शिक्षिता नूनं मनुजाः सुकलाः कलाः । श्लाघ्या भवन्ति विश्वेषां जनानां भूभुजामपि ॥४१॥
अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥४२॥
वाजि-वारण-लोहानां काष्ठ-पाषाण-वाससाम् । नारी-पुरुष-तोयानामन्तरं विद्यन्ते बहु ॥४३॥
ततः श्रेष्ठी ददौ तस्मै योगिने तनयौ निजौ । कलाशिक्षाकृते पत्न्या सार्द्धं विचार्य तत्क्षणात् ॥४४॥
उज्जयन्ताचले गत्वा योगी कलकलाभिधः । श्रेष्ठिपुत्रौ कला रम्या अशिक्षयदनेकशः ॥४५॥
आद्यः श्रेष्ठिसुतः प्रातः कृतैककगलाम्भसा । मुखात् पतति दीनार-शतपञ्चकमञ्जसा ॥४६॥
द्वितीयः कलयेभाश्व-पर्यादि रुचिरं बलम् । विधाय विक्रयात्तेषा-मर्जयद् बहुशो धनम् ॥४७॥युग्मम्॥

योगिना कथिते घस्रे श्रेष्ठिनोऽग्रे च तौ सुतौ । आनीतौ स्वकलाः सर्वा दर्शयामासतुः प्रगे ॥४८॥
आद्यं पुत्रं ललौ श्रेष्ठी द्वितीयं योगिराट् पुनः । योग्यवग् भवतो गेहे भवताद् भूयसी रमा ॥४६॥
श्रेष्ठिपुत्रं द्वितीयं तु गृहीत्वा योगिराड् ययौ । तत्र पञ्चशती रैणां दत्ते श्रेष्ठिसुतः पितुः ॥५०॥
जाते भूरिधने श्रेष्ठी भूयिष्ठविभवव्ययात् । आवासं कारयामास कैलासाचलसोदरम् ॥५१॥
यतः—"घोटकैः क्षत्रिया विप्रा व्याजेन वणिजो गृहैः । कौटुम्बिकाः कृषेर्लक्ष्मीं गमयत्यर्जितामपि" ॥५२॥
आगत्य यस्य कुर्वन्ति स्वजनाः सेवनां सदा । मान्यन्ते सधना लक्ष्म्या निर्धना न कदाचन ॥५३॥
धर्म्मकृत्यानि कुर्वाणः श्रेष्ठी दानमनर्गलम् । ददानो दानिनामादौ रेखां पुरि क्रमोद्ययौ ॥५४॥
यतः—"विद्यावृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धस्य द्वारे तिष्ठन्ति किङ्कराः" ॥५५॥
श्रेष्ठिन्याहैकदा पत्युः पुरोऽस्ति नो धनं बहु । तेनायान्ति गृहे स्वीये स्वजना बहवः सदा ॥५६॥
लघुपुत्रः कदाचिन्न समेति स्वकमद्मनि । एतदेवास्ति मे दुःखं नान्यत् किञ्चित् पतेऽधुना ॥५७॥
पुत्रेण जायते सौख्यं मातापित्रोर्निरन्तरम् । पुत्रं विना गृहं शून्यं श्मशानमिव भासते ॥५८॥
यतः—'शर्वरीदीपकश्चन्द्रः प्रभाते रविदीपकः । त्रैलोक्यदीपको धर्म्मः सुपुत्रः कुलदीपकः ॥५६॥'
यादृशा लघवः पुत्राः पित्रोर्भवन्ति वल्लभाः । न हि तादृग् धनं धान्यं गेहं देहं कदाचन ॥६०॥
सत्सु भूरिषु पुत्रेषु रूपसौभाग्यशालिषु । लघुपुत्रो विशेषेण मातुर्भवति वल्लभः ॥६१॥
सतीषु भूरिलक्ष्मीषु गृहे श्रेष्ठिप्रिया रतिम् । तं नन्दनं विना नाऽऽपत् मत्सीव स्तोकवारिणि ॥६२॥
इतो योग्यन्तिके प्राह गुणराजः कृताञ्जलिः । मातुः पितुरहं पादान्नन्तुकामोऽस्मि साम्प्रतम् ॥६३॥
योग्यवक् त्वां विना सारां मदीयां कः करिष्यति ? । त्वत्तः स्यान्मे सुखं भूरि विनीतोऽस्मि त्वमन्वहम् ॥६४॥
गुणराजोऽभणद् माता-पित्रोर्नत्वा पदाम्बुजम् । स्थित्वा तत्र दिनान्यष्टौ वन्दिष्येऽहं तव क्रमौ ॥६५॥
योग्यभाणीत्त्वया तत्र स्थातव्यं नाधिकं दिनम् । यदि स्थानाधिकं त्वं चेत् तदा मृतिस्तवानघ ! ॥६६॥
त्वदुक्तादधिकं स्थाता तत्राहं न क्षणं विभो ! । उक्त्वेति गुणराजोऽगाज् जनकस्यालये लघु ॥६७॥
मातापित्रोस्ततो भ्रातु-र्भ्रातृपत्न्याः क्रमौ क्रमात् । प्रणम्य विधिवन्मोदं गुणराजो व्यधात्तमाम् ॥६८॥
ततो द्वौ सोदरौ राम-लक्ष्मणाविव सन्ततम् । भेजाते प्रीतिमत्यन्तं रविचन्द्राविवाभितः ॥६६॥
लक्षमूल्यः स्वयं तार्क्ष्यो भूत्वा कुम्भी क्वचित्पुनः । गुणराजोऽपि विक्रीय स्थित्वान्यसदने स्वकम् ॥७०॥
पितुर्गृहे श्रियं वल्ली-मानीयानीय तत्क्षणात् । स्वरूप कुरुते माता-पित्रोः प्रमोदहेतवे ॥७१॥
महत्यां पुरि तस्यां तु कृत्वाऽश्वान् भूरिशस्तदा । गुणराजो निनायाऽऽशु पितुर्गेहे बहुश्रियम् ॥७२॥
गतेषु बहु-घस्रेषु, तस्य स्थाष्णोः पितुर्गृहे । रुष्टो योगी समायात-स्तमाकारयितुं द्रुतम् ॥७३॥
योगिनाऽऽकारितो नैति गुणराजो यदा वणिग् । योगी जज्ञौ तदा तं च तार्क्ष्यादिरूपकारकम् ॥७४॥
अश्वरूपधरं योगी गुणराजं मनोहरम् । । धनाल्लात्वा रुरोहाऽऽशु कशाघातैरताडयत् ॥७५॥
ताडयंस्तुरगं योगी वक्तीति तं प्रति स्फुटम् । अवज्ञां मे कुरुष्व त्वं प्रतिज्ञाया विलोपनात् ॥७६॥
गायं यावत्तुरंगं तं प्रकुट्टयन् कशादिभिः । स्नानं कर्त्तुं ययौ योगी जलपूर्णे सरोवरे ॥७७॥
प्रविष्टे स्नानं कर्त्तुं तस्मिन् योगिनि तत्क्षणात् । मत्स्यरूपधरो भूत्वा तार्क्ष्यः सरसि सोऽविशत् ॥७८॥

बकरूपधरो योगी मत्स्यं हन्तुं यदेहते । तदा मत्स्यो जलस्यान्त-र्विशते भयतो भृशम् ॥७९॥
ततो मत्स्योऽजनिष्टैण-रूपभृद् विपिने क्वचित् । ततो बकोऽभवत् सिंह-रूपस्तं हन्तुमुद्यतः ॥८०॥
ततो मृगो व्यधात् कीर-रूपं माकन्दपादपे । ततो सिंहोऽभवत् श्येन रूपस्तं हन्तुमुद्यतः ॥८१॥
श्येनं निहन्तुमायान्तं दृष्ट्वा नंष्ट्वा तदा शुकः । गवाक्षस्थमहीपाल-पत्न्या हस्ते ह्युपाविशत् ॥८२॥
श्येनोऽशक्तः शुकं हन्तु-मोतुरूपधरोऽजनि । ओतुः शुकस्य परितो बभ्राम वधवाञ्छया ॥८३॥
तत्र वृश्चिकसर्पादि-रूपाणि बहुशस्तदा । योगी कृत्वा शुकं हन्तुं राज्ञीहस्तस्थमीहते ॥८४॥
ततः एकावलीहार-रूपभृत् कीर एव सः । राज्ञीहस्ते समागत्या-ऽकम्मात्तस्थौ समाहितः ॥८५॥
अनालोक्य शुकं राज्ञी दुःखिता यावताऽजनि । तावद्धस्तागतं हारं वीक्ष्य राज्ञ्योऽजनिष्ट मुद् ॥८६॥
राज्या हृदि निजे हारे क्षिप्ते सति स योगिराट् । अशक्तो हिंसितुं चक्रे नर्त्तक्या रूपमद्भुतम् ॥८७॥
नृत्येन नर्त्तकी राज-राज्ञ्योश्चित्तं सुमोदभाग् । कुर्वाणा याचते हारं राज्ञीकण्ठस्थितं नृपम् ॥८८॥
राजाऽभाणीत् प्रिये ! देहि हारमस्यै स्त्रियै द्रुतम् । राज्ञी जगौ न दास्येऽहमेकावल्यभिधं त्विमम् ॥८९॥
एकदा भूपतिर्यावद् हारं राज्ञीहृदि स्थितम् । लाति तावत् स तुत्रोट मणिकान्यपतन् भुवि ॥९०॥
नर्त्तकी कर्कटो भूत्वा मणिकान् भक्षयन् क्रमात् । न ज्ञौ मणिकं तं च यत्रास्थात्तस्य जीवितम् ॥९१॥
गुणराजस्ततश्चोतु-रूपभृत् कर्कटं तकम् । तथाऽदशद्यथा योगी मृत्वा श्वभ्रं समीयिवान् ॥९२॥
योगिनाऽपहृतं पुत्रं ज्ञात्वा श्रेष्ठी प्रियायुतः । अभ्येत्य भूपतेः पार्श्वे जगादेत्युच्चनिःस्वनम् ॥९३॥
स्वामिन् ! वसति ते ग्रामे हृतो मे योगिना सुतः । दुःखितानामनाथानां शरणं त्वं महीपते ! ॥९४॥
राजाऽऽकार्यानुगान् प्राह दृष्ट्वा तं दुष्टयोगिनम् । हत्वाऽस्य तनयं दत्थ प्रजापो नृपतिर्यतः ॥९५॥
विलोक्य भूमिभुग्भृत्यै-र्ह्य दृष्टे योगिनि ध्रुवम् । पुत्राप्राप्तौ सपत्नीकः श्रेष्ठी दुःख्यभवद् भृशम् ॥९६॥
दुःखितौ मातरं तातं मत्वा मार्जाररूपभृत् । ध्यातवान् गुणराजोऽथ पित्रोः स्नेहविचेष्टितम् ॥९७॥
त्यक्त्वौतुरूपमह्नाय गुणराजोऽभवद्यदा । तदोचतुर्नृपो राज्ञी कोऽयमत्रागतो नरः ? ॥९८॥
जननीजनकौ पुत्रं विलोक्य प्रोचतुर्मुदा । पुत्रः किमेष नौ अत्र समेतोऽस्त्यन्य एव न ॥९९॥
उपलक्ष्य सुतं सम्यग् दोर्भ्यामालिङ्ग्य रङ्गतः । ताताम्बे प्रोचतुः पुत्र ! कुत्रास्थाः क्व गतोऽसि भोः ! ॥१००॥
पुत्रो मातुः पितुः पादौ प्रणम्य भूपतेः पुनः । योगिनो विहितं सर्वं जगाद मरणान्तिकम् ॥१०१॥
निशम्य गुणराजस्य योगिनो विहितं समम् । महीपतिरुवाचेति शृण्वत्सु नृपु भूरिषु ॥१०२॥
गुरुभ्योऽप्यधिकः शिष्यः कोऽपि स्याद् गुणराजवत् । करमौतुरगेभादि-रूपैर्योऽवञ्चयद् गुरुम् ॥१०३॥
परहिंसेच्छया जीवाः परद्रोहविधानतः । इहामुत्र च दुःखानि लभन्ते योगिराडिव ॥१०४॥
ततः सन्मान्य भूपालः श्रेष्ठिनं सुतसंयुतम् । ददौ ग्रामशतं पञ्च पुराणि पृथुलानि च ॥१०५॥
गुणराजं गजारूढं विधाय मेदिनीपतिः । प्रेषयामास मन्त्रीश-पार्श्वात्तस्य निकेतने ॥१०६॥
ततः श्रेष्ठी तनूजाभ्यां समं क्षेत्रेषु सप्तसु । लक्ष्मीं व्ययन्न जानाति सङ्ख्यां श्रीणां गृहे मनाग् ॥१०७॥
गुणराजो विशेषेण दर्शयन् स्वकलाः कलाः । मान्योऽजनि महीशस्य लोकानामपि सन्ततम् ॥१०८॥
महेभ्यकन्यके पित्रा नन्दनौ परिणायितौ । धर्म्मानुरोधतोऽर्थं तु तृतीयं चक्रतुः सदा ॥१०९॥
यतः त्रिवर्गसंसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य । तत्रापि धर्म्मं प्रवरं वदन्ति न तं विना यद्भवतोऽर्थकामौ

श्रेष्ठ्यन्यदा सुतद्वन्द्व-युक्तो ज्ञान्यन्तिके गतः। धर्म्मं श्रुत्वाऽऽङ पुत्राभ्यां प्राग्भवे किं कृतं वृषम्? ॥१११॥
गुरुराह रमापुर्यां श्रीदस्य श्रेष्ठिनो गृहे। भीमसोमाभिधौ भृत्यौ गेहे कर्म्म वितन्वतः ॥११२॥
श्रेष्ठी देवगृहे देव-मानर्च प्रवरैः सुमैः। अर्जयामास भूयिष्ठं पुण्यं मुक्तिगमोचितम् ॥११३॥
श्रीदः श्रेष्ठ्यन्यदा चन्द्रसूनोः पाणिग्रहोत्सवे। कारयामास पक्वान्न-मुखां रसवतीं वराम् ॥११४॥
मध्याह्ने श्रेष्ठिनस्तस्य गृहे संयतयामलम्। विहर्तुमागमत्ताव-त्तावच्चन्द्रो व्यचिन्तयत् ॥११५॥
अद्य मे जायमानेऽस्मि-न्नुद्वाहे सदने पितुः। मोदकादिकरोचिष्णु-र्जाता रसवती वरा ॥११६॥
यद्येतयोर्लसत्साध्वो-र्दीयतेऽन्नं च किञ्चन। तदा मे जायते वर्यं जनुश्च पाणिपीडनम् ॥११७॥
यतः-"पश्चाद्दत्तं परैर्दत्तं लभ्यते वा न लभ्यते। स्वहस्तेन च यद्दत्तं लभ्यते तत्र संशयः ॥११८॥"
निर्भाग्यविभवैर्वक्तुं सप्तक्षेत्र्यां न लभ्यते। यत्र पात्रादयोप्युप्ताः फलं यच्छंति वाञ्छितम् ॥११९॥
ध्यात्वेति चन्द्र उत्थाय स्थालं मोदकपूरितम्। प्रवृत्तो ददितुं साधु-युग्मं गृह्णाति तत्र हि ॥१२०॥
बलेन मोदकान् पञ्च चन्द्रः साध्वोर्वितीर्णवान्। विशुद्धमन्यमन्नं च पानं च वरभावतः ॥१२१॥
तदाऽऽहाग्रेतनः साधु-रत्रैगुः सोमसूरयः। परिवारो बहुस्तेषां विद्यते चन्द्र! सम्प्रति ॥१२२॥
यस्य कल्पिष्यते साधो-र्मोदकादि विशुद्धिभाग्। दास्यते च मया तस्मै पुण्यं तव भविष्यति ॥१२३॥
तदा तत्र स्थितो भीमो भृत्यो दृष्ट्वा व्यचिन्तयत्। मोदकादि ददौ चन्द्रः साधोरेष वरस्ततः ॥१२४॥
मोदकाद्यस्ति मे चेद्धि तदा दास्येऽहमप्यहो!। किं कुर्वे किं करोम्यत्र श्रेष्ठिनः तुच्छपुण्यवान् ॥१२५॥
यतः-यदुपात्तमन्यजन्मनि शुभमशुभं वा स्वकर्म्मपरिणत्या। तच्छक्यमन्यथा नैव कर्त्तुं देवासुरैरपि ॥१२६॥
उइयंमि सहस्सकरे सलोअणो पिच्छइ सयललोअं। जत्र उलूओ पिच्छइ सहस्सकिरणस्स को दोसो? ॥१२७॥
एवं भावयतः शुद्धां भावनां तस्य तत्र तु। पुण्यं बभूव कल्याण-नगरीगमनोचितम्। १२८॥
श्रेष्ठिना शिक्षितः सोमः प्रवरैः कुसुमैः प्रभोः। शरीरेऽङ्गीं तथा चक्रे यथाऽन्येषां बभूव मुद् ॥१२९॥
क्रमात् सोमो मृतो जातो गुणराजः सुतस्तव। मृत्वा भीमोऽभवद्वत्स-राजेत्याह्वोऽङ्गजोऽपरः ॥१३०॥
जिनाङ्गीकरणात् प्राप नामरूपकरीं कलाम्। गुणराजः सुतस्ताव-क्षीनोऽयमिह संसृतौ ॥१३१॥
चन्द्रदत्तं सुपात्राय दानं भीमोऽनुमोदयन्। वत्सराजः प्रगे प्राप दीनारशतपञ्चकम् ॥१३२॥
चन्द्रो मृत्वा कलापुर्यां पञ्चमोदकदानतः। पञ्चकोटीसुवर्णस्या-भवद्दिभ्योऽधिपो धनः ॥१३३॥
तस्माद्दानाद्धनो मुक्तिं गन्ता पञ्चमके भवे। तव सूनोर्भवे षष्ठे मोक्षो भावीति चिन्तय ॥१३४॥
पुण्यक्रिया न मोक्तव्या दुष्कर्म्मक्षयहेतवे। पापे सति यतो मुक्ति र्नैव जायेत देहिनाम् ॥१३५॥
श्रुत्वेति पुत्रयोः पूर्वं भवं निष्पादितं वृषम्। श्रीदः पुत्रयुतो धर्म्मं ललौ सम्यक्त्वसंयुतम् ॥१३६॥
मातृपितृयुतौ धर्म्म-मार्हतं तौ सहोदरौ। कुर्वाणौ चक्रतुर्यात्रां सिद्धक्षेत्रादिषु क्रमात् ॥१३७॥
श्रीदः पत्नीयुतो लात्वा संयमं गुरुसन्निधौ। पालयँस्त्रिदिवं षष्ठं जगामामलमानसः ॥१३८॥
पूजादानप्रभावेण श्रीदश्रेष्ठितनूभवौ। ततश्च्युतौ शिवं स्तोक-भवान्मुक्तिमिहैयतुः ॥१३९॥
इत्यादि-देशनां श्रुत्वा श्रीपार्श्वजिनसन्निधौ। बहवो भविनो भेजुः श्राद्ध-साधुव्रते तदा ॥१४०॥
तत्र श्रीपार्श्वनाथस्य शिष्याः शतत्रयं क्रमात्। प्राप्य ज्ञानं ययुर्मुक्तिं स्वस्यायुषः चये लघु ॥१४१॥

❀ इति पार्श्वनाथस्य शत्रुञ्जयागमनस्वरूपम ❀

॥ अथ श्रीवीरजिनस्य शत्रुञ्जयागमनसम्बन्ध ॥

पुरे क्षत्रियकुण्डाह्वे सिद्धार्थस्य नरेशितुः । असूत त्रिशला पत्नी पुत्रं सुस्वप्नसूचितम् ॥१॥
वासवेन कृते जन्मो-त्सवे जन्मोत्सवं पिता । कृत्वा सूनोर्ददौ वीर-कुमारेत्यभिधां तदा ॥२॥
वर्धमानः क्रमाद्वीरो लात्वा दीक्षां शुभेऽहनि । क्षिप्त्वा कर्म्माखिलं ज्ञानं केवलं प्राप्तवान् क्रमात् ॥३॥

विस्तरोऽस्य चरित्रात् स्वयं ज्ञेयः—

श्रीवीरो बोधयन् भव्यान् गौतमादिसुसाधुयुग् । शत्रुञ्जये महातीर्थे शिवदे समवासरत् ॥४॥
तत्र सिद्धाद्रिमाहात्म्यं श्रीवीरः प्रोक्तवानिति । अस्मिँस्तीर्थे शिवं जग्मु-रनेके भविनः किल ॥५॥
यतः—"अन्यतीर्थेषु सद्ध्यान-शीलदानार्थ(र्च)नादिभिः । यत्फलं स्यात् ततोऽसङ्ख्यं शत्रुञ्जयकथाश्रुतेः॥६॥
"विंशतिर्भवनस्येन्द्रा द्वात्रिंशद् व्यन्तराधिपाः । द्वौ ज्योतिर्वासिवावूर्ध्व-लोकसंवासिनो दश ॥७॥
चतुःषष्टिमिता एते इन्द्रा देवैर्वृता घनैः । शत्रुञ्जये जगन्नाथ-भूषितं नेमुरादरात् ॥८॥
पापिनां शल्यरूपोऽयं धर्मिणां सर्वशर्मदः । कामिनां कामितं दाता विद्यतेऽयं गिरिर्वरः ॥९॥
विना तपो विना दानं विनाऽर्चा शुभभावतः । केवलं स्पर्शनं सिद्ध-क्षेत्रस्याक्षयसौख्यदम् ॥१०॥
एवं प्रभोर्वचः शृण्वन् लेपः संयतपुङ्गवः । संप्राप केवलज्ञानं लोकालोकावलोककम् ॥११॥
तस्यर्षेः केवलज्ञानो त्सवं देवान् वितन्वतः । ज्ञात्वा भव्यप्रबोधाय वीरं पप्रच्छ गौतमः ॥१२॥
भगवन् ! ज्ञानमभूद्यस्या-धुना कोऽसौ तपोधनः । लले तेन कथं दीक्षा कथ क्षिप्तं तमोऽखिलम् ? ॥१३॥
यतः-'भद्दो विणीअविणओ पढमगणहरो समत्तसुअनाणी । जाणंतोवि तमत्थं विम्हिअहियओ सुणइ सव्वं'॥१४॥
प्रभुः प्राहेन्द्रभूते ! त्वं शृणु सम्प्रति गौतम ! । पुरे राजगृहे लेप-श्रेष्ठी मिथ्येक्षणोऽभवत् ॥१५॥
शिवभूतेगुरोः पार्श्वे लेपः शृण्वन् वृषं सदा । वापी-कूप-तडागादि-पुण्यस्थानान्यकारयत ॥१६॥
स्नानं कृत्वातिशुद्धक्ते स्म चक्रे रात्रदनं पुनः । बुभुजे कन्दमूलाद्य-भक्ष्याणि च निरन्तरम् ॥१७॥
यदा यदा समायाति शिवभूतिस्तपोधनः । तदेत्यभिमुखं पञ्च योजनानि सुभक्तितः ॥१८॥
अन्येद्युः शिवभूतौ तु गते चान्यत्र नीवृति । अहं तु समवासार्षं पुरोद्याने मनोहरे ॥१९॥
श्रेणिकक्षोणिशालाद्या बहवो मानवास्तदा । ममोपान्ते वृषं श्रोतु-मीयुर्निजनिजालयात् ॥२०॥
जिनदत्तेन मित्रेण समं लेपः स नैगमः । मनो विनापि सर्वज्ञं प्रणम्य मां समाविशत् ॥२१॥
"दो चेव जिणवरेहिं जाइजरामरणविप्पमुक्केण । लोगम्मि पहा भणिआ सुसमण सुसावओ वावि ॥२२॥"
सम्यक्त्वमूलानि पञ्चा-णुव्रतानि त्रयो गुणाः । शिक्षाव्रतानि चत्वारि एतानि पालयेद् ध्रुवम् ॥२३॥
स एव लभते स्वर्गा-स्वर्गादिसुखावलिम् । यतो जीवदया सम्यक् पालिता शिवशर्मदा ॥२४॥
यतः-'जयणा य धम्मजणणी जयणा धम्मस्स पालणी होइ । तव्वुड्ढिकरी जयणा एगंत सुहावहा जयणा ।२५।'
पुराणेऽप्युक्तम्-"यो दद्यात् काञ्चनं मेरुं कृत्स्नां चैव वसुंधराम् । एकस्य जीवितं दद्यान्न च तुल्यं युधिष्ठिर !"
पृथिव्यामप्यहं पार्थ ! वायावग्नौ जलेऽप्यहं । वनस्पतिगतश्चाहं सर्वभूतगतोऽप्यहम् ॥२७॥
यो मां सर्वगतं ज्ञात्वा तं न हिंसेत् कदाचन । तस्याहं न प्रणश्यामि स च मां न प्रणश्यति ॥२८॥

अस्तं गते दिवानाथे आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं मार्कण्डेन महर्षिणा ॥२९॥"
इत्यादि मेऽन्तिके धर्म्मं श्रुत्वा लेपो वणिग्वरः । त्यक्त्वा मिथ्यात्वमह्नाय जैनं धर्म्ममलात्तदा ॥३०॥
ततः कूपतटाकादि धर्म्मकृत्यं स नैगमः । न करोति न कारयति नै(त्यै)वानुमन्यते ध्रुवम् ॥३१॥
ततो मिथ्यात्विनो लोका वदन्त्येवं च तं प्रति । लेपोऽयं श्रेष्ठिराड् मूर्खो जैनधर्माश्रितोऽभवत् ॥३२॥
कुलक्रमागतं धर्म्मं यस्त्यक्त्वान्यवृषं श्रयेत् । स एव लभते पुत्र ! परत्र विपदं पराम् ॥३३॥
प्रशंसां कुर्वते श्राद्धा लेपोऽयं पुण्यवान् धनी । इहामुत्र सुखश्रेणीं ललिष्यति न संशयः ॥३४॥
लेपो लोकोदितं नैव चित्ते धारयति ध्रुवम् । किन्तु धर्म्मं जिनैः प्रोक्तं कुरुते प्रतिवासरम् ॥३५॥
यतः-"सर्वथा स्वहितमाचरणीयं, किं करिष्यति जनो बहुजल्पः ? ।
विद्यते स नहि कश्चिदुपायः, सर्वलोकपरितोषकरो यः ॥३६॥"
शिवभूतिमितस्तत्रा-यान्तमाकर्ण्य दूरतः । संमुखं न समायातो लेपो नन्तुं गुरुक्रमौ ॥३७॥
ततः स तापसो रुष्टो दध्यावेवं निजे हृदि । अयं पाप्यभवज्जैन-धर्म्मस्याश्रयणाद् ध्रुवम् ॥३८॥
पुरमध्ये समायातः शिवभूतिः स तापसः । लेपमनागतं नन्तुं ज्ञात्वा रुष्टोऽभवद् भृशम् ॥३९॥
आहूतो न यदा लेपो गुरुणा(गतो) शिवभूतिना । तदा तत्र स्वयं गत्वा लेपं प्रति जगौ गुरुः ॥४०॥
रे दुष्टात्मन् ! त्व(स)मुत्थान-नमनादिक आदरः । न त्वया विहितस्तेन दुर्गतिस्ते भविष्यति ॥४१॥
लेपः प्राह वितन्वानो धर्म्मं स्नानादिकं सदा । कारयन्ननुजानंश्च दुर्गतिं श्राग् गमिष्यति ॥४२॥
संवत्सरेण यत्पापं कैवर्त्तस्य च जायते । एकाह्नेन तदाऽऽप्नोति अपूतजलसङ्ग्रही ॥४३॥
चित्तमन्तर्गतं पापं तीर्थस्नानैर्न शुद्ध्यति । शतशोऽपि जलैर्धृतं सुराभाण्डमिवाशुचि ॥४४॥
ततः स तापसः प्राह वयं ते न भविष्यति । शापं दत्त्वेति लेपाय तपस्वी स्वाश्रयं ययौ ॥४५॥
ततो लेपो गुरूपान्ते श्रावकप्रतिमां सदा । कुर्वन्नर्जयति श्रेयो महोदयगमोचितम् ॥४६॥
दंसण-वय-सामाइअ-पोसह-पडिमा-अबंभ-सच्चित्ते । आरंभ पेस-उद्दिट्ठवज्जए समणभूए अ ॥४७॥
इत्यादि प्रतिमां कृत्वा स्वर्णकोटीर्दश द्रुतम् । त्यक्त्वा ममान्तिके दीक्षां जग्राह शुभभावतः ॥४८॥
तस्य लेपयतेर्ज्ञानं केवलं शुभभावतः । बभूव साम्प्रतं गच्छ भद्र ! गौतमगुणाकर ! ॥४९॥
श्रुत्वेति स्वामिनः पार्श्वे साधवो बहवस्तदा । संप्राप्तकेवलज्ञाना ययुः शत्रुञ्जये शिवम् ॥५०॥
ततो वीरजिनोऽन्यत्र विहारं कृतवाँस्तदा । गौतमोऽपि गणाधीशो भव्यान् भूरीन् प्रबोधयन् ॥५१॥

卐 इति श्रीवीरजिनस्य शत्रुञ्जयागमनसम्बन्धः 卐

॥ अथ श्रीनेमिनाथस्य शत्रुञ्जयगिरेरूर्ध्वानारोहणस्वरूपम् ॥

अन्यदा विहरन्नेमि-नाथो विमलभूभृतः । उपत्यकाचितौ देव-सहितः समवासरत् ॥१॥
तत्र प्रबोध्य भूयिष्ठ-भव्यजीवान् जिनेश्वरः । अनारुह्य गिरेरूर्ध्वं व्यहार्षीदन्यनीवृति ॥२॥

इति श्री नेमिनाथस्य शत्रुञ्जयगिरेरूर्ध्वानारोहणस्वरूपम्

**मणिरूप्पकणयपडिमं जत्थ रिसहचेइअं भरहविहिअं ।**
**सदुवीसजिणाययणं सो विमलगिरी जयउ तित्थं ॥१॥**

व्याख्या-यत्र तीर्थे शत्रुञ्जयाख्ये 'ऋषभचैत्यं' नाभेयचैत्यं काञ्चनमयं भरतेन स्फारं कारितं, तस्य परितो हेममयानि द्वाविंशतिः जिनायतनानि-जिनालयानि देवकुलिकाः कारितानि, तत्र मुख्यप्रासादे मणिमयी श्रीऋषभजिनप्रतिमा पुण्डरीकप्रतिमा च कारिते, अन्येषु जिनगृहेषु नेमिनाथवर्जिता अजितादि-वीर-जिन-पर्यन्ता मणिरूप्यकनकप्रतिमाः स्थापिताः, स विमलगिरिः पर्वतो जयतात्तीर्थम् ॥ अत्र विमल-वाहनादि-कुलकर ,श्रीऋषभजिनजन्म, युगलधर्म्मनिवारणं,राज्यादिस्थापना, नन्दा-सुमङ्गलापत्नीद्वयपाणीग्रहः, शतपुत्रपुत्रीद्वयभवनं, भरतादिपुत्रराज्यार्पणं, यमग्रहणं, केवलज्ञानप्राप्ति यावत् श्रीऋषभचरित्राद् वाच्यम्—

अयोध्याबहिरुद्याने विहरन्नादितीर्थकृत् । भूरिकोटियतिस्वर्गि-सेवितः समवासरत् ॥१॥
तत्रादिमजिनाधीश-समीपे श्रोतुमागमम् । भरतश्चक्रिराट् सार-परिवारः समागमत् ॥२॥
धर्म्मोपदेशोऽत्र—"धम्मिड्ढी भोगिड्ढी पाविड्ढी इय तिहा भवे इड्ढी ।
सा धम्मिड्ढी भन्नइ जा दिज्जइ धम्मकज्जेसु ॥३॥
सा भोगिड्ढी गिज्जइ सरीरभोगम्मि जीइ उवओगो । जा दाणभोगरहिया सा पाविड्ढी अणत्थफला ॥४॥
पाविड्ढी पाविज्जइ फलेण पावस्स पुव्वविहिअस्स । पावेण पाविणा वा इत्थत्थे सुणह दिट्ठंता ॥५॥
धर्मोपदेशमाकर्ण्य चक्र्याचष्ट जिनं प्रति । भगवंस्तीर्थमुत्कृष्टं विद्यते किं महीतले ? ॥६॥
प्रभुः प्राह भवत्पुत्रः पुण्डरीको गणाधिपः । यत्र तुङ्गे गिरौ मुक्तिं गमी भूरिसुसाधुयुग् ॥७॥
तत्र तुङ्गाभिधे शैले कल्याणसुखदायके । अतीतानागते काले वर्त्तमाने जिनाधिपाः ॥८॥
केचिद्ययुर्गमिष्यन्ति निर्वृतिं समवासरन् । संसरिष्यन्ति केचिच्च ज्ञानिनः साधवः पुनः ॥९॥युग्मम् ।
इतश्चतुश्चतुर्विंशतिकायां जिननायकः । चन्द्रवेगो ययौ मुक्तिं भूरिसाधुसमन्वितः ॥१०॥
कल्याणनगरे चन्द्र-भूपतेः पद्माऽभवत् प्रिया । चन्द्रचूडः सुतश्चारु-गुणमाणिक्यसद्म च ॥११॥
पृष्टो राज्ञाऽन्यदा धर्म्म-घोषसूरीश्वरस्त्विति । भगवन् ! कानि रत्नानि वर्याणि सन्ति भूतले ॥१२॥
गुरुराचष्ट रत्नानि द्रव्यभावविभेदतः । द्वेधा सन्ति नृप ! ह्यत्र परत्र सुखदानतः ॥१३॥
द्रव्यरत्नानि पाषाण-मयानि भूरिशो भुवि । विद्यन्ते पुनराप्यन्ते धर्मादेव नरेश्वर ! ॥१४॥
तानि न ददते स्वर्गा-पवर्गशर्म कर्हिचित् । ज्ञानदर्शनचारित्रा-णि रत्नानि तु सन्ततम् ॥१५॥
य एतानि नरो भक्त्या ऽऽराधयत्यनिशं ध्रुवम् । स एव लभते मुक्तिं स्वर्गशर्म न संशयः ॥१६॥
तदा सम्यक्त्वमादाय गुरूपान्ते महीपतिः । चकार जिननाथोक्तं धर्म्मं जीवदयामयम् ॥१७॥
पद्माऽन्यदा सुखं सुप्ता महास्वप्नान् चतुर्दश । समालोक्य जजागार मध्यरात्रे शुभे क्षणे ॥१८॥
क्रमात्पुत्रं प्रसूते स्म शुभवेलासु सुन्दरम् । आदाविन्द्रो व्यधाज्जन्मो-त्सवं निर्जरपर्वते ॥१९॥
प्रातर्जन्मोत्सवं चक्रे पिता सूनोर्महत्तमम् । ततो नाम ददौ चन्द्र-वेगेति स्वजनान्वितः ॥२०॥
चन्द्रवेगः क्रमात् प्राप्त-यौवनो मेदिनीभुजा । भूपानां भूरिशः कन्याः सोत्सवं परिणायितः ॥२१॥

जातेषु भूरि पुत्रेषु चन्द्रवेगो नृपाङ्गजः । विख्यातोऽजनि सर्वत्र विनयादिगुणसुन्दरः ॥२२॥
ततः पित्रा ददे राज्यं चन्द्रवेगाय सूनवे । चन्द्रवेगश्च सर्वेषां भ्रातृणामभवन्मतः ॥२३॥
पृथुदेशप्रदानेन चन्द्रवेगो नरेश्वरः । रञ्जयामास निःशेषान् भ्रातृन् सन्मानदानतः ॥२४॥
पञ्चमात् स्वर्गतोऽभ्येत्य तदा सारस्वतैः सुरैः । प्रवर्त्तय प्रभो ! धर्म्म-तीर्थमित्युदितं स्फुटम् ॥२५॥
चन्द्रवेगस्ततो राज्यं वितीर्य वृद्धसूनवे । धरानृणकृते दानं वर्षं यावद्ददौ वरम् ॥२६॥
लात्वा दीक्षामयं भूरि-कर्म्मक्षपणतोऽन्तिमम् । अवाप केवलज्ञानं लोकालोकप्रकाशकम् ॥२७॥
बोधयन् भविनो भूरीन् ग्रामे ग्रामे पुरे पुरे । पात्रस्तीर्थङ्करः शत्रुञ्जयाद्रौ समवासरत् ॥२८॥
तदेति पुरतो भूरि-भव्यानां देहिनां स्फुटम् । उपदेशं ददौ तीर्थ-ङ्करो मधुरया गिरा ॥२९॥
तावद् गर्जति हत्यादि-पातकानीह सर्वतः । यावत् शत्रुञ्जयेत्याख्या श्रूयते न गुरोर्मुखात् ॥३०॥
पदे पदे विलीयन्ते भवकोटिभवान्यपि । पापानि पुण्डरीकाद्रे-र्यात्रां प्रति यियासताम् ॥३१॥
श्रुत्वेति तीर्थमाहात्म्यं भविनो भूरिशस्तदा । तीर्थङ्करान्तिके दीक्षां ललुः संसारतारिणीम् ॥३२॥
तदा तत्र प्रजापालो महीपालो जिनेशितुः । प्रासादं कारयामास भवपर्वतसोदरम् ॥३३॥
चन्द्रवेगजिनाधीशः साधुकोटिद्वयान्वितः । शत्रुञ्जये ययौ मुक्तिं सर्वकर्म्मव्रजक्षयात् ॥३४॥
शत्रुञ्जयावनिस्पर्शाज् जीवा भव्याः शुभोदयाः । पुण्यपालनराधीशा इव गच्छन्ति निर्वृत्तिम् ॥३५॥

॥ अथ-पुण्यपाल कथा ॥

तस्येदं कथानकं तथाहि—

पुण्यपुर्यां नृपः पुण्य-पालः पुण्यकरः सदा । पालयामास भूपीठं न्यायमार्गं प्रवर्त्तयन् ॥३६॥
तस्यासीत् कमला पत्नी शीलादिगुणशालिनी । पुत्रः पद्मरथो नाम्ना धाम्ना मन्मथसन्निभः ॥३७॥
राजान्यदा सभासीनो मन्त्रिसामन्तसंयुतः । स्वदेश परदेशादि-वार्त्ता पप्रच्छ मन्त्रिणः ॥३८॥
तदा वैदेशिको-मर्त्य एकस्तत्रागतो नटः । प्रणम्य भूपतिं तस्था-वग्रे पश्यन् नृपाननम् ॥३९॥
भूपोऽप्राक्षीत् कुतः स्थानात् कुतो देशादिहागतः ? । किमर्थं ? किं त्वया दृष्टमपूर्वं ? किं श्रुतं ? वद ॥४०॥
वैदेशिको जगौ पद्म-पुराद् भ्राम्यन्नहं भुवि । अगां कुन्दपुरोपान्ते नानोद्यानविराजिते ॥४१॥
तत्रासीन्मेदिनीपालः प्रजापालाभिधो नयी । तस्याभूच्छ्रीमती पत्नी सप्ताऽभूवंस्तनूभवाः ॥४२॥
बहूपयाचितैस्तेषां सुतानामुपरि क्रमात् । एकाऽभून्नन्दिनी नन्दा नाम्ना रूपजितामरी ॥४३॥
धर्म्मकर्म्मकला वर्या शिक्षिता धुरि नन्दनाः । पश्चाद् भूपतिनन्दिन्यः पित्रापि परिणायिताः ॥४४॥
पठन्ती नन्दिनी नन्दा बुधोपान्ते निरन्तरम् । भारतीवाभवद्वर्य-विद्याम्भोनिधिपारगा ॥४५॥
यतः-'जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वय याति विस्तारं वस्तुशक्तितः' ॥४६॥
ज्वलनोत्पादिकां विद्यां तुष्टेन व्योमगामिना । प्रददे पुण्यपालाय धर्म्मात् किं किं भवेन्नहि ? ॥४७॥
यतः-'धनदो धनमिच्छूनां कामदः काममिच्छताम् । धर्म्म एवापवर्गस्य पारम्पर्येण साधकः ॥४८॥
ध्यातं राज्ञाऽन्यदा सर्व-वर्यविद्याविशारदा । विनीता विद्यते पुत्री मदीयेयं मनोहरा ॥४९॥

औदार्यसत्त्वधैर्यादि-मनोहरगुणान्वितः । भूपपुत्रो वरोऽनर्घो जायते स्यात् तदा वरम् ॥५०॥
ध्यात्वेति भूपतिः पुर्या बहिः पीठं मणीमयम् । कारयित्वा प्रगे तत्रो–पवेशयति नन्दिनीम् ॥५१॥
भूपो वक्ष्य(क्ती)ति योऽत्रास्ति सात्त्विको मानवो नृपः । गृह्णातु मत्सुताहस्ता-द्वरमालां स एव तु ॥५२॥
ततः पुत्रीमहं तस्मै दास्ये ग्रामायुतान्विताम् । अष्टौ च कुञ्जरान् वर्यान् अयुतं च तुरङ्गमान् ॥५३॥
यो भूपो भूपपुत्रो वा नरो वाऽन्यो विशारदः । स समायातु स्रग्मालां लातुं कन्यामिमां द्रुतम् ॥५४॥
तदाशु दहनज्वाला कन्यायाः परितो घना । परिखावद्बभूवत्येवं यमजिह्वासहोदरा ॥५५॥
तेन बिभ्यन्न को मर्त्यः कन्याहस्तस्थितां स्रजम् । लातुमभ्येति तत् कन्या विद्यते सा कुमारिका ॥५६॥
श्रुत्वेति पुण्यपालः क्ष्मा-पालः सारपरिच्छदः । ययौ कुन्दपुरे कन्यां वरीतुं तां शुभेऽहनि ॥५७॥
अनेकभूमिपालेषु मिलितेषु कनीकृते । पुण्यपालोऽवलम्ब्यैव साहसं कन्यकान्तिके ॥५८॥
ययौ यावत्तदाऽकस्माद्वह्निज्वाला महत्यपि । पुण्यपालकरस्पर्शाज्जगाम शान्तिमञ्जसा ॥५९॥युग्मम्॥
ततो नृपः प्रजापालो नन्दां स्वां नन्दिनीं तदा । प्रददौ पुण्यपालाय वरोत्सवपुरस्सरम् ॥६०॥
नानाभरणवस्त्रादि-भूषिता नृपनन्दिनी । तदा देवकुमारीव शोभते वररूपभृत् ॥६१॥
स्नानं कर्णवतंसिका च कबरी पुष्पान्विता साञ्जनं, नेत्रं गात्रविभूषणं सुतिलकं ताम्बूलमेवालकम् ।
वासश्चन्दनलेप कञ्चुकमथो लीलासरोजं लसद्दन्ताभा नखशुक्त्यलक्तरचना शृङ्गारकाः षोडश ॥६२॥
प्रजापालाङ्गजां नन्दां परिणीय सदुत्सवम् । लब्धग्रामशतः पुण्य-पालः स्वपुरमीयिवान् ॥६३॥
ततो दशसु वर्षेषु नन्दाऽसूत सुतं वरम् । पिता सूनोर्ददौ नाम रामाह्वं रुचिरोत्सवम् ॥६४॥
वर्षाष्टप्रमितः पुत्रो रामो यावदजायत । तावत्तस्य तनौ कुष्टं निन्द्यमासीत् कुकर्मतः ॥६५॥
अनेकेषूपचारेषु कृतेषु तनुजन्मनः । नाभूद्यदा गुणो देहे तदा दुःखी नृपोऽभवत् ॥६६॥
इतस्तत्र पुरे पुण्य-धर्म्मः श्रावकपुङ्गवः । वन्दमानो जिनान् ग्रामे ग्रामे नन्तुं समागमत् ॥६७॥
पूजयित्वाऽर्हतो देव-गृहेषु श्रावकः स च । राज्ञो गेहे ययौ देव-देवं पूजयितुं क्रमात् ॥६८॥
अर्चयित्वा जिनं श्राद्धः पप्रच्छेति महीपतिम् । तवाऽऽस्यं वीक्ष्यते श्यामं किमिदानीं नरेश्वर ! ॥६९॥
राजाऽवग् मम पुत्रस्य कुष्टं तीव्रं समागतम् । औषधैर्बहुभिर्नैव गतं दुःखं ततो मम ॥७०॥
यत-अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैः सह । अप्रियैः संप्रयोगश्च सर्वं पापविजृम्भितम् ॥७१॥
पुण्यधर्मो जगौ राजन् ! सुराष्ट्राविषये वरे । अस्ति शत्रुञ्जयोपान्ते नदी शत्रुञ्जया वरा ॥७२॥
तस्या नीरेण नाभेयार्हतः स्नात्रं विधाय च । निजाङ्गं स्नपयामास स स्याद् दिव्यतनुर्नरः ॥७३॥
श्रुत्वेति भूधरो भूरि-संघलोकसमन्वितः । पुत्रं नीत्वा ययौ शत्रु-ञ्जये यात्राकृते लघु ॥७४॥
शत्रुञ्जयापयो नीत्वा कृत्वा स्नात्रं प्रभोर्नृपः । तन्नीरेण सुतस्याङ्ग-मभ्यषिञ्चत भावतः ॥७५॥
तदा कुष्टं गतं देहात् सूनोर्भूमीभुजोऽचिरात् । ततो राजा विशेषेण जिनभक्तिं व्यधान्मुदा ॥७६॥
राजा स्फारं जिनागारं शत्रुञ्जयनदीतटे । कारयित्वाऽऽदिदेवस्य बिम्बं न्यवीविशन्मुदा ॥७७॥
एकं कैलासशैलानु-कारि सर्वज्ञमन्दिरम् । कारयित्वा नृपः शान्ति प्रतिमामस्थापयत्तदा ॥७८॥
पुण्यपालः स्वपुत्राय राज्यं दत्त्वा सदुत्सवम् । गृहीत्वा संयमं चक्रे तपो मुक्तिसुखप्रदम् ॥७९॥

तपः कुर्वन् सदा पुण्य-पालो ध्यानान्मनागपि । न चचाल मरुद्भूमी-धरवत् हृष्टमानसः ॥८०॥
यतः-सन्तः सन्तोऽपि संसारे न मुञ्चन्ति निजां स्थितिम् । मिष्ट एव समुद्रेऽपि महोरावणवाहकः ॥८१॥
क्रमाच्छत्रुञ्जये गत्वा पुण्यपालस्तपःपरः । पुण्यपापक्षये मुक्तिं भूरिसाधुयुतो ययौ ॥८२॥

★ इति पुण्यपालकथा ★

॥ अथ महाबाहुभूपत्रिविक्रमराजर्षिमुक्तिगमनसन्बन्धः ।

अतो गतचतुर्विंश-तिकायां कमले पुरे । सुमतेर्वणिजो जाता पत्नी पद्माभिधा वरा ॥१॥
पुत्रः पद्माभिधो वर्य-रूपः शास्त्राण्यनेकशः । तथाऽपाठीद् बुधोपान्ते यथाऽभूद् गुरुसन्निभः ॥२॥
व्यवसायपरस्यास्य सुमतेर्वणिजः क्रमात् । तुत्रोट कमला कृष्ण-पक्षचन्द्रमरीचिवत् ॥३॥
लक्ष्म्यभावान्न सन्मानं लभते सुमतिः क्वचित् । ततोऽतीव स्वयं धत्ते दुःखं चेतसि सन्ततम् ॥४॥
यतः-'यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पूज्यते' ॥५
तथा-जीवन्तो मृतकाः पञ्च श्रूयन्ते किल भारते । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥६॥"
इहलोकेऽपि धनिनः परोऽपि स्वजनायते । स्वजनोऽपि दरिद्राणां तत्क्षणाद् दुर्जनायते ॥७॥
ततः क्रमात् समानीय तृणकाष्ठानि सन्ततम् । विक्रीय निजनिर्वाहं चकार सुमतिः सदा ॥८॥
यतः—"बुभुक्षितः किं न करोति पापं, क्षीणा नरा निष्करुणा भवन्ति ।
किं नीचकर्मादि रमावियुक्ताः, कुर्वन्ति लोकाः कुलजा अपीह" ॥९॥
ततः पद्मो विदेशं तु गत्वा भूरि धनं क्रमात् । अर्जयित्वा समायातो हायनैर्दशभिर्ध्रुवम् ॥१०॥
ततोऽखिलैर्जनैः शश्वत् सुमतिर्मान्यते मुदा । यतः श्रीः पूज्यते लोकैर्न दारिद्र्यं कदाचन ॥११॥
ततः सुमतिरुद्याने धर्माचार्यान्तिकेऽन्यदा । धर्मं जीवदयामूलं शुश्रावेति कृतादरम् ॥१२॥
'स्वर्गस्तस्य गृहाङ्गणे सहचरी साम्राज्यलक्ष्मीः शुभा, सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा, यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः' ॥१३॥
"दिवसनिसा घडमालं आउं सलिलं जणस्स घित्तूण । चंदाइच्चवइल्ला कालरहट्टं भमाडंति" ॥१४॥
कम्मह वरेइ रुडपडउ धम्मह मंदी देह । आपण सरिसी चांरडी तइं किमु साख्या एह ॥१५॥
जीव कडेवर इम भणइ मइं हुतइं करि धम्मु । हु माटी तू रयणमय हारि म माणुसजम्मु ॥१६॥
हिअडा सकुडि मरिअ जिम मन पसरंत निवारि । जेतुं पहुचइ पुंगरण तत्तिअ पाय पसारि ॥१७॥
यः सिद्धपर्वते भूमेः स्पर्शं वितनुते नरः । स एव लभते स्वर्गापवर्गसुखसन्ततिम् ॥१८॥
श्रुत्वेति सुमतिः श्रेष्ठी गत्वा तुङ्गमहीधरे । ननामादौ जिनान् पश्चात् पूजयामास सादरम् ॥१९॥
तत्र संस्मरतस्तस्य जिनान् भावेन चेतसि । लोकालोकस्वरूपज्ञं ज्ञानमासीत्तमःक्षयात् ॥२०॥
तथा स सुमतिर्ज्ञानी धर्मोपदेशनां व्यधात् । तुङ्गे गिरौ मुक्तिपुर्यां भव्या जग्मुश्च भूरिशः ॥२१॥
श्रुत्वैवं भरतश्चक्री प्राहेति पुरतः प्रभोः । तत्र तीर्थे मया यावन्न नम्येत जिनेश्वरः ॥२२॥

तावद्भोज्यं मया वार-द्वयमेव जिनाधिप ! । एकैव विकृतिर्ग्राह्या वासरं प्रति सन्ततम् ॥२३॥
अथोध्यातोऽन्यदा वर्ये वासरे भरतो नृपः । देशान् साधयितुं भूरि-कटकश्चलितः स्फुटम् ॥२४॥
आयातं भरतं प्रौढ-सैन्यं श्रुत्वा रमापुरे । सहस्रमल्लभूपालो योद्धुं सम्मुखमीयिवान् ॥२५॥
भरतेन समं मासमेकं कुर्वन् रणं भृशम् । भग्नोऽभ्येत्य नृप भक्त्या सिषेवे दण्डदानतः ॥२६॥
ततः—मागधादिरिपून् सर्वान् जित्वाऽथ भरतो नृपः । वैताढ्यस्य गुहोपान्ते ययौ सर्वबलेन तु ॥२७॥
भरतभूमिपादेशात् सैन्यपो बलसंयुतः । ततोऽचलच्च वैताढ्य-गुहायाः सन्निधौ नृपः ॥२८॥
तत्सुरस्याष्टमं चक्रे पौषधेन युतं तदा । अश्वारूढो गुहां वज्र-दण्डघाताद्दताडयत् ॥२९॥
गुहामुद्घटितां ज्ञात्वा भरतो(भूपो) द्वादशयोजनीम् । पश्चाद्यदाश्वमारूढो ययौ पवनवेगतः ॥३०॥
गुहाज्ज्वालां गतां पश्चा-ज्ज्ञात्वा भरतभूपतिः । गुहायामविशद्दीप-तुल्यमण्डलतेजसा ॥३१॥
उन्मग्नां निमग्नां कूल-ङ्कषामुत्तीर्य वेगतः । वैताढ्यात् पुरतो यातो भरतो मेदिनीपतिः ॥३२॥
आगतं सबलं भूपं म्लेच्छास्तत्र स्थिता रुषा । युद्धं कर्त्तुं समाजग्मु र्यमा इव दृढौजसः ॥३३॥
योधं योधं भृशं म्लेच्छा भग्ना दुर्गेऽतिदुर्गमे । गत्वाशु साधयामासु-र्विद्यां रोगविधायिकाम् ॥३४॥
अशक्ताः समरं कर्त्तुं म्लेच्छा मत्सरधारिणः । रोगमुत्पादयामासु-र्भरतक्ष्मापतेर्बले ॥३५॥
रोगेण पीडितं चक्रं ज्ञात्वा चक्री तदा भृशम् । उपायान् भूरिशश्चक्रे मन्त्रतन्त्रादिभिः खलु ॥३६॥
सुबुद्धिर्मन्त्रिराड् नत्वा भरतेशं व्यजिज्ञपत् । आत्मसैन्येऽभवद्रोगो-ऽशक्यो हन्तुं तु भैषजैः ॥३७॥
नायं त्रिदोषजो रोगो विद्यते स्वबले नृपः । आगन्तुकोऽभिचारादि-दोषादुत्पादितः परैः ॥३८॥
एवं जल्पति मन्त्रीशे द्वौ खगौ विमलद्युती । व्योम्नोऽभ्येत्य नतिं भूमि-पतेश्चक्रतुरादरात् ॥३९॥
भूपो जगौ कुतः स्थानात् किमर्थमिह वां खगौ । आगतौ ? प्रोचतुस्तौ तु खगावावां महीपते ! ॥४०॥
वायुवेगमनोवेगौ खगावावां नभोऽध्वना । अगच्छाव युगादीशं वन्दितुं भवतः पितुः ॥४१॥
तत्र श्री ऋषभेनेति शत्रुञ्जयमहीभृतः । माहात्म्यं जल्पताऽश्रावि प्रियालमहिमाऽद्भुतः ॥४२॥
शत्रुञ्जये गिरौ राजा-दनीवृक्षोऽस्ति योऽधुना । स एव शाश्वतोऽनेक-देवदानवसेवितः ॥४३॥
वैताल-शाकिनी-भूत-दुष्टदेवादिदोषहृत् । तत्प्रभावो युगादीशा-दावाभ्यां बहुशः श्रुतः ॥४४॥
तत्सम्भमृत्तिकाशाखा-पत्राद्यं विद्यतेऽत्र च । तच्चूर्णसेवनात् सर्वे भवन्ति नीरुजो जनाः ॥४५॥
चक्रिणोक्तौ च तौ व्योम चारिणौ चक्रिणो बलम् । नीरोगं चक्रतू राजा-दनीमृत्पत्रयोगतः ॥४६॥
नीरोगं सबलं राजा-दनीपत्राम्बुयोगतः । ज्ञात्वा चक्री जगौ शत्रु-ञ्जयोऽयं विद्यते वरः ॥४७॥
यत्र राजादनी पत्र-पुष्पादिरोगहृन्नृणाम् । अधस्तस्यास्तरोर्मर्त्या असङ्ख्याश्च शिवं ययुः ॥४८॥
मया दिग्विजयप्रान्ते भूरिसङ्घयुतेन हि । यात्रां करिष्यते शत्रु-ञ्जये सद्गतिहेतवे ॥४९॥
करिष्यते यदा यात्रा मया शत्रुञ्जयाचले । तदा द्वितीयवारं तु भोक्तव्य नान्यथा पुनः ॥५०॥
भरतः साधयन् पृथ्वीं तीर्थे प्रभासमञ्ज्ञिके । दिव्यबाणं वशीचक्रे प्रभासेशं क्षणादपि ॥५१॥
ददौ चूडामणिं वक्षो-मणिं हारं मनोहरम् । कटकानि कटीसूत्रं भरताय प्रभासराट् ॥५२॥
तद्धस्ते स्वर्णकुम्भस्थं नीरं दृष्ट्वा जगौ नृप । प्रभासेशाऽत्र किं तिष्ठेद् गोपितं जीवनं त्वया ? ॥५३॥

अथ प्रभासराट् प्राह सुराष्ट्रामण्डले वरे । शत्रुञ्जयाभिधं तीर्थं विद्यते शिवशर्मदम् ॥५४॥
अनन्तमहिमापूर्ण मनन्तसुकृताऽऽस्पदम् । नानारत्नौषधिकुण्ड-रसकूपीमहर्द्धिमत् ॥५५॥
वीक्षणात् कीर्त्तनात् स्पर्शा-च्छ्रवणादपि पापहृत्। स्वर्गापवर्गसातानि दत्ते यत् प्राणिनां क्षणात् ॥५६॥युग्मम्॥
उक्तञ्च-"तीर्थभूतपुराराम-नगदेशादिभूमिषु । शत्रुञ्जयसमं तीर्थं नास्ति त्रैलोक्यपावकम् ॥५७॥
अन्यतीर्थेषु यद्यात्रा-शतैः पुण्यं भवेन्नृणाम् । तदेकयात्रया पुण्य शत्रुञ्जयमहागिरौ ॥५८॥"
तस्य तीर्थस्य पार्श्वेऽस्ति नदी शत्रुञ्जयाभिधा । सत्प्रभावपयःपूर्णा याऽर्हच्चैत्यविभूषिता ॥५९॥
शत्रुञ्जयी पवित्रेयं विशेषात्तीर्थसङ्गमात् । गङ्गासिन्धुनदीदिव्य-जलाधिकफलप्रदा ॥६०॥
या पूर्ववाहिनी गङ्गा या पूर्वसुकृतैकभूः । नानाहृद्प्रभावाढ्या बहुचित्रकरा नदी ॥६१॥
शत्रुञ्जया जाह्नवीव पवित्रजलपूरिता । प्रक्षालयात पापानि शत्रुञ्जयाद्रिसङ्गता ॥६२॥
कादम्ब-पुण्डरीकाद्रि-शीर्षयोरन्तरा ह्रदः । तस्यामुच्चप्रभावाढ्यो विद्यते कमलाभिधः ॥६३॥
ह्रदस्यास्य मृदं लात्वा पिण्डीकृत्य च तज्जलैः । बद्ध्वा चक्षुषि तद्रोगान् हन्ति दोषान्धतादिकान् ॥६४॥
तस्य ह्रदस्य पानीयं कान्तिकीर्तिमतिप्रदम् । शाकिनी-भूत-वेताल-वातपित्तादिदोषहृत् ॥६५॥
उपसर्गा घनास्ते ते तत्पयःस्पर्शनाद् ध्रुवम् । यान्ति दूरं तमोव्रातं सूर्यस्येवोदयात् किल ॥६६॥
प्रत्यब्दं पुण्डरीकाद्रि-तीर्थं नन्तुं व्रजाम्यहम् । अर्हत्स्नात्रकृते नीरं ह्रदान्नेष्याम्यहं वरम् ॥६७॥
निःशेषविघ्ननाशाय रक्षितं नीरमप्यदः । मया तु स्वामिने तुभ्यं देयं प्रीतिकरं पुनः ॥६८॥
ढौकितं मयका ह्येतद्वारि शत्रुञ्जयीभवम् । दिग्जयं कुर्वतः सर्व-विघ्नहृत् भावि ते प्रभो! ॥६९॥
प्रभासेशकृतस्फार-विमानारोहणात्ततः । सिद्धाद्रौ भरतो गत्वा ननाम तीर्थमादरात् ॥७०॥
स्नात्वा शत्रुञ्जयायां तु स्पृष्ट्वा तत्तीर्थमुत्तमम् । स्मरन् शत्रुञ्जयं राजा स्वसेनामीयिवान् स्वयम् ॥७१॥
साधर्मिकोऽसि मित्र ! त्वं तीर्थप्रभावदर्शनात् । सन्मान्य भरतस्तं च ददौ देशाननेकशः ॥७२॥

शत्रुञ्जयनदीह्रद-प्रभाववर्णनम् ।

साधयित्वाऽखिलान् देशान् भरतो मेदिनीपतिः । कारयामास चक्रीशा-भिषेकं भूपपार्श्वतः ॥७३॥
एकदा भरतो यावत् सभायां समुपाविशत् । तावदेको नरोऽभ्येत्य जगादेति कृतादरम् ॥७४॥
स्वामिंस्तव सुतः पुण्ड-रीको गणाधिपो वरः । प्रथमः प्रथमेशस्य तुङ्गक्षोणीधरोपरि ॥७५॥
साधुभिः पञ्चकोट्या तु सार्द्धं सर्वतमःक्षयात् । चैत्रस्य पूर्णिमारात्रौ मुक्तिपुर्यां समीयिवान् ॥७६॥
आकर्ण्यैतत्तदा चक्री दानं भूरितरं द्रुतम् । तस्मै दत्त्वा स्वचित्ते तु दध्यावेवं पुनः पुनः ॥७७॥
समस्तक्लेशसङ्घातान्निर्गतोऽसौ गणाधिपः । पुण्यवान् पुण्डरीकस्तु मुक्तिपुर्यां समीयिवान् ॥७८॥
मोहपाशैरहं बद्धः क्लिश्यमानः पदे पदे । रागादिवैरिभिर्दुःखं सहिष्ये करवै किमु ? ॥७९॥
ततस्तुङ्गगिरौ चक्री प्रासादं रैमयं पृथुम् । कारयामास नाभेय देवस्य भूरिभावतः ॥८०॥
तत्र रत्नमये बिम्बे नाभेय-पुण्डरीकयोः । अस्थापयत् शुभे लग्ने चक्री वृषभनन्दनः ॥८१॥
नेमिवर्ज्या जिना अन्ये द्वाविंशतिः सुरार्चिताः । शत्रुञ्जये समेष्यन्ति पावयन्तो महीं क्रमात् ॥८२॥
श्रुत्वेति चक्रिराट् तेषां द्वाविंशतिं जिनालयान् स्वर्णरूप्यमयान् भूरि-लक्ष्मीव्ययादचीकरत् ॥८३॥

तेषु देवालयेष्वेव नेमिवर्जान् जिनेश्वरान् । द्वाविंशतिं मणिस्वर्ण-मयान् न्यवीविशन् मुदा ॥८४॥
तेषां जिनेन्द्रबिम्बानां चन्द्रगच्छाधिपान्तिकात् । प्रतिष्ठां कारयामास भूरिसङ्घसमन्वितः ॥८५॥
एकदा वृषभोपान्ते माहात्म्यं सिद्धभूभृतः । (श्रुत्वा)सङ्घाधिपपदं वाञ्छन् जगादेति कृताञ्जलिः ॥८६॥
स्वामिन् ! सङ्घाधिपपदं कथं सम्प्राप्यते जनैः ? । स्वामी जगाद भरत ! शृणु सम्प्रति भूधव ! ॥८७॥
न प्राप्यते विना भाग्यं सङ्घाधिपपदं जनैः । प्राप्यते भाग्यतः सङ्घ-नाथस्य पदवी खलु ॥८८॥
ऐन्द्रं पदं चक्रिपदं श्लाघ्यं श्लाघ्यतरं पुनः । लभ्यते प्राणिभिर्भाग्यात् सङ्घनाथपदं पुनः ॥८९॥
तीर्थङ्करनामगोत्र–मर्जयत्यतिदुर्लभम् । भूत्वा सङ्घपतिर्भव्य जीवो विशदमानसः ॥९०॥
चतुर्विधेन सङ्घेन सहितः शुभवासनः । अधिरोप्य रथे सार्व-बिम्बानि लसदुत्सवम् ॥९१॥
यतः—यच्छन् पञ्चविधं दान-मुद्धरन् दीनसञ्चयम् । पुरे पुरे जिनागारे कुर्वाणो ध्वजरोपणम् ॥९२॥
शत्रुञ्जयादितीर्थेषु यो गत्वा श्री जिनार्चनम् । करोति लभते मुक्ति-सातं स एव वेगतः ॥९३॥ त्रिभिर्विशेषकम्
श्रुत्वेति स्वामिनो वक्त्रात् चक्री प्रोल्लासिताशयः । आजुहाव बहुं सङ्घं प्रेष्य कुङ्कुमपत्रिकाः ॥९४॥
अष्टाह्निका-महः सार्व-प्रासादेषु पृथक् पृथग् । यदा चक्री व्यधाच्छक्र-स्तदागात्तत्र ताविषात् ॥९५॥
बिम्बं रत्नमयं स्वर्ण-देवमन्दिरमध्यगम् । वासवः सार्वभौमाय दत्तवान् स्नेहपूर्वकम् ॥९६॥
मणिमयैः स्वर्णमयै-श्चैत्यकाष्ठमयैः पुनः । सहस्रप्रमितैर्देवा-लयैर्मध्यगतीर्थपैः ॥९७॥
रथस्थैश्चामरैर्वीज्य-मानैश्छत्रविराजितैः । चक्री गुरुयुतोऽचालीत् शत्रुञ्जयं गिरिं प्रति ॥९८॥
तस्मिन् सङ्घेऽभवन् सङ्घा-धिपाश्चत्वार एव च । महीधराश्च बहवो राजानो धनिनो वराः ॥९९॥
सङ्घेन तिलकं भाले भरतस्य सदुत्सवम् । चक्रे शक्रस्ततोऽन्येषां सङ्घेशानां पृथक् पृथग् ॥१००॥
ग्रामे ग्रामे जिनेन्द्रार्चां कुर्वाणश्च पुरे पुरे । सुराष्ट्रासु ययौ चक्री यावत् कुर्वन् महोत्सवम् ॥१०१॥
तावद्भरतभूपस्य भ्रातृव्यो विशदाशयः । सुराष्ट्रस्य सुतः शक्ति-सिंहः सन्मुखमागमत् ॥१०२॥
भरतस्यानमत्पादौ शक्तिसिंहो महीपतिः । ततस्तस्य व्यधाच्चक्री दोर्भ्यामालिङ्गनं दृढम् ॥१०३॥
चक्री जगौ भवान् धन्यः पुण्यवान् प्रवराशयः । यतः शत्रुञ्जयं तीर्थं विद्यते त्वद्दृशोः सदा ॥१०४॥
धन्याः सौराष्ट्रका लोका एते सुकृतिनः खलु । ये नित्यं पुण्डरीकाद्रिं निकषा निवसन्ति हि ॥१०५॥
अस्य तीर्थस्य सच्छाया स्पृष्टाऽपि प्राणिनां सदा । हरते भूरिपापानि ददते सुखसन्ततिम् ॥१०६॥
ये पुण्डरीकमीक्षन्ते पुण्डरीकमिवोज्ज्वलम् । ते त्यजन्त्येनसां पुञ्जं पुण्यामृतपवित्रिताः ॥१०७॥
इत्युक्त्वा कुसुमैर्लाजै-र्वर्यैः शत्रुञ्जयाचलम् । वर्द्धयित्वाऽऽरुरोहाशु कुर्वन् महोत्सवं नृपः ॥१०८॥
शत्रुञ्जयादितीर्थेभ्यः पय आनीय सुन्दरम् । स्नात्रं कृत्वाऽर्हतश्चक्री पुष्पैरभ्यर्चयन् मुदा ॥१०९॥
मालायाः परिधानस्य क्षणेऽवग् भरतं हरिः । त्वं श्रीवृषभपुत्रोऽसि मुक्तिं गन्ता भवेऽत्र हि ॥११०॥
अतो मे दीयतां माला वृषभस्य जिनेशितुः । अत्याग्रहात्तदा चक्री मालां शक्राय दत्तवान् ॥१११॥
ततो यदा हरिर्मालां परिधत्ते स्म भावतः । तदोचे मनुजैरिन्द्र-मालां परिदधे हरिः ॥११२॥
ततस्तस्याश्च मालाया इन्द्रमालाभिधा जनैः । विश्राणिता ततोऽत्रापि शक्रमाला निगद्यते ॥११३॥
आरात्रिकं च मङ्गल-प्रदीपं विधिवत्तदा । चक्री कृत्वा व्यधाच्चार्चा स्तुतिं स्फारतरैः स्तवैः ॥११४॥

जीवाभिगमेऽप्युक्तं-"वरपुप्फगंधअक्खयपईवफलधूवनीरपत्तेहिं। नेविज्जविहाणेहि अ जिणपूआ अट्ठहा होइ॥
गंधोदएण ह्नवणं पूआ अट्ठविह मंगलाइं च। आरत्तिगाइमाई कायव्वं मव्वमणुदिअहं ॥११६॥"
एवं यात्रां विधायाथ चक्र्यागत्य निजे पुरे। पपाल पृथिवीं न्याय-मार्गेण जनताहितः ॥११७॥
पुनः सङ्घं महान्तं तु कृत्वा प्रथमचक्रिराट्। शत्रुञ्जये ययौ नन्तुं युगादिजिनपुङ्गवम् ॥११८॥
यदा वरपयःपुष्पैः धूपोत्क्षेपनकैः पुनः। चक्रे प्रथमचक्रीशः प्रथमस्य प्रभोर्मुदा ॥११९॥
तदाऽदिमद्वितीयस्वः-शक्रौ च चमरो बलिः। मत्वाऽऽदिमं जिनं सार्व-भौमं नेमुः कृताऽऽदराः ॥१२०॥
उक्तश्च-चमरेन्द्रबलीन्द्राद्याः सर्वे भवनवासिनः। सेवन्ते यं सदा तीर्थ-राजं सद्भक्तिभाविताः ॥१२१॥
अणपन्नी पणपन्नी-मुख्या व्यन्तरनायकाः। सेवन्ते यं सदा तीर्थ० ॥१२२॥
ज्योतिषां वासवौ चन्द्र-सूर्यावन्येऽपि खेचराः। सेवन्ते यं सदा तीर्थ० ॥१२३॥
मनुष्यलोकसंस्थाना वासुदेवाश्च चक्रिणः। सेवन्ते यं सदा तीर्थ-राजं सद्भक्ति० ॥१२४॥
इन्द्रोपेन्द्रादयोऽप्येते सिद्धा विद्याधराधिपाः। सेवन्ते यं सदा तीर्थ-राजं० ॥१२५॥
ग्रैवेयकानुत्तरस्था मनसा त्रिदिवौकसः। सेवन्ते यं सदा तीर्थ-राजं० ॥१२६॥
एवं त्रैलोक्यसंस्थाना ह्येते नरसुरासुराः। सेवन्ते यं सदा तीर्थ-राजं सद्भक्ति० ॥१२७॥
वापीकूपतडागानि दीर्घिकापल्वलानि च। जलस्थानानि भान्ति स्म यत्रोद्यानानि चोच्चकैः ॥१२८॥
आरोहति गिरिं सङ्घे नन्तुं जिनेश्वरान् द्रुतम्। सुधर्मगणभृच्छिष्यः चिल्लणो नाम सत्तमः ॥१२९॥
पश्चिमेनाध्वना भूरि-साधुलोकसमन्वितः। अर्द्धमार्गे ययौ यावत् सङ्घोऽभूत्तृपितस्तदा ॥१३०॥
तदाऽतितृपितः सङ्घ-श्चिल्लणं मुनिमूचिवान्। विनाऽम्बु साम्प्रतं प्राणा यास्यन्ति नो मुनीश्वर ! ॥१३१॥
भवत्पादप्रसादेन जीवितं जायते यदि। तदाऽस्माभिर्जिनाधीशो वन्द्यते शिवशर्मदः ॥१३२॥
ततश्चिल्लणमुनिना वीक्ष्य लाभं सुविद्यया। प्रादुश्चक्रे सरो वारि-पूर्णं सद्योगतस्तदा ॥१३३॥
स्वादं स्वादं जलं तत्र सद्यो वितृपितस्तदा। सुस्थितोऽजनि सर्वज्ञ-मतं प्रशंसति स्म च ॥१३४॥
श्रीसङ्घस्य हितायाशु चिल्लणो यत् सरो व्यधात्। चिल्लणाख्यमभूत् ख्यातं तदद्यापि जनेऽभितः ॥१३५॥
चिल्लणः सुमुनिस्तत्र तीर्थ ईर्यापथं स्फुटम्। प्रतिक्रमन् पुनर्नीर-जीवानक्षामयद् बहु ॥१३६॥
निन्दन् स्वयं कृतं पापं पयो-विकुर्वणादिकम्। चूर्णीचक्रेऽखिलं कर्म-पुञ्जं पूर्वभवार्जितम् ॥१३७॥
अष्टकर्मक्षयात्तस्य चिल्लणस्य मुनेः क्षणात्। उत्पन्नं केवलज्ञानं मुक्तिस्तत्राभवत्क्रमात् ॥१३८॥
यत्रागात् स मुनिर्मुक्तिं तत्राद्यश्चक्रिराड् मुदा। चिल्लणाख्यं विहारं तु कारयामास सुन्दरम् ॥१३९॥
भृङ्गारस्थालकलश-च्छत्रचामरदीपकान्। विभूषणारात्रिकाणि जिनार्चायै मुमोच सः ॥१४०॥
यतः-कारयन्ति जिनाना ये तृणावासानपि स्फुटम्। अखण्डितविमानानि ते लभन्ते त्रिविष्टपे ॥१४१॥
काष्ठादीनां जिनावासे यावन्तः परमाणवः। तावन्ति पल्यलक्षाणि तत्कर्त्ता स्वर्गभाग्भवेत् ॥१४२॥
ततः प्रथममालां तु इन्द्रमालाभिधां वराम्। चक्री परिदधाति स्म नानोत्सवपुरस्सरम् ॥१४३॥
तुष्टो यस्यास्त्ययं शैलः कामधेनु-सुरद्रुमाः। चिन्तामण्यादयस्तस्य सर्वे तुष्टाः समन्ततः ॥१४४॥
सिद्धाद्रि-सर्वशृङ्गेषु प्रासादा निखिलार्हताम्। चक्रिणा कारिता भूरि-रैव्ययान्मुक्तिहेतवे ॥१४५॥

परिधाप्याम्बरैर्वर्यैः श्रीगुरुं सङ्घसंयुतम् । अयोध्यायामियायाऽद्य-चक्री भरतभूपतिः ॥१४६॥
अन्येद्युरादिदेवस्य प्रासादे विपुले स्फुटम् । अष्टोत्तरशतं चक्री सन्मण्डपानकारयत् ॥१४७॥
भरतो भूधवोऽन्ये-द्युर्ज्ञानिपार्श्वे जगावदः । भूरिपापा अपि प्राण-भाजो येऽत्र शिवं ययुः ॥१४८॥
तेषां सम्प्रति सम्बन्धं श्रावय त्वं मम प्रभो ! । ततो ज्ञानी जगौ पूर्वं श्रावस्त्यां सुन्दरश्रियि ॥१४९॥
त्रिशङ्कोर्भूपतेः पुत्र-स्त्रिविक्रमाभिधोऽजनि । शास्त्राणि भूरिशोऽपाठि पित्राद्यैर्बुधसन्निधौ ।१५०।त्रिभिर्विशेषकम्
गुरोः पार्श्वे निशम्या-र्हद्धर्मं न्यस्य सुतं निजम् । राज्ये जग्राह चारित्रं पापध्वान्तरविप्रभम् ।१५१॥
त्रिविक्रमोऽन्यदोद्याने यावत्तरोरधः स्थितः । तावत्पक्षी कुतोऽभ्येत्य तच्छीर्षोर्द्ध्वं व्यधाद् द्रवम् ॥१५२॥
उड्डापितोऽपि भूपेन पक्ष्युड्डीनो यदा न हि । तदा राज्ञेषुणा विद्धा रटन् पञ्चत्वमाप्तवान् ॥१५३॥
मृतं पक्षिणमालोक्य पश्चात्तापपरो नृपः । आगतः स्वगृहे भूयो भूयः सस्मार पक्षिणम् ॥१५४॥
आर्त्त्या मृत्वा तदा पक्षी भिल्लो भीमवनेऽभवत् । तत्र भिल्लो व्यधात् पापं भूरिजीवादिहिंसनात् ॥१५५॥
यतः-"जीवान् निःशूकतायोगाद् यो हिनस्ति निरन्तरम् । नरकेषु स च सर्वेषु वेदना लभते दृढम् ॥१५६॥
हसन्तो हेलया कर्म्म यत् कुर्वन्ति प्रमादिनः । जन्मान्तरशतैरेते शोचन्त्यनुभवन्ति च ॥१५७॥
इतो धर्म्मरुचेः पार्श्वे गत्वा नत्वा तमादरात् । त्रिविक्रमोऽशृणोद् धर्म्मं जैनं जीवदयामयम् ॥१५८॥
जीवान् रक्षन् सदा जीवो लभतेऽव्ययसम्पदम् । यतो जीवोऽस्ति जीवानां सर्वेषां वल्लभः खलु ॥१५९॥
यतः-हेम-धेनु-धरादीनां दातारः सुलभा भुवि । दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥१६०॥
वृथा दानं वृथा विद्या वृथा निर्ग्रन्थताऽपि च । अनिन्द्ययोगचर्याऽपि विना जीवदयां किल ॥१६१॥
एव धर्म्मं समाकर्ण्य भूपालः करुणापरः । स्मरन् पक्षिवधं चित्ते दध्यावेवं पुनः पुनः ॥१६२॥
अहो ! मया कृतं पाप प्रत्यक्षं पक्षि-हिंसनात् । तेन पापेन मे श्वभ्रे पात एव भविष्यति ॥१६३॥
किं जीवितेनाप्यमुना किं राज्येनामुना पुनः । ययोः सतोरपि श्वभ्र-पातो भवति मेऽग्रतः ॥१६४॥
असारादेव संसारात् सारं देहाद् व्रतं स्मृतम् । तेन पङ्कादिवाम्भोजं धर्म्मं गृह्णामि शर्मदम् ॥१६५॥
ततो राज्येऽङ्गजं न्यस्य लात्वा त्रिविक्रमो व्रतम् । पठन् शास्त्राण्यभूत् सर्व-तत्त्वविद् यतनापरः ॥१६६॥
श्रीगुर्वनुज्ञया साधु-रेकाकी विहरन् सदा । भीमे वने स्थितः कायो-त्सर्गेण ध्यानतत्परः ॥१६७॥
यतिं प्रेक्ष्य समुत्पन्नवैरो भिल्लो रुषं दधौ । यष्टि-मुष्ट्यादिभिर्गाढ-मताडयच्च निर्दयम् ॥१६८॥
प्रशान्तात्मापि स यति-र्जातक्रोधस्त्रिविक्रमः । भस्म्यकार्षीद् द्रुतं भिल्लं तेजोलेश्याविमोचनात् ॥१६९॥
विपद्य भिल्लजीवोऽय तत्रैव कानने हरिः । अजनिष्ट यतिः सोऽपि विहृत्येयाय तत्र च ॥१७०॥
प्राग्वैरात्तं यतिं वीक्ष्य जातरोषो हरिर्भृशम् । हन्तुं जगाम तत्पृष्ठौ नष्टः स संयतः क्वचित् ॥१७१॥
पश्यन् यतो यतो याति यतिस्तत्र स केसरी । हन्तुं तं समगात् क्रूर-कर्म्मा रोषाऽरुणेक्षणः ॥१७२॥
हरिणा खेदितः साधुः प्रशान्तात्मा रुषारुणः । अग्निसाद्विदधे तेजो-लेश्यया मृगशात्रवम् ॥१७३॥
त्यक्तप्राणस्तदा पञ्चा-ननो द्वीप्यभवद्वने । अतिक्रूरः स हन्ति स्म जीवान् नित्यमनेकशः ॥१७४॥
साधुस्त्रिविक्रमोऽन्येद्यु र्विहरंस्तत्र कानने । समेतो द्वीपिना दृष्टः प्राग्वैरात् क्रूरचेतसा ॥१७५॥
द्वीपी हन्तुं यतिं यावद्धाव तावता यतिः । नष्टो यत्र व्रजत्येव द्वीपी तत्रैति हिंसितुम् ॥१७६॥

कषायाणां फलं साधु-र्जानन्नायतिदारुणम् । अग्निसात् द्वीपिनं चक्रे तेजोलेश्याविमोचनात् ॥१७७॥
ततो द्वीपी मृतः कच्छे भैरवेऽत्तिवशात्तदा । अभवद् गवयः पीनस्कन्ध उन्मत्तगण्डभः ॥१७८॥
तपस्यन्तं तपस्तीव्रं तत्रायान्तं मुनिं च तम् । दृष्ट्वा स गवयो हन्तुं चेता आसीद् रुषारुगः । १७९॥
गवयेन यदा तीव्रः सङ्कटे मरणप्रदे । पातितः स तदा हन्तु-कामोऽभूत्त त्रिविक्रमः ॥१८०॥
मृत्वा स गवयजीवः उज्जयिन्या बहिर्वने । आशीविषो विषोऽग्र आसीत् कर्म्मनियोगतः ॥१८१॥
विहरन्ननिशं ग्रामाद् ग्रामं त्रिविक्रमो यतिः । उज्जयिन्या बहिस्थाने ययौ यत्रास्त्यहिः स च ॥१८२॥
दृष्ट्वाऽहिः संयतं पूर्व-वैरादुत्पन्नतीव्ररुट् । दंष्टुं यावदगात्ताव-दन्यत्र स यतिर्ययौ ॥१८३॥
तत्रापि भुजगः सोऽपि दंष्टुं तं यतिमीयिवान् । सोऽपि नंष्ट्वा यतिर्यातोऽन्यत्र स्थाने यतीश्वरः ॥१८४॥
तत्राप्यायान्तमालोक्य सर्पं यतिस्त्रिविक्रमः । रुष्टो ज्वलनसाचक्रे तेजोलेश्याप्रयोगतः ॥१८५॥
यतः-अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद् वर्द्धतेऽन्यस्य वारितः ॥१८६॥
"तं नत्थि घरं तं नत्थि राउलं देउलंपि तं नत्थि । जत्थ अकारणकुविआ दो तिन्नि खला न दीसंति ॥१८७॥"
अकामनिर्जरायोगात् क्षिपन् कर्म्म पुराजितम् । अहिजीवो द्विजो गेगेऽभवद्राजगृहे पुरे ॥१८८॥
यतः-"संसारबीजभूतानां कर्म्मणां जरणादिह । निर्जरा सा स्मृता द्वेधा सकामा कामवर्जिता ॥१८९॥"
ज्ञेया सकामा यमिना-मकामास्त्वन्यदेहिनाम् । कर्म्मणां फलवत्पाको यदुपायात्स्वतोऽपि च ॥१९०॥ इत्यादि
पर्यटन्नन्यदा ग्रामाद् ग्रामं यतिस्त्रिविक्रमः । मध्येराजगृहं भिक्षा-कृते बभ्राम सन्मुनु । १९१॥
कर्म्मयोगाद् भ्रमन् गेहे गेहे शुद्धान्नहेतवे । अहिजीवस्य विप्रस्य दृग्गोचरं समीयिवान् ॥१९२॥
स द्विजो जातरुड् हन्तुं तं साधुमोहतेतराम् । ग्राममध्ये न शक्नोति हन्तुं भूपतिभीतितः ॥१९३॥
यतः—"राजदण्डभयात्पापं नाचरन्त्यधमो जनः । परलोकभयान्मध्यः स्वभावादेव नोत्तमः ॥१९४॥
भिक्षां लात्वा बहिर्यातं तं पुर्याः साधुशेखरम् । निहन्तुं स द्विजस्तत्र ययौ यष्टिसखा रुषा ॥१९५॥
तत्रादौ बहुशो विप्रः क्रूरजल्पनतः परम् । कृत्वोत्सर्गमादाय तस्य हन्तुमधावत ॥१९६॥
भिक्षयन्तं यतिं यष्टि-मुष्टिभिः स द्विजाधमः । यदा न व्यरमद् हिंसन् तदा क्रुद्धोऽभवद्यतिः ॥१९७॥
तेजोलेश्याप्रयोगेण कोपाविष्टस्त्रिविक्रमः । द्विजं तं भस्मसाच्चक्रे-नैषीत् सद्यो यमालयम् ॥१९८॥
अकामनिर्जरायोगात् क्षिप्त्वा कर्म्माशुभोदयम् । वाणारस्यां महाबाहुर्भूपो जातः स बाडवः ॥१९९॥
मेलयित्वा बलं भूरि महाबाहुर्नरेश्वरः । साधयामास भूयिष्ठ प्रत्यर्थिपार्थिवान् क्रमात् ॥२००॥
पालयन् न्यायतः पृथ्वीं भोगान् भुञ्जन् यथेप्सितान् । हृष्टचित्तो महाबाहु-र्बहुं समयमत्यगात् ॥२०१॥
वातायनस्थितोऽन्येद्यु-र्महाबाहुर्यतीश्वरम् । आलोक्य ध्यातवानेवं भूयो भूयः स्वचेतसि ॥२०२॥
पुराऽप्येवंविधं साधुं महनीयं मनीषिणाम् । अपश्यन् क्वाप्यहं शान्त-दान्तचित्तं जितेन्द्रियम् ॥२०३॥
ध्यायन्नेवं नृपः प्राप्तो जातिस्मृतिं रजःक्षयात् । जन्मसप्तक्रमसमापींद् निष्गादितवधात्मकम् ॥२०४॥
राजा दध्यौ निहन्ता मे प्राग् योऽभूद् भवसप्तके । स हि चेद् ज्ञायते मिथ्या-दुष्कृतं दीयते तदा ॥२०५॥
न मिथ्यादुष्कृतमृते वैराभावो भवेन्नृणाम् । मिथ्यादुष्कृततो ज्ञानं चन्दनाया अजायत ॥२०६॥
ध्यात्वेति भूपतिः स्वीय-वधकज्ञप्तिहेतवे । समस्यायाः पदद्वन्द्वं कृत्वा नृभ्यो ददाविति ॥२०७॥

पक्षी भिल्लो हरिर्द्वीपी शण्डः फणी द्विजोरयः । ................ ॥२०८॥
सचेता जन एतेषां समस्यां पूरयिष्यति । तस्मै दास्यामि दीनार-लक्षं सन्मानदानतः ॥२०९॥
समस्यायाः पदद्वन्द्वं सर्वो लोकः पुरे वने । पपाठोच्चैर्धनप्राप्ति-लिप्सयो निशि वासरे ॥२१०॥
सञ्चरिष्णुरितः साधुर्दिक्षु सर्वासु सन्ततम् । तत्रोद्याने समस्यायाः पदद्वन्द्वमथाशृणोत् ॥२११॥
पामरोक्तां समस्यां तां श्रुत्वा त्रिविक्रमो जगौ । 'येनामी निहताः सप्त सोऽहं भावी कथं हहा' ? ॥२१२॥
समस्यां पूरितां वाचं-यमेन पामरस्तदा । समेत्य नृपतेरग्रे पपाठ मुदिताशयः ॥२१३॥
राजा जगौ त्वयाऽपूरि समस्या वाऽन्येन केनचित् । पामरोऽवक् पुरोद्याने स्थितेन साधुना ननु ॥२१४॥
ततोऽभ्येत्य नृपस्तत्र प्रणम्य तं मुनिं जगौ । समस्या पूरितेदानीं कथं साधो ! त्वया वद ? ॥२१५॥
यतिर्जगौ मया ज्ञानाज्-ज्ञातमेतन्नरेश्वर ! । दध्यौ भूपो ह्ययं साधुः कुत्रापि वीक्षितो मया ॥२१६॥
एवं संस्मरतो भूमी-पतेर्जातिस्मृतिस्तदा । अजायत ततो ज्ञातो यतिर्हन्ता निजात्मनः ॥२१७॥
यतिः प्राह मया पूर्व-भवेषु सप्तसु ध्रुवम् । कोपाविष्टेन निहत स्तथाऽपि गमितं स मे ॥२१८॥
राजाऽऽचष्ट मयाऽपि त्वं भवेषु तेषु तेष्वपि । खेदितोऽभूस्तथा पापं तीव्रं मेऽजनि संयत ! ॥२१९॥
उत्थाय नृपतिः साधोः प्रणम्य चरणद्वयम् । क्षमयामास तं साधुं संयतोऽपि क्षमापतिम् ॥२२०॥
यति-भूपौ मिथो यावत् क्षमयित्वोचतुर्मुदा । तावद् दुन्दुभिनिर्ह्रादोऽजनिष्ट मरुतां पथि ॥२२१॥
किमेतदिति जल्पन्तौ यतिक्ष्मापौ सुरोक्तितः । अज्ञासिष्टां मुनेर्ज्ञानो-त्पत्तिं सुन्दरकानने ॥२२२॥
साधुक्ष्मापौ ततस्तत्र वने गत्वा प्रमोदतः । नत्वा केवलिनं जैनं धर्म्म-मित्यशृणोत्तदा ॥२२३॥
न्यग्रोधे दुर्लभं पुष्पं दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म दुर्लभं देवदर्शनम् ॥२२४॥
अनर्घ्याण्यपि रत्नानि लभ्यन्ते विभवैः सुखम् । दुर्लभो रत्नकोट्याऽपि क्षणोऽपि मनुजायुषः ॥२२५॥
ताभ्यामुक्तं कृतं पापं तीव्रं दुःखशतप्रदम् । तस्मान्मे छुट्टनं पापात् कथं ज्ञानिन् ! भविष्यति ? ॥२२६॥
ज्ञानी जगौ विना शत्रु-ञ्जयं तीर्थं मनोहरम् । भविष्यति न पापेभ्यो विमुक्तिर्भवतो द्रुतम् ॥२२७॥
इमं यतिं पुरस्कृत्य भूप ! त्वं सङ्घसंयुतम् । सिद्धक्षेत्रादितीर्थेषु कुरु यात्रां समाहितः ॥२२८॥
तत्र तीर्थे यतेस्ते च सर्वेषां कर्म्मणां क्षयात् । महोदयसुखं सद्यो भविष्यति न संशयः ॥२२९॥
यतः-"टंकणेन यथा हेम जलेन लवणं यथा । तथा शत्रुञ्जयस्मृत्या याति कर्म्म पुरा कृतम् ॥२३०॥"
श्रुत्वेति भूपतिर्वाचं-यमेन तेन संयुतः । शत्रुञ्जये ययौ देवा-न्नन्तुं कुर्वन् महोत्सवम् ॥२३१॥
तत्र विस्तरतः पूजां कुर्वतो मेदिनीपतेः । उत्पन्नं केवलज्ञानं मुक्तिरप्यभवत् क्रमात् ॥२३२॥
त्रिविक्रमयतीशस्य कुर्वतो ध्यानमादरात् । सर्वकर्म्मक्षयात् सद्यो मुक्तिसातमजायत ॥२३३॥
तदा वाचंयमास्तत्र बहवः सिद्धपर्वते । कर्म्मणां क्षयतो मुक्तिं प्रापुः स्वर्गं गता पुनः ॥२३४॥
श्रुत्वेति भरतः शत्रु-ञ्जये गत्वा जिनेश्वरान् । नत्वा च पूजयित्वा च सफलं स्वजनुर्व्यधात् ॥२३५॥

❀ इति महाबाहुभूप त्रिविक्रमराजर्षिमुक्तिगमनसम्बन्ध समाप्त ❀

॥ अथ सर्प-जीवसम्बन्ध ॥

षट्खण्डां मेदिनीं नाभि-सुतो भरतभूपतिः । साधयित्वा सत्कृत्न-कृपाकुले स्थितोऽन्यदा ॥१॥
चारणश्रमणौ साधू धर्म्ममूर्त्ती दयापरौ । उत्तीर्य व्योमतोऽन्येद्यु-र्भरतस्यान्तिके स्थितौ ॥२॥
अकस्मादागतौ साधू दृष्ट्वा भरतचक्रिराट् । तिस्रः प्रदक्षिणाः कृत्वाऽनंसीत्पादौ तयोर्मुदा ॥३॥
दत्त्वा धर्म्माशिषं तस्मै भरतायाऽऽदिमो यतिः । धर्मोपदेशमादातुं प्रारब्ध शिवप्रदम् ॥४॥
मैत्रीचतुष्कमष्टाङ्ग-योगाभ्यासरतिर्धृतिः । परीषहोपसर्गाणां सहिष्णुत्वमथार्जवम् ॥५॥
कषायविषयारम्भ-परिहारोऽप्रमत्तता । प्रसत्तिर्मृदुता साम्यं मुक्तिमार्गा भवन्त्यमी ॥६॥
मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि नियोजयेत् । धर्म्मध्यानमुपस्कर्तुं तद्धि तस्य रसायनम् ॥७॥
मा कार्षीत् कोऽपि पापानि मा च भूत् कोऽपि दुःखितः । मुच्यतां जगदप्येषा मतिर्मैत्री निगद्यते ॥८॥
अपास्ताऽशेषदोषाणां वस्तुतत्त्वावलोकिनाम् । गुणेषु पक्षपातो यः स प्रमोदः प्रकीर्तितः ॥९॥
दीनेष्वार्त्तेषु भीतेषु याचमानेषु जीवितम् । प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥१०॥
क्रूरकर्म्मसु निःशङ्कं देवता-गुरुनिन्दिषु । आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥११॥
सबलो दुर्बलस्यापि हन्ति यो यस्य सोऽत्र वा । सहेत वेदनां घोर-ममुत्र तत्कृतां ध्रुवम् ? ॥१२॥
पुरुषः कुरुते पापं बन्धुनिमित्तं वपुर्निमित्तं च । वेदयते तत् सर्वं नरकादौ पुनरसावेकः ॥१३॥
परद्रव्यापहारेण लभते वधबन्धनम् । घोरदुःखमिहामुत्र परस्वं त्यज सर्पवत् ॥१४॥
परस्त्रीसङ्गमासक्ता येऽधमा नष्टबुद्धयः । वधबन्धादिकं प्राप्य श्वभ्रे ते यान्ति सप्तमे ॥१५॥
अष्टम्यामुपवासं यो विधत्ते भावपूर्वकम् । हत्वा कर्म्माष्टकं सोऽपि याति मुक्तिपदं ध्रुवम् ॥१६॥
पौषधं नियमेनाऽपि यः कुर्यादष्टमीदिने । स्वर्गं राज्यादिकं प्राप्य सोऽपि याति परं पदम् ॥१७॥
उपवासं विधत्ते यश्चतुर्दश्यां स ना व्रजेत् । चतुर्दशगुणस्थाना-न्युल्लङ्घ्याहो ! परं पदम् ॥१८॥
मासे मासे विधातव्य-श्चतुःपर्वसु पौषधम् । प्राणान्तेऽपि न मोक्तव्यो बुधैः स्वमुक्तिकारणम् ॥१९॥
देशनान्ते नृपोऽप्राक्षी-च्चतुर्दश्यष्टमीदिने । उपवासो मया कार्यः पूर्वपातकविच्छये ॥२०॥
निर्ममौ तु युवां देहे दृश्येथां साम्प्रतं कथम् । ततोऽवक् प्रथमः साधु-र्भरतक्ष्मापतेः पुरः ॥२१॥
युगादीशं जिनं नन्तुं गतावावां यदैकदा । तदा जगौ प्रभुः शत्रु-ञ्जयमाहात्म्यमद्भुतम् ॥२२॥
तावत्तिष्ठन्ति हत्यादि-पातकानि तनूमताम् । यावच्छत्रुञ्जयं तीर्थं श्रूयते नहि कर्णयोः ॥२३॥
एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः प्रमुच्यते ॥२४॥
दृष्टः श्रुतोऽपि सिद्धाद्रि-र्दृष्टिकर्णैः सुभक्तितः । येन स जायते मुक्ति-कन्याभर्त्ता न संशयः ॥२५॥
श्रुत्वेत्यावां जिनेन्द्राऽऽस्याद् गतौ शत्रुञ्जयाचले । अनमाव तदा तीर्थं कल्याणकमलाप्रदम् ॥२६॥
तत्रैतो भूरिगीर्वाणैः सेवितः स्वर्गनायकः । नमस्तीर्थं पप्रच्छे स आवाभ्यामिति सादरम् ॥२७॥
कुतस्त्वमीदृग्रूपश्रीः समागा जल्प साम्प्रतम् । स प्राह श्रूयतामत्रा-गमहेतुं ममाधुना ॥२८॥
विदेहेषु पशुग्रामे सुशर्माऽभून्महीसुरः । दारिद्र्यभाजनं मूर्ख-शिरोरत्नं जडाशयः ॥२९॥

ग्रामे न्यत्तेऽन्यदा श्रान्त्वा कणानऽप्राप्य पञ्चषान् । द्विजो यावदगाद् गेहे तावत्पत्नी जगाविति ॥३०॥
त्वं मूर्खो निःकृपः पुण्य-रहितो महितो श्रिया । लात्वाऽन्यत्र सुखं गच्छ निर्धनेन त्वया किमु ॥३१॥

यतः-"यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥१॥"

"जाई रूवं विज्जा तिन्निवि निवडंतु कंदरे विवरे । अत्थच्चिअ परिवड्ढउ जेण गुणा पायड़ा हुंति ॥२॥"

इत्याक्रोशं ददाना सा पत्नी मुशलमुल्वणम् । उत्पाट्याशूत्थिता यावद् हन्तुं कान्तं दुराशया ॥३२॥
तावद् द्विजस्तथा स्फारं पापाणं गृहिणीं प्रति । प्राक्षिपद् बलतः प्राणै-मुमुचे सा यथाऽबला ॥३३॥
ततः पुत्रो जगौ पापिन् ! पितुः किं दुःकृतं कृतम् । अनेन तमसा पातो दुर्गतौ ते भविष्यति ॥३४॥
ततः क्रुद्धो द्विजः पुत्रं जल्पन्तं हतवान् हठात् । ततोऽपि तनयां स्वीयां जघान वाडवः क्रुधा ॥३५॥
ततः—सभीत्र्जन् विप्रः सैरभ्या–स्खलितोऽध्वनि । तामप्यहन् स गां स्फार-पापाणेन दुराशयः ॥३६॥
हत्वैतानि द्विजो गच्छ-स्तलारर्वैधृतः करे । छलान्नंष्ट्वा व्रजन् कूपे न्यपतन् नरकोपमे ॥३७॥
स पतन् खण्डशो जात-स्तथा यातो मृतिं यथा । नरकं सप्तमं प्राप दुःखलक्षप्रदायकम् ॥३८॥

यतः-"पुरुषः कुरुते पापं बन्धुनिमित्तं वपुर्निमित्तं च । वेदयते तत् सर्वं नरकादौ पुनरसावेकः ॥१॥
यत्नेन पापानि समाचरन्ति, धर्मं प्रसङ्गादपि नाचरन्ति ।
आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥२॥"

सहित्वा तत्र दुःखानि स द्विजो निर्गतस्ततः । सिंहोऽजनिष्ट दुष्टात्मा जन्तून् हन्ति स्म निर्दयम् ॥१॥
ततो मृत्वा गतः श्वभ्रे चतुर्थे स द्विजासुमान् । ततो निर्गत्य चाण्डालोऽजनि ग्रामे रमाभिधे ॥३९॥
तत्र कृत्वा तमो भूरिचाण्डालः क्रूरकर्म्मकृत् । मृत्वा च सप्तमे श्वभ्रे जगामासुखदायके ॥४०॥
तीव्रदुःखानि सम्भोज्य तत्रैव नरकेऽनिशम् । वने भीमेऽभवद् दृष्टि-विषोऽहिदुष्टमानसः ॥४१॥
सोऽन्यदाहिविलाऽऽसन्नं मुनिं शान्तात्ममानसम् । निरीक्ष्य फूत्कृतिं कुर्वन् दधाव दशनेच्छया ॥४२॥
तदाऽपश्यन्नहिः साधुं शान्तं सुस्थितमानसम् । शत्रुञ्जयस्य माहात्म्यं वरविद्याभृतां पुरः ॥४३॥
शत्रुञ्जयस्य तीर्थस्य स्मरणात् स्पर्शनात् पुनः । दर्शनान्निर्वृतिर्हस्त-गता नृणां भविष्यति ॥४४॥

उक्तं च—"पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥१॥"

लाघवात् कर्म्मणां शत्रु-ञ्जयमाहात्म्यसंयुते ।जातजातिस्मृतिः सर्पो ऽस्मार्षीत् पूर्वान् भवान् निजान् ॥४५॥
मया पत्नी सुतः पुत्री सैरभिर्निहता पुरा । तेनाहं नरके पातं भूरि प्रापमशर्म च ॥४६॥
ततो विलाद् विनिर्गत्य स सर्पः कुण्डलीभवन् । ननामांह्री मुनेर्हेतुं स्वस्य कल्याणसम्पदः ॥४७॥
तदा तत्रागतानां ख-गामिनां पुरतो मुनिः । श्रीशत्रुञ्जयतीर्थस्य नमस्कृतिफलं जगौ ॥४८॥
शत्रुञ्जयस्य तीर्थस्य स्मरणात् स्पर्शनात्ततः । दर्शनाज्जायते नृणां कल्याणकमला करे ॥४९॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुःकर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥५०॥
शत्रुञ्जयं स्मरन् सर्पो मुनेर्वन्दनतस्तदा । ललावनशनं विद्या धराणां पश्यतां पुरः ॥५१॥
स सर्पस्तैः खगैर्नीतः पुण्डरीकाभिधेऽचले । श्रावितश्च नमस्कारं मृतोऽभून्निर्जरेश्वरः ॥५२॥

यतः—कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । इदं तीर्थं समासाद्य तिर्यञ्चोऽपि दिवं गताः ॥५३॥
एतन्मेऽङ्गमहिभवं सर्प्पजीवोऽस्म्यहं पुनः । अस्य तीर्थस्य माहात्म्यात् शक्रोऽहमभवं किल ॥५४॥
ततः शक्रो निजं सर्प्प-देहं शत्रुञ्जये गिरौ । लसच्चन्दनकर्पूर-काष्ठैर्दहनसाद् व्यधात् ॥५५॥
सर्प्पदाहावनौ रत्न-मयं पीठ सुरेश्वरः । विधाय तीर्थमानम्य ययौ शक्रो निजास्पदम् ॥५६॥
इत्थं विज्ञाय सर्पस्य चरितं शक्रजल्पितम् । आवां गत्वा तु वैताढ्ये अप्रच्छाव जनकाम्बिके ॥५७॥
दीक्षां श्रीवृषभोपान्ते लात्वा शास्त्राणि भूरिशः । पठित्वा वृषभादेशा-दागताविह साम्प्रतम् ॥५८॥ युग्मम्॥
शत्रुञ्जयस्य माहात्म्य-माकर्ण्य भरतेश्वरः । नन्तुं शत्रुञ्जयं चक्रे स्वान्तं कल्याणशर्मणे ॥५९॥
सर्पजीवः क्रमाच्छक्र भवाद्भवे त्रयोदशे । सर्वकर्म्मक्षयान्मुक्ति-पुर्यां यास्यति निश्चितम् ॥६०॥

★ इति सर्प्पजीव सम्बन्धः ★

॥ अथ सुधासेन-भूपकथा ॥

एकदा वृषभोपान्ते भरतः प्रोक्तवान् प्रभो ! । कोऽधुनाऽगात् शिवं सिद्ध-शैले स्वामी जगौ ततः ॥१॥
पद्मपुरे धरापालो भूपतिः पालयन् प्रजाः । ययौ शत्रुञ्जये शैले कुर्वन् क्रीडावनेऽनघे ॥२॥
तत्र साधुं सुधासेनं तपस्यन्तं तपो बहु । दृष्ट्वोत्पन्नरुषो हन्तु-मुत्पाट्याघात् करं निजम् ॥३॥
शिलातले सुधासेनं भूयो भूयो महीपतिः । यदैव स्फालयामास तदा दध्याविदं यतिः ॥४॥
रे जीव ! भवता भूरि पापं जीववधात्पुरा । यच्चक्रे तत् समायात-मधुनैतत् ताडनात्तव ॥५॥
रे जीव ! न त्वया क्रोधः कार्यः कस्योपरि ध्रुवम् । यतः स्याद् भ्रमणं भूरि संसारे विषमे क्रुधः ॥६॥
यतः—सन्तापं तनुते भिनत्ति विनयं सौहार्दमुच्छादय-त्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम् ।
कीर्त्तिं कृन्तति दुर्गतिं वितरति व्याहन्ति पुण्योदयं, धत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम् ॥७॥
एवं तस्य यतेर्ध्यानं कुर्वतः करुणात्मनः । उत्पन्ने केवलज्ञाने देवाश्चक्रुर्महोत्सवम् ॥८॥
प्रजापालः सुरान् ज्ञानो-त्पत्त्युत्सव वितन्वतः । दृष्ट्वा विस्मितचेतस्कः पप्रच्छ निर्जरानिति ॥९॥
किमर्थं क्रियते साधो-रस्योत्सवो मनोहरः । देवाः प्रोचुरयं साधुः पूज्योऽस्ति मरुतामपि ॥१०॥
ततो भूपः समुत्थाय प्रणम्य तं यतिं जगौ । मया ते विहितं विघ्नं जीवितव्यान्तकृद् ननु ॥११॥
केवल्यवग् मया त्वं तु हतो दण्डाभिघाततः । तेनाहं भवता राजन् ! निहतः साम्प्रतं दृढम् ॥१२॥
राजाऽवग् भवता कुत्र भवेऽत्र परत्र च । हतोऽहं श्रावयेदानीं ततः प्राह स केवली ॥१३॥
चन्द्राह्वनगरे चन्द्रः क्षत्रियोऽजनि सुन्दरः । नैगमः कमलाह्वोऽभूत् कुन्तलाभिधपत्तने ॥१४॥
चन्द्रेण कमलोऽन्येद्यु-र्निहतो यष्टिना मुधा । कमलोऽवग् मुधा मां त्वं कथं हंसि दुराशय ! ॥१५॥
क्षत्रियो धर्म्मघोषान्ते श्रुत्वा धर्म्मं जिनोदितम् । चकार जिननाथस्य पूजां पुष्पैर्मनोहरैः ॥१६॥
मृत्वाऽथ क्षत्रियो वीर-पुरे वीरवणिक्सुतः । सुधासेनाभिधो जातः कलासु कुशलः क्रमात् ॥१७॥
श्रुत्वा धर्म्मं जिनेन्द्रोक्तं लात्वा संयममादरात् । तपः कुर्वन्निहायातः स एवाहं नरेश्वर ! ॥१८॥

कमलः पश्चतां प्राप्तो धरापालो नरेश्वरः । त्वमभूः सुपात्रदानेन भूरिलक्ष्मीसमन्वितः ॥१९॥
मया त्वं निहतः पूर्व-भवे भूमीपते ! ननु । तेनाहं न त्वयाऽत्रैव भवे हतस्तपोधनः ! ॥२०॥
तीर्थमाहात्म्यतः सर्वं क्षीणं कर्म्म ममाधुना । सम्प्राप्तं केवलज्ञानं मया तव प्रसादतः ॥२१॥
ततो राजाऽपि सन्त्यज्य राज्यं लात्वा व्रतं क्षणात् । शत्रुञ्जये ययौ मुक्तिं क्षिप्त्वा कर्म्माखिलं क्रमात् ॥२२॥
तदाऽनेके नरा वर्य्यं लात्वा दीक्षां शिवाचले । सर्वकर्म्मक्षयान्मुक्ति-पुरीशर्म प्रलेभिरे ॥२३॥
श्रुत्वेति भरतः शत्रु-ञ्जये भूयिष्ठसङ्घयुग् । गत्वा विस्तरतः सर्वान् जिनानानर्च भावतः ॥२४॥

卐 इति सुधासेन-भूपकथा 卐

॥ अथ शत्रुञ्जये धरापाल-भूपादीनां मुक्तिगमनस्वरूपम् ॥

उज्जयन्तगिरेः पार्श्वे गिरिदुर्गाभिधे पुरे । वर्ये ऐक्ष्वाकुवंशेऽभू-द्रविमल्लाभिधो नृपः ॥१॥
तस्य सर्वज्ञभक्तस्य रक्षतः पृथिवीं नयात् । शशिलेखाभिधा पत्नी बभूवाऽनघरूपभृत् ॥२॥
अन्यदा यज्ञयात्रायां भूपे याते च तत्प्रिया । महेभ्य गेहिनीं पुत्रं लालयंतीं ददर्श सा ॥३॥
ततो राज्ञी सुताभावं स्वस्मिन्नालोक्य तत्क्षणात् । शुशोचेत्यहकं भाग्य-हीनाऽस्मि जगतितले ॥४॥
हसतो जल्पतो भूमौ लुठतो रुदतः सुतान् । या पालयति वामाक्षी सैव धन्या सुभाग्यभाग् ॥५॥
यतः–उत्पतन्निपतद् रिंखन् हसन् लालावलीं वमन् । कस्याश्चिदेव धन्यायाः क्रोडमायाति नन्दनः ॥६॥
स एव पुत्रः पुत्रो यः कुलमेव न केवलम् । पितुः कीर्त्तिं च धर्म्मं च गुणांश्चापि विवर्द्धयेत् ॥७॥
ततो राज्या जिनेन्द्रार्चां कुर्वत्याः प्रतिवासरम् । सुरपाल-धरापालौ सुतौ जातौ मनोहरौ ॥८॥
समस्तनृकलादक्षौ समरूपौ सहोदरौ । द्वावपि प्रीतिसंयुक्तौ जातौ कुशीलवाविव ॥९॥
गुरुपार्श्वे सदा तौ तु शस्त्रशास्त्रकलाः कलाः । अधीयानौ पितुर्मातु-र्जातौ प्रमोददायकौ ॥१०॥
यतः–"विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे निधनं यान्ति काकाः कापुरुषा नराः ॥१॥"
वह्वीर्भूपाङ्गजाः पित्रा रुचिरोत्सवपूर्वकम् । सुरपाल-धरापालौ क्रमेण परिणायितौ ॥११॥
मानी यशस्वी तेजस्वी विनीतो नीतिरीतिविद् । सर्वैर्गुणैर्धरापालः सुरपालाद्भूद्वरः ॥१२॥
निशाशेषेऽन्यदोन्निद्रो धरापालो नृपाङ्गजः । ददर्श काननं घोरं नानाश्वापदसङ्कुलम् ॥१३॥
क्वचित् शूकरवृन्दानि मातङ्गानां घटाः क्वचित् । क्वचिन् मृगारिसञ्चारं स तत्रापश्यदुन्मनाः ॥१४॥
क्वचिच्चन्द्राश्म-सूर्याश्म-मयान् सुधवलालयान् । मणिहेमौघसम्पूर्णान् धरापालो ददर्श च ॥१५॥
विलोकयन् वनं हेम मये धवलसद्मनि । अद्राक्षीद्योगिनं पद्मा-सनासीनं नृपाङ्गभूः ॥१६॥
धरापालो नमश्चान्द्योगिनां तावता स च । ध्यानं मुक्त्वा जगौ वत्स ! स्वागतं तव विद्यते ॥१७॥
विद्यां दातुं मया तुभ्यं त्वमानीत इहाधुना । अभोजयत्ततो योगी सारां रसवतीं च तम् ॥१८॥
मत्वा तमुत्तमं खड्ग-सिद्धिविद्यां स योगिराट् । धरापालाय भूपाल-पुत्राय प्रददौ मुदा ॥१९॥
ततो यदृच्छयारनवत्वा योगी विशदमानसः । सुरलोकं ययौ यावत्तावत् स विस्मितोऽजनि ॥२०॥

तदा नहि धरापालो ददर्श न च योगिनम् । वनं पश्यन् ययौ द्रष्टुमग्रे कौतुकमादरात् ॥२१॥
ततो गच्छन् पुरः कूप-मन्तर्वर्ति बकस्थलम् । ददर्श च नरं तत्र जलस्थं रुचिराकृतिम् ॥२२॥
स च प्राह धरापाल ! यद्यस्तीच्छा तव श्रिये । तदाऽत्राऽऽगच्छ दास्यामि तुभ्यं सिद्धिं गरुत्मनः ॥२३॥
कृत्वा साहसं यावद् झम्पां कूपे ददौ रयात् । तावत्कूपोऽभवद् हेम-मयपीठं महत्तमम् ॥२४॥
ततोऽभूत् विस्मितो भूप-सुतो यावत् स्वचेतसि । तावत्तत्रागतो देवो जगादेति च तं प्रति ॥२५॥
त्वत्साहसेन तुष्टोऽस्मि वरं वृणु यथेप्सितम् । कुमारः प्राह कल्याण-सिद्धिं देहि ममाधुना ॥२६॥
ततस्तुष्टेन देवेन स्वर्णसिद्धिर्मनोहरा । ददे तस्मै धरापाल कुमाराय महात्मने ॥२७॥
ततोऽभ्येत्य धरापालो गिरिदुर्गपुरे भ्रमन् । ननामाम्बापितृभ्रातृ-पादान् विनयपूर्वकम् ॥२८॥
सम्प्राप्तहेमविद्यादि-सम्बन्धं निखिलं तदा । प्रोक्त्वा प्रमोदयामास पित्रादीन् स्वजनानपि ॥२९॥
भाग्यवन्तं धरापालं मत्वा तातः महोत्सवम् । राज्यं वितीर्य जग्राह संयमं गुरुसन्निधौ ॥३०॥
पालयन् संयमं भूप-यतिः शत्रुञ्जये गतः । क्षिप्त्वा कर्म्माखिलं मुक्ति-नगर्यां समुपेयिवान् ॥३१॥
खड्गविद्याप्रभावेन साधयन् पृथिवीं क्रमात् । धरापालः ससाधाऽऽशु भुवः खण्डत्रयं स्फुटम् ॥३२॥
एकदा तस्य देहेऽभूद् गलत्कुष्ठाभिधाऽऽमयः । ततः सो विदधे नाना-प्रकारान्यौपधानि च ॥३३॥
नाभूद् गुणस्ततः प्राणांस्त्यक्तुं चितां महत्तराम् । विधाय विशति स्माग्नौ कुमारो मारसन्निभः ॥३४॥
तदाऽकस्मात् खगस्तत्रा-भ्येत्य प्राहेति तं प्रति । त्वं किं प्राणांस्त्यजेदानीं प्रविश्य ज्वलने वद ॥३५॥
स्वस्मिन् रोगस्वरूपे तु प्रोक्ते तेन खगो जगौ । शत्रुञ्जये जिनस्नात्र-वारि यद्विद्यते वरम् ॥३६॥
तेन कुष्ठं मदीयाङ्गाद् गतं तमो रवेरिव । तदम्बुना वपुस्त्वं याऽभिषिञ्चाभ्येत्य तत्र च ॥३७॥
त्वदीयो विग्रहो रोग-रहितः सहितः श्रिया । भविष्यत्यचिरात्तीर्थ-प्रभावात् सिद्धपर्वते ॥३८॥
यतः-"टङ्कणेन यथा हेम जलेन लवणं यथा । तथा शत्रुञ्जयस्मृत्या कर्म्मपङ्को गलत्यहो ! ॥१॥"
तमो यथोष्णरुचिना पुण्येन च दरिद्रता । तथा शत्रुञ्जयस्मृत्या विनश्यति कुकर्म्म तत् ॥३९॥
कुलिशेन यथा शैलः सिंहेनेव कुरङ्गकः । तथा शत्रुञ्जयस्मृत्या भिद्यते पूर्वकर्म्म तत् ॥४०॥
आकर्ण्यैतत् खगप्रोक्तं धरापालः ससोदरः । मेलयित्वा बहुं सङ्घं चचाल शोभनेऽहनि ॥४१॥
दिनानां दशकं तत्र स्थित्वा कुर्वन् महोत्सवम् । प्रासादं कारयामास धरापालो महत्तमम् । ४२॥
धरापालो जिनं नाभि-नन्दनं शोभनेऽहनि । स्थापयामास तत्रैव प्रासादे भूरिरैव्ययात् ॥४३॥
प्रभोः कृत्वाऽर्चनां पुष्पैः प्रवरैर्वरभङ्गिभिः । ध्यानं कर्त्तुं महीपाल उपविष्टो वरोदयः ॥४४॥
तत्रैव ध्यायतस्तस्य भूपस्य नाभिनन्दनम् । केवलज्ञानमुत्पन्नं लोकालोकावलोककम् ॥४५॥
तत्राभ्येत्याऽमराधीशै-र्विहिते स्वर्णवारिजे । धरापालो गृहीत्वाऽद्य साधुवेषं ह्युपाविशत् ॥४६॥
उपविष्टेषु भूयिष्ठ-श्राद्धेषु स च केवली । धर्म्मोपदेशमादातुं प्रावर्त्तत कृपापरः ॥४७।
तथाहि-धर्म्मादाऽऽसाद्यते राज्यं धर्म्माद् देवत्वमाप्यते। धर्म्मादेव शिवप्राप्तिः धर्म्मः सेव्यस्ततो बुधैः ॥४८॥
धर्म्मो मङ्गलमुत्कृष्टं धर्म्मः स्वर्गापवर्गदः । धर्म्मः संसारकान्तारो-ल्लङ्घने मार्गदेशकः ॥४९॥
धर्मो मातेव पुष्णाति धर्म्मः पाति पितेव सः । प्रीणाति पुत्रवद् धर्म्मः धर्म्मः स्निह्यति बन्धुवत् ॥५०॥

धर्म्मस्य जननी जीव-दया मान्या सुरासुरैः । तस्मात्तद्वैरिणीं हिंसां नाद्रियेत सुधीर्नरः ॥५१॥
दानं तपो देवपूजा शीलं सत्यं जपः पुनः । सर्वमप्यफलं तस्य यो हिंसां न परित्यजेत् ॥५२॥
कण्टकेनापि संविद्धो देहो दूयेत निश्चितम् । तत्कथं शस्त्रसङ्घातै-र्हन्यते हि परो जनः ॥५३॥
दयां विनापि मन्यन्ते ये धर्म्मं मूर्खशेखराः । वन्ध्यायां तनयं तेऽपि जनयन्ति विसंस्थूलाः ॥५४॥
दयैव हि परो धर्मो दयैव हि परं श्रुतम् । दयां विनाऽखिलो धर्मो भवेन्निःफल एव तु ॥५५॥
नाद्रियेत कृतघ्नत्व-माद्रियेत कृतज्ञताम् । स्वोपकारिणि धर्म्मे त-दादरं कुरुते भवी ॥५६॥
इत्यादि धर्म्म-माकर्ण्य बहवो भव्यमानवाः । जगृहुः संयमं स्वर्गा-पवर्गसुखदायकम् ॥५७॥
केचिच्च मानवाः श्राद्ध-धर्म्मं द्वादशधा मुदा । आदधुर्जीवरक्षाद्य-तिथिदानादिकं व्रतम् ॥५८॥
तेन केवलिना भव्या बोधिता बहवः क्रमात् । शत्रुञ्जयाचले क्षिप्त्वा कर्म्माऽशेषं शिवं ययुः ॥५९॥
धरापालसुतश्चन्द्रोऽमात्यै राज्ये निवेशितः । मेदिनीं पालयामास न्यायमार्गेण सन्ततम् ॥६०॥
इतः प्रबोध्य भूयिष्ठ-भव्यान् धर्म्मे जिनोदिते । धरापालः शिवं प्राप शत्रुञ्जय-शिलोच्चये ॥६१॥
धरापालोऽगमद्यत्र मुक्तिं शत्रुञ्जये गिरौ । तत्र चन्द्रो जिनागारं शान्तिनेतुरकारयत् ॥६२॥
तस्मिन् जिनालये मूर्त्तिं शान्तेर्हेममयीं वराम् । सोत्सवं स्थापयामास धरापालसुतः क्रमात् ॥६३॥
चन्द्रोऽन्यदा गुरूपान्ते सम्यक्त्वस्य फलं वरम् । शुश्रावेति शिवश्रीः स्यात् सम्यक्त्वादेव देहिनाम् ॥६४॥
सम्यग्दर्शनसंशुद्धः सत्पुमानुच्यते बुधैः । सम्यक्त्वेन विना जीवः पशुरेव न संशयः ॥६५॥
सम्यक्त्वं यस्य जीवस्य हस्ते चिन्तामणिर्भवेत् । कल्पवृक्षो गृहे तस्य कामगव्यनुगामिनी ॥६६॥
सम्यक्त्वालङ्कृतो यस्तु मुक्तिश्रीस्तं वरिष्यति । स्वर्गश्रीः स्वयमायाति राज्यलक्ष्मीः सखी भवेत् ॥६७॥
एवं सम्यक्त्वमाहात्म्यं श्रुत्वा चन्द्रमहीपतिः । मुक्तिगमोचितं पुण्य-मर्जयामास वेगतः ॥६८॥
मृत्वाऽच्युतात्रिपे गत्वा लक्ष्मीपुर्यां महीपतेः । भीमस्य मदनः पुत्रो-ऽजनिष्ट जिनधर्म्मकृत् ॥६९॥
क्रमाच्छत्रुञ्जये गत्वा श्रीनाभेयार्हतः पुरः । ध्यानं कुर्वन् ययौ मुक्तिं सर्वकर्म्मायुषां क्षयात् ॥७०॥

● इति शत्रुञ्जये धरापाल–भूपादीनां मुक्तिगमनस्वरूपम् ●

॥ नीलपुत्र-सम्बन्ध ॥

राजादन्या अधः स्वामी वृषभः सुरसेवितः पावयन् पृथिवीं सिद्ध-पर्वते समवासरत् ॥१॥
द्वितीयो गणभृच् चन्द्र-सेनो भूयिष्ठसाधुयुग् । तत्र तीर्थे समायातो नन्तुं तीर्थं जिनान् पुनः ॥२॥
व्रतिन्यः सुन्दरीमुख्या बह्व्यो भासुरभावतः । तीर्थं नन्तुं समायाताः भूरिसाध्वीनिसेविताः ॥३॥
एकदा वृषभं नत्वा चन्द्रसेनो गणी जगौ । अस्य तीर्थस्य माहात्म्यं जल्पतां भगवन्! ध्रुवम् ॥४॥
प्रभुर्योजनगामिन्या वाण्या मधुरया तदा । जगाद तीर्थमाहात्म्य मेवं गणभृतः पुरः ॥५॥
प्राणिभिर्यं समारूढै-र्लोकाग्रमतिदुर्लभम् । अवाप्यते स तीर्थेशः शाश्वतोऽयं गिरिर्वरः ॥६॥
अनादितीर्थमेतद्धि सिद्धास्तीर्थकृतोऽत्र च । अनन्ता मुनयश्चापि क्षिप्त्वा स्वं कर्म्मसञ्चयम् ॥७॥

ये चात्र पक्षिणः सन्ति क्षुद्रा अन्येऽपि जन्तवः । हिंसका अपि सेत्स्यन्ति ते भवैस्त्रिभिरुत्तमाः ॥८॥
अभव्याः पापिनो जीवा नामुं पश्यन्ति पर्वतम् । लभ्यते चापि राज्यादि नेदं तीर्थं हि लभ्यते ॥९॥
मुक्तेषु तीर्थनाथेषु गते ज्ञाने महीतले । लोकानां तारकः सोऽयं श्रवणात् कीर्त्तनादपि ॥१०॥
दुःषमाख्येऽपि समये गते ज्ञानेऽपि केवले । धर्म्मे विसंस्थुले जाते तीर्थमेतज्जगद्धितम् ॥११॥
अत्रार्हतां कृता पूजा स्तुतिपुष्पाक्षतादिभिः । आसंसारं कृतं पापं प्राणिनां हि व्यपोहति ॥१२॥
यतः––पूजाऽर्हतो गुरोर्भक्तिः श्रीशत्रुञ्जयसेवनम् । चतुर्विधस्य सङ्घस्य सङ्गमः सुकृतैर्भवेत् ॥१३॥
येनात्र गुरवो वस्त्र-भक्तदानादिभिर्मुदा । सन्मानिता लभिष्यन्ते ते स्वर्गशिवसम्पदः ॥१४॥
यतः–वस्त्रान्नजलदानेन गुरोः शत्रुञ्जये गिरौ । इहापि परलोकेऽपि जनाः सुखजुषोऽभवन् ॥१५॥
सङ्घपादरजो यस्य शिरः स्पृशति देहिनः । तीर्थसेवाफलं तस्य पवित्रस्य भवत्यहो ! ॥१६॥
शत्रुञ्जयादितीर्थेषु प्रासादान् प्रतिमाश्च ये । कारयन्ति हि तत्पुण्यं ज्ञानिनो यदि जानते ॥१७॥
कारयन्ति जिनानां ये तृणावासानपि स्फुटम् । अखण्डितविमानानि लभन्ते ते त्रिविष्टपे ॥१८॥
श्रुत्वेति गणभृन्मुखाज्जनास्तत्र जिनान्तिके । जगुस्तीर्थमिदं वर्षं वर्षं प्रति नमस्यते ॥१९॥
तदा तत्र महीशान-पुराधीशो धनो नृपः । भूरिसङ्घयुतो नन्तुं तीर्थदेवान् समागमत् ॥२०॥
सोऽपि भूमीपतिर्मुख्य-प्रासादे प्रथमं जिनम् । पूजयित्वा सुमैर्वर्यै-स्तुतिं चक्रे मनोहराम् ॥२१॥
ततो गत्वा जिनोपान्ते धर्म्मं श्रोतुं नरेश्वरः । उपविशद्यदा ताव-ज्जिनाधीशो जगावदः ॥२२॥
निद्रान्ते परमेष्ठिसंस्मृतिरथो देवार्चनव्यापृतिः, साधुभ्यः प्रणतिः प्रमादविरतिः सिद्धान्ततत्त्वश्रुतिः ।
सर्वस्योपकृतिः शुचिव्यवहृतिः सत्पात्तदाने रतिः, श्रेयो निर्मलधर्म्मकर्म्मनिरतिः श्लाघ्या नराणां स्थितिः ॥२३॥
पादमायान्निधिं कुर्यात् पादं वित्ताय घट्टयेत् । धर्म्मोपभोगयोः पादं पादं भर्त्तव्यपोषणे ॥२४॥
दिने दिने मङ्गलमञ्जुलाली सुसंपदः सौख्यपरम्परा च । इष्टार्थसिद्धिर्बहुला च बुद्धिः सर्वत्र वृद्धिः सृजतां च धर्म्मं
कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । इदं तीर्थं समासाद्य तिर्यञ्चोऽपि दिवं गताः ॥२६॥
शत्रुञ्जये जिने दृष्टे दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं च पूजास्नात्रविधानतः ॥२७॥
"छट्ठेणं भत्तेणं अपाणएणं तु सत्त जत्ताओ । जो कुणइ सित्तुंजे सो तइयभवे लहइ मोक्खं ॥१॥
जो गुणइ लक्खमेगं पूयइ विहिइं च जिणनमुक्कारं । तित्थयरनामगोयं सो बंधइ नत्थि संदेहो ॥२॥"
श्रुत्वेति भूरि भव्याना षष्ठादिकं तपोऽनिशम् । कुर्वतामभवज्ज्ञानं पञ्चमं च शिवं ततः ॥२८॥
केचिद्भवान्तरे गत्वा सर्वार्थसिद्धिमन्दिरे । प्राप्य मर्त्यजनिं मुक्तिं गमिष्यन्ति न संशयः ॥२९॥
राजादन्या अधोऽस्याश्च ध्यायन्तः परमं पदम् । असङ्ख्याता ययुर्यान्ति यास्यन्ति शिवपत्तने ॥३०॥
श्रुत्वेति धनभूपस्तां लाजैर्यावदवर्द्धयत् । तावद् ववर्ष दुग्धं सा सङ्घेशस्योपरि स्फुटम् ॥३१॥
यतिन्योऽपि तदा बह्व्यः सम्प्राप्य ज्ञानमन्तिमम् । अलञ्चक्रुः शिवं क्षेत्र-मनन्तसुखदायकम् ॥३२॥
ततोऽन्यत्र युगादीशो भव्यान् बोधयितुं जनान् । विहारं विदधे भूरि-वाचंयमसुरश्रितः ॥३३॥
अन्यदा चक्रिराडाद्यः कमलाचार्य-सन्निधौ । सुश्रावेति जिनप्रोक्तं धर्म्मं जीवदयामयम् ॥३४॥
तथाहि–शत्रुमर्दनभूपस्य पुरतोऽन्येद्युरादरात् । श्रुतशेखरसूरीशाः प्रददुर्धर्म्मदेशनाम् ॥३५॥

यो दृष्टो दुरितं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्क्लेशार्हन्त्यपदकृत् स जीयात् विमलाचलः ॥३६॥
यस्मिन्नदीपयोमृत्स्ना-वृक्षाद्यौपधयोऽखिलाः । रोगादिव्याधिहन्त्र्यः स्युः श्रियो दात्र्यः पदे पदे ॥३७॥
यतः–शत्रुञ्जयनदीमृत्स्नाः स्पृष्टा रोगापहाः स्मृताः । कादम्बौपधिभिर्ध्माताः प्राप्नुवन्ति च हेमताम् ॥३८॥
तस्यास्तीरद्रुमफला-न्यास्वदन्ति नराश्च ये । एतत्पयोऽपि नियमा-दामासावधि ये पपुः ॥३९॥
ते वातपित्तकुष्ठादि-रोगान् जित्वैव हेलया । स्वं वपुस्तप्तहेमाभं प्राप्नुवन्ति सुकान्तिमत् ॥४०॥ युग्मम्॥
यज्जलस्नानतो यान्ति पापान्यपि शरीरतः । का कथा वातपित्तादे र्यद्-साध्यस्यागदैरपि ॥४१॥
सर्वतीर्थफलावाप्ति-प्रतिभूरियमङ्गिनाम् । सर्वपापहरः स्पर्शा-दपि शत्रुञ्जया नदी ॥४२॥
यस्या नद्याः पयःस्पर्शाद् गदस्य चाम्बुपानतः । लेभिरे सुखसङ्घातं शान्तनक्ष्मापसूनुवत् ॥४३॥
श्रीपुरे शान्तनक्षोणि-पतेः शीलश्रिया प्रिया । स्वप्नेऽद्य धूसरं वह्निं वीक्ष्याह पत्युरग्रतः ॥४४॥
तयाऽसावि सुतो नील-नामा यदा शितिद्युतिः । तदा च भूपतेः कुम्भि-सैन्यं क्षयमुपाययौ ॥४५॥
महानीलाभिधः कालो महाकालाह्वयोऽपरः । दुःस्वप्नसूचिता एते यदाऽभूवन् सुताः क्रमात् ॥४६॥
तदाश्वाङ्ग धनं मन्त्रि-मुख्याश्च निधनं ययुः । ततोऽकस्मात् परबलै-र्वेष्टितं नगरं हि तत् ॥४७॥
प्रक्षीणकोशदण्डः सन् निशायां शान्तनो नृपः । पत्नीपुत्रयुतो नष्ट्वा ययौ क्वापि पुरे रहः ॥४८॥
चत्वारस्तनयाः सप्त-व्यसनग्रस्तचेतसः । कुर्वन्ति न मनाग् धर्म्मं पापं च कुर्वते सदा ॥४९॥
यतः-"द्यूतं मासं सुरा वेश्या चौर्यं पापर्द्धिसेवनम् । परस्त्रीषु रतिः सप्तव्यसनो दुःखदा ह्यसौ ॥१॥"
द्यूतात् सर्वाणि लायन्ते व्यसनानि पराण्यपि । लोकद्वयाहितकरं तस्माद् द्यूतं त्यजेद्बुधः ॥५०॥
द्यूतेनापयशो धर्म-बन्धुवर्गकुलक्षयः । भवेत् तैरश्चनरक-गतिर्दुःखौघदायिनी ॥५१॥
गोमायुश्च पिशाचास्ते ज्ञेया नरकगामिनः । जिह्वास्वादरमान्मांसं ये यदश्नन्ति दुर्धियः ॥५२॥
ते गत्वा नरके छेद-भेदकुम्भ्यादिपाकजाम् । वेदनां दुःशकां बाढं सहन्ते बहुकालतः ॥५३॥
कुरूपोः क्रूरधिषणाः कुसंसर्गपराश्च ते । राजानं मुमुचुर्नैव कुग्रहा इव वक्रगाः ॥५४॥
तैः कुपुत्रैः समं भूपो भ्रमन् पुरात् पुरं प्रति । लभन्ते स्थानकं नैव कुत्रापि विषये मनाग् ॥५५॥
विप्रतार्य कुतोऽप्येन पत्नीं पुत्रसमन्विताम् । करिष्याम्यहकं स्वायुःशेषमद्यात्मनो वधात् ॥५६॥
ध्यात्वेति भृगुपाताय महाशैलाभिधं गिरिम् । आरूढः शान्तनोऽपश्यद् जिनायतनमुत्तमम् ॥५७॥
प्राणप्रयाणके वाञ्छन् शम्बलं सुखहेतवे । कुटुम्बयुग् ययौ चैत्ये सम्प्रतेरर्हतस्तदा ॥५८॥
नत्वाऽर्हच्चरणौ भक्त्या नमस्यन्तं जनं वरम् । ददर्श शान्तनः क्ष्मापः सर्वकुटुम्बसंयुतः ॥५९॥
तस्येक्षणाद्धरानाथः समुत्पन्नसुवासनः । अनंसीत् जिनपं तत्त्वा-दैक्यं कुर्वन् जिनात्मनोः ॥६०॥
यतः-अल्पापि मनःशुद्ध्या जिनभक्तिर्विनिर्मिता । इहलोकेऽपि यत् सातदायिनी परलोकवत् ॥६१॥
पूर्वायातो नरः प्राह शेषोऽह जिनसेवकः । तुष्टोऽस्मि जिनभक्त्या ते वरं ब्रूहि यथेप्सितम् ॥६२॥
ततो भूपो जगौ हृष्टोऽस्म्यहं शेष ! तवेक्षणात् । सम्पदो निखिला हस्ते मामके समुपागताः ॥६३॥
मम पुत्रेषु जातेषु गजादिसर्वसम्पदाम् । आदौ नाशः कथं जातः प्रमद्य त्वं निवेदय ॥६४॥
धरणेन्द्रो जगौ पल्या भिल्लोऽभूत् कमलाभिधः । क्रूराशयोऽशुभध्याना-धारो ध्वस्ताङ्गिसंश्रयः ॥६५॥

हिंसन् जीवान् वनेऽन्येद्युः कायोत्सर्गस्थितं मुनिम् । दृष्ट्वाऽप्राक्षीत् मृगो गच्छन् दृष्टोऽत्र भवता नवा ॥६६॥
कृपात्मा स मुनिः प्राह या पश्यति न वक्ति सा । यच्च वक्ति न पश्येत्तत् कथं वच्म्यहकं वद ? ॥६७॥
ततो रुष्टेन भिल्लेन मार्गणैर्निहतो मुनिः । स्मरन्नमस्कृतिं सद्यः परलोकमसाधयत् ॥६८॥
ततो भिल्लो व्रजन्नग्रे दृष्ट्वा धावन् हरिं प्रति । सिंहेन निहतः पृथ्व्यां पपात गिरिकूटवत् ॥६९॥
मयाद्याऽघाति निःपापो निरागा मुनिपुङ्गवः । इदं तत्फलमायातं दध्यौ भिल्लः स्वचेतसि ॥७०॥
स मृत्वा सप्तमीं भूमिं साधुघातजपातकात् । ययौ सेहे च दुःखानि त्रयस्त्रिंशत् पयोनिधीन् ॥७१॥
ततो निर्गत्य सिंहादि-भवान् भूरीन् भ्रमन् क्रमात् । भिल्लजीवो ययौ श्वभ्रे तीव्र-दुःखौघमन्दिरे ॥७२॥
भ्रान्तस्मृतमुनिवध-कृतदुःकृतगर्हणः । निर्गत्य नरकात्पुत्रो नीलाह्वस्तेऽभवत् सुतः ॥७३॥
यतः-स्वयं कृतस्य पापस्य निन्दया गर्हणात् पुनः । जीवा भवन्ति निःपापाः स्वर्गभाजो भवन्ति च ॥७४॥
तवासौ तनयो भिल्ल-भवे मुनेर्वधात्तमः । अर्जयत् यत् तदेवान्ते निनिन्द स्वयमञ्जसा ॥७५॥
यत्पुण्यात्ते सुतो जातः कुले नीलाभिधो नृप ! । अवशिष्टेन पापेन सूनोर्दुःस्थं समागमत् ॥७६॥

※ इति नीलपुत्र-सम्बन्ध ※

॥ अथ महानीलस्य द्वितीयपुत्रस्य सम्बन्ध ॥

कङ्कापुर्यामभूद्भीम-भूपस्य सेवको धनः । सो प्राप्नुवन्निजं ग्रामं सचिवान् हन्तुमिच्छति ॥१॥
दारिद्र्योपहतोऽन्येद्यु-र्जिमन् धनोऽन्नमध्यतः । अमारं प्रत्यजन् दृष्ट्वा पत्न्या प्रोक्तमिदं तदा ॥२॥
त्वया तु यादृशं धान्यमानीयेत पते ! गृहे । तादृशं पक्वमेवास्ति नक्रं किं मोच्यते त्वया ? ॥३॥
आकर्ण्यैतद् धनः क्रुद्धो महता लेष्टुना तथा । जघान गेहिनीं मृत्यु मगमन्मूर्च्छिता यथा ॥४॥
धनेन निहतां पत्नीं ज्ञात्वा तं राजसेवकाः । बद्ध्वा भूपान्तिके निन्युः जगुश्च गेहिनीवधम् ॥५॥
राजादेशात्तलारेण शूलायां रोपितो धनः । मुनिदत्तं नमस्कारं सस्मारैकाग्रमानसः ॥६॥
पूर्वबद्धकुकर्म्मत्वात् षष्ठीं पृथ्वीं समेत्य सः । नमस्कारस्मृतेर्जातो महानीलाभिधाङ्गजः ॥७॥
यतः-"निःशरण्या सदाभीरु-घातनीयाऽपि नाबला । यतः सा कुपिता लोक-द्वयघाताय जायते ॥८॥

※ इति महानीलस्य द्वितीयपुत्रस्य सम्बन्ध ※

॥ अथ कालपुत्र सम्बन्ध ॥

धर्म्माह्वनगरे धीर-महेभ्य नन्दनो हरः । कामान्धः सेवते नारी-र्बलाद् द्रव्येण वा क्वचित् ॥१॥
द्रव्ययौवनगर्वेण गुरुदेवाभिनिन्दकः । धर्म्मघातकरः पित्रो-राज्ञां न मन्यते मनाग् ॥२॥
गुरुदेवादिपितॄणां कुर्वन्निन्दां निरन्तरम् । हरः क्रूराशयो मृत्वा चाण्डालोऽजनि पापवः ॥३॥
ततो मृत्वाऽगमत् श्वभ्रे ततो व्याघ्रोऽभवद्वने । ततश्च नारकी जातो भूरिदुःखौघभाजनम् ॥४॥
यतः-न बोधिबीजं नो मुक्तिर्न स्वर्गः कुशलं न हि । शुक्रद्रव्यस्य नो लब्धि-र्देवनिन्दापरस्य तु ॥१॥
मूकत्वम् काहलत्वम् च लूताकुष्ठादिदोषजाः । मुखरोगाः सप्तषष्टि-र्जायन्ते जिननिन्दया ॥५॥

अयशोऽकालमरणं दुःखं वक्त्रविगन्धता । लूतातन्तुमुखा दोषा जायन्ते गुरुनिन्दया ॥६॥
संसारी नरके तिर्यग्-भवे स्यात् स पुनः पुनः । धर्मिणां निन्दको नैव लभते मानुषं भवम् ॥७॥
त्रयाणामपि यस्तेषां निन्दको घोरपातकी । तस्य संसर्गमात्रेण मलिनाः स्युः परेऽपि हि ॥८॥
अस्मत्कुलकलङ्काय नन्दनोऽयं भविष्यति । ध्यात्वेतीभ्येन स त्यक्तो दूरे तस्करवद् गृहात् ॥९॥
स लूतामुखपाकेन प्रान्ते वेदनयाऽर्दितः । मृत्वा कालाभिधः पुत्र स्तवायमभवत् क्रमात् ॥१०॥

❀ इति कालपुत्रसम्बन्ध ❀

॥ अथ महाकालसम्बन्धश्चतुर्थ ॥

कुल्यपुर्यां मुकुन्दस्य द्विजस्याऽभूद्धरिसुतः । भिक्षोपजीवितां याच्ञा-परो दुःखस्य भाजनम् ॥१॥
देशाद्देशं भ्रमन् विप्रो दुःपूरोदरपूर्तये । सार्वार्चकस्य कस्यापि गेहे किङ्करतां श्रितः ॥२॥
सोऽन्यदाऽऽदाय सर्वज्ञ-भूषणानि दिनात्यये । लात्वा विक्रीय वत्तस्वं (!) बभार वाडवाधमः ॥३॥
साधोरप्युपकरणानि लात्वा विक्रीय वाडवः । वेश्याऽऽसक्तो ददौ तस्मै तद्धनं कामविह्वलः ॥४॥
तदैकेऽऽनार्हतेनोक्तं गुरु-देवधनादनात् । लभते नरकं घोरं जीवः संसारभाग् भवेत् ॥५॥
देवद्रव्यं गुरुद्रव्यं दहेदाऽऽसप्तम कुलम् । विषं वा तैलसम्मिश्रं भोज्यं देवधनं न तु ॥६॥
देवद्रव्यविनाशेन प्रथमं नरकं व्रजेत् । सप्तवारान्नरस्तीव्रं दुःखलक्षं व्यथार्दितः ॥७॥
यथान्ने विषसंसर्गो दुग्धे कञ्जिकसङ्गमः । तथाऽऽत्मनो धनेनोच्चैः संसर्गो गुरुसम्पदाम् ॥८॥
जीविताशाऽस्ति या देव-गुरुद्रव्येण देहिनः । धत्तूरकरमोन्मिश्र-विद्यास्वादोद्भवा हि सा ॥९॥
"भक्खणे देवदव्वस्स, परत्थीगमणेण य । सत्तमं नरयं जंति, सत्तवारा य गोयमा !" ॥१०॥
वारितोऽपि द्विजोऽन्येन देवगुर्वोर्धनं हरन् । न तस्थौ नरके तस्मात् पापान्मृत्वाऽगमत् क्रमात् ॥११॥
ततो निर्गत्य चाण्डालो भूत्वा कृत्वा तमो बहु । पुनः श्वभ्रे ययौ विप्र-जीवोऽहिरभवत्ततः ॥१२॥
सोऽप्येकदा मुनेरास्यान् म्रियन् श्रुत्वा नमस्कृतिम् । महाकालाभिधः पुत्र स्तवाजनिष्ट साम्प्रतम् ॥१३॥

★ इति महाकालपुत्रसम्बन्धश्चतुर्थ ★

॥ अथ शत्रुञ्जयानदीप्रभावे शान्तनभूपकथा ॥

एतेषां तव पुत्राणामवशिष्टेन साधुना । श्रितं राज्यं ततः कुर्या मा चिन्तां मरणेऽधमे ॥१॥
शान्तनोऽवक् कथं तस्मात् पापात् स्यान् मम छुट्टनम् । पुत्राणां च कथं तेभ्यः पापेभ्यः छुट्टनं पुनः ॥२॥
गुरुराचष्ट सिद्धाद्रौ गच्छ सार्धं तनूभवैः । गच्छतश्च तनूजानां पापमुक्तिर्भविष्यति ॥३॥
शत्रुञ्जया नदी वरा स्नात्वा तत्पयसा पुनः । स्नात्रं कुरु प्रभोर्भक्त्या सर्वपातकपिष्टये ॥४॥

तत्तटस्थजिनागारप्रासादे प्रथमं जिनम् । स्थापितं सूर्यभूपेन त्वं प्रपूजय सन्ततम् ॥५॥
तदेनःशान्तये तत्र विधिवज्जिनचर्चनम् । विधेहि त्वं त्रिधा शुद्धया रक्षणीयाश्च जन्तवः ॥६॥
षष्ठाष्टमादि ते पुत्राः कुर्वन्तो जिनचर्चनम् । भवन्ति लघुकर्म्माणो मुक्तिभाजो भवन्ति च ॥७॥
शत्रुञ्जयाम्बुना स्नात्वा स्नात्वा तद्वारिणा प्रभुम् । षण्मासैः स्युर्नरा रोग-रिक्ता राज्यं श्रयन्ति च ॥८॥
स्नानात् कुकर्मनिर्मुक्ताः सुरोपमशरीरिणः । स्वराज्यस्य तु भोक्तारः स्वाराज्यस्यापि भाविनः ॥९॥
शत्रुञ्जयाम्बुना स्नानं कुर्वंश्च कारयन् जिनम् । षण्मासान्ते च वः पाप-मुक्तिरेव भविष्यति ॥१०॥
शेषेनोक्तं निशम्येति नत्वाऽहीनक्रमौ मुदा । भूपः पुत्रप्रियायुक्तो ययौ शत्रुञ्जये गिरौ ॥११॥
शत्रुञ्जयानदीतीरे कृत्वा तृणकुटीरकान् । स्वकृतैनश्छिदे तस्थौ भूपः कुटुम्बसंयुतः ॥१२॥
अर्हत्स्नात्रं त्रिसन्ध्यं ते कुर्वतस्तज्जलैः सदा । नेमुर्भक्त्या जिनाधीशं तत्तीरद्रुफलादनाः ॥१३॥
मासान्ते तनया जाता नीरोगा निखिलास्तदा । ततः शेषोदितो राजा षण्मासीं तत्र तस्थिवान् ॥१४॥
षण्मासान्ते स्मृतः शेषो-ऽभ्येत्य शान्तनभूपतिम् । विमानारूढमाधाय चचाल तत्पुरं प्रति ॥१५॥
शेषसान्निध्यतो राजा निर्घाट्य निखिलान् रिपून् । उपविष्टो निजे राज्ये जिनेन्द्रार्चनपूर्वकम् ॥१६॥
शान्तनो भूपतिः सङ्घं मेलयित्वा बहुं क्रमात् । यात्रां शत्रुञ्जये चक्रे भूयिष्ठद्रविणव्ययात् ॥१७॥
कारयित्वा जिनागारं स्फारं शत्रुञ्जयाचले । जिनौकोलंकृतां पृथ्वीं कारयामास शान्तनः ॥१८॥
चतुःषष्टिशरल्लक्षा-ण्यास्वाद्य विभुतासुखं । राज्यं दत्त्वा च नीलाय राजा संयममाददौ ॥१९॥
त्रिभिः पुत्रैश्च गेहिन्या भूपपृष्ठौ व्रतं लले । ततो नीलः पपालोर्वीं न्यायमार्गेण नित्यशः ॥२०॥
शान्तनः पुत्रपत्नीयुक् पालयंश्चरणं सुखम् । शत्रुञ्जये ययौ वर्ष-लक्षप्रान्ते तपःपरः ॥
तत्रानशनमादाय पालयन्तो नृपादयः । क्षीणनिःशेषकर्म्माणः कल्याणनगरीं ययुः ॥२१॥
नीलोऽपि भूपतिर्दत्त्वा राज्यं स्वकीयसूनवे । आत्तव्रतो ययौ शत्रु-ञ्जये तीर्थे तमश्छिदे ॥२२॥
सोऽपि कुर्वंस्तपस्तीव्रं ज्ञानमासाद्य केवलम् । शिवपुर्यां ययौ सर्व-क्षीणकर्म्मा नरेश्वरः ॥२३॥
उक्तं च-शत्रुञ्जयमहातीर्थे श्रिता शत्रुञ्जया नदी । राज्यभ्रष्टस्य राज्यानि सुखभ्रष्टस्य शर्म च ॥२४॥
विद्याभ्रष्टस्य सद्विद्यां कान्ति कीर्त्तिं मतिं श्रियम् । स्वर्गसौख्यानि दत्ते च सेविता हेलया ननु ॥२५॥
शत्रुञ्जयाश्रिता ये ये नदीहृदद्रुमादयः । तेषां मृत्स्ना जलं पत्र फलं पुष्पं प्रभावभृत् ॥२६॥ युग्मम् ॥

卐 शत्रुञ्जयानदीप्रभावे शान्तनभूपकथा 卐

॥ अथ चन्द्रप्रभास-तीर्थसम्बन्ध ॥

आकर्ण्यैतन्नृपश्चक्री शत्रुञ्जयशिलोच्चये । पुनर्यात्रां व्यधाद् भूरिश्रीव्ययाद् बहुसङ्घयुग् ॥१॥
अन्येद्युस्तापसा भीम-मुख्याः प्रोचुः प्रभोः पुरः । कुत्राऽस्माकं शिवं भावि ततः स्वामी जगाविति ॥२॥
शत्रुञ्जये गिरौ देव-शृङ्गे वो निर्वृतिः क्रमात् । कुर्वतां सत्तपो नूनं भविष्यति न संशयम् ॥३॥
ततस्ते तापसाः शत्रुञ्जये गत्वा प्रभूदिते । स्थाने चक्रुस्तदा तीव्रं तपःसुध्यानमानसाः ॥४॥
यथा तेषामशेषाणां कर्म्मणां क्षयतोऽभवन् । ज्ञानं मुक्तिः गतिश्चासीत् तदाऽन्येषां च देहिनाम् ॥५॥

तत्र स्थानेऽर्हतो गेहं स्फारमादिजिनेशितुः । कारयित्वाऽऽदिमश्चक्री तापसाह्वं व्यधात्तदा ॥६॥
एकदा भरतश्चक्री चन्द्रप्रभजिने-शितुः । कारयित्वाऽऽलयं मूर्त्तिं तत्र तस्य व्यधात् वराम् ॥७॥
तत्तीर्थमधुना लोके ख्यातं प्रभासनामतः । अद्यापि तस्य तीर्थस्य माहात्म्यं विद्यते महत् ॥८॥
तस्मिँश्चन्द्रप्रभामाह्वे तीर्थे तीव्रतरं तपः । कुर्वाणा बहवो वाचं-यमा मुक्तिपुरीं ययुः ॥९॥
बहवस्तापसास्तत्रा-भ्येत्य जैनं व्रतं क्रमात् । प्राप्य क्षिप्त्वाऽखिलं कर्म्म मुक्तिपुर्यां समागमन् ॥१०॥

इति चन्द्रप्रभास-तीर्थसम्बन्ध

## ॥ अथ नेमिस्थापनासम्बन्ध ॥

उज्जयन्ताभिधे शृङ्गे नेमेर्भविष्यतोऽर्हतः । दीक्षा-ज्ञान-शिवप्राप्तिं ऋषभस्यार्हतः पुरः ॥१॥
आकर्ण्य प्रथमश्चक्री कल्याणकत्रिकाभिधम् । प्रासादं प्रवरशिल्पि-पार्श्वादकारयत्तदा ॥२॥
राजते तत् प्रतिदिश-मेकादशसुमण्डपैः । चतुर्द्वारो महानन्य-नाम्ना यः सुरसुन्दरः ॥३॥
बलानकैर्गवाक्षैश्च तोरणैश्च मनोहरैः । प्रासादो भासतेऽत्यन्तं सर्वत्रोद्यानमण्डितः ॥४॥
तत्र तीर्थे तु नागेन्द्र मोरादिकुण्डसप्तकम् । विद्यते यत्र पानीयं सुधायूपसहोदरम् ॥५॥
वनानि तत्र शोभन्ते नानावृक्षैर्मनोहरैः । शृङ्गाणि शतशः सन्ति यत्र हेमादिधातवः ॥६॥
तत्रानेकास्तु विद्यन्ते स्वर्णरेखादयो वराः । सरितोऽमृतदेशीय-पानीयपूरिताः सदा ॥७॥
हंस-कारण्ड-हारीत-शुक-सारसपक्षिणः । तत्र तीर्थे स्थिता भेजुः सुखं स्वर्गसुखोपमम् ॥८॥
अथाभ्येत्य परामोद-पूरपूर्णहृदन्तराः । अपूजयन्नेमिजिनं देवाः शक्त्याहृतैः सुमैः ॥९॥
शृङ्गे तत्र जिना एयु-रनन्ताः सुरसेविताः । आयास्यन्ति पुनः सङ्ख्या-व्यतीता ज्ञानशालिनः ॥१०॥
तदानीं भूभुजोऽन्येऽपि प्रासादान्नेमिनोऽर्हतः । कारयामासु रम्यांश्च भूरिलक्ष्मीव्ययात् क्रमात् ॥११॥
तेषु तेषु च सर्वज्ञा-गारेषु ध्यायतां नृणाम् । जिनं येषामभूज्ज्ञानमन्यूनं चाभवच्छिवम् ॥१२॥
तेषां न ज्ञायते सङ्ख्या विनाऽव्ययविदं क्वचित् । अतस्तीर्थमिदं पूज्यं नृपाणां मरुतामपि ॥१३॥
तत्र नेमिजिनं भक्त्या संस्मृत्य भरतेश्वरः । पूजयित्वा प्रभुं तस्थौ विलोकयन् मुखं प्रभोः ॥१४॥
इतः पञ्चमकल्पेशो ब्रह्मेन्द्रोऽमरकोटियुग् । आगतो नेमिनं नन्तुं पञ्चमात् कल्पतस्तदा ॥१५॥
प्रभुं प्रणम्य भरतं वन्दित्वा च प्रमोदयुग् । ब्रह्मेन्द्रः प्रोक्तवान् चक्रिन् ! जय त्वं चिरकालतः ॥१६॥
यथा श्रीऋषभस्वामी प्रथमस्तीर्थनायकः । तथा त्वं प्रथमसङ्घ-पतिस्तीर्थप्रकाशकः ॥१७॥
भरतोऽवक् कुतः स्थानादत्राऽऽगाः किंकृते वद । स प्राह ब्रह्मकल्पेशो-ऽहमस्मि धरणीधव ॥१८॥
भवता कारिते नेमि-चैत्ये नेमिजिनेशितुः । बिम्बं नन्तुमगां ज्ञात्वा-ऽवधिज्ञानात् नरेश्वर ! ॥१९॥
उत्सर्प्पिण्यामतीतायां सागरस्यार्हतोऽन्तिके । ब्रह्मकल्पाधिपोऽप्राक्षीत् कदाऽहं निर्वृतिं गमी ॥२०॥
जिनोऽवगवसर्प्पिण्यां भाविनो नेमिनोऽर्हतः । द्वाविंशस्य गणाधीशो भूत्वाऽथो मुक्तिमेष्यसि ॥२१॥
स च शक्रो निजे कल्पे या मूर्तिं नेमिनो व्यधात् । अपूजयत् चिरं भक्त्या दिव्यपुष्पैर्मनोहरैः ॥२२॥

गिरिनारगिरेरन्तः कृत्वा स्वर्णबलानकं । अस्यापि प्रतिमा रत्न-मयीन्द्रेण च्युतिच्चणे ।।२३।।
रैरूप्याश्ममया अन्या भूपस्य प्रतिमा दृढाः । स्थापितास्तत्र शक्रेण स्वश्रेयोऽर्थं शिवेच्छुना ।।२४।।
साऽद्यापि मूर्त्तिरस्माभिः पूज्यतेऽन्यैश्च वासवैः । कल्याणत्रयमत्रैव भविष्यत्येव नेमिनः ।।२५।।

❀ इति नेमिस्थापनासम्बन्ध ❀

सुराष्ट्रां रत्ततः शक्ति-सिंहस्य मेदिनीपतेः । छत्रत्रयं वितीर्याथ भरतश्चक्रिराड् जगौ ।।१।।
सुराष्ट्रायां त्वया राज्यं कुर्वता तीर्थयोर्द्वयोः । विघ्नापसारतो रत्ता विधातव्या दिवानिशम् ।।२।।
हारादिभिरलङ्कारै-र्गजवाजिरथैर्वनैः । रत्नैर्द्रव्यैः स सन्मान्य शक्तिसिंहं व्यसर्जयत् ।।३।।
पुण्यानुबन्धिपुण्यं तु कुर्वाणः शक्तिसिंहराट् । आराधयन् जिनं सर्वाः प्रजाः पालयति स्म सः ।।४।।
पश्चाच्चक्री समागच्छ न्नर्बुदे धरणीधरे । प्रासादानर्हतां चक्रय-चीकरत् पुण्यहेतवे ।।५।।
प्रतिमास्तेषु सर्वज्ञ-गेहेषु भरताधिपः । स्थापयामास तीर्थेश-युगादीशार्हतां वराः ।।६।।
ततो भरतचक्रीशः कारयन्नुत्सवं सदा । अयोध्यायां समायातः प्रवेशोत्सवपूर्वकम् ।।७।।
तथाहि—भटैर्जयजयाराव-मुच्चरद्भिः पुरोगतैः । गायद्भिर्गायनैर्ग्राम-रागरङ्गविचित्रितम् ।।८।।
उच्चारिणीभिर्धवलान् कुलस्त्रीभिश्च पृष्ठितः । गणभृद्भिः पुरस्ताच्च सङ्गतः सुकृतैरिव ।।९।।
अनुव्रजन् सर्वशोभा सङ्गतेऽमी देवतालयम् । प्रविवेश पुरीं चक्री समं सङ्घसुरासुरैः ।।१०।।त्रिभिर्विशेषकम्।।
पुरान्तर्मुख्यतीर्थेषु नत्वा श्रीप्रथमं प्रभुम् । नरेशोऽगान्निजावासं परिधाप्य गुरूनपि ।।११।।
हायनानां शतप्रान्ते पुनर्भरतभूपतिः । मेलयित्वा बहुं सङ्घं यात्राहेतुं चचाल सः ।।१२।।
मार्गे पुरे पुरे ग्रामे-ग्रामे तीर्थकृतं पुनः । पूजयन् प्रददद् दानं ददानोऽचलदादरात् ।।१३।।
श्रीसिद्धाद्रेरधो भूमौ गत्वाऽऽदिमजिनेशितुः । विस्तरादर्चनां कृत्वा ध्वजादानं व्यधात् पुनः ।।१४।।
शोभने वासरे सङ्घ-नायकस्तिलकं वरम् । कारयामास भूयिष्ठ-विभवव्ययतः खलु ।।१५।।
तत्र श्रीआदिदेवस्य प्रासादं प्रवरं तदा । कारयित्वाऽऽदिमं देव-मस्थापयन्नरेश्वरः ।।१६।।
याचकेभ्यो ददन् दानं मुखमार्गितमादरात् । ऊर्ध्वं सिद्धमहीध्रस्य ययौ भरतसङ्घराट् ।।१७।।
स्नात्र-पूजाध्वजारोप-मुख्यकृत्यान्यनेकशः । कृत्वादिजिननाथस्य भावनां नृपतिर्व्यधात् ।।१८।।
विधाय विस्तराद्यात्रां चक्री शृङ्गेषु तेषु च । सदुत्सवमयोध्यायां समागात् सङ्घसंयुतः ।।१९।।
अन्येद्युश्चक्रिराड् भूयः पुण्डरीकमहीभृतः । उपत्यकावनावेत्य तस्थौ सङ्घसमन्वितः ।।२०।।
तत्र प्रौढं पुरं सौपा-रकपत्तनसञ्ज्ञितम् । स्थापयित्वाऽऽदिदेवस्य प्रासादं विपुलं व्यधात् ।।२१।।
स्थापयित्वाऽऽदिदेवस्य प्रतिमां चक्रिराट् तदा । आरुरोह गिरेः शृङ्गं मुख्यं कुर्वन् महोत्सवम् ।।२२।।
स्नात्र-पूजाध्वजारोप-मुख्यकृत्यान्यनेकशः । कृत्वा सङ्घपतिस्तत्र विनीतापुरमीयिवान् ।।२३।।

एकदा चक्रिराड् भूयः श्रीसिद्धधरणीभृतः । उपत्यकावनावेत्य तस्थौ सङ्घसमन्वितः ॥२४॥
तत्र स्फारं पुरं पार-कराह्वं स्वपुरोपमम् । स्थापयित्वाऽऽदिदेवस्य सदनं विपुलं व्यधात् ॥२५॥
तत्रादिमजिनेशस्य प्रतिमां चक्रिपुङ्गवः । स्थापयित्वाऽऽरुरोहाशु शृङ्गं सिद्धमहीभृतः ॥२६॥
पूजां विस्तरतः कृत्वा प्रभोरादिमचक्रिराट् । व्ययन् भूरिधनं स्वीय-नगरीं समुपेयिवान् ॥२७॥
भूयः शत्रुञ्जयस्याधो गत्वा भाकुपुराभिधम् । स्थापयित्वाऽऽदिदेवस्यावासं पृथुतरं व्यधात् ॥२८॥
तत्र श्रीऋषभाप्तस्य विधाय विपुलं गृहम् । विम्बमस्थापयत् चारू-त्सवं भूरिधनव्ययात् ॥२९॥
तत्र शत्रुञ्जयशृङ्गेऽधिरुह्य प्रथमप्रभोः । स्नात्रं विस्तरतश्चक्रे सार्वभौमः प्रमोदतः ॥३०॥
तत आरात्रिकं दीप्रं कृत्वा मङ्गलदीपकम् । इन्द्रमालां परिधाय चक्रिराड् विदधेतराम् ॥३१॥
परिधाप्य गुरून् दानं दत्त्वाऽर्थिभ्यो मुखोदितम् । चक्री स्वपुरमायातो नानोत्सवपुरस्सरम् ॥३२॥
एकदा वासवोऽसङ्ख्य-देवश्रेणिसमन्वितः । एत्यायोध्यान्तिके-ऽनंसीत् श्रीनाभेयं प्रमोदतः ॥३३॥
तत्र शक्रावताराख्ये तीर्थे भरतचक्रिराट् । प्रासादं वृषभेशस्य विदधे वहुरैव्ययात् ॥३४॥
विम्बं रत्नमयं तत्र स्थापयित्वाऽऽदिमप्रभोः । आदिमश्चक्रिराड् मोदा-दस्थापयत्सुभक्तितः ॥३५॥
एवं भरतचक्रीशो भूरिसङ्घयुतो मुदा । शत्रुञ्जये व्यधाद् वह्वीं यात्रां व्ययन् धनं बहु ॥३६॥
यत्राष्टापदभूमिध्रे श्रीआदिजिननायकः । मुक्तिं ययौ यतीनां तु सहस्रैर्बहुभिः समम् ॥३७॥
तत्र श्री भरतः सिंह-निषद्याकारमद्भुतम् । प्रासादं कारयामास चतुर्द्वारं च रैमयम् ॥३८॥
तत्रादिजिनवीरान्त-जिनानां प्रतिमा वराः । जिनमानप्रमाणाश्चा-स्थापयद् भरतो नृपः ॥३९॥
'उसभो पंचधणुसय नव पासो सत्त रयणीओ वीरो । सेसट्ठ पंच अट्ठय पन्ना दस पंच परिहाणी ॥४०॥'
स्तूपानां च शतं भ्रातृ-शतसत्कं जिनान्वितम् । कारयामास चक्रीशः कल्याणप्राप्तिहेतवे ॥४१॥
अथ कालाज्जनान् लोभ-भाजो मत्वाऽऽदिचक्रिराट् । अष्टापदगिरौ तीर्थ-रक्षायै चक्रिवानिति ॥४२॥
योजनान्ते योजनान्ते दण्डरत्नेन चक्रिराट् । अष्टौ सोपानकान्येव चकार तीर्थभक्तितः ॥४३॥
भरतो भूरिशो यात्राः शत्रुञ्जयशिलोच्चये । भूरिसङ्घयुतोऽकार्षीद् भूयिष्ठविभवव्ययात् ॥४४॥
गच्छन् सुप्तः स्थितो भुञ्ज-मानो वार्त्तां करन्नपि । भरतो ध्यातवान् शत्रुञ्जयं तीर्थं पुनः पुनः ॥४५॥
स्नानं कृत्वाऽन्यदा सर्व-भूषणानि स्वविग्रहे । परीधाय निजं देहं मुकुरे पश्यति स्म सः ॥४६॥
दर्शं दर्शं तनुं रम्या-भरणैर्भूषितां वराम् । दध्यौ चक्री विभात्येत-दङ्गं सुपर्ववृक्षवत् ॥४७॥
तत उत्तारयन् देहान् मौलिप्रभृतिभूषणम् । दवदग्धमिवाङ्गं स्वं वीक्षते चक्रीराट् क्रमात् ॥४८॥युग्मम्॥
उक्तं च-मौलेर्मौलिमपाकरोत् श्रुतियुगात् सत्कुण्डलं कण्ठतो निष्कं हारमुरुस्थलाच्च सहसैवांसद्वयादङ्गदे ।
चक्री पाणियुगाच्च वीरवलये मुद्रावलीमङ्गुली-वर्गाद्भारमिव प्रशान्तहृदयो वैराग्यभागित्यथ ॥४९॥
फाल्गुने मासि निष्पत्र-फलपुष्पमिवांह्रिपम् । व्यलङ्कारं वपुर्वीक्ष्य सस्मारैवं स्वमानसे ॥५०॥
कायभित्तिरियं भूषा-वर्यविच्छित्तिचित्रिता । अनित्यताजलक्लिन्ना पतत्यन्तरसारतः ॥५१॥
अहो शरीरिणां मोहः शरीरस्यास्य दुस्त्यजः । रुक् समीरचलत्पक्व-पत्रस्येव पतिष्यतः ॥५२॥
त्वगियं देहिनां सारं शरीरे साप्यहर्निशम् । लिप्तापि चन्दनरसैः पिच्छलत्वं न मुञ्चति ॥५३॥

यत्कृते कुरुते लोकः पापं दुष्कर्म्मणेरितः । तदेहं नलिनी पत्र-स्थितवत्रम्भचलाचलम् ॥५४॥
संसारखाले दुर्गंधे शृङ्गाररसपिच्छले । जानन्तोऽपि निमज्जन्ति गर्त्ताशूकरवज्जनाः ॥५५॥
षष्टिं वर्षसहस्राणि भ्रामं भ्रामं धरातले । कलेवरस्याऽस्य कृते धिगकृत्यं मया कृतम् ॥५६॥
धन्यो बाहुबलिर्वीरो धन्या अन्येऽपि बान्धवाः । यदि सारममी त्यक्त्वा संसारं मुक्तिमासदन् ॥५७॥
राज्यं चलाचलं प्राज्यं यौवनं च पतापतम् । लक्ष्मीश्चराचरा यत्र भवे तत्र स्थिरं कथम् ॥५८॥
माता पिता कलत्राणि बान्धवाः पुत्रसम्पदः । जन्तूनां भवकूपान्तः-पततां कोऽपि नाऽविता ॥५९॥
अनित्यमारोग्यमनित्ययौवनं विभूतयो जीवितमप्यनित्यम् ।
अनित्यताभिग्रहतस्य जन्तोः कथं रतिः कामगुणेषु जायते ? ॥६०॥
इत्यादि भावनाभावा-दनित्यं भावयन् हृदि । भरतः परविद्यारि-मग्नोऽजनि दृढं तदा ॥६१॥
सुध्यानपारदं देह-भाजने न्यस्य चक्रिराट् । सुभाववह्निना पक्वं चक्रे कल्याणसिद्धये ॥६२॥
क्षपकश्रेणिमारूढः क्षपन् दुःकर्म्मसन्ततिम् । भरतः केवलज्ञानं प्रपेदे विश्वबोधकम् ॥६३॥
उपेत्य तत्क्षणाद् देव-नाथेन कुर्वता महः । यतिलिङ्गे वितीर्णे तु रचिरे हेमविष्टरे ॥६४॥
उपविश्यादिमश्चक्री दिदेश धर्म्मदेशनाम् । तथा यथाऽभवद्भूरि नृणां वैराग्यमञ्जसा ॥६५॥ ॥युग्मम्॥
नृपा दश सहस्राणि भरतस्यान्तिके व्रतम् । लात्वा तदा तपस्तेपु-रुग्रं भवच्छिदे ॥६६॥
धर्म्मं प्रबोधयन् भव्यान् पूर्वं लक्षं च वत्सरान् । भरतर्षिर्ययावष्टा-पदे तीर्थे शिवप्रदे ॥६७॥
कृत्वा चतुर्विधाहारं मासान्ते भरतो यतिः । अलञ्चक्रे शिवं क्षेत्रं सिद्धानन्तचतुष्टयः ॥६८॥
तदान्ये साधवो भूरि-लक्षाणि पातकक्षयात् । जग्मुरष्टापदे तीर्थे मुक्तिपुर्यां शिलोच्चये ॥६९॥
तस्मिन् गिरौ सुरा एत्य भरतादितपस्विनाम् । निर्वाणगमनाद्युतो-त्सवं विदधिरे मुदा ॥७०॥
उक्तं च—"भरतः पूर्वलक्षाणां कौमार्ये सप्त सप्ततिम् । सहस्रं शरदामेकं मण्डलीकत्वमाश्रयत् ॥१॥
एकवर्षसहस्रोन-पूर्वलक्षाणि षट् तथा । स चक्रवर्त्तित्वमपात् पूर्वलक्षं च केवलम् ॥२॥
पूर्वलक्षाणि चतुर-शीतिं सर्वायुरप्यथ । प्रपूर्य भरतो मुक्ति-पुर्यां तत्र समीयिवान् ॥३॥
गिरावष्टापदे भूरि-सङ्घयुग् भरताङ्गभूः । नृपः सूर्ययशो देवान् नत्वाऽऽनर्च सुमैर्वरैः ॥४॥"
यानि श्री धर्म्मकृत्यानि भरतो विदधे नृपः । तेषां सङ्ख्यां गिरां देवो न वेत्ति न कविः पुनः ॥७१॥

इति श्री भरतचक्रिसम्बन्ध सक्षेपतोऽलेखि मया

॥ अथ श्रेयांसकुमारसम्बन्ध ॥

अन्येद्युर्विशन् स्वामी वृषभः प्रथमः प्रभुः । पुरे गजपुरे बाह्यो-द्याने तु समवासरत् ॥१॥
तदा तत्राभवद् बाहुबलेः सोमयशाः सुतः । तस्य श्रेयांसनामा तु सुतो राज्यं नयाद् व्यधात् ॥२॥
प्रभुं समागतं श्रुत्वा श्रेयांसो मेदिनीपतिः । गत्वा तत्र जिनं नत्वा धर्म्ममित्यशृणोन्मुदा ॥३॥
राज्यं सुसम्पदो भोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्म्मस्यैतत्फलं (विदुः) ॥४॥

भवन्ति भूरिभिर्भाग्यैः धर्म्मकर्म्ममनोरथाः । फलन्ति यत्पुनस्ते तु तत् सुवर्णस्य सौरभम् ॥५॥
चत्वारः प्रहरा यान्ति देहिनां गृहचेष्टितैः । तेषां पदे तदर्द्धे वा कर्त्तव्यो धर्म्मसङ्ग्रहः ॥६॥
श्रुत्वेति स्वं सुतं राज्ये न्यस्य श्रेयांसभूपतिः । चारित्रं लातवान् मुक्ति-सातसन्ततिदायकम् ॥७॥
श्रेयांसं स्वामिनो भक्तं दृष्ट्वाऽऽदिचक्रिराट् पुनः । पप्रच्छाऽयं कथं भक्त-स्त्वयि स्वामिन् ! विलोक्यते ॥८॥
प्रभुः प्राहाऽस्य पूर्वस्य भवस्य मम विद्यते । सम्बन्धोऽतो विशेषेण भक्तो मयि तु वीक्ष्यते ॥९॥

तथाहि वसुदेवहिण्डौ—"जया ईसाणे देवलोए सिरिप्पहे विमाणे अहयं ललितांगो देवो जाओ। ताहे सिज्जंसो सयंप्पहा देवी पुव्वभवणिण्णामिअभिहाणा ते जाया" तओ पुव्वविदेहे पुक्खलावती विजए लोहग्गले नयरे। अहयं वयरजंघो आसी सिज्जंसो मिरिमई भज्जा॥ तओ उत्तरकुरुए अहयं जुम्मी जाओ तत्थ सिज्जंसो जुगलिणी जाया॥ तओ अहयं सिज्जंसजीव सोहम्मे कप्पे देवा॥ तओ अहयं अवरविदेहे विज्जपुत्तो सिज्जंसो पुण जुण्णसिट्ठिपुत्तो केसवाभिहाणो छट्ठो मित्तो॥ तओ दुवे अच्चुए सग्गे देवा॥ तओ अहयं पुंडरिकिणीए नयरीए वयरणाभो सिज्जंसो तत्थ ममं सारही॥ तओ सव्वट्ठ-सिद्धिविमाणे दुवे देवा भित्ते॥ तओ अहयं रिसह नामा नाभिकुलकर पुत्तो सिज्जंसजीवो पुण बाहुबलिपुत्तस्स सोमयसस्स पुत्तो सिज्जंसो जाओ॥

श्रेयांसेनाऽमुना पूर्वं दृष्ट्वा पूर्वभवानिति । अहं पारणकं चेक्षुरसेन कारितो ध्रुवम् ॥१०॥
तदेति बहवो भव्य-जीवाः श्रुत्वा प्रभूदितम् । विशुद्धसंयतश्राद्ध-धर्मं प्रपेदिरे मुदा ॥११॥
भरतोऽपि प्रभोर्वाणीं श्रुत्वा दध्याविदं हृदि । कदा ममाऽत्र वैराग्यं भविष्यति शिवप्रदम् ? ॥१२॥
बहवश्च प्रभोः पार्श्वे लात्वा श्री संयमं वरम् । सेवां वितन्वते वैया-वृत्यादिकरणाद् दृढम् ॥१३॥
श्रेयांसः प्रभुणा सार्द्धं विहारं भुवि नित्यशः । कुर्वन् शत्रुञ्जये तीर्थे जगामानघमानसः ॥१४॥
तत्र वितन्वतो ध्यानं शुक्लं श्रेयांसभूपतेः । उत्पन्नं केवलज्ञानं विश्वत्रयप्रकाशकम् ॥१५॥
तत्रैत्य कमलो नामा श्रेयांसस्य तनूभवः । श्रेयांसाह्वं विहारं तु कारयामास रैव्ययात् ॥१६॥
तत्र प्रथमदेवस्य बिम्बं रत्नमय वरम् । अतिष्ठपत् मुदा पुत्रः श्रेयांसस्य शुभेऽहनि ॥१७॥
श्रेयांसः केवली भूरि-साधुश्रेणिसमन्वितः । शत्रुञ्जये समायातो बोधयन् भविनो बहून् ॥१८॥
श्रेयांसः केवली भूरीन् भव्यान् प्रबोध्य सद्गिरा । अप्रेषयत् शिवावासं सर्वकर्म्मविमोचनात् ॥१९॥
क्षीणकर्म्मा क्रमात् मुक्तिं यदा श्रेयांस ईयिवान् । तदा शतत्रयं वाचं-यमाः शिवपुरीं ययुः ॥२०॥
श्रेयांसनन्दनाः पञ्च प्राप्य दीक्षां जिनान्तिके । शत्रुञ्जये ययुर्मुक्ति-नगर्यां तमसां क्षयात् ॥२१॥
श्रेयांसपुत्रपुत्राश्च विंशतिर्मदनादयः । तीर्थे शत्रुञ्जये यात्रां चक्रुर्विस्तरतः क्रमात् ॥२२॥
तेषां मध्ये शिवं जग्मु-र्दश सिद्धमहीधरे सर्वार्थाह्वे विमाने तु दशापि प्रययुस्ततः ॥२३॥

❀ इति श्रेयांसकुमारसम्बन्ध. ❀

॥ अथ पुण्डरीकसिद्धिगमनसम्बधः ॥

ओसप्पिणीइ पढमं, सिद्धो इह पढमचक्कि-पढम सुओ ।
पढमजिणस्स य पढमो, गणहारी जत्थ पुंडरीओ ॥११॥

चित्तस्स पुण्णिमाए, समणाणं पंचकोडिपरिवरिओ ।
णिम्मलजसपुंडरीअं, जयउ तं पुंडरीयतित्थं ॥१२॥

अनयोः व्याख्या—अवसर्पिण्यामस्यां 'प्रथमं' आदौ 'प्रथमचक्री' भरतस्तस्य प्रथमः पुत्रः पुण्डरीकाभिधः ऋषभसेनापरनामभृत् प्रथमजिनस्य प्रथमो गणधरः सिद्ध इह-शत्रुञ्जये सिद्धिं ययौ, तदा शिष्यः प्राह—कस्यां तिथौ कतिभिः साधुभिः सह मुक्तिं गतः ? गुरु प्राह—"चित्तस्स पुण्णिमाए ॥१॥" यत्र चैत्रमासस्य पूर्णिमायां-राकायां पञ्चकोटिमितैः श्रमणैः परिवृतः-सहितो निषेवितो गृहीतानशनोऽर्थात् पुण्डरीको गणी सिद्धः इति पश्चाद्गाथायाः सम्बन्धः । जयतात् 'तं' तत् 'पुण्डरीकं तीर्थं' शत्रुञ्जयाख्यं, किं विशिष्टं ? 'निम्मलं' निर्मलं यश एव पुण्डरीकं-कमलविशेषो यस्य तत् ॥

एकदा ऋषभोपान्ते पुण्डरीको गणाधिपः । पप्रच्छ भगवन् ! कुत्र मम मुक्तिर्भविष्यति ? ॥१॥
प्रभुः प्राह सुराष्ट्रासु तुङ्गाह्वो विद्यते गिरिः । विस्तरो योजनानां तु पञ्चाशच्छिवदायकः ॥२॥
तत्र यातस्य ते मुक्तिर्भविष्यति गणाधिप ! । अन्येषामपि साधूनां बहूनां तमसः क्षयात् ॥३॥
श्रुत्वेति वृषभस्योक्तं पुण्डरीको गणाधिपः । पञ्चकोटिमितैं र्वाचं-यमैर्युक्तोऽचलत्ततः ॥४॥
ध्यानमौनपरः शत्रु-ञ्जये गत्वा गणाधिपः । पञ्चकोटिमितैर्वाचं-यमैर्युक्तोऽभवच्छ्रुशम् ॥५॥
तदा तत्र स्थितश्चाद्यो गणधारी सुसाधुयुग् । शत्रुञ्जयस्य माहात्म्य-मित्यवग् भविनां पुरः ॥६॥
जिनेन्द्रभवनं भव्या ये कारयन्ति मानवाः । तेषां भवति कल्याण-कमला भीमसेनवत् ॥७॥
चन्द्रोदयपुरे भीम-सेनश्रेष्ठी वराशयः । अर्जयामास लक्षार्द्धं दीनाराणां क्रमात् किल ॥८॥
गुरूपान्ते गतोऽन्येद्यु-र्भीमसेनो वणिग्वरः । प्रासादकरणे पुण्यं शुश्रावेति कृतादरम् ॥९॥
यतः—"अङ्गुष्ठमात्रमपि यः प्रकरोति बिम्बं, वीरावसानऋषभादिजिनेश्वराणाम् ।
स्वर्गप्रधानविपुलर्द्धिसुखानि भुक्त्वा पश्चादनुत्तरगतिं समुपैति धीरः ॥१॥"
इत्यादि धर्म्ममाकर्ण्य भीमसेनो वणिग्वरः । यात्रां शत्रुञ्जये कृत्वाऽ-चीकरद् वृषभालयम् ॥११॥
ध्यानमेकाग्रचित्तस्य कुर्वतस्तस्य तत्र तु । उत्पन्नं केवलज्ञानं सिद्धिरासीत् क्रमात् पुनः ॥१२॥
श्रुत्वेति सिद्धशैलस्य माहात्म्यं बहवो जनाः । आदाय संयमं मुक्ति-नगरीं समुपागमन् ॥१३॥
गृहीतानशनश्चैत्र-राकायां भरताङ्गजः । सर्वकर्मक्षयान्मुक्ति-नगरीं समुपेयिवान् ॥१४॥
तदा वाचंयमा पञ्चकोट्योऽनशनग्रहात् । क्षिप्त्वा कर्म्माखिलं मुक्ति पुर्यां समागमत् किल ॥१५॥
तदा तत्र समागत्य पञ्चकोटिः यतीन् वरान् । दृष्ट्वा मुक्तिं गतान् शक्र-श्चक्रे मुक्तिगमोत्सवम् ॥१६

पुण्डरीको गणाधीशः प्रथमः प्रथमार्हतः । महोदयपुरीमैयुः ! (माप) पञ्चकोटियतिश्रितः ॥१७॥
अतोऽस्य तुङ्गशैलस्य पुण्डरीकाभिधां तदा । ददौ सुरपतिर्भूरि-सुरसेव्यः सदुत्सवम् ॥१८॥
ततः श्रीपुण्डरीकेति नाम ध्यायन् जनो बहु । स्वर्गापवर्गसौख्यानि लभते स्म लभिष्यते ॥१९॥
पुण्डरीको गणाधीशो यत्र स्थाने मनोहरे । तत्र श्रीभरतश्चक्री जिनागारमकारयत् ॥२०॥
प्रतिमां पुण्डरीकस्य सिद्धस्य गणधारिणः । अतिष्ठपद् युगादीश-प्रथमो नन्दनो मुदा ॥२१॥
तामपि प्रतिमां भव्य-जनानां पश्यतां सताम् । मुक्तिर्बभूव भवति भविष्यति क्रमात् पुनः ॥२२॥
चैत्रे मासे च सिद्धाद्रौ गत्वा भव्यजना मुदा । पूजां श्रीपुण्डरीकस्य कुर्वन्ते कुसुमैर्वरैः ॥२३॥
स्तोकेनैव तु कालेन ते क्षिप्त्वा निखिलं तमः । अलंकुर्वन्ति कल्याण-पुरीमशिश्रयन् क्रमात् ॥२४॥

❀ इति पुण्डरीकसिद्धिगमनसम्बन्धः समाप्तः ❀

एकत्रिंशतितमाधिकारे पुण्डरीकसम्बन्धः प्रोक्तोऽस्ति, पुनरत्र गाथाया अधिकारादुक्तो मया ।

॥ अथ बाहुबलीकारितश्रीमरुदेवीभवनसम्बन्धः ॥

## बाहुबलिणा उ रम्मं सिरिमरुदेवाइ कारिअं भवणं ।
## जत्थ समोसरणजुअं सो विमलगिरि जयउ तित्थं ॥१४॥

'यत्र' सिद्धशैले "बाहुबलिना" श्रीऋषभदेवद्वितीयपुत्रेण "श्रीमरुदेवाया" श्रीनाभिकुलकरपत्न्याः कारितं-कारापितं भवनं-सदनं प्रासादः "रम्यं" मनोहरं "समवसरणयुतं" चतुःप्रतिमायुतं मरुदेवी प्रतिमां गजाधिरूढां तत्र च स्थापयामास बाहुबलिः, स विमलगिरिर्जयतात् ।

पुण्डरीको गणी कुर्वन् विहारं वसुधातले । तक्षशिलापुरोद्याने रुचिरे समवासरत् ॥१॥
तदा बाहुबलिस्तत्रा-गतो धर्म्मं जिनोदितम् । शुश्रावेति मुदा स्वर्गा-पवर्गसातदायकम् ॥२॥
जिनेन्द्रभवनं भव्या ये कारयन्ति मानवाः । तेषां भवति कल्याण-कमला भीमसेनवत् ॥३॥
तथाहि-चन्द्रोदयपुरे भीम-सेनः श्रेष्ठी वराशयः । अर्जयामास लक्षार्द्धं दीनाराणां क्रमात् किल ॥४॥
गुरूपान्ते गतोऽन्येद्यु-र्भीमसेनो वणिग्वरः । प्रासादकरणे पुण्यं शुश्रावेति कृतादरम् ॥५॥
यतः—"अङ्गुष्ठमात्रमपि यः प्रकरोति बिम्बं, वीरावसानवृषभादिजिनेश्वराणाम् ।
स्वर्गप्रधानविपुलर्द्धिसुखानि भुक्त्वा, पश्चादनुत्तरगतिं समुपैति धीरः" ॥१॥
"धर्म्मज्ञो धर्म्मकर्त्ता च सदा धर्म्मप्रवर्त्तकः । सत्त्वेभ्यो धर्म्मशास्त्रार्थ-देशको गुरुरुच्यते" ॥२॥
इत्यादि धर्म्ममाकर्ण्य सम्यग्बाहुबलिर्नृपः । ययौ शत्रुञ्जये तीर्थे भूरिश्रीसङ्घसंयुतः ॥६॥
तत्र सङ्घकृत्यानि कृत्वा बाहुबलिर्नृपः । प्रासादं कारयामास कैलासाचलसोदरम् ॥७॥
समवसृतियुग् बिम्बं मरुदेव्याः शिवप्रदम् । प्रतिष्ठपन् मुदा शत्रु-ञ्जये बाहुबलिर्नृपः ॥८॥

उक्तं च–"माघस्य पूर्णिमास्यां तु जननी वृषभप्रभोः। मुक्तिं ययावतो बाहु-बलिनाऽऽव्याप्तसूनुना ॥१॥"
तद्दिने ये नरा नार्यः पूजयन्त्यादियोगिनीम्। ते सर्वे सर्वसाम्राज्यं सुभगाः स्युर्मुमुक्षवः ॥९॥
नार्योऽत्र विधवाः पुत्र-वत्यःसौभाग्यभाजनम्। चक्रि-शक्रगृहे भूत्वा क्रमान्मुक्तिं व्रजन्त्यपि ॥१०॥
बाहुबल्यादयः सर्वे सोदरा यत्र निर्वृताः। तत्र सार्वगृहं बाहुबल्याह्वं भरतो व्यधात् ॥११॥
तीर्थेऽत्र वह्निसंस्कारः कार्यो नृणां कदापि न। यतस्तत्तीर्थलोपः स्याद् जिनाज्ञायाश्च खण्डनम् ॥१२॥
मुख्यशृङ्गादधो मुक्त्वा सर्वतोऽपि द्वियोजनीम्। गिरौ सार्वाभिधे कार्या देहिनामग्निसंस्कृतिः ॥१३॥
तत्र तेषां च कर्त्तव्या मूर्तिः शैलमयी वरा। अन्येषामपि तत् कृत्य-निर्देशाय महीभुजा ॥१४॥
जीवहिंसां विधायापि खगा वैताढ्यवासिनः। तत्पातकच्छिदे तीर्थं निसेवन्ते निरन्तरम् ॥१५॥
तदानीं तत्र वज्रश्री-विंद्याधरशिरोमणिः। लक्षविद्याधराऽऽसेव्यो नन्तुं श्री वृषभं जिनम् ॥१६॥
स्नात्रपूजा-ध्वजारोप-कृत्यानि जिनसद्मनि। विधाय वन्दते सर्वान् प्रत्येकं जिनसद्मसु ॥१७॥
ततो विद्याधरः शत्रु-ञ्जयमाहात्म्यमादरात्। शुश्रावेति गुरूपान्ते भूरिजनसमन्वितः ॥१८॥
यः शत्रुञ्जये तीर्थे कारयेज्जिनमन्दिरम्। तस्य स्वर्गापवर्गश्री-दुर्लभा नैव जायते ॥१९॥
यश्च दानं सुभावेन दत्तेऽत्र सिद्धपर्वते। स एव लभते स्वर्गा-पवर्गश्रियमञ्जसा ॥२०॥
यतः––"शत्रुञ्जये जिने दृष्टे दुर्गतिद्वितयं क्षिपेत्। सागरोपमसहस्रं तु पूजास्नात्रविधानतः" ॥१॥
श्रुत्वेति श्रीजिनागारं स्फाटिकैरश्मभिर्वरैः। कारयित्वाऽऽदिदेवस्य बिम्बमस्थापयत् स च ॥२१॥
तस्य सार्वगृहस्याऽऽह्वा वज्रश्रीरिति मानवैः। व्यश्राणि विदधुर्विद्या-धराद्याः पूजनं ततः ॥२२॥
क्रमात्तत्र स विद्याभृद् लात्वा चारित्रसम्पदम्। सर्वकर्म्मक्षयात् सिद्धो लक्षत्रययतिश्रितः ॥२३॥

❀ इति बाहुबलिकारितश्रीमरुदेवीभवनसम्बन्ध ❀

॥ अथ नमिविनमिमुक्तिगमनसम्बन्ध ॥

णमि-विणमीखयरिंदा सह मुणि-कोडीहिं दोहिं संजाया।
जहिं सिद्धसेहरा सइ जयउ तयं पुण्डरी तित्थं ॥१५॥

नमि–विनमिखचरेन्द्रौ द्विकोटिमित–साधुभ्यां सह-सार्द्धं जहिं-यत्र 'सिद्धशेखराः' सिद्धमुकुटाः 'सञ्जाताः' बभूवुः जयतात् पुण्डरीकाह्वं तीर्थं।

वृषभस्य सुतौ कच्छ-महाकच्छौ मनोहरौ। अभूतां सबलौ स्वामि-भक्तौ रुचिरमानसौ ॥१॥
कच्छस्याऽभूदपि (न्नमि) पुत्रो विनीतो विशदाशयः। महाकच्छस्य पुत्रोऽभू-द्विनमिर्हितकृत् पितुः ॥२॥
प्रभोः कच्छमहाकच्छौ स्वस्वसूनुसमन्वितौ। सेवां वितनुतेऽमीच्चं भक्तिभावितमानसौ ॥३॥
दानं सांवत्सरं दत्त्वा याचकेभ्यो मुखोदितम्। वृषभाह्वं व्यधाद्वर्षं वृषभस्तीर्थकृत्तदा ॥४॥
यतः—"एगा हिरण्णकोडी अट्ठेव य अणूणगा सयसहस्सा। सूरोदयमाइयं दिज्जइ जा पायरासाओ ॥१॥

तिण्णेव य कोडिसया अट्ठासीई उ हुंति कोडीओ । असीयं च सयसहस्सा एयं संवच्छरे दिण्णं ॥२॥"

देशान् सर्वांस्तनूजेभ्यो विभज्य च पृथग् पृथक् । अर्प्पयन् भरतायादा-दयोध्यां वृषभध्वजः ॥५॥
बाहुबलितनूजाय ददौ तक्षशिलां पुरीम् । प्रभुस्ततो ललौ दीक्षां संसारार्णवतारिणीम् ॥६॥
तदा कच्छमहाकच्छ-मुख्याः श्रीवृषभानुगाः । सहस्राणि तु चत्वारः प्रभूणाऽमा व्रतं ललुः ॥७॥
चतुर्मुष्ट्या कृते लोचे प्रभुणाऽऽचष्ट वासवः । तिष्ठतात् पञ्चमी मुष्टियतो भाति तव शिरः ॥८॥
ततः कच्छादयः सर्वे चतुर्भिर्मुष्टिभिस्तदा । लोचं चक्रुश्चतुर्मुष्ट्या स्वस्वामिभक्तितः खलु ॥९॥
विहारे प्रभुणाऽन्यत्र कृते कच्छादिशालिना । विदेशादागतौ तत्र नमिश्च विनमिर्द्रुतम् ॥१०॥
मातृभ्यां गदितौ वत्सौ हे नमे विनमे ! लघु । याचेथां भरतं राज्यं सेवेथां तत्पदौ सदा ॥११॥
जल्पतस्तौ न वाचा तु भरतं वृषभाङ्गजम् । याचेवहि प्रभुं किन्तु राज्यं याचिष्यते किल ॥१२॥
एवं प्रोक्त्वाऽऽदिदेवस्य पार्श्वे गत्वोचतुस्तदा । राज्यं देहि प्रभो ! त्वं च यतः आवां तवानुगौ ॥१३॥
प्रभोर्यातोऽध्वनि द्वौ तु भृत्यौ कण्टापसारतः । उपास्ति चक्रतुः सायं यावच्चाखिन्नमानसौ ॥१४॥
सायं यत्र प्रभुस्तस्थौ पार्श्वयोरुभयोः प्रभोः । आसीनावनुगौ रात्रौ तिष्ठतः स्मावितुं प्रभुम् ॥१५॥
प्रातस्तौ प्रोचतू राज्यं देहि स्वामिन् ! प्रसद्य वाम् । एवं गतेषु घस्रेषु बहुष्वागाद् भुजङ्गराट् ॥१६॥
प्रभुं प्रणम्य शेषाहि-राचष्ट तौ प्रति स्फुटम् । अयं मौनी प्रभुः पुंसो राज्यं दत्ते न कस्यचित् ॥१७॥
तेन गत्वा युवां पार्श्वे भरतस्य महीभुजः । राज्यं याचेयाथां हे सद्यः स वां तु प्रदास्यति ॥१८॥
एवमुक्तेऽपि शक्रेण सेवातः स्वामिनस्तदा । यदा च विरमतो नैव शेषो हृष्टोऽभवत्तदा ॥१९॥
प्रभोरास्येऽवतीर्येति जगौ शेषोऽपि तौ प्रति । युवामागच्छतं पृष्ठौ मे वां राज्यं वितीर्यते ॥२०॥
इत्युक्त्वा सर्पराट् कृत्वा प्रभो रूपं मनोहरम् । वैताढ्यपर्वतेऽनैषीन्नमिं च विनमिं समम् ॥२१॥
रोहिणी-प्रज्ञप्त्याद्या विद्या वर्याः सहस्रशः । आदौ तयोरदाच्छेषः प्रभुरूपधरस्तदा ॥२२॥
नमेः षष्टि पुराण्येव पञ्चाशद्विनमेस्तदा । दत्त्वाऽहिपो निजं रूपं प्रादुःकृत्य जगावदः ॥२३॥
प्रभो रूपं मया कृत्वा भवतोर्भक्तयोः प्रभोः । एता विद्या वरा दत्ता ध्येयोऽतः प्रभुरन्वहम् ॥२४॥
उक्त्वेति धरणे याते स्वस्थाने प्रभुसेवकौ । साधयित्वा च ता विद्या जातौ विद्याधरौ क्रमात् ॥२५॥
"णमि-विणमीणं जायण णागिंदो विज्जदाण वेयड्ढे । उत्तर-दाहिणसेढी सट्ठी-पण्णास णगराइं ॥२६॥
विद्याभिस्ताभिरुद्याभिर्दुर्जयौ तौ खगेश्वरौ । अभूतां भरतस्यापि त्रिखण्डाधिपतेस्तदा ॥२७॥
पुरे पुरे जिनावासाः कैलासाचलसोदराः । कारिता रैव्ययात् ताभ्यां खगाभ्यां बिम्बशोभिताः ॥२८॥
शत्रुञ्जयादितीर्थेषु यात्रा भूरिधनव्ययात् । ताभ्यां विरचिता विद्या-धराभ्यां शिवशर्मदाः ॥२९॥
शेषप्रदत्तविद्याभि-र्नानारूपाणि सन्ततम् । तयोर्वितन्वतोर्विद्या-धरवंशोऽभवत्तदा ॥३०॥

उक्तं च-'इक्ष्वाकादिमहावंशा-श्चत्वारो विदिता भुवि । येऽष्वभवन् जिनाधीशाः पुण्यवन्तो जना अपि' ॥१॥

तथाहि-'इक्खागवंसपढमो बीओ सोमो अ होइ णायव्वो । विज्जाहराण तइओ हवइ चउत्थो उ हरिवंसो' ॥

भरतस्याऽऽदिमः पुत्रः नाम्नाऽऽदित्ययशा अभूत् । ततः सिंहयशाः पुत्रो बलभद्रस्ततोऽभवत् ॥३१॥

आवश्यके उक्तम्—"राया आइच्चजसे महाजसे अइबले अचलभद्दे ।
बलविरई कीत्तिवीरिय जलवीरिए दंडवीरिए अ ॥१॥"
अभूद्बाहुबलेः पट्टे सोमनामा नरेश्वरः । ततः सोम इति ख्यातो वंशो वरनरेन्द्रभाग् ॥३२॥
नमेश्च विनमेश्चासीद् वंशो विद्याधराभिधः । हरिवर्षागताद् युग्माद् हरिवंशोऽभवत् क्रमात् ॥३३॥
अन्येद्युरादिदेवस्य समीपे द्वौ खगाधिपौ । धर्म्मस्य देशनामेवं शृणुतः स्म कृतादरौ ॥३४॥
तथाहि-भव्वा भवारहट्टे कम्मजलं गहिअ अविरईघडिहिं । दुहविसवल्लिं रोवीय मा सिंचह जीवमंडवए ॥३५॥
"लद्धूणवि जिणदिक्खं पुणो पुणो जे भमंति संसारे । अमुणंता परमत्थं ते णाणावरणदोसेणं ॥१॥
आसण्णसिद्धिआणं विहिबहुमाणो अ होइ णायव्वो । विहिचाओ अविहिभत्ती अभव्वजियदूरभव्वाणं ॥२॥
धण्णाणं विहिजोगो विहिपक्खाराहगा सया धण्णा । विहिबहुमाणा धण्णा विहिपक्ख अदूसया धण्णा" ॥३॥
इत्यादि देशनां श्रुत्वा नमिश्च विनमिस्तथा । पुत्रौ राज्येऽभिषिच्याथ ललतुः संयमं तदा ॥३६॥
आदिनाथक्रमौ सेव-मानौ तौ श्रमणोत्तमौ । अभूतां कोविदोत्तंसौ पठनादागमस्य हि ॥३७॥
पालयन्तौ व्रतं शुद्धं नमिश्च विनमिश्च तौ । प्राप्य सूरिपदं भव्यान् बोधयामासतुर्बहून् ॥३८॥
साधुकोटीद्वयान्वितौ तौ नमिर्विनमीर्यती । सिद्धाद्रौ जग्मतुर्ज्ञानं केवलं श्रयतः स्म तौ ॥३६॥
ऋषिकोटियुगायुक्तौ क्रमादायुःक्षयात्तदा । सिद्धाद्रौ जग्मतुर्मुक्ति-नगरीं तौ यतीश्वरौ ॥४०॥

❀ इति नमिविनमिमुक्तिगमनसम्बन्ध ❀

॥ अथ नमितत्पुत्रीमुक्तिगमनस्वरूपम् ॥

अथवा एवम्-अन्यदा भरतः शत्रुञ्जये नत्वा जिनेश्वरान् । उज्जयन्ते गिरौ नन्तुं चचाल यावता मुदा ॥१॥
मुनीन्द्रौ नमिविनमी प्रोचतुर्नृपतिं प्रति । स्थास्यावोऽत्र धरेशाऽऽवां मुनिकोटिद्वयान्वितौ ॥२॥
तेषामप्यावयोर्मुक्ति-र्भविता सिद्धपर्वते । ततस्तान् संयतान्नत्वा भरतो रैवते ययौ ॥३॥
फाल्गुने मासि शुक्लायां दशम्यां तौ मुनीश्वरौ । साधुकोटिद्वयीसेव्यौ शुक्लध्यानपरायणौ ॥४॥
सम्प्राप्य केवलज्ञानं लोकालोकप्रकाशकम् । आदौ च नमिविनमी मुक्तिपुर्यां समीयतुः ॥५॥
ततोऽन्येऽपि क्रमान्मुक्ति-पुर्यां वाचंयमा ययुः । अतः सा दशमी शुक्ला सेव्या तपोविधानतः ॥६॥
उक्तं च-"तद्दिनेऽल्पमपि कृतं सत्तपस्तत्समत्र च । कालोप्तमिव सद्बीजं भवेद्भूरिफलप्रदम् ॥७॥
फाल्गुनीसितदशम्यां सिद्धशैलं स्पृशन्ति ये । निक्षिप्ताऽखिलपापानि भवन्ति शिवभाजिनः ॥८॥
यत्र नम्यादयो वाचं-यमा सिद्धिमगुः पदे । प्रासादं विपुलं तत्राचीकरंस्तत्तनुभवाः ॥९॥
तत्र रत्नमयीं नाभि-पुत्रमूर्त्तिं मनोहराम् । स्थापयित्वोभयोः पार्श्वे नमेश्च विनमेः पुनः ॥१०॥
रत्नमूर्ती जगल्हादकारिण्यौ रुचिराकृती । स्थापयामास नाभेय-सूनुरादिमचक्रिराट् ॥११॥युग्मम्॥
व्रतिन्यो नमिपुत्र्योऽथ चतुःषष्ट्यङ्कसम्मिताः । चर्चाद्या सिद्धशैले तु यस्मिन् शृङ्गे शिवं ययुः ॥१२॥
कृष्णचैत्रचतुर्दश्यां निशीथे तत्र ताः समम् । अतः शृङ्गस्य तस्यासीत् चर्चाऽऽख्यं लोकविश्रुतम् ॥१३॥

★ इति नमितत्पुत्रीमुक्तिगमनस्वरूपम् ★

॥ अथ आदित्ययशोमुख्यभूपाना सम्बन्धः ॥

सव्वट्ठसिद्धपत्थड अंतरीया पण्णकोडिलक्खुदही ।
सेढीहिं असंखाहिं चउदस लक्खाहिं संखाहिं ॥ १६ ॥

जत्थाइच्चजसाई सगरंता रिसहवंसजनरिंदा ।
सिद्धिं गया असंखा जयउ तयं पुंडरीतित्थं ॥ १७ ॥

सर्वार्थसिद्धप्रस्तटे मुक्तौ च अन्तरान्तरा पञ्चाशल्लक्षकोट्यु दधयः-पञ्चाशत्कोटिसागरास्तेषां श्रेणिभिरसङ्ख्याताभिः चतुर्दशलक्षैः सङ्ख्याश्च मिथः तत्र आदित्ययशआदिभूपाः सगरचक्रवर्त्तिपर्यन्ताः श्रीऋषभवंशजाता नरेन्द्रा-राजानः असङ्ख्याताः सिद्धिं गताः, स विमलगिरिर्जयतात् 'तित्थं' तीर्थम् ।

जं उसहकेवलाओ अन्तमुहुत्तेण सिवगमो भणिओ ।
जा पुरिसजुग असंखा तत्थ इमा सिद्धदंडीओ ॥१॥ इत्यादि ।

(१) सिद्धिगतलक्षा असङ्ख्यातवारा अनुलोमसिद्धदण्डिकाः—

| सिद्धिगता | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | असङ्ख्येयवाराः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगता | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ५० | असङ्ख्येयवारा |

(२) सर्वार्थसिद्धिगता विलोमसिद्धदण्डिकाः—

| सिद्धिगताः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ५० | असङ्ख्येयवारा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगताः | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | १४ | असङ्ख्येयवारा |

(३) [ सिद्धिगतः सर्वार्थसिद्धिगतः ] समसङ्ख्यसिद्धदण्डिकाः—

| सिद्धिगताः | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | एव यावदसङ्ख्ये यलक्षाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगता | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | एव यावदसङ्ख्ये यलक्षा |

(४) [ सर्वार्थसिद्धिगतः ] एकोत्तरसिद्धदण्डिकाः—

| सिद्धिगताः | १ | ३ | ५ | ७ | ९ | ११ | १३ | १५ | १७ | १९ | २१ | एव यावदसङ्ख्या |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगता | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | १८ | २० | २२ | एव यावदसङ्ख्या |

(५) सिद्धिगतः सर्वार्थसिद्धिगतः एवं जाव असंखा एवं जाव असंखा द्व्युत्तरसिद्धदण्डिकाः—

| सिद्धिगता | १ | ५ | ९ | १३ | १७ | २१ | २५ | २९ | ३३ | ३७ | एव यावदसङ्ख्या |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगता | ३ | ७ | ११ | १५ | १९ | २३ | २७ | ३१ | ३५ | ३९ | एव यावदसङ्ख्याः |

(६) सिद्धिगतः सर्वार्थसिद्धिगतः एवं जाव असंखा एवं जाव असंखा प्रथमाविषमोत्तरसिद्धदण्डिकाः—

| सर्वार्थगता | ३ | ८ | १६ | २५ | ११ | १७ | २९ | १४ | ५० | ८० | ५ | ७५ | ७२ | ५९ | २९ | एव यावदसङ्ख्या |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सर्वार्थगता | ५ | १७ | २० | ९ | १५ | ३१ | २८ | २६ | ७३ | ४ | ९० | ६५ | २७ | १०३ | ० | एव यावदसङ्ख्याः |

(७) सिद्धिगतः सर्वार्थसिद्धिगतः द्वितीयविषमोत्तरसिद्धदण्डिकाः—

| सर्वार्थगता. | २९ | ३४ | ४२ | ५१ | ३७ | ४३ | ५५ | ४० | ७६ | १०६ | ३१ | १०० | ९८ | ७५ | ५५ | एव यावदसङ्ख्याः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सिद्धिगता | ३१ | ३८ | ४६ | ३५ | ४१ | ५७ | ५४ | ५२ | ९९ | ३० | ११६ | ९१ | ५३ | १२९ | ० | एव यावदसङ्ख्या |

एवं तृतीय जाव असंखा सर्वार्थ० एवं जाव असंखा ।

आदित्ययशसा यत्र प्राप्ता मुक्तिपुरी तदा । महायशा व्यधात्तत्र प्रासादं तत्तनूभवः ॥१॥
अपि सोमयशाः स्वस्य बन्धूनां जनकस्य च । प्रासादान् कारयामास तत्र वार्द्धकिना मुदा ॥२॥
महायशाः स्वपुत्राय राज्यं दत्त्वा सदुत्सवम् । लात्वा दीक्षां ययौ मुक्तिं तीर्थे शत्रुञ्जयाह्वये ॥३॥
एवं श्रीआर्षभे वंशे असङ्ख्याता नराधिपाः । दीक्षां लात्वा ययुर्मुक्तिं तीर्थे सिद्धाचलाभिधे ॥४॥
अन्येऽपि तत्र ये मुक्तिं तस्मिन् काले ययुस्तदा । तेषां सङ्ख्यां तु सर्वज्ञो वेत्ति नान्यश्च मानवः ॥५॥

अथ सगरस्य सम्बन्धः प्रोच्यते तथाहि—

नृपः सूर्ययशा राज्यं कुर्वन् न्यायाध्वनाऽन्यदा । प्रासादमर्हतो नाभि-नृपसूनोरकारयत् ॥६॥
अखण्डशासनो दुष्टप्र-त्यर्थीन् खण्डयन् क्रमात् । त्रिखण्डां मेदिनीं सूर्य-यशाः शशास नीतितः ॥७॥
शक्रेण ढौकितं वर्यं मुकुटं धारयन् स्वयम् । नृपः सूर्ययशा राज्यं कुरुते स्म सुरेन्द्रवत् ॥८॥
कनकाह्वखगेशस्य पुत्रीं जयश्रियं वराम् । राधावेधं विधायैव परिणिन्ये स भूपतिः ॥९॥
द्वाविंशतिसहस्राणि खगक्षोणिपजान्यपि । कलत्राण्यभवंस्तस्य पवित्राण्यपराण्यपि ॥१०॥
अष्टम्यां च चतुर्दश्यां गृह्णानः पौषधं सदा । चकार क्षपणं सूर्ययशा भरतनन्दनः ॥११॥
इतो धर्म्मे स्थिरं भूपं भरतक्षोणिभृत्सुतम् । ज्ञात्वा शक्रो जगौ देव-देवीनां पुरतस्तदा ॥१२॥
[प्राहोर्वशी हरे ! यद्यत् प्रोच्यते स्वामिना स्वयम् । तत्र वर्यमवर्यं चापत्याङ्गीक्रियते सुखम् ॥१३॥]
स चाष्टमीचतुर्दश्योः पर्वणोस्तपसः क्वचित् । चाल्यते निश्चयान्नैव कृतयत्नैः सुरैरपि ॥१४॥
यतः—"पूर्वा काष्ठामतिक्रम्य भानुश्चेदभ्युदेत्यहो ! । मेरुर्वा कम्पते वातैर्मर्यादां चाम्बुधिस्त्यजेत् ॥१॥"
सुरद्रुर्वाथकेशी स्यात् तथाऽप्येष स्वनिश्चयम् । अपि प्राणैः कण्ठगतै-र्जिनाज्ञां नैव मुञ्चते ॥१५॥
ततः प्राहोर्वशी देवी गीर्वाणनायकं प्रति । स्वामी जल्पति यच्चात्र सत्यं तदपि विद्यते ॥१६॥
सप्तधातुमयाङ्गो य-श्चर्म्मदेहोऽन्नभक्षकः । सोऽपि देवैरचाल्यो यत् श्रद्दधाति हि कोऽपि तत् ॥१७॥
एवं प्रोक्त्वोर्वशी रम्भा-सहिता स्वर्गतस्तदा । अयोध्यानगरीपार्श्वे समियाय कृतत्वरा ॥१८॥
रम्भायुतोर्वशी पाणौ वीणां विदधती स्वयम् । अयोध्यासन्निधौ चागात् प्रथमार्हन्निकेतने ॥१९॥
गायन्ती मधुरं गीतं मोहयंती च पक्षिणः । उर्वशी विदधे चित्र-लिखितानिव सन्ततम् ॥२०॥
तस्या गीत वरं गोधा-नकुलानिलभुग्मुखाः । शृण्वानाश्चित्र लिखिता इवासंस्तत्र कानने ॥२१॥

इतः सूर्ययशा वाह्य-केल्यर्थं निर्गतः पुरात् । तयोर्गीतरवान् वर्यान् शुश्राव भरताङ्गजः ॥२२॥
तद्गीतं मधुरं तत्र शृण्वानाः स्वतुरङ्गमाः । चलितं शेकिरे नैकं पदं गन्तुं तदाग्रतः ॥२३॥
असमर्थं बलं स्वीयं चलितुं च तदग्रतः । निरीक्ष्य धरणीनाथो-ऽपश्यद् वाङ्गनाद्वयम् ॥२४॥
अनयोर्नादतः सर्वे पशवोऽपि वनेऽभितः । आलेख्यलिखिता जाता अन्येषां का कथा पुनः ? ॥२५॥
यतः—"देवा नादेन तुष्यन्ति धर्म्मो नादात् प्रजायते । नादान्महीपतेरर्थो नादान्नार्योऽपि वश्यगाः ॥१॥"
गायन्त्यौ ते युगादीश-गेहेऽभ्येत्य मनोहरम् । चक्रतुर्नर्त्तनं यद्वद् यथा भूपश्चमत्कृतः ॥२६॥
प्रणम्य वृषभं देवं गच्छन्त्यौ ते सुराङ्गने । वीक्ष्य मारेषुविद्धोऽभूद् नृप आलेख्यचित्रवत् ॥२७॥
तयोः सक्तं नृपं ज्ञात्वा सचिवः प्राह ते प्रति । के भवन्त्यौ कुतः स्थाना-दायाते ? वदतं युवाम् ॥२८॥
प्रोचतुस्ते सुते आवां भीमस्य व्योमगामिनः । नन्तुं युगादितीर्थेश-मायाते संयतः किल ॥२९॥
मन्त्री जगौ ममस्त्येष नृपः सूर्ययशा वरः । भोगमीष्टं भवन्तीभ्यां सह पाणिग्रहान्ननु ॥३०॥
पौत्रोऽसौ वृषभेशस्य भरतक्ष्मापनन्दनः । चञ्चत्कलौवरोचिष्णुः सौम्यः सद्गुणवान् बली ॥३१॥
सन्तुष्टो वृषभस्वामी भवत्योरिह साम्प्रतम् । यदि सूर्ययशा भूपो वव्रे च गुणसागरः ॥३२॥
यथा भातः शशाङ्केन कौमुदीक्षणदे अपि । युवां श्री सूर्ययशसा तथा भातं नरेश्वरः ॥३३॥
ताभ्यां सन्मानिते नाभि-पुत्रसूनोश्च मामिकम् । भरताङ्गभुवा चक्रे तयोः पाणिग्रहस्तदा ॥३४॥
तयोः प्रीतिरसाकृष्टो भरतक्ष्मापनन्दनः । अनुमेने सुखं स्वर्ग-नाथवद् धरणीस्थितः ॥३५॥
सेवमानो नृपः कामं धर्माऽर्थाबाधयाधिकं । पुमर्थत्रयमेकेन चक्रेणाचालयद् बलाद् ॥३६॥
अन्यदा नृपतिः पत्नी-द्वययुक्तः स्मरोपमः । पृष्टो गवाक्षगस्ताभ्यां पत्नीभ्यामिति सादरम् ॥३७॥
पटहोद्घोषणा पुर्यां कार्यतेऽत्र कथं जनैः । जगौ भूपश्चतुर्दश्यष्टमी पर्वद्वयं वरम् ॥३८॥
अष्टाह्निकाद्वयं पर्व चतुर्मासीत्रयं तथा । पर्व पर्युषणाख्यं च पर्वाण्येतान्यवक् प्रभुः ॥३९॥युग्मम्॥
ज्ञानं हि प्रथमं रत्नं जायते शिवशर्मदम् । तस्याराधनमाप्तेन पञ्चमीपर्व जल्पितम् ॥४०॥
पर्वाण्येतानि सत्पुण्य-कारणानि जिनाज्ञया । आराधितानि कल्याणकमलायै भवन्ति हि ॥४१॥
उक्तञ्च—"न पर्वदिवसे स्नानं न स्त्रीसेवा कलिर्न च । न द्यूतं परहास्यादि न मात्सर्यं न च क्रुधम् ॥१॥
मनाक् कषायसङ्गो न ममता न प्रियेष्वपि । यथारुचि न च क्रीडा प्रमादश्च न किंचन ॥२॥
विधेयं धर्म्मरुचिना पुंसायतनताजुषा । शुभध्यानवता भाव्यं परमेष्ठिस्मृतिः पुनः" ॥३॥ त्रिभिर्विशेषकम्
सामायिकं पौषधं च षष्ठाष्टममुखं तपः । कृत्वा जनो जिनस्यार्चा पर्व शस्या च पञ्चमी । ४२॥
गुरुपादसमीपस्थः परमेष्ठिस्मृतिं स्मरन् । जनोऽर्जयति पुण्यानि क्षिप्त्वा कर्म्माष्टकं दृढम् ॥४३॥
त्रयोदश्यां च सप्तम्यां लोकबोधकृतेस्तदा । अयं पटहोद्घोषो मदादेशात् प्रवर्त्तते ॥४४॥
चतुर्दश्यष्टमी पर्व त्रैलोक्येऽप्यस्ति दुर्लभम् । सेवते यो जनो भक्त्या स याति परमं पदम् ॥४५॥
श्रुत्वैवं दुर्वशी प्राह कथं नाथ ! त्वयाऽधुना । कार्यते मानुषं जन्म विना भोगसुखं खलु ॥४६॥
श्रुत्वैतन्नृपतिः प्राह रे ! रे ! त्वं धर्म्मनिन्दके ! । अधर्मवचनं प्रोक्तं दुःखदुर्गतिदायकम् ॥४७॥
धिक् चतुरतां धिग् धिग् रूपं कुलं बलं यशः । विना धर्म्मेण कल्याण-कमला शर्मदायिना ॥४८॥

अष्टम्यां पाक्षिके पक्षि-मृगसिंहादिशावकाः । अप्याहारं न गृह्णन्ति कथं गृह्णाम्यहं प्रिये ! ॥४९॥
युगादीशेन यत्पूर्वं प्रोक्तं कल्याणहेतुकम् । अहं कण्ठगतप्राण-स्तत्त्यजामि न कर्हिचित् ॥५०॥
श्रुत्वेति उर्वशी प्राह चतुर्दश्यष्टमीदिने । रतसौख्यं न मेऽदास्यः तदाहं च मृता ध्रुवम् ॥५१॥
नृपः सूर्ययशाः प्राह पूर्वां त्यक्त्वाऽर्यमा यदि । उदेति पश्चिमायां तु तदा धर्म्माच्चलामि न ॥५२॥
यतः—"वरं प्रयातु मे राज्यं वरं प्राणक्षयोऽत्र हि । न पुनः पर्वतपसो भ्रष्टो लोके भवाम्यहम् ॥१॥"
प्राहोर्वश्यधुना प्राप्तं वयो भोगसुखं विना । गमिष्यत्यावयोः काक-नाशं जीवितमप्यहो ? ॥५३॥
एवं प्रोक्त्वा तदा ताभ्यां निश्चेष्टकाष्टवत् स्थितम् । तथापि तपसो भ्रष्टो न भूमीशो मनागपि ॥५४॥
क्षणान्निःश्वस्य ताभ्यां वा स्थितं प्रोक्तमिति ध्रुवम् । निष्ठुरोऽसि कृपारिक्तो विद्यते त्वं नरेश्वर ! ॥५५॥
आवयोर्हत्यया श्वभ्र-पातस्तव भविष्यति । तेनाऽऽवयोर्ददस्व त्वं सद्यो भोगसुखं खलु ॥५६॥युग्मम्॥
निषिद्धोऽपि नृपस्ताभ्यां प्रातरादाय पौषधम् । यदा तस्थौ तदा ताभ्यां विदारित वपुर्निजम् ॥५७॥
एतयोश्चेष्टितमाकर्ण्य नाचलन्नृपतिर्यदा । तदा ताभ्यां महासेना समानीता पुराद्बहिः ॥५८॥
लुण्ट्यमाने पुरे च स्व-भृत्यैः प्रोक्ते नृपो जगौ । लुण्टिष्यते न मे पुण्यं वैरिभिः प्रबलैरपि ॥५९॥
यतः—"बाह्या श्रीर्वैरिभिर्बाह्यं ह्रियते नान्तरा पुनः । न चान्तरं वृषं द्विड्भिर्बाह्यैर्वा हन्यते क्वचित् ॥१॥
ततो द्विपो यमाकाराः पार्श्वेऽभ्येत्य महीपतेः । हन्तुं लग्ना यदा नैव तदापि क्षुब्धवान् नृपः ॥६०॥
महायशोमुखा पुत्राः पुत्र्यो बद्ध्वा दृढं तदा । आनीता भूपतेरग्रे हन्तुं तैर्वैरिभिद्रुतम् ॥६१।
हन्यमानान् सुतान् पुत्री-र्द्विड्भिर्वीक्ष्य महीपतिः । धर्म्मध्यानान्मनाग् नैव चचालाचलमानसः ॥६२॥
ततस्ते मानुषी रूपां त्यक्त्वा कृत्वा निजाकृतिम् । देवाङ्गने लसद्रूप-धरे प्रोचतुरादरात् ॥६३॥
जय त्वं वृषभस्वामि-कुलसागरचन्द्रमाः । जय सत्त्ववतां धुर्य ! जय चक्रीशनन्दन ! ॥६४॥
स्वर्गे संसदि शक्रेण सत्त्ववान् गदितोऽथवा । आवाभ्यां तु तथा ज्ञातो भवान् धर्मणि निश्चलः ॥६५॥
रुध्यतेऽब्धि र्मेरुच्छैलः चाल्यते वध्यते मरुत् । यदि पुंसा तदा धर्म्म-ध्यानात्त्वं चाल्यते न हि ॥६६॥
स्तुवत्योस्तं तयोरेवं शक्रोऽभ्येत्य मणीमयीम् । वृष्टिं कृत्वा प्रशंस्येति जय त्व भूपते ! चिरम् ॥६७॥
मुकुटं कुण्डलाहार-मङ्गदं वरमुद्रिकाम् । तस्मै दत्त्वा प्रणम्याङ्घ्री भक्त्या स्वर्गालये ययौ ॥६८॥
कुरु धर्म्मं चिरं जैनं चिरं पालय भूतलम् । उपकारं चिरं कुर्याः यशःसञ्चयमञ्जुलम् ॥६९॥
ताभ्यां प्रशंस्य भूपालं क्षमयित्वा मणीन् बहून् । वितीर्य नर्त्तनं कृत्वा गतं गीर्वाणसद्मनि ॥७०॥
चतुर्दश्यष्टमीपर्व-मुख्येष्वहःसु सन्ततम् । तपः कुर्वन् नृपो नैव चाल्यते सुरदानवैः । ७१॥
ज्ञानदर्शनचारित्र-धारिणः श्रावकोत्तमाः । स्थापिताश्चक्रिणा येन ये ये भोजनदानतः ॥७२॥
तेभ्यः पृथक् पृथक् स्वर्णोपवीतं रुचिराकृतिम् । वितीर्य ददते भूपः स्वन्नं स्वीयनिकेतने ॥७३॥
सिद्धाद्रौ विस्तराद् यात्रां कृत्वा सूर्ययशा नृपः । उद्धारं चकृवान् श्रीमद्युगादिजिनसद्मनः ॥७४॥
आदर्शे स्वं मुखं पश्यन् नृपः सूर्ययशा नृपः । भरतेश इव प्राप ज्ञानं केवलसंज्ञकम् ॥७५॥
लिङ्गं प्राप्येन्द्रतः सूर्य-यशाः सुविहरन् क्षितौ । बोधयामास भूयिष्ठ-भव्यान् सर्वज्ञधर्मणि ॥७६॥
क्रमाच्छत्रुञ्जये शैले गत्वा सूर्ययशा मुनिः । सर्वकर्म्मक्षयान्मुक्तिसातमापायुपः क्षये ॥७७॥

भरतेश इवादित्य-यशोमुख्या महीधराः । यात्रां विस्तरतश्चक्रुः शत्रुञ्जये शिलोच्चये ॥७८॥
भरतेश इवादित्य-यशोमुख्या महीधराः । अष्टौ पश्यन्त आदर्शे मुखं ज्ञानजुषोऽभूवन् ॥७९॥
यतः–"राया आइच्चजसे महाजसे अइबले अ बलभद्दे । बलवीरिय कित्तिवीरिए जलविरिए दंडविरिए अ ॥"
एभिर्भूपैश्च बुभुजे भरतार्द्धं समन्ततः । भगवन्मुकुटः शक्रो-पनीतो मूर्ध्न्यधारि च ॥८०॥
भरतादनुसन्ताने सर्वे भरतवंशजाः । अजितस्वामिन यावद् मुक्त्यनुत्तरगामिनः ॥८१॥
सर्वे सङ्घपतीभूय तीर्थे शत्रुञ्जयादिके । यात्रां व्यधुगृहान् तुङ्गा-नचीकरन् जिनेशितुः ॥८२॥
एभिरष्टभिरुर्वीशैः श्रीआदित्ययशोमुखैः । उद्धारांश्चक्रिरे शत्रुञ्जय आदिजिनालये ॥८३॥

❀ इति आदित्ययशोमुख्यभूपाना सम्बन्ध. ❀

॥ अथ ईशानेन्द्रोद्धार ॥

चैत्रे महाविदेहाख्ये ईशानस्त्रिदशेश्वरः । सुव्रतस्यार्हतः पार्श्वे शुश्रावेति कृतादरः ॥१॥
यथा भवेषु मानुष्यो ग्रहेष्विव दिवाकरः । तथा द्वीपेषु जम्ब्वाख्यो द्वीपः सर्वोत्तरैर्गुणैः ॥२॥
तस्य दक्षिणदिग्भागे गिरिः शत्रुञ्जयाभिधः । सर्वतीर्थेषु विद्येत प्रकृष्टः शिवशर्मदः ॥३॥
साम्यत्वं सर्वतत्त्वेषु दैवतेषु यथा जिनः । दुर्लभः सर्वतीर्थेषु तथा शत्रुञ्जयो गिरिः ॥४॥
शत्रुञ्जयसमं तीर्थं जम्बूगं भारतं विना । विद्यतेऽन्यत्र कुत्रापि नैव मुक्तिसुखप्रदम् ॥५॥
श्रुत्वेत्यादि वचो जैन-मीशानेन्द्रो मरुद्युतः । एत्य शत्रुञ्जये चक्रे-ऽष्टाह्निकामहमादरात् ॥६॥
किञ्चिज्जर्जरितान् जैना-लयान् वीक्ष्य सुराधिपः । दिव्यशक्त्या नवी चक्रे भरतावनिनाथवत् ॥७॥

❀ इति ईशानेन्द्रोद्धार ❀

॥ अथ प्रथमनाकीन-वीर्यसारनृपोद्धारसम्बन्ध ॥

वंशे वृषभदेवस्य वीर्यसारोऽवनीपतिः । सप्त कोटिनृयुग् नन्तुं जिनान् शत्रुञ्जयेऽचलत् ॥
मार्गे बहून् गिरीन् शत्रु-ञ्जयतुल्यान् मनोहरान् । प्रासादप्रतिमाद्यैश्च ददर्श सङ्घनायकः ॥१॥
वीर्यसारो नृपो दध्या-वेकः शत्रुञ्जयो गिरिः । सुराष्ट्रासु श्रुतो मुक्ति-शर्म्मसन्ततिदायकः ॥२॥
अधुनैते कुतः शत्रु-ञ्जयाः स्फारा महीधराः । दृश्यन्तेऽतो मया कस्मिन् गम्यते धरणीधरे ॥३॥
विषमत्वान् महीध्रेषु तेष्वारोढुं महीपतिः । न शशाक यदा चक्रे-ऽभिग्रहं त्विति दुष्करम् ॥४॥
यावन्न ज्ञायते सम्यग् गिरिः शत्रुञ्जयाभिधः । न पूज्यते जिनस्ताव-न्न भोक्तव्यं मया क्वचित् ॥५॥
मासान्ते न यदा राजा वेद शत्रुञ्जयं गिरिम् । तदा सङ्घोऽभवद् बाढं व्याकुलो मानसे भृशम् ॥६॥
ततः शस्त्र्या नृपश्छेत्तुं शिरो लग्नोऽतिदुःखितः । तदा तत्रैत्य शक्रोऽवक् साहसं कुरु मा नृप ! ॥७॥
अहं प्रथमनाकेशः साहसं तव वीक्षितुम् । समागामिह भूमिध्रा मया विकुर्विता घनाः ॥८॥

त्वं तु धर्म्मान्मनाग् नैव चलितो मेदिनीपते ! । प्रादुःकरोम्यहं मुख्यं गिरिं वन्दस्व बोधिदम् ॥९॥
ततो शेषेषु शैलेषु संहृतेष्वसुरारिणा । शत्रुञ्जयं समारूढो वीर्यसारो महीपतिः ॥१०॥
स्नात्र-पूजा-ध्वजादानैर्मुख्यैः कृत्यैर्महीपतिः । स्वजन्म सफली कृत्वा ययौ राजादनीतले ॥११॥
तत्र राजादनीं लाजै-र्वर्द्धयित्वा प्रभुक्रमौ । पूजयामास भूपालो भूमिसङ्घजनान्वितः ॥१२॥
तदा सुधर्म्मदेवेशः पतितान् श्रीजिनालयान् । उद्दध्रे दिव्यशक्त्या च वीर्यसारो नृपोऽपि च ॥१३॥
एवं शत्रुञ्जये यात्रां कृत्वा विस्तरतो नृपः । समेत्य स्वपुरे धर्म्मं कुरुते स्म दिवानिशम् ॥१४॥
क्रमाद्वीर्यनृपो राज्ये न्यस्य पुत्रं निजं मुदा । लात्वा दीक्षां तपस्तीव्रं कुरुते स्म निरन्तरम् ॥१५॥
वीर्यसारो नृपः कोटि-मितैः साधुभिरन्वितः । शत्रुञ्जये ययौ कर्म्म-क्षयाय मासि फाल्गुने ॥१६॥
तत्र तीव्रं तपः कृत्वा क्षिप्त्वा शेषतमश्चयम् । सम्प्राप्य केवलज्ञानं साधुभिस्तैर्युतो नृपः ॥१७॥
प्रबोध्य भविनो भूरीन् वीर्यसारो मुनीश्वरः । कोटिसाधुयुतो मुक्तिं ययौ निजायुषः क्षये ॥१८॥

卐 इति प्रथमनाकीन-वीर्यसारनृपोद्धारसम्बन्ध 卐

एवं तृतीय-चतुर्थ-पंचमस्वर्गस्वामिनामुद्धारा अत्र शत्रुञ्जये ज्ञेयाः । एवं चमरेन्द्रादिभिरिन्द्रैः उद्धाराः कृता उक्तञ्च—

कोटिलक्षार्णवे जाते ब्रह्मेन्द्रोद्धारतो गते । भवनेन्द्रसमुद्धारो बभूव विमलाचले ॥
अन्तरा अन्तराप्येवं तीर्थे शत्रुञ्जयाभिधे । पुण्योद्धारा इवोद्धारा बभूवुर्नृसुरैः कृताः ॥१॥
भरतक्षोणिनाथस्यो-द्धाराल्लक्षमिताः क्रमात् । उद्धारा येऽभवंस्तेषां सङ्ख्यां कर्त्तुं क्षमोऽस्ति कः ? ॥२॥
भरतप्रमुखा भूपाः सङ्ख्यातीता सुभावतः । सङ्घेशीभूय सिद्धाद्रौ यात्रां विस्तरतो व्यधुः ॥३॥
यैरन्यैरपि भूदेव-महेभ्यादिभिरादरात् । यात्रां शत्रुञ्जये चक्रे सङ्ख्या तेषां न जायते ॥४॥

☆ इति कियता सङ्घेशानां सम्बन्ध उक्त ☆

॥ अथ सगरचक्रिसम्बन्ध उच्यते ॥

जम्बूद्वीपेऽस्ति भरते या चायोध्याऽरिभिः सदा । सा चायोध्येति विख्याता गतातङ्का रमाश्रिता ॥१॥
आगता रिपवो यत्र मणिशालिषु बिम्बितान् । स्वदेहानेव संवीक्ष्य नेशुर्वैरिभयाद् द्रुतम् ॥२॥
अर्हच्चैत्येषु घण्टानां यत्र नादैरहर्निशम् । धर्म्मभूपवपु(वदत्)तूर्यै-रिव पापनृपोऽनशत् ॥३॥
मुक्तिं शिवं च भूपाला असङ्ख्याता समागमन् । श्रीमया तेष्वसङ्ख्येषु चैकः सर्वार्थसिद्धिगः ॥४॥
.......................... । श्रीमदाद्यविभोर्वंशे द्वैतीयीयजिनावधि ॥५॥
तस्यां पुर्यां जिताऽराते-र्जितशत्रोर्महीपतेः । राज्यभृद्विजया नाम्नी शीलादिगुणशालिनी ॥६॥
जितशत्रोरभूद् भ्राताऽनुजः सुमित्रनामभृत् । युवराजपदं सोऽपि पपाल न्यायतत्परः ॥७॥

प्रिया यशोमती तस्य लसच्छीलगुणश्रिता । अभूच्छचीव शक्रस्य कमलेव पुरद्विषः ॥८॥
पक्षद्वयविशुद्धा या हंसीव सुविवेकिनी । निर्मलं मानसे पत्यु-र्वासस्थानमकल्पयत् ॥९॥
अन्यदा विजया राज्ञी सुखसुप्ता दिनात्यये । चतुर्दश महास्वप्नान् ददर्श कुञ्जरादिकान् ॥१०॥
यतः-"गजः सिंहो वृषोऽम्भोज-वासा दाम शशी रविः । ध्वजः कुम्भः सरो वार्धि-र्विमानमणिवह्नयः ॥११॥
राधशुक्लत्रयोदश्यां रोहिण्यां मृगलाञ्छने । विमानाद्विजया देवो-ऽनुत्तराद् भवसंक्षयात् ॥१२॥
च्युत्वा निशीथे तत्कुक्षा-ववतार समाधिना । उद्योतश्च महान् जज्ञे सुखं नारकिणामपि ॥१३॥युग्मम्॥
यतः-"नारका अपि मोदन्ते यस्य कल्याणपर्वसु । पवित्रं तस्य चारित्रं को वा वर्णयितुं क्षमः ?" ॥१४॥
इतो यशोमती रात्रौ महास्वप्नान् चतुर्दश । ददर्श च ततः पत्नी पत्युः पार्श्वे न्यवेदयत् ॥१५॥
पूर्णेषु मासेषु नवसु सार्द्धाष्टमदिनेष्वथ । माघशुक्लाष्टमीरात्रौ शशाङ्के रोहिणीस्थिते ॥१६॥
असूत विजया पुत्रं स्वर्णवर्णं गजध्वजम् । तदाऽजनि क्षणं सौख्यं नारकाणामपि ध्रुवम् ॥१७॥युग्मम्॥
षट्पञ्चाशद्दिक्कुमार्यादि-केन्द्रपितृभिः क्रमात् । जन्मोत्सवो मनोहारी विदधे सुखकृन्नृणाम् ॥१८॥
अत्र विस्तरः स्वयं वाच्यः । यशोमती वरे घस्रे प्रासूत तनयं वरम् । यदा तदा पिता चक्रे विस्तराज्जननोत्सवम् ॥
तयोः सून्वोरभून्नामा-ऽजितश्च सगरः क्रमात् । वर्धमानौ मुदं पित्रो-र्ददाते स्म निरन्तरम् ॥२०॥
केकीभूय हयीभूय गजीभूय च केचन । अजितं रमयामासुः सुराः शक्रनिदेशतः ॥२१॥
अर्द्धपञ्चमकोदण्ड-शतान्युत्तुङ्गविग्रहौ । अजितः सगरोऽभूतां रूपलावण्यशालिनौ ॥२२॥
पित्रोर्मोदकृते कन्यां रूपसेनाभिधां वराम् । मत्वा भोगफलं स्वामी परिणिन्ये सदुत्सवम् ॥२३॥
सगरो भूरिकन्यानां पितृमातृनिदेशतः । उद्वोढाऽजनि सत्कर्म्म-योगान् मञ्जुलवासरे ॥२४॥
गतेषु पूर्वलक्षेष्व-ष्टादशसु प्रभोः क्रमात् । जितशत्रुः पिता राज्य-मजिताय मुदा ददौ ॥२५॥
युवराजः सुमित्रोऽपि जितशत्रोर्निदेशतः । स्वपट्टे सगरं सूनुं न्यवेशयद्वरोत्सवम् ॥२६॥
यतः-"वीरं अरिट्ठ नेमिं पासं मल्लिं च वासुपुज्जं च । एए मोत्तूण जिणे अवसेसा आसि रायाणो ॥१॥"
जितशत्रुः सुमित्रश्च सोदरौ रुचिरोत्सवम् । धर्म्मघोषगुरोः पार्श्वे ललतुः संयमं सुखम् ॥२७॥
अजितः क्षोणिभुग् भ्रात्रा समं राज्यं नयाध्वना । जनताः पालयामास जीवरक्षापरः सदा ॥२८॥
जितशत्रुः सुमित्रश्च तीव्रं तपो निरन्तरम् । कुर्वाणौ कुरुतः स्मा-ऽलं विहारं पृथिवीतले ॥२९॥
जितशत्रुर्यतिः कुर्वं-स्तपस्तीव्रं निरन्तरम् । ईशाने ताविषे देवो बभूवाऽमलविग्रहः ॥३०॥
यतः—"उसभपिआ नागेसु सेसाणं सत्त हुंति ईसाणे । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोधव्वा ॥१॥
अट्ठण्हं जणणीओ तित्थयराणं हुंति सिद्धिओ । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोधव्वा ॥२॥"
अजितभ्रातुरादेशं प्राप्य सगरसोदरः । साधयामास भूयिष्ठदेशान् वैरिनिकृन्तनात् ॥३१॥
वसन्तेऽजितभूपालः सगरभ्रातृसंयुतः । पुष्पैः फलैश्चिरं क्रीडां चक्रतुः सरसीष्वपि ॥३२॥
तदैको हरिणोऽकस्मात् पीनदेहोऽद्रिश्रृङ्गवत् । पतितो मरणं प्राप्तस्तं-चाऽपश्यन्महीपतिः ॥३३॥
ततो दध्यौ नृपोऽसार-संसारो विद्यते खलु । यतो विनश्वरं विश्वं दृश्यते ससुरासुरम् ॥३४॥

यतः—"स्वैरिणो वैरिणो लोके विषया भवचत्वरे । छलाद् हरन्ति पुण्यैक-चैतन्यं हि जडात्मनाम् ॥३५॥
पुत्र-पितृ-कलत्रादि-पाशैर्बद्धो भवे भवे । पक्षिवत् स्वेच्छया धर्म्मे रन्तुं न लभते जनः ॥३६॥
यत्तुच्छसुखलोभेन पुण्यं स्वं द्रावयन्ति हि । तेषां पीयूषमंहीणां क्षालनाय भवत्यपि ॥३७॥
तदेवं ध्यायति स्वामि-न्याऽऽजग्मुस्त्रिदिवात् सुराः । लोकान्ता जयजयेत्यु-च्चरन्तश्च तदग्रतः ॥३८॥
अनेके प्रोच्यन्ते-'सारस्सयमाइच्चा वह्नी वरुणा य गद्दतोआ य । तुसिआ अव्वाबाहा अग्गिच्चा चेव रिट्ठा य ॥१॥'
तीर्थं प्रवर्त्तय स्वामिन् ! भवकूपे महत्यपि । पततो भविनो वाणी-चेडयोद्धर साम्प्रतम् ॥३९॥
स्वयंबुद्धोऽपि सर्वज्ञः श्रुत्वा देवगिर तदा । आरेभे वार्षिकं दानं दातुं द्वितीयवासरे ॥४०॥
वर्षं यावत् प्रभुर्दायं दाय दानमनर्गलम् । दीक्षां लातुमना राज्यं सगराय वितीर्णवान् ॥४१॥
वर्षेण यद्ददौ दान-मर्थिभ्यः प्रभुरादरात् । तस्य किञ्चिन्निगद्येत सङ्ख्यामिति जिनागमे ॥४२॥
"एगा हिरण्णकोडी अट्ठेव य अणूणगा सयसहस्सा । सूरोदयमाईयं दिज्जइ जा पायरासाओ ॥१॥
तिन्नेव य कोडि सया अट्ठासीयं च हुंति कोडीओ । असिअं च सयसहस्सा एअं संवच्छरे दिन्नं ॥२॥"
गज-वाजि-द्वयोर्वीणां रत्न-माणिक्य-वाससाम् । दाने संवत्सरे सङ्ख्यां वेत्ति नो ज्ञानिनं विना ॥४३॥
ततः सगरभूपालः सौधर्मेशानवासवैः । क्रियमाणोत्सवे स्वामी शिबिकायां स्थितः प्रभुः ॥४४॥
सहस्रपर्वतेऽभ्येत्यावतीर्य किल यानतः । पञ्च मुष्ट्या व्यधाल्लोचं नृपालसुरसाक्षिकम् ॥४५॥
विधायाथ नमस्कारं सिद्धानामजितस्तदा । दीक्षां स्वयं ललौ शक्र-भूपयोः कुर्वतोर्महम् ॥४६॥
माघशुक्लनवम्यां तु शशाङ्के रोहिणी-स्थिते । उत्तराह्णे प्रभोर्ज्ञानं चतुर्थं समजायत ॥४७॥
यतः-तिहिं नाणेहिं समग्गा तित्थयरा जाव हुंति गिहिवासे । पडिवन्नम्मि चरित्ते चउनाणी जाव छउमत्था ॥
तदा च संयमं भूपाः सहस्रं प्रभुणा समम् । अङ्गीचक्रुर्गृहवास-श्रियं प्रोज्झ्य सुभावतः ॥४८॥
यतः-"एगो भयवं वीरो पासो मल्ली अ तिहितिहि सएहिं । भयवंपि वासुपुज्जो छहिं पुरिससएहिं निक्खंतो ॥१॥
उग्गाणं भोगाणं रायन्नाणं च खत्तियाणं च । सहस्सेहुसभो सेसा य सहस्सपरिवारा ॥२॥"
द्वितीयेऽह्नि त्वयोध्यायां ब्रह्मदत्ताऽऽलयं प्रभोः । पारणं परमान्नेन बभूव भवतारणम् ॥४९॥
निष्काणां कोटयः सार्द्धा द्वादश ब्रह्मसद्मनि । निपेतुः सुरनिर्मुक्ता-श्चञ्जयजयारवम् ॥५०॥
यतः-"सव्वेहिं जिणिंदेहिं जहि अ लद्धाओ पढमभिक्खाओ । तहिअं वसुहाराओ वुट्ठाओ पुप्फवुट्ठीओ ॥१॥
अद्ध य तेरस कोडी उक्कोसा होइ तत्थ वसुहारा । अद्धतेरस लक्खा जहन्निया होइ वसुहारा ॥२॥
सव्वेसिंपि जिणाणं जेहिं दिन्नाउ पढमभिक्खाउ । ते पयणुपिज्जदोसा दिव्ववरपरक्कमा जाया ॥३॥"
प्रभोः पारणकस्थाने ब्रह्मदत्तः प्रमोदतः । धर्म्मचक्रं व्यधाद् विश्व विश्ववन्द्यं सुशर्मणे ॥५१॥
आर्यानार्येषु देशेषु विहरन्निर्ममः प्रभुः । घात्यानि सर्वकर्म्माणि ध्यानाग्निनाऽदहत् क्षणात् ॥५२॥
अहौ हारे मणौ लोष्टे तृणे स्त्रैणेऽरिपौ रिपौ । काञ्चने काचसङ्घाते समदृक् समभूत्प्रभुः ॥५३॥
सुखे दुःखे भवे मोक्षे निर्जने जनसङ्कुले । दिवा रात्रौ च सन्ध्यायां समभावोऽभवज्जिनः ॥५४॥
शीते स्फीते तथा तापे समेऽपि विषमे पुनः । मानापमानयोस्तुल्य-स्वान्तोऽजनि जिनस्तदा ॥५५॥

वायुवद् विहरन् स्वामी नानादेशेषु सन्ततम् ।अयोध्यामीयिवान् प्रान्ते छद्मस्थस्य शुभाशयः ॥५६॥
रोहिणीस्थे विधौ पौष-शुक्लद्वादशमीदिने । पश्चिमाह्नि प्रभोर्ज्ञान-मुत्पन्नं पञ्चमं क्षणात् ॥५७॥
वप्रत्रये कृते तत्र देवैः श्रीअजितः प्रभुः । तीर्थायाऽस्तु नमश्चादौ जगादाचारहेतुतः ॥५८॥
मरुत्कृतवृहद्धेम-विष्टरे अजितः प्रभुः । उपविष्टः प्रबोधाय भव्यानां प्राणिनां तदा ॥५९॥
इतः सगरभूपस्या-ऽऽयुधसद्मनि सुन्दरे । चक्ररत्नं समुत्पन्नं स्फुरद्भाभासिताम्बरम् ॥६०॥
··············ज्ञानोत्पत्तिं महीपतेः । उद्यानपो जगौ यात्र-त्तावदध्यौ क्षमापतिः ॥६१॥
चक्रं प्रपूजयित्वाऽऽदा-वर्चयिष्ये ततो जिनम् । क्षणादध्यौ नृपो धिग् मां निर्विवेकजनाग्रणीम् ॥६२॥
प्रभौः प्रपूजिते चक्रं पूजितं सुलभं भवेत् । यतः प्रभुः शिवस्वर्ग-चक्र्यादिकमलाप्रदः ॥६३॥
मिथ्यादुःकृतमादाय सगरस्तत्क्षणात्तदा । लात्वा बलिं प्रभुं नन्तुं स्वामिनः सन्निधौ ययौ ॥६४॥
बलिमुच्छालयन् कुर्वन् सगरस्त्रिःप्रदक्षिणाम् । बलिमादात्तदा स्वीयो-चितां रोगाद्यहन्तृकां ॥६५॥

उक्तं च-'राया व रायमच्चो तस्सासई पउरजणवओ वावि । दुब्बलिखंडिअबलि-छडिअ तंदुलाणाढयं कलमा ॥
भाइअ पुणाणिआणं अखंडफुडीआण फलगसरियाणं । कीरइ बली सुरावि अ तत्थेव छुहंति गंधाइं ॥२॥
बलिपविसण समकालं पुव्वद्दारेण ठाइ परिकहणा । तिगुणं पुरओ पाडण तस्सद्धं अवडियं देवा ॥३॥
अद्धद्धं अहिवइणो अवसेसं होइ पगयजणस्स । सव्वामयप्पसमणी कुप्पइ नन्नो अ छम्मासे' ॥४॥
वन्दित्वाऽथ प्रभुं पृथ्वी-प्रभुः स्वस्योचिते पदे । धर्म्मं श्रोतुमुपाविष्टः प्रमोदभरभासुरः ॥६६॥

अत्र धर्मोपदेशो वाच्यः ।

देशनान्ते प्रभुर्गच्छ-नायकान् निजपाणिना । स्थापयामास ते सर्वेऽभूवन् विद्याब्धिपारगाः ॥६७॥
सङ्घं चतुर्विधं तत्र श्रीमानजितबोधितः । स्थापयामास नाकीन-महीनायकसाक्षिकम् ॥६८॥
श्राद्धधर्म्मं समादाय चक्री स्वगृहमीयिवान् । विजहाराऽजितस्वाम्य-न्यत्र बोद्धुं जनान् बहून् ॥६९॥
अन्येद्यु रजितस्वामी विहरन् वसुधातले । आदिनाथाश्रितं शत्रु-ञ्जयं प्रत्यचलत् स्वयम् ॥७०॥
यावच्छत्रुञ्जयोपान्ते गत्वा स्वाम्यजितः क्रमात् । कायोत्सर्गे स्थितस्तावत् केकिवृन्दं समागमत् ॥७१॥
एकेन केकिना स्वामि-शीर्षस्योपरि भक्तितः । स्वकलापः कृतश्छत्रा-कारेण तमसः छिदे ॥७२॥
ध्यानान्ते केकिनो धर्म्मे बोधिताः प्रभुणा गिरा । पशवोऽपि तदा भद्र-स्वभावा अभवन् किल ॥७३॥
यतः-देवा दैवीं नरा नारीं शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं मेनिरे भगवद्गिरम् ॥७४॥
तैः केकिभिः समं स्वामी शैलमारुह्य यत्नतः । मुख्यशृङ्गे स्थितो राजा-दन्या अधो दिनत्रयम् ॥७५॥
तदा ते केकिनः स्वामि-मुखालोकनतत्पराः । आलेख्यलिखिता आस-न्निव स्वीयतमश्छिदे ॥७६॥
तदैकं केकिनां वृद्ध-मासन्नमरणं ध्रुवम् । ज्ञात्वा संलेखनां स्वामी कारयामास सद्गिरा ॥७७॥
मृत्वा केकी गतस्तुर्य-स्वर्गे भासुरभूतिमान् । ज्ञात्वोपकारिणं स्वस्य प्रभूपान्ते समागमत् ॥७८॥
वर्यं समवसरणं कृत्वा नृत्यन् प्रभोः पुरः । सौधर्म्मस्वामिना पृष्टः स्वामीत्येष सुरोऽस्ति कः ? ॥७९॥
स्वाम्यवक् तस्य देवस्य यथाऽभूत् स्वर्गतिस्तथा । इदं च विद्यते देहं केकिनोऽस्य सुरस्य हि ॥८०॥

ततः केकिसुरो हृष्टः स्वमृत्युस्थानके तदा । स्वरूपं व्यलिखत् स्वामि-पादुकान्तेऽन्यबोधकृत् ॥८१॥
स केकीनिर्जरः प्राप्य मानुषं भवमद्भुतम् । मुक्तिं गमिष्यति क्षिप्रं शैले, सिद्धाभिधे क्रमात् ॥८२॥
तदाऽनेके मयूराद्या जीवा जैनं वृषं वरम् । प्रपद्य त्रिदिवं जग्मु-स्ततो यास्यन्ति निर्वृतिम् ॥८३॥
यतः-नगः शत्रुञ्जयाख्योऽयं शास्वतः सर्वदा स्थिरः । भवाब्धौ मज्जतां पुंसां तारणाय तरीनिभः ॥८४॥
तीर्थेऽस्मिन् यानि कर्म्माणि विधीयन्ते सुमेधसा । तानि कर्मक्षयाय स्यु-र्भवेऽत्र च परत्र च ॥८५॥
शत्रुञ्जयेऽत्र ये सिद्धाः सेत्स्यन्त्यपि च सर्वदा । तांश्च केवलिनं मुक्त्वा न वेत्त्यऽन्यो जनो मनाग् ॥८६॥
इतश्चक्री विधायाऽर्चां चक्रस्य पृष्टितस्तदा । चचाल साधितुं पृथ्वीं षट्खण्डां भूरिसैनिकः ॥८७॥
दण्डपाणि-गज-छत्र-मणि-काकिणि-वर्द्धकान् । पुरोधा गृहचक्राणि चर्मरत्नमुखान्यपि ॥८८॥
रत्नान्यादाय भूमीशो यक्षलक्षैरधिष्ठितः । ससैन्यैश्चालयन् विश्वं चचालाऽचलविक्रमः ॥८९॥युग्मम्॥
पूर्वाब्धौ मागधाधीशं वायव्यां वरदामकम् । प्रतीच्यब्धौ प्रभासेशं बलेन बलिनं भृशम् ॥९०॥
कृत्वाऽष्टमं तपः साध-यित्वा सगरभूपतिः । ययौ सिन्धुमहासिन्धो रोधसि क्रमतस्तदा ॥९१॥
जित्वा सिन्धुपतिं भूपः वैताढ्यव्योमगानपि । स्ववशान् विदधे भूमी-पतिनन्यानपि क्रमात् ॥९२॥
एवं चक्रानुगो भूपं षट्खडां वसुधां समाम् । साधयामास निःशेष-प्रत्यर्थिभूमिभुग्जयात् ॥९३॥
स लक्षैश्चतुरशीत्या कुम्भि-स्यन्दन-वाजिनाम् । सपादकोटिभिः खड्गैः सगरोऽलङ्कृतः क्रमात् ॥९४॥
षट्खण्डां मेदिनीं भूपः साधयित्वा निजौजसा । स्वाह्वां लिलेख ऋषभ-कूटे कुर्वन् महोत्सवम् ॥९५॥
विस्तराद्देशसाधन-वैताढ्यपर्वतगुहागमन-गंगानदीतटनवनिध नघटनादिसम्बन्धश्चरित्रात् ज्ञेयः ।
सगरश्चक्रिराट् स्वीयपुरेऽभ्येत्य चमूयुतः । राज्याभिषिश्चनविधिं व्यधाद् द्वादशवत्सरीम् ॥९६॥
विहरन्नन्यदा स्वामी शृङ्गे सुभद्रसंज्ञिके । चतुर्मासीं स्थितो वर्ष-त्यब्दे सिद्धमहीभृतः ॥९७॥
अन्येऽपि यतयः शृङ्गे पृथक् पृथग् गुहासु च । तस्थुः कर्तुं तपस्तीव्रं संसारोच्छेदहेतवे ॥९८॥
तत्रस्थे स्वामिनि व्याघ्रा-दयोऽपि श्वापदास्तदा । प्रभोर्वाणीं निशम्याशु वैरं तत्यजुरात्मना ॥९९॥
व्याघ्रादयोऽपि जीवास्तु लात्वाऽनशनमादरात् । शृण्वन्तः स्वामिनो वाणीं ययुः स्वर्गं शुभाशयाः ॥१००॥
ततश्च्युत्वा भवैरेक-द्वित्र्यादिभिर्मनोहरैः । सम्प्राप्य मानुषं जन्म ते प्रयास्यन्ति निर्वृतिम् ॥१०१॥
इतः श्री सुव्रताचार्य-स्तन्दुलोदकभाजनः । ग्लानत्वात् प्रथमे शृङ्गे समागान्मुनिसेवितः ॥१०२॥
कस्यचित् पादपस्याधो विमुच्य जलभाजनम् । यावत् सूरिः स्थितस्तावत् काको व्यलुठयच्च तत् ॥१०३॥
काकेन गमितं नीरं दृष्ट्वा शुष्यन्मुखाम्बुजः । चुकोप मुनिपः काकं प्रतीदं प्रोक्तवान् पुनः ॥१०४॥
यतः-यत् काण ! भवता प्राण-रक्षणं चणतः पयः । अलोठि तदकृत्येन नात्र त्वत्सन्ततेर्गतिः ॥१०५॥
अशेषमुनितोषाय निर्जन्तु-प्रासुकं पयः । अत्रैव सततं भावि प्रभावात्तपसो मम ॥१०६॥
यत्तदैव ययुः काकाः काककोलाहलाऽऽकुलाः । तत्तदादि सिद्धशैले काकानामाऽऽगतिर्नहि ॥१०७॥
दुर्भिक्षं विड्वरानर्थ-समर्थनपरोऽत्र चेत् । अत्रैति काकस्तत्कार्यं शान्तिकं विघ्ननाशनम् ॥१०८॥
उक्तं च-"श्रीयुगादिजिनस्याग्रे राजादन्याश्च शान्तिकम् । पुरतो जैनमुनिभिः क्रियतेऽरिष्टनाशकृत् ॥१॥"

यच्छैलसन्धौ तत्तोयं प्रवृत्तं तपसो बलात् । नैरुत्यां दिशि विद्येत विघ्नोपशमकारकम् ॥१०९॥
रोगशोकार्त्तवैताल-ग्रहदुःखानि कोटिशः । तस्यैव वारिणःस्पर्शाद्-गच्छन्त्येव न संशयः ॥११०॥
पुनः क्षणाद् गणाधीशो दध्यावेवं स्वचेतसि । मयैव चिन्तितं ध्यानं पापात्मकं दुःखहेतवे ॥१११॥
एवं तस्य गणेशस्य ध्यायतः परमं महः । प्राप्य ज्ञानं ययौ मुक्तिं सर्वपापक्षयात्तदा ॥११२॥
तत्र चक्री समेत्यैत्र सुव्रताचार्यनामकम् । प्रासादं कारयामास नाभेयप्रतिमान्वितम् ॥११३॥
इतस्तत्राजितस्वामि-वचः श्रुत्वा मनोहरम् । बहवो यतयः सिद्धिं जग्मुः सर्वतमःक्षयात् ॥११४॥
ततः श्री अजितस्वामी प्रबोध्य भूरिशो जनान् । विजहार महीपीठं बोधितुं भविकाङ्गिनः ॥११५॥
एकदा सगरक्ष्मापा-देशं लब्ध्वा तनूभवाः। यात्रां कर्तुं मणीन् लात्वा भगीरथ्यादयो (नारीरत्नसूते)ऽचलन् ॥
वन्दमानो जिनान् ग्रामे ग्रामे ग्रामे पुरे नगे । ययौ भागीरथो भ्रातृ-युतोऽष्टापदपर्वते ॥११७॥
आरुह्याऽष्टापदं शैलं भरतक्ष्मापकारिते । जिनागारे जिनानादि-नाथादीन् सोऽनमन्मुदा ॥११८॥
"चत्तारि अट्ठ दस दो य वंदिया जिणवरा चउवीसं । परमट्ठ निट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥१॥"
स्नात्रपूजा-ध्वजादान-कृत्यानि रुचिरोत्सवम् । कृत्वा भगीरथश्चक्रे गीतनृत्यादि भावतः ॥११६॥
भरतेनात्मनः पूर्व-जातेनादिजिनालयम् । रैमयं कारितं ज्ञात्वा भ्रातॄन् भगीरथो जगौ ॥१२०॥
लोभिनो भाविनो लोकाः प्रासादं रैमयं किल । पातयित्वा गृहीष्यन्ति हेम सर्वं न संशयः ॥१२१॥
तेनाऽस्य तीर्थराजस्य रक्षा धुरि विधीयते । परिखाया विधानेन परितोऽत्रानुजाः खलु ॥१२२॥
तदा सर्वेऽनुजाः प्रोचु-र्नयं भ्रातस्त्वयोदितम् । क्रियतां परिखाऽस्यैव तीर्थस्य परितो लघु ॥१२३॥
ततो दण्डेन रत्नेन ते सर्वे सगराङ्गजाः । अष्टापदस्य परितः खातिकां कर्तुमुद्यताः ॥१२४॥
खनतां खातिकां तेषां परितोऽष्टापदेऽचले । अणपन्नि-प्रमुखाणां व्यन्तराणां गृहेषु तु ॥१२५॥
बह्वीं धूलीं पतन्तीं तु दृष्ट्वा ते व्यन्तरा जगुः । कोऽयं दुराशयो धूलीं क्षिपत्यत्रात्मनो गृहे॥१२६॥युग्मम्॥
अवधिज्ञानतो ज्ञात्वा सगरस्याङ्गजा जगुः । सगरक्षोणिभुक्पुत्रा यूयं स्थ करुणापराः ॥१२७॥
किं यूयं क्षिपथास्माकं शीर्षेषु धूलिपद्धतिम् । कृपापि विद्यते नैव जीवेष्वस्मादृशेष्वहो ? ॥१२८॥
यतः—अहिंसासम्भवो धर्म्मः स हिंसातः कथं भवेत् । न तोयजानि पद्मानि जायन्ते जातवेदसः ॥१२९॥
कृपानदी-महातीरे सर्वधर्म्मास्तृणाङ्कुराः । तस्यां शोषमुपेतायां कियन्नन्दन्ति ते पुनः ॥१३०॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः । न हि संहरति ज्योत्स्नां चन्द्रश्चाण्डालवेश्मसु ॥१३१॥
'इक्कह जीवह कारणेहिं मारि म जीवसयाइं । अज्ज वि कल्ल वि मरणं पामिसि दुक्खसयाइं'' ॥१३२॥
तैरेवं व्यन्तरैः प्रोक्ते भ्रातृयुक्तो भगीरथः । खातिकां स्वर्नदीनीरै-र्भर्तुं यत्नं व्यधात्तदा ॥१३३॥
दण्डरत्नेन गंगायाः प्रवाहेन च खातिकाम् । यावद् बिभर्त्ति सगर-पुत्रः सोदरसंयुतः ॥१३४॥
तावत् कर्दमपातेन ज्वलनो व्यन्तरो जगौ । पङ्कस्य पाततो नाग-लोकोऽद्य पूर्यतेतराम् ॥१३५॥
गङ्गाप्रवाहनयनं तदा भगीरथादिभिः । विज्ञाय ज्वलनो नाग-नाथः प्रोवाच तान् प्रति ॥१३६॥
यूयं पश्चात् कुरुध्वं स्व-नद्याः प्रवाहमञ्जसा । नो चेच्छिक्षां द्रुतं दास्ये युष्माकं पापकारिणाम् ॥१३७॥

यतः–"अत्युग्रपुण्यपापाना-मिहैव फलमाप्यते । त्रिभिर्मासैस्त्रिभिः पक्षै-स्त्रिभिर्वर्षैस्त्रिभिर्दिनैः ॥१॥"
तेष्वतिष्ठत्सु चक्रीश-पुत्रेषु ज्वलनोरगः । जह्नु-भीमौ विना षष्टिं सहस्राण्यदहत् सुतान् ॥१३८॥
दग्धान् (ग्ध्वा) चक्रिसुतान् सद्यो ज्वलनो रुष्टमानसः । स्वं स्थानमगमत् कोपो भवेद्रिपुवधावधि ॥१३९॥
दग्धान् चक्रिसुतान् दृष्ट्वा भृत्या रोदनतत्पराः । जह्नुभीमयुता वृक्षा-नपि चारोदयन् भृशम् ॥१४०॥
वियोगाच्चक्रिपुत्राणां कुर्वे भृत्याश्रितां पृथुम् । काष्ठैर्व्यरचयन् प्राणां-स्त्यक्तुकामास्तदा द्रुतम् ॥१४१॥
यावत्ते वह्निना भृत्या ज्वालयन्ति चितां स्वयम् । ज्ञात्वा चाऽवधिना तावद् विप्ररूपधरो हरिः ॥१४२॥
समेत्य प्रोक्तवान् भृत्याः ! मा म्रियध्वं मुधाऽधुना । जीवद्भिर्लभ्यते सर्वं राज्यादि न मृतैः पुनः ॥युग्मम्॥
भृत्या प्रोचुर्द्विजाऽस्माकं पश्यतां चक्रिसूनवः । स्वस्वामिनो हृता वह्नि-दानेन ज्वलनाहिना ॥१४४॥
तेन किं जीव्यतेऽस्माभि-र्विना स्वेशान् द्विजाऽधुना । विधीयन्तेऽनुगा भूपैः स्वरक्षायै यतोऽनघाः ॥१४५॥
तैरेव स्वामिनः पृष्ठौ म्रियते न हि चेद्यदि । तदा स्वस्वामिभावो हि निरर्थोऽजनि सर्वतः ॥१४६॥
विप्रोऽवग् वचनं ह्येतत् भवतां न वरं पुनः । एवं चेन्म्रियते भृत्यै-स्तदा विश्वं प्रलीयते ॥१४७॥
स्वामिपृष्ठौ म्रियन्ते यद् भृत्याः पत्यौ मृते सति । म्रियन्ति योषितस्तच्च मोहस्यैव विजृम्भितम् ॥१४८॥
मोह एव बली विश्वे सर्वेषां दृश्यतेऽङ्गिनाम् । यतो मोहो नयत्येव श्वभ्रे जीवान् बहून् हठात् ॥१४९॥
'यतः-पुत्रो मे भ्राता मे स्वजनो मे गृहकलत्रवर्गो मे । इति कृतमे मे शब्दं पशुमिव मृत्युर्जनं हरति ॥१॥
दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा' ॥२॥
आकर्ण्यैतत्तदा सर्वे चक्रिपुत्रानुगाः समे । निवृत्ता मरणात् शोकं दधुरात्यन्तिकं हृदि ॥१५०॥
ततो विप्रो जगौ शोकः क्रियते नोत्तमैर्जनैः । शोकेन जायतेऽमुत्र परत्राऽसुखसन्ततिः ॥१५१॥
यतः–"धर्म्म-शोक-भया-हारा-निद्रा-काम-कलि-क्रुधः । यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी ॥१॥"
इत्यादि जल्पिताश्चक्रि-भृत्या जहुः शुच तदा । ततो विप्रो गतोऽन्यत्र विद्युद्पुञ्ज इवाचिरात् ॥१५२॥
विप्रवेषधरः शक्रो वृद्धीभूय सुतं मृतम् । उत्पाट्य सगरस्याग्रे विमुच्य च रुदन् जगौ ॥१५३॥
सर्वंसहाऽसि भूमे ! त्वं कठिनाऽसि दृढं पुनः । भरतं भरताधीशं नानुयाताऽसि रे जडे ! ॥१५४॥
दिग्पाला निखिला यूयं कथं स्थ मेऽवनीतले । यतो न रक्ष्यते दीनो निर्नाथो मरणात्त्वया ॥१५५॥
प्रजापालो निगद्येत जनैस्त्वं सर्वतः सदा । मृतं मम सुतं तेन किं नात्र जीवयिष्यसि ? ॥१५६॥
वार्द्धक्ये मे सुतो नीतो यमेनाऽयं निजालयम् । तेनाऽहं दुःखितोऽत्यन्तं जातोऽस्मि भूप ! सम्प्रति ॥१५७॥
यतः-वृद्धस्य मृतभार्यस्य मृतपुत्रस्य निश्रियः । जीवितान्मरणं श्रेयो न स्यातु युक्तमत्र हि ॥१५८॥
विप्रवाणीं समाकर्ण्य चक्रयाकार्य भिषग् वरान् । औषधं दापयामास तस्य जीवितहेतवे ॥१५९॥
औषधैर्भूरिभिर्दत्तैर्न जिजीव यदा स च । तदा शक्रो भिषग् रूप-धरोऽभ्येत्य जगावदः ॥१६०॥
यस्यालये न कः पूर्वं मृतोऽस्ति मानवः खलु । भूतिर्महानसात् तस्या-नीयतां भृत्यपार्श्वतः ॥१६१॥
तेनैव भस्मना विप्र-पुत्रोऽवगुण्ड्यते यदि । तदा जीवति चक्रीश ! नान्यथा कर्हिचित्तदा ॥१६२॥
ततो यस्य गृहे यान्ति भस्म लातुं नृपानुगाः । तदा तद्गेहनेतारः प्रोचुरेवं जनान् प्रति ॥१६३॥
अस्माकं सदने पित्रा-दयः पूर्वं मृताः किल । ततो भूपानुगा लोक-प्रोक्तं प्रोचुर्नृपाग्रतः ॥१६४॥

ततो जगाद चक्रीशो मारिहीनाद् गृहान्मम । महानसोद्भवं भस्म भृत्या आनय तं द्रुतम् ॥१६५॥
चक्रिभृत्येषु गृह्णत्सु भस्म चक्रिनिकेतने । चक्रिपत्न्यो जगुर्मृत्युं प्रययुः पूर्वजा घनाः ॥१६६॥
ज्ञात्वैतच्चक्रिराट् प्राह समस्तलोकसद्मसु । पश्चत्वं पूर्वजा जग्मुः क्रियतेऽत्र किमौषधम् ? । १६७॥
ततो रुदति भूदेवे-ऽत्यन्तं चक्रिसुतानुगाः । तत्रैत्योचुर्मृतिं स्वीय-स्वामिनां ज्वलनाहितः ॥१६८॥
श्रुत्वैतत् सगरोऽत्यन्तं रुदन् दीनस्वरं भृशम् । रोदयामास पार्श्वस्थान् मानवान् पक्षिणोऽपि च ॥१६९॥
रुदन् गाढं न चक्रेशो यदा तस्थौ मनागपि । तदा स वाडवः प्राह रुद्यते किं त्वया नृप ! ॥१७०॥
ममैको नन्दनो मृत्युं-गतोऽभूवमहं हतः । निराधारस्य मे सारं कः करिष्यति सम्प्रति ? ॥१७१॥
यदा जीविष्यति मे पुत्रस्तदा जीवाम्यहं ननु । मृते पुत्रे मयाऽवश्यं हत्या देया तवाधुना ॥१७२॥
तदा चक्री जगौ विप्र ! जीवो मृत्युं व्रजन् क्वचित् । न रक्ष्यते सुरैर्भूपै र्मातृ-पितृ-सहोदरैः ॥१७३॥
ततो विप्रोऽगदद् राजन्नहं निर्नन्दनोऽभवम् । द्वौ पुत्रौ तिष्ठतां तेन किं रुद्यते त्वयाऽधुना ? ॥१७४॥
ततश्चक्री जगौ विप्र ! मृता मे निखिलाः सुताः । तेनाहं त्वरितं प्राणां-स्त्यक्ष्यामि वह्नियोगतः ॥१७५॥
ततश्चक्री चितां स्फारां निष्पाद्य नगराद्बहिः । प्रविश्याग्निं ददौ यावद्बलात् सज्जनसाक्षिकम् ॥१७६॥
तदा द्विजन्मनो रूपं त्यक्त्वा शक्रो जगौ नृपम् । मया ते नन्दनौ द्वौ तु रक्षितावनुगाः पुनः ॥१७७॥
विप्ररूपं मया कृत्वा शक्रेण रक्षिता मृतेः । एतौ तौ नन्दनावत्राऽऽनीतौ सम्प्रति वीक्ष्यताम् ॥१७८॥
संसारो विद्यतेऽनित्यः पुत्रपौत्रादयः पुनः । सर्वं विनश्वरं वस्तु तेन शुच् क्रियते न हि ॥१७९॥
इतोऽभ्येत्य नरः कश्चिन् नृपोपान्ते जगाविदः । त्वत्सुतैः स्वर्नदी नीता क्षमां प्लावयति स्फुटम् ॥१८०॥
तां पश्चान्नय मार्गे त्वं नो चेद्भावी प्रजाक्षयः । ततः सगरचक्रेश-श्चिन्तातो निरगात् क्षणात् ॥१८१॥
दण्डरत्नेन गङ्गायाः प्रवाहं तं च दुःशकम् । निन्ये चक्री मरुन्नद्या मध्ये वैताढ्यशैलतः ॥१८२॥
अत्रान्तरे मुकुन्दाह्वाः सूरयो ज्ञानशालिनः । अजितस्वामिनः शिष्या स्तत्राजग्मुः पुरान्तिके ॥१८३॥
तत्र द्वितीयचक्रेशो गत्वा नत्वा गुरूत्तमान् । धर्म्मं श्रोतुमुपाविष्टः स्वकुटुम्बसमन्वितः ॥१८४॥

अत्र धर्मोपदेशो वाच्यः ।

देशनान्ते जगौ चक्री पुत्रा मम कथं समम् । मृतिं प्रापुस्ततः पापं विहितं किं निगद्यताम् ? ॥१८५॥
ज्ञानी प्राह धरापल्ल्यां ग्रामे श्रीपुरसञ्ज्ञके । वसन्तो बहवो भिल्लाः स्तैन्यं चक्रुर्निरन्तरम् ॥१८६॥
श्रीमद्दिलपुरात् सङ्घो-ऽगाच्छच्छत्रुञ्जयं प्रति । यदाऽगाच्छ्रीपुरे भिल्लाः प्रोचुरेवं मिथस्तदा ॥१८७॥
अस्मिन् सङ्घे धनं भूरि विद्यते कनकादिकम् । लुण्टयित्वा ततोऽस्माभिः सुखेन भुज्यते सदा ॥१८८॥
भिल्लैः षष्ट्या सहस्रैस्तु द्वाभ्यामूनैः प्रजल्पितम् । गृह्यते धनमेतेषां निर्वाहोऽस्ति सुखेन च ॥१८९॥
तदोचतुः कुलालौ द्वौ तेषामग्रे शुभाशयौ । परस्वं नैव गृह्णीत यात्रिकाणां विशेषतः ॥१९०॥
एते श्राद्धा वपन्ति स्वं क्षेत्रेषु सप्तसु ध्रुवम् । यात्रां कुर्वन्ति तीर्थेषु व्ययन्तो विभवं निजम् ॥१९१॥
पाप्मभिः प्राक्कृतैरेवा-धुनाऽस्माकं कुजन्मना । दुर्भरं विद्यते वक्षः-दुःस्थत्वात् सन्ततं पुनः ॥१९२॥
पुण्यानुबन्धिभिः पुण्यैः श्रावका दानिनोऽप्यमी । कुर्वाणाः सन्ततं पुण्य-मर्जयन्ति वृषं बहु ॥१९३॥
आत्मभि क्रियते पापं जनानां धनलुण्टनैः । भविष्यति ततः पातो दुर्गतावात्मनः खलु ॥१९४॥

जल्पन्ताविति तौ कुम्भ-कारौ भद्रकभावकौ । निराकृत्य च तं सङ्घ-मलुण्टयन्मलिम्लुचाः ॥१९५॥
षष्टिरेव सहस्राणि द्वाभ्या-मूनानि भिल्लकाः । लुण्टयित्वा च तं सङ्घं निर्वाहं स्वं व्यधुस्तदा ॥१९६॥
इतश्च श्रीपुराधीशो-ऽभ्येत्य तत्र नृपो धनः । अवेष्टयत् पुरं तच्च भिल्लैः पूर्णं समन्ततः ॥१९७॥
तदा तौ निर्गतौ कुम्भ-कारौ ग्रामात्ततो बहिः । भिल्लास्ते कुर्वते युद्धं धनेन भूभुजा समम् ॥१९८॥
ग्रामे ज्वालिते तस्मिन् तेन भिल्लास्तके तदा । अस्माभिर्यत् कृतं पापं तत्प्रादुरभवच्च नः ॥१९९॥
ततः कुध्यानयोगात्ते दग्धाः कृपीटयोनिना । मृत्वा श्वभ्रे ययुः सर्वे पापिनां गतिरीदृशी ॥२००॥
यतः-"अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैः सह । अप्रियैः संप्रयोगश्च सर्वं पापविजृम्भितम् ॥१॥
मांचइ मांकुण घरु चूअइ चिल्लकडां बहू आइं । अक्कुवालणि जव तउणि नरगह एह फलाइं ॥२॥"
यः सङ्घोऽप्यर्हतां पूज्य-स्तीर्थङ्करैर्निवेदितः । तस्यापि प्रत्यनीकं ये कुर्वते नारका हि ते ॥२०१॥
आराध्यः सर्वथा सङ्घो न विराध्यः कदापि सः । सङ्घाराधनतो मुक्ति-र्नरकस्तद्विराधनात् ॥२०२॥
वर्त्तमानांस्तीर्थमार्गे यात्रिकान् पीडयन्ति ये । सगोत्रास्ते विनश्यन्ति कुगतिं यान्ति च ध्रुवम् ॥२०३॥
ते निर्गत्य ततः श्वभ्रान् मत्स्या जाता महाम्बुधौ । क्रमाच्च धीवरैर्बद्धाः प्रययुर्मरणं ध्रुवम् ॥२०४॥
कर्णशृगाल्य आसंस्ते ततः केसरिणोऽभवन् । ततो मत्स्या महाम्भोधौ बभूवुः पातकोदयात् ॥२०५॥
ततो मृत्वाऽभवन् भिल्ला वने क्वापि दुराशयाः । पापर्द्धितत्पराः साधु-मपश्यन् शान्तचेतसा ॥२०६॥
धर्म्मोपदेशमाकर्ण्य ते भिल्लाः साधुसन्निधौ । लेभिरे भद्रकं भावं सदयत्वं च तत्क्षणात् ॥२०७॥
चतुर्मासीं च भिल्लानां तेषां बोधकृते स्थितः । तत्र साधुस्ततस्ते त्व-त्यजन् व्यसनसप्तकम् ॥२०८॥
ततो मृत्वा क्रमाच्चक्रि-स्ते ते भूवंस्तनूभवाः । सङ्घलुण्टनपापेना-धुनाऽपि मरणं ययुः ॥२०९॥
यतः-"अल्पायुर्निर्धनो रोगी किङ्करो मुखरोगयुग् । जायते तनुमान् श्वभ्रेऽनन्तानन्तासुखः क्रमात् ॥१॥
दीर्घमायुः परं रूप-मारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्वं किमन्यत् कामदैव सा ॥२॥"
भीमो भगीरथः कुम्भ-कारजीवौ तु पुण्यतः । जिजीवतुर्यतः सङ्घं तदाऽलुण्टयतां न हि ॥२१०॥
यतः-"मनसापि च सङ्घस्य ये भक्तिं कुर्वते जनाः । तेषां स्वर्गापवर्गादि-सुखं भवति निश्चितम् ॥१॥"
यतः-"ये तीर्थयात्रिनो लोकान् वस्त्रान्नाम्बुविसर्जनैः । प्रीणयन्ति भवेत्तेषां तीर्थयात्राफलं महत् ॥१॥"
श्रीसङ्घः प्रथमं तीर्थं सोऽपि तीर्थपथे व्रजन् । पूज्यते हि विशेषेण श्रेयः कामयताऽऽत्मनि ॥२११॥
एभिस्तव सुतैः पाप यत्कृत सङ्घलुण्टनात् । तस्योदयान्मृताः सर्वे समकालं नरेश्वर ! ॥२१२॥
अतः शोको न कर्त्तव्यः पुत्राणां मरणे सति । अनित्यं विद्यते सर्वं वस्तु पुत्रादिकं पुनः ॥२१३॥
यः करोति तमःपुण्ये स एव तनुमान् पुनः । दुःखं सुखं च लभते परत्राऽत्र न संशयः ॥२१४॥
राज्ये पुत्रे कलत्रेऽपि मा मोहं कुरु भूपते ! । स्वहितं श्रय सौख्याय क्व पुनर्मानवो भवः ॥२१५॥
इति ज्ञानिमुखाज्ज्ञात्वा पुत्राणां पूर्वजान् भवान् । मुक्तशोकोऽभवच्चक्री वैराग्यं प्राप्तवान् पुनः ॥२१६॥
इन्द्रोऽपि क्षमयित्वा स्व-मपराधं चक्रिसन्निधौ । वन्दित्वा ज्ञानिनं स्वर्गे जगामाऽनघमानसः ॥२१७॥
सगरोऽपि प्रणम्याथ ज्ञानिनं तं सुभक्तितः । निजावासमलञ्चक्रे पुत्रद्वयसमन्वितः ॥२१८॥
अन्येद्युश्चक्रिराड् गत्वाऽजितस्य स्वामिनोऽन्तिके । शत्रुञ्जयस्य माहात्म्यं शुश्रावेति कृतादरः ॥२१९॥

ये शत्रुञ्जयतीर्थे तु यात्रां कुर्वन्ति मानवाः । तेषां स्वर्गापवर्गादि-सुखाली जायते चिरम् ॥२२०॥
"यतः-प्राणिभिर्यैः समारूढैः लोकाग्रमतिदुर्लभम् । प्राप्यते स च सिद्धाद्रि-र्दुर्लभो देहिनामिह ॥१॥"
अभव्या पापिनो जीवा सिद्धाद्रिं भावतो न हि । पश्यन्ति न नमस्यन्ति पूजयन्ति च नो पुनः ॥२२१॥
सिद्धाद्रौ मणिरत्नाद्यै-र्हेमरूप्यदृषच्चयैः । काष्ठैर्वा जिननाथस्य प्रासादः प्रवितन्यते ॥२२२॥
कारयन्ति जिनानां ये तृणावासानपि स्फुटम् । अखण्डितसुखान्येव लभन्ते ते त्रिविष्टपे ॥२२३॥
काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावन्ति पल्यलक्षाणि तत् कर्त्ता स्वर्गभाग् भवेत् ॥२२४॥
नूतनार्हद्वरावास-विधाने यत्फलं भवेत् । तस्मादष्टगुणं पुण्यं जीर्णोद्धारे विवेकिनाम् ॥२२५॥
शत्रुञ्जयादितीर्थेषु प्रासादाः (नृ) प्रतिमाश्च ये । कारयन्ति हि तत्पुण्यं ज्ञानिनो यदि जानते ॥२२६॥
बिम्बानि जिननाथानां मणिरत्नैश्च हेमभिः । रूप्यैः काष्ठैर्दृषद्भिर्वा मृदा वा भावशुद्धितः ॥२२७॥
एकाङ्गुष्ठादिसत्सप्त-शताङ्गुष्ठावधि प्रभोः । यः कारयति भव्यात्मा मुक्तिश्रीस्तस्य वश्यगा ॥२२८॥युग्मम्॥
प्रतिष्ठामर्हतोयो हि कारयेत् सूरिमन्त्रतः । सोऽर्हत् प्रतिष्ठां लभते यथा वापस्तथा फलम् ॥२२९॥
यावद्वर्षसहस्राणि पूजयन्ति जिनं जनाः । तावत्कालं बिम्बकर्त्ता लभते तत्फलांशकम् ॥२३०॥
श्रुत्वेति सगरश्चक्री हेम्नो देवालयान् वरान् । शतान्यष्टौ व्यधान्मन्त्रि-पार्श्वाद् भूरिधनव्ययात् ॥२३१॥
सहस्रं सप्तकं काष्ठ-मयान् देवालयान् पुनः । कारयामास चक्रेश-स्तीर्थयात्राकृते तदा ॥२३२॥
आकारितस्तदा सङ्घ-स्त्रिंशत् कोटिनरप्रमः । मिलितश्चक्रिणः सङ्घे आचार्या बहवः पुनः ॥२३३॥
द्वात्रिंशत् सहस्राणि नृपा मुकुटबद्धनाः । आगताश्चक्रिणस्तस्य सङ्घे यात्राकृते तदा ॥२३४॥
इत्यादि भूरिभिः श्राद्धैः श्राविकाभिश्च भूरिशः । महाधरैर्महोभिश्च सहितश्चक्रनायकः ॥२३५॥
गायत्सु मागधाद्येषु नृत्यत्सु नर्त्तकेषु च । धवलेषु दीयमानेषु पुरन्ध्रीभिश्च सोऽचलत् ॥२३६॥
प्रपूजयन् पुरे ग्रामे जिनाधीशान् सदुत्सवम् । नमन्मुनीन् ददद्दानं चक्री सिद्धाचले ययौ ॥२३७॥
तत्रानन्दपुरे नाम्ना वृद्धनगरसञ्ज्ञके । कारिते भरतेनाऽऽदि-जिनौकस्यनमज्जिनम् ॥२३८॥
आनन्दाह्वपुरे देव-पूजां कृत्वा सुविस्तरात् । चक्री चकार साधर्म्य-वात्सल्यं विपुलं तदा ॥२३९॥
त्रिःप्रदक्षिणयंस्तीर्थं भूयः सङ्घेन शालितः । आरुरोह गिरिं दानं ददन्नुत्सवपूर्वकम् ॥२४०॥
आदौ श्रीवृषभं पुष्पै-रर्चयित्वा च चक्रिराट् । राजादनीतले पादौ प्रभोरपूजयन्मुदा ॥२४१॥
तदा तत्राऽऽगतः शक्रः प्रणम्य वृषभं प्रभुम् । मिलितश्चक्रिणा राजा-दनीवृक्षतले मुदा ॥२४२॥
ततो विस्तरतो मूल-नायकस्य पुरो नृपः । स्नात्रपूजा-ध्वजारोपा-ऽऽरात्रिकादिविधिं व्यधात् ॥२४३॥
ततो देवाभिधे शृङ्गे बाहुबल्यभिधे पुनः । तालध्वजे च कादम्बे हस्तिसेनाह्वये पुनः ॥२४४॥
लौहिताख्ये मुकुन्दाख्ये सुन्दरे च पुरन्दरे । इत्यादि सर्वशृङ्गेषु पूजां चक्रेऽर्हतां नृपः ॥२४५॥युग्मम्॥
मृदङ्ग-झल्लरी-घण्टा-छत्र-चामरमोचनम् । प्रभोः पूजाकृते चक्री चकारामोदपूरितः ॥२४६॥
इन्द्रोत्सवं हारपूजा छत्र-चामरमोक्षणम् । रथावन्यश्वदानानि व्यधाच्चक्री गुरोर्गिरा ॥२४७॥
प्रासादान् कारितान् रूप्य-रत्नहेममयान् वरान् । अन्यैरपि नृपैर्दृष्ट्वा सगरो ध्यातवानिदम् ॥२४८॥
विवेकविकला धर्म-रिक्ता लोभान्धचक्षुषः । कालमाहात्म्यतो लोका भवि[ष्य]न्त्यग्रतः खलुः ॥२४९॥

ततो हेमादिलोभेन लोकाः पापमलीमसाः । करिष्यन्त्येव विध्वंसं प्रासाद-बिम्बयोरपि ॥२५०॥
तेनाहमस्य तीर्थस्या-म्भोधेर्वेलाधिकर्षतः । विधाय परिखां रक्षां करोम्येष प्रयत्नतः ॥२५१॥
नयन्नब्धिप्रवाहं स सगरः परितो गिरेः । टंकणान् कङ्कणान् स्वर्णान् बर्बरान् सिंहलानपि ॥२५२॥
लाट-सुराष्ट्र-भाटादि-विषयान् विविधांस्तदा । प्लावयन् चक्रिराट् प्रोक्तः शक्रेणेति सुभक्तिकम् ॥२५३॥
अधुना प्लावयन् पृथ्वीं वेलया वारिधिः खलु । शत्रुञ्जयस्य तीर्थस्य विध्वंसं त्वं करिष्यति (सि) ॥२५४॥
याते तीर्थस्य विध्वंसे कस्मिन् भविकमानवाः । यात्रां कृत्वाऽर्जयिष्यन्ति मुक्तियोग्यं वृषं खलु ॥२५५॥
यतः—"रविं विना यथा घस्रो विना पुत्रं यथा कुलम् । विना जीवं यथा देहं विना दीपं यथा गृहम् ॥१॥
विना विद्यां यथा मर्त्यो विना चक्षुर्यथा मुखम् । विना छायां यथा वृक्षो यथा धर्मो दयां विना ॥२॥
विना धर्म्मं यथा जीवो विना वारि यथा जगत् । विना तथा तीर्थमिदं भूतसृष्टिर्हि निःफला ॥३॥"
निरुद्धेऽस्मिन् महातीर्थे भवाब्धौ मज्जतां नृणाम् । तारकं विद्यते तीर्थ-मन्यन्नात्र महीतले ॥२५६॥
सर्वज्ञो न यदा देवो न धर्मो न सदागमः । तदाऽसौ सर्वलोकानां शैलः कामातिदायकः ॥२५७॥
इति शक्रगिरा चक्र-वर्त्यभिज्ञानहेतवे । तस्थौ वार्द्धिप्रवाहस्या-त्रीचलस्थापना कृता ॥२५८॥
त्र्यम्बावती-सोपारक-द्वारवत्यादिसन्निधौ । अद्यापि दृश्यतेऽम्भोधि-र्वाहस्तालध्वजान्तिके ॥२५९॥
शक्रमापृच्छ्य चक्रेशो मूर्त्ती रत्नमणीमयीः । रैगुहायां निनायाशु जिनगेहे स्वकारिते ॥२६०॥
तत्रस्थाः प्रतिमा जैनी रत्नस्वर्णमणिमयीः । पूजयन्ति सुरा यक्षा-श्चक्रीशक्रनिदेशतः ॥२६१॥
चतुर्विंशतितीर्थेशां प्रासादांश्च पृथक् पृथग् । कारयित्वाऽर्हतां मूर्त्ती-रतिष्ठिपत् स चक्रिराट् ॥२६२॥
सगरः क्षोणिभुग्पुत्रै-रन्यैरपि महीधवैः । कारितास्तत्र सर्वज्ञा-ऽऽलयाः कैलाससोदराः ॥२६३॥
यत उक्तं च-"प्रभोः पश्चिमदिग्भागे संस्थां स्वर्णगुहामधः । कूपिका-कल्पवृक्षादि-वनानि निर्जराधिपः ॥२६४॥
कारयित्वा प्रयत्नेन तत्र मूर्त्तिंजिनेशितुः । निदधावपि पूजायै यक्षान् चादिशदादरात् ॥२६५॥युग्मम्॥
शिखरेऽथ सुभद्राऽऽख्ये द्वितीयस्य जिनेशितुः । अचीकरन् जिनागारं चक्री रूप्यमयं महत् ॥२६६॥
सुचारित्रैर्गणाधीशैः सुश्राद्धैः सुसुरैरपि । चक्रे तत्र प्रतिष्ठाया महः पूजापुरस्सरम् ॥२६७॥
प्रासादोद्धरणं कृत्वा सगरो विमलाचले । अचालीद्रैवतं शृङ्गं नन्तुं नृपनरैः समम् ॥२६८॥
चन्द्रप्रभं जिनं तीर्थे वर्ये चन्द्रप्रभासके । नत्वा चक्री ययौ नन्तुं रैवतं शृङ्गमञ्जसा ॥२६९॥
त्रिःप्रदक्षिणयन् शृङ्गं रैवतं सगरो नृपः । पूजां व्यधाज्जिनेशस्य विस्तरात् कुसुमादिभिः ॥२७०॥
एवमर्बुदभूमीध्रा-दिकतीर्थेषु शालिषु । अर्चयित्वा जिनानागा-दयोध्यां लसदुत्सवम् ॥२७१॥
पावयन् धरणीं पद्भ्या-मजितस्तीर्थकृन्न् क्रमात् । अयोध्यानगरोद्याने सुरार्च्यः समवासरत् ॥२७२॥
श्रुत्वा जिनागमं चक्री गत्वा नत्वा जिनक्रमौ । धर्म्मं श्रोतुमुपाविष्टो यथास्थानं च संसदि ॥२७३॥
सार्वभौमप्रबोधाय जिनाधीशोऽजितस्तदा । धर्मोपदेशनां कर्त्तुं प्रववर्ते इति स्फुटम् ॥२७४॥
तथाहि-"राज्यं पुत्रकलत्रबन्धुनगराण्यत्रावासवित्तादिकं, देवर्द्धिश्च भवे भवेऽत्र सुलभान्यन्यानि रम्याण्यपि ।
मुक्ताविद्रुमरत्नवत्पुनरिदं चारित्रमुक्तं जिनै-श्चिन्तारत्नमिवातिदुर्लभतमं सर्वार्थसंसाधकम् ॥१॥"
चारित्रादेकदिवस-पालितादपि मानवः । अवश्यं

न च राजभयं न च चौरभयं इहलोकसुखं परलोकहितम् । वरकीर्त्तिकरं नरदेवनतं श्रमणत्वमिदं रमणीयतरं ॥
मही रम्या शय्या विपुलमुपधानं भुजलता, वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः, सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥२७७॥
"दो तुंबडाइं हत्थे वयणे धम्मक्खराणि चत्तारि । विउलं च भरहवासं को अम्ह पहुत्तणं हरइ ? ॥१॥"
आकर्ण्यैतज्जिनाधीश-वचः सगरचक्रिराट् । भगीरथसुतं स्वीय-पट्टे चास्थापयल्लघु ॥२७८॥
अष्टाह्निकामहः सर्व-जिनागारेषु विस्तरात् । कृत्वा स्वयं धनं भूरि ददावर्थिभ्य आदरात् ॥२७९॥
महीपालः सहस्रेण समं सगरचक्रिराट् । अजितान्ते ललौ दीक्षां शक्र-सूनुकृतोत्सवः ॥२८०॥
तदा प्रभुर्जगावेवं सगरर्षे ! त्वयाऽधुना । पालनीयं व्रतं शुद्धं कल्याणसुखहेतवे ॥२८१॥
यतः–"सिंहत्ताए निक्खित्ता सिंहत्ताए पालित्ता, सिंहत्ताए निक्खित्ता सीआलत्ताए पालित्ता,
सीआलत्ताए निक्खित्ता सिंहत्ताए पालित्ता, सीआलत्ताए निक्खित्ता सीआलत्ताए पालित्ता ॥"
अजितस्वामिना सार्द्धं विहरन् सगरो यतिः । वैयावृत्त्यं वितन्वान-श्चकार विविधं तपः ॥२८२॥
यत–"अनशनमौनोदर्यं वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ॥२८३॥
प्रायश्चित्तं वैयावृत्त्यं स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभध्यानं षोढेत्याभ्यन्तरं तपः ॥२८४॥
दीप्यमाने तपो वह्नौ बाह्ये चाभ्यन्तरेऽपि च । यमी जरति कर्म्माणि दुर्जराण्यपि तत्क्षणात् ॥२८५॥
स्वामिनृसिंहसेनाद्या रुचिरा गणधारिणः । अभूवन् पञ्चनवति–प्रमाणा जिनभक्तिकाः ॥२८६॥
शत्रुञ्जये बहून् वारान् गत्वा प्रबोध्य मानवान् । समेतशिखरेऽन्येद्यु-रजितस्तीर्थकृत् ययौ ॥२८७।
यतः–सहस्रत्रितयवारान् शत्रुञ्जयमहीधरे । अजितः समवासार्षीत् साधुसुरनृणाऽऽनतः ॥१॥"
सहस्रसाधुसंयुक्त-स्त्यक्तमासाशनोद्यतः । चैत्रस्य शुक्लपञ्चम्यां जगाम परमं पदम् ॥२८८॥
सगरोऽपि बहून् भव्यान् बोधयन्नजितेशवत् । घातिकर्म्म क्षयादाप केवलज्ञानमुज्ज्वलम् ॥२८९॥
प्रबोध्य सुचिरं भव्य-जीवान् सुधर्म्मकर्म्मणि । श्रीमत्-सिद्धाभिधे शैले सगरर्षिः शिवं ययौ ॥२९०॥

● इति सगरोद्धारः समाप्त ●

॥ अथ व्यन्तरेशकृतोद्धारः ॥

जिनोऽभिनन्दनोऽन्येद्यु-र्विहरन् वसुधातले । ययौ शत्रुञ्जये शैले भवाब्धितारणे नृणाम् ॥१॥
राजादनीतले देव-कोटाकोटि-निसेवितः । शत्रुञ्जयस्य माहात्म्यं जगादेत्यभिनन्दनः ॥२॥
अयं शत्रुञ्जयस्माद्य आन्तराऽरिनिषूदनः । सर्वपापहरो मुक्ति-सातसन्ततिदायकः ॥३॥
प्राप्तेषु मुक्तिमर्हत्सु नष्टे धर्मेऽपि केवले । सर्वकल्याणकृत्तीर्थ-मिदमेव भविष्यति ॥४॥
सिद्धाद्रौ ये जना देवं ध्यायन्ति पूजयन्ति च । अल्पकालादपि क्षिप्त्वा कर्म्म यास्यन्ति ते शिवम् ॥५॥
प्रासादप्रतिमायात्रा-पूजादानादि कुर्वते । सिद्धाद्रौ ये गमिष्यन्ति तेऽपि निर्वृतिमञ्जसा ॥६॥
श्रुत्वेति व्यन्तराधीशा-स्तदैवोत्पन्नभक्तिकाः । चक्रुः सिद्धाचले जीर्णो-द्धारान् नव्यान् जिनालयान् ॥७॥

इति व्यन्तरेशकृतोद्धार समाप्त

॥ अथ चन्द्रयश कृतो नवमोद्धारः ॥

चन्द्रप्रभुर्जिनाधीशो बोधयन् भव्यमानवान् । ययौ शत्रुञ्जये शैले सुरासुरनमस्कृते ॥१॥
तत्र प्रबोध्य भव्याङ्गि-व्रातं भूरि जिनेश्वरः । सगरानीतपाथोधि-तीरे प्राभासतटेऽगमत् ॥२॥
शशिप्रभापुराधीश-शशिशेखरभूपतेः । राज्ञी चन्द्रप्रभाह्वाऽऽसीत् पुत्रश्चन्द्रयशोभिधः ॥३॥
राज्ञीपुत्रयुतो राजा नत्वा चन्द्रप्रभं जिनम् । धर्म्मं श्रोतुमुपाविष्टो भवाम्भोनिधितारकम् ॥४॥
आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकर्म्मभारगुरुभिः कालो न च ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणत्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥५॥
सेविताद् पुण्डरीकाद्रे-र्ध्यानाज्जिनपतेरपि । इह सम्पद्यते लक्ष्मीः परत्र निर्वृतिर्नृणाम् ॥६॥
तीर्थेष्विदं मुख्यतीर्थं देवेष्विव जिनेश्वरम् । ध्यानेषु सुन्दरं ध्यानं ब्रह्मचर्यं व्रतेषु च ॥७॥
श्रामण्यं सर्वधर्म्मेषु प्रथमं खलु कथ्यते । अतः शत्रुञ्जये तीर्थे ध्येयः सद्भिः जिनेश्वरः ॥८॥
प्रभोर्मुखाद् वृषं श्रुत्वा चन्द्रशेखरभूपतिः । सप्रियः स्वं सुतं राज्ये न्यस्य संयममाददौ ॥९॥
धरणेन्द्रः प्रभोः कायो-त्सर्गस्थानेऽम्बुधेस्तटे । चन्द्रकान्तमणीबिम्बं प्रासादेऽतिष्ठिपत्तदा ॥१०॥
ततश्चन्द्रप्रभो जीवान् बोधयन् भूरिशो भुवि । श्रीउज्जयन्तभूमिध्रे ययौ साधुसुरार्चितः ॥११॥
तत्र प्रभोर्गिरा प्राप्य संयमं बहवो जनाः । सर्वकर्म्मक्षयान्मुक्ति-नगरीमगमन् क्रमात् ॥१२॥
बहु कालं बहून् भव्यान् प्रबोध्य जिनधर्म्मणि । चन्द्रप्रभो जिनाधीशो ययौ सम्मेतभूधरे ॥१३॥
चन्द्रशेखरराजर्षि-र्गत्वा सम्मेतपर्वते । चन्द्रप्रभशिवस्थानं ननाम बहुसाधुयुग् ॥१४॥
यतः–"निक्खमणनाणनिव्वाण जम्मभूमीओ वंदइ जिणाणं ।
न य वसइ साहुविरहिअंमि देसेवि बहुगुणेवि ॥१॥"
तदा तत्र समागत्य वैरिमर्दनभूपतिः । प्रासादं कारयित्वा श्री-चन्द्रप्रभमतिष्ठिपत् ॥१५॥
मुनेरागमनं श्रुत्वा भूपश्चन्द्रयशास्तदा । तत्र गत्वा प्रणम्य श्री-धर्म्मं श्रोतुमुपाविशत् ॥१६॥
देशनान्ते नृपोऽप्राक्षीत् केनेदं मेदिनीभुजा । 'चन्द्रप्रभास' नामेति तीर्थं प्रावर्त्तितं किल ॥१७॥
चन्द्रशेखर आहाऽय चन्द्रप्रभोऽत्र तीर्थकृत् । धर्मस्य देशनां चक्रे भव्येभ्यो हितकाम्यया ॥१८॥
अतश्चन्द्रप्रभामाख्यं विख्यातमभवद् भुवि । सेवया चास्य तीर्थस्य जायन्ते शिवसम्पदः ॥१९॥
यतः–"विभुर्यत्र जलध्यन्त-रस्थात् प्रतिमया स्थिरः । उद्वेलश्चाभवद् वार्द्धि-मूर्ध्वोर्ध्वं च गतस्तदा ॥१॥"
लवणाम्बुधिनाथेन लवणेन च भक्तितः । स एवारुन्धि जलधि-श्छत्रीभूतेन सर्वतः ॥२०॥
इह पूर्वं युगादीश-पौत्रेण शशिकीर्त्तिना । चन्द्रोद्यानान्तिके चन्द्र-प्रभस्य भाविनोऽर्हतः ॥२१॥
प्रासाद-प्रतिमे वर्ये कारिते भूरि-रैव्ययात् । ततश्चेदं महत्तीर्थं पावनं जगतामभूत् ॥२२॥युग्मम्॥
अभूत् समवसरणं योजनप्रमितं क्षितौ । चन्द्रप्रभस्य देवस्य वप्रत्रयविराजितम् ॥२३॥
प्रायस्तत्र मृता जीवा गच्छन्ति त्रिदशालयम् । शुद्धभावाश्च कल्याण-कमलां वृण्वते किल ॥२४॥
त्यक्त्वाऽत्र सर्वसावद्यं ये तपन्ति तपः सदा । सर्वकर्म्मक्षयं कृत्वा ते गच्छन्ति शिवालयम् ॥२५॥
नरके न न तिर्यक्षु प्रयान्त्यत्र मृता जनाः । किन्तु नृत्रिदिवश्रेयः-सुखानि वृण्वते द्रुतम् ॥२६॥

अस्य तीर्थस्य रक्षायै सगरः सागरं किल । अत्रानैषीज्जिनेन्द्रस्य वृषभस्य निषेवितुम् ॥२७॥
जिनस्नात्रकृते ब्राह्मी नदी ब्रह्मबिडौजसा । अत्रानीताऽभवन्नृणां क्रमात् पवित्रहेतवे ॥२८॥
श्रुत्वेति भूपतिश्चन्द्र-यशाश्चन्द्रमणीमयम् । प्रासादं च प्रभोर्बिम्ब-मिहैवातिष्ठिपन्मुदा ॥२९॥
पितुर्भक्त्या पितुर्मूर्त्तिं चन्द्रकान्तमणीमयीम् । अस्थापयन्नृपस्तस्मिन् प्रासादे पुण्यहेतवे ॥३०॥
चन्द्रशेखरराजर्षिः सर्वकर्म्मक्षयात् क्रमात् । अलञ्चकार कल्याण-नगरीं क्षीणपातकः ॥३१॥
नृपश्चन्द्रयशाः सङ्घं मेलयित्वा बहुं क्रमात् । सिद्धशैले ययौ नन्तुं जिनान् कुर्वन् महोत्सवम् ॥३२॥
सोऽपि भूपः क्वचित्तत्र वीक्ष्य जीर्णान् जिनालयान् । उद्धार व्ययॅल्लक्ष्मीं नवीनांश्च व्यधाद् वरान् ॥३३॥
ततो रैवतसम्मेत-शिखरार्बुदसानुषु । यात्रां कृत्वा व्यधाद् भूपो नवीनान् श्रीजिनालयान् ॥३४॥
लक्षार्द्धं जिनसद्मानि बिम्बानि कोटिपञ्चकम् । कारयामास भूपालो भूयिष्ठविभवव्ययात् ॥३५॥
क्रमात् स्वं नन्दनं राज्ये न्यस्य चन्द्रयशा नृपः । गृहीत्वा संयमं कर्म्म-क्षयात् कल्याणमीयिवान् ॥३६॥

❀ इति चन्द्रयशःकृतो नवमोद्धार ❀

## वासासु चउमासं जत्थ ठिया अजियसंतिजिणनाहा ।
## बियसोलधम्मचक्की जयउ तयं पुंडरी तित्थं ॥ १८ ॥

शान्तिनाथस्य वर्णनत्वात् इयं गाथाऽत्र व्याख्येया, अजितजिनस्य पश्चाद् व्याख्या कृता, वर्षा चतुर्मासी यत्र तीर्थे अजित-शान्तिनाथौ द्वितीय-षोडशधर्म्मचक्रिणौ स्थितौ, तत् पुण्डरीकं तीर्थं जयतात् तथाहि—

॥ अथ शान्तिनाथस्य चतुर्मासस्थिति शत्रुञ्जयेऽभूदिति सम्बन्ध ॥

हस्तिनागपुरे वर्ये विश्वसेन-नरेशितुः । अचिरागेहिनी पुत्रं प्रासूत रुचिरेऽहनि ॥१॥

तस्येन्द्रकृतोत्सवादि वाच्यम् ।

क्रमाच्चक्रिपदं प्राप्य षट्खण्डां मेदिनीं समाम् । पालयन् जनतां सुख्य-कार्षीत् शान्तिनृपोऽनघः ॥२॥
सार्वभौमर्द्धिमह्नाय त्यक्त्वा लात्वा व्रतश्रियम् । क्रान्त्वा छद्मस्थतां प्राप ज्ञानं पञ्चममञ्जसा ॥३॥
शान्तिनाथोऽन्यदा कोटा-कोटिनिर्जरसेवितः । शत्रुञ्जयान्तिके सिंहो-द्यानं वर्यमशिश्रियत् ॥४॥
इतः पुरे प्रतिष्ठाने ब्राह्मणो मदनाभिधः । मिथ्यात्वी मण्डयामास यज्ञं शोभनवासरे ॥५॥
तत्र भिक्षार्थमन्येद्युः साधु-र्यावद्ययौ किल । तावत् स ब्राह्मणः साधुं हक्कयामास कर्कशम् ॥६॥
साधुः प्राह युगादीश-पुत्रो भरतभूपतिः । पठनाय द्विजानां यान् व्यधाद् वेदानहिंसकान् ॥७॥
लोभान्धैस्तैर्द्विजैः काल-क्रमादाजीविकाकृते । वेदा हिंसात्मकास्ते तु कृता दुर्गतिहेतवे ॥८॥
श्रुत्वेति ब्राह्मणो रुष्टः श्रवमुत्पाट्य वेगतः । धावन् हन्तुं मुनिं स्तम्भे स्खलितो न्यपतद् भुवि ॥९॥
मृत्वाऽऽर्त्तितो द्विजः सोऽपि सिद्धाद्रिगिरिपार्श्वगे । सिंहोद्यानेऽभवत्पञ्चा-ननः क्रूरताशयः ॥१०॥

सोऽपि पञ्चानन-स्तत्र स्थितोऽनेकांस्तनूमतः । हन्ति कोपवशात्तेन कोऽपि नोपैति तत्र च ॥११॥
भ्रमन् पञ्चाननः शान्ति-नाथमालोक्य कोपतः । हन्तुमुत्पाट्य पाणिं स्व-मघावच्छोणितेक्षणः ॥१२॥
धावन् सिंहस्वरोः स्कन्धे आस्फाल्य लोष्टुवत् दृढम् । पश्चादपासरद्भूमौ न्यपतत् काष्ठवत् क्षणात् ॥१३॥
उत्थायोत्थाय पञ्चास्यो धावन् हन्तुं प्रभुं तदा । पपात लोष्टवद् भूमौ कुष्ठं देहे ततोऽभवत् ॥१४।
ततः पुनः पुनः पश्यन् प्रभुं दध्याविदं हृदि । एवंविधो मया साधुः कुत्रापि वीक्षितः पुरा ॥१५॥
एवं ध्यायन् हरिर्जाति-स्मृतिं प्राप्य क्षणात्तदा । प्राग्भवं द्विजजं चित्ते सस्मार शान्तमानसः ॥१६॥
तदोक्तं प्रभुणा पश्चा-द्भवं स्मर द्विजाधम ! । हिंसंस्त्वं श्रमणं मृत्वा जातो हरिरिहाधना ॥१७॥
ततः पञ्चाननः शान्त-चेताः प्रभोः क्रमद्वयम् । नमन् निन्दति कर्म्म स्वं प्राग्भवोपार्जितं स्वयम् ॥१८॥
सिद्धाद्रेरुपरि स्वामी यदागाद् विहरन् क्रमात् । तदा सोऽप्याययौ तत्र पञ्चास्यः शान्तमानसः ॥१९॥
गृहीत्वाऽनशनं तत्र प्रभोः पार्श्वे हरिः स च । द्वितीये ताविपे जातः सुरो भासुरदीप्तिमान् ॥२०॥
मरुदेवाभिधे शृङ्गे स्वामी साधु-सुरैर्वृतः । अजितस्वामिवन्मासां-श्चतुरोऽस्थात् क्षरागमे ॥२१॥
तत्रैत्य हरिगीर्वाणः प्रणम्य प्रभुमुक्तवान् । त्वत्प्रसादादहं सिंहो मृत्वाऽभवं सुरो वरः ॥२२॥
त्वं मे माता पिता त्वं मे त्वं चार्या मे च सोदरः । त्वं सुहृत् त्वं मम स्वामी स्वर्गसौख्यप्रदानतः ॥२३॥
विहृते शान्तितीर्थेशे-ऽन्यत्र पञ्चाननः सुरः । तत्र शृङ्गे महच्चैत्यं व्यधाच्छान्तिजिनेशितुः ॥२४॥
तस्मिँश्चैत्ये स्फुरद्रत्न-मयं बिम्बमनोहरम् । न्यवीविशत् शिवप्राप्त्यै स्वस्याऽन्यस्य च बोधकृत् ॥२५॥
अध्युष्टकोटयो देवाः शान्तिसेवकतत्पराः । शान्त्याराधककर्तृभ्यो ददते नृभ्य ईप्सितम् ॥२६॥
तत्र शृङ्गे सुरः सोऽपि प्रासादान् भूरिशोऽर्हताम् । चकार निर्वृतेः सौख्य-प्राप्त्यै कैलाससोदरान् ॥२७॥
विहृत्य शान्तिनाथोऽथ भगवान् पावयन् भुवम् । क्रमाद् गजपुरोद्याने सुन्दरे समवासरत् ॥२८॥
श्रीशान्तितनयश्चक्र-धराह्वस्त्वरितं तदा । नत्वा प्रभुं वृषं श्रोतुं यथास्थानमुपाविशत् ॥२९॥
ततः शान्तिजिनः प्राह धर्म्मं मुक्ति-सुखप्रदम् । दान-शील-तपो-भावं चतुर्धा भवभेदकम् ॥३०॥
"पच्चक्खाणं पूआ पडिक्कमणं पोसहो परुवयारो अ । पंच पयारा जस्स य न पयारो तस्स संसारे ॥१॥
सामायिका-ऽऽवश्यक-पौषधानि, देवार्चन-स्नान-विलेपनानि ।
ब्रह्मक्रिया-दान-दयामुखानि भव्याः सदा भावभरात् श्रयन्तु ॥२॥"
शीलं शत्रुञ्जयः शैलः समत्वं सार्वसेवनम् । श्रीसङ्घाधिपतित्वं च शिवश्रीदायका अमी ॥३१॥
श्रुत्वा प्रभोर्वंशश्चक्र-धरभूपो जगावदः । यात्रां शत्रुञ्जये कुर्वे विस्तराद्भरतेशवत् ॥३२॥
भव्यान् बोधयितुं शान्तिनाथेऽन्यत्र गते सति । चक्री चक्रे सदा धर्म्मं जैनेन्द्रं शिवशर्मदम् ॥३३॥
अन्येद्युश्चक्रिवद्दध्यौ प्रातरेवं शिवाचले । गम्यते चेज्जिनान्नन्तुं तदा श्लाघ्यं जनुर्भवेत् ॥३४॥
विमृश्येति तदा चक्रधरो भरणिनायकः । सङ्घमाह्वातुमप्रैषीद् बह्वीः कुङ्कुमपत्रिकाः ॥३५॥
आगते तु बहु सङ्घे सुलग्ने शान्तिनन्दनः । यात्रां कर्त्तुं चचालाऽथ कुलस्त्रीकृतमङ्गलः ॥३६॥
जाम्बूनदमया देवा-लया शतानि षोडश । चेलुः काष्ठमया वर्या-श्चतुःसहस्रसम्मिताः ॥३७।
द्वात्रिंशच्च सहस्राणि भूपाश्चेलुर्मनोरमाः । इभ्या लक्षमिता कोटि-मिता अन्ये जनाः पुनः ॥३८॥

चलन् सङ्घः पुरे ग्रामे कुर्वन् स्नात्रसहोत्सवम् । सुराष्ट्राराष्ट्रमायातः शत्रुञ्जयस्य सन्निधौ ॥३९॥
देवालयपुरस्तस्य निषण्णस्य महीपतेः । एत्य कश्चित् खगो नत्वा कृताञ्जलिः स्थितो मुदा ॥४०॥
भूपोऽप्राक्षीत् कुतः स्थानात् कस्त्वं किमर्थमागतः । दीनास्यो दृश्यसे कस्माच्चारुरूपधरोऽपि हि ? ॥४१॥
खेटद्रङ्गपते रत्न-प्रियस्य व्योमगामिनः । कलाप्रियाभिधः पुत्रोऽभूवं जनकवल्लभः ॥४२॥
क्रमाद्राज्ये निजे मां तु स्थापयित्वा वरोत्सवम् । जग्राह संयम सोम-देवाचार्यान्तिके पिता ॥४३॥
अधुना बलिभिर्गोत्रै-र्वेष्टितं नगरं बलात् । विहस्ता मनुजा जाता-स्ततोऽहं व्याकुलोऽभवम् ॥४४॥
आराधिता मया चक्रे-श्वरी देवी जगावदः । कार्यं राज्येन चेत्तेऽस्ति यदि कलाप्रियाऽधुना ॥४५॥
तदा चक्रधरं भूप-मिहानयाचिरात्त्वकम् । तस्य दृष्टौ रिपोश्चक्रं नंष्ट्वा यास्यति दूरतः ॥४६॥
ततो वालयितुं राज्यं स्वकं वाञ्छंस्तवान्तिके । आगामिह कृपां कृत्वा मयि तत्राऽऽव्रज द्रुतम् ॥४७॥
त्वयि तत्रागते सर्वं रिपुसैन्यं गमिष्यति । तव तुल्योऽस्ति को लोके परोपकारकोऽधुना ? ॥४८॥
यतः-'दानं वित्ताद् ऋतं वाचः कीर्त्तिधर्मौ तथाऽऽयुषः । परोपकरणं कायादसारात् सारमुद्धरेत् ॥४९'॥
सङ्घमापृच्छ्य भूपालः कलाप्रियविराजितः । खेटद्रङ्गान्तिके यावत् समागान्नेत्रयोर्द्विषाम् ॥५०॥
तावद्दिशोदिशं कम्प-माना लात्वा स्वजीवितम् । ययुर्द्विषोऽखिलाः सूर्यो-दयादिव तमश्चयाः ॥५१॥
गते वैरिबलेऽशेषे-कलाप्रियः खगेश्वरः । नत्वा चक्रधरस्याङ्घ्री जगादेति कृताञ्जलिः ॥५२॥
त्राता माता सुहृत्तातः स्वामी पितृपिता त्वकम् । यतस्त्वया गतं राज्यं वालितं करुणात्मना ॥५३॥
गुणमालां स्वसारं मे त्वमुद्वाह्याधुना नृप ! । निःतष्कयं मां कुरुष्वाशु मयि कृत्वा कृपां द्रुतम् ॥५४॥
भूपेन मानिते तत्र गुणमालां गुणाकराम् । कलाप्रियो ददौ तस्मै चारूत्सवपुरस्सरम् ॥५५॥
अन्या अपि तदा व्योम-गामिकन्याः सहस्रशः । वव्रुश्चक्रधरं भूपं गुणिनं सगुणा यथा ॥५६॥
कलाप्रियो जगावत्रो-द्यानमस्ति सुराभिधम् । तत्र क्रीडाकृते स्वामि-न्नवधारय साम्प्रतम् ॥५७॥
गत्वा तत्र वने कृत्वा क्रीडां सुधवलालये । गवाक्षस्थो द्रुमश्रेणी-र्विविधा दृष्टवान्नृपः ॥५८॥
यतः-पालीतालीद्रुमालीतलमिलितपथश्रान्तविश्रान्त पान्थव्रातप्रख्यातघर्मातपहरणचणकङ्कणश्रीर्धरित्र्याम् ॥
हेलोन्मीलन्नवीनामलबहुलतुलल्लोलकल्लोलमालालीलाखेलन्मरालीकुलकलविरुतैरुल्वणः पल्वलोऽयं ॥
ईषल्लोलोर्म्मिपातप्रभवबरभवल्लास्यलीलाभिरुच्चै-रेष च्छेकश्च केकी कलयति विरुतान्यावहन्नृत्तवृत्तम् ।
मद्रारावं प्रलुभ्यन्निजयुवतियुतश्चैष चक्रोऽपि चक्री-कृत्य ग्रीवानताम्भोरुहबिशकवलानत्ति चात्यन्तहृष्टः ॥
इत्यादि सरसी वृक्ष-चक्रादि शकुनव्रजम् । पश्यन् राजाऽग्रतश्चैत्य-मपश्यद् व्योममार्गगम् ॥६१॥
तत्र गत्वा नृपश्चैत्य-मध्ये वर्यमणीमयम् । बिम्बं श्रीआदिदेवस्य सभार्योऽपूजयत्तमम् ॥६२॥
वरपुष्पाक्षतस्तोत्रैः पूजयित्वाऽऽदिमं जिनम् । राजा चक्रधरो देव-गृहाद् बहिर्यदा ययौ ॥६३॥
तदैकां वानरीं वर्य-नारीभिरभितो वृताम् । तत्रायातां निरीक्ष्येति जगौ चक्रधरस्तदा ॥६४॥
भो ! नार्यो यूयं किं वर्य-रूपलावण्यसंयुताः । सेवध्वं वानरीं तिर्यग्-जातिजां वदताऽधुना ॥६५॥
तत्राऽऽसन्नस्थितो विद्याधर एको जगाविति । वैताढ्यस्योत्तरश्रेण्यां भीमाह्वे नगरे वरे ॥६६॥
चन्द्रचूडाभिधो विद्या-धरोऽहमभवं किल । शृङ्गारसुन्दरी नाम्ना पुत्री मेऽभूत् सुरूपभृत् ॥६७॥

रन्तुं गताऽन्यदोद्याने नन्दिनी सा सखीयुता । रेमे परस्परं पुष्प-कोटीररचनादिभिः ॥६८॥
गृह्णन्ती स्वेच्छया पुष्प-फलानि तरुतस्तदा । हसन्ती तरुशाखासु पुत्री मे सुरसुन्दरी ॥६९॥
चापल्यत्वं वितन्वाना थूत्कृतिं च पदे पदे । वनदेवतया शप्ता वानरी ममजायत ॥७०॥
वानरी वनदेव्यास्तु पादौ नत्वा दृढं जगौ । अपराधो मया चक्रे यस्ते क्षन्तव्य एव सः ॥७१॥
वानरीत्वमपाकृत्य नारीरूपं ममाचिरात् । कुरु प्रसद्य देवी त्वं ततो देवी जगाविदः ॥७२॥
यदा चक्रधरो राजा श्रीशान्तिजिननन्दनः । तव पाणिग्रहं नारि ! करिष्यति कलोत्सवम् ॥७३॥
तदा त्वं लभसे नारी-रूपं विद्याधराङ्गजे ! । ततस्त्वां वरितुं नित्य-मीहते मम नन्दिनी ॥७४॥
पृच्छं पृच्छं स्थितिं ताव-कीनां ग्रामे पुरे पुरे । ज्ञात्वाऽतो वानरीरूपां सुतान्ते तेऽहमानयम् ॥७५॥
एतस्याः किल वानर्या मम पुत्र्याः करग्रहात् । त्वं कुरुष्वाचिरात् राजन् ! पूर्वं रूपं मनोहरम् ॥७६॥
उपकारपरो राजा तस्या पाणिग्रहं यदा । कर्तुकामोऽभवत्तावन्मन्त्री प्राह नृपं प्रति ॥७७॥
वानर्याः कार्यते पाणि-ग्रहः केनापि कुत्रचित् । कदाचित् कपटं केन मण्डितं स्यान्न वरं तदा ॥७८॥
राजाऽवग् जीवितव्यस्य सारं तद् विद्यते खलु । यदेव क्रियतेऽन्येषा-मुपकारः सुखावहः ॥७९॥
वानर्या भूभुजा याव-च्चक्रे पाणिग्रहः स्वयम् । तावन्नार्यभवद्दीव्य-रूपभृत् सुरसुन्दरी ॥८०॥
कलाप्रियेण तुष्टेन विद्या बह्वीः खगादिमाः । तस्मै दत्ताः कनीतुल्या-श्चक्रधराय भूभुजे ॥८१॥
भ्रमँस्तस्मिन् वने दृष्ट्वा तापसान् कन्दभक्षकान् । जगौ चक्रधरो यूयं के ? किं किं क्रियते तपः ? ॥८२॥
जगदुस्ते वयं कच्छा-न्वये जातास्तपस्विनः । कन्दमूलफलाहारा वसामस्तटिनीतटे ॥८३॥
आह चक्रधरो भो भो ! तापसाः शुद्धमार्गतः । भ्रष्टा यूयं न कुर्वीध्व-मभक्ष्यभक्षणं क्षणम् ॥८४॥
यतः-"गूढस्नसारिच्छिन्नरुहाः समभागाश्च पल्लवाः । मिथ्यादृशामविज्ञाता अखाद्या हि प्रकीर्तिताः ॥८५॥
तीक्ष्णशूचीमुखाक्रान्ति-मार्गेऽनन्ताः शरीरिणः । उत्पद्यन्ते विलीयन्ते यत्र तेऽनन्तकायिनः ॥८६॥
उदुम्बरवटप्लक्ष-काकोदुम्बरशाखिनाम् । अश्वत्थस्यापि न फल-मश्नीयात् कृमिसङ्कुलम् ॥८७॥
त्याज्या महाविकृतय-श्चतस्रोऽनन्तदोषदाः । मद्यं मांसं नवनीतं मधु त्याज्यान्यमूनि हि ॥८८॥
हिमं विषं च करकान् सर्वमज्ञातकं फलम् । रजनीभोजनानन्त-कायान् सन्धानकांस्तथा ॥८९॥
वृन्ताकमूलकांश्चापि निखिलं पुष्पितौदनम् । वहुबीजामगोरस-सम्पृक्तद्विदलं त्यजेत् ॥९०॥युग्मम्॥
इत्यादिमुपदेशेन प्रबोध्य ते तपस्विनः । मिथ्यात्वं त्याजिता चक्र-धरेण मेदिनीभुजा ॥९१॥
जगौ चक्रधरो भो भो ! तापसाः सिद्धपर्वते । गत्वा प्रणमताऽऽदीशं जिनं कल्याणहेतवे ॥९२॥
ततश्चक्रधरेणाऽमा तापसा हृष्टमानसाः । नन्तुं शत्रुञ्जये तीर्थे चेलुः श्रीवृषभं जिनम् ॥९३॥
भूरिभार्या-बहुव्योम-गामितापससंयुतम् । आयान्तं शान्तितीर्थेश-पुत्रं चक्रधरं नृपम् ॥९४॥
दृष्ट्वा सङ्घजनो हृष्टः सन्मुखं समुपागमत । ततश्चक्रधरः सङ्घं सन्मानयति भक्तितः ॥९५॥
नृपश्चक्रधरश्चारू-त्सवं दानं ददन् बहु । सङ्घमध्ये समायातो-ऽर्चयच्छ्रीनाभिनन्दनम् ॥९६॥
तापसास्तेऽपि सावद्या-हारं त्यक्त्वा जिनोदितम् । शुद्धमन्नं प्रगृह्णन्तो धर्मं कुर्वन्ति सादरम् ॥९७॥
देवपूजां सङ्घपूजां कृत्वा तत्र महीधवः । तीर्थे शत्रुञ्जये शीघ्र-मारुरोह कृतोत्सवम् ॥९८॥

विधिवत्तत्र तीर्थेशं स्नपयित्वा सुवारिभिः । पुष्पैश्च विदधे भूपो ध्वजादानादिकां क्रियाम् ॥९९॥
आरात्रिकं च मङ्गल-दीपकं विधिवत्तदा । कृत्वा प्रभोः पुरो भाव-स्तुतिं चक्रे धराधिपः ॥१००॥
स्वामिनः पादुकाऽर्चां च कृत्वा राजादनीतरोः । प्रदक्षिणां महीपाल-श्चकार सङ्घसंयुतः ॥१०१॥
इतस्तत्र सुरः सिंहो-ऽभ्येत्याऽवग् भूपतिं प्रति । तिर्यग्गतौ गतोऽथाहं तव तातेन शान्तिना ॥१०२॥
प्रबोध्य त्रिविपे नीतो भूयिष्ठसुखमन्दिरे । ततो मयाऽत्र ते तात-सद्म स्फारं विधापितम् ॥१०३॥युग्मम्॥
ततस्तत्रैत्य पूजां श्री-शान्तेः श्रीऋषभप्रभोः । कृत्वा पूजां निजं जन्म सफलं कुरु भूपते ! ॥१०४॥
ततस्तत्र नृपो गत्वा कृत्वाऽर्चां श्रीजिनेशितुः । चक्रे चक्रधरः सङ्घ-युतः स्वं सफलं जनुः ॥१०५॥
तापसास्तेऽपि सिद्धाद्रौ युगादीशं जिनेश्वरम् । प्रणम्य सफलं चक्रु-र्निजं जन्म सुभावतः ॥१०६॥
घातिकर्म्मक्षयात्तेषां तापसानां सुचेतसाम् । उत्पन्नं केवलज्ञानं लोकालोकावलोककम् ॥१०७॥
यत्र ते तापसाः सिद्धा-स्तत्र चक्रधरो नृपः । व्यधात्तापससञ्ज्ञं श्री-सर्वज्ञसदनं महत् ॥१०८॥
चक्रे चक्रधरो नव्यान् जिनावासान् बहून् क्रमात् । तत्र जीर्णजिनागारा-नुदधार धनव्ययात् ॥१०९॥
प्रभासे गिरिनाराद्रौ सम्मेतशिखरेऽर्बुदे । यात्रां कृत्वा व्यधाज्जीर्णो-द्धारान् भूपो जिनौकसि ॥११०॥
इत्थं बहुषु तीर्थेषु यात्रां कृत्वाऽतिविस्तरात् । अचीकरद् जिनागारान् नव्यान् जीर्णोद्धृतीनपि ॥१११॥
प्रतिलाभ्य गुरून् वस्त्र-दानेन सङ्घमप्यथ । भोजयित्वा परीधाप्य विससर्ज धराधवः ॥११२॥
भूपः सदुत्सवं पुर्यां प्रवेशमकरोन्नृपः । ततो न्यायान्महीपीठं प्रशशास लसद्बलः ॥११३॥
इतः शान्तिजिनो गत्वा सम्मेतशिखरे गिरौ । सर्वकर्म्मक्षयान्मुक्ति-नगरीमगमद् द्रुतम् ॥११४॥
यत्र स्थाने ययौ मुक्तिं श्रीमान् शान्तिजिनेश्वरः । तत्र चक्रधरः शान्ति-नाथालयमकारयत् ॥११५॥
अन्येद्युर्ज्ञानचन्द्रस्य सूरीश्वरस्य सन्निधौ । धर्म्मं श्रोतुं गते चक्र-धरे गुरुर्जगाविति ॥११६॥
क्षमया निखिलकर्म्माणि शुभानि वाऽशुभानि च । लभते केवलज्ञानं संयतक्षोणिनाथवत् ॥११७॥
संखेटकाभिधे ग्रामे वणिग् हितकराभिधः । श्राद्धधर्म्मं समाराध्य ययौ त्रिदशमन्दिरम् ॥११८॥
ततश्च्युत्वा सुभापुर्यां वर्धमानाभिधो नृपः । बभूव न्यायमार्गेण पालयन् पृथिवीं सदा ॥११९॥
तत्रैव वाडवश्चन्द्रः कृत्वा बालतपः सदा । ज्योतिर्मध्ये समेत्याऽभूत् ब्राह्मणो ज्वलनाभिधः ॥१२०॥
तदा भूपस्य तस्याभूत् सत्यवादी पुरोहितः । मायया ज्वलनो लोकान् वञ्चयामास भूरिशः ॥१२१॥
वणिजो नेमदत्तस्य वञ्चयित्वा धनं बहु । जग्राह ज्वलनो नेम-दत्तो दुःखी ततोऽभवत् ॥१२२॥
वञ्चयित्वा तदा तत्र ज्वलनं गणिकैकिका । वालयामास विभवं नेमदत्तस्य सद्धिया ॥१२३॥
कुट्टयित्वा महीपालो ज्वलनं मायिनं तदा । स्वदेशात्त्वरितं निष्का-शयामास च दूरतः ॥१२४॥
वैराग्यं ज्वलनः प्राप्त-स्तपः कुर्वन् निरन्तरम् । माहेन्द्रे त्रिविपे देवो-ऽजनि भासुरदेहभाग् ॥१२५॥
ततो निर्गत्य वैताढ्य-शैलदक्षिणयाम्ययोः । श्रेण्योः स्वाम्यभवद् वज्र-दंष्ट्रोऽयं वाडवासुमान् ॥१२६॥
श्रीवर्द्धनोऽपि भूपालो लात्वा दीक्षां तपःपरः । गत्वा स्वर्गे ततश्च्युत्वा संयतोऽहमिहाभवम् ॥१२७॥
पाश्चात्यभवसंजातात् वैराद् वज्रदंष्ट्रकः । जघान दण्डघातेन मामत्रैव भवे भृशम् ॥१२८॥
नेमदत्तासुमान् कृत्वा धर्म्मं जैनं निरन्तरम् । धरणेन्द्रोऽभवस्त्वं च सर्वनागकुमारराट् ॥१२९॥

श्रुत्वेति वज्रदंष्ट्रोऽपि क्षमित्वा निजसूनवे । राज्यं दत्त्वा ललौ वृत्तं संसाराम्भोधितारकम् ॥१३०॥
वज्रदंष्ट्रस्तपस्तीव्रं कुर्वन् शत्रुञ्जयाचले । नत्वाऽऽदिमं जिनं शान्ति-जिनं नन्तुं समीयिवान् ॥१३१॥
शान्तितीर्थपतेरग्रे ध्यानं कुर्वन् स संयतः । अवाप केवलं ज्ञानं लक्षसाधुसमन्वितः ॥१३२॥
सर्वकर्म्मक्षयाद्वज्र-दंष्ट्रर्षिः सिद्धपर्वते । शत्रुञ्जये ययौ मुक्ति-नगर्यां रुचिरश्रियि ॥१३३॥
श्रुत्वेति स्वं सुतं राज्ये न्यस्य चक्रधरो नृपः । लात्वा व्रतं तपस्तीव्रं कृत्वा सम्मेतपर्वते ॥१३४॥
सर्वकर्म्मक्षयान्मुक्ति-नगरीं समुपेयिवान् । तदाऽन्ये बहवो भूप-यतयोऽपि ययुः शिवम् ॥१३५॥

★ इति शान्तिनाथस्य चतुर्मासस्थितिः शत्रुञ्जयेऽभूदिति सम्बन्धः ★

*॥ अथ द्राविडवालिखिल्लादि-भूपालर्षिमुक्तिगमनसम्बन्धः ॥*

## दसकोडिसाहुसहिआ जत्थ दविडवालिखिल्लपमुहनिवा ।
## सिद्धा नगाहिराए जयउ तयं पुंडरी तित्थं ॥ १९ ॥

दशकोटिसाधुसहिता द्राविड-वालिखिल्लप्रमुखा नृपा इक्ष्वाकुवंशभवा यत्र शत्रुञ्जये शैले मुक्तिं ययुः, तत् शत्रुञ्जयाह्वं तीर्थं चिरं जयतात् । तथाहि—

ऋषभस्वामिनः सूनो-र्द्रविडस्य महीपतेः । द्रविडविषयोपान्ते द्वावभूतां तनूभवौ ॥१॥
आद्योऽभूद् द्राविडो नाम्ना वालिखिल्लो द्वितीयकः । जयन्तौ रूपतश्चेतो-भवौ दानपरायणौ ॥२॥
द्रविडो भूपतिः शत्रु-ञ्जये यात्रां सुविस्तरात् । विधाय कारयामास प्रासादं प्रथमप्रभोः ॥३॥
द्राविडाय सुतायाऽदा-न्मिथिलाराज्यमञ्जसा । ग्रामलक्षं ददौ वालि-खिल्लाय द्रविडोऽन्यदा ॥४॥
भवद्भ्यां वैरवैरस्यं न कार्यं नन्दनोत्तमौ ! । इत्युक्त्वाऽलात् प्रभोः पार्श्वे द्रविडः संयमश्रियम् ॥५॥
राज्यश्रिया क्रमाद्वर्द्ध-मानं कीर्त्त्या च सन्ततम् । दृष्ट्वाऽनुजं दधौ द्वेषं तस्मिन् द्राविडभूपतिः ॥६॥
द्राविडो लोभतो वाली-खिल्लं स्वीयानुजं सदा । हन्तुमिच्छन् दिवा रात्रौ निद्रां न लभते मनाग् ॥७॥
यतः—"पितरं मातरं बन्धुं मित्रं भार्यां सुतं गुरुम् । लोभेनाभिभूतः सद्य हन्त्येव मानवः खलु ॥८॥
मेलयित्वा महासैन्यं द्वावपि भ्रातरौ तदा । रणं भरत-बाहुवन्न चक्राते तौ परस्परम् ॥९॥
वालिखिल्लो धनं भूरि वितीर्य द्राविडानुगान् । लक्षशः स्ववशीचक्रे दानात् किं किं न जायते ? ॥१०॥
कोटयो दश पत्तीना-मभूवन् बलयोर्द्वयोः । प्रत्येकं दश लक्षाश्च स्यन्दनानां च कुम्भिनाम् ॥११॥
पञ्चाशद्दशलक्षाश्च तथाऽन्येऽपि महीभुजः । अभूवन् सैन्ययोः साम्य-मेवं त्रैलोक्यभीतिकृत् ॥१२॥
अहत्यहत्यम्भकानां नादैर्दिगन्तगामिभिः । आदिशूकरयूथानि त्रेसुर्जग्मुरधीरताम् ॥१३॥
रणं सप्तमितान् मासान् यावदासीत् सुदुःसहम् । कोटयो दश मर्त्यानां तदा मृता बलद्वये ॥१४॥
अत्रान्तरे पयोवाहो वर्षन्नेव दिवानिशम् । आगतः पृथिवीं शश्वत् प्रीणयामास सर्वतः ॥१५॥

अभितः स्थलगर्त्तादीन् नदीह्रदतटाककान् । अपूरयद्‌यान्नीरैः सञ्चरिष्णुभिरम्बुदः ॥१६॥
सुबुद्धिः सचिवः प्राह वनेऽत्र सुमतिर्गुरुः । विद्यते तत्र गम्येत धर्म्मं श्रोतुं नराधिप ! ॥१७॥
श्रुत्वेति द्राविडो भूपः सुबुद्धिधीसखान्वितः । धर्म्मं श्रोतुं ययौ पार्श्वे सुमतेः सुमतेर्गुरोः ॥१८॥
गुरुः प्राह महीपाल ! कषाया वैरिणः खलु । इहामुत्र च दुःखानि ददते देहिनां पुनः ॥१९॥
यतः-"जं अज्जिअं चरित्तं देसूणाए अ पुव्वकोडीए । तंपि कसाइय मित्तो हारेइ नरो मुहुत्तेण ॥१॥"
न कश्चिच्चण्डकोपाना-मात्मीयोऽस्तीह भूतले । होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥२०॥
क्रोधो नाम मनुष्याणां शरीरे जायते रिपुः । येन त्यजति मित्राणि धर्माच्च परिहीयते ॥२१॥
सञ्चरन्तं शुभे मार्गे छलयन्ति जनं घनम् । पिशाचा इव दुःखौघ-दायिनो विषयाः समे ॥२२॥
युगपत् पञ्चभिर्व्याप्तो विषयैर्विषसन्निभैः । हन्तुं जन्तुरयं किन्तु कल्याणमपि गच्छति ॥२३॥
क्रोधेन ग्रसितो जीवो हिंसन् जीवान् बहून् भृशम् । नरके लभते दुःखं चन्द्रसेन इव क्षणात् ॥२४॥
श्रीपुरे भीमसेनस्य चन्द्रसेनसुतोऽभवत् । वर्धमानः क्रमात्ताते द्वेषं करति सन्ततम् ॥२५॥
विहत्य जनकं चन्द्र-सेनः प्राप्य बहुं श्रियम् । तृणप्रायं जगत् सर्वं मेनेऽहङ्कारमन्दिरम् ॥२६॥
यतः-"इक्षुक्षेत्र-वंशजाली-कदली-विषपादपाः । फले जाते विनश्यन्ति दुःपुत्रेण कुलं यथा ॥१॥"
मृत्वा श्वभ्रे गतश्चन्द्र-सेनो दुःखं श्रयन् घनम् । निर्गत्य जलधौ मत्स्यो जातः स्फाति झषान् बहून् ॥२७॥
जीवहिंसोद्यतः श्वभ्रे गत्वाऽतिदुःखसन्ततिम् । सहित्वाऽथ वने भिल्लो-ऽभवत् हिंसापरायणः ॥२८॥
ततः श्वभ्रं गतो दुःखं सेहे भिल्लासुमान् स च । ततो निर्गत्य भीमाह्वे वने पञ्चाननोऽभवत् ॥२९॥
इत्यादि बहुशः श्वभ्र-मत्स्यव्याघ्रादिकान् भवान् । चन्द्रसेनासुमान् प्राप्य सेहे दुःखपरम्पराम् ॥३०॥
एवं कषायतो जीवाः संसारे दुःखसन्ततिम् । लभन्तेऽतो न कर्त्तव्याः कषाया दुःखलक्षदाः ॥३१॥
यतः-"धर्म्मव्युच्छेदपरशु-र्बोधिकक्षदवानलः । परद्रोहोऽस्ति नरक-द्वारोद्घाटनकुञ्चिका ॥३२॥
मनसापि स्मृता हिंसा भवे दुःखौघदायिनी । सा पुनर्विहिता तन्वी नरकं नयते न कम् ? ॥३३॥
ये राज्यादिसुखेष्वार्त्ता घ्नन्तीभाश्वनरान् बहून् । ते दहन्ति निजं देह-सुद्योतकृतबुद्धयः ॥३४॥
नरकान्तस्य राज्यस्य हेतवे किं नरेश्वर ! । बन्धुना सह वैरेण हन्यन्ते जन्तुकोटयः ॥३५॥
अनित्यानि शरीराणि लक्ष्मीर्बुद्बुदसन्निभा । तृणाग्नितुल्या यत्प्राणाः पापं मा कुरु तत्कृते ॥३६॥
ये राज्यादिकृते बन्धून् निष्ठुरा घ्नन्ति कोपतः । ते स्वाङ्गानि स्वयं भित्त्वा भुञ्जते दुःखसन्ततिम् । ३७॥
"लोए अणाइनिहणे एवं अन्नाणमोहिआ जीवा । अणुहोंति कुजोणिगया दुःखं संसारकंतारे ॥१॥
धम्मो परभवबन्धू ताणं सरणं च होइ जीवस्स । धम्मो सुहाण मूलं धम्मो कामदुहा धेणू ॥२॥
सयलम्मि वि तेलुक्के जं दव्व उत्तमं महग्घं च । तं सव्वं धम्मफलं लहइ नरो उत्तमतवेण ॥३॥
जिणवरविहिए मग्गे धम्मं काऊण निच्छिअं पुरिसा । उम्मुक्ककम्मकलुसा जंति सिवं सासयं ठाणं ॥४॥"
श्रुत्वेति श्रीगुरोर्वाणीं वैराग्यवासिताशयः । द्राविडो वालिखिल्लं स्वं बन्धुं क्षन्तुमना ययौ ॥३८॥
आयान्तं द्राविडं बन्धुं क्षन्तुं ज्ञात्वा तदा क्षणात् । वालिखिल्लोऽनमद् गत्वा-ऽभिमुखं सोदरं मुदा ॥३९॥
धरापीठे लुठित्वा स चरणौ पूर्वजन्मनः । अमार्जयद् रजोधूम्रान् दोषानिव शिरोरुहैः ॥४०॥

द्राविडोऽवग् गृहाणेदं राज्यं झटिति सोदर ! । वालिखिल्लो जगौ भ्रात-स्त्वं राज्यं लाहि मे ध्रुवम् ॥४१॥
मम सृतं श्रिया भ्रात-र्मया युद्धं वितन्वता । यत्पापमर्जितं तेन श्वभ्रपातो भवेन्मम ॥४२॥
वैरं मुक्त्वा मिथः क्षन्त्वा सोदरौ द्वौ तदा क्षणात् । मेलयित्वा बहु सङ्घं ययौ सिद्धाचले क्रमात् ॥४३॥
तत्र स्नात्रार्चनादीनि कृत्यानि द्वौ सहोदरौ । प्रासादौ प्रथमास्य कारयामासतुस्तदा ॥४४॥
तयोः प्रासादयोरष्टो-त्तरशत्या सुमण्डपैः । रेजुर्द्वाराणि चत्वारि सत्तोरणयुतानि च ॥४५॥
मुख्यार्हत्सदनस्याग्रो द्वारं सज्जविधानतः । कारयामासतुर्मोदात् सिद्धाद्रौ द्वौ सहोदरौ ॥४६॥
ततोऽभ्येत्य निजे राज्ये स्वं स्वं तनुभव क्रमात् । न्यस्याकारयतां पूजां जिनानां जिनसद्मसु ॥४७॥
ततो महोत्सवं कुर्वन् द्राविडो वालिखिल्लयुग् । महोदयमुनेः पार्श्वे जग्राह संयमं मुदा ॥४८॥
महोदयमुनिर्विद्या-धरसंयतसन्निधौ । अमुचद्यतिसम्बन्धि-क्रियां शिक्षयितुं तदा ॥४९॥
शिक्षयित्वा क्रियाः सम्यक् तपःकरणतत्परौ । पेठतुर्भूरिशास्त्राणि द्वावेव सोदरौ तदा ॥५०॥
प्राप्ताचार्यपदौ द्वौ तु सोदरौ दशकोटिभिः । साधुभिः सहितौ सिद्ध-पर्वते ययतुः क्रमात् ॥५१॥
तत्राऽऽगतस्य भव्यस्य पुरतस्तौ सहोदरौ । शत्रुञ्जयस्य माहात्म्य-मेवं प्रजल्पतुस्तदा ॥५२॥
तथाहि-"अनन्तसुकृताधारः संसाराब्धितरण्डवत् । शत्रुञ्जयः सुराष्ट्रासु गिरिर्जयति शाश्वतः ॥५३॥
अत्र शत्रुञ्जये सिद्धा अनन्तास्तीर्थयोगतः । सेत्स्यन्त्यत्रैव बहवो-ऽर्हद्यतिप्रमुखा जनाः ॥५४॥
सिद्धलक्ष्म्यो ह्ययं क्रीडा-शैलः शत्रुञ्जयोऽद्भुतः । अत्रायातान् नरान् सद्यः शिवस्थानं नयेत् द्रुतम् ॥५५॥
इहायातैर्नरैर्मुक्ति-सुखास्वादोऽनुभूयते । मुक्तिभुक्तिप्रदो देवः प्रथमो विद्यतेऽत्र यत् ॥५६॥
शैलं दुर्गस्थितं चात्र नरं नाभिभवन्त्यहो ! । कुकर्म्मरिपवः क्रूरा अप्यनन्त-भवानुगाः ॥५७॥
अत्र हत्यादिपापानि विलयं यान्त्यपि क्षणात् । सूर्योदये तमिस्राणि सज्जने कुगुणा इव ॥५८॥
इतस्ततः समायाता-स्तापसा बहवो गिरौ । शत्रुञ्जयस्य माहात्म्यं श्रुत्वा तेपुश्चिरं तपः ॥५९॥
तत्र शुद्धोपदेशेन तापसा अपि ते तदा । मिथ्यात्विकीं क्रियां मुक्त्वो-रुरीचक्रुर्जिनव्रतम् ॥६०॥
आलोचनां गृहीत्वाथ तयोः साध्वोश्च सन्निधौ । षष्ठाष्टमसुखं तीव्रं तपस्तन्वन्ति सन्ततम् ॥६१॥
प्रणम्य तौ प्रभुं राजा-द्न्यास्ते तापसोत्तमाः । त्रिप्रदक्षिणयांचक्रु-र्भवाब्ध्युत्तारहेतवे ॥६२॥
मासक्षपणपर्यन्ते द्राविडो वालिखिल्लयुग् । दश कोटिमितान् साधू-न्नत्वाऽशिष्टेति सादरः ॥६३॥
भवद्भिर्नाशुभं ध्यानं कर्त्तव्यं नरकप्रदम् । कर्त्तव्यं तु शुभध्यानं मुक्तिसाततिप्रदम् ॥६४॥
यतः-"प्रणिहन्ति क्षणार्द्धेन साम्यमालम्ब्य कर्म्म तत् । यन्न हन्यान्नरस्तीव्र-तपसा जन्मकोटिभिः ॥६५॥
अस्मिन्नेव महातीर्थे शुभध्यानस्य योगतः । आसाद्य केवलज्ञानं यूयं मुक्तिं गमिष्यथ ॥६६॥
द्राविडो वालिखिल्लश्चा-कार्ष्टां ध्यानं तथा तदा । यथाऽऽपतुर्द्रुतं ज्ञानं केवलं पातकक्षयात् ॥६७॥
तस्मिन् क्षणे मुमुक्षूणां दशकोटेः तमःक्षयात् । उत्पन्नं केवलज्ञानं लोकालोकप्रकाशकम् ॥६८॥
अन्तर्मुहूर्त्तान्ते सर्वे साधवो मासि कार्त्तिके । पूर्णिमास्यां स्थिते चन्द्रे कृत्तिकायां ययुः शिवम् ॥६९॥
समेत्य तत्क्षणात्तत्र ' ' केवलितामहम् । विधाय हंस इत्याह्वं ददौ तीर्थस्य तस्य तु ॥७०॥
यतः उक्तं च-"कार्त्तिकके पूर्णिमास्यां कृत्तिकास्थे निशाकरे । मुनयः केवलेनैते सिद्धिं शत्रुञ्जये ययुः ॥१॥"

यथा चैत्रस्य राकायां पुण्डरीकोऽगमिच्छिवम् । कार्त्तिकस्य तथैते तु ततो द्वे पर्वणी स्मृते ॥७१॥
चतुर्मासावधिः तुर्य-पूर्णिमास्यां भवेदपि । शिवलब्ध्युत्सवो तेषां तस्यामेव सुरैः कृतः ॥७२।
यात्रया तपसा दानाद्-देवार्चनविधानतः । अन्यतीर्थाद् भवेत् पुण्य-मनन्तं तत्र पर्वणि ॥७३। युग्मम्॥
कार्त्तिकमासि क्षपणात् तत् कर्म्म क्षपयत्यहो ? । नरकेऽब्धिशतेनापि यत्कर्म्म क्षिप्यते न हि ।७४॥
एकेनाप्युपवासेन कार्त्तिक्यां विमलाचले । ब्रह्मयोषिद्भ्रूणहत्या-पातकान्मुच्यते नरः ।.७५॥
यः कुर्यात् कार्त्तिकीं राका-मत्रार्हद्ध्यानतत्परः । स भुक्त्वा चक्रिसौख्यानि निर्वृतिं लभते द्रुतम् ॥७६॥
वैशाखकार्त्तिकमधुप्रमुखेषु मासु, राकासु यत् समविगम्य समं च सङ्घैः ।
श्रीपुण्डरीकगिरिमूर्द्धनि देवपूजां, कुर्वन्ति ते शिवसुखानि भजन्ति सद्यः ॥७७॥
यत्र स्थाने ययौ मुक्तिं द्राविडो बहुसाधुयुग् । तत्र तत्तनयः स्फारं गेहमाद्यार्हतो व्यधात् ॥७८॥
पूर्वकोटौ गतायां श्री-भरतस्य शिवोदयात् । द्राविडिर्वालिखिल्लश्च सिद्धाद्रौ जग्मतुः शिवम् ॥७९॥
सर्वे ते तापसाः क्षीण-कर्म्माणः सिद्धपर्वते । मुक्तिमैयुर्यदा देवा-स्तदा व्यधुर्महोत्सवम् ॥८०॥
तेषामपि तापसानां महोदयमहोत्सवम् । द्राविडेस्तनयश्चक्रे व्ययन् भूरितरं धनम् ॥८१॥
द्राविडेर्वालिखिल्लस्य तनया बहवः क्रमात् । राज्यं प्राप्य च सन्त्यज्य जगृहुः संयमश्रियम् ॥८२॥
क्रमाच्छत्रुञ्जये गत्वा क्षिप्त्वा शेषतमस्ततिम् । महोदयपुरीसात-मलञ्चक्रुश्च ते पुनः ॥८३॥
यत्र शत्रुञ्जयोपान्ते द्राविडिर्वालिखिल्लयुग् । दश कोट्या यतीनां तु समं मुक्तिपुरीं ययौ ॥८४॥
तत् स्थानं नृसुरैरर्चि तदानीं बहुभक्तितः । ततः क्रमाच्च मिथ्यात्व-भावेन जगृहे जनैः ॥८५॥
तत्राधुना पुरं सिद्धाह्वं विद्यते वरम् । मिथ्यात्वान्मुमुचे तीर्था-भावात् सम्यक्त्वधारिभिः ॥८६॥

卐 इति द्राविडवालिखिल्लादि-भूपालर्षिमुक्तिगमनसम्बन्धः 卐

॥ अथ जैनगीतासम्बन्धः ॥

## जहि रामाइ तिकोडी इगनवई अ नारयाइ मुणिलक्खा ।
## जाया उ सिद्धिराया जयउ तयं पुंडरी तित्थं ॥ २० ॥

यत्र तीर्थे श्रीरामः कोटित्रयसाधुयुतो मुक्तिं गतः, तथा नारदा एकनवतिःलक्षमुनियुता मुक्तिराजानोऽभूवन् जयतात् तत्तीर्थं, तथाहि--

आदित्ययशआद्येषु भूपेषु पुण्यशालिषु । असङ्ख्येषु प्रयातेष्व-योध्यायां पुरि सुश्रियि ॥१॥
विजयस्य नृपस्याभूद्-हिमचूलाभिधा प्रिया । अभूतां नन्दनौ वर्यौ वज्रबाहुपुरन्दरौ ॥२॥युग्मम्॥
धर्म्मं श्रुत्वा गुरूपान्ते लात्वा दीक्षां तमःक्षयात् । अवाप्य केवलज्ञानं विजयो मुक्तिमीयिवान् ॥३।
ततः पुरन्दरो भूपोऽभवन् न्यायिशिरोमणिः । तत्पत्नी पृथिवी कीर्त्ति-धरं पुत्रमजीजनत् ॥४॥
कुशस्थलपुरे स्वामि-भूपस्य न्यायशालिनः । सहदेवीं सुतां कीर्त्ति-धरश्च परिणीतवान् ॥५॥

पुरन्दरोऽपि राज्यं स्वं कीर्तिधराय सूनवे । वितीर्यादाद् व्रतं क्षेमं-धरसूर्यन्तिके मुदा ॥६॥
राजा कीर्तिधरोऽन्येद्यु-र्निविष्टो विष्टरे वरे । राहुणा ग्रसितं सूर्य-बिम्बं व्योम्नि व्यलोकयत् ॥७॥
दध्यौ च नृपतिः सूर्यो राहुणा जगृहे यथा । तथा जीवोऽपि ममता-युक्तो यमेन लास्यते ॥८॥
तस्मादसारमेतद्धि राज्यं नरकदायकम् । लघु मुक्त्वा व्रतं लात्वा तपः कुर्वे शिवाप्तये ॥९॥
व्रतं लास्यामि भूपेन प्रोक्ते मन्त्रीश्वरा जगुः । विना त्वां पृथिवी सर्वा कस्याधारे भविष्यति ॥१०॥
अमात्याग्रहतस्तस्य पातः पृथ्वीं नयाध्वना । सहदेवी सुतं वर्य-मसूत शुभवासरे ॥११॥
जन्मोत्सवे कृते तस्य सुकोसलेति नाम च । दत्त्वा राज्यं वितीर्या-थ व्रतं कीर्तिधरो ललौ ॥१२॥
गुरूक्त-विधिना तीव्रं तपः कुर्वन् निरन्तरम् । भिक्षार्थं नगरे तस्मि-न्नागात् कीर्तिधरो यतिः ॥१३॥

यतः-"घोरं तवं तप्पइ गिम्हकाले, मेहागमे चिट्ठइ रन्नठाणे ।
हिमंतमासेसु तवोवणत्थो झाणं पसत्थं विमलं धरे ॥१॥

भिक्षायै यान्तमालोक्य सहदेवी पतिं निजम् । दध्यौ मे नन्दनस्यैष कान्त एष्यति चक्षुषोः ॥१४॥
यदा तदा विहायाऽऽशु राज्यं लास्यति संयमम् । ततोऽधुना पुराद्वाह्य-देशे निःकाशयाम्यमुम् ॥१५॥
ततः स्वसेवकोपान्तात् तं यतिं चान्यलिङ्गिनः । राज्ञी निःकाशयामास पुर्या बहिश्च निःकृपा ॥१६॥
धात्री कीर्तिधरं साधुं कर्षितं नगराद्बहिः । सहदेव्या विलोक्यैव रुरोद करुणस्वरम् ॥१७॥
रुदतीं धात्रिकीं वीक्ष्य सुकोसलो जगावदः । माता किं रुद्यतेऽथाऽवग् धात्री स्वं नन्दनं प्रति ॥१८॥
वत्स ! मात्रा तवेदानीं पिता भिक्षाकृते स्फुटम् । प्रविष्टो नगरीमध्ये निरकासि पुराद्बहिः ॥१९॥
अतो रुदाम्यहं बाढं सुकोसलाऽवधारय । यतस्ते जननी हन्ति यतिं कान्तमपि ध्रुवम् ॥२०॥
तव पित्रादयः पूर्वं सर्वे दीक्षां ललुर्ध्रुवम् । अतोऽधुना व्रतं मा मे पुत्रोऽसौ लास्यतु ध्रुवम् ॥२१॥
ध्यात्वेति जननी तव-कीना पतिं यतिं खलु । पुरान् निःकाशयामास जानीहीदं सुतोत्तम ! ॥२२॥
ततः सुकोसलः सद्यो गत्वा पार्श्वे पितुः ध्रुवम् । वैराग्यवासितो जातः श्रुत्वा धर्म्मं जिनोदितम् ॥२३॥
तृणवत् त्वरितं राज्यं त्यक्त्वा राज्यं सुकोसलः । दीक्षां लात्वा समं पित्रा विजहाराऽवनीतले ॥२४॥
रत्नावल्यादि भूयांसि तपांसि सन्ततं करन् । सुकोसलयतिः कर्म्म क्षयति स्म क्षणे क्षणे (पुराजितम्)॥२५॥

"रयणावलि मुत्तावलि कणयावलि कुलिसमज्झ जवमज्जं ।
जियगुणसंपत्ती य विश्रविही य तह सव्वओभद्दा ॥१॥
एत्तो तिलोयसारो मुइंगमज्झा पिवीलिआमज्झा । सीसं कारयलद्धी दंसणनाणस्स लद्धीय ॥२॥
अह पंच मंदिरा वि अ केसरिकीला चरित्तलद्धी अ । परिसहजयाय पवयणमाया आइन्नसुहनामा ॥३॥
पंचनमुक्कारविहि तित्थयर सुया य सोक्खसंपत्ती । धम्मोवएसण लद्धी तहेव अणुवड्ढमाणा य ॥४॥
एआसु अन्नासु अ विहीसु दसमाइ पक्खमासेसु । वेमासिअ तिमासिअ खवेइ छम्मास जोएसु ॥५॥"

एवं तपःपरौ पुत्र-पितरौ विपुले वने । गच्छन्तौ निजकर्म्माणि क्षियतः स्मपुराजितम् ॥२६॥
इतो मृत्वाऽऽर्त्तितो राज्ञी सहदेवी दुराशया । तत्रैव कानने व्याघ्री बभूव क्रूरमानसा ॥२७॥
तत्र मेघागमे कृत्वा चतुर्मासीं च पारणे । गच्छन्तोऽतो पुरीं व्याघ्रया दृष्टः क्रूरतराशया ॥२८॥

व्याघ्री सुकोसलं चादा-वाहत्यापातयद् भुवि । विदार्य खादितुं लग्ना मांसं च तस्य निर्दयम् ॥२९॥
कल्याणखचितान् दन्तान् दृष्ट्वा व्याघ्री व्यचिन्तयत् । किमेतद् वदनं पूर्वं मया दृष्टं चिरं स्फुटम् ॥३०॥
तदा तयेचितः पूर्व-भवो जातिस्मृतेर्द्रुतम् । यावत् सा व्यरमद् व्याघ्री तावत् सद्ध्यानमाश्रिता ॥३१॥
सुकोसलस्याभवज्ज्ञानं केवलं च शिवं पुनः । कृते ज्ञानोत्सवे कीर्ति-धरस्यापि च विद्वरा ॥३२॥
सा व्याघ्री स्वं कृतं कर्म्म निन्दति ज्ञानिसाक्षिकम् । गृहीतानशना स्वर्ग-लोके समगमत्तदा ॥३३॥
देवा ज्ञानोत्सवं कृत्वा तयोर्यत्योस्तदाऽऽदरात् । जग्मुः सुरालये लान्तो गुणांश्चारित्रिणोस्तदा ॥३४॥
सुकोसलस्य पट्टेऽभूद् हरिण्यगर्भभूपतिः । तस्य पट्टेऽभवद् वर्यो नघुपो मेदिनीपतिः ॥३५॥
नघुपे शात्रवान् जेतुं गते पूर्वदिशि स्फुटम् । आगतं वैरिणश्चक्रं जिगाय सिंहका प्रिया ॥३६॥
पश्चाद् भूपः समायातो राजा ज्ञात्वा प्रियाबलम् । दूनोऽजनि निजे चित्ते शीलभङ्गादिहेतुतः ॥३७॥
अन्यदा भूपतेरङ्गे रोगोऽसाध्योऽजनि स्फुटम् । तदा केनापि वैद्येन नास्फेटि तच्छरीरतः ॥३८॥
ततो राज्ञ्या सुशीलिन्या करस्पर्शान्महीपतेः । शान्तो रोगस्ततः सर्व-प्रजाभिमुंदितं भृशम् ॥३९॥
स भूपस्त्वरितं त्यक्त्वा लात्वा गुर्वन्तिके व्रतम् । कर्म्मक्षयाद्ययौ मुक्ति-पुर्यां भूयिष्ठसाधुयुग् ॥४०॥
सोदासोऽथाऽभवत् सिंह-रथो विजितशात्रवः । ततो ब्रह्मरथो जात-श्चतुर्मुखोऽभवत्ततः ॥४१॥
ततो हेमरथशत-रथराजादयस्तथा । आदित्यरथमान्धात वैरासनस्ततः क्रमात् ॥४२॥
प्रतिमन्युनृपस्तत्र बन्धुभूमिपतिस्ततः । रविमन्युरभूद्राजा वसन्ततिलकस्ततः ॥४३॥
ततः कुवेरदत्तोऽभूत् श्रीकण्ठः शरभस्ततः । ततः सिंहो महासिंहो हरिण्यकशिपुस्ततः ॥४४॥
पुञ्जस्थलः ककुडोऽथ रघुभूमीपतिस्ततः । एतेषु निर्वृतिं केचिद् गताः केचित् सुरालयम् ॥४५॥
अनरण्यो नृपस्तस्मात् साकेतपत्तनेऽभवत् । ततोऽजयोऽभवत् पुत्रो रूपनिर्जितमन्मथः ॥४६॥
स शत्रून् स्ववशान् कुर्वन् पूर्वोपार्जितकर्म्मणा । सप्तोत्तरशतेनैव व्याधिभिः पीडितोऽजनि ॥४७॥
एवं विधामयाग्रस्तो लसत्पौरुषशालितः । साधयामास दुःसाधान् धराधीशान् परःशतान् ॥४८॥
जयन् शत्रून् महीपालः सुराष्ट्रमण्डलं ययौ । नत्वा शत्रुञ्जये देवान् गतश्च देवपत्तने ॥४९॥
इतः सांयात्रिको रत्न-सारो विभवहेतवे । आपूर्य वस्तुभिर्यानं चचालाऽम्भोधिवर्त्मनि ॥५०॥
शुभवाताचलद्यानं घस्रांस्त्रिंशत् पयोनिधौ । एकत्रिंशत्तमे घस्रे रत्नसारो वणिक्पतिः ॥५१॥
द्वीपं निरीक्ष्य भूयिष्ठं दानं विश्राणयन् भृशम् । वादित्रनिनदैः पूर्ण्य-कार्षीत् सर्वं नभस्तलम् ॥५२॥युग्मम्॥
तदाऽकस्माद् घनो व्योम छादयन्नभ्रमण्डलैः । गर्जन् करटिवद् भीष्मा-कारस्तत्रागमत् क्षणात् ॥५३॥
वात्यावर्त्तभ्रमत्पोतं वीक्ष्य सांयात्रिका जनाः । जगुर्यानस्य भङ्गेन प्राणा यास्यन्ति वोऽधुना ॥५४॥
ततः सर्वे जनाः स्वं स्वं देवं स्मरत आदरात् । एकाग्रमानसा जाता ध्यानगाः संयता इव ॥५५॥
जीवन्ति येन मेघेन वर्षता मनुजाः खलु । स एव साम्प्रतं जीवान् घातयिष्यति शीघ्रतः ॥५६॥
लुलत्कन्दुकवत् पोतः प्रहतः परितोऽधुना । कल्लोलयष्टिभिः सद्यः शतखण्डो भविष्यति ॥५७॥
यावद्यानं न शीर्येत यावद् ब्रूडन्ति नो जनाः । तावन्निपत्य पाथोधौ प्राणान् त्यजाम्यहं स्वयम् ॥५८॥
ध्यात्वेति स यदा पोत-प्रान्ते त्यक्तुमसून् ययौ । तदाऽकस्मादभूद्वाणी तच्छ्रोतो(त्र)हर्षदायिनी ॥५९॥

मा म्रियस्व स्थिरं तिष्ठ हिताय तव साम्प्रतम् । इदं मया कृतं सर्वं रत्नसार वणिग्वर ! ॥६०॥
अत्र नीरनिधेरन्तः कल्पद्रु संपुटावृता । भाविनः श्रीजिनेन्द्रस्य पार्श्वस्य प्रतिमाऽस्ति हि ॥६१॥
धरणेनाऽर्चिता वर्ष-लक्षं सा बलिसद्मनि । षड्वर्षशतयुग् वर्ष-लक्षं वैश्रमणेन च ॥६२॥
वर्षलक्षाणि सप्ताथ वरुणेन निजालये । पूजिता प्रतिमैषा च कल्याणसुखहेतवे ॥६३॥
अधुना चाऽजयक्ष्माप-भाग्याद् रोगछिदे पुनः । दातुमिच्छाम्यहं पार्श्व-बिम्बमीक्ष्वाकुजन्मनः ॥६४॥
स च जित्वा दिशः सर्वा द्वीपाख्ये पत्तने वरे । समेतोऽस्ति ततस्तस्मै देहि बिम्बं सुसम्पदे ॥६५॥
कुर्वतोऽजयपालस्य पूजां पार्श्वजिनेशितुः । यास्यन्ति निखिला रोगा भविष्यन्ति च सम्पदः ॥६६॥
तव पार्श्वजिनेशस्य तस्य पूजयतोऽनिशम् । सम्पदो राजमानत्व-मिह मुक्तिः परत्र च ॥६७॥
प्रतिमाया अहं तस्याः सेविकाऽस्मि प्रभावती । मयैतन्निखिलं चक्रे मेघविकुर्वणादिकम् ॥६८॥
आकर्ण्यैतद्वचस्तस्या रत्नसारोऽथ सेवकान् । प्रविश्य जलधौ पार्श्वं सम्पुटस्थमकर्षयत् ॥६९॥
सम्पुटं रत्नसारस्त-थावद्यानान्तरेऽनयत् । तावद् मेघो ययौ नाशं गम्भीरोऽभूत् पयोनिधिः ॥७०॥
ततः पार्श्वस्थिते द्वीपे विक्रीय च क्रयाणकम् । त्रिगुणं चार्जयामास धनं तस्मात् क्रयाणकात् ॥७१॥
समर्घवस्तुना भृत्वा यानं सांयात्रिकः स च । वहनं चालयामास द्वीपं प्रति जिनं स्मरन् ॥७२॥
पार्श्वनाथप्रभावेण रत्नसारः सुखं लघु । अनैषीद्वहनं द्वीप-पत्तनेऽतिमनोहरे ॥७३॥
प्रतिमां पार्श्वनाथस्य सप्रभावां नराननात् । आगतां नृपतिर्ज्ञात्वा-ऽदात्तस्मै पारितोषिकम् ॥७४॥
कुर्वन् महोत्सवं भूपः पादचारी प्रमोदतः । संमुखं पार्श्वनाथस्य ययौ पाथोनिधेस्तटे ॥७५॥
वाद्येषु वाद्यमानेषु नृत्यत्सु नर्त्तकेषु च । भट्टलोकेषु गायत्सु दीयमाने धनेऽर्थिने ॥७६॥
उत्सृजद्ध्वजसद्गन्धि-कर्पूरागरुधूपनैः । तत् सम्पुटं करे कृत्वा भूपस्तत्र समानयत् ॥७७॥युग्मम्॥
कृत्वा पूजोपहारादि सम्पुटं नृपतिः स्वयम् । उद्घाटयन् जिनं पार्श्वं ददर्श शेषसेवितम् ।७८॥
फणीशसेवितं छत्र-त्रयी-भासितशीर्षकम् । पद्मासनस्थितं वीज्य-मानोभय(सु)चामरम् ।७९॥
श्रीवत्सलाञ्छितो हृष्ट (रस्कं) कल्पद्रुमसहोदरम् । बिम्बं श्रीपार्श्वनाथस्य ददर्शाऽवनिनायकः ॥८०॥
निजनामाभिधं ग्राम-मजयाह्वं मनोहरम् । वासयित्वा जिनागारं महत्तममचीकरत् ॥८१॥
कारयित्वा जिनागारं स्फारं ग्रामान्तरे नृपः । तस्मिन्नतिष्ठिपत् पार्श्व-प्रतिमां रुचिरोत्सवम् ॥८२॥
प्रभोः स्नात्राम्बुना राज्ञोऽन्येषां च देहिनां तदा । रोगा ययुः क्षयं ऋद्धि-वृद्धिश्च समजायत ॥८३॥
पार्श्वस्य प्रतिमां रत्न-सारस्यार्चयतः सतः । त्रिंशत्कोटिमितं हेम जातं गेहे नृपं पुनः ॥८४॥
शाकिनी-भूत-वैताल-रक्षो-यक्षोद्भवा अपि । उपसर्गाः क्षय यान्ति श्रीपार्श्वस्मरणात् किल ॥८५॥
कालज्वर-विषोन्माद-सन्निपातमुखा अपि । आमया विलयं यान्ति श्रीपार्श्वस्मरणाद् नृणाम् ॥८६॥
विद्या-लक्ष्मी-प्रिया-पुत्र-पुत्री-कीर्त्त्यभिलाषिणाम् । विद्यादयो भविष्यन्ति श्रीपार्श्वस्मरणात् नृणाम् ॥८७॥
प्रतिमा बहुकालीना तीर्थमेवोच्यते बुधैः । इदं तीर्थमतः सेव्यं सुरासुरनरैरपि ॥८८॥
यतः-"पञ्चवर्षशतातीतं तद्बिम्बं तीर्थमेव हि । वर्षलक्षव्यतीतस्य बिम्बस्य तु किमुच्यते ॥१॥"
शत्रुञ्जयेऽजयो राजा स्फारं सर्वज्ञमन्दिरम् । कारयित्वाऽऽदिदेवस्य प्रतिमां तु न्यवीविशत् ॥८९॥

क्रमात् स्वराज्यमासाद्य कुर्वन् धर्म्मं जिनोदितम् । पूजां श्रीवृषभेशस्य चकार प्रतिवासरम् ॥९०॥
प्रान्तेऽजयनृपोऽनन्त-रथं स्वं नन्दनं वरम् । स्वपट्टे न्यस्य जग्राह संयमं गुरुसन्निधौ ॥९१॥
अनन्तरथभूपस्य पुत्रो दशरथाभिधः । बभूव विक्रमाऽऽक्रान्त-वैरिवर्गो महाभुजः ॥९२॥
अन्यदा संसदि क्ष्मापे निविष्टे नारदो मुनिः । आगतो भूभुजा पृष्टो वार्त्तां विनयपूर्वकम् ॥९३॥
कुत आगास्त्वं किं दृष्टं ? ततो नारद ऊचिवान् । महाविदेहमध्येऽस्ति नगरी पुण्डरीकिणी ॥९४॥
तत्र सीमन्धरस्तीर्थ-करोऽलात् संयमश्रियम् । महोत्सवो महान् दृष्टः क्रियमाणः सुरेश्वरैः ॥९५॥
यतः-"अह अन्नया कयाइ सहाए मज्झम्मि दसरहो राया । चिट्ठइ सुखासणत्थो तावत्तिअ नारओ पत्तो ॥१॥
अब्भुट्ठिओ य सहसा नरवइणा आसणे पुह निसन्नो । परिपुच्छिओ य भयवं कुतोऽसि तुमं परिभमीओ ? ॥२॥
दाऊणं आसीसं भणइ तओ नारओ जिणहराणं । वंदणनिमित्तहेउं पुव्वविदेहे गओ अहयं ॥३॥
अहं पुंडरीगिणीए सीमंधरजिणवरनिक्खमणं दिट्ठं । मए महायस ! सुर-असुर-समाउलं तत्थ ॥४॥
सीमंधरं भगवंतं नमिऊण चेइयाइं तत्थ पुणो । मंदरगिरिं गओऽहं पणमामि जिणालये उड्ढे ॥५॥"
केचिदाहुः-"एवं इक्खागकुले समइकंतेसु नरवरिंदेसु । साएयपुरवरीए अणरणो पत्थिवो जाओ ॥१॥
तस्स महादेवीए पुहईए दो सुआ समुप्पन्ना । पढमो अणंतरहो (अ) बीओ पुण दसरहो नाम ॥२॥
अणरणो विअ नरवइ पुत्तं चिअ दसरह ठविअ रज्जे । निक्खमइ सुयसमग्गो पासे मुणि अभयसेणस्स ॥३॥
छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखवणेहिं । काऊण तवं घोरं अणरणो गओ मोक्खं ॥४॥
साहूवि अणंतरहो अणंतबलवीरिअसत्तसंपन्नो । संजमतवनियमरओ संपत्तो सासयं ठाणं ॥५॥"
तस्य न्यायाध्वना पृथ्वी-पीठं पालयतः सदा । चतस्रो वल्लभा आसन् शीलरत्नविभूषिताः ॥९६॥
कौशल्या कैकेय्याह्वा च सुमित्रा सुप्रभा तथा । रूपनिर्जितकन्दर्पाः पत्न्यो नाम्ना क्रमादिमाः ॥९७॥युग्मम्॥
कुम्भसिंहेभमार्त्तण्ड-स्वप्नाभिसूचितं सुतम् । कौशल्याऽसूत तनयं रामं पद्मं च नामतः ॥९८॥
सिंहार्केन्दुगजाग्निश्री-वार्द्धिस्वप्नोपसूचितम् । सुमित्रा लक्ष्मणं नारा-यणं सूते स्म नन्दनम् ॥९९॥
कैकेयी सुषुवे सुष्ठु-स्वप्नाढ्यं भरतं सुतम् । असूत सुप्रभा पुत्रं शत्रुघ्नाभिधमद्भुतम् ॥१००॥
पद्मनारायणौ प्रीति-भाजौ जातौ क्रमान्मिथः । शत्रुघ्नभरतौ प्रेम-परौ परस्परं पुनः ॥१०१॥
इतश्च मिथिलापुर्यां भूपोऽभूज्जनकाभिधः । हरिवंश्या विदेहेत्य-भिधा तस्याऽभवत् प्रिया ॥१०२॥
पुत्रपुत्रीयुगं वर्यं विदेहा सुषुवे सुखम् । प्राग्जन्मवैरतोऽहार्षीत् पिङ्गलसुः सुतं रहः ॥१०३॥
सञ्जातकरुणो देवो भूषणैः कुण्डलादिभिः । भूषयित्वाऽमुचत्तु वैताढ्यस्य वने क्वचित् ॥१०४॥
रथनूपुरतः स्वामी खगश्चन्द्रगती रहः । तमासाद्यार्पयत् पुष्प-वत्या पत्न्यास्ततो जगौ ॥१०५॥
त्वयोच्यं तनयोऽसावि मयाऽद्य गूढगर्भया । पत्योक्ते विहिते पत्न्या भूपो जन्मोत्सवं व्यधात् ॥१०६॥
सन्मान्य सज्जनान् सूनो-र्देहे भामण्डलेक्षणात् । भामण्डल इति क्ष्मापो नामाऽदात् सज्जनान्वितः ॥१०७॥
लाल्यमानस्तदा पित्रा भामण्डलो दिने दिने । यौवनं युवतीमोह-करं प्राप स रूपभाग् ॥१०८॥
इतो हृतं सुतं मत्वा विशोको जनको नृपः । सीताभिधां ददौ पुत्र्याः सर्वसज्जनसाक्षिकम् ॥१०९॥
सम्प्राप्तयौवनां सीतां दृष्ट्वा जनकभूपतिः । वरचिन्तापयोराशौ पपाताऽतनुविक्रमः ॥११०॥

तदाऽकस्मात् समागत्य म्लेच्छा दैत्या इवोद्धताः । जनकक्ष्मापतेर्देश-मुपाद्रोषुर्जनानपि ॥१११॥
स्वदेशपीडनोदन्तं प्रेष्य स्वसेवकान् रहः । सौहार्दाद् ज्ञापयामास दशरथाय भूभुजे ॥११२॥
चलन्तं पितरं मित्र-सानिध्यहेतवे तदा । निषिध्य चलितो रामो गृहीत्वा शिबिरं कियत् ॥११३॥
रामो जनकभूपान्ते गत्वा नत्वा द्विषद्व्रजम् । नाशयामास मार्त्तण्डा इव ध्वान्तगणं क्षणात् ॥११४॥
प्रहृष्टो जनको राम-मानीयोत्सवपूर्वकम् । सदन्नपानदानेन गौरवं विदधेतराम् ॥११५॥
ध्यातवान् जनकः पुत्री रामाय दीयते यदि । तदा योगो भवेद्वर्यो हरिशच्योरिवानिशम् ॥११६॥
रामे स्वनगरे याते सीतादृग्गोचरे तदा । नारदश्छत्रिकाशोभी पिङ्गकेशः समागमत् ॥११७॥
तदा च विस्म्यती सीता यावन्नष्टा च तावता । नारदश्च गले धृत्वा तत्सख्या हक्कितो द्रुतम् ॥११८॥
रुष्टोऽथ नारदः सीता-रूपं चित्रपटस्थितम् । कृत्वा भामण्डलस्यैव दर्शयामास तत्क्षणात् ॥११९॥
सीतारूपं जगत्श्लाघ्यं दृष्ट्वा भामण्डलस्तदा । मनोभूविह्वलो जात-स्तां वरीतुं च वाञ्छति ॥१२०॥
सीताया वरितुं वाञ्छां ज्ञात्वा भामण्डलस्य तु । खगश्चन्द्रगतिर्भृत्यं प्रति प्राहेति सादरम् ॥१२१॥
गच्छ त्वं जनकस्यान्ते जल्पेति मद्गिरा किल । खगश्चन्द्रगतिः सीतां भामण्डलाय वाञ्छति ॥१२२॥
तदा चन्द्रगतेर्भृत्यो गत्वा जनकसन्निधौ । स्वस्वामिगदितं यात्र-दाहाऽथ जनको जगौ ॥१२३॥
रामायाऽहं स वाञ्छामि सीतां दातुं पुरा ध्रुवम् । अधुनेच्छास्ति न दातुं भामण्डलाय निश्चितम् ॥१२४॥
वज्रावर्त्तार्णवावर्त्ते द्वे चापे स्तो ममालये । देवताधिष्ठिते जीवा-सबले वज्रवद् दृढे ॥१२५॥
यस्तयोश्चापयोर्मौर्व्या-रोपं किल करिष्यति । तस्मै सीतां प्रदास्यामि कन्यामन्यां च सुन्दराम् ॥१२६॥
माघशुक्लाष्टमीघस्रे स स्वयंवरमण्डपे । भूपा आकारयिष्यन्ते सीतावरणहेतवे ॥१२७॥
तत्रैकस्मिन्नपीष्वासे द्वयोर्वा यो नरो गुणम् । आरोपयिष्यति सोऽह्नाय सीतां परिणयिष्यति ॥१२८॥
भामण्डलो दिने तस्मिं-स्तत्रागच्छतु शीघ्रतः । चापोत्पाटनतः सीता-मङ्गीकुर्यात्तदा ध्रुवम् ॥१२९॥
जल्पिते जनकेनेति भृत्यश्चन्द्रगतेस्तदा । गत्वा जनकभूपोक्तं सर्वं स्वामिपुरोऽवदत् ॥१३०॥
माघशुक्लाष्टमीघस्रे बहवोऽवनिपाः खगाः । आकारिताः समाजग्मु-स्तत्र सीतार्थहेतवे ॥१३१॥
भामण्डलोऽपि सीतायाः पाणिपीडनहेतवे । तस्मिन् समागतोऽनेक-विद्याधरनिषेवितः ॥१३२॥
चञ्चद्विमानमारूढा सुवेषा सुसखीवृता । दिनोदये दिने तस्मिन् सीता मण्डपमागमत् ॥१३३॥
राज्ञां वंशावली चैवं वर्ण्यमाना सुगायनैः । उत्पाटयितुमुर्वीशा ववाञ्छुर्धनुषी तदा ॥१३४॥
अङ्ग-भङ्ग-तिलङ्गादि-भूपास्ते धनुषी तदा । उत्पाटयन्त आश्वाऽऽप्य मूर्च्छां पेतुश्च भूतले ॥१३५॥
भामण्डलोऽपि ते चापे उत्पाटयन् करे करन् । कम्पमाप्य द्रुतं पश्चात् स्वस्थाने समुपाविशत् ॥१३६॥
उत्थाय लीलया रामो धनुरुत्पाट्य चादिमम् । अधिज्यं विदधे चञ्चत्–टणत्कारपुरस्सरम् ॥१३७॥
पुष्पवृष्टौ कृतायां तु सुरैर्जयजयारवम् । सीता चिक्षेप रामस्य कण्ठे वरस्रजं तदा ॥१३८॥
लक्ष्मणेन द्वितीये तु चापे आरोपिते सति । उर्मिका कन्यकाऽक्षैप्सीत् तस्य कण्ठे वरस्रजम् ॥१३९॥
अष्टादश तदा कन्या लक्ष्मणाय वरात्मने । खेचराः प्रददुश्चारु-महोत्सवपुरस्सरम् ॥१४०॥
अङ्गीचक्रेऽथ भरतो भद्रां कनकभूपजाम् । शत्रुघ्नाय ददौ कन्यां पुत्रीं नन्दाभिधां खगः ॥१४१॥

वस्त्रादिदानतः सर्वान् भूपान् सन्मान्य मोदतः । स्वं स्वं पुरं प्रति क्ष्मापो जनको ऽचालयत् क्रमात् ॥१४२॥
अश्वादिदानतो भूमी-भुजा दशरथो नृपः । सन्मानितश्चतुःपुत्र-युतः स्वपुरमीयिवान् ॥१४३॥
भामण्डलोऽपि रामेण सह प्रीतिं दधन् भृशम् । आगाद् दशरथेनाऽमा तत्रैव नगरे तदा ॥१४४॥
रामेण मानितोऽत्यन्तं वस्त्रान्नादिप्रदानतः । भामण्डलो ययौ स्वीये पुरे व्योमगसेवितः ॥१४५॥
सर्वासां तु वधूटीनां वासावासान् पृथक् पृथग् । ददौ दशरथः क्ष्मापः सन्मानदानपूर्वकम् ॥१४६॥
राजा दशरथो लात्वा बलमश्वेभशालिनम् । साधयामास भूपीठं सागरान्तिकमञ्जसा ॥१४७॥
स्वकारिते जिनागारे-ऽन्यदा दशरथो नृपः । स्नात्रं विस्तरतश्चक्रे शान्तेस्तीर्थपतेर्मुदा ॥१४८॥
मङ्गलार्थं जिनस्नात्र-पयः पृथक् पृथग् नृपः। राज्ञीभ्यः प्रेषयामास वधूटीभ्यश्च सादरम् ॥१४९॥
भूपेन प्रेषितं स्नात्र-पयो राज्ञीभ्य आर्हतम् । स्वपार्श्वे नागतं मत्वा सुमित्रा मर्तुमिच्छति ॥१५०॥
मर्तुं पाशं गले यावत् सुमित्रा क्षिपति स्वयम् । तावद् दृष्ट्वा नरः कश्चिद् भूपाग्रे तन् न्यवेदयत् ॥१५१॥
तत्रैत्य त्वरितं पाशं सुमित्राकण्ठगं नृपः । छित्वा प्राह प्रिये ! प्राण-त्यागः किं क्रियते त्वया ? ॥१५२॥
सुमित्राऽवक् त्वयाऽन्यासां राज्ञीनां स्नात्रजं पयः । प्रेषितं न हि मह्यं तु म्रियेऽहं तेन पाशतः ॥१५३॥
राजा प्राह मया प्रैषि तुभ्यं स्नात्रपयस्तदा । तत्रैत्य वामनो नीरं लात्वा तत्रागमच्चिरात् ॥१५४॥
राजाऽवग् वामनोत्सूरे त्वयाऽत्राऽऽनायि किं पयः ? । वामनः प्राह वार्द्धत्वा-दंह्र्योर्मन्दगतिर्मम ॥१५५॥
आकर्ण्यैतत्तदा दध्यौ सुमित्रा मयका मुधा । कान्तस्योर्ध्वं कृतः क्रोधो मर्तुं च वाञ्छितं मुधा ॥१५६॥
यतः-"अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहा द्वर्द्धतेऽन्यस्य वारितः ॥१॥
न कश्चित् चण्डकोपाना-मात्मीयोऽस्तीह भूतले । होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥२॥
इक्कोहुं जाणइ कोइ पाणी मही पालेवणउं । वाहिरि धूम न होइ अब्भितर भडके बलइ ॥३॥"
भूपो दध्यौ मृगाक्षीणा-मीर्ष्येदृक्षा प्रजायते । पापबुद्धिः स्त्रियामेव नृणां चित्ते न विद्यते ॥१५७॥
एवं चिन्तयतो राज्ञोऽभ्येत्यावग् वनपालकः । उद्याने कमलाचार्यो ज्ञानी च (व) समवासरत् ॥१५८॥
दानं तस्मै वितीर्यादौ राजा रामादिपुत्रयुग् । नन्तुं सूरिं ययौ यावद् भामण्डलस्तदाऽगमत् ॥१५९॥
प्रदक्षिणात्रयीं दत्त्वा सूरे राजाऽथ देशनाम् । श्रोतुं-चोपाविशद् याव-त्तावज्ज्ञानी जगावदः ॥१६०॥
पात्रमुत्तमगुणैरलङ्कृतं दायकस्तु पुलकं दधत्तनौ। देयवस्तु परिशुद्धपुष्कलं निष्कलङ्कतपसामिदं फलम् ।१६१।
यस्य कुक्षिगतं चान्नं शास्त्राभ्यासेन जीर्यति । तारयेत् स्वं परांश्चापि दश पूर्वान् दशाऽपरान् ॥१६२॥
पौषध-प्रतिमा-पार्श्व-सेवा-पद्मप्रभार्चनाः । परमेष्ठिपरं ध्यानं पुण्डरीकश्च मुक्तिदाः ॥१६३॥
स्पृष्ट्वा शत्रुञ्जयं तीर्थं नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे पुनर्जन्म न विद्यते ॥१६४॥
आकर्ण्यैतद्दशरथो जगौ शत्रुञ्जये जिनः । न नम्यते मया यावद् भूरिसङ्घौघशालिना ॥१६५॥
तावन्मयैकशो भोज-नीयं वासरमध्यतः । भूशय्या ब्रह्मचर्यं च ताम्बूलवर्जनं पुनः ॥१६६॥
सचित्तानां परित्यागः एकैव विकृतिः पुनः । गृहीतव्या मया नूनं भवत्त्वेवमभिग्रहः ॥१६७॥
ततो भामण्डलोऽवादीद् भगवन् ! किं मनो मम । सीतां दृष्ट्वा विकसति वार्द्धिश्चन्द्रोदयं यथा ? ॥१६८॥
ज्ञानी प्राह पुरे चक्रे चक्रध्वजमहीपतेः । मनःसुन्दर्यभूत् पत्नी पुत्री च रतिसुन्दरी ॥१६९॥

गेहगर्भे बुधोपान्ते पठन्ती रतिसुन्दरी । पुरोहितसुतो दृष्ट्वा राग्यभून्मधुपिङ्गलः ॥१७०॥
यतः-'पढमं चिअ आलावो आलावाओ रइ रइओ वीसंभो । वीसंभाओ पणओ पणयाओ वुड्ढए पेम्मं ॥१॥'
तां कन्यां पिङ्गलो हृत्वा विदर्भनगरे वरे । गत्वा कस्मिन् गृहे स्थित्वा भोगी जातो तया समम् ॥१७१॥
क्रमान्निष्ठितलक्ष्मीकः पिङ्गलस्तृणदारुभिः । विक्रीतैर्निजनिर्वाहं कुरुते गेहिनीयुतः ॥१७२॥
वहिर्वनेऽन्यदा पत्नीं पिङ्गलस्य मनोहराम् । रथकुण्डल आलोक्य हर्तुकामोऽभवद् हृदि ॥१७३॥
दूतीमुखात् प्रलोभ्याथ कुण्डलो मदनातुरः । आनीय तां स्त्रियं भुङ्क्ते लक्ष्मीमिव चतुर्भुजः ॥१७४॥
अनीक्ष्य गेहिनीं तत्र पिङ्गलो दुःखितो भृशम् । दीनास्यो नरपोपान्ते गत्वाऽवग् मे प्रिया गता ॥१७५॥
रथकुण्डल आचष्ट पोतनाभिधपत्तने । एका नारी मया दृष्टा साध्वीपार्श्वे मनोहरा ॥१७६॥
गत्वा तत्र पुरे पत्नी-मदृष्ट्वा मधुपिङ्गलः । पुनः पश्चात् समेत्याऽवग् न दृष्टा स्वप्रिया मया ॥१७७॥
कुण्डलेन तदा हत्वा नृपपार्श्वाच्च पिङ्गलम् । बहिर्निष्कासयामास तत्पत्न्यासक्तचेतसा ॥१७८॥
ततोऽन्यत्र पुरे दीनः पिङ्गलः साधुसन्निधौ । धर्मं श्रुत्वा ललौ दीक्षां भवाम्रातच्छिदं तदा ॥१७९॥
तपस्तीव्रं वितन्वानः पिङ्गलर्षिर्हिमागमे । सहते शीतमुष्णं च तापमन्यत्र यत्नवान् ॥१८०॥
दुर्गेऽतिविषमे तिष्ठन् कुण्डलो दुर्दमो बली । अणरणमहीशस्य देशं भनक्ति सन्ततम् ॥१८१॥
देशं विनाशितं तेन बहु श्रुत्वा महीपतिः । यियासुरभवद्यावत्-त्वं हन्तुं कुण्डलं रिपुम् ॥१८२॥
तावदादेशमादाय बलचन्द्रो महाभटः । प्रणम्य भूपतिं हन्तुं तं शत्रुमचलत् पुरात् ॥१८३॥
बलचन्द्रश्छलं कृत्वा गत्वा तत्र रणाङ्गणे । बद्ध्वाथ कुण्डलं दुर्गं तमात्मीयं व्यधात् द्रुतम् ॥१८४॥
आगत्य स्वपुरे स्वामि-पार्श्वे तं बलिनं रिपुम् । मुक्त्वाऽनंसीद्यदा बल-चन्द्रो हृष्टो नृपस्तदा ॥१८५॥
तुष्टो नृपो ददौ तस्मै भृत्याय कमलां बहु । कुण्डलं ताडयित्वाथ चिक्षेप गुप्तिवेश्मनि ॥१८६॥
सूनोर्जन्मनि भूपेन रथकुण्डलमण्डितः । मुक्तोऽन्यबन्दिसंयुक्तो हर्षपूरितचेतसा ॥१८७॥
गच्छन् वनेऽन्यदाऽन्यत्र रथकुण्डलमण्डितः । साधुं दृष्ट्वाऽनमद्धर्म्मं श्रुत्वा च जिनजल्पितम् ॥१८८॥
तथाहि-"हिंसा पुण जीववहो सोवि अ मंसस्स कारणं होइ । तम्हा कुण जीवदयं सासयसुक्खकए सययं ॥१॥
[आ] संसारत्था जीवा आसि चिय बंधवा परभवेसु । खायंतएणं मसं ते सव्वे भक्खिआ नवरम् ॥२॥
जे इत्थ जीववहया महुमंससुराइलोलुया पावा । ते हु मुआ परलोए हवंति नरएसु नेरइआ ॥३॥
जो पुण मंसनिवित्तिं कुणइ नरो सीलदाणरहिओवि । सोवि अ सग्गाइगमणं पावइ नत्थेत्थ संदेहो ॥४॥"
श्रुत्वेति कुण्डलः श्राद्ध-धर्म्मं जीवदयामयम् । अङ्गीचक्रे गुरूपान्ते चश्चद्विनयपूर्वकम् ॥१८९॥
ततो नत्वा यतिं गच्छन् श्राद्धधर्म्मं जिनोदितम् । प्रपालयन् कुण्डलो याम्य-दिशम्प्रत्यचलत् क्रमात् ॥१९०॥
अटव्यां सलिलाभावात् तृषाऽऽक्रान्तोऽथ कुण्डलः । दध्यौ जीव ! त्वया भूरि पीतं वारि पुरा ध्रुवम् ॥१९१॥
यतः-"जंणेण जलं पीयं घम्मायवजगडिएण तंपि इहं । सव्वेसु वि अगडन्तलाय-नई-समुद्देसु नवि हुज्जा ॥१॥
नहदंतमंसकेसट्ठिएसु जीवेण विप्पमुक्केसु । तेसुवि हविज्ज केलास-मेरुगिरिसंनिभा कूडा ॥२॥
हिमवंत-मलय-मन्दर-दीवोदहिधरणिसरिसरासीओ । अहिअयरो आहारो छुहिएणाहारिओ हुज्जा ॥३॥
पीयं थणयच्छीरं सागरसलिलाउ हुज्ज बहुअयरं । संसारम्मि अणंते माऊणं अन्नमन्नाणं ॥४॥

पत्ता य कामभोगा कालमणंतं इहं स उवभोगा । अप्पुव्वं पिव मन्नइ तहवि य जीवो मणे सुक्खं ॥५॥
तदा ध्यायन्निति प्राण-त्यागात् कुण्डलमण्डितः । जनकक्ष्मापगेहिन्याः कुक्षौ च समवातरत् ॥१९२॥
तदा तप्त्वा तपस्तीव्र-तरं वेगवती सती । गत्वा स्वर्गे ततश्च्युत्वा पत्न्या जनकभूपतेः ॥१९३॥
गर्भे समागता पूर्व-वर्यपुण्योदयान्ननु । ततो जनकगेहिन्या गर्भे युग्मं विवर्द्धते ॥१९४॥
तदा मृत्वा सुरो भूत्वा पिङ्गलः श्रमणो ध्रुवम् । वैरं ज्ञात्वा रुषाद् गर्भे तौ स्तम्भाति स्म निर्दयम् ॥१९५॥
ततो जनकगेहिन्या विदेहाया जिनार्चनम् । कुर्वाणाया अभून्मुक्ति-र्गर्भस्य पुण्ययोगतः ॥१९६॥
विदेहा पुत्रपुत्र्यौ च यावत् सूते स्म सौख्यतः । तावत् स पिङ्गलो देवो जहार जनकाङ्गजम् ॥१९७॥
दूरं नीत्वा शीलायां त्वा-ऽऽस्फालयन् ध्यातवान् स च । किं मया मौढ्यतो बालो हन्यते क्रूरचेतसा ॥१९८॥
ध्यात्वेति तं शिशुं हार-कुण्डलाभ्यां समन्वितम् । मुक्त्वा तत्रैव देवः स निजं स्थानं समीयिवान् ॥१९९॥
तदा तत्राऽऽगतश्चन्द्र-गतिर्विद्याधरोत्तमः । लात्वाऽभ्येत्य गृहे प्राह वनदेव्याऽर्पितः सुतः ॥२००॥
ततो भामण्डलेत्याह्वां दत्त्वा तस्य खगेश्वरः । वर्धयद्भूरिशो विद्या-स्तस्मै वितीर्णवान् स्वयम् ॥२०१॥
अस्मिन्नेव भवेऽतस्ते भगिनी जनकात्मजा । भामण्डल ! विजानीहि वियोगः कर्म्मणोऽभवत् ॥२०२॥
भवतो जनकोऽभूत् ते विदेहा जननी पुनः । वियोगात्तव पत्न्या युग् जनको दुःख्यजनिष्ट च ॥२०३॥
यतः-'उल्लो सुक्को य दो छूढा गोलया मट्टिया मया । दोवि आवडीया कुड्डे जो उल्लो सोत्थ लग्गई ॥१॥'
भामण्डलो निशम्येति नत्वा सीतापदाम्बुजम् । जगौ मया कृतो रागो भवत्यां दुःखदायकः ॥२०४॥
तेन रागेण मे श्वभ्रे पात एव भविष्यति । अतस्त्वया भगिन्यत्र क्षम्यतां मयि साम्प्रतम् ॥२०५॥
तत आलोचनां लात्वा ज्ञानिपार्श्वे स्वशक्तितः । भामण्डलोऽखिलं पापं स्वं निनिन्द मुहुर्मुहुः ॥२०६॥
आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसगासे । जइ अंतरावि कालं करेज्ज आराहओ तहवि ॥२०७॥
ततो भामण्डलो गत्वा जनकेश-विदेहयोः । मातापित्रोर्मिलित्वाशु प्रमोदं तनुतेतराम् ॥२०८॥
सीतायाः स्वस्य सम्बन्धं ज्ञान्युक्तं मातृतातयोः । पुरतः प्रोक्तवान् सद्यो भामण्डलस्तनूभवः ॥२०९॥
ततो वैताढ्यभूमित्रे दक्षिणश्रेणिशालिनि । रथनूपुरपूर्यां तु भामण्डलो नृपोऽजनि ॥२१०॥
खगश्चन्द्रगतिः प्राप्य चारित्रं विमलं क्रमात् । सर्वकर्म्मक्षयान्मुक्ति-नगर्यां समुपेयिवान् ॥२११॥
इतो दशरथो भूपः प्रेष्य कुङ्कुमपत्रिकाम् । सङ्घमाकारयामास यात्रार्थं सिद्धपर्वते ॥२१२॥
हैमा देवालया सप्त शतानि विंशतिः पुनः । वरकाष्ठमया दन्त-मयाश्चत्वार एव च ॥२१३॥
सङ्घाधिपाः शतान्यष्टौ मनुजाः पञ्च कोटयः । राजानः शतमेकं च महेभ्या गणनातिगाः ॥२१४॥
इत्यादि सङ्घसंयुक्तो राजा दशरथस्तदा । रामादिपुत्रसंशोभी भामण्डलसमन्वितः (युतोऽचलत्) ॥२१५॥
याचकेभ्यो ददद्दान-मसङ्ख्यं मेदिनीपतिः । पठत्सु बन्दिषु प्रोच्चै-र्निनदं बिरुदावलीः ॥२१६॥
ददानासु पुरन्ध्रीषु धवलानि वरारवम् । सिद्धाद्रावर्हतो नन्तुं चचाल सुखमध्वनि ॥२१७॥
ग्रामे ग्रामे पुरे द्रङ्गे जिनपूजनतत्परः । प्रभावनां व्यधाद् भूपः कैवल्यसुखदायिनीम् ॥२१८॥
मार्गे सिद्धाचलं वीक्ष्य जिनपूजापुरस्सरम् । लम्भयामास भूपालः श्रीसङ्घे लपनश्रियम् ॥२१९॥
ततश्चलन् महीपालो गत्वा सिद्धाद्रिसन्निधौ । सङ्घेशतिलकं सङ्घ-पतिपार्श्वादकारयत् ॥२२०॥

आरुह्य पुण्डरीकाद्रिं स्नात्रपूजे जिनेशितुः । कृत्वा ध्वजपताकाया दानं चक्रे जिनालये ॥२२१॥
आरात्रिकोऽथमङ्गल-दीपावर्त्ति छिदे तदा । कृत्वा चक्रे नृपो भाव-स्तुतिं स्तोत्रविधानतः (?) ॥२२२॥
नाभेयपादुके पुष्पैः पूजयित्वा नरेश्वरः । अक्षतैर्वर्द्धयामास तदा राजादनीं मुदा ॥२२३॥
अन्येषु जिनगेहेषु पूजयित्वाऽर्हतो मुदा । भूपालो वारिकामत्र दीनादवाहयत्तदा ॥२२४॥
सिद्धाद्रावादिदेवस्य प्रासादं विपुलं तदा । कारयामास कल्याण-सुखायाऽवनिनायकः ॥२२५॥
प्रतिलाभ्य गुरून् भक्त्या नत्वा च मेदनीपतिः । धर्म्मोपदेशनां धर्म्म-सूरिपार्श्वेऽशृणोदिति ॥२२६॥
यतः-'जं लहइ अन्नतित्थे चरणेन तवेण बंभचेरेण। तं लहइ पयत्तेण सित्तुञ्जगिरिम्मि संपत्तो (निवसंतो) ॥१॥
जं कोडीए पुण्णं कामियआहारभोइया जे उ । तं लहइ तत्थ पुण्णं एगोववासेण सित्तुंजे ॥२॥
जो पडिमं चेइहरे सित्तुंजगिरिस्स मत्थए कुणइ । भोत्तूण भरहवासं वसइ सग्गे निरुवसग्गे ॥३॥
जो पुण तवं च तप्पइ उड्ढभूओ इक्कपाय निक्कंपो । सित्तुंजे चडिऊणं होइ सुरिंदो नरिंदो वा ॥४॥
छत्तं ज्झयं पडागं चामरभिंगारन्हवण कलसा य । वलिथालं सित्तुंजे दिंतो विज्जाहरो होइ ॥५॥
नवकार-पोरिसीए पुरिमड्ढेकासणं च आयामे । पुंडरीअं च सरंतो फलकंखी कुणइ अभतट्ठं ॥६॥
छट्ठट्ठम-दसमदुवालसाइं मासद्धमासखमणाइं । तिगरणसुद्धो लहइ सित्तुजं संभरंतो उ ॥७॥' इत्यादि ।
भूपो दशरथः पुष्पैः प्रवरैर्दिवसोदये । प्रपूज्योत्तताराद्रेः सिद्धात् सङ्घसमन्वितः ॥२२७॥
जिमयित्वाऽखिलं सङ्घं परिधाप्याम्बरैर्वरैः । भूपश्चलन् ययौ चन्द्र-प्रभाभिधे च पत्तने ॥२२८॥
तत्र चन्द्रप्रभं देवं पूजयित्वाऽतिविस्तरात् । प्रासादं कारयामास चन्द्रप्रभजिनेशितुः ॥२२९॥
सीता सतीशिरोरत्नं प्रासादमपरं पुनः । कारयित्वा तदा चन्द्र-प्रभबिम्बं न्यवीविशत् ॥२३०॥
ततो रैवतके नेमिं नत्वा चाश्चर्यं भूधवः । तत् सद्म कारयामास शम्भुपर्वतसोदरम् ॥२३१॥
कैकेयी वरटक्ष्माध्रे गत्वा नत्वा जिनेश्वरम् । प्रासादमादिदेवस्य कारयामास रैव्ययात् ॥२३२॥
रामेण वरटे शैले कारिते शान्तिमन्दिरे । न्यवीविशज्जिनं शान्तिं महामहःपुरस्सरम् ॥२३३॥
ढङ्कशैलान्तिके ढङ्क-पुर्यां श्रीऋषभप्रभोः । बिम्बं न्यवीविशद्रामः प्रासादे कारिते स्वयम् ॥२३४॥
वल्लभ्यां पुरि सर्वज्ञ-गेहे निष्पादिते स्वयम् । सुप्रभा शान्तिबिम्बं तु न्यवीविशद्वरोत्सवम् ॥२३५॥
काम्पील्ये नगरे राम ऋषभस्य जिनेशितुः । लक्ष्मणो वामनस्थल्यां प्रासादं च वरं व्यधात् ॥२३६॥
रामादिभिः सुतैर्मण्ड-लीकैर्ग्रामण्डलादिभिः । शत्रुञ्जयादितीर्थेषु प्रासादाः कारिता वराः ॥२३७॥
एवं दशरथो यात्रां कृत्वा तीर्थेषु भूरिषु । समहं स्वपुरीमागात् श्रीसङ्घं विससर्ज च ॥२३८॥
भवोद्विग्नोऽन्यदा भूपो रामादिनन्दनान् समान् । आकार्य राज्यमात्मीयं रामाय ददते यदा ॥२३९॥
कैकेयी कपटाऽभ्येत्य तदा पत्युः पुरो जगौ । तव पार्श्वे वरौ द्वौ तु विद्येते मम सम्प्रति ॥२४०॥
रणे पङ्के रथो मग्नो मयाऽकर्षि यदा पते ! । तदोक्तं भवता राज्यं तव पुत्राय दास्यते ॥२४१॥
रोगे समागते प्रोक्तं भवतेति वरो वरः । याच्यतां तु मयेत्युक्तं याचिष्येऽवसरे खलु ॥२४२॥
यतः-"प्रायः पुमांसः सरलस्वभावा, रण्डास्तु कौटिल्यकलाकरण्डाः ।
तातोऽयाचे कथमन्यथाऽस्मिन्, काले वरं कैकेयसम्भवेयम् ॥१॥"

राज्यमेकवरेणैव देहि मे सूनवेऽधुना । द्वितीयवरतो रामो वने द्वादश हायनान् ॥२४३॥
तिष्ठतात् सीतया युक्त-स्ततो दशरथो जगौ । प्रतिज्ञा मयका चक्रे या सा तु पूरयिष्यते ॥२४४॥युग्मम्॥
पत्न्यास्तादृग् वचः श्रुत्वा वज्रपातसहोदरम् । तस्थौ दशरथो मौनी यावद्रामो जगौ तदा ॥२४५॥
तात ! राज्यमिदं दत्त्वा भरतायैव सूनवे । आशा सम्पूर्यतां मातुः कैकेय्या मम साम्प्रतम् ॥२४६॥
राज्येच्छा विद्यते मे न पितस्तव पदाम्बुजे । सेवावाञ्छा समस्त्येव भरतोऽतोऽस्तु भूपतिः ॥२४७॥
ततो भरतपुत्राय दत्त्वा राज्यं सदुत्सवम् । यावद्दशरथोऽचाली-ल्लातुं संयममात्मसात् ॥२४८॥
तावद्रामः पितुः पादौ प्रणम्येति जगौ मुदा । वनवासाय मे देहि त्वमादेशं प्रसद्य हि ॥२४९॥
कृते दशरथेनैवं मौने दध्यौ तु राघवः । मानितं वनवासाय तातेन मम साम्प्रतम् ॥२५०॥
सीता-लक्ष्मणयुग् रामो नत्वा तातपदाम्बुजम् । चचाल वनवासाय राज्यनिस्पृहमानसः ॥२५१॥
उक्तं च–"आहूतस्याभिषेकाय विसृष्टस्य वनाय च । ददृशुर्विस्मितास्तस्य मुखरंगं समं जनाः ॥१॥"
तदा विशेषतोऽसारं संसारं निखिलं स्फुटम् । मत्वा दशरथश्चन्द्र-सूर्यन्ते संयमं ललौ ॥२५२॥
रामपृष्ठे प्रजा गत्वा प्रोचुर्विनयपूर्वकम् । त्वां विनाऽद्य निराधारा भविष्यामो वयं कथम् ॥२५३॥
यतः–"देहयष्टिर्विना मूर्ध्ना मुखश्रीर्नासया विना । दृग् विना तारया वल्ली विना पत्रेण नैधते ॥१॥
विजला सरसी चैत्य-शिलाका देववर्जिता । विद्या निरविदेवी च गुहेव हरिवर्जिता ॥२॥"
एवं भूरिमहेभ्याली-प्रासादश्रेणिसंयुता । विना रामेण शोभेत नायोध्या साम्प्रतं मनाग् ॥२५४॥
एवं जल्पत्सु लोकेषु जगौ रामो जना ! ननु । अहं तातप्रतिज्ञां तु पालयिष्यामि निश्चितम् ॥२५५॥
यतः-सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः । सकृत् कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥२५६॥
भरतोऽपि मम भ्राता पाता न्यायाध्वना प्रजाः । मामिवाश्रितव्यो हि भरतः प्रजयापि च ॥२५७॥
शून्यं रामेण राज्यं तु प्रपश्यन् भरतस्तदा । ययौ वालयितुं रामं राज्याय रामसन्निधौ ॥२५८॥
प्रणम्य भरतो राम-पदयोरूचिवानिति । राज्यं पश्चात् समेत्य त्वं गृहाणाऽनुगृहाण माम् ॥२५९॥
अहं तु संयमं मुक्ति-शर्मदं संश्रयामि तु । संसारो रोचते मे न रोचते संयमः पुनः ॥२६०॥
अथवा लक्ष्मणो राज्यं करोतु तव सेवनम् । करिष्येऽहं सदा राम ! सुखे दुःखेऽपि निश्चितम् ॥२६१॥
लक्ष्मणोऽथ तदा प्राह भरतोक्तं त्वया वरम् । अहं प्राणात्यये राम-मेत्रकं न त्यजामि च ॥२६२॥
उक्तं च--"प्रपतेद् द्यौः सनक्षत्रा पृथिवी शकलीभवेत् । शैत्यमग्निरयान्नाहं त्यजामि रघुनन्दनम् ॥२६३॥
भरहो उ नमिअ सिरो काउणं सिरंजलिं भणइ रामं । रज्जं करिहि सुपुरिस ! सयलं आणा गुणविसालम् ॥
अहयं धारेमि च्छत्तं चामरधारो हविज्ज सत्तुग्घो । लच्छीहरो य मंती तुज्झं ण सुविहिअं किं वा ॥२॥
भरतं प्रति रामोऽवग् निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥२६४॥
इतश्च कैकेयी देवी तत्राभ्येत्य जगावदः । मया मुधा वने वासो भवता दापितः खलु ॥२६५॥
पश्चादेत्य भवान् राज्यं करोतु भरतस्तव । छत्रादि-धरणात् सेवां करिष्यति निरन्तरम् ॥२६६॥
यतः-महिला सहावचवला अदीहपेहीह सहावमाइल्ला । तं मे खमेहि पुत्त ! जं पडिकूलं कयं तुज्झ ॥२६७॥

ततः पद्मो जगौ मात-र्भरतो राजभृद्यदि । तदा मम मनो तीव्रं मोदते लक्ष्मणस्य च ॥२६८॥
उक्त्वेति सर्वभूपानां प्रत्यक्षं राघवस्तदा । राज्याभिषेचनं चक्रे भरतस्य स्वपाणिना ॥२६९॥
रामलक्ष्मणसीतानां प्रणम्य भरतः पदौ । यदा च भरतोऽचालीत्तदा रामो जगाविदः ॥२७०॥
यतः-"आलस्योपहतः पादः पादः पाखण्डसंश्रितः । राजानं सेवते पाद एकः पादः कृषीवलः ॥१॥
एकं पादं त्रयः पादा भक्षयन्ति दिने दिने । तथा भरत ! कर्तव्यं यथा पादो न सीदति ॥२॥"
एताः पश्य पुरो वत्स ! भुजप्रावरणः प्रजा । आभ्य एव प्रसूयन्ते चामरो चामराः श्रियः ॥२७१॥
प्रपद्य रामवाणीं तु भरतो राघवक्रमौ । प्रणम्य चलितः स्वीय-पुरे यातुं शनैः शनैः ॥२७२॥
कैकेय्यपि यथायोग्यं रामादीन्निखिलाँस्तदा । आलाप्य चलिता सार्द्धं सूनुना हृतमानसा ॥२७३॥
ततश्च राघवो हृष्टः सीता-लक्ष्मणसंयुतः । चचाल काननात्तस्मात् स्मरन् पञ्चनमस्कृतिम् ॥२७४॥
आहूतस्याभिषेकाय विसृष्टस्य वनाय च । ददृशुर्विस्मितास्तस्य मुखरङ्गं समं जनाः ॥२७५॥
पथि पथिकवधूभिः सादरं पृच्छ्यमाना, कुवलयदलनीलः कोऽयमार्ये ! तवेति ।
स्मितविकचकपोलं व्रीडविभ्रान्तनेत्रं मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥२७६॥
एतावता पथिकवधूभिर्ज्ञातमयमस्या भर्त्ता रामः ।
रामो गच्छन् वनेऽन्येद्यु-र्गम्भीरातटिनीतटे । वृक्षस्याधः स्थितोऽप्राक्षी-ल्लक्ष्मणं सोदरं प्रति ॥२७७॥
देशोऽयमुद्वसः कस्मा-दभूल्लक्ष्मण ! जल्प्यताम् । लक्ष्मणोऽवग् नरोऽत्रैति कोऽपि यः पृच्छयते स च ॥२७८॥
देशोद्वसनहेतुं तु पृष्टः कश्चिन्नरस्तदा । रामेणावग् वरे देशे पुरे राणापुरेऽत्र च ॥२७९॥
कर्णो भूपो जिनं देवं जैनं साधुं विना क्वचित् । नान्यं कुलिङ्गिनं नौति सरागं निर्जरं पुनः ॥२८०॥
यतः-सर्वज्ञो जितरागादि-दोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥२८१॥
ध्यातव्योऽयमुपास्योऽय-मयं शरणमीप्यताम् । अस्यैव प्रतिपत्तव्यं शासनं चेतनास्ति चेत् ॥२८२॥
सरागोऽपि हि देवश्चेद् गुरुरब्रह्मचार्यपि । कृपाहीनोऽपि धर्म्मः स्यात् कष्टं नष्टं हहा ! जगत् ॥२८३॥
श्रुत्वैतन् नियमं तस्या-भ्येत्य सिंहोदरो नृपः । यावद् हन्ति नृपं कर्णं तावन् नंष्ट्वा गतः स च ॥२८४॥
साधर्मिकः स कर्णो मे ध्यात्वेति रामभूधवः । हत्वा सिंहोदरं कर्णं राज्ये तस्मिन् न्यवीविशत् ॥२८५॥
यतः-दानं वित्तादृतं वाचः कीर्तिधर्म्मौ तथाऽऽयुषः । परोपकरणं काया-दसारात् सारमुद्धरेत् ॥१॥
इतोऽन्यत्र गते रामे विद्याधरमुनी उभौ । सीतया शुद्धभक्तेन हर्षेण प्रतिलाभितौ ॥२८६॥
यतः-अभयं सुपत्तदाणं अणुकंपा उचिअ कित्तिदाणं च । दोहि वि मुक्खो भणिओ तिन्निवि भोगाइयं दिंति ॥
व्याजे स्याद् द्विगुणं वित्तं व्यवसाये चतुर्गुणम् । क्षेत्रे शतगुणं प्रोक्तं पुण्येऽनन्तगुणं भवेत् ॥२८७॥
तदा सुगन्धनीरेण पुष्पाणां प्रकरैर्वरैः । सुमनोभिः कृता वृष्टि-स्तत्र सीताग्रतस्तदा ॥२८८॥
भरतोऽपि स्वपुरेऽभ्येत्य प्रणम्य रामपादुके । सभायां तस्थिवान् भूरि-नृपसेव्यपदाम्बुजः ॥२८९॥
एकदा बहिरुद्याने धनेश्वरगुरोः पुरः । सुश्राव भरतः क्षोणी-पतिरेवं कृतादरम् ॥२९०॥
रयणदीवम्मि गओ गिण्हइ इक्कंपि जो महारयणं । तं तस्स इहाणीयं महग्घमोल्लं हवइ लोए ॥१॥
जिणधम्मरयणदीवे जं णियममणि लहइ इक्कंपि । तं तस्स अणग्घयं होहिइ पुण्णं परभवम्मि ॥२॥

पढममहिंसारयणं गिण्हेउं जो जिणं समच्चेइ । सो भुंजइ सुरलोए इंदियसोक्खं अणोवमिअं ॥३॥
न्यग्रोधे दुर्लभं पुष्पं दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म दुर्लभं जिनदर्शनम् ॥२९१॥
अनर्घ्याण्यपि रत्नानि लभ्यन्ते विभवैः सुखम् । दुर्लभो रत्नकोट्याऽपि क्षणोऽपि मानुषाऽऽयुषः ॥२९२॥
केऽप्याप्तमपि पुण्येन तत् प्रमादपरायणाः । हारयन्ति नराः सुप्ता इव चिन्तामणिं करात् ॥२९३॥
तत्रापि दुर्लभः श्राद्ध-धर्म्मः शिवसुखप्रदः । ततोऽपि दुर्लभः साधु-धर्म्मः शीघ्र-शिवप्रदः ॥२९४॥
श्रुत्वेति भरतः प्राह श्रीरामागमनादनु । संयमः साधुधर्म्मस्य गृहीतव्यो मया खलु ॥२९५॥
इतः शुभः खगो विद्यां राक्षसाह्वां तु दुःशकाम् । साधयित्वा बहून् लोकान् भाषयामास सन्ततम् ॥२९६॥
ततस्तस्याऽभवन्नाम राक्षसेति जनोक्तितः । वैताढ्यतः स चाम्भोधि-मध्ये वासमचीकरत् ॥२९७॥
ततो द्वीपस्य तस्यैव राक्षसेत्यभिधाऽभवत् । वार्द्धौ सपादलक्षा स्यु-र्द्वीपा गुप्ताः स्फुटा यतः ॥२९८॥
तस्मिन् द्वीपे खगः सोऽपि लङ्कां स्वर्णमयीं पुरीम् । अवासयदरातीना-मग्राह्यां वप्रशालिता(नी)म् ॥२९९॥
रक्षोद्वीपेऽथ लङ्कायां विहरत्यजिते जिने । घनवाहन इत्याख्यो रक्षोवंशेऽभवन्नृपः ॥३००॥
तत्सूनुस्तु महारक्षा जिनाङ्घ्रिसेवनापरः । देवरक्षा सुतस्तस्य प्रव्रज्य च शिवं ययौ ॥३०१॥
देवरक्षःसुतो धर्म्म-रक्षा राजा नयी वृषी । पद्मरक्षं सुतं न्यस्य राज्ये जग्राह संयमम् ॥३०२॥
एवं जातेष्वसङ्ख्येषु भूपेषु राक्षसान्वये । बभूव कीर्त्तिधवलो भूरि-विद्याब्धिपारगः ॥३०३॥
श्रेयांसस्यार्हतस्तीर्थे समुद्राचार्यसन्निधौ । प्रपेदे कीर्त्तिधवलो धर्म्मं सर्वज्ञभाषितम् ॥३०४॥
इतो वैताढ्यभूमिध्राद् नीत्वा श्रीकण्ठखेचरम् । न्यवासयत् कपिद्वीपे स कीर्तिधवलः खगः ॥३०५॥
तत्र किष्किन्धभूमिध्रे योजनत्रिशतीमिते । अतिष्ठिपत् स किष्किन्धां राजधानीं नवां स च ॥३०६॥
ये खगा वानरद्वीपे-ऽवसन् ते वानराः स्मृताः । वानराङ्कधरां विद्यां वानराह्वामसाधयन् ॥३०७॥
श्रीकण्ठाद् वानरीविद्या-वित्सु जातेषु भूरिषु । मुनिसुव्रततीर्थेऽभूद् घनोदधिः कपिः खगः ॥३०८॥
तदा लङ्काधिपो राजा तडित्केशाभिधोऽभवत् । तडित्केश-घनोदध्योः प्रीतिरासीन्मिथो द्वयोः ॥३०९॥
किष्किन्धायां किष्किन्धि-र्घनोदधिसुतोऽभवत् । लङ्कायां तु तडित्केशा-त्सुकेशोऽभूत् खगेश्वरः ॥३१०॥
इतो वैताढ्यभूमिध्रे चक्रवालाभिधे पुरे । खेचरोऽशनिवेगाह्वो बहुविद्याधरोऽभवत् ॥३११॥
अन्येद्युः प्रातरुत्थाया-ऽशनिवेगो व्यचिन्तयत् । वीक्ष्यते चेन्महीपीठं तदा स्यात् सफलं जनुः ॥३१२॥
यतः—भ्रमद्भिर्दृश्यते पृथ्वी नानातीर्थपुराऽन्विता । श्लाघ्यं च क्रियते जन्म ज्ञायते शक्तिरात्मनः ॥३१३॥
यो न निर्गत्य निशेषा-मवलोकयति मेदिनीम् । अनेकाश्चर्यसम्पूर्णां स नरः कूपदर्दुरः ॥३१४॥
दीसइ विविहचरित्रं जाणिज्जइ सुजण-दुज्जणविसेसो । अप्पाणं कलिज्जइ हिंडिज्जइ तेण पुहवीए ॥३१५॥
विमृशन्निति स व्योम-गामी स्वीयात् पुरात्तदा । मेदिनीमण्डलं द्रष्टुं निर्ययौ स्वविमानगः ॥३१६॥
भ्रमन्नशनिवेगस्तु किष्किन्धायां पुरि ध्रुवम् । सन्मानितो न किष्किन्धि सुकेशाभ्यां मनाग् यदा ॥३१७॥
ततस्तौ हन्तुकामोऽभू-द्यावदशनिवेगकः । तावत् किष्किन्धिसुकेशा-वभूतां सज्जितौ युधे ॥३१८॥
किष्किन्धिश्च सुकेशश्च जितौ तेन रणे तदा । वासं पाताललङ्कायां चक्रतुर्विभ्यतौ ततः ॥३१९॥
तत्र पाताललङ्कायां सुकेशस्य महीपतेः । इन्द्राणी प्रेयसी जाता सच्छीलगुणशालिनी ॥३२०॥

इन्द्राणी मालिनं पुत्रं प्रसूते स्म सुमालिनम् । माल्यवन्तं क्रमात् चारु-लग्ने शोभनवासरे ॥३२१॥
किष्किन्धेभूपतेः पत्न्या श्रीमालया विशिष्टया । जनितश्चादित्यरजा ऋक्षरजाश्च नन्दनौ ॥३२२॥
नित्यार्हतः प्रणम्यायान् किष्किन्धिर्मधुपर्वते । किष्किन्धाह्वं पुरं स्थाप-यित्वा वासमचीकरत् ॥३२३॥
सुकेशस्य सुता रुष्टा लङ्कायां च समेत्य ते । जघ्नुश्चाशनिवेगस्य निर्घाताभिधसेवकम् ॥३२४॥
लङ्कायामभवन् माली राजा प्रपालयन् महीम् । किष्किन्धायामभूदादि-त्यरजा वरनीतिमान् ॥३२५॥
मालिनश्चाभवत् प्रीति-रादित्यरजसि स्फुटम् । प्राभृतादिप्रदानेन तयोः प्रीतिर्विवर्द्धते ॥३२६॥
विद्याभृतोऽशनिवेग-नाम्नोऽभूद् गुणसुन्दरी । पत्नी पुत्रः सहस्रारा-भिधोऽजनि मनोहरः ॥३२७॥
सहस्रारस्य पत्न्यासी-न्नाम्नाथ चित्रसुन्दरी । इन्द्रनामाभवत् पुत्रो मातृपितृप्रमोददः ॥३२८॥
इन्द्र इन्द्र इवाशेष-लोकपालव्यवस्थया । राज्यं कुर्वन् तृणं सर्वं विश्वं च मन्यतेतराम् ॥३२९॥
इन्द्रः पाताललङ्कायां समेत्य भूरिभृत्ययुग् । रक्षांसि वानरांश्चैव न्यधात् सेवकभावतः ॥३३०॥
इत इन्द्रेण विद्याभृ-न्नाथेन रक्षता भुवम् । स्थापिता लोकपालाश्च नाम दत्त्वा महीभृताम् ।३३१॥
यतः-"चत्तारि लोगपाला सत्त य अणियाइं तिन्नि परिसाओ । एरावणो गइंदो वज्जं च महाउहं तस्स ॥१॥
चत्तालीसं ठविआ तिन्नि सहस्सा हवंति जुवईणं । मंती विहप्फइ से हरिणेगमेसी बलानीओ ॥२॥
तो सो नमि व्व नज्जइ सव्वेसिं खेअराणं सामित्तं । कुणइ सुवीसत्थमणो विज्जाबलगव्विओ धीरो ॥३॥"
इन्द्रमेवंविधं श्रुत्वा जेतुं माली नरेश्वरः । भ्रातृभिर्वारितोऽप्येव चचालाऽतुलसैन्ययुग् ॥३३२॥
सुमाली सोदरः प्राह वैरी सोऽतीव दुःशकः । तेन भेदेन हन्येत स वैरी बलवानपि ॥३३३॥
उक्तं च—"सव्वत्थ सत्थकुसलो भणइ सुमाली सहोदरं जेट्ठं ।
इत्थं कुणहावासं अहव पुरिं पडिनिअत्ता सो ॥१॥
दीसंति महाघोरा उप्पाया सउणया य विवरीआ । एए कहं अजयं अम्हं नत्थेत्थ संदेहो ॥२॥
रिट्ठखरतुरयवसहा सारससयवत्त कोल्हायाईया । वासंति अ दाहिणिल्ला एए अजयावहा अम्हं ॥३॥"
श्रुत्वेति प्रोक्तवान् माली गर्वितः सोदरं प्रति । किं शूकरभयात् सिंहो रक्षति स्वगृहं क्वचित् ? ॥३३४॥
नदणवणे महंता जिणालया कारिया रयणचित्ता । अणुहूयं य वरसुहं दाणं च किमिच्छियं दिण्णं । ॥३३५॥
समलंकिअं च गोत्तं जसेण ससिकुंदनिम्मलयरेणं । जं होहिइ समरमज्झे मरणं किं न य जुत्तं ॥१॥
एवं सुमालिवयणं अवगणेऊण पत्थिओ माली । वेयड्ढनगवरिंदे रहनेउरे चक्कवालिपुरं ॥२॥"
आयान्तं मालिनं भूपः श्रुत्वैरावणकुञ्जरम् । आरुह्य निर्गतः कर्तुं युद्धमिन्द्रोऽपि सम्मुखम् ॥३३६॥
रथीव रथिना सार्द्धं तूणीव तूणीना समम् । खड्गीव खड्गिना सार्द्धं युद्धं कर्तुं प्रवर्त्तितः ॥३३७॥
खड्गेन मालिना शक्र आहतो निर्दयं तदा । यदा मूर्च्छामवाप्योर्व्यां पपात शुष्कवृक्षवत् ॥३३८॥
उत्थायेन्द्रः सरुग् वाढं कुन्तेन मालिनं तथा । जघान हृदये प्राप पञ्चत्वं क्षणतो यथा ॥३३९॥
मालिनं विहतं श्रुत्वा शक्रेण समराङ्गणे । सुमाली समगादिन्द्रं निहन्तुं (स्व) स्थानतस्तदा ॥३४०॥
सुमाल्यपि रणं कुर्वन् इन्द्रेण सह सङ्गरे । अशक्तो वैरिणं हन्तुं नंष्ट्वा स्वपुरमीयिवान् ॥३४१॥
एवं निर्जित्य निःशेषान् वैरिणः समराङ्गणे । वासवः कुरुते राज्यं स्वपुरे त्रिदशेशवत् ॥३४२॥

उक्तं च–"भज्जइ रहो रहेण निवडइ हत्थि समं गयवरेणं । तुरएण समं तुरंगो पायक्को सह पयक्केणं ॥१॥
सर-सत्तिबाण-मोग्गर-फलिह-सिला सेल्लआउहसएसु । खिप्पंतेसु समत्थं छन्नं गयणंगणं सहसा ॥२॥"
ततो लङ्कापुरीस्थस्य सुमालिमेदिनीपतेः । अभूद् रत्नश्रवाः पुत्रो वर्यलक्षणलक्षितः ॥३४३॥
सुमाली स्वसुतं राज्ये न्यस्य पार्श्वे गुरोर्मुदा । प्रव्रज्य निखिला साता-सातक्षयाद् ययौ शिवम् ॥३४४॥
भूपस्य रत्नश्रवसोऽभूवन् विद्यावशा वरा । प्रेयसी कैकसी चासीत् शीलादिगुणशालिनी ॥३४५॥
कैकसी सूर्यचन्द्रादि-स्वप्नसूचितमङ्गजम् । असूत शोभने घस्रे लसल्लक्षणलक्षितम् ॥३४६॥
सूनोरारोपिते कण्ठे हारे नवमणीमये । प्रतिबिम्बत आस्ये तु मुखान्यासँस्तदा दश ॥३४७॥
"रयणकिरणेसु एत्तो मुहाइं नव नियवयणसरिसाइं । हारे दिट्ठाइ फुडं तेण कयं दहमुहो नामं ॥१॥"
ततो दशास्य इत्यासी-त्तस्य नाम जनेऽखिले । वर्द्धमानः क्रमान्माता-पित्रोर्मोदकरोऽजनि ॥३४८॥
कैकसी सुषुवे कुम्भकर्णं पुत्रं च सुन्दरम् । ततः सूर्पणखां पुत्रीं रूपनिर्जितनिर्जरीम् ॥३४९॥
ततो विभीषणं पुत्रं चञ्चत्स्वप्नाभिसूचितम् । कैकसी सुखतोऽसूत शोभने वासरे स्फुटम् ॥३५०॥
वर्द्धमानाः क्रमादेते रावणाद्याः शुभोदयात् । बभूवू रूपलावण्य-लक्ष्मीकलितविग्रहाः ॥३५१॥
मातापित्रोर्मुखात् स्वस्य द्विषां पराभवं बहु । भीमारण्ये त्रयोऽप्येयू रावणाद्याः सहोदराः ॥३५२॥
तत्र पूजोपहाराद्यैः पुष्पैस्तीव्रतपःकृतेः । रोहिण्याद्यां वरां विद्या-मसाधयँश्च ते तदा ॥३५३॥
दशास्यस्याऽभवन् विद्याः सहस्रशो वशंवदाः । पूर्वपुण्योदयात् किं किं जायते न तनूमताम् ? ॥३५४॥
आसन् विद्याः सहस्रं तु वशगाः पुण्ययोगतः । अन्या अपि दशास्यस्य विद्याः साधयतस्तदा ॥३५५॥
विद्याः साधयतस्तत्र कुम्भकर्णस्य भूपतेः । आसन् विद्या सहस्रं तु पूर्वपुण्योदयात्तदा ॥३५६॥
विद्यानां त्रिशतान्यासन् विभीषणमहीपतेः । पूर्वपुण्योदयेनैव विद्याः साधयतस्तदा ॥३५७।
यतः-सव्वायरेण एवं पुण्णं कायव्वयं मणूसेण । पुण्णे णवरि लब्भइ कम्ममसिद्धा य सिद्धीओ ॥३५८॥
उक्तं च ग्रन्थान्तरे रावणस्य विद्याप्राप्तिस्वरूपम्—
कालम्मि अ संपुण्णे सिद्धाओ महंतविज्जाओ । आगासगामिणी कामदायिणी कामुगामिणी ॥१॥
विजयं दोण्णि वारा जय कम्मा तह य पन्नत्ती । अह भानुमालिणी विअ अणिमालिमाइ णायव्वा ॥३५९॥
मणथंभणी य खोहा विज्जा सुहदाइणी रओ रूवा । दिण-रयणी करी विज्जा परी य पयत्तो समा दिट्ठी ॥३६०॥
अजरामरा विसन्ना जलथंभणि अग्गिथंभणी चेव । गिरिदारिणी इत्तो विज्जाय विव लोयणी चेव ॥३६१॥
अरिविद्धंसी घोरा खीरा य भुयंगिणी तह तहा तरुणी । भुवणा विज्जाय पुणो दारुणीमयणा सणी य तहा ।३६२।
रवितेया भयजणणी ईसाणी तह भवेजयाविजया । वंधणि वाराहावित्र कुडिला कित्ती मुणेअव्वा ॥३६३॥
वाउब्भावायसत्ती कावेरी संकरी य उद्दिट्ठा । जोगि सीत्रलमहणी चंडामावरिसिणी चेव ॥३६४॥
विज्जाओ एवमाइ सिद्धाओ तस्स बहुविह गुणाओ । थोवदिवसे विजाया वसया दसमुहस्स तहिं ॥३६५॥
सव्वा रहइ विद्धी आगास गमा य जंभिणी चेव । निद्दाणि पंचमिआ सिद्धा विज्जाय कुंभकण्णस्स ॥३६६॥
सिद्धत्था अरिदमणी निव्वाया खगामिणी पमुहा । एआविहु विज्जाय पत्ताओ विभीसणेण तया ॥३६७॥
एवंविधमहाविद्याः प्राप्य त्रयोऽपि बान्धवाः । महोत्सवेन पुर्यन्तः समायुर्निजमन्दिरम् ॥३६८॥

कुर्वाणस्य दशास्यस्य विद्याप्राप्तिमहोत्सवम् । पितामहः सुमाल्यागाद् माल्यवानपि तत्र च ॥३६९॥
उत्थाय रावणो भ्रातृ-युक्तो विनयपूर्वकम् । तयोश्चरणपाथोजं ननामाऽतुलभक्तिमान् ॥३७०॥
विद्याभिस्ताभिर्ह्याभिः स्वेच्छया रावणो भ्रमन् । कैलास-हिमवन्मेरु-मुख्येषु गिरिषु ध्रुवम् ॥३७१॥
वैताढ्याद्दक्षिणश्रेण्यां सुरसङ्गीतपुर्यथ । मयो विद्याधरश्चासीत् पत्नी हेमवती पुनः ॥३७२॥
तयोर्मन्दोदरी पुत्री बभूव वरविग्रहाम् । यौवनस्थां सुतां दृष्ट्वा मयोऽवग् मन्त्रिणां पुरः ॥३७३॥
एषा पुत्री दशास्याय दास्यते लसदुत्सवम् । विचार्येति दशास्याय दातुं मयोऽचलत्तदा ॥३७४॥
मार्गे मयो व्रजन् स्फारां भुवनस्यान्तरस्थिताम् । कन्यां दृष्ट्वा जगौ काऽसि किमर्थं त्वमिह स्थिता ? ॥३७५॥
साऽवग् दशाननो भ्राता मेरौ नन्तुं जिनान् गतः । अहं चन्द्रनखा खड्गरक्षार्थं स्थापितेह तु ॥३७६॥
असिश्चन्द्रप्रभासाह्वो नाम्ना स विद्यते वरः । अत्रान्तरे समायातो दशास्यो मेरुपर्वतात् ॥३७७॥
वर्यं वरं दशास्यं तु ज्ञात्वा विद्याधरो मयः । मन्दोदरीं सुतां तस्मै ददौ सूत्सवपूर्वकम् ॥३७८॥
स(म)होदरस्य भूपस्य तडिन्मालां सुतां वराम् । विद्युल्लतामिवाम्भोदः कुम्भकर्ण उपायत ॥३७९॥
वीरविद्याभृतः पुत्रीं नामतः पङ्कजश्रियम् । पर्यणैषीत् सुहर्षेण पित्रादेशाद् बिभीषणः ॥३८०॥
आदौ शक्रजितं मेघ-नादं च नन्दनावुभौ । अजीजनत् शुभे लग्ने राज्ञी मन्दोदरी क्रमात् ॥३८१॥
ज्ञात्वा वैश्रमणं शक्र-भृत्यं कस्यचिदाननात् । गत्वा दशाननस्तेन सार्द्धं युद्धं व्यधाद् भृशम् ॥३८२॥
बहुष्वहस्सु जातेषु विज्ञाय स्वं जितं रणे । नष्टो वैश्रमणो जीव-मेव लात्वाऽतिदूरतः ॥३८३॥
विज्ञायाऽसारसंसारं तदा वैश्रमणो हृदि । लात्वा दीक्षां ययौ मुक्तिं सर्वकर्मव्रजक्षयात् ॥३८४॥
जित्वा वैश्रमणं तस्य लात्वा लक्ष्मीं समां द्रुतम् । रावणः पुष्पकारूढः स्वपुरीं समुपेयिवान् ॥३८५॥
शक्रभृत्यं च तं जित्वा दशास्यो मुदिताशयः । आदित्यरजसेऽदाच्च किष्किन्धां सुहृदे पुरीम् ॥३८६॥
नवं ऋक्षपुरं कृत्वा स ऋक्षरजसे ददौ । आदित्यरजसश्चासीद् वाली नामा सुतो बली ॥३८७॥
द्वितीयोऽजनि सुग्रीवः पुत्रो रुचिरविक्रमः । कनीयसी कनी तस्य सुप्रभेत्यभवत् क्रमात् ॥३८८॥
ऋक्षरजःप्रिया वर्या हरिकान्ता शुभेऽहनि । नलनीलाभिधौ पुत्रा-वसूत वरलक्षणौ ॥३८९॥
पित्राऽथ विबुधोपान्ते नलनीलौ स्वनन्दनौ । पाठितौ विदुरौ जातौ सर्वशास्त्रेषु सन्ततम् ॥३९०॥
किष्किन्धायामथादित्य-रजा वैराग्यवासितः । बालये स्वतने राज्यं ददौ सूत्सवपूर्वकम् ॥३९१॥
युवराजपदं सोऽथ सुग्रीवाय वितीर्णवान् । अष्टाह्निकां व्यधात् सार्वा-वासेष्वादित्यभूपतिः ॥३९२॥
भूरिभिर्मेदिनीनाथैः सार्द्धं शोभनवासरे । श्रीसुव्रतगुरोः पार्श्वे जग्राहाऽऽदित्यभूपतिः (सर्वसंयमम्) ॥३९३
अथ सूर्पणखां हृत्वा जित्वा चन्द्रोदरं नृपम् । आदित्यरजसः सूनुं विललङ्कां खरोऽग्रहीत् ॥३९४॥
हृतां सूर्पणखां ज्ञात्वा खरेणाथ दशाननः । रुष्टो हन्तुं चलन् मन्दो-दर्या पत्न्याऽथ वारितः ॥३९५॥
असावपि खरो विद्या-धरो विद्याबलोऽस्ति च । अतोऽस्मै दीयते सूर्प-णखा चेच्च तदा वरम् ॥३९६॥
आदित्यरजसः पुत्रं चन्द्रोदराऽभिधं वरम् । बलिष्ठं हतवान् युद्धे खरोऽस्थाच्चत्पुरे बिले ॥३९७॥
कदाचिद् भवता युद्धे संग्रामे निहतः खरः । तदा ते भगिनी भर्तृ-हीना नूनं भविष्यति ॥३९८॥
ततः सूर्पणखां जामिं रावणस्य महुत्सवम् । उपयेमे खरो विद्याधरः शोभनवासरे ॥३९९॥

गतक्रोधो दशास्योऽथ स्वजामिरमणं खरम् । सदूषणं न्यधाचन्द्रो-दरराज्ये सदुत्सवम् ॥४००॥
मृते चन्द्रोदरे भार्या-ऽनुराधा कानने स्थिता । विराधाख्यं सुतं चारु गुणगेहमजीजनत् ॥४०१॥
किष्किन्धायां वलिष्ठं तु वालिनं जितशात्रवम् । श्रुत्वा दशाननो दूत-पार्श्वादाकारयद् ध्रुवम् ॥४०२॥
वाली प्राह विनाऽर्हन्तं नापरं निर्जरं नृपम् । नमाम्यहं क्वचित् प्राणात्ययेऽपि रावणं प्रति ॥४०३॥
श्रुत्वैतद्रावणः क्रुद्धो मेलयित्वा वलं महत् । चचाल वालिनं जेतुं कम्पयन्नरीमानसम् ॥४०४॥
युध्यन् दशाननोऽनश्यद् वालिना वलिना तदा । चन्द्रहासासियुक् कण्ठे गृहीतः पशुवद् ध्रुवम् ॥४०५॥
सखड्गं रावणं कक्षा-कोटरे पश्यतां नृणाम् । प्रक्षिप्य चतुरम्भोधिं बभ्राम प्रतिवासरम् ॥४०६॥
कुक्षौ क्षिप्त्वा दशास्यं तु वाली तद्वैरिसद्मसु । दर्शयित्वा प्रणम्याशान् शाश्वतानैति मन्दिरम् ॥४०७॥
तत्रान्यदा घनाचार्य-समीपे धर्म्मदेशनाम् । श्रोतुं वाली ययौ यावत् तावद् गुरुर्जगाविति ॥४०८॥
चत्वारः प्रहरा यान्ति देहिनां गृहचेष्टितैः । तेषां पादे तदर्द्धं वा कर्त्तव्यो धर्म्म-संग्रहः ॥४०९॥
बावत्तरि कलाकुसला पंडियपुरिसा अपंडिया चेव । सव्वकलाणं पवरं जे धम्मकलं न याणंति ॥४१०॥
तं रूवं जत्थ गुणा तं मित्तं जो न विहाडेइ । सो हत्थो जो हत्थे तं विन्नाणं जहिं धम्मो ॥४११॥
परपीडा न कर्त्तव्या बन्धन-छेदनादिभिः । भूपानां तु विशेषेण न कर्त्तव्या महात्मभिः ॥४१२॥
कोहो पीइं पणासेइ माणो विणयनासणो । माया मित्ताणि नासेई लोभो सव्वविणासणो ॥४१३॥
उवसमेण हणे कोहं माणं मद्दवया जिणे । मायं अज्जवभावेणं लोभं संतोसओ जिणे ॥४१४॥
ततो रावणमुन्मुच्य क्षमयित्वा स्वपातकम् । विससर्जाचिराद् वाली लङ्कां प्रति बली बलात् ॥४१५॥
सुग्रीवं स्वपदे न्यस्य वाली वैराग्यवासितः । विधायाऽष्टाह्निकां सार्वगेहेषु व्रतमाददे ॥४१६॥
दशकण्ठाय सुग्रीवः श्रीप्रभां तनयां ददौ । यौवराज्यं मुदा वालि-सूनवे चन्द्ररश्मये ॥४१७॥
वैताढ्ये वायुवेगस्य पुत्रीं रत्नवतीं वराम् । उद्वोढुं चलितो व्योम-वर्त्मना रावणोऽन्यदा ॥४१८॥
गच्छतो दशकण्ठस्या-ष्टापदस्योर्ध्वमन्यदा । विमानं पुष्पकं बाढ मन्यदा स्खलितं ध्रुवम् ॥४१९॥
अधस्ताद् वालिनं साधुं वीक्ष्य दशाननस्तदा । साधुवेषधरोऽप्येष विमानं मेऽस्खलद् दृढम् ॥४२०॥
साधुवेषमसौ दम्भाद् दधानो वालिसंयतः । मयि क्रोधी मयि द्रोही दृश्यतेऽद्यापि मायिकः ॥४२१॥
यतः—"मायाशीलः पुरुषो यद्यपि न करोति किंचिदपराधम् ।
सर्प्प इवाविश्वास्यो भवेत् तथाप्यात्मदोषहतः ॥४२२॥
पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् । स्वामिनं सर्वभावेन तथा वंचयते शठः ॥४२३॥
विमानमधुनाऽनेन स्खलितं व्रतदम्भतः । अतोऽमुं गिरिसंयुक्तं क्षिप्स्यामि लवणाम्बुधौ ॥४२४॥
पुराऽप्यनेन कक्षायां क्षिप्तोऽहं वासरान् बहून् । यतित्वेऽप्यधुना वैरं न मुञ्चति मया समम् ॥४२५॥
अस्य पापयतेः प्राणान् नीत्वा यमनिकेतनम् । स्वस्थीभवाम्यहं भूरि-कालवैरिविवर्जितः ॥४२६॥
विदार्योर्वीं ततोऽधस्ताद् गिरेः प्रविश्य रावणः । पर्वतोत्पाटनीं विद्यां सस्मारैकाग्रमानसः ॥४२७॥
पर्वतोत्पाटनी विद्या-बलात् स्कन्धे च तं गिरिम् । स कृत्वा यावता चक्रे प्रयत्नं रावणो नृपः ॥४२८॥
त्रुटत्त्रुटत्त्वयत् सन्धि-रुद्भ्रान्तभूतसन्ततिः । कम्पमानतरुश्रेणि-र्न्यपतत् शृङ्गपञ्चयः ॥४२९॥

उन्मार्गे प्रचलन्नीर-प्रवाहः प्रबलानिलः । तदाऽष्टापदभूमीध्रो बभूव भयकृद् भृशम् ॥४३०॥
वाली दध्यौ च कः पापी शैलमुत्पाट्य सम्प्रति । क्षिप्स्यत्यब्धौ यदा तीर्थ-ध्वंस एव भविष्यति ॥४३१॥
सत्यां शक्तौ च यस्तीर्थ-ध्वंसकारिनरं किल । निवारयति नो यस्य भूरि पापं प्रजायते ॥४३२॥
यतः-ध्यात्वेति स मुनिर्वाम-पादाङ्गुष्ठाभिपङ्गतः । अष्टापदगिरेर्मौलि-मपीडयत्तदा मनाग् ॥४३३॥
दशास्यः सङ्कुचद्देहो वमच्छोणितपङ्किलः । तदैव दीनवद् विश्वं रावयन् विरराव सः ॥४३४॥
तदैत्य निर्जरैः प्रोक्तं मा मुने ! चालयाचलम् । अयं दशाननो मृत्युं गमिष्यत्येकहेलया ॥४३५॥
प्रसद्याऽस्य दशास्यस्य मुनीश ! देहि जीवितम् । अतः परं दशास्यो ना-पराधं ते करिष्यति ॥४३६॥
ततः कृपापरो वालिः प्रसद्य रावणोपरि । विररामाऽऽशु तस्यैव भूधरस्यातिपीडनात् ॥४३७॥
निःसृत्य रावणो वालिं नत्वा क्षन्त्वा जगाविति । अस्मात् पापान्ममाधस्ताद् गतिर्नूनं भविष्यति ॥४३८॥
शैलस्याधः स्थितो वालि-पादाङ्गुष्ठनिपीडितः । रावं चक्रे ततो देवै रावणाह्वा कृताऽस्य तु ॥४३९॥
ततोऽमात्यैरगादीति भो रावण ! नराधम ! । श्रमणाद्या न हन्तव्याः कदाचिदुत्तमैर्नरैः ॥४४०॥
यतः-समणा य बंभणा वि य गोपसुइत्थी य बालया वूढा । जइ वि हुं कुणंति दोसं तह वि य एए न हंतव्वा ॥
ततः सान्तःपुरश्चैत्ये कारिते भरतेन तु । रावणः पूजयामास नाभेयादिजिनाधिपान् ॥४४१॥
क्षमयित्वाऽपराधं स्वं भावपूजाकृते तदा । स्नसां तंत्रीं भुजं वीणां विदधे दशकन्धरः ॥४४२॥
तादृश्या वीणया नाद–पूजामग्रे जिनेशितुः । कुर्वन् दशाननः प्राप तदैक्यं प्रभुणा समम् ॥४४३॥
तदा तत्राऽऽगतः शेषो नत्वा भक्त्या जिनेश्वरान् । दशास्यं ध्यानमारूढं दृष्ट्वा हृष्टो जगावदः ॥४४४॥
दशास्य ! प्रभुभक्त ! त्वं वरं वृणु यथेप्सितम् । रावणोऽवक् प्रभोर्भक्ति-रेवाऽस्तु सुचिरं मम ॥४४५॥
अनिच्छतो दशास्यस्य प्रभुभक्तस्य सर्पराट् । अमोघविजयांशक्तिं दत्त्वा विद्याश्च निर्ययो ॥४४६॥
नित्यालोकपुरे गत्वा नमस्कृत्य जिनेश्वरान् । वायुवेगसुतां रत्न-वतीं स परिणीतवान् ॥४४७॥
तत्र वैताढ्यभूमिध्रे अन्याः खगकनीर्वराः । परिणीय दशास्यः स्व-पुरीं लङ्कां समीयिवान् ॥४४८॥
इतो वाली तपस्तीव्रं कुर्वन् ध्यायन् परं महः । घातिकर्मक्षयादाप केवलज्ञानमञ्जसा ॥४४९॥
वालिः प्रबोध्य भव्याङ्गि-जनान् भूरीन् सुधर्म्मणि । आयुःक्षये ययौ मुक्तिं शत्रुञ्जयशिलोच्चये ॥४५०॥
तदा वाचंयमा लक्ष द्वादश प्रतिमाधराः । अवाप्य पञ्चमं ज्ञानं मुक्तिपुर्यां समागमन् ॥४५१॥
विद्याभृद्ज्वलनशिख-प्रियाऽसूत सुतां वराम् । तस्यास्तारेति नामाऽदात् पिता कृत्वा जनुर्महः ॥४५२॥
यौवनस्थां सुरूपां तु साहसगतिसञ्ज्ञिकः । याचते व्योमगोऽभ्येत्य परिणेतुं तमन्वहम् ॥४५३॥
इतः समेत्य सुग्रीव-स्तारां कन्यां सदुत्सवम् । परिणीय ययौ स्वीय-नगरेऽनघविक्रमः ॥४५४॥
सत्स्वप्नसूचितौ पुत्रा-वंगदं च जयं पुनः । ताराऽसूत वरे घस्रे सूर्येन्द्वोरुच्चयोः सतोः ॥४५५॥
स साहसगतिस्तारां सुग्रीवोढां जनाननात् । श्रुत्वा दध्यावहं नूनं वञ्चितोऽस्मि ह हा ! किल ॥४५६॥
तारामङ्गीचिकीः कामं स साहसगतिः खगः । विद्यां साधयितुं यातो रुचिरे हिमवद्गिरौ ॥४५७॥
इतोऽहङ्कारिणं शक्र-मनन्तं कुमदोद्धतम् । श्रुत्वा खरमुखैर्विद्या-धरैः सुग्रीवसेवितः ॥४५८॥
शोभने वासरेऽचालीद् विजेतुं दशकन्धरः । चतुरङ्गचमूयुक्तो जितानेकद्विषच्चयः ॥४५९॥ युग्मम् ॥

रेवाकुलङ्कषातीरे स्थितो दशाननो व्रजन् । स्थापयित्वाऽर्हतो बिम्ब-मानर्च सुन्दरैः सुमैः ॥४६०॥
अकस्मादागतेनाऽम्बु-प्रवाहेन जिनार्चना । व्युदस्यत दशास्ये तु ध्यानलीने प्रभोः पुरः ॥४६१॥
क्रुद्धे दशानने कश्चि-दागत्य मानवोऽवदत् । इतो माहिष्मतीशोऽस्ति सहस्रांशुर्महीपतिः ॥४६२॥
संरुद्धाम्बुप्रवाहस्य मोक्षणाद् जिनपार्चना । अपाकृताऽमुना क्रुद्धो दशास्यो रावणोऽजनि ॥४६३॥
प्रणिधाय दशास्यो यान् भृत्यांस्तज्जयहेतवे । ते सहस्रांशुभूपेन हताः पश्चात् समाययुः ॥४६४॥
ततो दशाननस्तत्र गत्वा जित्वा रिपुं तकम् । दृढबद्धं सहस्रांशुं स्वकीये शिबिरेऽनयत् ॥४६५॥
जाते जयजयारावे यावत् संसदि रावणः । उपाविशत् प्रगे तावद् व्योम्न्येकः साधुरागमत् ॥४६६॥
नत्वा दशमुखः साधु-मुपावेश्य वरासने । धर्म्मं श्रोतुमुपाविष्ट-स्ततो मुनिर्जगावदः ॥४६७॥
धर्म्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्म्मेणैव भवन्ति निर्मलयशो विद्यार्थसम्पत्तयः ।
कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्म्मः सम्यगुपासितो भवति च स्वर्गापवर्गप्रदः ॥४६८॥
रावणोऽवग् मुने ! केन वैराग्येण त्वया व्रतम् । गृहीतं स जगौ माहि-ष्मत्यां भीमोऽभवत् खगः ॥४६९॥
तस्याऽजनि सहस्रांशु-स्तनयो विनयी नयी । धर्मकर्मकलाविज्ञः कृपाकवचिताशयः ॥४७०॥
यतः-रज्जोरप्युपरि भ्रमन्ति कतिचित्तीव्राभियोगान्नरा-स्तर्कव्याकरणादिशास्त्रनिपुणाश्च्यासस्तु शिल्पं कियत् ।
यद् गाढो विनयः श्रुतं यदमलं यद्वीतरागं मनो, यत् सौजन्यमखण्डितं स हि गुणस्तेनैव विद्वान् पुमान् ॥४७१॥
विज्ञानं किमु नोरगनाम-सुगृहीशुष्माशिहंसादिषु, द्वन्द्वं किं न लुलायलावककुले मेषे तथा कुक्कुटे ।
गीतं नृत्यकला च केकिपिकयोर्वाक्सारिकाकीरयोः, सद्धर्म्माचरणे परं चतुरता यद्यस्ति मानुष्यके ॥४७२॥
भीमोऽन्येद्युर्गवाक्षस्थो वीक्ष्याऽभ्रं गगने महत् । जायमानं प्रगे यावत् पुनः पुनर्विलोकते ॥४७३॥
तावत्तत्र समायातः तीव्रवातेन सर्वतः । अभ्रं विशीर्णतां नीतं विद्युद्गर्जितसंयुतम् ॥४७४॥
अभ्राभं भवमालोक्य सहस्रांशुममुं सुतम् । न्यस्य राज्ये मया दीक्षा गृहीता शिवशर्मदा ॥४७५॥
मुनेः सुतं सहस्रांशुं मत्वा चोन्मुच्य बन्धनात् । क्षमयित्वा दशास्येन स्वराज्ये स्थापितः स च ॥४७६॥
सहस्रांशुरपि प्रौढ-प्राभृतं दशमौलये । दत्त्वा क्षान्त्वा जगौ भृत्य-स्तवाऽतोऽहं च किङ्करः ॥४७७॥
स्वराज्ये स्वसुतं न्यस्य सहस्रकिरणो नृपः । भीमं पित्रन्तिके दीक्षां जग्राहाऽनघमानसः ॥४७८॥
ततो भीमेन संयुक्तः सहस्रांशुर्यतिः सदा । तपःपरो ययौ शत्रुञ्जये तीर्थे शिवप्रदे ॥४७९॥
तत्र भीमसहस्रांशू कुर्वाणौ सन्ततं तपः । लभेते केवलज्ञानं लोकालोकप्रकाशकम् ॥४८०॥
दशाननस्ततो गच्छन् रेवाकूले बहून् पशून् । तुरगान् पक्षिणो दीनान् वीक्ष्येति सेवकान् जगौ ॥४८१॥
किमेष ज्वाल्यते वह्नि-र्वीक्ष्यन्ते पशवोऽत्र किम् । भृत्या जगुर्द्विजैर्यज्ञः क्रियमाणोऽस्ति साम्प्रतम् ॥४८२॥
क्षिप्स्यन्ते पशवो ह्येते वह्नौ धर्म्मधिया द्विजैः । ततो दशाननस्तत्र यज्ञे गत्वा जगावदः ।४८३॥
एते किं पशवो वह्नौ क्षिप्यन्ते धर्म्महेतवे ? । भवद्भिरविचारज्ञै-र्नरकोर्व्यां च यास्यते ॥४८४॥
जीवानां हिंसयाऽमुत्र परत्राऽसुखसन्ततिः । श्वभ्रादौ लभ्यते नूनं प्राणिभिर्नात्र संशयः ॥४८५॥
यतः-"सर्वे वेदा न तत् कुर्युः सर्वे यज्ञाश्च भारत ! । सर्वे तीर्थाभिषेकाश्च यत् कुर्यात् प्राणिनां दया ॥१॥
वरमेकस्य सत्त्वस्य प्रदत्ताऽभयदक्षिणा । न तु विप्रसहस्रेभ्यो गोसहस्रमलङ्कृतम् ॥२॥

महतामपि दानानां कालेन क्षीयते फलम् । भीताभयप्रदानस्य क्षय एव न विद्यते ॥३॥
यावन्ति रोमकूपाणि पशुगात्रेषु भारत ! । तावद्वर्षसहस्राणि पच्यन्ते पशुघातकाः ॥४॥
पृथिव्यामप्यहं पार्थ ! वायावग्नौ जलेऽप्यहम् । वनस्पतिगतश्चाहं सर्वभूतगतोऽप्यहम् ॥५॥
यो मां सर्वगतं ज्ञात्वा नहि हिंस्यात् कदाचन । तस्याहं न प्रणस्यामि स च मे न प्रणस्यते ॥६॥
मार्यमाणस्य हेमाद्रिं राज्यं वापि प्रयच्छतु । तदनिष्टं परित्यज्य जीवो जीवितमिच्छति ॥७॥"
यूपं कृत्वा पशून् छित्वा कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे नरके केन गम्यते ? ॥४८६॥
इत्यादि बहुभिः सूक्तैः क्रतुं हिंसामयं तदा । निषिध्य रावणो विप्रा-नग्राहयद् दयामयम् ॥४८७॥
यतः–आत्मा नदी संयमतोयपूर्णा सत्यावहा शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुद्धयति चान्तरात्मा ॥४८८॥
ततस्ते वाडवा जैन-धर्म्मं कुर्वन्त आदरात् । तीर्थे शत्रुञ्जये गत्वा तपस्तेपुश्चिरं मुदा ॥४८९॥
क्रमात् कर्म्मक्षयाच्छत्रु-ञ्जये तीर्थे शिवं ययुः । तत्र चक्रे दशास्यस्य विहारं तापसाभिधम् ॥४९०॥
दुर्लङ्घ्यनगरे कुम्भ-कर्णमुख्यान् सहोदरान् । अनेकभृत्यसंयुक्तान् कुम्भ्यश्वबलराजितान् ॥४९१॥
रावणोऽप्रेषयज् जेतुं-मरातिं नलकूबरम् । शोभने वासरे वर्य-शकुनेषु बहुष्वथ ॥४९२॥
स्वपुर्या परितो वप्रं योजनानां शतैर्युतम् । आशाल्या विद्यया तत्र बलीयानरिभूपतिः ॥४९३॥
तत्र पुर्यन्तिकं कुम्भ-कर्णाद्यास्ते महीभुजः । न शेकुर्वीक्षितुं वप्रं ज्वलज्ज्वालाभिवेष्टितम् ॥४९४॥
कुम्भकर्णादयो भूपा अशक्तास्तत्र पत्तने । प्रवेष्टुमभवन् दीन-मानसा लज्जिताशयाः ॥४९५॥
ततः पश्चात् समागत्य रावणक्ष्मापसन्निधौ । दुर्लङ्घ्यनगराग्राह्य-स्वरूपं ते न्यवेदयन् ॥४९६॥
रावणोऽथ समागत्य दुर्लङ्घ्यनगरान्तिके । ज्वलद्वह्निमयं वप्र-मपश्यत्त्वरितं तदा ॥४९७॥
अग्राह्यनगरं तत्र ज्ञात्वा रावणभूधवः । सर्वकामितदां विद्यां स सस्मारैकमानसः ॥४९८॥
नलकूबरपत्नी तु सानुरागा दशानने । स्वयमेत्य ददौ तस्मै विद्यामाशालिनीं द्रुतम् ॥४९९॥
वह्निवप्रमपाकृत्य तयैव विद्ययाऽचिरात् । अग्रहीन्नगरं तच्च चक्रं चापि सुदर्शनम् ॥५००॥
यतः–धम्मेण कुलप्पसूई धम्मेण य दिव्वरूवसंपत्ती । धम्मेण धणसमिद्धी धम्मेण सुवित्थडा कित्ती ॥१॥
धम्मो मंगलमउलं उसहमउलं च सव्वदुक्खाणं । धम्मो बलं च विउलं धम्मो ताणं च सरणं च ॥२॥
नलकूबरभूपोऽवक् प्रणम्य रावणं प्रति । अहमस्मि तवैवाऽतः-परं भृत्यो दशानन ! ॥५०१॥
तद्राज्यं रावणस्तस्मै वितीर्य तत्प्रियां पुनः । त्वं मे यामीति जल्पित्वा विससर्ज स्वं पुरं प्रति ॥५०२॥
ततो दशाननोऽभ्येत्य वैताढ्यधरणीधरे । रथनूपुरसञ्ज्ञं तत् पुरं चावेष्टयद् रुषा ॥५०३॥
कोपवह्निज्वलच्चेता इन्द्रो विद्याधराधिपः । स्वबलं ज्ञापयामास रावणाय महीभुजे ॥५०४॥
संग्रामः क्रियते चेद्धि तदा जीववधो भवेत् । अतोऽहं च भवान् युद्धं कुर्वेऽधुना परस्परम् ॥५०५॥
ततस्तौ द्वीपमारूढौ स्वस्वविद्यास्त्रवर्षिणौ । अभूतां भीतिदौ नृणां स्वर्गिणामपि तत्क्षणात् ॥५०६॥
संग्रामं रावणः कुर्वन् बद्ध्वेन्द्रं दृढबन्धनैः । निजाज्ञां ग्राहयामास-नुगानिन्द्रस्य लीलया ॥५०७॥
जयढक्कां दशास्योऽथ वादयन् सर्वतस्तदा । लङ्कामभ्येत्य कारायां चिक्षेपेन्द्रं शकुन्तवत् ॥५०८॥

सहस्रारः समेत्याऽथ भक्त्या नत्वा दशाननम् । जगौ कृत्वा कृपां मुञ्च मत्पुत्रं गुप्तिवेश्मतः ॥५०९॥
मोच्येऽहं गुप्तितश्चैनं तदा राज्यं ददामि च । अङ्गीकृत्य दशास्योक्त-मिन्द्रः स्वपुरमीयिवान् ॥५१०॥
लङ्कां प्रमार्जयन् शश्व-दिन्द्रो लज्जापरोऽन्यदा । राज्ये स्वं नन्दनं न्यस्य जग्राह संयमश्रियम् ॥५११॥
तप्त्वा तपश्चिरं छित्त्वा कर्म्माष्टकमशेषतः । इन्द्रर्षिः केवलज्ञानं प्राप्य प्राबोधयज् जनान् ॥५१२॥
बोधयित्वा जनान् भूरीन् गत्वा शत्रुञ्जयाचले । आयुःक्षयाद्ययौ मुक्ति-मिन्द्रः साधुसहस्रयुग् ॥५१३॥
परस्त्रीसङ्गमान् मृत्युं विदन् दशाननस्तदा । इच्छन्तीमपि वामाक्षीं न्यषेवयन् निरन्तरम् ॥५१४॥
वरुणस्याऽऽहवे वीक्ष्य हनुमद्बलमुल्बणम् । हृष्टो दशाननोऽप्राक्षीत् कस्यायं नन्दनः खलु ? ॥५१५॥
मन्त्रीश्वरोऽवगादित्य-पुरे प्रल्हादभूपतेः । पवनञ्जयपुत्रोऽभूत् पत्नीकेतुमतीभवः ॥५१६॥
माहेन्द्रनगराधीश-माहेन्द्रनृपनन्दिनीम् । अञ्जनासुन्दरीं पाणि-ग्रहादङ्गीचकार सः ॥५१७॥
पवनञ्जयभूभुग्भू-रञ्जनासुन्दरीभवः । हनुमानामिधः सूनु-रयं प्रबलविक्रमः ॥५१८॥
एकदा जननीपार्श्वाद् विमाने याति वेगतः । अर्भकोऽयं पतन् शैलं देहभारादचूर्णयत् ॥५१९॥
चूर्णिता दृषदो भग्नां-स्तरून् भूरीन् सुतं पुनः । अक्षताङ्गं निरीक्ष्याऽम्बा स्वौकोऽनैषीत् प्रमोदतः ॥५२०॥
एवंविधोऽयं बलवान् हनुमान् विद्यतेऽद्भुतः । क्रियते सेवकश्चायं तदा वर्यं भवेन्ननु ॥५२१॥
रावणेन ततश्चक्रे हनुमान् सेवको निजः । रावणस्याऽऽदरात् सेवां चकार च दिवानिशम् ॥५२२॥
तत्र सत्यवती खेटनन्दिनीं जितनिर्जरीम् । अनङ्गसुभगाश्चान्या उपयेमे दशाननः ॥५२३॥
विद्याभृतो विभाकान्त-रविचन्द्रारबुधान् गुरुम् । शुक्रशनिश्चरान् राहु-केतुसञ्ज्ञान् ग्रहान्नव ॥५२४॥
अनङ्गसेनभूकान्त-वीर्यवर्यधराधवान् । वश्यऽकार्षीद्दशास्योऽथ स्वकीयभुजलीलया ॥५२५॥युग्मम्॥
दशानने गृहे सर्वे एते कर्म्मकरा-इव । कार्याणि रावणोक्तानि कुर्वते स्म दिवानिशम् ॥५२६॥
त्रिखण्डां मेदिनीं सर्वां साधयित्वा दशाननः । समेत्य स्वपुरे राज्यं चकार न्यायवर्त्मना ॥५२७॥
षोडशाथ सहस्राणि भूपा मुकुटबद्धतः । सेवन्ते रावणं भूपं समेत्य स्वपुराद् भृशम् ॥५२८॥
त्रिखण्डेशो रसक्षोणी मितसहस्रभूधवैः । सेव्यमानो व्यधाद् राज्यं दशास्यः शक्रवत्तदा ॥५२९॥
कालादिनन्दना लक्ष-प्रमिताः प्रबलौजसः । रावणस्याभवन् वर्याः पृथक् पृथक् प्रियाभवाः ॥५३०॥
एकदा तीर्थमाहात्म्यं श्रुत्वा दशाननो नृपः । [महत् सङ्घयुतः] ग्रामे ग्रामे महं कुर्वन् तीर्थे शत्रु-ञ्जये ययौ ।५३१।
तत्र स्नात्रार्चनामुख्यं पुण्यं कृत्वा दशाननः । ऋषभस्य पदौ नत्वा गिरिनारगिरौ ययौ ॥५३२॥
तत्र विस्तरतः श्रीमन्नेमि-जिनार्चां भावपूर्वकम् । विधाय स्वपुरे चारूत्सवमागाद् दशाननः ॥५३३॥

स्वयं विस्तरतोऽत्र वाच्यः—

इतश्च दण्डकारण्ये रामस्य तस्थुषः सतः । लक्ष्मणः कानने भ्राम्यन् खड्गमेकमलोकत ॥५३४॥
कौतुकात्तु करे कृत्वा पार्श्वस्थां वंशजालिकाम् । छित्वाऽब्जनालवत् शीर्ष-मपश्यत् पतितं पुरः ॥५३५॥
ध्यातवान् लक्ष्मणः कोऽपि मया मौढ्याद् हतो नरः । अयुध्यमाननृहते भवेत् श्वभ्रप्रदं तमः ॥५३६॥
लात्वाऽसिं लक्ष्मणोऽभ्येत्य रामान्ते नृवधं जगौ । रामोऽवग् वत्स ! न वरं विहितं साम्प्रतं त्वया ॥५३७॥
यो ना हतस्त्वया तस्य चन्द्रहासोऽसिरस्ति नु । कोऽपि मर्त्योऽथवा नारी समस्त्युत्तरसाधिका ॥५३८॥

इतः सूर्पणखा सिद्ध-विद्यं सम्भाव्य नन्दनम् । तत्रैता मस्तकं छिन्नं सूनोर्वीक्ष्य जगाविति ॥५३९॥
हा वत्स ! स्वच्छ शम्बूक ! केन त्वं विद्विषा खलु । नीतोऽसि यमसंस्त्यायं मृताऽहं त्वां विनाऽधुना ॥
दृष्ट्वा तत्र नृपादार्लीं यान्तीमन्यत्र सा तदा । वीक्ष्याऽऽसन्नवनेऽपश्यद् रामं मन्मथसन्निभम् ॥५४१॥
मोहिता सा ययाचे तं रामं भोगसुखाय तु । रामोऽवग् मे प्रियाऽस्त्यत्र लक्ष्मणं वृणु भामिनि ! ॥५४२॥
लक्ष्मणो याचितः सूर्प-णखया भोगहेतवे । जगौ नाहं कदाप्यङ्गी-कुर्वे परप्रियां क्वचित् ॥५४३॥
यतः-अनृतं साहसं माया-मूर्खत्वमतिलोभता । निःस्नेहो निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥५४४॥
भ्रष्टा ह्युभयतः सूर्प-णखाऽथ स्मृतनन्दना । कुट्टयन्ति शिरः सूनो-र्वधं पत्युः पुरो जगौ ॥५४५॥
श्रुत्वैतत् सरुषोऽत्यन्तं खराद्या व्योमगामिनः । चतुर्दश सहस्रैस्तु खगैर्युक्तास्तदाऽचलन् ॥५४६॥
रिपूनाऽऽगच्छतो भूरीन् वीक्ष्य रामो जगावदः । तिष्ठ भो ! लक्ष्मणाऽत्र त्वं हन्म्यहं विद्विषोऽखिलान् ॥५४७॥
लक्ष्मणः प्राह राम ! त्वं सीतामत्र स्थितोऽत्र हि । त्वत्प्रसादादहं शत्रून् हनिष्याम्येकलीलया ॥५४८॥
रामो जगौ व्रज भ्रात-र्भवेद् यत्तेऽरिसङ्कटम् । ज्ञापयेथास्तदा सिंह-नादान् मां रिपुसूदनाम् ॥५४९॥
रामाऽऽदेशं शिरस्याऽऽशु कृत्वा नत्वा च लक्ष्मणः । हन्तुं तान् वैरिणश्चापं ससरं शब्दयन् ययौ ॥५५०॥
क्रुद्धेऽथ लक्ष्मणे सूर्प-णखैत्य रावणान्तिके । भ्रातर्द्वौ मानवौ मारो-पमौ दण्डककानने ॥५५१॥
जघ्नतुस्तव जामेयं शम्बूकं खचरं ध्रुवम् । मद्वाण्या भावुकस्ते तु ययौ तद्वधवाञ्छया ॥५५२॥
लक्ष्मणेन समं ताव-त्कीनः स भगिनीपतिः । कुर्वन् घोरं रणं वाढं वैरिणा सह विद्यते ॥५५३॥
तज्ज्येष्ठः सोदरो रामः स्वबलेन दृढेन तु । सीतया सहितो विश्वं वनेऽपि मन्यते तृणम् ॥५५४॥
सा सीता विद्यते स्वीय-रूपनिर्जितनिर्जरी । सर्वलक्ष्मीरतिप्रीति-देव्यो यस्याः पुरस्तृणम् ॥५५५॥
सैव तेऽन्तःपुरं सीताऽलङ्करोति सहोदर ! । तदा तव जनुर्वर्यं जायते नान्यथा मनाग् ॥५५६॥
श्रुत्वैतद्रावणः सीतां स्मरन् दण्डककानने । गतो रामयुतां सीतां दृष्ट्वा दध्याविदं हृदि ॥५५७॥
अस्मिन् रामे स्थिते तस्याः पार्श्वे सीतां मनोहराम् । लातुं शक्नोति न शक्रो न शेषो न सुरोऽसुरः ॥
बाहुभ्यां तीर्यतेऽम्भोधि-र्वर्ष्मणाऽऽलिङ्ग्यते शिखी । पञ्चाननमुखे हस्तः क्षिप्यते मनुजेन तु ॥५५९॥
असौ रामो न गृह्येत केनापि बलिना क्वचित् । गृहीतव्या कथं सीता मयेयं साम्प्रतं ध्रुवम् ॥५६०॥
ततोऽवलोकिनी विद्या दशास्येन स्मृता तदा । सीतार्थमागता प्राह किमर्थं च स्मृताऽस्म्यहम् ? ॥५६१॥
रावणोऽवक् कुरुष्व त्वं तथा सीता यथा सती । अलङ्करोति मेऽद्यैव शुद्धान्तं शोभते ततः ॥५६२॥
अवलोकिन्यवग् विद्या भो दशास्येह साम्प्रतम् । रामपार्श्वे स्थिता सीता केनचिद् ह्रियते न हि ॥५६३॥
रावणोऽवक् ततो देवि ! प्रसद्यस्व तथा मयि । यथा सीता छलाद्धस्ते ममाऽऽगच्छति शीघ्रतः ॥५६४॥
ततोऽवलोकिनी प्राह रामे शृण्वति दूरतः । कुरु लक्ष्मणवत् सिंह-नादं त्वं दशकन्धर ! ॥५६५॥
तदा रामो विमुच्यैमां सीतामेकाकिनीमिह । लक्ष्मणस्यान्तिके सद्यो यास्यत्येव दशानन ! ॥५६६॥
रावणेन कृतो सिंह-नादः लक्ष्मणवत्तदा । रामो लक्ष्मणसाहाय्यं कर्त्तुकामोऽचलद् द्रुतम् ॥५६७॥
एकः पक्षी स्वयं प्राप्य जातिस्मृत्याऽभिधां मतिम् । स्वकीयं प्राग्भवं जज्ञा-वेवं काननसंस्थितम् ॥५६८॥
प्राग्भवे दण्डको राजा भूत् कोपसर्गसंघ । पुनः क्षिप्ता क्रमादार्त्ति-ध्यानतो मृतिमीयिवान् (?) ॥५६९॥

अत्राऽभवं जटायुश्च पक्षी दुर्ध्यानयोगतः । ततः कुर्वे जिनेन्द्रोक्तं धर्म्मं मुक्तिसुखप्रदम् ॥५७०॥
मत्वेति सेवते राम-लक्ष्मणौ धर्म्महेतवे । सार्द्धं च कानने ताभ्यां चचाल पक्षिराट् स च ॥५७१॥
जटायुर्जानकीराम-लक्ष्मणानां च सन्निधौ । श्रुत्वा जैनं वृषं भूते-ष्टाष्टम्योःश्चक्षपणं व्यधात् ॥५७२॥
इतोऽम्बरात् समागत्य रावणो धरणीतले । सीतां जहार कुर्वन्तीं विलापमिति स च(ण)पम् ॥५७३॥
हा ! मातर्हा ! पितर्हा हा ! भ्रातर्हा देवराऽधुना । अस्माद् दुराशयाद्रक्ष रक्षेति मां कृपापरा ॥५७४॥

हा ! धीमतां प्रथम लक्ष्मण ! हाऽऽर्यपुत्र ! हा ! तात हा ! दशरथ क्षितिपालचन्द्र ! ।
नीताऽस्मि निर्जनवने पिशिताननेन, त्रायस्व मामिति मुहुर्विललाप सीता ॥१॥

सा नीयमाना विललाप सीता, श्येनेन चिल्लीवदशाननेन ।
भामण्डल ! भ्रातरहं कनीये हा राम ! हा देवर ! तात मातः ॥२॥

विभूषणं किं कुचमण्डलानां ? कीदृश्युमा ? चन्द्रमसः कुतो भाः ? ।
सीता कथं रौति दशास्यनीता ? हा राम हा देवर तात मातः ! ॥३॥

सीतावचो निशम्येति जटायुरेत्य तत्र विः । जगौ दुराशयेमां मा हर सीतां सतीं त्वकम् ॥५७५॥
एषा सती हतात्रैव परत्र चासुखप्रदा । भविष्यति तवात्मनोऽतो मुंचेमां नरेश्वर ! ॥५७६॥
एवं प्रोक्ते यदा नैव विरराम दशाननः । तदा दशमुखं हन्तु-मधावत विरंजसा ॥५७७॥
प्राह चेति-रे रे राक्षस ! मा स्म शङ्करवरभ्रान्त्या विभांक्षीर्नयं, रुष्टो मूढ तदैव यन्मतिमदात्सीतापहारे हरः ।
नो चेदिष्टकपालमण्डलभृताप्याखण्ड्य मुण्डावलीं, भक्त्या ढौकितमीश्वरेण किमिति प्रत्यर्पितं प्राभृतम् ॥५७८॥
अत्रोटयन् दशास्याङ्गं जटायुर्नखरैर्यदा । तदाऽनैषीद्दशास्यस्तं यमसद्म विमञ्जसा ॥५७९॥
सीता भीता तदाऽजल्प-दिति भामण्डलं प्रति । हा भामण्डल ! हा भ्रात-र्मामावेहाधमादतः ॥५८०॥
भामण्डलानुगो विद्या-धरो रत्नजटी तदा । सीतां हृतां दशास्येन ज्ञात्वाऽधावत रक्षितुम् ॥५८१॥
तमापतन्तमालोक्य लङ्केशः पृष्ठितस्तदा । स्वविद्ययाऽथ तद्विद्यां हृत्वा क्षोण्यामपातयत् ॥५८२॥
तत्पत्नीतामनिच्छन्तीं सीतामविघ्नतस्तदा । मुमोच रावणो देव-रमणाभिधकानने ॥५८३॥
वरीतुं रावणं सीता बोध्यमानाऽङ्गनादिभिः । राम रामेति नो नामा-ऽमुञ्चच्चित्तान्मनागपि ॥५८४॥
इतो रामं समायान्तं निरीक्ष्य लक्ष्मणो जगौ । सीतामेकाकिनीं मुक्त्वा त्वं भ्रातः ! किमिहागतः ? ॥५८५॥
रामेणोक्तं त्वया सिंह-नादोऽकारि प्रयत्नतः । तेन त्वत्सन्निधावागा-मिह साहाय्यकृते तव ॥५८६॥
लक्ष्मणः प्राह न क्ष्वेडा मया चक्रे सहोदर ! । किन्तु सीतापहारार्थं केनचिद् विहिता च सा ॥५८७।
याहि याहि द्रुतं सीतां त्वमहं सर्वशात्रवान् । हत्वा तव पदोपास्तिं कर्त्तुमेष्यामि शीघ्रतः ॥५८८॥
रामः पश्चात् समायातो-ऽपश्यन् सीतां प्रियां प्रियाम् । मूर्च्छामाप्य क्षणाल्लब्ध-चैतन्योऽथारुदद् भृशम् ।५८९।
हे सीते ! हे प्रिये ! प्राण-वल्लभे ! त्वमिहाऽऽव्रज । नोत्तरं देहिं किं छन्नं स्थिताऽसि साम्प्रतं प्रिये ! ॥५९०॥
इतस्ततो भ्रमन् सीतां सीतामिति गदन् भृशम् । जटायुषं व्रजत्प्राण-मपश्यद्रामभूपतिः ॥५९१॥
श्रुत्योः स्थित्वा नमस्कारान् दायं दायं जटायुषम् । अलम्भयत् सुरावासं रामो धर्म्मज्ञशेखरः ॥५९२॥
यतः-पंच नमुक्कारे समायाते वच्चंति जस्स दस पाणा । सो जइ न जाई मुक्खं अवस्स वेमाणिओ होइ ॥१॥

भावनमुक्कारविवज्जियाइं जीवेण अकयकरणाइं । गहिआणि य मुक्काणि य अणंतसो दव्वलिंगाणि ॥२॥
कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । अमुं मन्त्रं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥५९३॥
त्रिशिरोदूषणखरान् भूरिभिर्वैरिभिः सह । हत्वा विराधसखिना युक्तोऽचालीत् स लक्ष्मणः ॥५९४॥
आगतो लक्ष्मणः पश्चा-न्नत्वा ज्येष्ठं सहोदरम् । द्विषां विलयवृत्तान्त-मगदद् भ्रातुरग्रतः ॥५९५॥
अजल्पन्तं तदा रामं निःप्रिय वीक्ष्य लक्ष्मणः । पप्रच्छ सोदर ! कास्ति जानकी साम्प्रतं वद ! ॥५९६॥
रामः सगद्गदं प्राह ततो यावदिहागमम् । तावत् सीता हृता केन-चित् खगेनैत्य पापिना ॥५९७॥
जटायुषं हतं कञ्चित् श्वसन्तं वीक्ष्य वेगतः । नमस्कारप्रदानेना-नैषं स्वर्गमहं तदा ॥५९८॥
आचष्ट लक्ष्मणः सिंह-नादो येन कृतस्तदा । तेनैव जानकी भ्रात-र्हृता सम्भाव्यते रहः ॥५९९॥
शशहर खीणो काइं रोहिणि पासिवहटी अहं । अम्हइं दुक्खमयाइं गयणे रावणो लेउ गओ ॥६००॥
एवं पुनः पुना रामं जल्पन्तं शशिनं प्रति । लक्ष्मणः प्रोक्तवान् स्वीयं भ्रातरं बोधहेतवे ॥६०१॥
काइं भूरइं तूं राम सीता गई वलि आविसि । हूनइ न लागइ संविमाणिक मेलनइ सइ वही ॥६०२॥

रामविलापश्चैवम्—

कोऽहं वत्स ! स एष आर्य भगवानार्यः सको राघवः के यूयं वत नाथ पूज्यपदयो र्दासोऽस्म्यहं लक्ष्मणः ।
कान्तारे किमिहारभ्यहं ननु विभो ! देवीगतामृग्यते, का देवी जनकाधिराजतनया हा जानकि ! कासि हा ! ॥
साधु माधवस्व ! यत् पृथ्वी-भारो नारोपितो मयि । कलत्रस्यापि न त्राता स्यां कथं रक्षिता क्षितेः ? ॥६०४॥
रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे सत्यं ममाप्यावयोः, सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥६०५॥
राज्यभ्रंशो वने वासः सीता नीता पिता मृतः । एकैकमपि तद्-दुःख यदब्धीनपि शोषयेत् ॥६०६॥
कातर्यं मुच्यतां भ्रातः ! साहसं श्रयतां पुनः । विलोक्य नेष्यते सीता दुःखं कार्यं मनाग् नहि ॥६०७॥
ततः ससोदरो रामः श्वभ्रलङ्कापुरिं द्रुतम् । गत्वा खरसुतं सुन्दं जिग्ये युद्धं विना ततः ॥६०८॥
ततः पाताललङ्कायां विराधं न्यस्य सेवकम् । रामः ससोदरस्तस्थौ कियन्तो वासरान् ध्रुवम् ॥६०९॥
पूर्वमिच्छुरितस्तारां स साहसगतिः खगः । इष्टरूपकरां विद्यां ससाध विप्रतारिणीम् ॥६१०॥
सुग्रीवे क्रीडितुं याते शुभोद्यानेऽन्यदा मुदा । स साहसगतिर्विद्या-धरः सुग्रीवरूपभृत् ॥६११॥
तारामिच्छुः पुरीमध्ये-ऽभ्येत्य सुग्रीवविष्टरे । उपविष्टोऽनुगैः सर्वैः सेव्यते भक्तिपूर्वकम् ॥६१२॥
उत्थायान्तःपुरे याव-द्याति सुग्रीवरूपभृत् । तावत् सत्योऽपि सुग्रीवो रुद्धो द्वारि समागतः ॥६१३॥
सुग्रीवद्वितयं दृष्ट्वा संशये पतितस्तदा । चन्द्ररश्मिः सुतो वालेः शुद्धान्तमरुणत् स्वयम् ॥६१४॥
सुग्रीवो मायिको नान्तः-पुरे प्रवेशमाप्तवान् । अन्योऽपि न पुरीमध्ये प्रवेशं लभते तदा ॥६१५॥
किष्किन्धानगरीमध्ये स्थितः सुग्रीवभूपतिः । कियद्भिर्मन्त्रिभिश्चान्तः-पुरं नाना निसेव्यते ॥६१६॥
बहिस्थोऽपि स सुग्रीवः कियद्भिः सुभटादिभिः । मन्त्रिभिः सेव्यते व्यक्ति-कर्तुं शक्तस्तयोर्न कः ? ॥६१७॥
सुग्रीवयोर्द्वयोरास-न्नक्षौहिण्यश्चतुर्दश । ततो द्वाभ्यां विधीयेत सङ्ग्रामो दारुणः सदा ॥६१८॥
क्षीणास्त्रः पुरगाहस्थः सुग्रीवो ध्यातवानिति । अक्षीणपौरुषो वालि-र्दीक्षां लात्वा शिवं ययौ ॥६१९॥

अन्तःपुरेऽधुना शत्रुं प्रविशन्तं रुरोध यः । अजानानो द्वयोर्भेदः (दं) स वालिद्वनुरद्भुतः ॥६२०॥
खरो मम सखा पूर्वं रामेण दोष्मता हतः । ततो राज्यं विराधस्य ददौ श्रयाम्यहं च तम् ॥६२१॥
सुग्रीवोऽपि विमृश्यैवं विराधसुहृदन्तिके । गत्वाऽऽहाहं श्रये रामं रोचते यदि तेऽधुना ॥६२२॥
ततः ससोदरं रामं नत्वा सुग्रीव ऊचिवान् । कृपां कृत्वाऽरितस्त्वं मे राज्यं वालय साम्प्रतम् ॥६२३॥
किष्किन्धायां सह भ्रात्रा गत्वा रामः ससोदरः । युद्धायाऽऽकारयन्माया-सुग्रीवं सपरिवह(कर)म् ॥६२४॥
द्वयोः सुग्रीवयोस्तुल्य-रूपं जल्पनमेव च । निरीक्ष्याध्यायि रामेणान्तरे सत्योऽनयोश्च कः ॥६२५॥
युद्धं चेत् क्रियते तर्हि नृसंहारो भवेद्बहुः । ततस्तथा करिष्येऽहं सुसुखं स्याद्यदावयोः ॥६२६॥
रामोऽथ सत्यसुग्रीव-ज्ञतये समरे तथा । वज्रावर्त्तस्य चापस्य गुणघातमताडयत् ॥६२७॥
वेशप्रावर्त्तिनी विद्या मायासुग्रीवविग्रहम् । मुक्त्वा नश्यन्तमेवामु-मपश्यन् मायिनं जनाः ॥६२८॥
तत एकेन बाणेन सुग्रीवं मायिनं द्रुतम् । रामोऽनैषीद्यमावासं ततोऽन्यं शिश्रियुः प्रजाः ॥६२९॥
ततो दाशरथिर्भ्रातृ-युतः सुग्रीवभूभुजे । किष्किन्धानगरीराज्यं ददौ सन्मानपूर्वकम् ॥६३०॥
भामण्डलो विराधश्च कालज्ञौ सपरिच्छदौ । रामं नत्वोचतुः कार्यं मह्यं दिशतु साम्प्रतम् ॥६३१॥
जाम्बुवान् हनुमान् नीलो निषधश्चन्द्रनोऽपि च । गम्भीरोऽरिंदमः सुन्दः सुग्रीवं शिश्रियुर्मुदा ॥६३२॥
सुग्रीवो राममापृच्छ्य सीताऽन्वेषणहेतवे । हनुमन्तं लसत्सारं प्रजिघाय विचक्षणम् ॥६३३॥
इतो दशमुखो वाञ्छन् भोगाय रामगेहिनीम् । स्वप्रियाः प्रेषयामास सन्मानयितुमञ्जसा ॥६३४॥
गत्वा सीतान्तिके प्रोचू रावणस्य प्रियास्तदा । रावणं वृणु भो ! सीते ! त्रिखण्डभूमिनायकम् ॥६३५॥
द्वात्रिंशत्तु सहस्राणि पत्न्यो यस्य मनोहराः । रूपेण जयति स्वर्ग-नारीर्मन्मथगेहिनीः ॥६३६॥
विभीषणादिभिर्भूपैः सीतात्यजनहेतवे । बोधितोऽपि दशास्यो न तत्याज जानकीं तदा ॥६३७॥
यतः-वरमग्गिम्मि पवेसो वरं विसुद्धेण कम्मुणा मरणं । मा गहियव्वयभंगो मा जीयं खलिअसीलस्स ॥
दत्तस्तेन जगत्यकीर्त्तिपटहो गोत्रे मषीकूर्चकः-श्चारित्रस्य जलाञ्जलिर्गुणगणाऽऽरामस्य दावानलः ।
सङ्केतः सकलापदां शिवपुरद्वारे कपाटो दृढः, शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचिन्तामणिः ॥६३८॥
प्रच्छं प्रच्छं क्रमाद् विद्या-धरान् लोकान् बहूनपि । रावणापहृतां सीतां जज्ञौ दाशरथिर्ध्रुवम् ॥६३९॥
सुग्रीवेगच्छति रामः साधयामः क्रियान्तरे । नैवाश्चर्यग्रहव्यग्रः सुग्रीवो नागमिष्यति (?) ॥६४०॥

तदा सुग्रीवं प्रति लक्ष्मणोऽवग्-

समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः । न स सङ्कुचितः पन्था येन वाली हतो गतः ॥६४१॥
ततः सुग्रीव आगत्य जगाद राघवं (सत्वादार्यः) प्रति । आदेशं देहि सीताया वीक्षणं क्रियते मया ॥६४२॥
विषमे स्थानके लङ्का-रूपे ज्ञाते सति क्रमात् । प्राहैको व्योमगो रत्न-जटीति राघवं प्रति ॥६४३॥
सीता हृता दशास्येन नीता तस्य वनान्तिके । तत्र स्थिता सती धर्म्म-परास्तीति मया श्रुता ॥६४४॥
अन्यदा गणकः पृष्टो मृत्युं स्वं रावणेन तु । जगौ कोटिशिलां यस्तू-त्पाटयिष्यति हन्ति सः ॥६४५॥
ततो रामादिविद्याभृद्-युतो गत्वा स लक्ष्मणः । उदपाटयत् शिलां कोटिं पश्यत्सु नृपु भूरिषु ॥६४६॥
यदा रामः सीतां ज्ञातुं कृशाङ्गं हनुमन्तं । प्रेषयामास तदा को प्यवग् ॥६४७॥

आशे सर्वस्य सर्वत्र न क्वचित् प्रतिहन्यते । ईदृशादपि यत् सत्त्वा-दार्यः कल्याणमिच्छति ॥६४८॥
ज्ञातुं सीतास्थितिं [रामो] हनुमन्तं सुविक्रमम् । प्रेषयामास लङ्कायां रहः शोभनवासरे ॥६४९॥
उल्लङ्घयन् गिरीन् ग्रामान् पुराणि सरितस्तदा । हनुमान्नभसा गच्छन् लङ्कायाः सन्निधौ ययौ ॥६५०॥
लङ्कायाः सन्निधौ विद्या-माशालिं दुःशकां नृणाम् । स्थापितां दशवक्त्रेणा-पाचकार भुजाबलात् ॥६५१॥
गतेषु रावणाद्येषु राक्षसीव सत्वरम् । हनुमान् गगन इवोऽभूत् सीताया गोचरे दृशः ॥६५२॥
ततो वज्रमुखान् कोणपापिनो भीषणाननान् । निहत्य इव्रतोऽचाली-दग्रतो हनुमान् बली ॥६५३॥
उत्प्लुत्य हनुमान् व्योम्नि वने सीतापवित्रितम् । ज्ञात्वा रक्षोमुखात् सीता-पार्श्वे छन्नं रहः स्थितः ॥६५४॥
राक्षसीभिर्दशास्याय बोध्यमाना च जानकी । मलक्लिन्नाम्बरीं सीतां जल्पद्रामाभिधां तदा ॥६५५॥
गृह्णन्तीमर्हतो नाम रामनामान्तराऽन्तरा । सीतां दृष्ट्वा मरुत्पुत्रो दध्यावेवं निजं हृदि ॥६५६॥
विश्वस्य पावनी सर्व-सतीनारीशिरोमणिः । सीतेयं विद्यते राम-गेहिनी शीलशालिनी ॥६५७॥
युक्तमस्याः सुधर्मिण्याः कृते दाशरथिः सदा । खिद्यते कुरुते वाल-यितुं चोपक्रमं पुनः ॥६५८॥
रामहस्तगतां मुद्रां हनुमत्करसंस्थिताम् । वीक्ष्य सीता पतिं मृत्यु-गतं ध्यात्वेति चेतसि ॥६५९॥
रुरोदोच्चैः स्वरं कान्त ! कथं मुक्त्वेह मां मृतः । अधुनाऽहं करिष्यामि प्राणत्यागं मृतेस्तव ॥६६०॥
रुदन्तीं जानकीं पत्युः पञ्चत्वशङ्कया तदा । हनुमान् जीवयामास श्रीरामचन्द्रवार्त्तया ॥६६१॥
उक्तं च–भर्त्ता ते सानुजो मातः ! कुशली रावणान्तकृत् । तद् दूतोऽहं तु हनुमान् पवनाञ्जनयोः सुतः ॥१॥
यतः-सुद्धे(मुद्रे)सन्ति सलक्ष्मणाः कुशलिनः श्रीरामपादाः स्वयं,
सन्ति स्वामिनि ! मा विधेहि विधुरं चेतोऽनया चिन्तया ।
एतं व्याहर देवि ! मैथिलिसुते नामान्तरेणाधुना,
रामस्त्वद्विरहेण कङ्कणपिदं यद् दापितोऽस्यै चिरात् ॥६६२ ।
तव पत्युरहं भृत्यो हनुमान्नामतोऽस्मि हि । मां मुद्रासहितं रामो प्रैषीत् ज्ञातुं तव स्थितिम् ॥६६३॥
श्रुत्वैवद् वचनं सीता हृष्टाऽऽशु व्यरमन्मृतेः । ततः सत्याः पुरो मुद्रां मुक्त्वाऽनंसीन्मरुत्सुतः ॥६६४॥
सीतोत्थाय नतिं कृत्वा मुद्रायास्तां सुविष्टरे । मुक्त्वार्चित्वा सुमैस्तां चा-नंसीत् पुनः पुनर्मुदा ॥६६५॥
उक्तं च–"तिष्ठतो दण्डकारण्ये रामलक्ष्मणयोस्तयोः । आदेशादहमत्राऽऽगां राममुद्रासमन्वितः ॥१॥
आकर्ण्यैतद् वचः सीता मुद्रां मौलिगतां तदा । कृत्वा मुदं व्यधाद् भूयो भूयोऽनंसीच्च तां पुनः"॥६६६॥
वायुपुत्रोपरोधेन रामस्य कुशलश्रुतेः । एकविंशत्यहोरात्रि-प्रान्ते पारणकं व्यधात् ॥६६७॥

हनुमन्तं प्रति सीता प्राह–

"अगावगाधो बहुनीरपूरै-र्निस्तीर्णवान् यो मनसोऽप्यगम्यः ।
त्वां पुत्र ! पश्यामि च हीनगात्रं निस्तीर्यते किं भवतात्मपुत्रः ॥१॥
अमुं तपो रक्षतु लक्ष्मणस्य तदार्जवं रक्षतु चा(दा)युसूनोः ।
वलीमुखं रक्षतु संशयस्थ-ममायमन्तःकरण ममापि ॥२॥"

सीतायै मुद्रिकां दत्त्वा रामस्मरणहेतवे । सीता चूडामणिं लात्वा सीताङ्घ्री अनमच्च सः ॥६६८॥

जगाद मारुतिर्मात-स्त्वया खिद्यं मनाग् नहि । हत्वा दशाननं राम-स्त्वामेवाङ्गीकरिष्यति ॥६६९॥
स्मरन्ती त्वं जिनेन्द्रांह्री रामनाम च नित्यशः । धर्म्मकृत्यं न मोक्तव्यं दुःखं कार्यं च नो त्वया ॥६७०॥
चूडामणिरयं राम-भद्राय दास्यते मया । ततो रामः सतीं त्वां च मत्वा हृष्टो भविष्यति ॥६७१॥
नत्वा सीतां व्रजन् देव-रमणोद्यानपादपान् । बभञ्जाऽऽदौ मरुपुत्रो वनपालं ततो न्यहत् ॥६७२॥
जघानाद्यं ततोऽन्यानि वनानि मारुतिस्तदा । इतस्तत्राऽऽगतः शक्र-जेता रावणनन्दनः ॥६७३॥
युद्धं कुर्वन् दशास्याङ्ग-जन्मा मारुतिमञ्जसा । बबन्ध सर्पराड्बन्धै-र्निर्दयं हर्षिताशयः ॥६७४॥
सत्यां शक्त्यामपि व्योम-श्वासपुत्रस्तदा स्वयम् । स्वशक्तिं दर्शयामास नहि शक्रजिते मनाग् ॥६७५॥
इन्द्रजिन् मारुतिं तात-पार्श्वे नीत्वा जगावदः । असौ सीताक्रमौ नत्वा रामशुद्धिमचीकथत् ॥६७६॥
अनेन जानकीपार्श्वे प्रोक्तं रामः सलक्ष्मणः । हत्वा दशाननं त्वां स्व-ङ्गीकरिष्यति वेगतः ॥६७७॥
बभञ्जाऽसौ तरून् देव-रमणोद्यानसङ्गतान् । वनपालमसावघ्नं वनान्यन्यानि च स्फुटम् ॥६७८॥
रावणोऽथ जगौ दुष्ट ! पापिष्ठाधमशेखर ! । सीतायै रामभद्रस्य सन्देशादीनचीकथः ॥६७९॥
उद्यानवनछेदादि-पापानि त्वमचीकरः । मत्तु मत्र त्वमायातः स्मर रामं निजं पतिम् ॥६८०॥
मारुतिः प्राह यत् पापं सीताया हरणात् कृतम् । तस्मै दास्यति मत्स्वामी राम आलोचनां द्रुतम् ॥६८१॥
मुञ्चेमां जानकीमद्य यदि त्वं दशकन्धर ! । तदा ते कुशलं नो चेन्मृत्युरेव तवाऽऽगतः ॥६८२॥
श्रुत्वैतद्रावणो रुष्टो जगाद सेवकान् प्रति । अमुं खड्गप्रहारेण नयध्वं यममन्दिरम् ॥६८३॥
यावदायान्ति पौलस्त्य-प्रहिता हननोद्यताः । सेवका मारुतिं खड्ग-प्रहारैर्निर्दयं घनम् ॥६८४॥
त्रोटयित्वाऽऽशु तावच्चा-ऽहिबन्धं मारुतिर्द्रुतम् । पौलस्त्यमुकुटं चूर्णी-चक्रे पर्पटपुञ्जवत् ॥६८५॥
ततो दशाननः प्राह पुच्छमस्य च दह्यताम् । पुच्छे प्रज्वालिते सोऽपि लङ्कां प्राज्वालयत्तदा ॥६८६॥
उत्पत्योत्पत्य स व्योम्नि दग्ध्वा रावणमन्दिरम् । उद्यानं च मरुत्पुत्रो रावणाग्रे जगावदः ॥६८७॥
तवैव मृत्युवेलेषा वर्णिका दर्शिता मया । गच्छाम्यहं समायातं रामं विद्धि दशानन ! ॥६८८॥
लङ्का दग्धा वनं भग्नं (दग्धं) राक्षसाः प्रलयं गताः । यत् कृतं रामदूतेन स रामः किं करिष्यति ? ॥६८९॥
पश्यतो मे दशास्यस्य राक्षसानां प्रपश्यताम् । उड्डीय हनुमान् यातो दृष्टिगोचरतस्तदा ॥६९०॥
सीताचूडामणिं सीता-मिव रामाग्रतस्तदा । मुक्त्वा मरुत्सुतोऽनंसीद् रामं च लक्ष्मणं क्रमात् ॥६९१॥
सीतासत्याः शुभोदन्ते प्रोक्ते हनुमता तदा । आलिङ्ग्य मारुतिं प्रेम्णा रामोऽवक् कुशलं तव ॥६९२॥
मरुत्पुत्रो जगौ स्वामिन् ! प्रमत्तेस्तव सेवकः । दुष्करं सुकरं कार्यं करोत्येव न संशयः ॥६९३॥
सीतामिलनपौलस्त्य-विगोपनादिकेऽखिले । प्रोक्ते हनुमता रामो मुमुदे ससहोदरः ॥६९४॥
ततः सद्वचनैर्वायु-पुत्रमालाप्य सादरम् । मारुतेः पुरतो राम-चन्द्र एवं जगौ तदा ॥६९५॥
त्रिदशैरपि दुर्लङ्घ्या लङ्का नाम महापुरी । कथं वीर ! त्वया दग्धा विद्यमाने दशानने ॥६९६॥
उक्तं च-'सत्तेव जोअणसया तिन्निण्णो सव्वओ समंतेण । तस्स चिअ मज्झ देसे अत्थि तिकूडोत्ति वरसेलो ॥
नव जोअणाणि तुंगो पण्णासं जोयणं सव्वओ य वित्थिन्नो । सिहरं तस्स विरायइ उब्भासेउं दस दिसाओ ॥
सिहरस्स तस्स हेट्ठे जंबूणयकणगविनतपागारं । लंकापुरित्ति नामं नयरी सुरसंपयसमिद्धा ॥३॥"

ततः कृताञ्जलिर्भूयो-भूयः प्रणम्रमस्तकः । हनुमानुक्तवान् भक्ति-रसपूरितमानसः ॥६६७॥
प्रतापेन तु रामस्य देव्या निःश्वसितेन च । पूर्वं दग्धा तु सा लङ्का पश्चाद्वायुवशं गता ॥६६८॥
शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः । यत्पुनस्तीर्यतेऽम्भोधिः प्रभावः प्राभवो हि सः ॥६६९॥
रावणेन हृतां सीतां ज्ञात्वा दाशरथिस्तदा । लक्ष्मणभ्रातृसुग्रीव-मारुतीनां पुरो जगौ ॥७००॥
लङ्कायां गम्यते लात्वा चमूमात्मभिरञ्जसा । विजित्य रावणं सीता सतो सम्प्रति वाल्यते ॥७०१॥

सुग्रीवे विभीषणे च लक्ष्मणेन सह रहो मन्त्रयतो रामो जगौ—

मा स्म विश्वस सौमित्रे ! सुग्रीवे च विभीषणे । यस्य प्रीतिर्न सौदर्ये का प्रीतिस्तत्र विद्यते ? ॥७०२॥
लक्ष्मणोऽवग्—यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चते ॥७०३॥
ततो लक्ष्मणसुग्रीवौ ज्ञात्वा राममनस्तदा । ताडयामासतुर्ढक्कां चमूं मेलयितुं द्रुतम् ॥७०४॥
असङ्ख्यैः सुभटैरश्वै-र्गजैर्दृढरथैस्तदा । मिलितश्चेलतू राम-लक्ष्मणौ शोभनेऽहनि ॥७०५॥
उक्तं च–"मगसिरबहुलपक्खे पंचमिदिवसे दिवायरे उदिए । सुहकरणलग्गजोए अह ताण पयाणयं जायं ॥
दिट्ठो सिही जलंतो निद्धूमो पयलदाहिणावत्ते । आहरणभूसिअंगी महिला सेअसिचयधरा ॥२॥
णिग्गंथमुणिवरिंदो छत्तं हयहसियं तहा कलसो । पवणो अ सुरभिगंधो अहिणवं तोरणं विउलं ॥३॥
खीरदुमंमि अ वासइ वामत्थो वायसो चलियपक्खो । वरभेरिसंखसद्दो सिद्धिं सिग्घं पसाहिंति ॥४॥"
विमानैः खेचराश्चेलु-रश्वेभस्यन्दनैः पुनः । भूचरा अचलन् सिंह-नादं कुर्वन्त आदरात् ॥७०६॥
दशास्यसुभटौ सेतु-समुद्रौ द्वौ लसद्बलौ । वार्द्धिकूलस्थितो रामो बबन्ध दृढबन्धनैः ॥७०७॥
यदा सेतोः समुद्रस्य बन्धं दाशरथिर्व्यधात् । तदाऽयमभवल्लोके प्रघोषः सर्वतो ननु ॥७०८॥
यतः-"दृपद्भिः सागरो बद्धो मनुष्यैरिन्द्रजिज्जितः । वानरैर्वेष्टिता लङ्का जीवद्भिः किं न दृश्यते ।'१॥
ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे, वार्द्धौ वीर ! तरन्ति वानरभटान् सन्तारयन्तेऽपि च ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥७०९॥
गत्वा सुवेलशैलेऽथ सुवेलं नाम पार्थिवम् । जित्वा दाशरथिर्लङ्का-समीपे समुपेयिवान् ॥७१०॥
लङ्कापार्श्वे समायाते काकुत्स्थे सबले तदा । रावणो रणतूर्याणि नादयामास सर्वतः ॥७११॥

अत्र अङ्गदरावणयोर्मिथो जल्पनमिति—

रामः किं कुरुते ? न किंचिदपि च प्राप्तः पयोधेस्तटं, कस्मात् साम्प्रतमेवमेव हि ततो बद्धः किमम्भोनिधिः ।
क्रीडाभिः किमसौ न वेत्ति पुरतो लङ्केश्वरो वर्तते, जानात्येव विभीषणोऽस्ति लङ्कापदे स्थापितः ॥१॥
तदा तत्र स्थितं रामं प्रणम्य मारुतिर्मुदा । प्रोवाच स्वामिभक्त्या तु लक्ष्मणे शृण्वति स्फुटम् ॥७१२॥
बन्धयित्वा दृढं पाशै-र्दशास्यं बलगर्वितम् । इहाऽऽनयेऽद्य वा हन्मि तत्रस्थमसिघाततः ॥७१३॥
रामं सबलमायान्तं श्रुत्वा भ्राता विभीषणः । प्रणम्य रावणं प्राह सुकृती त्वं सहोदर ! ॥७१४॥
त्वयाऽऽदौ जानकी देवी हृता विमृशनं विना । तन्नैवं विहितं वर्यं यतः सत्यस्ति जानकी ॥७१५॥
एकस्यान्यकलत्रस्य हेतवे को विचक्षणः । गमयेदिहलोकं च परलोकं चमूयतः ? ॥७१६॥

यतः-"अप्पउ धूलिहिं मेलिओ सयणदीधओ छार । पगि पगि माथा ढंकणु जिणि जोइ परनारी ॥१॥
जे परदारह परंमुह ते वुच्चइ नरसिंह । जे परिरंभइ परथीह तह फुसिज्जइ लीह ॥२॥"
आदौ हनुमता यद्यद् वनादिभञ्जनं कृतम् । बन्धः सेतोः समुद्रस्य रामेण विहितो दृढम् ॥७१७॥
तेन दाशरथिर्ह्येष बली सम्प्रति वीक्ष्यते । अतः सीतां सतीं देहि रामाय सुखहेतवे ॥७१८॥
रामे स्वनगरोपान्ते ममेते रावणो जगौ । भो अङ्गद ! तव स्वामी किं करोति वदाऽधुना ॥७१९॥
वलं प्रदर्शयन् स्वीय-स्वामिनो रामभूपतेः । अङ्गदः प्रोक्तवानेवं रावणस्य पुरस्तदा ॥७२०॥
विश्रम्भादुत्तमाङ्गं प्लवगबलपतेः पादयत्तस्य जेतुः कृत्वोत्सङ्गे सलीलं स्वविकनकमृगस्याङ्गशेषं दधानः ।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजनं नादरात् तीक्ष्णमक्ष्णः कोणेनाऽवीक्ष्यमाणस्त्वदनुजवदने दत्तकर्णोऽयमास्ते ॥
सुवेलशैलदुर्गस्थं सुवेल बलिनं नृपम् । विजित्य तत्र सैन्यं स्व-मात्मसाद्विदधे क्षणात् ॥७२१॥
तेन सार्द्धं नहि स्पर्द्धा विधीयेत मनागपि । रामोऽयं दृश्यते वर्ध-मानतेजा लसद्बलः ॥७२२॥
तदा विभीषणं राम-गुणान् लान्तं पुनः पुनः । दृष्ट्वा दशाननः क्रुद्ध-स्तं हन्तुमुद्यतोऽभवत् ॥७२३॥
शत्रौ प्रसंशिते क्रुद्ध-चेता दशाननस्तदा । विभीषणं गलेकृत्य सभायां निरकाशयत् ॥७२४॥
तदाऽन्ये भूधवाः प्रोचुः नायं वर्यो दशाननः । सहोदरोदितं नैव मन्यते स्म हितं मनाग् ॥७२५॥
यतः-दिवा पश्यन्ति नो घूका काको नक्तं न पश्यति । न पश्यति मदोन्मत्तः स्वार्थी दोषं न पश्यति ॥१॥
एके तदा जनाः प्रोचुः न वर्योऽयं विभीषणः । यतो वेत्ति न वक्तुं तु भूभुजां पुरतो मनाग् ॥७२६॥
यतः-'सेवकेन सदा स्वस्मिन् हितमेव तु वाञ्छता । स्वामिनो रोच्यमानं तु वक्तव्यं नापरं मनाग् ॥१॥'
ततो विभीषणस्त्रिंश-दक्षौहिणीसमन्वितः । रामं प्रमोदयामास स्वसेवाकरणात्तदा ॥७२७॥
एगावीस सहस्सा मत्तरिमहिआणि अट्ठ य सयाणि २१८७० ।
एसा रहाण संखा हत्थीण वि एत्तिया चेव ॥७२८॥
एक्कं च सयसहस्सं णव य सहस्सा सयाणि तिन्नेव ।
पन्नासा चेव तहा जोहाण वि एत्तिआ संखा १०९३५० ॥७२९॥
पंचुत्तरा य सट्ठी होइ सहस्साणि छ च्चिअ सयाणि ।
दस चेव वरतुरंगा संखा अक्खोहिणीए उ ६५६१० ॥७३०॥
अट्ठारस य सहस्सा सत्त सया दोण्णि सयसहस्साइं ।
एकाय इमा संखा सेणिअ ! अक्खोहिणीए य २१८७०० ॥७३१॥
एकषष्टि सहस्राणि लक्षा पञ्च षष्टियुग् । त्रिंशदक्षौहिणीः सर्व-कुम्भ्यादि मानमुच्यते ॥७३२॥
रामोऽवग् रावणश्चेद् वि-जिष्यते हन्यतेऽथवा । तदा तुभ्यं च लङ्काया राज्यं प्रदास्यते मया ॥७३३॥
विभीषणो जगौ राम ! राज्येन मे कृतं प्रभुम् । तवैव यदि सेवाऽस्तु मम सातप्रदायिनी ॥७३४॥
श्रुत्वैतद्वचनं रामो दध्याविदं हृदि स्फुटम् । भृत्या एवंविधा भाग्या-ल्लभ्यन्ते पुण्यशालिना ॥७३५॥
यतः-"अरैः सन्धार्यते नाभि-र्नाभौ चाऽराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्त्तते ॥७३६॥"
चित्तज्ञः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः । यथोक्तवादी स्मृतिमान् भृत्यः स श्लाघ्यते नृपैः ॥७३७॥

कम्पयन् भूतलं सैन्यै-र्दिशो बधिरयन् रथैः । रजोभिः छादयन् व्योम रामो लङ्कामवेष्टयत् ॥७३८॥
अक्खोहिणी सहस्सं एक्कं चिअ वानराण सव्वाणं । भामंडलेण सहियं भणियं चउरंगसेन्नस्स ॥७३९॥
तदा दशाननः सर्वं बलं सन्नह्य वेगतः । लङ्काया निर्गतो युद्धं कर्तुं रामाऽरिणा समम् ॥७४०॥
अक्खोहिणी सहस्सा हवंति चत्तारि बुहजणुद्दिट्ठा । रावणबलस्स एवं मगहवई ! होइ परिमाणं ॥७४१॥
दैवतैराऽऽयसैरस्त्रै मिथः क्षेपणदारुणैः । दशास्य-राम सैन्यानां सङ्ग्रामो दारुणोऽभवत् ।७४२॥
गजस्थो गजगैः सार्द्ध-मश्वस्थस्तुरगस्थितैः । रथस्थो रथगैः सार्द्धं युद्धं वितेनिरे भटाः ॥७४३॥
जायमाने रणे घोरे मिथस्तत्र जयेच्छया । उद्धतेषु भटेष्वेव जयश्रीः संशयेऽपतत् ॥७४४॥
आदेशं प्राप्य रामस्य युद्धं कुर्वति मारुतौ । दशास्यस्य महायोधौ भग्नौ हस्तप्रहस्तकौ ॥७४५॥
रामादेशादितो युद्धं कुर्वतो नलनीलयोः । सिंहनादा द्विषां वक्षः स्फोटयन्ति दिशोदिशम् ॥७४६॥
वाद्यमानेषु तूर्येषु सर्वेषु सङ्गरे तदा । युद्ध्यन्ति सुभटा बाढं द्वयोश्चम्वोः परस्परम् ॥७४७॥
यतः-भंभामुइंगडमरुयढक्का हुंकारसंखपउराइं । खरमुहि-हुडुक्कपावय-कंसालयतिव्वसद्दाइं ॥७४८॥
गयतुरयकेसरीणं सद्दो वित्थरइ महिसवसहाणं । मयपक्खीण बहुविहो कायरपुरिसाण भयजणणो ॥७४९॥
यदा नलः कपिर्हस्तं प्रहस्तं नीलवानरो । निन्यतुर्मरणं पुष्प-वृष्टिस्तदाऽपतत् खतः ॥७५०॥
नलवानरनीलैस्तु कपिहस्तप्रहस्तकान् । हतान् श्रुत्वा मुदं रामो लेभे लक्ष्मणसयुतः ॥७५१॥
हतौ हस्तप्रहस्तौ तु श्रुत्वा दशास्यसैन्यतः । सारणः शुकमारीचौ सिंहव्याघ्रस्वयम्भुवः ॥७५२॥
बीभत्सोद्दामचन्द्रार्काः कामवामौ स्मरामरौ । क्षेमङ्करो ज्वरो भीमो वीरो बलिंदमो घनः ।।७५३॥
भीमदन्तमहास्कन्धौ महारथप्रजापती । अरिंदमः शतरथः महस्रांशुर्मतङ्गजः ॥७५४॥
वज्रोदरो महावेगः सुन्दपसेन्दुमाधवाः । उत्थिताः समरं कर्तुं यमा इव भयङ्कराः ॥७५५॥ चतुर्भिः कलापकम्
एते युद्धं वितन्वानाः शरैः खड्गैश्च दारुणैः । रामस्य शिबिरं चक्रु-र्हतप्रायं क्षणादपि ॥७५६॥
संहारं भूरिजीवानां निरीक्ष्य सप्तघोटकः । ययावस्तछलादन्य-विषयं करुणापरः ॥७५७॥
प्रातः पद्मभुवा सद्यः प्रेरिता वानरादयः । अढौकन्त दशास्यस्य सैन्यं हन्तुं बलोत्कटाः ॥७५८॥
संग्रामाङ्गणमागतेन भवता चापे समारोपिते, देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैरपि शिरस्तेनापि भूमण्डले, तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयी ॥
जायमाने तदा युद्धे सैन्ययोरुभयोरपि । लक्ष्मणोऽवग् दशास्य त्वा-श्रित्येति प्रकटारवम् ॥७६० ।
रे राक्षसाः कथयत क्व स रावणाख्यो रत्नं रवीन्दुकुलयोरपहृत्य नष्टः ।
त्रैलोक्यदीपकरविस्त्रिशिखाकराले यो रामनामदहने भविता पतङ्गः ॥७६१॥
अथोत्तस्थुर्दशास्यस्य भटा वीररसोत्कटाः । नटीमिव कराग्रस्थां नर्त्तयन्तोऽसिवल्लरीम् ॥७६२॥
ध्वानयन्तो दिशः शब्दै-स्तिरयन्तो दिशः शरैः । दारयन्तोऽवनीं पद्भ्यां कम्पयन्तोऽचलानपि ॥७६३॥
अब्धीनुद्वेलयन्तश्च भञ्जयतोऽवनीरुहान् । उत्पतन्तः पतन्तश्च भटा जघ्नुः परस्परम् ॥७६४॥ त्रिभिर्विशेषकम्
दशास्यस्य तु हुङ्कारैः प्रेरिता यामिनीचराः । बभञ्जुर्वानरान् भूरीन् तटवृक्षानिवोर्म्मयः ॥७६५॥
भग्नं रामबलं वीक्ष्य सुग्रीव उत्थितो युधे । निवार्य हनुमांस्तं च कौणपान् हन्तुमुत्थितः ॥७६६॥

तदा माली धनुःशाली खड्गमुल्लालयंश्च खे । युद्धं हनुमता कर्तु-मुत्तस्थौ यमसोदरः ॥७६७॥
हनुमान्मालिनं चक्रे निरस्त्रं करलाघवात् । नंष्ट्वा माल्यपि शरणं दशास्यस्य ययौ तदा ॥७६८॥
अथाऽस्तं तरणौ याते रामेण प्रेषितोऽङ्गदः । गत्वा दशाननोपान्ते जगौ सीता समर्प्यताम् ॥७६९॥
नो चेत्ते सकुटुम्बस्य रामान्मृत्युमुपागतम् । हक्कितोऽथ दशास्येन पुनरङ्गद ऊचिवान् ॥७७०॥
रक्षोदुर्भिक्षमाधातु मवतीर्णोऽस्ति यः क्षितौ । तस्य रामस्य दूतोह मनस्तस्य च बालिनः ॥७७१॥
शिरोभिर्मा देवी शिव इव न ते दास्यति पुनः, प्रबन्धं पश्याधः सरस इव कैलाससुभटः ।
हितं तु त्वां ब्रूमो मम जनकदोर्दण्डविजय-बलात् कीर्तिस्तम्भं त्यज कमलबन्धो ! कुलवधूम् ॥७७२॥
सन्धौ वापि गृहे वापि मयि धूते दशाननी । अक्षिता वा क्षिता वापि क्षितिपीठे लुठिष्यति ॥७७३॥
एवं जाते द्वितीयेऽह्नि रामरावणयोरपि । ततः स्वस्वबले गत्वा बभूवुः सुस्थिता भटाः ॥७७४॥
अथ वायुसुतो वैरि-बलं निघ्नंस्तदाऽभितः । भ्रान्त्वाऽरातिचमूमध्ये स्वसैन्यं समुपागमत् ॥७७५॥
कुम्भकर्णोऽसिघातेन निघ्नन् रामबलं तदा । सुग्रीवेण समं युद्धं चक्रे शमनसोदरः ॥७७६॥
सुग्रीवेण निरस्तास्त्रः कुम्भकर्णः कृतस्तदा । भामण्डलो जघानाऽथ राक्षसान् भूरिशोऽभितः ॥७७७॥
मरुत्पुत्रासिघातेन कुम्भकर्णोऽपतद् भुवि । ततो दशाननो युद्धं विधातुमुत्थितो रणे ॥७७८॥
दशाननं निषिध्याऽथ तत्सूनुरिन्द्रजित्तदा । उत्तस्थौ रामभद्रस्य बलं निहन्तुमादरात् ॥७७९॥
द्वयोः शिबिरयोर्वीरा आस्फालन्तो मिथो भुजान् । मल्ला इव नियुध्यन्तो दृश्यन्ते यमसन्निभाः ॥७८०॥
बबन्ध नागपाशेन शक्रजित् कपिनायकम् । भामण्डलं बबन्धाऽहि-पाशेन मेघवाहनः ॥७८१॥
जीर्णदोरमिवाऽह्वाय त्रोटयित्वाऽहिबन्धनम् । उत्थितौ तत्क्षणात् तत्र भामण्डलकपीश्वरौ ॥७८२॥
भामण्डलकपीशाभ्यां दशाननबलं समम् । तथा विलोडितं बाढं जीविताऽऽशाऽत्रुटद् यथा ॥७८३॥
अङ्गदः कुम्भकर्णेन सार्द्धं युध्यन् रणाङ्गणे । कुम्भकर्णं व्यधाद् बाढं व्याकुलं जर्जराङ्गकः ॥७८४॥
अथ तार्क्ष्यामरोऽभ्येत्य रामाय पुण्यशालिने । विद्या बह्वीः प्रभावाढ्याः प्रददौ भक्तिपूरितः ॥७८५॥
लक्ष्मणाय हलं स्फारं स्यन्दनं मुशलं पुनः । विद्यां गारुडिकीं तार्क्ष्य-निर्जरः प्रददौ तदा ॥७८६॥
एवमन्यानि शस्त्राणि विद्या नानाविधा वराः । वितीर्य रामभद्राय वासवोऽथ तिरोदधे ॥७८७॥
( समरे लक्ष्मणे युद्धं राक्षसे महसंततम् । अदृष्ट्वा रावणं प्रोच्चै-श्चरमेवं जगौ ध्रुवम् ) ॥७८८॥
निघ्नन्तं लक्ष्मणं सौव-सैन्यं दृष्ट्वा दशाननः । करे चकार धरण-दत्तां शक्तिं ज्वलद्वसुम् ॥७८९॥
मुमोच रावणः शक्तिं यदैव लक्ष्मणं प्रति । वायुपुत्रादयो रोद्धु-मढौकन्त तदा द्रुतम् ॥७९०॥
सर्वेषां शस्त्रसङ्घातान् न्यक्कृत्य शक्तिरञ्जसा । हलिनो हृदयेऽकस्मान्-न्यपतत् वह्निपिण्डवत् ॥७९१॥
लक्ष्मणो मूर्च्छितः सद्यः पपात छिन्नवृक्षवत् । तदाऽऽशु रावणो हृष्टः स्वसेवकसमन्वितः ॥७९२।
इतो युद्धं वितन्वानो रामो विशिखपङ्क्तिभिः । छत्रं दशास्यशीर्षस्थं चिच्छेद रावणं रथम् ॥७९३॥
लक्ष्मणं मूर्च्छितं श्रुत्वा-ऽभ्येत्य तत्र तदा द्रुतम् । दृष्ट्वा च मूर्च्छितो रामो न्यपतद् वसुधातले ॥७९४॥
क्षणात् स्वसेवकैर्वात-प्रक्षेपादिभिरादरात् । सचेतनीकृतो रामः प्राहेति करुणस्वरम् ॥७९५॥
अहत्वा वैरिसङ्घात-मदत्त्वा जानकीं मम । लङ्काराज्यमदत्त्वा त्वं विभीषणाय कथं गतः ? ॥७९६॥

ाकिनं वैरि-वेष्टितं वैरिमध्यनि । सुरलोकं व्रजन् किं न लज्जसेऽथ वदाऽधुना ॥७६७॥
विना निराधारो जातोऽहं लक्ष्मणाऽधुना । मृते त्वयि मम प्राणाः करिष्यन्ति प्रयाणकम् ॥७६८॥
मृत्युं गते वैरि-गेहे वादित्रवादनम् । भविष्यति ततस्ते तु हृष्यन्ति वैरिणोऽखिलाः ॥७६९॥
विभीषणादीनां कथं भ्रातस्त्वया विना । मया पूर्णीकरिष्येत वद त्वमेकशोऽधुना ॥८००॥
ायुसुतः प्राह बद्ध्वा दशाननं त्विह । आनयाम्यथवा लङ्का-वप्रं चूर्णीकरोम्यहम् ॥८०१॥
'देवाऽऽज्ञापय किं करोमि किमहं लङ्कामिहैवानये, जम्बूद्वीपमितो नये किमथवा वारांनिधिं शोषये ।
ाटितविन्ध्यमन्दरहिमस्वर्णत्रिकूटाचल-त्तेपक्षोभविवर्द्धमानसलिलं बध्नामि वारांनिधिम् ॥८०२॥
तदा रामो दुःखी लक्ष्मणं प्रत्यवग्—
ते स्म भोजनपरे स्वपिति स्म सुप्ते, जन्मापि मामनु भवानतनोत् किमन्यत् ।
या क्रमं यदकरोत् सुरलोकयात्रां, सापत्यजः प्रकटितः किमयं विकारः ॥८०३॥
स्थाने कलत्राणि मित्राणि च पदे पदे । तं देशं नैव पश्यामि यत्र भ्राता सहोदरः ॥८०४।
दुःखं हृता सीता न दुःखं लक्ष्मणो हतः । एतदेव महद् दुःखं यत्र राज्ये विभीषणः ।८०५॥
उक्तं च मारुतिनेति तदा —
ापहते विभीषणबले खिन्ने प्लवङ्गेश्वरे मूढे जाम्बुवति प्लवङ्गमगणे सम्भूय भूयः स्थिते ।
प्रौढदृढप्रहारविधुरे मूर्च्छां गते लक्ष्मणे श्रीरामे विलपत्यहो ! हनुमता प्रोक्तं स्थिरैः स्थीयताम् ॥८०६॥
ततः किमु सुधारसमानयामि, निष्पीड्य चन्द्रममृतं किमु वाऽऽनयामि ।
उद्यन्तमुष्णकिरणं किमु वारयामि कीनाशमाशु कणशः किमु चूर्णयामि ? ॥८०७॥
हनुमन्तं प्रति रामोऽवग्—चतुर्णामपि भ्रातॄणां पञ्चमो मम मारुते ! ।
गच्छ शीघ्रं महावीर ! भ्रातृभिक्षां च देहि मे ॥८०८॥
विभीषणो राम ! त्यज खेदं धृतिं श्रय । शक्त्या हतो नरो रात्रिं जीवत्येवोद्यमं कुरु ।'८०९॥
लक्ष्मणरक्षायै परितो बलसप्तकम् । रामादेशाद् व्यधुः सद्यः सुग्रीवाद्याः खगास्तदा ॥८१०॥
ाङ्गदचन्द्रांशुभामण्डलमुखाः खगाः । तस्थुः संवेष्ट्य तद्देहं लक्ष्मणावनहेतवे ॥८११॥
ण्डलसुहृद्भानु-र्नमोविद्याधराग्रणीः । हितेच्छू राममभ्येत्य नत्वाऽऽहेति कृताञ्जलिः ॥८१२॥
ध्यानगरोपार्श्वाद् विंशत्या योजनैः खलु । रक्षितं द्रोणभूपेन विद्यते द्रोणपत्तनम् ॥८१३॥
ोमोदरो द्रोणः स भूपो विद्यतेऽधुना । विशिल्याह्वा सुता तस्य विद्यते वरलक्षणा ॥८१४॥
ं गर्भस्थितायां तु मातू रोगोऽतिदुःशकः । ययौ क्षयं च भूरीणां नृणां स्त्रीणां क्षणादपि ॥८१५॥
। शरीरसंमूर्च्छो यस्यांगे लगति ध्रुवम् । तस्य दुष्टोऽपि रोगः प्राग् विलयमयतेतराम् ॥८१६।
ऽधिष्ठितं शल्यं निर्गच्छति शरीरतः । शाकिनी-व्यन्तरीमुख्याः पराभवन्ति नो मनाग् ।८१७॥
रश्चेत् करसंस्पर्शो लक्ष्मणाङ्गे लगिष्यति । तदाऽयं लक्ष्मणः सज्जो जायते नान्यथा पुनः ॥८१८॥
तद्राम आचष्टा-ङ्गदभामण्डलादिकान् । यूयं याताऽधुनाऽयोध्या-पुर्यां भरतसन्निधौ ॥८१९॥
हरणवृत्तान्तं शक्त्या लक्ष्मणताडनम् । विशिल्यानयनोदन्तं भरताग्रे निवेद्यताम् ॥८२०॥

ततस्तत्र द्रुतं गत्वा निवेद्य राघवोदितम् । भरताय मरुत्पुत्रा-दयो द्रोणपुरं ययुः ॥८२१॥
रामोक्तं निखिलं प्रोक्त्वा द्रोणभूमीपतेः पुरः । मरुत्पुत्रश्च भरत-द्रोणभूपतिसंयुतः ॥८२२॥
तस्यामेव निशीथिन्यां विशिल्यां द्रोणनन्दिनीम् । आनिनायाऽचिराद्राम-सन्निधौ स्वामिभक्तिभाग् ॥युग्मम्॥
विशिल्यायाः करस्पर्शात् लक्ष्मणस्य शरीरतः । शक्तिर्याती धृता हस्ते जल्पितेति हनुमता ॥८२४॥
भोः शक्ते ! किं दशास्यस्य किङ्करी भवसि त्वकम् । साऽवक् प्राग् भवतोऽहं च किङ्करी विहिताऽमुना ॥८२५॥
मुञ्च मां हनुमद् यामि कृपां कृत्वा ममोपरि । अतः परं करिष्यामि नापराधं भवद्बले ॥८२६॥
ततो हनुमता मुक्ता शक्तिर्निजालयं ययौ । ततो जयजयारावो रामसैन्येऽभितोऽभवत् ॥८२७॥
कन्यासहस्रसंयुक्तां विशिल्यां द्रोणभूधवः । लक्ष्मणाय ददौ तत्र चश्वदुत्सवपूर्वकम् ॥८२८॥
विशिल्यास्नाननीरेण स्नापिताः कपयो नराः । सद्यो रूढव्रणा जाता गजताक्ष्यादियोऽपि च ॥८२९॥
उक्तं च ग्रन्थान्तरे—"दठ्ठूण सत्तिभिन्नं सहोअरं महीअलम्मि पल्हत्थं ।
रामो गलंतनयणो मुच्छावसभिंभलो पडिओ ॥८३०॥
सीयलजलोल्लिअंगो आसत्थो वाणरेहिं परिकिन्नो । अह विलविउं पवत्तो रामो कलुणेण सद्देण ॥८३१॥
हा वच्छ ! सायरवरं उत्तरीऊणं इमं अइदुलहं । विहिजोएण अणत्थं एरिसयं पाविओसि तुमं ॥८३२॥
सुलहा नरस्स लोए कामा अत्था अणेय संबेहा । णवरं इह य न लब्भइ भाया माया य जणओ य ॥८३३॥
अहवा परम्मि लोए पावं अइदारुणं मए चिन्नं । तस्सेव य पावफलं जायं सीआनिमित्तम्मि ॥८३४॥
ततो दशाननः श्रुत्वा जीवन्तं लक्ष्मणं प्रगे । विद्याया बहुरूपायाः साधितुं चोद्यतोऽजनि ॥८३५॥
पूजां कृत्वाऽष्टधा वर्यां श्रीशान्तेः षोडशार्हतः । विद्याः साधयितुं लङ्का-धिपस्तामुद्यतोऽभवत् ॥८३६॥
चैत्रे मासे समायाते प्रोचतू रामरावणौ । चैत्रस्याष्टाह्निकां कर्तुं विद्यतेऽत्रसरोऽधुना ॥८३७॥
अत्राहःसु नवस्वेत्र जिनसद्मसु मादरम् । विधीयतेऽर्चना सर्व-जिनानां श्रावकोत्तमैः ॥८३८॥
आचाम्लानि विधीयन्ते श्रावकैरत्र पर्वणि । अर्हदादिपदानां तु जापश्च प्रतिवासरम् ॥८३९॥
चैत्रस्य शुक्लपक्षे चाष्टम्यादौ महोत्सवः । पूर्णिमां यावतारब्धो रामरावणयोर्बले ॥८४०॥
चित्तस्स सुक्कपक्खे उभयबले अट्ठमीमाई । जावज्जीवं पंचदसी अट्ठाहिमहूसवो लग्गो ॥८४१॥
मन्दोदर्या निदेशेन सर्वःपौरजनस्तदा । अष्टाह्निकामहश्चक्रे दशास्यो विघ्नशान्तये ॥८४२॥
सिद्धविद्यो दशास्योऽथ प्रातः कृत्वा जिनार्चनम् । बुभूजे भूरिभिर्भृत्यै-र्बान्धवैश्च समं मुदा ॥८४३॥
द्वितीयेच दिने प्राता रामरावणयोर्मिथः । प्रावर्तत रणं घोरं भूरिजीववधात्मकम् ॥८४४॥
तदा दशाननो हन्तुं वाञ्छन् लक्ष्मीपतिं द्रुतम् । भूरिकौणपयुक् सार्द्धं ढुढौके वैरिभिर्भृशम् ॥८४५॥
भरतोऽथ रणं कर्तुं प्रवृत्तो राक्षसैः समम् । कौणपान् लक्ष्मणोऽप्रैषीत् यमसद्म बहूंस्तदा ॥८४६॥
दूरीकृत्यासिघातेन राक्षसान् हनुमान् बहून् । पौलस्त्यशिबिरं बाढं व्याकुलीकृतवान् खलु ॥८४७।
तीक्ष्णैः खड्गप्रहारैस्तु लक्ष्मणो यमसोदरः । शतसङ्ख्यान् यमावासं प्रेषयामास कौणपान् ॥८४८॥
क्रोधोद्ध्मातमनास्तत्र लक्ष्मणः समराङ्गणे । आहत्य विशिखैर्गाढं दशाननमताडयत् ।.८४९॥
विद्यया बहुरूपिण्या रावणोऽथ रणाङ्गणे । चक्रे स्वरूपतुल्यानि वपूंषि कोटिशस्तदा ॥८५०॥

ततो व्योम्नि क्षितौ पृष्ठेऽग्रे पार्श्वयोश्च लक्ष्मणः । ददर्श रावणान् भूरीन् विविधायुधवर्षिणः ॥८५१॥
यं यं दशाननं हन्ति लक्ष्मणः स स एव तु । द्विगुणादिकक्षोव्यान्त-प्रमाणो जायते रणे ॥८५२॥
लक्ष्मणो विशिखैर्वारं वारं लक्षशतप्रमान् । निघ्नन् कोटिमितांस्तत्र ददर्श रावणान् पुनः ॥८५३॥
लक्ष्मणस्य तदा बाण-गणेषु निशितेष्वहो । हिंसत्सु रावणान् प्रादु रासन् भूरिदशाननाः ॥८५४॥
ततो लक्ष्मण आचष्ट किं रावणप्रसूरभूत् । गर्त्तायाः शूकरी यस्माद् दृश्यन्ते भूरिरावणाः ॥८५५॥
किं वाऽभूच्छशभी किं वा सर्पिणी किमु गोधिका । यतोऽधुना विलोक्यन्ते रावणा बहवो रणे ॥८५६॥
लक्ष्मणो बहुरूपाणां संहारिण्या च विद्यया । विना दशाननं मुख्यं जघानान्यान् दशाननान् ॥८५७॥
ततो दशाननः क्रुद्धः स्वं चक्रं वह्निपिण्डवत् । करे कृत्वा जगौ गच्छ नंष्ट्वा लक्ष्मण ! हेलया ॥८५८॥
नो चेच्चक्रमिदं शीर्षं तव छेत्स्यति साम्प्रतम् । लक्ष्मणोऽवग् न नश्यन्ति शूराः वैरिभयात् क्वचित् ॥८५९॥
मुञ्च ते चक्रमागच्छन् मुष्ट्या चूर्णीकरिष्यते । लोहखण्डस्य नो गर्वो विधातव्योऽधुना त्वया ॥८६०॥
श्रुत्वैवं रावणः क्रुद्धो भ्रमयित्वा शिरोऽभितः । चक्रं चिक्षेप लक्ष्मीशं गमितुं यमसद्मनि ॥८६१॥
चक्रं प्रदक्षिणीकृत्य सौमित्रेः परितस्तदा । अलश्चक्रे शयो वास्तो-ष्पतेर्दम्भोलिवत्तदा ॥८६२॥
लक्ष्मणोऽवग् दशास्य ! त्वं मुञ्च सीतां सतीं यदि । तदा ते जीवितव्यं स्या-दन्यथा चक्रतो मृतिः ॥
रावणः प्राह मे चक्रं प्राणान्न मे हरिष्यति । मुञ्च त्वं लक्ष्मणेदानीं मम हस्ते समेष्यति ॥८६४॥
तदा मन्दोदरी पत्न्यऽभ्येत्याऽवग् रावणं प्रति । नद्यो तौ मानवौ राम-लक्ष्मणौ किन्तु निर्जरौ ॥८६५॥
यतः-मनुष्यौ न मनुष्यौ तौ वानरास्ते न वानराः । व्याजेन किमपि छन्नं समेतावत्र निर्जरौ ॥८६६॥
विपरीते विधौ पुत्र-भार्यापित्रादयः पुनः । विघटन्ते पुनश्चक्रं किमात्मीयं भविष्यति ? ॥८६७॥
यतः—"विहडइ विहवो विहडइ बंधवो० ॥८६८॥
अतो न क्रियते कान्त ! साहसं दीयतेऽधुना । सीता सती तु रामाय ततो वर्यं भविष्यति । ८६९॥
एवं मन्दोदरीप्रोक्तो नात्यजद्रावणो मदम् । तदा लक्ष्मण आचष्ट मृत्युस्ते रावणाऽऽगतः । ८७०॥
मुञ्च सीतां सतीं राम-भद्रस्य पदयोर्द्वयोः । सेवां कुरुष्व मुक्त्वा त्वं मानं भूर्यसुखप्रदम् ॥८७१॥
यतः-औचित्याचरणं विलुम्पति पयोवाहं नभस्वानिव प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितम् ।
कीर्त्तिकैरविणीं मतङ्गज इव प्रोन्मूलयत्यञ्जसा मानो नीच इवोपकारनिकरं हन्ति त्रिवर्गं नृणाम् ॥८७२॥
स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सम्पूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥८७३॥
रावणोऽवक् सुमित्राङ्ग-भव ! त्वं मां गदन्निति । लभसे त्वरितं मृत्युं मम हस्तादतो व्रज ॥८७४॥
एवंविधानि वाक्यानि जल्पन्ते सुहृदां पुरः । मौनं कृत्वा व्रजित्वा त्व(त्वा)मन्यत्र सुखवान् भव । ८७५॥
शीर्षोपरितश्चक्रं भ्रमयित्वा च लक्ष्मणः । हन्तुं दशाननं रोषाद् मुमोच विगतकृपम् ॥८७६॥
चक्रेण तेन तत्कालं छिन्ने रावणमस्तके । लक्ष्मण ! त्वं जयाभीक्ष्ण-मित्यभूद्वाग् घनाध्वनि ॥८७७॥
तदानीं व्योम्नि गीर्वाणा जगुर्भूमौ नरा नृपाः । रेजू रावणशीर्षाणि पतितान्यधुना यतः ॥८७८॥
इह खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्म्मणां विपाकः ।
क्व च ननु जनकाधिपपुत्री क्व च दशकन्धरमन्दिरे निवासः ॥८७९॥

इह खलु० हरगिरसि शिरांसि यानि रेजुः । हर हर तानि लुठन्ति गृध्रपादे ॥८८०॥
पौषे कृष्णस्य पक्षस्यै-कादश्यां पश्चिमेऽहनि । दशग्रीवो मृतो यात-श्चतुर्थे नरके ध्रुवम् ॥८८१॥
यतः-एगो य सत्तमाए पंच पंच य छट्ठि ए एगो । एगो पुण चउत्थीए कन्हो पुण चउत्थपुढवीए ॥८८२॥
तदा जयजयेत्युच्चै-र्व्याहरन्तः सुधाशुजः । विदधुः सुमनोवृष्टिं सौमित्रेर्मस्तकोपरि ॥८८३॥
विभीषणस्तदा सद्यः स्वस्थीकृत्य निशाचरान् । जगाद यदि सौमित्रं सेवध्वं जीवितं तदा ॥८८४॥
कुम्भकर्णेन्द्रजिन्मेघ-वाहनाद्याः क्षपाचराः । रामं नत्वा दशास्यस्य प्रेतकर्म्म वितेनिरे ॥८८५॥
प्रणम्य श्री जिनाधीशं मातृवर्गं समं तदा । कारयामास सर्वत्र रामो जिनार्चनं मुदा ॥८८६॥
तत उद्यानवनतः सीतामानीय सत्वरम् । गीतगानादिनृत्यानि राघवो स्वं व्यधापयत् ॥८८७॥
ततः सर्वं परिवारं स्वीयं दशमुखस्य च । राघवः प्रीणयामास सदन्नपानदानतः (पूजां व्यधात् स्वयम्) ॥
इतोऽमितबलो ज्ञानी लङ्कानगरसन्निधौ । पट्पञ्चाशत् सहस्रैस्तु साधुभिर्युक्त ईयिवान् ॥८८६॥
राम-लक्ष्मण-सुग्रीव-कुम्भकर्ण-विभीषणाः । इन्द्रजित्प्रमुखा भूपाः श्रुत्वा साधुसमागमम् ॥८६०॥
महादानं वितीर्याऽऽशु कुर्वाणा रुचिरोत्सवम् । धर्म्मं श्रोतुं समाजग्मु-र्ज्ञानिनस्तस्य सन्निधौ ॥८६१॥
तिस्रः प्रदक्षिणा दत्त्वा साधोस्तस्य कृतादराः । धर्म्मं श्रोतुमुपाविष्टा रामाद्या मेदिनीभुजः ॥८६२॥
यतः-"अह तस्स दिणस्संते साहु णामेण तत्थ अमिअबलो । छप्पन्नसहस्सजुओ मुणीण लंकापुरी पत्तो ॥
जइ सो मुणी महप्पा एन्तो लंकाहिवम्मि जीवंते । तो लक्खणस्स पीइ होन्ती सह रक्खसिंदेण ॥८६४॥
झायंतस्स भगवओ नूणं खाइक्खएण कम्माणं । रयणिसमयम्मि तइआ केवलनाणं समुप्पन्नं ॥८६५॥
सोऊण दुन्दुहिरवं देवाण समागयाण पउमाभो । खेयरबलेण सहिओ साहुसयासं समल्लीणो ॥८६६॥
ततो ज्ञानी जगौ धर्म्म-देशनां शिवशर्मदाम् । राम-लक्ष्मण-सुग्रीव महीशानां पुरस्तदा ॥८६७॥
मनसि जराभिभूता जायन्ते यौवनेऽपि विद्वांसः । मन्दधियः पुनरितरे न भवन्ति वृद्धत्वयोगेऽपि ॥८६८॥
आरोहन्ती शिरःस्थान्तावौन्नत्यं भजतेतराम् । शिरसः स्थान्तमायान्ती दिशते नीचतां पुनः ॥८६९॥
विकम्पते हस्तयुगं वपुःश्रीः, प्रयाति दन्ता अपि विद्रवन्ति ।
मृत्युः समागच्छति निर्विलम्बं, तथापि जन्तुर्विषयाभिलाषी ॥६००॥
पूर्वसंसारजात् पुण्या-पुण्यनिःपा नात् किल । द्वेषप्रीत्यादि जायेत धनदश्रेष्ठिनो यथा ॥६०१॥
श्रीपुरे धनदश्रेष्ठी बभूवाऽनघवैभवः । तस्य पत्नी सुरूपाऽभूद् रूपेण जितनिर्जरी ॥६०२॥
तस्याभूवन् नृपो भीमः कमलाह्वः पुरोहितः । मन्त्री धनाभिधः श्रेष्ठी चन्द्रः सुहृदः क्रमात् ॥६०३॥
एकदा धनदश्रेष्ठि-गेहेऽभ्येत्य घनो द्विजः । जातः कर्म्मकरो गेह-कृत्यानि कुरुते सदा ॥६०४॥
अन्यदा तेन विप्रेण श्रेष्ठिनः सदनाद् रमा । छन्नं लात्वा गतं रात्रौ दूरदेशे कृतत्वरम् ॥६०५॥
ततः श्रेष्ठी रमां यातां दृष्ट्वा विप्रसमन्विताम् । ज्ञात्वा लात्वा पदौ तस्य विप्रस्य पृष्ठितो ययौ ॥६०६॥
धृत्वा तं तस्करं पश्चात् समानीय नृपान्तिकात् । यावद्धन्तुं रुपा श्रेष्ठी वालयामास शीघ्रतः ॥६०७॥
तावत्तत्रागतो ज्ञानी चन्द्रचूडाभिधो जगौ । श्रेष्ठिन् न हन्यते स्तेनो विप्रोऽसौ भवताऽधुना ॥६०८॥
श्रेष्ठी जगौ ममानेन हृता मही रमा रहः । अतश्चैनं हनिष्यामि चोरदण्डेन हेलया ॥६०६॥

ज्ञानी जगौ त्वया चन्द्र-पुरे पूर्वभवे किल । सोमस्य श्रेष्ठिना छन्नं प्रविश्य सदने निशि ॥६१०॥
अतोऽनेन भवेऽस्मिँश्च तव लक्ष्मी हृता रहः । अत एव न हन्येत विप्र एष वणिग्वर ! ॥६११॥
पद्मे पुरे वणिग् वीरो भूपो मन्त्री पुरोहितः । श्रेष्ठिराट् श्रीधरश्चापि प्रीतिभाजोऽभवन् मिथः ॥६१२॥
अतस्तेषां नृपादीनामिह प्रीतिः परस्परम् । अजायत भृशं पूर्व-भवजस्नेहतः किल ॥६१३॥
यतः-"यस्मिन् दृष्टे मनस्तोषः द्वेषश्च प्रलयं व्रजेत् । स विज्ञेयो मनुष्येण बान्धवः पूर्वजन्मनः ॥६१४॥
यदुपात्तमर्त्यजन्मनि शुभमशुभं वा स्वकर्म्मपरिणत्या । तच्छक्यमन्यथा नैव कर्त्तुं देवासुरैरपि ॥६१५॥
ततो भीमः समुत्थाय मिथ्यादुःकृतपूर्वकम् । प्रीतिं चकार वैरेण समं धर्म्मप्रदानतः ॥६१६॥
ते सर्वे धर्म्ममार्हन्त्यं कृत्वा स्वर्गसुखं क्रमात् । भुक्त्वा प्राप्य पुनर्जन्म मानुषं सुखदायकम् ॥६१७॥
प्राप्य भूरिभवान् स्वर्गे नृलोके च परस्परम् । आससादु: सुखं शैवं भूपादयोऽखिलाः क्रमात् ॥६१८॥
श्रुत्वेति राघवोऽप्राक्षीद् हस्तो नलेन मारितः । प्रहस्तश्च विनीलेन कर्म्मणा केन जल्पताम् ? ॥६१९॥
केवल्याह पुरे वर्ये कुशस्थलाभिधे श्रिया । इन्धकः पल्लवो विप्रा-वभूतां सोदरौ वरौ ॥६२०॥
कृषिकर्म्मरतौ द्वौ च जिनेन्द्रमतसंश्रितौ । सेवेते संयतौ शुद्ध-भिक्षाया दानतो मुदा ॥६२१॥
यतः-'रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां गणकाः क्षीणसम्पदाम् ॥६२२॥'
तत्रैव सोदरौ कृष्ण-मुकुन्दौ बाडवौ सदा । निर्दयौ निन्दनं मौढ्यात् कुर्वाते साधुषु स्फुटम् ॥६२३॥
श्रीपुरे भूपतेर्वैरि-मर्दनस्य सुधर्मि(र्म)णः । दानं लातुं गताः कृष्ण-मुकुन्दाद्या द्विजाः क्रमात् ॥६२४॥
लोभात् कृष्णमुकुन्दाभ्यां द्विजाविन्धकपल्लवौ । निहतौ हरिवर्षे तु अभूतां युग्मिनौ वृषात् ॥६२५॥
मृत्वा कृष्णमुकुन्दौ तु वने कालिञ्जराभिधे । अभूतौ शशकौ पाप-कर्म्मणा रोगसंयुतौ ॥६२६॥
यतः-'तिव्वकसायाण इहं पुरिसाणं साधुनिंदणपराणं । इंदियवसाणुयाणं णियमेणं दोग्गइगमणं' ॥१॥
मृत्वा ततो मृगौ जातौ भीमेऽरण्येऽतिदुःखितौ । ततश्च जम्बुकौ चन्द्रे वनेऽभूतां सरोगिणौ ॥६२७॥
एवं भ्रान्त्वा भवांस्तिर्यग्योनिषु प्रचुरांस्तदा । अभूतां तापसौ बाल-तपोनिष्ठौ जटाधरौ ॥६२८॥
मृत्वा विष्णुकुमारस्य भूपस्यारञ्जिकापुरे । पुत्रौ हस्तप्रहस्तौ तु प्रशस्तरूपधारिणौ ॥६२९॥
युग्मिनौ ताविषे गत्वा श्रीपुरे वणिजौ वरौ । अभूतां धर्म्मकर्म्मादि-परौ सर्वज्ञसेवकौ ॥६३०॥
ततो गत्वा सुरावासे किष्किन्धाह्वे पुरे वरे । रक्षरजःसुतौ जातौ नलनीलाभिधौ वरौ ॥६३१॥
पूर्ववैरेण सङ्ग्रामे नलनीलौ नृपाङ्गजौ । नयतः स्म यमावासं हस्तप्रहस्तभूधवौ ॥६३२॥
यतः-"जो जेण हओ पुव्वं सो तेण हम्मए ण संदेहो । तम्हा ण हणेअन्नो अन्नो मोहादिई सत्तू ॥६३३॥
जो जीवाणं सेणिय ! देइ सुहं सो भुंजए सोक्खं । दुक्खं दुक्खावंतो पावइ नत्थेत्थ संदेहो ॥६३४॥"
पुनः पप्रच्छ रामस्तं ज्ञानिनं तु विशिल्यया । किं कृतं सुकृतं येन भवेऽत्र लक्ष्मणस्य तु ॥६३५॥
शक्तिर्विनिर्गता देहा-द्विशिल्याकरसङ्गतः । ततो ज्ञानी जगौ राम ! शृणु प्रष्टव्यमेव हि ॥६३६॥
विजये पुण्डरीकाह्वे धीरस्य चक्रिणः प्रिया । प्रीत्याह्वया सुताऽनङ्ग-श्रीः सञ्जाता लसद्गुणा ॥६३७॥
सुप्रतिष्ठपुरीशेन पुनर्वसुखगामिना । हृत्वा यावद् गतो दूरे तावत्तत्रामिलन् खगाः ॥६३८॥
जायमाने रणे भग्ने विमाने तस्य खेचरैः । कचिद्वनेऽपतत् कन्या प्रभेव शशिनो यथा ॥६३९॥

भीमे श्वापदसंद्रावे वने स्मृत्वा निजान् जनान् । रुदन्ती करुणारावं लाति पित्रादिकाभिधाम् ॥६४०॥
रुदित्वैव चिरं स्वं तु धीरयित्वा कनी च सा । कुर्वाणाऽथ फलाहार-मष्टमादि तपो व्यधात् ॥६४१॥
षष्ठाष्टमादिकं तीव्रं कुर्वाणा सा तपः सदा । निन्येऽब्दानां सहस्राणि त्रीणि संवेगवासिता ॥६४२॥
इतो मेरौ जिनान् नत्वा लब्धिवासः खगेश्वरः । तत्रायातो विलोक्याधः कनीं भूमिं समीयिवान् । ६४३॥
नत्वा तामवलक्ष्याऽवक् खगः स एहि साम्प्रतम् । त्वां नेष्ये त्वत्पितुः पार्श्वे ततः सा प्राह तं प्रति ।६४४॥
मया त्वनशनं लातं येनान्यत्र व्रजाम्यहम् । ततः खगो जगौ कन्या-स्वरूपं चक्रिणः पुरः ॥६४५॥
वने तत्रागमच्चक्री यावत्तावन्निजाङ्गजाम् । ददर्श गल्यमानां त्व-जगरेण कुटुम्बयुग् ॥६४६॥
तदाऽऽस्यात् कर्षितुं लग्ने भूपे प्राहेति सा तदा । मयकाऽनशनं नूनं गृहीतं स्वर्गशर्मदम् ॥६४७॥
ममानेन शरीरेण भक्षितेनाधुना किल । आशाऽस्य मकरस्यैव पूर्यतां तात ! साम्प्रतम् ॥६४८॥
भक्ष्येऽस्मिन् मच्छरीरे तु गृहीतेऽस्य तनुमतः । मृत्युर्भावी ततः पापं भविष्यति तवाऽतुलम् ॥६४९॥
भक्षितां नन्दिनीं तेन ज्ञात्वाऽभ्येत्य पुरे निजे । राज्यं दत्त्वाऽङ्गजायाऽऽशु दीक्षां लिप्सुरभूच्च सः ॥६५०॥
द्वाविंशत्या सहस्रैश्च पुत्राणां सह चक्रिराट् । जग्राह संयमं चन्द्र-शेखराचार्यसन्निधौ ॥६५१॥
तपस्तप्त्वा चिरं प्राप्य केवलज्ञानमन्यदा । भूरिसाधुयुतश्चक्री जगाम शिवसद्मनि ॥६५२॥
इतः सा कन्यका खाद्यमाना तेन दुरात्मना । धर्म्मध्यानपरा देवी दिव्यरूपाऽभवद्दिवि ॥६५३॥
अनङ्गश्रीस्ततो मृत्वा जिनधर्म्मस्य सेवया । द्रोणस्य भूपतेः पुत्री विशिल्याऽजनि रूपभाग् ॥६५४॥
अस्यां गर्भे प्रजातायां मातू रोगश्चिरोद्भवः । गतोऽन्येषां च लोकानां क्षयादिदुःशको द्रुतम् ॥६५५॥
जिनेन्द्रस्यार्चनां शश्व-त्तथा करोति साम्प्रतम् । यथाऽधुनाऽपि लोकाना-मरिष्टं व्रजति क्षयम् ॥६५६॥
उक्तं च-'सो भणइ दोणदुहिआ अत्थि विसल्ला गुणाहिया लोए । जीसे गब्भत्थाए जणणी रोगेण परिमुक्का ॥
'जिणसासणाणुरत्ता णिच्चं पूआसमुज्जयमईआ । बंधूहिं परियणेण य पूइज्जइ देवया चेव ॥२॥
एहाणोदयेण तीसे सुरहिसुगंधेण म देव ! सित्तोऽहं । समयं णियजणेण तेण णिरोगत्तणं पत्तो ॥३॥'
पुण्येन लभ्यते राज्यं पुण्येन गेहिनी सुताः । पुण्येन जायते देहो नीरोगश्चामलं यशः ॥६५७॥
अस्मिन्नेव भवे क्षिप्त्वा कर्म्माशेषं पुरार्जितम् । विशिल्या यास्यति श्रेयः-पुरीं शुद्धवृषोदयात् ॥६५८॥
तदेति धर्म्ममाकर्ण्ये-न्द्रजिन्मन्दोदरी मुदा । कुम्भकर्णादयो भूपा बहवश्च व्रतं ललुः ॥६५९॥
निःकलङ्कां प्रियां सीतां गृहीत्वा रघुनन्दनः । विभीषणोक्तमार्गेण लङ्कायां प्राविशन्मुदा ॥६६०॥
लङ्काराज्यं प्रदायाऽऽशु विभीषणाय राघवः । जिनार्चां कारयामास चक्रे च (समस्त) जिनसद्मसु ॥६६१॥
भरतोऽथ प्रणम्याऽवग् रामं प्रति लसद्गिरा । चतुर्दश समा जाता कानने वसतस्तव ॥६६२॥
मातृपितृदिता पूर्णा प्रतिज्ञाऽजनि साम्प्रतम् । राजते त्वां विनाऽयोध्या श्मशान दृशा(शी) ननु ॥६६३॥
अतः स्वागमतः स्वर्ग-तुल्यां निजां पुरीं कुरु । रावणाद्या द्विषोऽशेषा विजिता भवताचिरात् ॥६६४॥
ततो विभीषणं पृष्ट्वा रामोऽयोध्यापुरीं प्रति । उपक्रमं व्यधायाव-द्यातुं तावन्नरो जगौ ॥६६५॥
अत्राऽऽसन्ने महातीर्थे वृषभाजितसञ्ज्ञके । विद्येते तत्र गत्वा त्वं नम श्रीवृषभाजितौ । ६६६॥
पुष्पकं यानमारुह्य गत्वा च तीर्थयोस्तयोः । जिनयोः पूजनं चक्रे रामो वर्यमहोत्सवम् ॥६६७॥

दृष्ट्वा विभीषणं यानं पुष्पकं चाधिरुह्य च । रामो यातुमयोध्यायां चचाल लक्ष्मणादियुग् ॥६६८॥
भूपेभ्य उपदां गृह्णन् ग्रामे ग्रामे पुरे पुरे । बहुमानं ददंस्तेभ्यो-ऽचालीद् दाशरथिस्तदा ॥६६९॥
अयोध्यायां सुशोभायां तलिकातोरणादिभिः । रामो भ्रातृयुतश्चक्रे प्रवेशं रुचिरोत्सवम् ॥६७०॥
आदौ जिनालये गत्वा प्रणम्य श्रीजिनाधिपम् । उदारैः स्तवनैश्चक्रे स्तुतिं रामनरेश्वरः । ६७१॥

तथाहि–प्रातः प्रभृतपुरुहूतनतानि पश्य पश्येति पश्यति पदानि तव प्रभोर्यः ।
तस्याङ्घ्रियामलमलं विमलं मरुत्वान् संसेवते समसुपर्वयुतो नितान्तम् ॥६७२॥

त्रैलोक्यलोककुमुदप्रमदप्रदायी कल्कान्धकारनिकरैकनिराकरिष्णुः ।
आनम्रसर्वसुरराजसमाज ! राज-राजेति राजति तवाननपूर्णिमेन्दुः ॥६७३॥

जय जयेति जपन्ति निरन्तरं मनसि नाम नरास्तव ये विभो ! ।
तुद तुदेति तुदन्ति न तान् मनाग् मदनमोहमुखान्तरवैरिणः ॥६७४॥

निःशेषनाकिनरनाथनताङ्घ्रिपद्म ! पद्मातनूभवभवाभवभीतिनेतः ।
भक्त्या भवी भुवि विभो ! वदनं प्रपश्यन् सत्सातभाग् भव भवेति भवेन्न को हि ॥

अर्थिभ्यो मार्गितं दानं दत्त्वा सन्मान्य सज्जनान् । रामो जिनालयं वर्यं समायातः सदुत्सवम् ॥६७६॥
तदाऽयोध्यापुरि भूरि-कुलकोटिकुटुम्बयुग् । वर्यवप्रमहेभ्याली-संयुता शोभतेतराम् ॥६७७॥
यतः-सुरभवणसमं गेहं खितिसरो णाम हवइ पायारो । मेरुस्स चूलिआ इव तह य सभा वेजयंती अ ॥६७८॥
साला य विउलसोहा चंकमणं हवइ सुविहिनामेणं । गिरिकूडं पासायं तुंगं अवलोअणं चेव ॥६७९॥
नामेण वद्धमाणं चित्तं पेच्छाहरं गिरिसरिच्छं । कुकुडअंडावयवं कूडं गब्भगिहं रम्मं ॥६८०॥
कप्पतरुसमं दिव्वं एगत्थंभं च हवइ पासायं । तस्स पुण सव्वओ च्चिअ ठियाणि देवीण भवणाइं ॥६८१॥
अह सीह[साह]वाहणीविअ सेज्जाहर विहुरं दिणयराभ । ससिकिरणसन्निभाइं चमराइं मउअफरिसाइं ॥
वेरुलिअविमलदंडो छत्तं ससिमन्निहं सुहच्छायं । विसमोइयाउ गयणं लंघंती पाउयाओ य । ६८३॥
वत्थाइ अणग्घाइं दिव्वाइं चेव भूसणवराइं । दुब्भिज्जं चिअ कवयं मणिकुंडलजुवलयं कंतं ॥६८४॥
खग्गं गया य चक्कं कणयारि सिलीमुहा विअ अमोहा । विविहाइ महत्थाइं अण्णाणिं वि एवमाईणि ॥
पण्णास महस्साइं कोडीणं साहणस्स परिमाणं । एका य हवइ कोडी अब्भहिआ पवरधेणूणं ॥६८६॥
सत्तरि कुलकोडीओ अहियाउ कुटुंबिआण जिट्ठाणं । साएयपुरवरीए वसंति धणरयणपुण्णाओ ॥६८७॥
कइलाससिहरसरिसोवमाइ भवणाइं ताण सव्वाइं । बलयगवामहिसीहिं समाउलाइं सुरम्माइं ॥६८८॥
पोक्खरिणिदीहियासु अ आरामुज्जाणकाणणसमिद्धा । जिणवरघरेसु रम्मा देवपुरी चेव साएया ॥६८९॥
जिणवरभवणाणि तहिं रामेणं कारिआणि बहुआणि । हरिसेणेण व तइआ भविअजणाणंदिअकराइं ॥६९०॥
गामपुरखेड कव्वडणयरी सा पट्टणाण मज्झत्था । इंदपुरी व कया साएया रामदेवेण ॥६९१॥
सव्वो जणो सुरूवो सव्वो धणधन्नरयणसपुण्णो । सव्वो करभररहिओ सव्वो दाणुज्जओ णिच्चं ॥६९२॥
यत्रान्तरे लसद्गीत-नृत्यवाद्येषु भूरिषु । सुखलीनोऽपि भरतो-ऽसारं संसारमीक्षते ॥६९३॥

तथाहि— दुक्खेहि माणुसत्तं लद्धं जलबुब्बूओवमं चवलं ।
गयकण्णचवललच्छी कुसुमसमं च जोव्वणं हवइ । ९९४॥
किंपागफलसरिच्छा भोगा जीअं च सुविणपरितुल्लं । पक्खिसमागमसरिसा बंधवनेहा अइदुरंता ॥९९५॥
धन्ना हु तायमाई ते सव्वे उज्झिऊण रज्जाइं । उसभसिरी देंमिअत्थं सुगइपहं जे समोइण्णा ॥९९६॥
धन्ना ते बालमुणी बालत्तणम्मि गहियसामण्णा । न य णाओ पेमरसो सज्झाए वावडमणेहिं ॥९९७॥
भरहाइमहापुरिसा धन्ना ते जे सिरिं पयहिऊणं । णिग्गंथा पव्वईआ पत्ता सिवसासयं सोक्खं ॥९९८॥
तरुणत्तणंमि धम्मं जइहं न करेमि सिद्धिसुहगमणं । गहिओ जराए पच्छा डज्झिस्सं सोगअग्गीणं ॥९९९॥
गलगंडसमाणेसु सरीरछीरं तहा वहंतेसु । थणफोडएसु कावि हु हवइ रई मंसपिण्डेसु ॥१०००॥
तंबोलरसालित्ते भरिए चिअ दंतकीडयाण मुहे । केरिसया हवइ रई चुंबिज्जंते अहरचम्मे ॥१००१॥
अंतो कयवरभरिए बाहिरमट्ठे सहावदुग्गंधे । को णाम करिज्ज रई जुवइसरीरे णरो मूढो ॥१००२॥
सुरभोगेसु न तित्तो जीवो सुरवरविमानवासम्मि । सो कह अविअण्हमणो माणुसभोगेसु तिप्पिहिइ ॥१००३॥
एवं भरतभूपस्य ध्यायतोऽसारसंसृतिम् । मनो विरागवद् ज्ञात्वा रामोऽवग् भरतं प्रति ॥१००४॥
त्वत्पित्रा यद्दे राज्यं तुभ्यं तद् वत्स ! साम्प्रतम् । भुङ्क्ष्व धर्म्मं वितन्वानो जिनोक्तं शिवसम्पदे ॥
उक्तं च-अम्ह पिअरेण जो वि हु भरह ! तुमं ठाविओ महारज्जे । तं भुंजसु णिस्सेसं वसुहं तिसमुद्दपेरंतं ॥
एयं सुदरिसणं तुह वसे य विज्जाहराहिवा सव्वे । अहयं धरेमि च्छत्तं मंतीव अ लक्खणो णियय ॥२॥
होइ तुहं सत्तुहणो चामरधारो भडा य संनिहिआ । बंधव ! करेहि रज्जं चिरकालं जाइओसि मया ॥
श्रुत्वेति भरतः प्राह यदुक्तं सोदर ! त्वया । तत् सर्वं मयका मौला-चधारि भक्तिपूर्वकम् ॥१००७॥
भुक्ता पृथ्वी प्रजाऽरक्षि दत्तं दानं सुसाधवे । मयाऽतो मेऽधुना चेतो विरागमभवद् भृशम् ॥१००८॥
अनुमन्यध्वमाशु त्वं दीक्षाग्रहणहेतवे । कुरुष्व(ध्वा) प्रतिबन्धं तु मम सम्प्रति सोदर ! ॥१००९॥
यतः—जह इंधणेण अग्गी न तिप्पइ सायरो णइसएहि । तह जीवो वि न तिप्पइ महएसु वि कामभोगेसु ॥
अग्निर्विप्रो यमो राजा समुद्र उदरं गृहम् । सप्तैतानि न पूर्यन्ते पूर्यमाणानि नित्यशः ॥२॥
प्रोक्त्वैवं स यदा वृत्त-ग्रहणायोत्थितो द्रुतम् । तदा रामेण संरुद्धः स्नेहेन व्याप्तचेतसा ॥१०१०॥
तदा सीता विशिल्या च भद्रा भानुमती रमा । सुभद्रेन्द्रमुखीरत्न-वती पद्मा सुकोमला ॥१०११॥
चन्द्रकान्ता शुभानन्दा-मुख्या लक्ष्मणयोषितः । अन्या अपि वितन्वन्ति क्रीडां भरतसन्निधौ ॥१०१२॥
भरतस्य प्रियाः सर्वाः समेत्य तत्क्षणात् तदा । रागमुत्पादयन्त्यः प्राक् तत्रैत्येति जगुस्तदा ॥१०१३॥
उन्मत्ता सिन्धुरेन्द्रा रयजितपवना वीतयः स्यन्दनाश्च । लक्ष्मी रूपा युवत्यः सततकथितकृत् सेवकाश्चामरौघाः ॥
श्वेतं छत्रं च राज्यं बहुविभवयुतं भोगसौख्यं विहाय ।
दीक्षां भिक्षादिकष्टां भरत ! कथमिहालासि सद्योऽधुना त्वम् ॥१०१५॥
भोगान् भुङ्क्ष्वाऽधुना पूर्व-पुण्यायातान् मनोहरान् । गृह्णीयाश्रमे काले त्यक्त्वा भोगसुखं किल ॥१०१६॥
इत आलानमुन्मूल्य कुम्भी त्रैलोक्यमण्डपात् पातयन् भित्तिवृक्षादीन् समागाद्भरतान्तिके ॥१०१७॥
तदा हाहारवं कुर्वन् लोकः सर्वो दिशोदिशम् । नष्टो हलिहरी तत्रा-जग्मतुस्त्वरितं स्फुटम् ॥१०१८॥

बद्ध्वा कुंजरो नीय-मानोऽथ भरतादिभिः । पश्यन् पुनः पुनः दृग्भ्यां भरतं याति वर्त्मनि ॥१०१९॥
आलानाह्वे दृढे स्तम्भे बद्धस्तैः कुञ्जरः स च । भरतं वीक्ष्य संप्राप जातिस्मृतिं स्वयं तदा ॥१०२०॥
विस्मेरनयनः कुम्भी भरताभिमुखो ध्रुवम् । स्थित्वाऽक्षिसलिलं मुञ्चन् नात्ति भिक्षां बुभुक्षितः ॥१०२१॥
पुनः पुनर्गजो मुञ्च-न्नश्रूणि प्राग्भवं स्मरन् । मित्रंपूर्वभवो द्भूतं भरतं वीक्षते स्म स ॥१०२२॥
सोमदिट्ठी संजुओ मित्तो बंभे सुरो पुरा आसि । चइऊण नरवरिंदो जाओ बलसत्तिसंपन्नो ॥१०२३॥
हा ! कहं अहयं पुण निंदिअकम्मो तिरिक्खजोणीसु । कह हत्थि समुप्पन्नो विवेगरहिओ अनयकारी ॥
तम्हा करेमि संपइ तं कम्मं जेण सव्वदुक्खाइं । छेतूणं देवलोए भुंजामि जहिच्छिए भोगे ॥१०२५॥
श्रीरामो लक्ष्मणः श्रीमान् भरतोऽपि परे जनाः । दध्युश्चेत् केवलीहेति तदा हस्तिमनो वदेत् ॥१०२६॥
इतस्तत्र पुरे देश-भूषणः कुलभूषणः । संयतौ द्वौ समायातौ विशुद्धचरणादरौ ॥१०२७॥
कुर्वाणयोस्तयोः शुक्लं ध्यानं पुण्यतमःक्षयात् । उत्पन्नं केवलज्ञानं लोकालोकप्रकाशकम् ॥१०२८॥
देवैर्विरचिते ज्ञान्यु-त्सवेऽथ देशभूषणः । दातुं यदोपदेशं तु लग्नो रविष्टरस्थितः ॥१०२९॥
तदा पद्मः समायातं ज्ञानिनं भ्रातृसंयुतः । अग्रे कृत्वा गजं नन्तुं ज्ञानिपार्श्वे समीयिवान् ॥१०३०॥
प्रदक्षिणात्रयं दत्त्वा ज्ञानिनो राघवो मुदा । भ्रातृहस्तियुतो धर्म्मं श्रोतुमग्रे ह्युपाविशत् ॥१०३१॥
ततो भव्यावबोधाय केवली देशभूषणः । धर्म्मं जीवदयायुक्तं द्विधा प्राहेति विस्तरात् ॥१०३२॥
तथाहि—पढमो गिहवासीणं सायारो णेगपज्जवो धम्मो । होइ निरायारो पुण णिग्गंथाणं जइवराणं ॥१॥
धम्मो अ परमबंधू ताणं सरणं च होइ जीवस्स । धम्मो सुहाण मूलं धम्मो कामदुहा धेणु ॥२॥ इत्यादि
अथ लक्ष्मीधरोऽप्राक्षीद् भरतं प्रेक्ष्य कुम्भ्ययम् । मोदते मुञ्चते चाश्रु कथं तत् कथ्यतां गुरो ! ॥१०३३॥
देशभूषण आचष्ट प्राप्य जातिस्मृतिं गजः । भरतेक्षणतः पूर्वं भवं निन्दति साम्प्रतम् ॥१०३४॥
लक्ष्मणोऽवग् वदेदानीं कुम्भिपूर्वभवान् यते ! । ततो ज्ञानी जगौ पूर्व-भवांस्तस्यैव दन्तिनः ॥१०३५॥
यदा श्रीवृषभो वृत्तं जग्राह सुरसाक्षिकम् । तदा कच्छमहाकच्छा-दयो वृषभसेवकाः ॥१०३६॥
चतुःसहस्रसङ्ख्याकाः संयमं प्रभुणा समम् । लात्वा तपःपराश्चेलु-र्ग्रामाद् ग्रामे पुरात् पुरे । १०३७॥ युग्मम्
भिक्षामलभमानास्ते बुभुक्षाबाधिता भृशम् । षण्मासान्तः प्रभुं मुक्त्वा बभूवुस्तापसाः पुनः ॥१०३८॥
तरुमूलफलाहाराः शश्वद्वल्कलधारिणः । जटाधरा निजच्छन्द-चारिणस्तापसाश्च ते ॥१०३९॥
गत्वा मरुन्नदीकूले कुर्वाणाः स वनं पुनः । भिक्षां लान्तो गृहस्थेभ्यो निर्वाहं कुर्वते निजम् ॥१०४०॥युग्मम्॥
उत्पन्ने स्वामिनो ज्ञाने मरीचिस्तापसः पुनः । व्रतं लात्वा पुनर्भग्नः संयमादजनिष्ट सः ॥१०४१॥
तदा प्रल्हादनक्षोणी-पतेः पातो रमापुरीम् । सूते स्म श्रीप्रिया चन्द्रो दयसूरोदयौ सुतौ ॥१०४२॥
वैराग्यवासितस्वान्त-स्तदा चन्द्रोदयः सुतः । सूरोदययुतो दीक्षां जग्राह प्रभुणा समम् ॥१०४३॥
भग्नौ वृत्तात् क्रमाच्छिष्यौ मारिचेश्च तपस्विनः । भूत्वा मृत्वा भवान् भूरीन् भ्रमतः स्म तपस्विनौ ॥१०४४॥
अथ चन्द्रोदयो नाग-पुरे हरिमतेः खलु । प्रल्हादनाप्रियाजातो-ऽभवत् कुलङ्करो नृपः ॥१०४५॥
सूरोदयोपि तस्मिँस्तत्-पुरे विश्वभवात्मजः । विप्रोऽग्निकुण्डिका-जातो नाम्ना शुचिरतोऽजनि ॥१०४६॥
कुलङ्करो नृपोन्येद्यु-स्तापसोपास्तये व्रजन् । अभिचन्द्रं मुनिं मार्गे वीक्ष्याऽनंसीद्यदा मुदा ॥१०४७॥

तदा धर्म्माशिषं दत्त्वा ज्ञात्वा तं भद्रकात्मजम् । कुलङ्करं प्रति प्राह प्रबोधाय मुनीश्वरः ॥१०४८॥
यत्र त्वं तापसं नन्तुं यासि तत्राऽस्ति दारु यत् । तन्मध्ये सर्परूपेण म्रियते ते पितामहः ॥१०४९॥
तस्मिन् विदारिते काष्ठे गत्वा तत्र महीभुजः । दृष्टः सर्प्पस्ततोऽरक्षि तत्र तेन तपस्विना ॥१०५०॥
ततस्तं ज्ञानिनं सत्यं मत्वा भूयो यतेर्गिरा । लिलासुरभवद् वृत्तं कल्याणकमलाप्रदे(दं) ॥१०५१॥
राज्ञो मुखादहिः सोऽपि स्मृत्वा पञ्चनमःकृतिम् । मृत्वा मरुद्गृहे देवो महर्द्धिः समजायत ॥१०५२॥
पत्नी पुरोहिताऽऽसक्ता-ऽन्यदा कुलङ्करं प्रति । विषदानान्निनायाऽऽशु मृतिं क्रूरताशया ॥१०५३॥
मृतः कुलङ्करः क्ष्वेड-योगादार्त्तिपरस्तदा । शशकोऽभूत्ततो मोर-स्ततो नागस्ततो गजः ॥१०५४॥
कुर्कुरो दर्दुरस्तस्माद् भवात् सर्प्पश्च दर्दुरः । अभूत् शुचिरतो मृत्वा गजः स्वरोदयासुमान् ॥१०५५॥
ततो मच्छोऽभवत् काक-भक्षितः कुर्कुटोऽजनि । ततः काकस्ततः कुम्भी तत ओतुस्ततो गजः ॥१०५६॥
चन्द्रोदयासुमान् विप्रो भूत्वा स्नानेन भूरिशः । जीवान् हत्वाऽभवद् व्याघ्र-स्ततो मच्छोऽभवत् पुनः ॥
चतुर्योनिषु सम्प्राप्य भवान् भूरीन् नरादिषु । चन्द्रोद्रयासुमान् जातो विप्रः कमलपत्तने ॥१०५८॥
तत्र प्राप्य वृषं जैनं कुर्वाणो वरभावतः । मृत्वा गत्वा दिवि च्युत्वा भरतोऽयमभून्नृपः ॥१०५९॥
अकामनिर्जराकर्म तीव्रतपोयोगात् क्षयन् तप । कमलेपत्तने तस्मिन् विप्रस्य च स्यतित्वतं (?) ।
सुहृत् प्रीतिपरो जातो जैनधर्मरतः पुनः ॥युग्मम्॥१०६०॥
मायया वञ्चयन् लोकान् धर्माज्जातः स निर्जरः । पूर्वोपार्जितपुण्येन सदैव सुखवानभूत् ॥१०६१॥
मायोपार्जितपापस्यो-दयाद्विप्रासुमान् च्युतः । विन्ध्याटव्यामभूद्धस्ती हस्तिनीशतसेवितः ॥१०६२॥
स्वरोदयासुमान् भ्रान्त्वा भवेषु भूरिषु क्रमात् । विन्ध्याटव्यामभूद्धस्ति हस्तिनीशतसेवितः ॥१०६३॥
बलिनं हस्तिनं दृष्ट्वा रावणो भूमिनायकः । आनिनाय निजावासे महामहःपुरस्सरम् ॥१०६४॥
दशास्यस्तस्य भुवना-लङ्कारेत्यभिधां ददौ । अधुना लक्ष्मणावासे म्रियतेऽसौ मतङ्गजः ॥१०६५॥
अधुना भरतं पूर्वभव-सोदरमेक्ष्य स । कुञ्जरो निन्दति स्वीयं भवं तिर्यग्भवं ध्रुवम् । १०६६॥
यतश्चैतौ यतिचन्द्रो-दयस्वरोदयाभिधौ । दीक्षां श्रीवृषभोपान्ते लात्वा प्रमादमीयतुः ॥१०६७॥
अतो भूरिभवान् भ्रान्त्वा-ऽधुना भरतकुञ्जरौ । अभूतां भूपमातङ्ग-वंशभूषणकारकौ ॥१०६८।
अयं कुम्भ्यधुना वृत्तं लिलासुर्मुक्तिहेतवे । अशक्तो निन्दति स्वीयं भवं तिर्यग्भवोद्भवम् ॥१०६९॥
यतः—भंतूण लोहखंभं एसो हु गओ बलेण संखुभिओ। भरहालोए सुमरिअ पुव्वभवं उवसमं पत्तो ॥१०७०॥
यतः-नाऊणं एवमेयं चवलतडियसमं सव्वसत्ताणजीयं, संजोगा विप्पओगा पुणरवि बहवो होंति संबंधिबंधा।
संसारं दुःखसारं परिभमिय चिरं माणु .तं लहेउं, तुज्झेत्थं धम्मकज्जं कुणह सुविमलं बुद्धिमन्ताऽपमत्ता॥
एवं ज्ञानी वचः श्रुत्वा भरतादिमहीभुजः । बहवः संयमं लातु-कामा जाता शिवाप्तये ॥१०७२॥
तत उत्थाय भरतः कृताञ्जलिर्जगावदः । भग्नोऽहं भवदुःखेभ्यो भ्रामं भ्रामं भवान् बहून् ॥१०७३॥
दीक्षातरणिदानेन महान्तं भववारिधिम् । उत्तारय ऽऽशु मां ज्ञानिन् ! कर्माष्टकंविनाशये ॥१०७४॥
विहाय तृणवद्राज्यं त्यक्तनिःशेषभूषणः । सहस्रभूम्युग् दीक्षां भरतोऽलाद् गुरोः पुरः ॥१०७५॥
साधु साध्विति गीर्वाणा जल्पन्तो गगनाङ्गणात् । पुष्पवृष्टिं व्यधुस्तेषां यतीनां मस्तकोपरि ॥१०७६॥

अन्ये तु बहवो भूपाः श्राद्धधर्म्मं दयामयम् । अङ्गीचक्रुस्तथाऽन्येऽपि लोका मुदितमानसाः ॥१०७७॥
इतो भरतमवाप्त-संयमं वीक्ष्य कैकयी । मूर्च्छया न्यपतद् भूमौ सूनोर्वियोगदुःखिता ॥१०७८॥
क्षणात् समुत्थिता राज्ञी कैकयी ज्ञानिना तदा । प्रोक्ता किं क्रियते शोकः सूनोर्वियोगजस्त्वया ॥१०७९॥
अनन्ता नन्दना जाता अनन्तेषु भवेष्वहो । तेषां वियोग आसीत्ते शोकोऽतः क्रियते कथम् ॥१०८०॥
यत उक्तं च-"माता पितृसहस्राणि पुत्रदारशतानि च । संसारेऽत्र व्यतीतानि कस्याऽहं कस्य बान्धवाः ॥
अहं तात ! त्वया जातो मया त्वं च सहस्रशः । सुत एव पिता जातस्तातमायाविमोहितः ॥१०८२॥
संसारे विविधैर्भेदैः मया दृष्टा सहस्रशः । मातरः पितरः पुत्रा बान्धवाश्चैते कोटिशः ॥१०८३॥
आगतोऽहं गतश्चाहं नानायोनिशतेष्वपि । भ्रान्तोऽहं सुचिरं तत्र यन्त्रबद्धघटीनिभः ॥१०८४॥
एवं तवाऽस्य पुत्रस्या-न्यस्यापि देहिनः पुनः । पुत्रपौत्रादिसम्बन्धा बभूवुर्बहुशः खलु ॥१०८५॥
अथ संवेगमापन्ना कैकयी संसृतिं तदा । निन्दन्ती मन्यते देह-पुत्रादि फल्गु तत्क्षणात् ॥१०८६॥
ततः स्त्रीणां सहस्रैश्च संयुता कैकयी मुदा । संयत्याः सन्निधौ दीक्षां लात्वा प्रापुः शिवश्रियम् ॥१०८७॥
मुनिपार्श्वे स मातङ्गः प्रव्रज्य विरतिं तदा । षष्ठाष्टमादि कुरुते तपस्तीव्रं निरन्तरम् ॥१०८८॥
पारणे शुष्कपत्रादि प्रासुकं भक्षयन् गजः । चत्वारि हायनान्येव तपः षष्ठादि स व्यधात् ॥१०८९॥
कृत्वा संलेखनां प्रान्ते मृत्वा स कुञ्जरः क्रमात् । ब्रह्मस्वर्गे गतः सौख्यं भुङ्क्ते स्म समयं बहु ॥१०९०॥
ततश्च्युतो गजो देवः सम्प्राप्य मानुषं भवम् । सर्वकर्म्मक्षयान्मुक्ति-सातमासादयिष्यति ॥१०९१॥
सुमेरुवत् स्थिरो धीरो विहरन् भरतो भुवि । समशत्रुसुहृद्भावो-ऽसातमातसमाशयः ॥१०९२॥
भरतस्तीव्रतपसा क्षिप्त्वा शेषतमश्चयम् । सम्प्राप्य केवलज्ञानं सिद्धाद्रौ शिवमाप्तवान् ॥१०९३॥
भरतेन समं ये तु सिद्धार्थरतिवर्द्धनौ । घनवाहमुखा भूपा-स्तेऽपि केचिच्छिवं ययुः ॥१०९४॥
केचित् स्वर्गे तृतीये तु केचित् तुर्ये च पञ्चमे । केचित् सर्वार्थसिद्धे च विमाने समुपागमन् ॥१०९५॥
तेऽपि वाचंयमाः स्वर्गाच्च्युत्वाऽऽप्य मानुषं भवम् । क्षिप्त्वा कर्माखिलं मुक्ति-पुरीं यास्यन्ति हेलया ॥
भरतस्य वियोगेन लक्ष्मणो दुःखितो हृदि । यावदासीत्तदाऽऽगत्य विराधः सेवको जगौ ॥१०९७॥
भरतोऽखिलकर्म्मौघं क्षिप्त्वा गत्वा शिवाचले । ययौ मुक्तिपुरीं हर्ष मागमल्लक्ष्मणो भृशम् ॥१०९८॥
रामोऽथ भूपतीन् भूरी-नाकार्य- रुचिरोत्सवम् । अभ्यषिञ्चत् तदा राज्ये लक्ष्मणं चक्रधारिणम् ॥१०९९॥
विभीषणं त्रिकूटे तु सुग्रीववानराधिपम् । किष्किन्धायां मरुत्पुत्रं श्रीपुरे श्रीगिरिस्थिते ॥११००॥
नीलं रक्षःपुरे वर्ये प्रतिसूरं हनूरुहे । चन्द्रोदरं च पाताल-लङ्कायां न्यविशन्मुदा ॥११०१॥ त्रिभिर्विशेषकम्
वैताढ्ये दक्षिणश्रेण्यां नगरे रथनूपुरे । भामण्डलो भुनक्ति स्म भूरिविद्याधराश्रितः ॥११०२॥
अथ रामो जगौ भ्रातुः शत्रुघ्नस्य पुरस्त्विति । रोचते या पुरी चित्तेऽयोध्या तत्र साम्प्रतम् ॥११०३॥
त्वं मार्गय शत्रुघ्न ! राज्यरीतिहेतवे । अयोध्यां वा गृहाण त्वं पैतृक्रीं नगरीं वराम् ॥११०४॥
अथ शत्रुघ्न आचष्ट रामं प्रति कृताञ्जलिः । मथुरां नगरीं मह्यं विश्राणय प्रसद्य तु ॥११०५॥
रामोऽवग् मथुरापुर्यां मधुराजा बलोत्कटः । जामाता दशवक्त्रस्य चमर-प्रत्तशूलभृत् ॥११०६॥
तस्य हस्ते त्रिशूलं यद् विद्यते ज्वलनद्युति । तन्मुक्तं विद्विषां शीर्ष-सहस्रं द्यति हेलया ॥११०७॥

अतः स दुःशको भूपो मधुसुरसदामपि । बलवन्तो भटा लक्ष-मितास्तं संश्रिताः किल ॥११०८॥
पालयन् पृथिवीं न्याया-न्नैव केनापि जिष्यते । ततः कथं पुरी सा तु तुभ्यं प्रदास्यतेऽधुना? ॥११०९॥
शत्रुघ्नोऽवगहं जित्वा मधुभूपं बलोत्कटम् । राज्यं लास्यामि मह्यं तु त्वमादेशं प्रदेहि हि ॥१११०॥
रामस्याऽऽदेशमादाय शत्रुघ्नो वैरिणं प्रति । जेतुं चचाल यावच्च तावन्माता जगाविति ॥११११॥
पुत्र ! सोऽस्ति बली वैरी सन्तोषं कुर्वतस्त्वकम् । शत्रुघ्नोऽवग् जिना मह्यं राज्यं दास्यन्ति निश्चितम्॥१११२
यतः-तिलोकमंगला वि हु असुरसुरणमंसिआ भयविमुक्का । ते दिंतु मंगलं मम जिअभावरिउबला सव्वे ॥
रामोऽवक् छलतो वैरी जिष्यते न बलेन च । यतश्छली स विद्यते विद्याशस्त्रादिभिर्भृशम् ॥१११४॥
ततो जिनालये गत्वा प्रणम्य वृषभं जिनम् । शत्रुघ्नः सबलोऽचाली-ज्जेतुं शत्रुं शुभेऽहनि ॥१११५॥
समेत्य मथुरोपान्ते शत्रुघ्नो यावता स्थितः । तावन्मन्त्री जगौ दुष्टो दुर्जयो विद्यते मधुः ॥१११६॥
अतिवीर्यश्च गन्धारो वरवीर्यो महीपतिः । मधुना विजितः पूर्वं शूलं च धरता करे ॥१११७॥
इतोऽन्यः सुभटोऽभ्येत्य जगौ शत्रुघ्नं साम्प्रतम् । मथुराया बहिर्भीमो-द्यानेऽस्ति मधुभूपतिः ॥१११८॥
नर्त्तकीपार्श्वतो नृत्यं कारयन् मधुभूपतिः । न वेत्त्यस्तमितं सूर्य-मुद्गतं च विलोकयन् ॥१११९॥
येन शूलेन मधुना जिष्यन्ते वैरिणः खलु । तदस्त्रं विद्यते गेहे पुर्यन्तः तत्र गम्यते ॥११२०॥
श्रुत्वेति नगरद्वारं भंक्त्वा शत्रुघ्नभूपतिः । प्रविश्य मथुरामध्ये जयढक्कामवादयत् ॥११२१॥
जयढकारवं श्रुत्वा प्रविष्टं वैरिणं पुरि । ज्ञात्वा मधू रणं कर्तुं समागान्मथुरामुखे ॥११२२॥
शूलरिक्तो मधुर्युद्धचन् बलिष्ठोऽपि रणाङ्गणे । वेष्टितः परितोऽत्यन्तं शत्रुघ्नेन महीभुजा ॥११२३॥
तदा मधुसुतोऽतीव बलिष्ठो लवणाभिधः । युद्धं कुर्वन् हतो मृत्यु-मगात् शत्रुघ्नभूभुजा ॥११२४॥
दृष्ट्वा हतं सुतं क्रोध-वह्निना ज्वलितो मधुः ।उत्थितो यमवद् युद्धं कुर्वन् सार्द्धं च शत्रुणा ॥११२५॥
त्रिशूलरहितोऽप्येव मधुर्महाबलो नृपम् । शत्रुघ्नेन समं युद्धं मासमेकं व्यधात्तदा ॥११२६॥
आगतं मरणं दृष्ट्वा पुत्रशोकसमाकुलः । मधुर्दध्यौ मया पूर्वं किं लले न हि संयमः ॥११२७॥
यतः—"मरणं णाऊण धुवं कुसुमसमं जोव्वणं चला रिद्धि ।
अवसेण मए तइया ण कओ धम्मो पमाएणं ॥१॥
पज्जलियम्मि वि भवणे कूवतलायस्स खणणमारंभो । अहिणा दट्ठस्स जए को कालो मन्तजवणस्स ।२।
तम्हा पुरिसेण जए अप्पहिअं नियमसेव कायव्वं । मरणम्मि समावडीए संपइ समरामि अरहंतं ।३॥
अरहंते सिद्धे चिअ साहु तह केवलीय धम्मो य । एए हवंति नियमं चत्तारि वि मंगल मज्झ ॥४॥
एगो जायइ जीवो इक्को उप्पज्जइ भमइ इक्को । सो चेव मरइ इक्को इक्को चिअ पावए सिद्धिं ॥५॥"
ध्यात्वेति त्यक्तशस्त्रादि-मधुर्लुञ्चितमस्तकः । सर्वसावद्यविरति - मुच्चचार स्वयं तदा ॥११२८॥
तत्रैत्य निर्जरा व्योम्नि मधुसंयतमस्तके । व्यधुः कुसुमवृष्टिं तु देववाद्यपुरस्सरम् ॥११२९॥
शत्रुघ्नेन ततस्तत्रा-भ्येत्य तस्य पदोस्तले । पतित्वा क्षमितो मिथ्या-दुष्कृतस्य प्रदानतः ॥११३०॥
त्वं मधो ! भाग्यवानेव यतो राज्यं तृणवत्तदा । त्यक्त्वाऽऽदाः संयमं मुक्ति-सुखसन्ततिदायकम् ॥११३१
अहं तु परराज्येप्सु-रस्मि दुष्टमना भृशम् । मम श्वभ्रं विनाऽन्यत्र गतिर्नान्या भविष्यति ॥११३२॥

धर्म्मध्यानपरोऽत्यन्तं मधुः साधुशिरोमणिः । तृतीये तविषे देवो-ऽजनि भासुरविग्रहः ॥११३३॥
आराध्य चमरं शूलं शत्रुघ्नो लमदुत्सवम् । हस्ते जग्राह चक्रीव चक्रं भासुरदीप्तिमत् ॥११३४॥
जित्वा मधुं तु शत्रुघ्नो मथुरामात्मसात्पुनः । कृत्वाऽयोध्यापुरीमैत्या-नंसीद्रामादिसोदरम् ॥११३५॥
रामोऽपि नगरे तत्र गत्वा राज्याभिषेचनम् । शत्रुघ्नस्य व्यधान्नाना - महोत्सवपुरस्सरम् ॥११३६॥
अन्येद्युर्ज्ञानिनं नत्वा श्रुत्वा धर्म्मं जिनोदितम् । रामोऽप्राक्षीत् कथं भूरि-पुरेषु प्रवरेष्वपि ॥११३७॥
याचिता मथुरा भ्रात्रा शत्रुघ्नेन निगद्यताम् । ततो ज्ञान्यभणद् राम ! श्रूयतां यत् त्वयोदितम् ॥११३८॥
मथुरायां तु जवण-देवो धनप्रियो वणिग् । वसन् धर्म्ममकुर्वाणो मृत्वाऽथ वायसोऽजनि ॥११३९॥
वायसोऽपि मृतो जातो महिषो मथुरापुरि । ततोऽभूद् गवलस्तस्माद् गत्वा महिषोऽन्तरा ॥११४०॥
कर्मोपशमनाज्जातो दारिद्री मनुजः पुनः । विप्रो यतिपदाम्भोजं सेवते स्म निरन्तरम् ॥११४१॥
तस्यैव नगरस्येशे शङ्किते दूरतो गते । महादेवी प्रियाऽऽसक्ता तस्मिन् विप्रेऽभवद् भृशम् ॥११४२॥
अकस्मान्नृपतौ तस्मिन् समायाते निजालये । भीता पत्नी जगावेष तस्करोऽयमिहागतः ॥११४३॥
स्तेनं कृत्वा नृपो धृत्वा तमचालयदञ्जसा । वधाय बहिरुद्याने तत्र साधुः समागमत् ॥११४४॥
साधुना मोचितो दीक्षां लात्वा विप्रस्तपःपरः । मृत्वा प्रान्ते सुरो दिव्य-तनुर्जातः सुरालये ॥११४५॥
जीवो जवणदेवस्य भुक्त्वा तत्र सुखं चिरम् । च्युत्वाऽभून्मथुरापुर्यां महेभ्यो धनदाभिधः ॥११४६॥
एवं जवणदेवस्य जीवो भूरि-भवान् क्रमात् । उत्पन्नो मथुरापुर्यां नरनारीभवादिभिः ॥११४७॥
इतश्च मथुरापूर्यां चन्द्रभद्रमहीपतेः । पत्न्यस्तिस्रोऽभवन् वर्या लक्ष्मी-पद्मा-रमाभिधाः ॥११४८॥
आद्यपत्न्याः सुतः सूरः शूरतुल्यपराक्रमः । बभूव क्रमतो मार-रूपः स्वीयतनुत्विषा । ११४९॥
द्वितीयाऽसूत पुत्रौ तु रामभीमाभिधानतः । क्रमेण भवतां रूप-पराभूतरमाभवौ ॥११५०॥
तृतीयस्या अभूत् पुत्रो धनदस्यासुमान् पुनः । तस्यासीदचलेत्याह्वा चारूत्सवपुरस्सरम् ॥११५१॥
इतो मृगाङ्कनगरे भद्रिकाया सुतोऽभवत् । अङ्कनामा लसद्रूपः पूर्वपुण्यशुभोदयात् ॥११५२॥
क्रमादविनयीभूतो जनकेनाथ ताडितः । अङ्को देशान्तरे ग्रामे ग्रामे बभ्राम सन्ततम् ॥११५३॥
सपत्नीतनयैः क्ष्वेड-दानाद् भूपप्रियोऽपि च । हन्यमानोऽचलश्छन्नं प्रविष्टो दिवसात्यये ॥११५४॥
कण्टकेनाऽथ विद्धाङ्घ्रि-रशक्तश्चलितुं वने । अचलो वीक्षितोऽङ्केन गच्छतेन्धनमौलिना ॥११५५॥
उत्तार्येन्धनभारं स कण्टकं चाचलाङ्घ्रितः । उच्चकर्ष यदा प्राह तं प्रतीत्यचलस्तदा ॥११५६॥
ततोऽचलो जगादाङ्कं प्रत्येवं यदि चेन्मम । राज्यं भावि तदा तत्रा-गन्तव्यं भवताऽङ्क ! ॥११५७॥
त्वचलेनेति गदिते श्रावस्त्यामङ्क ईयिवान् । अचलोऽपि कौशाम्ब्या-मुद्याने समुपेयिवान् ॥११५८॥
कौशाम्बीशस्तदेन्द्र-दत्तः शरशिक्षा-गतः । धनुर्विद्याविदं-ज्ञात्वा-चलं हृष्टोऽभवन्नृपः ॥११५९॥
विधारितेन्द्रदत्तेन मित्रदत्ता स्वनन्दिनी । अचलाय ततो राज्यं नृपोऽदाद् रुचिरोत्सवम् ॥११६०॥
अङ्गादि-विषयान् जित्वा भूरि-भाग्यनृपनुतः । मथुरासन्निधौ प्राप्तोऽचलो विग्रहहेतवे ॥११६१॥
पतद्वाननः सर्वान् पुत्रादिनृपसैनिकान् । वशीकृतान् द्विपाऽनेन चन्द्रभद्रो विवेद च ॥११६२॥
ततः सन्धिकृते राजा समुद्रं निजमालकम् । अचलस्यान्तिके प्रैषीद् ददर्श सोऽचलं तदा ॥११६३॥

वितीर्य प्राभृतं तस्मै पश्चादेत्य स शालकः । अचलागमनं भूमी-पतेरग्रे न्यवेदयत् ॥११६४॥
ततो राजा वलिष्ठं तं पुत्रं ज्ञात्वाऽथ सम्मुखम् । यावद् याति सुतस्तावत् पितुः पादौ ननाम सः ।११६५।
अचलाय निजे राज्ये वितीर्णे भूभुजा तदा । पुत्राद्या निखिला भृत्या अचलं नेमुरादरात् ॥११६६॥
चन्द्रभद्रो व्रतं लात्वा तीव्रं तप्त्वा तपश्चिरम् । सिद्धक्षमाधरे मुक्तिं ययौ सर्वतमःक्षयात् ॥११६७॥
अङ्काय मिलितायाऽथा-चलेन प्रीतिसंजुषा । श्रावस्तीनगरीराज्यं दत्तं सम्मानपूर्वकम् ॥११६८॥
कृत्वा राज्यं चिरं स्वीय-सूनवेऽचलभूपतिः । अङ्कयुक्तो ललौ दीक्षां समुद्रमुनिसन्निधौ ॥११६९॥
अचलाङ्कौ यती तप्त्वा तपः स्वर्गे गतौ सकौ । भुञ्जाते स्वर्गजं सौख्यं देवीदिव्यसमन्वितौ ॥११७०॥
अचलो निर्जरः स्वर्गाच्च्युतश्च कैकयीसुतः । शत्रुघ्नोऽभूद्दशरथ नन्दनो विश्वनन्दनः ॥११७१॥
शत्रुघ्नस्य पुरा भूरि-भवेषु मथुरापुरि । जन्माऽभवद्रतिस्तेना-धुनाऽस्यैव तु सन्ततम् ॥११७२॥
यतः—"गेहस्स तरुवरस्स छायाए जस्स एक्कमवि दियहं । परिवसइ तत्थ जायइ जीवस्स रई सहावेण ॥१॥
किं पुण जत्थ बहुभवे जीवेण संगइ कया ठाणे । जायइ तत्थ बाढं रई अ जीवाण निचम्मि ॥२॥"
अथ सोऽङ्कसुरः स्वर्गात् च्युतो हलधरस्य तु । कृतान्तवदनो नाम्ना सेनानीः समजायत ॥११७३॥
श्रुत्वेति ज्ञानिनो वाणीं रामाद्याः सोदराः समे । विशेषतो जिनेन्द्रोक्तं धर्मं वितेनिरेतराम् ॥११७४॥
मधोस्त्रिशूलमादत्तं शत्रुघ्नेनावगत्य च । चमरो मथुरापुर्यां चक्रे मारिं जनेऽखिले ॥११७५॥
ततः शत्रुघ्न उर्वीशो ज्ञात्वा शून्यां पुरीं च तां । अयोध्यायां समेत्यास्थात् पार्श्वे रामस्य भूपतेः ।११७६
इतो वर्षा-ऋतौ पूर्याः मथुराया बहिर्वने । सप्तर्षयश्चतुर्मासीं स्थितास्तपःपरायणाः ॥११७७॥
तेषां तपःप्रभावेण मारिर्नष्टा गता क्वचित् । ततो रोगोपशान्तिश्च जाता तत्रैव पत्तने ॥११७८॥
ततस्तेषां सुतपसः मारिं नष्टामवेत्य च । शत्रुघ्नो भूपतिस्तत्र समेत्य तान् ननाम च ॥११७९॥
तेषामुपदेशतो मारि-शान्तये स महीपतिः । पूजां शान्तिजिनेशस्य चकारोत्सवपूर्वकम् ॥११८०॥
मथुरायां चतुर्द्वार-देशेषु जिनपालयान् । कारयित्वा जिनाधीशान् द्वासप्ततिमतिष्ठपत् ॥११८१॥
ततश्च सप्ततिशतं जिनानां जिनसद्मसु । चतुर्षु स्थापयामास शत्रुघ्नो विघ्नशान्तये ॥११८२॥
सप्तर्षिप्रतिमा स्थाने स्थाने भूपः पुरान्तरे । न्यवीविशत् तदा रोग-शान्तये स महीपतिः ॥११८३॥
शत्रुघ्नेन ततो नीता नगरी सा महत्तमा । अर्हन्महेभ्यसद्मालीशालिता वप्रशालिता ॥११८४॥
उक्तं च शत्रुघ्नेन—"अज्जपभइं च इहं जिणपडिमा जस्स णत्थि णिययघरे ।
तं णिच्छएण मारी मरीहति मयं व जह वग्घी ॥१॥
अंगुट्ठपमाणावि हु जिणपडिमा जस्स होही घरम्मि । तस्स भवणाउ मारी णासिहिति लहुँ ण संदेहो ।२।"
शत्रुघ्नो भूरिसङ्घेन सहितः सिद्धपर्वते । यात्रां व्यधाज्जिनेन्द्रार्चा-स्नात्रपूजादि-कृत्यतः ॥११८५॥
अर्हतां जन्मदीक्षादिस्थानेषु सङ्घसंयुतः । शत्रुघ्नो विदधे यात्रां सम्मेतशिखरे पुनः ॥११८६॥
ततः—"निक्खमणनाणनिव्वाणजम्मभूमीओ वंदइ जिणाणं ।
नय वसइ साहुविरहिअम्मि देसे बहुगुणेवि ॥१॥"
चक्रं छत्रं धनुः शक्तिः गदा मणिरसिः पुनः । सप्तैतानि क्रमाल्लक्ष्मी-भृतोऽभूवन् शुभोदयात् ॥११८७॥

सहस्राणि पोडश स्त्रीणां लसत्तमकुलोद्भुवाम् । लक्ष्मणस्याभवन्नष्टौ पट्टराज्यः प्रिया वराः ॥११८८॥
यतः—"तुंग कुल-जाइयाणं उत्तम गुण-रूव-जोव्वणधराणं ।
दस-छच्चेव सहस्सा रामकणिट्ठस्स महिलाणं ॥१॥
अट्ठमहादेवीओ सव्वाण वि ताण उत्तमगुणाओ । ॥२॥"
सहस्राण्यष्ट गेहिन्यो रामस्य क्रमतोऽभवन् । पट्टराज्यश्चतस्रश्च महादेव्यादयः पुनः ॥११८९॥
उक्तं च—पढमा उ महादेवी सीया बीआ पभावई भणिया । तइआ चेव रइणिहा सिरिदामा अंतिमा भवइ ॥
लक्ष्मणस्य सुताः सार्द्ध-द्विशतप्रमिता मताः । वृषभो धरणश्चन्द्रः सोदराश्च मनोहराः ॥११९१॥
बद्धमौलिनृपाणां तु सहस्राणि च पोडश । तेषां कोटिः सुताः सार्द्धा-श्चत्वारो रूपशालिनः ॥११९२॥
अन्यदा सीतया प्रोक्तमेवं दाशरथेः पुरः । पस्फार दक्षिणं नेत्र-मनिष्टस्य प्रदं कथम् ? ॥११९३॥
साहइ विप्फुरंतं इट्ठं पुरिसस्स दाहिणं नयणं । ता वामं चिअ फुसि(रि)अं सहसत्ति विलोअणं तस्स॥११९४
ततो रामो जगौ पत्नि ! दुःखं कार्यं त्वया न हि । मयि जीवति कस्ते स्या-द्दुःखकर्त्ता नरः सुरः ॥११९५॥
अर्हत्सद्मसु सार्वाणां कुरु पूजां सुमैर्वरैः । अन्यैरपि सखीलोकैः कारय त्वं निरन्तरम् ॥११९६॥
जिनानां पुरतो दीपं कुरुष्व संयतोत्तमान् । प्रतिलाभय सत्श्राद्धान् भोजय स्वन्नदानतः ॥११९७॥
श्रुत्वेति सीतया सार्व-पूजां कुर्वाणयादरात् । अन्येऽपि स्वसखीलोका कारिता श्रीजिनार्चना ॥११९८॥
यतः—"सीया विय जिणपूयं करेइ तवणिअमगंजमुज्जुत्ता ।
ताव य पया समत्था कुणंति पूअं जिणिंदाणं ॥१॥"
इतो रामो व्रजन् मार्गे तिष्ठंश्च संसदि स्फुटम् । जनानामिति वाक्यानि सुश्राव प्रतिवासरम् ॥११९९॥
चिरकालं स्थिता सीता रावणस्य निकेतने । तेन शीलं न जानक्या पालितं भावि तत्र च ॥१२००॥
सीतामेवंविधां दुष्ट-कलङ्कसहितां किल । यदि रामो रक्षति स्वीय-गेहे मुदितमानसः ॥१२०१॥
तदा कस्य वितीर्येत दोषः सामान्यनुः पुनः । अतो नो रक्षितुं युक्तं जानक्या निजसद्मनि ॥१२०२॥
यतः—"जंपइ पुणो पुणो चिअ जह सीआ रक्खसाण णाहेणं ।
हरिऊण य परिभुत्ता इहाणीआ तहवि रामेणं ॥१२०३॥
उज्जाणेसु घरेसु य तलाव-वावीसु जणवओ सामी । सीया अववायकहं मोत्तूणं ण जंपए अण्णं ॥
दसरहणिवस्स पुत्तो रामो तिसमुद्दमेइणीणाहो । लंकाहिवेण हरियं कह पुण आणेइ जणयसुयं ? ॥१२०५॥
एवं वचस्तदा श्रुत्वा रामो हतमनास्तदा । वज्राहत इवातीव दुःखितोऽजनि चेतसि ॥१२०६॥
यस्याः कृते मया पापं भूरि-जीववधात्मकम् । कृतं बाढं मुधा तस्मात् श्वभ्रेऽहं पातमासवान् ॥१२०७॥
दुःखमूलं मन्येन्नारी नरकस्य नृणां खलु । यस्या मोहेन दुःखानि लभतेऽङ्गी पदे पदे ॥१२०८॥
उक्तं च—"धण्णा ते वरपुरिसा जे च्चिअ मोत्तूण निययजुवईओ ।
पव्वइआ कयनियमा सिवमयलमणुत्तरं पत्ता ॥१॥"
रामस्य मानसं दूनं दृष्ट्वाऽवग् लक्ष्मणस्तदा । मेरुचूलेव सीताऽस्ति निश्चला शीलपालने ॥१२०९॥
वारितो लक्ष्मणेनापि राघवः प्रोक्तवानिति । सीता चेत्त्यज्यते साधु-वाद एव तदा भवेत् ॥१२१०॥

कलङ्किताऽथ सीता चे-द्रक्ष्यते स्वीयसद्मनि । तदा कलङ्क आत्मीय-देशे भवति निश्चितम् ॥१२११॥
ततो दाशरथश्छन्नं भृत्यं कृतान्तनामकम् । आकार्याऽवग् रथारूढां कृत्वा जनकनन्दिनीम् ॥१२१२॥
गङ्गायाः पुरतः कूले गत्वा त्यक्त्वाऽधुना द्रुतम् । आगम्यं भवताऽत्रैव निर्विचारं त्वमेककः ॥१२१३॥
ततोऽष्टापदसर्वज्ञ-वन्दनाछलतस्तदा । कृत्वा सीतां रथारूढां कृतान्तश्चलितो निशि ॥१२१४॥
अन्यस्यां दिशि गच्छन् स कृतान्तः सीतयोदितः । भ्रातस्त्वं कथमन्यस्यां दिशि यासि निगद्यताम् ? ॥१२१५॥
कृतान्तोऽवक् तव प्राण-प्रियेणोचे ममाऽग्रतः । सीतां कलङ्किनीं गङ्गा-वरकूले त्यजाऽचिरात् ॥१२१६॥
ततो जनकनन्दिन्या ध्यातं मे रमणोऽधुना । दैवेन प्रेरितो गङ्गा-कूले त्याजयति ध्रुवम् ॥१२१७॥
उत्तीर्य तु नदीकूलं सीतां तत्र त्यजन् वने । दध्यावहमधन्योऽस्मि यतोऽभूवं हि किङ्करः ॥१२१८॥
यतः—"णिअइट्ठवज्जिअस्स उ अहिअं दुक्खेक्क तग्गय मणस्स ।
भिच्चस्स जीवियाओ कुक्कुरजीयं वरं हवइ ॥१॥
परघरलद्धाहारो साणो होऊण वसइ सच्छंदो । भिच्चो परव्वसो पुण विक्किअदेहो निअयकालं ॥२॥
भिच्चस्स णरवइणं दिन्नादेसस्स पावणिरयस्स । न य हवइ अकरणिज्जं णिंदियकम्मंपि जं लोए ॥३॥
पुरिसत्तणम्मि सरिसे जं आणा कुणइ सामिसालस्स । तं सव्वं पच्चक्खं दीसइ अ फलं अहम्मस्स ॥४॥
धिद्धी अहो अकज्जं जं पुरिसा इंदिएसु आसत्ता । कुव्वंति अह भिच्चत्तं ण कुणंति सुहालयं धम्मं ॥५॥"
सीता प्राह कृतान्त ! त्वं मे पत्युः पुरतस्त्वया । वक्तव्यं प्रसद्यैव मयि दुष्टतमोज्झपि ॥१२१९॥
अहं पूर्वकृतं कर्म्म दुष्टं भोक्ष्ये वनस्थिता । त्वया जिनोदितो धर्मो न मोक्तव्यः शिवप्रदः ॥१२२०॥
यतः-"रयणं पाणितलाओ कह वि पमाएण सायरे पडियं । केण उवाएण पुणो तं लब्भइ मग्गमाणेहिं ॥१॥
पक्खिविऊण य कूवे अमयफलं दारुणे तमंधारे । जह पडिवज्जइ दुक्ख पच्छायावाहओ बालो ॥२॥'
आकर्ण्यैतद्वचः सीतां विमुच्य तत्र कानने । कृतान्तश्चलितः पश्चा-न्नत्वा सीतापदाम्बुजम् ॥१२२१॥
सीता तत्र स्थिताऽत्यन्तं दुःखिनी करुणस्वरम् । रुदन्तीति जगौ कान्त ! कथं त्यक्तास्म्यहं वने ? ॥१२२२
यतः—"हा पउम नाह सत्तम ! हा विहलिअजणसुवच्छल गुणोह ।
सामिय भयदुआए किं ण महं दरिसणं देहि ॥१॥
तुह दोसस्स महाजस ! थेवस्स वि णत्थि एत्थ संबधो । अइदारुणाण सामिअ मह दोसो पुव्वकम्माणं । २ ।"
किमत्र कुरुते तातः किं पतिः किं च बान्धवः । दुःखं पूर्वार्जितं चेव भोक्तव्यं मयका किल ।.१२२३॥
यतः—"नूणं अवन्नवायं लोए अणुट्ठियं मए पुव्वं । घोराटवीए मज्झे पत्ता जेणेरिसं दुक्खं ॥१॥
अहवा वि य अन्नजम्मे घित्तूणं वयं मए पुणो भग्गं । तस्सोदएण एयं दुःखं अइदारुणं जायं ॥२॥
किं वावि कमलसंडे विओइयं हंसजुअलयंपुव्वं । अइणिग्घिणाए संपइ तस्स फलं चेव भोत्तव्वं ॥३॥
अहवा वि मए समणा दुगंछिया परभवे अपुन्नाए । तस्स इमं अणुसरिसं भुंजेयव्वं महादुक्खं ॥४॥"
ध्यात्वेति जानकी चित्ते स्मरन्ती श्रीजिनप्रियौ । व्याघ्रादि भैरवेऽरण्ये तस्थौ निर्भयमानसा ॥१२२५॥
यत् कृतं मयका पूर्वं पाप जीववधादिकम् । तदत्र विलयं शीघ्रं यास्यत्येव मम स्फुटम् ॥१२२६॥
उच्चैः स्वरं कृपास्थानं रुदन्तीं जनकात्मजाम् । निशम्य वज्रजङ्घाह्वः पुण्डरीकपुराधिपः ॥१२२७॥

तत्र गत्वा मृग-व्याघ्र-शश-जम्बुकसेवितम् । दृष्ट्वा चाऽवक् कुतोऽत्रागाः किं नामा कस्य गेहिनी ? ॥१२२८॥
एवं प्रोक्ता यदा नैव जजल्प जनकात्मजा । तदा नृपानुगः प्राह मदनस्तत्पुरस्तदा ॥१२२९॥
पुण्डरीकपुरस्वामी वज्रजङ्घाभिधो नृपः । ज्ञानदर्शनचारित्र-सेवी जिनार्चकोऽस्त्यसौ ॥१२३०॥
शङ्कादिदोषरहितः श्रुतार्हद्वचनश्रुतिः । परोपकारकृज्जीव-वत्सलः करुणापरः ॥ १२३१ ॥ युग्मम् ॥
गजानां धरणार्थं स भूपो धर्म्मिशेखरः । आयातोऽत्र वने विद्या-बलशाली सतां हितः ॥१२३२॥
उक्तं च–"पंचाणुव्वयधारी वच्छे सम्मत्त उत्तमगुणोहो । देव-गुरुपूअणरओ साहम्मिअवच्छलो वीरो ॥१॥"
श्रुत्वेति जानकी मातृ-पितृकान्तादिकं समम् । मन्वन्धं स्ववनत्यागं यावत्तावज्जगौ शनैः ॥१२३३॥
अहमर्हज्जनुर्भूम्या-दिकवन्दनछद्मतः । रामेण त्याजिताऽत्रैव पूर्वकर्म्माभियोगतः ॥१२३४॥
यतः—'निक्खमणनाणनिव्वाणजम्मभूमीओ वंदइ जिणाणं । न य वसइ साहुजणविरहियम्मि देसे बहुगुणेवि
एवं प्रोक्त्वा निजं कान्तं स्मृत्वा चेतसि जानकी । रुदन्ती वारिता वज्र-जङ्घेनेति महीभुजा ॥१२३६॥
मा त्वं रुदिहि सीते हे ! जानन्ती सर्वविद्वचः । न छुट्यते पुरा चीर्ण-कर्म्मणा देहिभिः क्वचित् ॥१२३७॥
यतः–"किं ते साहुसयासे ण सुअं जह णिययकम्मपडिबद्धो । जीओ धम्मेण विणा हिंडइ संसारकंतारे ? ॥१॥
संजोगविप्पओगा उ सुहदुक्खाइं बहुप्पयाराइं । पत्ताइ दीहकालं अणाइणिहणेण जीएणं ॥२॥
खिइतेअजलथलाइसु सकयकम्मुदएण जीवाणं । तिरिअभवे दुक्खाइं छुहतिण्हाईणि भुत्ताइं ॥३॥
विवहाववायतज्जण-निब्भत्थणरोअसोअमाइसु । जीवेण मणुअजम्मे अणुहूयं दारुणं दुक्खं ॥४॥
कुच्छिअतवसंभूया देवा दट्ठूण परमसुरविहव । पावंति तेवि दुक्खं विसेमओ चवणकालम्मि ॥५॥
णरएसु वि उववण्णा जीवा पावंति दारुणं दुक्खं । करवत्त-जंत-मामलि-विअरणीमाइअं विविहं ॥६॥
तं णत्थि जणयधूए ! ठाणं सुरासुरसेविते वि तेलोके । जम्मं मच्चू य जरा जत्थ ण जीवेण संपत्ता ॥७॥
अशुभोदयतस्त्वं तु रामेण त्याजिता वने । शुभोदयात् पुना रामो भवतीं नेष्यते गृहे ॥१२३८॥
भो भो भगिनि ! सीते ! त्वमुत्तिष्ठेहि पुरे मम । कुर्वन्ती धर्म्ममाप्तोक्तं सन्तिष्ठ सदने सुखम् ॥१२३९॥
श्रुत्वेति वचनं वज्र-जङ्घस्य जनकात्मजा । ध्यायन्ती जिनपं चित्ते हृष्टा धत्ते धृतिं तदा । १२४०॥
जानकीं शिबिकारूढां कृत्वा वज्रमहीपतिः । भगिनीमिव नीन्ये स्व-गेहे सूत्सवपूर्वकम् ॥१२४१॥
वज्रजङ्घमहीशेन दत्ताऽऽवासे सुखं स्थिता । सीता भामंडलावासे स्थितिं स्वां मन्यते तदा ॥१२४२॥
इतो रामान्तिकेऽभ्येत्य कृतान्त उचिवानिति । स्थाने त्वयोदिते सीता यदा मुक्ता तदा जगौ ॥१२४३॥
सिंहर्क्षभल्ल-चित्रक-गोमायु-व्याघ्रभीषणे । वने मुक्ता मयाऽवादी-दश्रुपूरितलोचना ॥१२४४॥
पत्युर्मे दूषणं नास्ति दूषणं मे कुकर्म्मणः । येन छलादहं भृत्य-पार्श्वादत्र विमोचिता ॥१२४५॥
त्वयोच्य मे पुरः पत्युः सीता मुक्ता वने वरे । ध्यायन्ती श्रीजिनं वन्यहाराऽस्ति सुखशालिनी ॥१२४६॥
मा मे वियोगतो दुःखं श्रुत्वा दाशरथिः पतिः । हृदयस्फोटतो यायान्मरणं जीवितात्ययात् ॥१२४७॥
सिंह–व्याघ्रादिजीवेभ्यो दुष्टेभ्यो बिभ्यतीतराम् । कम्पमानतनुर्मुक्ता मया पर तु सा पुनः ॥१२४८॥
न ज्ञायतेऽधुना सा तु सिंहादि-श्वापदैर्वने । भक्षिताऽस्त्यथवा जीव-धारिणी जीवितौजसा ॥१२४९॥
यतः—"नामिय सहावभीरू अहिययरं दारुणे महारण्णे ।

बहुसत्तभीसणरणे जणयसूआ दुक्करं जियइ ॥१२५०॥"
आकर्ण्यैतद्वचो रामो मूर्च्छामाप्य पुनः पुनः । सीतां सस्मार चित्तान्त-र्विललाप मुहुर्मुहुः ॥१२५१॥
हा ! मूढेन मया सीता-ऽत्याजि भीषणकानने । किं धात्रा प्रददे बुद्धि-रीदृशी मम साम्प्रतम् ॥१२५२॥
निर्दोषा सा सती सीता लोकालोकप्रजल्पनात् । यत् त्याजिता वने भीष्मे तन्मे मौढ्यविजृम्भणम् ॥१२५३
जानक्या विप्रयोगेन दुःखितं राघवं भृशम् । आलोक्य लक्ष्मणः प्राह दुःखं किं क्रियतेऽधुना ॥१२५४॥
अविमृश्य कृतं कार्यं दुःखाय जायते नृणाम् । सुविमृश्यं तु सौख्याय जायते नात्र संशयः ॥१२५५॥
यतः—"सहसा विदधीत न क्रिया-मविवेकः परमापदां पदम् ।
वृणते तु विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥१२५६॥
धीरतां प्रतिपद्यस्व कातरत्वं त्यज द्रुतम् । न कृतात् कर्म्मणः कोऽपि छुटिष्यति शरीरभाग् ॥१२५७॥
यतः—"आयामे गिरिसिहरे जले थले दारुणे महारण्णे ।
जीवो संकडपडिओ रक्खिज्जइ पुव्वसुकएण ॥१॥
अह पुण पावस्सुदए रक्खिज्जंतोवि धीरपुरिसेहि । जंतू मरइ णिरुत्तं संसार ट्ठिई इहं लोए ॥२॥"
बोधितो लक्ष्मणेनैव तदा रामोऽपि सन्ततम् । राज्यं कार्यं वितन्वानः सीतां सस्मार चेतसि ॥१२५८॥
सीतागुणगणान् नित्यं स्मरन् जनपदोऽखिलं । रोरुयते तथा पार्श्वे स्थितानपि च दुःखयेत् ॥१२५९॥
ततस्तत्र वने प्रेष्य भृत्यं जनकनन्दिनीम् । असतीं ज्ञातवान् रामो मृतां च व्याघ्रपार्श्वतः ॥१२६०॥
रामः सीतां मृतामेव ध्यायन् मन्त्रीश्वरं जगौ । प्रेतक्रिया विधीयेत नानाबलिविधानतः ॥१२६१॥
सीताया विहिते प्रेत-कर्म्मण्येवाखिले तदा । रामेण निखिला लोका बभूवुर्दुःखिनो भृशम् ॥१२६२॥
यतः—'जुवईण सहस्सेहिं अट्ठहिं अणुमंतयंपि परिक्किण्णो ।
पउमो सिएक्कमणो सिविणेवि पुणो पुणो सरई ॥१२६३॥
"एवं सणियं सणियं सीयासोए गए विरलभावं । सेसमहिलासु पउमो कह कहवि धिइं समणुपत्तो ॥१॥"
इतश्च पुण्डरीकाह्वे पुरे सुरपुरोपमे । वज्रजङ्घनृपावासे सीता सुन्दर ( स्वप्न ) सूचितम् ॥१२६४॥
अतिक्रान्तेषु मासेषु नवस्वेषु श्रवणे स्थिते । चन्द्रेऽसूत सुतद्वन्द्वं स्मररूपमनोरमम् ॥१२६५॥ युग्मम् ॥
तयोर्जन्मोत्सवं कृत्वा वज्रजङ्घमहीपतिः । अनङ्ग-लवणेत्याह्वा-माद्यसूनोर्ददौ मुदा ॥१२६६॥
मदनाङ्कुश नामेति द्वितीयस्य ददौ नृपः । ववर्द्धाते ततः पुत्रौ द्वावेव वरविग्रहौ ॥१२६६॥
इतः सिद्धार्थसाधुश्च भूरि-विद्याबलान्वितः । विहरन् पुण्डरीकाह्वे नगरे समुपेयिवान् ॥१२६८॥
भिक्षार्थं विहरन् साधु-गृहाद् गृहं प्रति स्फुटम् । सीताधिष्ठित-सत्स्थाये यत्नापरः समीयिवान् ॥१२६९॥
प्रत्यलाभि वराहारैः स साधुः सीतया तदा । सीता ततोऽनमत्पुत्र-द्वययुक्ता सुभावतः ॥१२७०॥
ततस्तेनादराद्धर्म्म-शास्त्राणि लवणाङ्कुशौ । पाठितौ च तथा जातौ यथा धर्म्मिष्ठशेखरौ ॥१२७१॥
इतोऽन्यदा धनोऽष्टाङ्ग-निमित्तज्ञो वराशयः । तत्रागतो ददौ विद्या लवणाङ्कुशयोर्निजाः ॥१२७२॥
सौम्यत्वेनेन्दुसङ्काशौ तेजसा रविसन्निभौ । द्विड्वधान्मङ्गलाभौ तु ज्ञातृत्वेन बुधोपमौ ॥१२७३॥
विद्यया गुरुतुल्यौ तु सद्बुध्या कविसुन्दरौ । क्रूरेषु शनिभौ जातौ लवणाङ्कुशनन्दनौ ॥१२७४॥ युग्मम्॥

विनयादिगुणग्रामै रञ्जयन्तौ सदा जनान् । वज्रजङ्घं निषेवेते सद्भक्त्या लवणाङ्कुशौ ॥१२७५॥
वज्रजङ्घमहीशेन शशिचूलामुखा वराः । द्वात्रिंशत् कन्यका आद्यो लवणः परिणायितः ॥१२७६॥
पृथ्वीपुरे पृथुक्ष्माप-पुत्री कनकमालिका । वज्रजङ्घधरेशेना-ङ्कुशोऽथ परिणायितः ॥१२७७॥
अनयोः परिणयनविस्तरः शास्त्रान्तराज्ज्ञेयः ।

बहुभूपखगैः सेव्य-मानक्रमसरोरुहौ । तिष्ठतः स्म सुखे तत्र नगरे लवणाङ्कुशौ ॥१२७८॥
क्रमाल्लवणाङ्कुशौ पञ्च सहस्र व्योमगाश्रितौ । दुर्जेयौ द्युसदां जातौ स्वस्वोलसद्भुजौजसा ॥१२७९॥
एकदा तौ प्रणम्याङ्घ्रीं मातुः प्रपच्छतुर्मुदा । किंनामा ते पतिः कस्य सूनुः सोऽस्ति निगद्यताम् ॥१२८०॥
ततो माता जगौ भूमी-पतेर्दशरथस्य तु । वृद्धः पुत्रो बलीयोऽस्ति स मे कान्तो जगद्धितः ॥१२८१॥
येनाहं प्रहताकस्मा-द्दशास्येन दृढौजसा । वालिता युद्धयोगेन स मे कान्तो मनोरमः ॥१२८२॥
लोकदत्तं कलङ्कं तु मुधा मय्यवगत्य सः । त्याजयामास मां दूरेऽरण्ये स्वीयानुगान्तिकात् ॥१२८३॥
निशम्य जननीवाक्यं चमत्कृतिकृते तदा । असङ्ख्यबलसंयुक्तौ त्वरितं लवणाङ्कुशौ ॥१२८४॥
जनकं वज्रजङ्घं तु पुरः कृत्वा पुरात्ततः । चेलतुः सुदिनेऽयोध्या-पुरिं प्रति प्रमोदतः ॥१२८५॥ युग्मम् ॥
योजनानां चतुः प्रान्तेऽयोध्याया विद्विषो बलम् । आयान्तमधिगम्याशु सनह्य रामलक्ष्मणौ ॥१२८६॥
निर्गतौ कुञ्जरारूढौ नानावाद्यपुरस्सरम् । सम्मुखं ययतुर्जेतुं वैरिणं बलशालिनम् ॥१२८७॥
रामरावणवत्तत्र सङ्ग्रामो दारुणस्तदा । लवणाङ्कुशपुत्राभ्यां रामलक्ष्मणयोरभूत् ॥१२८८॥
लक्ष्मणेन विमुक्ते तु चक्रे तौ वैरिणौ प्रति । प्रयासो विफलो जातो वैरिमृत्योरभावतः ॥१२८९॥
ततश्चक्री जगौ राममावां बलिहरी न हि । किन्त्वेतौ हरि-लक्ष्मीशौ समुत्पन्नौ नवौ स्फुटम् ॥१२९०॥
यतः—"एअंतरे अमोहं चक्कं जालासहस्सपरिवारं । लच्छीहरेण मुक्कं कुसस्स तेलोक्कभयजणणं ॥१॥
गंतूणं कुससयासं तं चक्कं वियसियप्पहं सिग्घं । पुणरवि अ पडिनियत्तं संपत्तं लक्खणस्स करे ॥२॥
तं लक्खणेण चक्कं खित्तं खित्तं कुसस्स रोसेणं । विहलं तं पडिनियत्तइ पुणो पुणो पवणवेएणं ॥३॥"
अत्रान्तरे तथाऽस्फालि धनुरङ्कुशशत्रुणा । यथा रामबलं सर्वं भूमिसुप्तमिवाभवत् ॥१२९१॥
प्रोचतुः आनरौ द्वौ तु नवीनौ रामलक्ष्मणौ । समुत्पन्नौ ततः प्राह लक्ष्मणो राघवं प्रति ॥१२९२॥
मया कोटिशिला प्रौढो-त्पाटिता यच्च तद्वृथा । यतश्चैतौ समायातौ नवीनौ रामलक्ष्मणौ ॥१२९३॥
आत्मनोर्यदभूद्राज्या-भिषेकस्तद् वृथाजनि । अनयोः क्रियते राज्या-भिषेकः साम्प्रतं ध्रुवम् ॥१२९४॥
मुधा को म्रियते मूढो दुःशास्य इव मानवः । जीवद्भिः प्राप्यते सौख्यं क्रियते धर्म एव च ॥१२९५॥
धर्मेण जायतेऽमुत्र परत्र च सुखावली । ततो रागो न कर्त्तव्यो राज्येऽस्मिन् नयवर्जिते ॥१२९६॥
ततो हलिरमाधीशौ दीनौ स्वभुजनिन्दकौ । ज्ञात्वोत्तीर्य गजाभ्यां तु सञ्जातौ पादचारिणौ ॥१२९७॥
रामस्य नन्दनावावां स्वनामाङ्कितमार्गणौ । प्राभृतीचक्रतू राम-भूपस्य स्वपितुः पुरः ॥१२९८॥
ततश्चक्रियुतो रामो बाणाक्षरततिं स्फुटम् । वाचयन् विस्मितो जातः किन्त्वेतद् हि विचिन्तयन् ॥१२९९॥
अत्रान्तरे पुरःकृत्य मातरं लवणाङ्कुशौ । समेत्य रामपादाब्जं मुदा ननमतुस्तराम् ॥१३००॥
ततो जगादानुजो तु प्राञ्जली राघवं प्रति । अस्मन्माता मुधाऽरण्ये त्याजिता भवता पितः ! ॥१३०१॥

त्यजिता भवताऽरण्ये यदाऽऽवां जननी पितः ! । तदा त्वावां स्थितौ गर्भे भवदीयौ सुतौ ननु ॥१३०२॥
ज्ञात्वेति स्वसुतौ रामो दोर्भ्यामालिङ्ग्य वेगतः । स्वाङ्के निवेशयामास वर्यसन्मानदानतः ॥१३०३॥
रामोऽवग् हा ! मया पत्नी सीता युष्मत् समन्विता । यदत्याजि वने तेन श्वभ्रे पातो भविष्यति ॥१३०४॥
उक्तश्च–"हा हा महातिकट्ठं पुत्ता गब्भट्ठिश्रा अणज्जेणं । सीयाए समं चत्ता भयजणणे दारुणेऽरण्णे ॥१॥"
लवणोऽङ्कुशयुग् प्राह नत्वा रामपदाम्बुजम् । एकस्त्वं वा पिताऽन्यस्तु वज्रजङ्घमहीपतिः ॥१३०५॥
येन वां जननी वज्र-जङ्घेनैव भूभुजा । पालिता स्वगृहे नीत्वाऽरण्यान् मुक्ता त्वया सती ॥१३०६॥
जानक्यपि जगौ तातो जनको जनकादभूत् । अरण्ये रक्षणादन्यो वज्रजङ्घः पिताऽभवत् ॥१३०७॥
ततो दाशरथिर्वज्र-जङ्घाय मेदिनीभुजे । ग्रामाणामयुतं दत्त्वा तोषयामास सादरम् ॥१३०८॥
पुष्पविमानमारूढां सीतां पुत्रद्वयान्विताम् । कृत्वा रामो निजावास-मानिन्ये रुचिरोत्सवम् ॥१३०९॥
यतः—"एत्तो साएयपुरी सग्गसरिच्छा कया खणद्धेणं । बहुतूर-मंगलरवा एडणट्टपणच्चिउग्गीश्रा ॥१॥
पुत्तेहि समं रामो पुप्फविमाणं तश्रो समारूढो । तत्थ वि लग्गो रेहइ सोमित्ती विरइयाभरणो ॥२॥"
ततो निःशेषसर्वज्ञ-प्रासादेषु जिनार्चनाम् । कुर्वाणः कारयंश्चान्यैः स पुष्पादिभिरादरात् ॥१३१०॥
केचिद् भणन्ति सीता तु पुण्डरीकपुराद् वरात् । आनीता दाशरथिना मिलनात् पुत्रयोरनु ॥१३११॥
तदा रामो जगौ सीते ! त्वं सती विद्यसे खलु । लोका वदन्ति पौलस्त्य-गृहे बहुदिनान् स्थिता ॥१३१२॥
तेन नो ज्ञायते सीता सती वाप्यसती पुनः । एतदेव महद्दुःखं विद्यते नापरं पुनः ॥१३१३॥
ततः सीता पुरोद्याने गत्वा प्राह पतिं प्रति । यदाऽहं दिव्यकरणाच्छुद्धा स्यां ज्वलनादिषु ॥१३१४॥
त्रिशत्या तु करैर्व्यूढा परिखान्यचदिक्षु च । खदिराङ्गारभृच्चक्रेऽनुगै रामनिदेशतः ॥१३१५॥
ततश्च खदिराङ्गारै-र्ज्वलद्भिर्बहुभिर्भृशम् । खातिकायां भृतायां तु विवेश जनकात्मजा ॥१३१६॥
तदा ते खदिराङ्गारा बभूवुः सलिलं द्रुतम् । वर्यशीलप्रभावेण सीतोत्तीर्णा ततश्च ताम् ॥१३१७॥
रामं कालमुखं दृष्ट्वा पश्यतीषु प्रजासु च । सीता स्वभक्तिसूचार्थं काव्यमेकं जगाविति ॥१३१८॥
मा गा विषादभवनं भुवनैकवीर ! निःकारणं विगुणिता किमियं मयेति ।
दैवेन केनचिदहं दहने निरस्ता निस्तारिता तु भवता हृदयस्थितेन ॥१३१९॥
ततस्तदा जनाः सर्वे जानक्या शीलमद्भुतम् । निरीक्ष्य जगदुः प्रोच्चैः स्वरैः हर्षप्रपूरिताः ॥१३२०॥
सीतया दुरपवादशङ्कया पावके स्वतनुराहुतिः कृता ।
पावकः सुजलतामियाय यत् तत्र शीलमहिमानिबन्धनम् ॥१३२१॥
यतः—"रामेण तश्रो भणिया पासत्था किंकरा खणह खाणिं ।
तिण्णेव उ हत्थसया समचउरंसावगाढा य ॥१३२२॥
पूरेह इंधणेहिं कालागरु-चंदणाइचूलेहिं । चंडं जालेह लहुं खाणीए सव्वश्रो अग्गिं ॥१३२३॥
धगधगंतसद्दो प्पज्जलिश्रो हुअवहो कणयवण्णो । गाउयपरिमाणासु य जालासु गहं पदीप्पंतो ॥१३२४॥
अइचवल चंचलाउ सव्वत्तो विप्फुरंति जालाश्रो ।
[ जम जम्म जिह्व समा दारा ] सोयामणीश्रो नज्जइ गयणयले उग्गतेयाउ ॥१३२५॥

जइ मणवयण तणूणं रामं मोत्तूण परणरो अन्नो ।
सुविणे वि अभिलसिओ तो डहउ मम इमो अग्गी ॥१३२६॥
सा एवं जंपिऊणं तओ पविट्ठाऽणलं जणयधूया । जायं जलं सुविमलं सुद्धा दढसीलसंपुण्णा ॥१३२७॥
सीतां शुद्धां तदा वीक्ष्य सुरलोका जगुः स्फुटम् । सतीयं विद्यते सीता श्लाघनीयाद्य नाकिना ॥१३२८॥
वर्द्धापनं जनाः सर्वे गीतगानपुरस्सरम् । कुर्वते जनकक्ष्माप-पुत्र्या गृहे गृहे मुदा ॥१३२९॥
यतः—"विज्जाहरा य मणुया नच्चंता उल्लवंति परितुट्ठा ।
सिरिजणयरायधूया सुद्धा दित्ताणले सीया ॥१॥"
तदा लवाङ्कुशौ पुत्रौ भूरिभूपखगान्वितौ । समेत्य जननीपादौ नेमतुर्मुदिताशयौ ॥१३३०॥
पुष्पविमानमारूढा सीता नारीशतान्विता । सर्वज्ञसदनेष्वेत्य नमामाऽमलमानसा ॥१३३१॥
ततो भूरितरं दानं ददाना जनकात्मजा । वीक्ष्यमाणा पुरीलोकै-राजगाम निजालयम् ॥१३३२॥
ततोऽवग् जानकी कान्त ! मा खेदं कुरु साम्प्रतम् । स्वकर्म्मणा कलङ्कं तु प्राप्यं ते दूषणं न हि ॥१३३३॥
कलङ्कात्त्वत्प्रसादेनो-त्तीर्णाहं राघवाऽधुना । तत्कुर्वे कर्म्म येनाऽथ न स्यां नारी भवादतः ॥१३३४॥
यतः—"इंदधणु-फेण-बुब्बुयसमेसु भोएसु दुरभिगधेसु । किं एएसु महाजस ! का रइ बहुदुक्खजणएसु ॥१।
बहुजोणीसयसहस्सा परिहिंडंती अहं सुपरिसंता । इच्छामि दुक्खमोक्खं संपइ जिणदेसियं दिक्खं ॥२॥
ततो रामो बलात् सीतां प्रति प्रोवाच सादरम् । अधुना त्वं व्रतं लाहि यदा शोभा तदा नहि ॥१३३५॥
अथावसर आयाते गृहीतव्यं त्वया व्रतम् । अहं चापि व्रतं लातुं वाञ्छन्नस्मि तदा पुनः ॥१३३६॥
इतस्तस्य पुरोद्याने ज्ञानी सकलभूषणः । समेत्य समवासार्षीद् भूरिसंयतसेवितः ॥१३३७॥
ततो रामः ससोदर्यो विभीषणादिसेवितः । धर्मं श्रोतुं यतेः पार्श्वे ययौ ननाम चादरात् ॥१३३८॥
श्रुत्वा धर्म्मोपदेशं तु विभीषणो जगाविदम् । रामेण किं कृतं पुण्यं लक्ष्मणेन च पूर्वतः ॥१३३९॥
येनेदृशी रमा जाता गजाश्वादिविभूषिता । लक्ष्मणेन च किं मृत्युं नीतो दशाननो रणे ॥१३४०॥
जानकीं दण्डकारण्ये स्थितां मोहेन रावणः । सति सुन्दरशुद्धान्ते छलेन किमपाहर ? ॥१३४१॥
अथ ज्ञानी जगौ जम्बूद्वीपेऽत्र भरते वरे । पुरे क्षेमङ्करे श्रेष्ठी जयदत्ताभिधोऽभवत् ॥१३४२॥
तस्यासीद् गेहिनी नाम्ना सुनन्दा शीलशालिनी । नन्दनो धनदत्तोऽभूद् वसुदत्तोऽपरः पुनः ॥१३४३॥
जन्यचक्राभिधो विप्रो मित्रं जातस्तयोः क्रमात् । त्रयस्ते सुहृदः शश्वत् क्रीड़ां वितन्वतेतराम् ॥१३४४॥
यतः—'कोऽहं कस्मिन् कथमायातः का मे जननी को मे तातः ।
इति परिभावयतः संसारः सर्वोऽयं स्वप्नव्यवहारः ॥१३४५॥
हा हा दुष्ट ! कदर्थितकायैः क्षिप्तं जन्म मुधा व्यवसायैः ।
काकिण्यार्थे चिन्तारत्नं हारितमेतदकृत्वा यत्नम् ॥१३४६॥
प्रथमे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शमः कस्य न जायते ? ॥१३४७॥
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किं पुनस्तच्चतुष्टयम्' ॥१३४८॥
तस्मिन्नेव पुरे वर्ये वणिक् सागरदत्तकः । अभूत्तस्याभवत्पत्नी रत्नाभाह्वा वराशया ॥१३४९॥

तयोर्गुणधरः पुत्रोऽभूतां गुणमती सुता । नयदत्तस्य पुत्राय धनदत्ताय शालिने ॥१३५०॥
ददौ सागरदत्ताथ पुत्रीं गुणमतीं निजाम् । दातुं मिमेल यावत् स सर्वसज्जनसाक्षिकम् ॥१३५१॥
तत्रैव नगरे श्रेष्ठी श्रीकान्तो भूरिरैभरम् । रत्नाभायै वितीर्याऽथ रहो गुणमतीं ललौ ॥१३५२॥
श्रीकान्तेन हृतां छन्नं तदा गुणमतीं कनीम् । विज्ञाय जन्यचक्रोऽवग् वसुदत्तस्य सन्निधौ ॥१३५३॥
धनदत्तं गतं ग्रामे-ऽन्यत्र मत्वा तदा रुषा । वसुदत्तो निहन्तुं च श्रीकान्तं निर्गतो निशि ॥१३५४॥
वसुदत्तो भ्रमन् बाह्यो-द्याने श्रीकान्तमेक्ष्य च । मुमोचाऽसिं यदा शत्रौ तदा सोऽप्यमुचच्च तम् ॥१३५५॥
तदा मिथोऽसिघातेन निघ्नन्तौ तौ तु निःकृपम् । मृत्वा विन्ध्याटवीमध्ये मृगौ सद्यो बभूवतुः ॥१३५६॥
मृत्वा गुणमती तत्राटव्यां मृग्यभवत्तदा । मृगीं लातुं मृगौ तौ तु युध्यन्तौ मृतिमीयतुः ॥१३५७॥
भूत्वा तौ दंष्ट्रिणौ तत्र वने युद्धपरायणौ । मृत्वाऽभूतां गजौ तस्मान् महिषौ वृषभौ ततः ॥१३५८॥
ततः प्लवङ्गमौ तस्माद् द्वीपिनौ हरिणौ ततः । तत्र युद्धपरौ मृत्वा संजातौ वटपादपौ ॥१३५९॥
ततो भू-नीर-वृक्षा-ग्नि जम्बुका-म्बु-मृगादिकान् । भवान् भूरीन् भ्रमतः स्म श्रीकान्तवसुदत्तकौ ॥१३६०॥
इतो भ्रातृवधोदन्तं श्रुत्वाऽतिदुःखितस्तदा । धनदत्तो विनिर्यातः स्वपुर्या दूरतो गतः ॥१३६१॥
धनदत्तो भ्रमन् भूमौ तृषितो रजनौ भृशम् । उद्यानेऽम्बु ययाचे स साधुपार्श्वे कृपास्पदम् ॥१३६२॥
ततः साधुर्जगौ नीरं पीयते न हि साधुभिः । यतोऽम्बु जायते भूरि-जीवात्मकं दिनात्यये ॥१३६३॥
यतः-"संसजज्जीवसंघातं भुञ्जाना निशि भोजनम् । राक्षसेभ्यो विशिष्यन्ते मूढात्मनः कथं न ते' ? ॥१३६४॥
उक्तं च-"मच्छी-कीड-पयंगा केसा अन्नं पि जं असुज्झं तं । भुंजंतएण रत्तिं तं सव्वं भक्खिअं णवरं ॥
अत्थमिए दिणयरे जो भुंजइ मूढभावदोसेणं । सो चउगइवित्थिण्णं संसारं ममइ पुणरुत्तं ॥१३६६॥
लिंगी व अलिंगी वा जो भुंजइ सव्वरीसु रसगिद्धो । सो एइ नरयगमणं पावइ अचरित्तदोसेणं॥१३६७॥
जे सव्वरीसु पुरिसा भुंजंति हि सीलसंयमविहूणा । महुमज्जमंसनिरया ते जंति मया महानरयं ॥१३६८॥
हीणकुलसंभवा विहु पुरिसा उच्छन्नदारधणसयणा । परपेसणाणुकारी जे भुत्ता रयणिसमयम्मि ॥१३६९॥
करचरण फुट्ट केसा बीहच्छा दूहवा दरिद्दा य । तणदारु-जीविया ते जेहिं भुत्तं विआलम्मि ॥१३७०॥
जे पुण जिणवरधम्मं घेत्तुं महुमज्जमंसविरइं च । ण कुणंति राइभुत्तं ते हुंति सुरा महिड्ढिया ॥१३७१॥
ते तत्थ वरविमाणे देवीसयपरिमिआ विसयसोक्खं । भुंजंति दीहकालं अच्छरसंगीयमाहप्पा ॥१३७२॥
चइऊण इहं आया णरवइवंसेसु खायकित्तीसु । उवभुंजिऊण सोक्खं पुणरवि पावंति सुरसरिसं ॥१३७३॥
पुणरवि जिणवरधम्मे बोहिं लहिऊण गहिअ वयनियमा । काऊण तवं घोरं पावेंति सिवालयं धीरा' ॥१३७४॥
'अस्तं गते दिवानाथे आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं मार्कण्डेन महर्षिणा ॥१३७५॥
चत्वारो नरकद्वाराः प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव संधानानन्तकायिके' ॥१३७६॥
श्रुत्वेति धर्म्ममासोक्तं प्रपद्य धर्म्ममार्हतम् । धनदत्तो मृतः स्वर्गे प्रथमे समुपेयिवान् ॥१३७७॥
तत्र स्वर्गसुखं भुङ्क्त्वा महासुराभिधे पुरे । मित्रश्रेष्ठिसुतः पद्म-रुचिनामाऽभवत् कृती ॥१३७८॥
पद्मरुचिर्व्रजन् पुर्या मध्ये जरद्गवं वरम् । श्वसन्तं पतितं दृष्ट्वा कृताराव महीतले ॥१३७९॥
स च पञ्चनमस्कारं गात्रमश्रावयत्तया । यथा स श्रद्दधे कर्ण-गतं सुन्दरभावतः ॥१३८०॥

तस्मिन्नेव पुरे छत्र-च्छायभूमीपतेस्तदा । श्रीकान्ताप्रेयसी-कुक्षा-ववतार स गौर्मृतः ॥१३८१॥
जाते तस्मिन् सुते जन्मो-त्सवं कृत्वा महीपतिः । वृषभध्वज इत्याह्वां ददौ सज्जनसाक्षिकम् ॥१३८२॥
कुमारः प्रथमं पूर्व-भवं मृत्युभुवं निजाम् । दृष्ट्वा जातिस्मृतिं प्राप्य दध्यावेवं पुनः पुनः ॥१३८३॥
मम गोः प्राग्भवे शीत-तृषार्त्तिततनोर्भृशम् । म्रियतः प्रददौ पञ्चनमस्कारं नृपाङ्गभूः ॥१३८४॥
नमस्कारप्रभावेन मम राजकुले जनुः । अभूदतः करिष्येऽह-मत्र श्रीजिनमन्दिरम् ॥१३८५॥
कारयित्वा जिनागारं तत्र वृद्धककुद्मतः । रूपं कुमारसंयुक्त-मचीकरत् नृपाङ्गजः ॥१३८६॥
राजपुत्रो जगौ भृत्यान् योऽत्रैत्य मानवो ननु । चिरं तिष्ठति वक्तव्यं तदा मे पुरतो द्रुतम् ॥१३८७॥
ततो जिनालये भूरि-जनेषु वन्दनाकृते । आगच्छत्सु समायातः पद्मरुचिर्वणिग्वरः ॥१३८८॥
नत्वा जिनं नृगोरूपं पश्यन् पद्मरुचिर्यदा । नान्यत्रेति तदा भृत्यै-र्ज्ञापितं नृपसूनवे ॥१३८९॥
भूपपुत्रः समागत्य नत्वा पद्मरुचिर्जगौ । नमस्कारप्रदानेन श्रीरीदृग् मे त्वया ददौ ॥१३९०॥
वृषभोऽपि नमस्कार-दानाद्राज्यं महत्तमम् । लम्भितोऽहं त्वयाऽतस्त्वं गुरुः संसारतारकः ॥१३९१॥
यतः—"तं चिय ण कुणइ माया नेव पिश्रा णेव बंधवा सव्वे ।
जं कुणइ सुप्पसण्णो समाहिमरणस्स दायारो" ॥१३९२॥
ततो द्वावपि सर्वज्ञ-गुरुपूजां निरन्तरम् । कुर्वाणौ तिष्ठतः प्रीति-भाजौ परस्परं मुदा ॥१३९३॥
क्रमादायुःक्षये पद्म-रुचिश्रीवृषभध्वजौ । मृत्वा स्वर्गे द्वितीये तु सुरौ जातौ लसत्तनू ॥१३९४॥
च्युत्वा पद्मरुचिः स्वर्गा-न्नन्दावर्त्तपुरे वरे । नन्दीश्वरनृपस्याभूत् पुत्रो नयननन्दकः ॥१३९५॥
खेचरर्द्धिं विभुज्याऽथ तत्र नन्दीश्वराङ्गजः । लात्वा दीक्षां ययौ स्वर्गे चतुर्थे जीवितात्ययात् ॥१३९६॥
च्युत्वा भरतपुरे क्षेमं-करे पूर्वविदेहगे । स श्रीचन्द्राभिधः पुत्रो विमलाह्वाहनेशितुः ॥१३९७॥
तत्र भोगसुखालीनो धनदत्तासुमान् भृशम् । श्रीचन्द्रो वेत्ति सूर्येन्दो-रुदयास्तं न चेतसि ॥१३९८॥
अथाऽन्यदा पुरोद्याने समाधिगुप्तनामकम् । सूरिं समागतं श्रुत्वा नन्तुं श्रीचन्द्र ईयिवान् ॥१३९९॥
उपविष्टे कुमारे तु धर्म्मं श्रोतुं जिनोदितम् । प्रारेभे देशनां कर्त्तुं प्रवृत्तः स मुनीश्वरः ॥१४००।
"जीवो अणाइकालं हिंडंतो बहुविहासु जोणीसु । दुक्खेहि माणुसत्तं पावइ कम्माणुभावेण ॥१॥
इंदधणु-फेण-बुब्बुय-संज्झासरिसोवमे मणुअजम्मे । जो ण कुणइ जिणधम्मं सो हु मओ वच्चए नरयं ॥२॥
जह इंधणेसु अग्गी ण य तिप्पइ जलेसु वि समुद्दो । तह जीवो न य तिप्पइ विउलेसु वि कामभोगेसु ॥३॥"
श्रुत्वेति साधुवचनं श्रीचन्द्रो राज्यमन्जसा । दत्त्वा स्वसूनवे दीक्षां ललौ मुनीशसन्निधौ ॥१४०१॥
षष्ठाष्टमादि कुर्वाण-स्तपः श्रीचन्द्रसंयतः । आयुःक्षये समुत्पन्नो ब्रह्मलोके सुरालये ॥१४०२॥
नगरे नीलकुण्डाह्वे विजयात् सेनभूपतेः । पत्नी नयनचूलाऽभूद् गुणालङ्कारभूषिता ॥१४०३॥
वज्रकम्बुः सुतस्तस्य स्नुषा हेमवती वरा । अभूतां सद्गुणश्रेष्ठि(णि)-शालिनौ रुचिराशयौ । १४०४॥
श्रीकान्तस्यासुमान् पुनः स्वयम्भूरभवत्तयोः । वसुदत्तस्य जीवोऽथा-ऽभ्रमद् भूरिभवेष्वहो ॥१४०५॥
जिनेन्द्रमतसंसेवी श्रीभूत्याह्वः पुरोहितः । तस्मिन्नेव पुरे जातो वसुदत्तासुमान् क्रमात् ॥१४०६॥
पत्नी सरस्वती तस्य पतिभक्ता गुणाकरा । कुर्वाणा श्रीजिनप्रोक्तं धर्म्मं तस्थौ समाहिता ॥१४०७॥

इतो गुणमती जीवो भ्रमन् भूरिषु योनिषु । विन्ध्याटव्यामभूत् कर्म्म-वशान्मातङ्गगेहिनी ॥१४०८॥
गङ्गापङ्के निमग्नां तां गच्छञ्जीवां गजप्रियाम् । वीक्ष्य साधुरदात् पञ्च-नमस्कारं कृपाशया ॥१४०६॥
मृत्वा सरस्वती कुक्षा-ववतार वसा वशा । सरस्वती प्रसूते स्म पूर्णे मासे सुतां क्रमात् ॥१४१०॥
पुत्र्या वेगवती नाम श्रीभूतिः सप्रियो ददौ । क्रमाद्वेगवती जैन-धर्म्मद्विष्टाऽभवत् किल ॥१४११॥
इतस्तत्र पुरोद्याने श्रीसुन्दरयतीश्वरम् । वन्द्यमानं जनैर्वीक्ष्य दध्यौ वेगवतीति सा ॥१४१२॥
अयं कलङ्कितः साधुर्यदि स्यात् साम्प्रतं द्रुतम् । तदा जिनमते भूयान् कलङ्को जायतेऽखिलः ॥१४१३॥
जगौ वेगवती नृणां पुरो ह्यप यतिः स्त्रिया । रममाणः समं दृष्टो मया कल्ये दिनात्यये ॥१४१४।
"रागेण व दोसेण व जो दोसं संजयस्स भासेइ । सो हिंडइ संसारे दुक्खसहस्साइं अणुहवंतो ॥१४१५॥
श्रुत्वेति नगरीलोकैः तस्मिन् साधावनादरः । चक्रे तथा यथा सार्व-मते स्यादवहीलना ॥१४१६॥
स्वस्मिन् कलङ्कदानं तु मत्वेत्यभिग्रहं ललौ । साधुर्येन ममाऽदायि मुधा कलङ्ककालिमा ॥१४१७॥
तस्य पुंसस्त्रियो वापि विघ्नं भवतु विग्रहे । यद्यहं स्यां कलङ्की तु तदाऽस्तु भस्म मे तनुः ॥१४१८॥
एवं कृत्वा प्रतिज्ञां स कायोत्सर्गे स्थितो यतिः । चक्रे शासनदेव्येत्य वक्रं वेगवतीमुखम् ॥१४१६॥
उक्तं शासनदेव्या च वेगवत्या स्त्रिया मुधा । कलङ्कः प्रददे साधोः भाव्यस्या मरणं ततः ॥१४२०॥
ततोऽतिपीडिता वेगवत्यस्येत्यान्तिके यतेः । नत्वाऽवग् मयकाऽदायि कलङ्कोऽस्य मुनेर्मुधा ॥१४२१॥
अभाग्यानां शिरोरत्न-मस्म्यहं धुरि साम्प्रतम् । यतो मया मुधा साधोः कलङ्कः प्रददे तदा ॥१४२२॥
ततो वेगवती सज्जी-भूता धर्म्मं जिनोदितम् । प्रपेदे सन्निधौ तस्य साधोरेव मुधा तदा ॥१४२३॥
ततः प्रभावना जाता शासने श्रीजिनेशितुः । धर्म्मं वेगवती चक्रे पूजयन्ती जिनक्रमौ ॥१४२४॥
दृष्ट्वा वेगवतीरूपं स्वयम्भूभूपतिस्तदा । ययाचे पितरं तस्याः पाणीपीडनहेतवे ॥१४२५॥
श्रीभूतिरवदत् पुत्रीं निजां वेगवतीमिमाम् । न हि मिथ्यादृशो दास्ये दास्ये सुश्रावकाय तु ॥१४२६॥
स्वम्भूनृपतिर्हत्वा श्रीभूतिं तत्सुतां तदा । रुदन्तीं स्वगृहेऽनैषीद् भोगसौख्यकृते खलु ॥१४२७॥
तदा वेगवती प्राह हत्वा मे जनकं त्वकम् । नीताहं ततोऽहं स्यां परत्र तव मृत्यवे ॥१४२८॥
मोचयित्वा बलात् स्वं तु तदा वेगवती सती । लात्वा दीक्षां तपस्तीव्रं चक्रे द्वादशधा मुदा ॥१४२६॥
मृत्वा वेगवती प्रान्ते विहिताराधनाक्रिया । दिव्यरूपधरा देवी द्वितीये त्रिविपेऽभवत् ॥१४३०॥
मिथ्यात्वभावितस्वान्तः स्वयम्भूभूपतिस्तदा । मृत्वाऽगान्नरके घोरे प्रथमे बहुदुःखदे ॥१४३१॥
ततो निर्गत्य भूयिष्ठ-भवान् तिर्यग्भवान् क्रमात् । प्राप्य स्वम्भू भूपालोऽशाचकार तमो बहु ॥१४३२॥
कर्म्मोपशमनाल्लक्ष्मी-पुरे कुशद्विजन्मनः । स्वयम्भूजीव उत्पन्नः सावित्रिकाप्रियोदरे ॥१४३३॥
जाते तस्मिन् सुते विप्रो विधाय जननोत्सवम् । प्रभासकुन्द इत्याह्वां ददौ सज्जनसाक्षिकम् ॥१४३४॥
वर्धमानः क्रमात् प्राप्त-यौवनोऽथ विरागवान् । दीक्षां प्रभासकुन्दस्तु ललौ संयतसन्निधौ ॥१४३५॥
सदा तीव्रं तपः कुर्वन् षष्ठाष्टमादिकं मुदा । शरीरं कृशयामास प्रभासाभिधसंयतः ॥१४३६॥
विद्याधरविभूतिं तु दृष्ट्वाऽन्येद्युः स संयतः । निदानमकरोदेवं भूयासं खेचरेश्वरः ॥१४३७॥
तपोविक्रयतोऽनेन साधुना संयमो मणिः । त्यक्तो मुधा गृहीतस्तु शोकमुष्टिरशर्मदः ॥१४३८॥

यतः—"छेत्तूण य कप्पूरं कुणइ वइं कोद्दवस्स सो मूढो। आचुण्णिऊण रयणं अविसेसो गेण्हए दोरं ॥
दहिऊण य गोसीसं गेण्हइ छारं तु सो अवुद्धीओ। जो चरिअ तवं घोरं मरइ सनियाण,मरणेणं' ॥१४४०।
अथ प्रभासकुन्दस्तु निदानोज्झितपुण्यकः। मृत्वा तृतीयताविषे उत्पन्नो निर्जरो वरः ॥१४४१॥
च्युत्वा ततो दशास्यः स रत्नश्रवः-खगेशभूः। त्रिखण्डाधिपतिर्भूरि-विद्याभृत्सेवितोऽजनि ॥१४४२।
श्रीकान्तस्याऽसुमान् भूरि-भवान् भ्रान्त्वा भवान् क्रमात्। दशाननोऽभवल्लङ्का-नायको वरविक्रमः ॥
ब्रह्मस्वर्गाच्च्युतो जीवो धनदत्तस्य राघवः। अभूद्दाशरथिः पुत्रो वृद्धो दशरथस्य तु ॥१४४४॥
वसुदत्ताऽसुमान् मृत्वा श्रीभूतिश्च पुरोहितः। स लक्ष्मणोऽभवत् पुत्रोऽपरो दशरथस्य तु ॥१४४५॥
उक्तं च-'जो वि हु सो सिरिभूई वेगवइकएण सयंभूणं वहिओ। धम्मफलेणं देवो जाओ अह वरविमाणंमि ॥
चइउं पइट्ठणयरे पुणव्वसू खेयराहिवो जाओ। महिलाहेउं सोयं करिअ नियाणं च पव्वइओ ॥१४४७।
काऊण तवं घोरं सणंकुमारे सुरो समुप्पन्नो। चइओ सोमित्तिसुओ जाओ वि हु लक्खणो एसो ॥१४४८॥
सिरिकंतो य सयंभू कमेण जाओ पभासकुंदो सो। विज्जाहराण राया जाओ लंकाहिवो दुगो' ॥१४४६॥
गुणमत्यसुमान् मृत्वा भ्रान्त्वा भूरिषु योनिषु। भूत्वा वेगवती स्वर्गे गत्वा सीताऽभवत्ततः ॥१४५०॥
धनदत्तादिभ्रात्रोर्यो जन्यचक्रोऽभवत् सुहृद्। सोऽस्मिन् भवे भवान् जातस्त्वं विभीषण! साम्प्रतम् ॥
योऽभूद् वृद्धो वृषः पञ्च-नमस्कारस्मृतः मृतः। छत्रछायमहीशस्य नन्दनो वृषभध्वजः ॥१४५२॥
सोऽस्मिन् भवे दिवश्च्युत्वा कपिविद्याधराधिपः। सुग्रीवोऽजनि रामस्य लक्ष्मणस्याधुना सुहृत् ॥१४५३॥
यतः—"एए सव्वेवि पुरा आसि णिरंतरं मिणेहसंबद्धा। रामस्स तेण णेहं वहंति णिययं च अणुकूला॥"
पूर्वं वेगवतीष्टाऽभू-द्गाढं स्वयम्भूभूपतेः। येन तेनेह सीतेयं दशास्येन हृताऽधुना ।१४५४॥
वेगावत्या भवे पूर्वे कलङ्कः साधवे ददे। अस्मिन्नतो भवे प्रापि कलङ्कः सीतया किल ॥१४५५॥
यतः—"रागेण व दोसेण व जो दोसं संजयस्स भासेइ। सो हिंडइ संसारे दुक्खसहस्साइं अणुहवंता ॥१॥"
स्वयम्भुवा पुराऽमारि श्रीभूतिश्च पुरोहितः। तेनेह लक्ष्मणेनापि हतो दशाननः खलु ॥१४५६॥
यतः—"जो जेण हओ पुव्वं सो तेणेव हणिज्जए ण संदेहो। एसा ठिईय नियय संसारत्थाण जीवाणं ॥१॥'
ततो विभीषणः प्राह भगवन्! केन कर्म्मणा। लवाङ्कुशौ बलिष्ठौ तु जातौ तच्च निगद्यताम् ॥१४५७॥
ज्ञान्याचष्टाऽथ काकन्द्यां पूर्यभूद् रतिवर्द्धनः। भूपस्तस्याभवत् पत्नी वर्या सुदर्शनाभिधा ॥१४५८॥
तयोरभवतां पुत्रौ प्रियङ्करहितङ्करौ। सर्वगुप्तोऽभवन्मन्त्री प्रतिकूलो महीपतेः ॥१४५६॥
सर्वगुप्तप्रिया दुष्टशीलाऽथ विजयावलिः। भोगाय प्रार्थयामास निशयन्येद्युर्महीपतिम् ॥१४६०॥
भणिताऽथ महीशेन मन्त्रिपत्नि! त्वयाऽधुना। प्रोक्तमत्र परत्रापि भूरिदुःखप्रदं वचः ॥१४६१।
यतः—"अप्पाधूलिहि मेलिउं सयणा दीधउ जे उच्छार। पगि पगि माया ढांकणुं जेणि जोइ परनारि ॥
क्रमात् परनराश्लेषां वाञ्छती स्वीयगेहिनी। विज्ञाय मन्त्रिणा द्वेषो विशेषाद् भूपतौ दधे ॥१४६३।
क्रोधेन मन्त्रिणा गेहे ज्वालिते मेदिनीपतिः। पुत्रपत्नीयुतो यातो वाराणस्या पुरि ध्रुवम् ॥१४६४॥
सर्वगुप्त इतो मन्त्री राज्यं कृत्वाऽऽत्मसाद् द्रुतम्। दूतमप्रेषयत् काश्यां जेतुं काशीपुराधिपम् ॥१४६५॥
मन्त्रिणः सर्वगुप्तस्य यद्याज्ञा ध्रियते त्वया। तदा ते कुशलं भूरि-कालं भूप! भविष्यति ॥१४६६॥

काशीपतिर्धनः प्राह योऽस्ति स्वस्वामिवञ्चकः । तस्य को मन्यते चाज्ञां जानन् न्यायपथं किल ? ॥
यतः—"सती पत्युः प्रभोः भृत्यः गुरोः शिष्यः पितुः सुतः । आदेशे संशयं कुर्वन् खण्डयन्नात्मनो व्रतम्' ॥
काशीशेन तदाऽत्यन्तं धिक्कृतो दूत एव स । सर्वगुप्तान्तिके गत्वा काशीशोक्तं न्यवेदयत् ॥१४६८॥
श्रुत्वेति सर्वगुप्तोऽथ सन्नह्य शिबिरं निजम् । काशीनाथं विजेतुं तु चचालाऽतुलविक्रमः ॥१४६९॥
काशीसत्कमथो देशं लुण्टयन् सर्वगुप्तकः । तृणवन्मन्यते विश्वं स्वीयदोरोजसा तदा ॥१४७०॥
काशीशः कसिपो भूपः आकार्य्य रतिवर्द्धनम् । सपत्नीनन्दनं भक्त्या गौरवं तस्य च व्यधात् ॥१४७१॥
ततः कसिपभूपालं स्वामिनं रतिवर्द्धनम् । अग्रे कृत्याऽचलज्जेतुं सर्वगुप्ताभिधं रिपुम् ॥१४७२॥
युद्धं कुर्वन् रणे सर्वगुप्तो भग्नबलस्तदा । रतिवर्द्धनभूपेन सार्द्धं दीनमना अभूत् ॥१४७३॥
लात्वा सर्वबलं सर्व-गुप्तस्य मन्त्रिणोऽन्तिकात् । रतिवर्द्धनभूपालो यदाऽभूत् सबलो भृशम् ॥१४७४॥
तदा नंष्ट्वा द्रुतं सर्व-गुप्तो गत्वाऽतिदूरतः । अरण्येऽभूत् पुलिन्दस्य सदृशो विभवक्षयात् ॥१४७५॥
विजित्य वैरिणं सद्यो रतिवर्द्धनभूपतिः । स्वीयपुर्या समायातः कुर्वाणो विजयोत्सवम् ॥१४७६॥
रतिवर्द्धनभूपाले स्वीये शेषबले सति । कसिपो मेदिनीपालः सुखं राज्यं चकार सः ॥१४७७॥
अन्येद्युर्नगरोद्याने सूरीशं शीलसुन्दरम् । रतिवर्द्धनभूपालो वन्दितुं समुपेयिवान् ॥१४७८॥
श्रुत्वा धर्म्मं समुत्पन्न वैराग्यो रतिवर्द्धनः । वितीर्य पुत्रयो राज्यं ललौ दीक्षां तदन्तिके ॥१४७९॥
विजयावलिका मृत्वा संजाता राक्षसी तदा । रतिवर्द्धनराजर्षे-रुपसर्गं व्यधाद् भृशम् ॥१४८०॥
उपसर्गं वितन्वत्यां राक्षस्यां रतिवर्द्धनः । अवाप्य केवलज्ञानं मोक्षसौख्यमसाधयत् ॥१४८१॥
इतः सम्प्राप्तवैराग्यौ प्रियङ्करहितङ्करौ । दत्त्वा स्वस्वनवे राज्यं जगृहतुव्रतं तदा ॥१४८२॥
षष्ठाष्टमादिकं तीव्रं तपो नित्यं समाहितौ । कुर्वाणौ सुखिनौ जातौ प्रियङ्करहितङ्करौ ॥१४८३॥
समाधिमरणं प्राप्य प्रियङ्करहितङ्करौ । ग्रैवेयके गतौ धर्म्म-ध्यानैकलीनमानसौ ॥१४८४॥
ग्रैवेयकं सुख भुङ्क्त्वा प्रियङ्कर-हितङ्करौ । सञ्जातौ नन्दनौ दाश-रथेरत्र लवाङ्कुशौ ॥१४८५॥
प्राग्भवार्जितपुण्येन रामपुत्रौ लवाङ्कुशौ । सञ्जातौ बलिनौ वर्य-रूपनिर्जितमन्मथौ ॥१४८६॥
एवं पूर्वभवान् राम-लक्ष्मणादिमहीभुजाम् । प्रोक्त्वा विशेषतो धर्म्मं जगौ सकलभूषणः ॥१४८७॥
तथा हि—"वरिसह ते मेहा दीहडा जे जिणधम्मिहिं सार । तिन्नि सया ऊण सट्ठडीइं तइं गुणइ गमार ॥१॥
'इयं मायारात्रिर्बहुलतिमिरा मोहललितैः, कृतज्ञानालोकास्तदिह निपुणं जाग्रत जनाः ।
अलक्षः संहर्तुं ननु तनुभृतां जीवितधना-न्ययं कालश्चौरो भ्रमति भुवनान्तः प्रतिदिनम्' ॥२॥
'आसन्नसिद्धिआणं विहिबहुमाणो अ होइ नायव्वो । विहिचाओ अविहिभत्ती अभव्वजीअदूरभव्वाणं ॥३॥
धन्नाणं विहियोगो विहिपक्खाराहगा सया धन्ना । विहिबहुमाणा धन्ना विहिपक्ख अदूसगा धन्ना' ॥४॥
शत्रुञ्जयादितीर्थेषु ये यात्रां कुर्वते जनाः । तेषां स्वर्गापवर्गादि-सुखं हस्ततले भवेत् ॥ १४८८ ॥
अनादिकालसम्भूतं तीर्थं शत्रुञ्जयाचलः । यत्रानन्ताः शिवं प्राप्ता मुनयः क्षिप्तपातकाः ॥१४८९॥
ये शत्रुञ्जयतीर्थे तु तिष्ठन्ति पक्षिणोऽपीह । तेऽपि स्तोकैर्भवैरेव गमिष्यन्ति-शिवालयम् ॥१४९०॥
गतेषु तीर्थनाथेषु गते ज्ञाने च केवले । लोकान् भवाम्बुधेः शत्रु-ञ्जयाद्रिस्तारयिष्यति ॥१४९१॥

जिनेष्वर्हन् यथा मुख्यः शैलेषु मन्दरो यथा । तथाऽयं सिद्धिभूमिश्रो मुख्यो निगद्यते जनैः ॥१४६२॥
यः श्रीसङ्घपतीभूय भूरीन् भव्यान् शिवाचले । वन्दयन्ति शिवं नेतुं लभन्ते नात्र संशयः ॥१४६३॥
एवं श्रुत्वा वचो रामो जगौ शत्रुञ्जयाचले । यात्रां कर्तुं ममाऽस्तीच्छा साम्प्रतं मुनिसत्तम ! ॥१४६४॥
ज्ञानी प्राह तु भव्यानां तीर्थे शत्रुञ्जयाभिधे । वाञ्छा यात्रां विधातुं हि भव्यानां भवति ध्रुवम् ॥१४६५॥
येषां शत्रुञ्जये यात्रां कर्तुं वाञ्छा प्रजायते । सिद्धिं याति च धन्यः स शिवगामी भविष्यति ॥१४६६॥
ततो दाशरथिः प्रेष्य वह्वीः कुङ्कुमपत्रिकाः । सङ्घमाकारयामास यात्रां कर्तुं शिवाचले ॥१४६७॥
कल्याणखचिताः पञ्च शतानि जिनपालयाः । कलधौतमयाः सप्त शतानि द्वादशाधिकाः ॥१४६८॥
वर्यकाष्ठमयाः पञ्च सहस्रा द्वादशाधिकाः । चेलुः पुर्यास्तदा दाश-रथे सङ्घे मनोहरे ॥१४६९॥युग्मम्॥
अनन्ताः कोटयः सप्त भूरिकोट्य नरास्त्रियः । महिषाः पृष्टिवाहाश्च कोट्य एकोनविंशतिः ॥१५००॥
गजा दश सहस्राणि ताक्ष्र्या विंशतिकोटयः । चेलुर्दाशरथे सङ्घे भूरिवाद्यपुरस्सरम् ॥१५०१॥
ग्रामे ग्रामे पुरे पुर्यां कुर्वन् स्नात्रोत्सवं मुदा । ययौ दाशरथिः शत्रुञ्जये तीर्थे शिवप्रदे ॥१५०२॥
तीर्थे तत्राऽऽदिदेवस्य कृत्वा स्नात्रादिकं महः । आनर्च पादुके नाभि-सूनोर्दाशरथिर्मुदा ॥१५०३॥
ततो मुक्ताफलैः स्फारतरं राजादनीतलम् । वर्द्धयामास काकुत्स्थो गीतनृत्यपुरस्सरम् ॥१५०४॥
तत्र श्रीआदिदेवस्य जीर्णस्य जिनसद्मनः । श्रीरामः कारयामास समुद्धारं शुभाशयः ॥१५०५॥
कृत्वा दाशरथिः पूजां विस्तरात् प्रथमार्हतः । सङ्घं सन्मानयामास भक्तवस्त्रादिदानतः ॥१५०६॥
प्रतिलाभ्य गुरून् भक्त-वस्त्रविश्राणनादिभिः । रामः सन्तोषयामास याचकानपि भावतः ॥१५०७॥
ततो रैवतके तीर्थे गत्वा श्रीनेमिनाथकम् । विस्तरात् पूजयामास भक्त्या दशरथात्मजः ॥१५०८॥
पश्चादायात् क्रमाद्रामो विसृज्य सङ्घमादरात् । वर्योत्सवमलञ्चक्रे साकेतं भ्रातृसंयुतः ॥१५०९॥
अन्यदाऽष्टापदे तीर्थे चक्रिणाऽऽद्येन कारिते । सिंहनिषिद्यथाकारे प्रासादेऽभ्रंलिहे वरे ॥१५१०॥
चतुर्विंशतिरर्हन्तो वृषभाद्यास्तमोपहाः । मानप्रमाणभृद्देहाः श्रुता रामेण सद्गुरोः ॥१५११॥
उक्तं च—"उसभो पंच धणुस्सय नव पासो सत्त रयणीओ वीरो ।
नव सत्त पंच अट्ठ य पन्ना दस पंच परिहाणी ॥१॥"
ततः श्रीसङ्घमाकार्य भूत्वा सङ्घपतिः स्वयम् । रामोऽचालीज् जिनान् नन्तुं तीर्थेऽष्टापदनामनि ॥१५१२॥
आरुह्याऽष्टापदं शैलं प्रत्येकं जिननायकम् । वृषभादीन् मुदाऽऽनर्च नानोत्सवपुरस्सरम् ॥१५१३॥
यतः—"चत्तारि अट्ठ दस दोय वंदिया जिणवरा य चउव्वीसं ।
परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥१५१४॥"
ततः सम्मेतशिखरे तीर्थे गत्वा जिनेश्वरान् । पूजयित्वा मुमे रामः स्वं जनुः सफलं व्यधात् ॥१५१५॥
अट्ठावयम्मि उसमो सिद्धिगओ वासुपुज्ज चंपाए । पावाए वद्धमाणो अरिट्ठनेमि अ उज्जंते ॥१॥
अवसेसा तित्थयरा जाइजरामरणबंधणविमुक्का । सम्मेयसेलसिहरे वीसं परिनिव्वुए वंदे' ॥२॥
ततो रामो वितन्वान उत्सवं स्वपुरे क्रमात् । पृथिवीं न्यायमार्गेण पालयामास सन्ततम् ॥१५१६॥
अन्यदोत्पन्नवैराग्यो लोचं कृत्वा स्वपाणिना । सीता त्यक्तगृहारम्भा जिघृक्षुरभवद् व्रतम् ॥१५१७॥

तादृशीं जानकीं दृष्ट्वा रामो मूर्च्छामुपागतः । पतितो धरणौ स्वस्थी-कृतश्चन्दनसेवनैः ॥१५१८॥
ऊचे रामो मया पत्नि ! कोऽपराधः कृतस्तव । कथं मामेककं मुक्त्वा व्रतं लास्यति साम्प्रतम् ? ॥१५१९॥
त्वां विना मेऽधुना प्राणाः करिष्यन्ति प्रयाणकम् । सीताऽवग् न पते ! शोकः क्रियते पुरुषोत्तमैः ॥१५२०॥
एक एवासुमान् याति परलोकं स्वकर्म्मणा । एक एव समायाति प्राग् जन्माऽर्जितकर्म्मणा ॥१५२१॥
"भवारण्यं भीमं तनुग्रहमिदं छिद्रबहुलं बली कालश्चौरो नियतमसिता मोहरजनी ।
गृहीत्वा ज्ञानस्वं विरतिफलकं शीलकवचं समाधानं कृत्वा स्थिरतरदृशो जाग्रत जनाः ! ॥१५२२॥
एवं पर्यवसाय्यैव रामं जनकनन्दिनी । सर्वगुप्तगुरूपान्ते ललौ दीक्षां शिवप्रदाम् ॥१५२३॥
तदा रामेण विदधे तथा दीक्षोत्सवो महान् । यथा प्रापुर्जना बोधि-बीजं निर्वृतिदायकम् ॥१५२४॥
सूरिणोक्तं त्वया सीते ! पालनीयं तथा व्रतम् । यथा करतलेऽभ्येति शिवश्रीस्तव लीलया ॥१५२५॥
सुव्रतायतिनीपार्श्वे सर्वगुप्तेन सूरिणा । मुक्ता सीता तदा शुद्ध-क्रियाशिक्षणहेतवे ॥१५२६॥
श्रीसर्वगुप्तसूरीश-पार्श्वे श्रीरामलक्ष्मणौ । लवाङ्कुशौ तथाऽन्येऽपि धर्म्मं श्रोतुमुपागमन् ॥१५२७॥
सीतादियतिनीयुक्ता सुव्रता च प्रवर्तिनी । धर्म्मोपदेशनां श्रोतुं श्राद्धीयुक्ता समागमत् ॥१५२८॥
सूरीशः सर्वगुप्तोऽथ गिराऽब्दगर्जिताऽऽभया । देशनां कर्त्तुमारेभे भव्याङ्गिबोधहेतवे ॥१५२९॥
यतः-"जत्थ अहिंसा सच्चं अदत्तपरिवज्जणं च बंभं च । दुविहपरिग्गहविरई तं हवइ सिवाय चारित्तं ॥१॥
विणओ दया दाणं सीलं णाणं दमो तहा झाणं । कीरइ ज मोक्खट्ठा तं हवइ सिवाय चारित्तं ॥२॥
जइ धम्मक्खर संभलइ नयणे निंद न माइ । वत्त करंताए मर कूलरेडा व किं रयणि विहाइ (?) ॥३॥
धम्मसरिसा जे गया ते गुणसायरा दीह । अवरह पापारंभी सिउं भा सम देजे लीह ॥४॥
कोइ पुण भवियसीहो इक्कभवे भाविऊण सम्मत्तं । वीरो कम्मविसोहिं काऊण य लहइ निव्वाणं ॥५॥
लद्धूण वि जिणधम्मे बोहिं स कुंडुंवकद्दमंमि निहुत्तो । इंदियसुहसाउलओ परिहिंडइ सो वि संसारे ॥६॥"
श्रुत्वेतद्राम आचष्ट संसारासारतां पुनः । जानंतो मे कथं नैव विरागो जायतेतराम् ? ॥१५३०॥
ज्ञान्याऽऽचष्टाच्युतेनाम्रा बलिना मोह एधते । तेन मोहेन ते नैव वैराग्यं जायतेऽधुना ॥१५३१॥
ततो रामो जगौ मोक्षो भवात् कस्माद् भविष्यति । ज्ञान्याह ते शिवप्राप्ति-र्जायतेऽत्र भवे बलिन् ! ॥१५३२॥
श्रुत्वेति राघवः सर्व-सर्वज्ञसदनेष्वपि । व्यधात् पूजां जिनेशानां सर्वपौरसमन्वितः ॥१५३३॥
इतः सीता तपस्तीव्रं कुर्वाणा प्रतिवासरम् । दवदग्धावनीरुड्वत् कृशदेहाऽभवत्तदा ॥१५३४॥
महाव्रतानि पञ्चैव शुद्धानि जनकात्मजा । पालयन्ती तपस्तीव्रं ततान शिवशर्मदम् ॥१५३५॥
षष्ठाष्टमादिकं तीव्रं कुर्वाणा जनकात्मजा । षष्टिं वर्षाणि दिवसा-स्त्रयस्त्रिंशद् व्यधात्तमाम् ॥१५३६॥
प्रान्ते संलेखनां कृत्वा-ऽऽराधनां क्षमणात्मिकाम् । सीता मृत्वाऽच्युते स्वर्गे-ऽच्युतेन्द्रोऽजनि सत्तनुः ॥१५३७॥
द्वाविंशतिसमुद्रायु-र्भूरिदेवनिसेवितः । मनसा निर्जरीभोग-लीनोऽच्युताधिपोऽजनि ॥१५३८॥
यतः-"दो कप्प कायसेवी दो दो फरिसरूवसद्देहिं । चउरो मणेणुवरिमा अप्पवित्रारा अणंतसुहा ॥१॥"
नारी मृत्वा प्रजायेत नरो नरोऽबला पुनः । राजा रङ्को भवेद्रङ्को राजा कर्म्मनियोगतः । १५३९॥
यतः-"राया जायइ भिच्चो भिच्चो रायत्तणं पुण उवेइ । माया वि हवइ धूया पिया वि पुत्तो समुब्भवइ ॥१॥

एवं अरहरघडी-जंतसमे इह समत्थ संसारे। हिंडंति सव्वजीवा सकम्म विप्फंदिअं सुइरं ॥२॥"
रामो लक्ष्मणसंयुक्तः पालयन् मेदिनीं चिरम्। लक्ष्मणे निविडां प्रीतिं धत्ते सोऽपि च राघवे ॥१५४०॥
अन्यदा वासवोऽप्राक्षी-दुपविष्टः सभान्तरे। अयोध्यायां नयी रामो भूपोऽस्ति लक्ष्मणान्वितः ॥१५४१॥
रामेऽस्ति यादृशी प्रीति-र्लक्ष्मणस्याधुना किल। रामस्य लक्ष्मणे प्रीति-र्विद्यते यादृशी पुनः ॥१५४२॥
न तादृश्यधुनाऽन्यत्र कस्यापि वीक्ष्यते भुवि। तदैको निर्जरः प्राह सत्यमेतत्त्वयोदितम् ॥१५४३॥
अहं तयोः करिष्येऽहं परीक्षां साम्प्रतं प्रभो!। ततः स निर्जरोऽयोध्या-नगरीं समुपेयिवान् ॥१५४४॥
लक्ष्मणस्यानुजस्यैव भृत्यस्य रूपमञ्जसा। कृत्वा रामान्तिकेऽभ्येत्य जगादेति कृपास्पदम् ॥१५४५॥
उत्पन्नशूलरोगः सन् रामोऽद्य मृतिमीयिवान्। आकर्ण्यैतद्वचोऽकस्माद् वज्रपातसहोदरम् ॥१५४६॥
लक्ष्मणस्य तदा प्राणाः परलोकमसाधयन्। मोहेन जायते किं न नृणां दुःखादिकं खलु ॥१५४७॥
लेख्यविम्बमिव श्रीशं स्थितं प्रगतजीवितम्। दृष्ट्वा देवो निजे चित्ते दध्यावेवं पुनः पुनः ॥१५४८॥
मयोक्ते हास्यवचने लक्ष्मणोऽयं महीपतिः। मृतोऽतोऽहं कथं पापा-च्छुटिष्यामि दुराशयः ॥१५४९॥
मृतस्य चक्रिणोऽशक्तो जीवितं दातुमात्मना। जानन् देवो ययौ स्वर्गे विषादग्रस्तमानसः ॥१५५०॥
यतः-'असमिक्खिअकारीणं पुरिसाणं इत्थपाव हिययाण। सयमेव कयं कम्मं परितावपरं हवइ पच्छा'।१५५१
तदा तत्रैत्य गेहिन्यो मृतं वीक्ष्य पतिं स्फुटम्। रुदन्त्यो जगदुः कान्त! जल्प त्वमेकदा किल ॥१५५२॥
निशम्य लक्ष्मणं त्यक्त-प्राणं दाशरथिस्तदा। आगत्यावग् वचो देहि भो लक्ष्मण! सहोदर! ॥१५५३॥
अजल्पन्तं रमानाथं रामोऽवग् न मया तव। अपराधः कृतोऽतस्त्व-मुत्तरं वितरैकशः ॥१५५४॥
आलिङ्गय लक्ष्मणं रामः प्राहोत्तिष्ठ सहोदर!। त्वं विना निखिलं राज्यं दुःखितं विद्यतेऽधुना ॥१५५५॥
यतः-"उट्ठेहि सयणवच्छल! वाया मे देहि विलवमाणस्स। किं व अकारण कुविओ हरसि मुहं दोसरहियस्स ॥
ण तहा डहइ णिदाहो दिवायरो हुअवहो व्व पज्जलिओ। जह डहइ णिरवसेसं देहं एक्कोअरविओगो ॥२॥
किं वा करेमि वच्छय! कत्तो वच्चामिहं तुमे रहिओ। ठाणं पिच्छामि न तं निव्वाणं जत्थ उ लहामि ॥३॥
हा वच्छ! मुंचसु इम कोवं सोमो अ होहि संखेवं। संपइ अणगाराणं वट्टइ वेला महरिसीणं ॥४॥"
सूर्योऽस्तमगमत् पश्य लक्ष्मणोत्थाय वेगतः। कुमुदानि प्रफुल्लानि निद्राणानि कजानि च ॥१५५६॥
इष्टं यद्विद्यते तेऽथ तज्जल्प पुरतो मम। विषादं त्यज संहर्षं श्रय श्रीनिलयाऽधुना ॥१५५७॥
उत्तिष्ठ सोदरेदानीं व्यतिक्रान्ता निशाऽखिला। उदयन् विद्यते सूर्यो बोधयन् पद्मकाननम् ॥१५५८॥
त्वय्यजल्पति वादित्रं वाद्यते न हि केनचित्। जिनालयेऽपि सङ्गीतं कारयिष्यति कोऽधुना ॥१५५९॥
लक्ष्मणं चाऽद्य लक्ष्मीशं मृतं ज्ञात्वा विभीषणः। सुग्रीवो वर्द्धनो मेघ-श्चन्द्रोदरः समागमन् ॥१५६०॥
रामं प्रति जगुः स्वामिन्! शोको न क्रियते सता। जलबुद्बुद तुल्यानि देहानि सन्ति देहिनाम् ॥१५६१॥
यतः-"जलबुब्बुय सरिसाइं राहव! देहाइं सव्वजीवाणं। उप्पज्जंति चयंति अ णाणाजोणीसु पत्ताणं ॥१॥
इंदा सलोगपाला भुंजंता उत्तमाइ सोक्खाइं। पुण्णखयम्मि तेऽविअ चइउं अणुहोंति दुक्खाइं ॥२॥
ते तत्थ मणुअदेहे तणविंदुचलाचले अइदुग्गंधे। उप्पज्जंति महाजस! का सन्ना पायए लोए ॥३॥
अन्नं तु मयसमाणं सोयइ अहिअं विमूढभावेणं। मच्चुवयणे पविट्ठं ण सोयई चेव अप्पाणं ॥४॥

तं णत्थि जीवलोए ठाणं तिलतुसतिभागमित्तंपि । जत्थ ण जाओ जीओ जत्थेव ण पाविओ मरणं ॥५॥"
एवं पुनः पुनः प्रोक्ते सुग्रीवेण खगामिना । रामो जगौ मृतो नैव सोदरो मेऽधुना खलु ॥१५६२॥
ततो लक्ष्मणवक्त्रं तु दृष्ट्वाऽऽहोत्तिष्ठ सोदर ! । साध्यते विषयोऽन्योऽपि वैरिवर्गोखिलोऽपि च ॥१५६३॥
ततो ग्रासं मुखे लक्ष्मी-पतेः कृत्वाऽऽह राघवः । भो भ्रातर् ! भुङ्क्ष्व पक्वान्नं पिब स्वच्छं पयः पुनः ॥१५६४
ततो विभीषणः प्राह भो ! रामोत्तिष्ठ शीघ्रतः । वैरिणः शिविरं चन्द्र(ण्ड)-मागतं स्वपुरान्तिके ॥१५६५॥
ततो रामः समुत्थाय चटयित्वा गुणे धनुः । टणत्कारं विधायाशू-पविष्टो लक्ष्मणान्तिके ॥१५६६॥
इतोऽच्युतेश्वरः सीताजीवोऽपि मोहकर्दमे । रामं स्वकान्तमैक्ष्येति दध्यौ पुनः पुनर्हृदि । १५६७॥
मदीयो रमणो रामो मोहजालेऽसुखप्रदे । पतितो नरके गामी कथं रक्षिष्यते मया ॥१५६८॥
ततोऽच्युतेश्वरोऽभ्येत्य विप्रवेषधरस्तदा । रामं प्रति जगौ मोह–पाशे किं पतितोऽसि हि ? ॥१५६९॥
यतः-"न य होइ कज्जसिद्धी एव कुणंताण मोहगहियाणं । जायइ सरीरखेयो णवरं विवरीअबुद्धीणं ॥१॥"
एष ते सोदरो मृत्युं प्राप्तोऽतस्त्वं च राघव ! । कुरुष्व वह्निसंस्कारं नीत्वा प्रेतवनेऽधुना ॥१५७०॥
रामोऽवग् भवता कूटं जल्प्यते साम्प्रतं स्फुटम् । सुप्तोऽस्ति निर्भरं भ्राता विनिद्रोऽथ भविष्यति ॥१५७१॥
एवं प्रोक्त्वा निजस्कन्धे कृत्वा पुरबहिर्वने । गत्वा मुक्त्वा वने राम आनीयाम्राणि ऊचिवान् ॥१५७२॥
भ्रातरुत्तिष्ठ वर्याणि सहकारफलानि तु । अमूनि भक्षयेदानीं तृप्तो भवेह साम्प्रतम् ॥१५७३॥
ततोंसे लक्ष्मणं कृत्वा यावच्चचाल राघवः । तावत् स निर्जरश्चैकं मृतं नरं निजांसगम् ॥१५७४॥
कृत्वा सन्मुखमायात-स्तदा दाशरथेः पुरः ।रामोऽवग् मृतकं स्कन्धे किं कृतं भवताऽधुना॥१५७५॥युग्मम्॥
देवोऽवग् मृतकस्यास्य दत्त्वौषधानि साम्प्रतम् । जीवयिष्याम्यतो राम-स्तं प्रति प्रोक्तवानिति ॥१५७६॥
मृतः कोऽपि न जीवेद्धि ततः स निर्जरो जगौ । इदं चेन्मृतकं ह्येत-ज्जीविष्यति कथं तव ? ॥१५७७॥
ततः स निर्जरः पद्मं शिलापृष्टे दृढे तदा । वप्त्वा सिञ्चन् कबन्धेन राघवेणावलोकितः ॥१५७८॥
रामेणोक्तं शिलायां तु न पद्मं वर्द्धते क्वचित् । स देवोऽवक् कथं तर्हि मृतकं जीववद्भवेत् ? ॥१५७९॥
इत्यादि बहुशो वारान् वालुकादिप्रदर्शनात् । रामं सीताऽच्युताधीशो बोधयामास स द्रुपे ॥१५८०॥
ततः स वासवः प्रादुर्भूय स्वगमनं दिवः । ज्ञापयित्वा स्थिरीचक्रे रामं दीक्षाख्रिहेतवे ॥१५८१॥
प्रबुद्धो राघवो वह्नि-संस्कारं कमलापतेः । कृत्वा दीक्षां गृहीतुं तु शत्रुघ्नं प्रत्यवक् तदा ॥१५८२॥
अहं दीक्षां गृहीष्यामि राज्यं त्वं लाहि साम्प्रतम् । शत्रुघ्न ऊचिवान् पूर्व-महं लास्यामि संयमम् ॥१५८३॥
उक्तं च-"पिय विभवेण एत्तो सक्कारेऊण लक्खणं रामो । पुहइए पालणट्ठा सिग्घं चिअ भणइ सत्तुग्घं ॥१॥
वत्थ ! तुमं सयलमिणं भुंजसु रज्जं णराहिव समग्गं । संसारभमणभीओ पविसामि तवोवणं अहयं ॥२॥
सत्तुग्घो भणइ तओ अलाहि रज्जेण दुग्गइकरेण । संपइ मोत्तूण तुमे देव ! गई णत्थि मे अण्णा ॥३॥"
शत्रुघ्नं राज्यमगृह्णन्तं ज्ञात्वा दाशरथिस्तदा । अनङ्गलवणं पुत्रं प्रत्युवाच स्फुटाक्षरम् ॥१५८४॥
राज्यमेतद् गृहाण त्वं गृहीष्येऽहं तु संयमम् । पुत्रो जगौ विना त्वं तु स्थातुं शक्नोमि न क्षणम् ॥१५८५।
ततो रामो निजे पट्टे वलेन इद्धमङ्गजम् । अतिष्ठिपद् लवकुमार-साक्षिकं लवदूनपदम् ॥१५८६॥
तदा विभीषणः पुत्रं सुभूषणाभिधं वरम् । स्वपट्टेऽतिष्ठिपत्पुत्रं सुग्रीवोऽङ्गदनामकम् ॥१५८७॥

अन्येषामङ्कुशादीनां नन्दनानां यथोचितम् । रामो विश्राणयामास विषयान् विषयोज्झितः ॥१५८८॥
तदाऽन्ये बहवो भूपा रामेण सह संयमम् । लातुकामा निजं राज्यं स्वपुत्रेभ्यो ददुर्मुदा ॥१५८९॥
तदाऽर्हद्दाससुश्राद्ध-मुखात् सुव्रतसंयतम् । समागतं निशम्याशु रामो हर्षं समागमत् ॥१५९०॥
ततोभूरि-महीपाल-विद्याधरसमन्वितः । तत्रैत्य तं यतीशं तु ननामाऽनघमानसः ॥१५९१॥
उत्तार्य्य मुकुटादीनि भूषणान्यखिलान्यपि । रामो व्रतं ललौ भूरि-भूपविद्याधरान्वितः ॥१५९२॥
तदा बहु सहस्राणि भूपालाः साधुसन्निधौ । जगृहुः संयमं सद्यः संसाराम्बुधितारकम् ॥१५९३॥
विशुद्धं चरणं शश्वत् पालयन् राघवो मुदा । विनयादपठद् भूरि-शास्त्राणि गुरुसन्निधौ ॥१५९४॥
शत्रुघ्नोऽपि तदा दीक्षां ललौ विभीषणोऽपि च । ताभ्यां सार्द्धं महीपालाः बहवः संयमं ललुः ॥१५९५॥
सार्द्धं रामेण भूपालाः सहस्राणि तु षोडश । जगृहुः संयमं मुक्त्वा तृणवद्राज्यमञ्जसा ॥१५९६॥
(नारीणां)सहस्राणि त्रयस्त्रिंशत् सप्ताधिकानि तद्दिने । प्रव्रज्यां जगृहुः लक्ष्मी-वती साध्व्यन्तिके मुदा ॥१५९७॥
श्रीसुव्रतान्तिके रामः पठन् शास्त्राणि भूरिशः । पपाठ नवपूर्वाणि सार्द्धानि विनयाश्रितः ॥१५९८॥
ततो गुरूपदेशेन विहारमेककः करन् । रामर्षिः कुरुते स्मोग्रं तपोऽभिग्रहभाक् सदा ॥१५९९॥
"यतः-अह णिग्गओ मुणी सो गुरुणा अणुमोइओ पउमनाहो । पडिवण्णो अ विहार उत्तमसामत्थसंपण्णो॥१॥"
भूमिभृद्गह्वरे तस्यां रात्रौ दाशरथेर्यतेः । तृतीयं ज्ञानमुत्पन्नं तद्ज्ञानावरणक्षयात् ॥१६००॥
अवधिज्ञानतस्तुर्ये नरके लक्ष्मणं गतम् । विज्ञाय ध्यातवानेवं भवस्य विषमां स्थितिम् ॥१६०१॥
सय सत्त कुमारत्ते तिन्नेव सयाणि मंडलित्ते य । चत्तालिमय विजए जस्स उ सवच्छरातीआ ॥१॥
एकारस य सहस्सा सपंच णवया तहेव सट्ठिजुआ । वरिसाणि महारज्जे जेण सयासे ठिया विसया ॥२॥
बारस चेव सहस्सा हवंति वरिसाण पंचवीसूणा । भोत्तूण इंदियसुहं गओ य नरयं अणिमिअप्पा ॥३॥
देवाण को व दोसो परभवजणिअं समागयं कम्मं । बंधवनेहनिहेणं मओ गओ लक्खणो नरयं ॥४॥"
मम पूर्वभवोद्भुतः स्नेहोऽभूल्लक्ष्मणे मुधा । न कृतात् कर्म्मणः कोऽपि छुटिष्यति तनूधरः ॥१६०२॥
प्रायो मोहसुरामत्तो जीवो नैव हिताहिते । जानीते स्माऽनादिसंसार-भ्रमखिन्नो दिवानिशम् ॥१६०३॥
लक्ष्मणोऽपि मम भ्राता तुर्ये श्वभ्रे गतो यदि । तदाऽन्येषां नृणां पापात् किं किं दुःखं न जायते ? ॥१६०४॥
यतः-"एगो य सत्तमाए पंच य छट्ठी पंचमाए एगो । एगो चउत्थीए कण्हो कण्हो पुण तच्चपुढवीए॥१॥"
अथ राममुनिः षष्ठो-पवासी विहरन् भुवि । महापुर्यां विवेशैव भिक्षाग्रहणहेतवे ॥१६०५॥
तत्रैत्य भूपतिः सोमः प्रणम्य राघवं प्रति । प्राहाऽद्याऽस्मद्गृहात् भिक्षां गृहाणाऽनुगृहाण-माम् ॥१६०६॥
ततो राम ऋषिः प्राह न ह्येकस्मिन् गृहे मम । भिक्षां प्रकल्पते लातुं ततो नोच्यमिदं वचः ॥१६०७॥
ततो रामयतिर्भिक्षां शुद्धां पश्यन् गृहे गृहे । भीमस्य वणिजो गेहे शुद्धान्नमाप्तवाँस्तदा ॥१६०८॥
तदा तस्याऽऽलये पुष्प-रत्नवृष्टिं सुधाभुजः । वितेनिरे तथा हर्षो यथाऽभूद् द्युसदामपि ॥१६०९॥
तत्र रत्नपुरे यत्र यत्र गेहे च गेहिनः । रामो याति तदा ते तु पक्वान्नं ददते जनाः ॥१६१०॥
अतीवादरतोऽशुद्धमाहारं राघवो यतिः । ज्ञात्वेत्यभिग्रहं घोरं जग्राह शिवहेतवे ॥१६११॥
यदाऽरण्यां ममाहारः शुद्धो हस्ते चटिष्यति । भोक्तव्यं मयका तस्मिन् दिनेऽ यस्मिन् मनाग् न हि ॥१६१२॥

कदाचिद् वासरे तस्मिन् कदाचिदपरे पुनः । कदाचित् सप्तमे षण्ठे मासे मासद्वये पुनः ॥१६१३॥
भिक्षां शुद्धामटव्यां तु लभमानश्च राघवः । चकार पारणं घोरं संसाराम्बुधितारणम् ॥१६१४॥
एकदा श्रीपुरेशस्य मधुभूमिपतेर्वने । जिमतः शुद्धमाहारं प्रापद् रामो यतिर्यदा ॥१६१५॥
तदा देवैः समागत्य वृष्टिः कुसुमरत्नयोः । विदधे भूपतेरग्रे रामर्षेस्तिष्ठतः सतः ॥१६१६॥
रामे कोटिशिलायां तु तस्थुषि ध्यानतत्परे । प्रतिकूलानुकूलाश्चो-पसर्गा विहिताः सुरैः ॥१६१७॥
माघस्य शुद्धपक्षे तु द्वादश दिवसात्यये । पश्चिमे प्रहरे चन्द्रे भरणीमस्थितेऽन्यदा ॥१६१८॥
क्षपकश्रेणिकारूढः रामः क्षिप्तस्तमश्चयम् । अवाप केवलज्ञानं विश्वविश्वप्रकाशकम् ॥१६१९॥ युग्मम् ॥
तदाऽभ्येत्य सुरा दाश-रथेः केवलचिन्महः । चक्रुर्विविधवाद्यादि-सुन्दरं मुदिताशयाः ॥१६२०॥
रामस्य केवलज्ञानोत्पत्तिं ज्ञात्वाऽवधेश्चिदः । स्वर्गात् सीतेन्द्र आगत्य चक्रे चारु महोत्सवम् ॥१६२१॥
त्वयाऽद्य कर्मसङ्घातं क्षिप्त्वा तीव्रतपोऽसिना । प्राप्तं ज्ञानमिति स्तौति सीतेन्द्रो मुदिताशयः ॥१६२२॥
यतः- बहुदुक्खजालपुण्णं कसायगाहाउलं भयावत्तं । संजमजाणारूढो संसारमहोयही तिण्णो ॥१६२३॥
झाणाणिलाहएणं विविह तविंधणमहंतजलिएणं । णाणाणलेण राहव ! तुमए जम्माडवी दड्ढा ॥१६२४॥
"वैरग्गमुग्गरेणं विचुण्णिअं कम्मपंजरं सिग्घं । हणिओ अ मोहसत्तू उवसमसूलेण धीरेणं ॥१॥"
अथ सीतेन्द्र आकर्ण्य चतुर्थे नरके स्थितम् । लक्ष्मणं नरके तत्र गत्वा ददर्श नारकान् ॥१६२५॥
यतः-"नरएसु जाइं अइक्कक्खदुक्खाइं परतिक्खाइं । को वण्णेइ ताइं जीवंतो वासकोडीवि ॥१॥
कक्खडदाहं सामलि असिवणवेअरणिपहरणसएहिं । जा जा अण्णाओ पावंति नारया तं अहम्मफलं ॥२॥"
क्रियमाणां भृशं पीडां देवैः परमधार्मिकैः । लक्ष्मणस्य दशारथस्य सीतेन्द्रो दृष्टवान् स्वयम् ॥१६२६॥
ततो मिथो वितन्वानौ युद्धं लक्ष्मणरावणौ । सीतेन्द्रोऽवग् महाकष्टं सर्वं पापविजृम्भितम् ॥१६२७॥
यतः-"के इत्थ सामलीए कंटयपउराए विलइया संता । ओयरणारुहणाइं कारिज्जंतेऽत्थ बहुआइं ॥१॥
जंतेसु केवि छुडा पीलिज्जंते पुरा अकयपुन्ना । कंडूसु डद्धपाया उज्झंति अहोमुहा अन्ने ॥२॥
असिचक्कमोग्गरहता लोलंता कक्खडे धरणिवट्ठे । खज्जंति आरसंता चित्तयवयवग्घसीहेहिं ॥३॥
पाइज्जंति रडंता सुतत्ततवुतंबसण्णिहं कललं । असिपत्तवणगया विअ अन्ने छिज्जंति सत्थेहिं ॥४॥"
ततः सीताऽच्युताधीशो दध्यौ स्वयं कृताघतः । किं किं न लभते दुःखं जीवश्चतुर्गतौ गतः ? ॥१६२८॥
ततः सीताऽसुमानिन्द्रः समेत्य रामसन्निधौ । नत्वाऽप्राक्षीत् कदा मोक्षं गन्ता लक्ष्मणनायकः ॥१६२९॥
रामोऽवक् पुष्करे द्वीपे विदेहे पद्मपत्तने । लक्ष्मणप्राणभृच्चक्री पद्मनामा भविष्यति ॥१६३०॥
प्रपाल्य चक्रिपदवीं भूत्वा तीर्थङ्करः पुनः । छित्त्वाऽखिलतमो मोक्षं गन्ता पद्मजिनेश्वरः ॥१६३१॥
हनुमान्नन्दनं स्वीयं राज्ये न्यस्य विरागवान् । ललौ दीक्षां क्रमाच्छत्रु-क्षये मुक्तिमीयिवान् ॥१६३२।
विन्ध्याशैलवने प्राप्ता-विन्द्रजिन्मेघवाहनौ । आपतुः केवलज्ञानं तत्तीर्थं च तदाह्वया ॥१६३३॥
नर्मदायास्तटे यत्र कुम्भकर्णः शिवं ययौ । तत्तीर्थं कुम्भकर्णाह्वं बभूव भुवि विश्रुतम् ॥१६३४॥
राज्ये स्वं स्वं सुतं न्यस्य सोदरौ द्वौ लवाङ्कुशौ । लात्वा दीक्षां विदं प्राप्य सेत्स्यतः सिद्धपर्वते ॥१६३५॥
रामं केवलिनं नत्वा सीतेन्द्रो धर्मवासितः । अच्युते तविषे मघो जगामामलमानसः ॥१६३६॥

ततो दाशरथिर्ज्ञानी विहरन् वसुधातले । अयोध्यानगरो-पान्तवनेऽथ समवासरत् ॥१६३७॥
उद्यानपालकाद्राम-मागतं नगरान्तिके । श्रुत्वाङ्कुशलवौ (तौ तु) धर्मं श्रोतुं समागतौ ॥१६३८॥
ततो रामो ददौ धर्मो-पदेशमिति सादरम् । धर्म्मादेव शिवप्राप्ति-र्जायते देहिनां किल ॥१६३९॥
"आयुर्वायुचलं सुरेश्वरधनुर्लोलं चलं यौवनं, विद्युद्दण्डतुलं धनं गिरिनदीकल्लोलवच्चञ्चलम् ।
स्नेहं कुञ्जरकर्णतालचपलं देहं च रोगाकुलं, ज्ञात्वा भव्यजनाः सदा कुरुत भो ! धर्म्मं महानिश्चलम् ॥१॥
कर्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं, दानं देयं सुपात्रे प्रतिदिनममलं शीलनीयं च शीलम् ।
तप्यं शुद्धं विशालं तप इह महती भावना भावनीया, श्राद्धानामेष धर्म्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥
श्रुत्वेति रामवचनं तदाऽङ्कुशलवौ नृपौ । वैराग्यवासितस्वान्तौ दीक्षां गृहीतुमागताम् ॥१६४१॥
ततः स्वं स्वं सुतं राज्ये न्यस्याङ्कुशलवौ नृपौ । दीक्षां दाशरथेः पार्श्वे ललतुः शिवहेतवे ॥१६४२॥
सामाचारीं गुरुप्रोक्तां कुर्वाणौ तु लवाङ्कुशौ । पेठतुर्भूरिशास्त्राणि जिनोक्तानि कृतादरम् ॥१६४३॥
क्रमादवधिविज्ञानं सम्प्राप्यचाङ्कुशलवौ । भूरीन् भव्याङ्गिनो धर्म्मे बोधयतः स्म सन्ततम् ॥१६४४॥
अन्येद्यू राघवो ज्ञानी विहरन् मेदिनीतले । साधुकोटित्रयीयुक्तः सिद्धाद्रौ समुपागमत् ॥१६४५॥
तत्र राममुनिः शत्रु-ञ्जयतीर्थननेः फलम् । साधुभ्यः कथयामास सदेति मुक्तिहेतवे ॥१६४६॥
प्राणिभिर्यं समारूढै-र्लोकाग्रमतिदुर्लभम् । प्राप्यते स च सिद्धाद्रि-र्जयतात् सुचिरं भुवि ॥१६४७॥
बहुपापा अपि प्राण-भाजः शत्रुञ्जयाचले । तीव्रं तपो वितन्वानाः शिवं यास्यन्ति यान्ति च ॥१६४८॥
मुक्तेषु तीर्थनाथेषु गते ज्ञाने च केवले । लोकानां तारकः सिद्ध-शैलोऽयं कीर्त्तितो भवेत् ॥१६४९॥
तीर्थे शत्रुञ्जये ध्यायन् जिनं प्रपूजयन् भवी । अचिरेणैव कालेन लभते शिवसम्पदम् ॥१६५०॥
इत्यादि तीर्थमाहात्म्यं शृण्वन्तः सन्ततं मुदा । कोटित्रयमिता वाचं-यमाः प्रापुः श्रियं वराम् ॥१६५१॥
साधुकोटित्रयीयुक्तः क्षीणकर्म्माष्टकव्रजः । रामः शत्रुञ्जये तीर्थेऽलञ्चक्रे शिवपत्तनम् ॥१६५२॥
सम्प्राप्य केवलज्ञानं सिद्धशैलेऽङ्कुशलवौ । भूरिसाधुयुतौ मुक्तिं जग्मतुः पातकक्षयात् ॥१६५३॥
इत्यादि विस्तराद् राम-चरित्रं शिवदायकम् । ज्ञेयं पद्मचरित्रात्तु भव्यैः स्वहितमिच्छुभिः ॥१६५४॥
मुनिसुन्दरसूरीशां तपागच्छनभास्वताम् । शुभशीलाभिधः शिष्य-श्चकारैनं कथानकम् ॥१६५५॥

❀ इति रामनरेन्द्रकथा समाप्ता ❀

॥ अथ नारदमुक्तिगमनस्वरूपम् ॥

जहि रामाइतिकोडी इगनवई नारयाइमुणि लक्खा ।
जाया य सिद्धराया जयउ तयं पुंडरी तित्थं ॥२०॥

नारदानां मुनीनां सम्बन्धः प्रोच्यते—

श्रीवीरस्यार्हतो धर्म्म-घोषो धर्म्मयशाः पुनः । विनयौ द्वावजायेतां चारित्राराधनादरौ ॥१॥
अशोकपादपस्याधः स्थितौ तौ संयतौ तदा । स्वाध्याय कुरुतः स्मोच्चै-स्तच्छाया नाऽनमत् तदा ॥२॥

समेत्य स्वामिनः पार्श्वे पप्रच्छतुः प्रभुं च तौ । स्वामिन् ! अशोकवृक्षस्य छाया नमति नो कथम् ? ॥३॥
प्रभुः प्राह पुरि शौर्ये समुद्रविजयाभिधः । नृपोऽभवद्यदा न्यायी यादवानां शिरोमणिः ॥४॥
तापसस्य तदा यज्ञ-यशसः सोममित्रिका । पत्न्यासीत्तनयो यज्ञ-दत्तः सोमयशा स्नुषा ॥५॥
यज्ञदत्तस्य पुत्रोऽभू-न्नारदाह्वो मनोहरः । सोऽर्हद्धर्म्मरुचिर्जन्म यावदासील्लसत्तनुः ॥६॥
उञ्छवृत्तिं वितन्वाना यज्ञयशोमुखाः प्रगे । एकान्तरोपवासादि कुर्वते प्रतिवासरम् ॥७॥
अन्यदा नारदं बालं मुक्त्वाऽशोकतरोरधः । उञ्छवृत्त्यर्थमन्यत्र जग्मुर्यज्ञयशोमुखाः ॥८॥
इतो वैताढ्यभूमिध्रान् व्रजद्भिर्जृम्भिकामरैः । स्वनिकायाच्युतो बालो विज्ञातोऽवधितस्तदा ॥९॥
स्तम्भयित्वा तरोस्तस्य छायां ते निर्जरा ययुः । पश्चात्ते जृम्भिका आग-च्छन्तस्तं ददृशुस्तथा ॥१०॥
नीत्वा तं बालकं स्वीय-स्थाने ते जृम्भकामराः । प्रज्ञप्तिरोहिणीमुख्या विद्यास्तस्मै वितेनिरे ॥११॥
माणिक्यपादुकारूढो हेमकुण्डलिकाकरः । नभोऽध्वना व्रजन्नित्यं तीर्थानि वन्दते स च ॥१२॥
शीलव्रतधरो मुञ्ज-जटामण्डितमस्तकः । चारित्रिणो यतीन् भक्त्या वन्दते नारदोऽनिशम् ॥१३॥
अन्यदा नारदो द्वार-वत्यां यातो मुरारिणा । प्रणम्य भक्तितः पृष्टः किं शौचमुच्यते सता ? ॥१४॥
प्रत्युत्तरस्य दाने त्वसमर्थो नारदस्तदा । गत्वा पूर्वविदेहेष्व-नंसीत् सीमन्धरं जिनम् ॥१५॥
ततोऽवग् नारदः स्वामिन् ! सत्यं किं प्रोच्यते बुधैः । सीमन्धरो जिनोऽवोचत् सत्यं शौचं निगद्यते ॥१६॥
पुनः कृष्णेन शौचार्थे पृष्टे स्व नारदस्ततः । विदेहेष्वपरेऽप्राक्षी-न्नत्वा युगन्धरं जिनम् ॥१७॥
किं सत्यं प्रोच्यते स्वामी जगौ तपो निगद्यते । एवं बाहुर्जगाविन्द्र–निग्रहं नारदाग्रतः ॥१८॥
दयां सुबाहुराचष्ट श्रुत्वेतन्नारदोऽखिलम् । (द्वारवत्यां समागत्य) जगौ मुरद्विपः पुरः ॥१९॥
पुनः कृष्णेन शौचार्थे पृष्टे दध्यौ च नारदः । ऊहापोहपरो जाति–स्मृतिमान् प्रोक्तवानिति ॥२०॥
सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचं च पञ्चमम् ॥२१॥
भूत्वा प्रत्येकबुद्धः स शौचाध्ययनमद्भुतम् । नारदः प्रोक्तवान् कृष्ण-भूपबोधाय तत्क्षणम् ॥२२॥
नक्तं दिनं निमज्जन्तः कैवर्त्ताः किन्तु पाप्मनाः । शतशोऽपि तथा स्नाता न शुद्धा भावदूषिजाः ॥२३॥
चित्तं शमादिभिः शुद्धं वचनं सत्यभाषणैः । ब्रह्मचर्यादिभिः कायः शुद्धो योगी (जलं) विनाऽप्यहो ! ॥२४॥
मृदो भारसहस्रेण जलकुम्भशतेन च । न शुध्यन्ति दुराचाराः स्नातास्तीर्थशतैरपि ॥२५॥
आग्नेयं वारुणं ब्राह्म्यं वायव्यं दिव्यमेव च । पार्थिवं मानसं चैव स्नानं सप्तविधं स्मृतम् ॥२६॥
सप्त स्नानानि प्रोक्तानि स्वयमेव स्वयम्भुवा । द्रव्यभावविशुद्ध्यर्थं ऋषीणां ब्रह्मचारिणाम् ॥२७॥ इत्यादि
नारदो विहरन् सोऽपि भुवि प्रबोधयन् जनान् । शत्रुञ्जये ययौ भूरि-साधुसन्ततिसेवितः ॥२८॥
इतस्तदा रमापुर्यां भूपो मदनमण्डनः । सप्तकोटिमितश्राद्ध-युतस्तत्र समागमत् ॥२९॥
प्रपूज्य वृषभं देवं जिनानन्यानपि क्रमात् । स्वामिनः पादुकां पूज-यामास भूपतिर्मुदा ॥३०॥
ततः प्रदक्षिणां दत्त्वा राजादन्या महीपतिः । सघगुरुं वर्द्धयामास मुदा मुक्ताफलैः क्रमात् ॥३१॥
ततो नरपतिर्गत्वा नारदस्यान्तिके मुदा । नत्वा सिद्धाद्रिमाहात्म्य–मप्रोपीदिति सादरम् ॥३२॥
तावद् गर्जन्ति हत्यादि-पातकानीह सर्वतः । यावच्छत्रुञ्जयेत्याख्या श्रूयते न गुरोर्मुखात् ॥३३॥

न भेतव्यं न भेतव्यं पातकेभ्यः शरीरिभिः । श्रूयतामेकवेलं श्री-सिद्धक्षेत्रगिरिकथा ॥३४॥
वरमेकदिनं सिद्धि-क्षेत्रसर्वज्ञसेवनम् । न पुनस्तीर्थलक्षेषु भ्रमणं क्लेशभाजनम् ॥३५॥
पदे पदे विलीयन्ते भवकोटिभवान्यपि । पापानि पुण्डरीकाद्रे-र्यात्रां प्रति यियासताम् ॥३६॥
इति सिद्धाद्रिमाहात्म्यं शृण्वन्तो बहवो जनाः । प्रपन्नाः संयमं सम्यक् तदा नारदसन्निधौ ॥३७॥
नारदो दशभिर्लक्षैः सार्द्धं वाचंयमैर्वरैः । शत्रुञ्जये ययौ मुक्ति-नगर्यां मासि माधवे ॥३८॥
एवमष्टौ क्रमाद् भूरि-लक्षसाधुसमन्विताः । शत्रुञ्जये ययुर्मुक्ति-नगर्यां पातकक्षयात् ॥३९॥
एतेषां चरित्राणि शास्त्रेभ्यो ज्ञेयानि,—
यतः—"लक्षैरेकनवत्या तु मुनिभिः सह नारदाः । नवापि निर्वृतिं भेजु-स्तीर्थे शत्रुञ्जये क्रमात् ॥१॥"
उक्तं च—"एतस्यामवसर्प्पिण्या-मित्येवं नारदाः क्रमात् । लक्षैकनवतिः प्रापुः सिद्धिं शत्रुञ्जयाचले ॥१॥"

★ इति नारदमुक्तिगमनस्वरूपम् ★

॥ अथ नन्दिषेणसूरि-अजितशान्तिस्तव-मुक्तिगमनसम्बन्ध ॥

## नेमिवयणेण जत्ता-गएण जहिं नंदिसेणजइवइणा ।
## विहिओऽजियसंतिथओ जयउ तयं पुंडरी तित्थं ॥२१॥

श्रीनेमिनाथस्य वचनेन यात्रागतेन नन्दिषेणयतिपतिना-नन्दिषेणसूरिणा 'विहित' चक्रे 'अजि-शान्तिस्तवः'-द्वितीय-षोडशजिन 'स्तवः' स्तोत्रं यत्र सिद्धाचले तत्तीर्थं पुण्डरिकाभिधं जयताच्चिरम् ॥
श्री नेमीशान्तिकेऽन्येद्यु-र्नन्दिषेणमहीपतिः । धर्म्मं जीवदयामूलं श्रोतुं भावादुपागमत् ॥१॥
रम्यं रूपं करणपटुताऽऽरोग्यमायुर्विशालं, कान्ता रूपविजितरतयः सूनवो भक्तिमन्तः ।
षट् खण्डोर्वीतलपरिवृढत्वं यशः क्षीरशुभ्रं, सौभाग्यश्रीरिति फलमहो धर्म्मवृक्षस्य सर्वम् ॥२॥
चत्वारः प्रहरा यान्ति देहिनां गृहचेष्टितैः । तेषां पादे तदर्द्धे वा कर्त्तव्यो धर्म्मसंग्रहः ॥३॥
"दो चेव जिणवरेहिं जाइजरामरणविप्पमुक्केहिं । लोगम्मि पहा भणिया सुसमण सुसावओ वावि ॥१॥"
यात्रार्थं भोजनं येषां दानार्थं च धनार्जनं । धर्मार्थं जीवितं येषां ते नरा स्वर्गगामिनः ॥४॥
अनित्यं निखिलं विश्वं पुत्रपौत्रादिकं खलु । ज्ञात्वा राज्यं स्वपुत्राय नन्दिषेणनृपो ददौ ॥५॥
अष्टाह्निकामहः कृत्वा श्रीजिनेश्वरसद्मसु । नन्दिषेणनृपो दीक्षां जग्राहाऽनघमानसः ॥६॥
पठन् गुर्वन्तिके शास्त्रं नन्दि-षेणयतिः क्रमात् । सर्वशास्त्राब्धिपारीणो बभूवाऽमलबुद्धिमान् ॥७॥
ज्ञात्वा योग्यं तदा नन्दि-षेणं नेमिजिनेश्वरः । सूरीश्वरपदं वर्य-वासरे दत्तवान् किल ॥८॥
नन्दिषेणोऽन्यदा नेमि-पार्श्वेऽप्राक्षीत् कृताञ्जलिः । भगवन् ! क्व शिवप्राप्ति-र्भविष्यति ममोत्तमा ॥९॥
नेमिः प्राहाऽस्ति सिद्धाद्रिः पुण्यस्थानं तमोपहम् । तत्र तीर्थे शिवं यान्ति जग्मुर्यास्यन्ति मानवाः ॥१०॥
यतः-तेषां जन्मचरित्रं च जीवनं सार्थकं च ये । सिद्धक्षेत्राचलं यान्ति परेषां व्यर्थमेव तत् ॥११॥
चतुर्विंशतयोऽनन्ताः सिद्धाः सिद्धाचलेऽर्हताम् । सेत्स्यन्ति चैत्योद्धृतयस्तत् सङ्ख्यां वेत्ति केवली ॥१२॥

ऋषिहत्यादिभिः पापैर्भवकोटिकृतैरपि । मुच्यते दर्शनादस्य स्पर्शनात्तु किमुच्यते ? ॥१३॥
तत्र शत्रुञ्जये तीर्थे गतस्य तव संयत ! । भविष्यति शिवप्राप्ति-र्निःशेषकर्म्मणां क्षयात् ॥१४॥
श्रुत्वैतन्नेमिनो वाक्यं नन्दिषेणयतीश्वरः । भूरिसाधुयुतः सिद्ध-पर्वते समुपेयिवान् ॥१५॥
मुख्यसार्वालये मूल-नाथमादिजिनेश्वरम् । नत्वा स्तुत्वाऽन्यसर्वज्ञान् ननाम स च सूरिराट् ॥१६॥
जिनं श्रीअजितं सूरिः स्तवन् शान्तिजिनेशितुः । स्वपृष्ठे वीक्ष्य चित्ते नु ध्यातवानिति तत्क्षणात् ॥१७॥
पृष्ठिं मे ददतः शान्तेः पापं भवति निश्चितम् । अतःस्तौम्यऽजितं शान्तिं युगपद् द्वौ जिनाविति ॥१८॥
"अजियं जियसव्वभयं संतिं च पसंतसव्वगयपावं ।
जयगुरु संति गुणकरे दोवि जिणवरे पणिवयामि ॥१॥गाहा॥
ववगयमंगुलभावे तेहिं विउलतवनिम्मलसहावे ।
निरुवममहप्पभावे थोसामि सुदिट्ठसुभावे ॥२॥गाहा॥" इत्यादि गाथा ४०,
एवं श्रीनन्दिषेणस्या-चार्यस्य स्तवतः सतः । श्रीशान्तिमजितं सार्वौ युगपद् वरमावतः ॥१९॥
सन्मुखौ द्वौ जिनावासौ श्रीशान्त्यजितयोस्तदा । अभूतां त्वरितं प्राज्य-प्रभावौ विलसद्द्युती ॥२०॥युग्मम्॥
नन्दिषेणगुरुस्तत्रागतानां देहिनां पुरः । शत्रुञ्जयस्य माहात्म्यं जजल्पेति निरन्तरम् ॥२१॥
प्राणिभिर्यं समारूढै-र्लोकाग्रमतिदुर्लभम् । प्राप्यते स च तीर्थेशः शाश्वतोऽयं गिरिर्वरः ॥२२॥
अस्मिँस्तीर्थे महापापी चन्द्रसेननरेश्वरः । समेत्यार्चा प्रभोश्चक्रे तथा पुष्पैः सुगन्धिभिः ॥२३॥
यथाऽर्जितं तमः सर्वं नरकोत्पत्तिहेतुकम् । छित्त्वा प्राप्य गृहस्थोऽपि ज्ञानं मुक्तिं समीयिवान् ॥२४॥
कलापुर्यां नृपो भीम-नामा पापकरोऽपि हि । अत्र तीर्थे तपः कृत्वा सम्प्राप परमं पदम् ॥२५॥
गतेषु तीर्थनाथेषु मुक्तौ तीर्थे गतेऽर्हतः । लोकानां तारकः सोऽयं श्रवणात् कीर्तनादपि ॥२६॥
अत्रार्हतां कृता पूजा स्तुतिपुष्पाक्षतादिभिः । आसंसारं कृतं पापं प्राणिनां हि व्यपोहति ॥२७॥
इत्यादि बहुशो धर्म्मो-पदेशं तत्र शृण्वताम् । भविनामभवन्मुक्ति-सातं स्वर्गसुखं पुनः ॥२८॥
श्रीशान्तेः पुरतोऽन्येद्युर्मेघवाहनभूपतिः । ध्यानं कुर्वन् शिवं प्राप सर्वपापततिक्षयात् ॥२९॥
सहस्रैः सप्तभिर्वाचं-यमैः सच्छरणादरैः । सहानशनमादत्ते नन्दिषेणो गुरूत्तमः ॥३०॥
तदा तत्र महीपालाः समेत्य बहवो द्रुतम् । प्रभुं प्रपूज्य विदधुः सुरैरनशनोत्सवम् ॥३१॥
सर्वकर्म्मक्षयात् प्राप्य ज्ञानमादाग्नुत्तरम् । नन्दिषेणो ययौ मुक्तिं शान्तिसद्मान्तिके क्रमात् ॥३२॥
अन्येऽपि साधवः प्राप्य ज्ञानं केवलसंज्ञकम् । स्वस्वायुषः क्षये मुक्ति-मलञ्चकुः समीहिताः ॥३३॥

इति नन्दिषेणसूरि अजितशान्तिस्तवरचन-मुक्तिगमनसम्बन्धः

॥ अथ श्रीकृष्णचरिते नेमिनाथसम्बन्धगुम्फित-साम्बप्रद्युम्नप्रमुख-श्रीकृष्णनरकगमनस्वरूपम् ॥

**पज्जुन्न-संबपमुहा कुमरवरा सड्ढ-अट्ठ-कोडिजुआ ।**
**जत्थ सिवं संपत्ता जयउ तयं पुंडरी तित्थं ॥२२॥**

व्याख्या—प्रद्युम्नशाम्बप्रमुखकुमाराः सार्द्धाष्टकोटियुता यत्र श्रीशत्रुञ्जये 'शिवं' मुक्तिं 'सम्प्राप्ताः' गता—जग्मुर्जयतात् तत्तीर्थं शत्रुञ्जयाभिधम् —

पूर्वमादिजिनस्याभूत् सुतो बाहुबलिर्नृपः । तस्य सोमयशाः सूनुः सोमवज्जनहर्षदः ॥१॥
तद्वंशे येऽभवन् भूपाः सोमवंशा स्मृताश्च ते । सोमभूमीपतेः पुत्रः श्रेयांसोऽजनि भूपतिः ॥२॥
सार्वभूमः सुभूमश्च सुघोषो घोषवर्द्धनः । महानन्दी सुनन्दी च सर्वभद्रः शुभङ्करः ॥३॥
एवं क्रमादसङ्ख्येषु मुक्तिं स्वर्गं गतेषु च । चन्द्रकीर्तिरभूद्भूपः सोऽनपत्यो दिवं ययौ ॥४॥
कोऽस्य पट्टे महीपालः स्थाप्यते इति मन्त्रिषु । कुर्वाणेषु विचारं तु वाणीति गगनेऽभवत् ॥५॥
हरिवर्षाभिधात् क्षेत्राद् युगल्येको मनोहरः । अत्रैव मोक्ष्यते रोषात् वैराच्चैकेन नाकिना ॥६॥
अत्रान्तरे सुरः कश्चित् क्षेत्राच्च हरिवर्षतः । नीत्वा युगलिनं तत्र पुरे मुक्त्वा रहो ययौ ॥७॥
ततो व्योम्नि पुनर्जाता वाणीति तत्र तत्क्षणात् । एष स्वामी भवद्भाग्यै-रागतोऽत्रास्ति निश्चितम् ॥८॥
ततस्तैः सचिवैः राज्येऽभिषिक्तो युगली स तु । सेव्यते सर्वसामन्त-सेवकैर्भक्तिपूर्वकम् ॥९॥
हरिवर्षाभिधक्षेत्रा-त्तीर्थे श्रीशीतलेशितुः । तत्राभूद् युगली राजा हरिनामा मनोहरः ॥१०॥
उक्तं च-"सीअलजिणस्स तित्थे सुहुमो(सुमुहो) नामेण आसि महिपालो । कोसंबीनयरीए तत्थेव य वीरयकुविंदो
हरिऊण तस्स महिलं वणमालं नाम नरवई तत्थ । भुंजइ भोगसमिद्धिं रईए समं अणंगो व्व ॥२॥
अह अन्नया नरिंदो फासुयदाणं मुणिस्स दाऊण । असणिहओ उववन्नो महिलासहिओ य हरिवासे ॥३॥
कंतावियोगदुहिओ पोट्टिलमुणिस्स पायमूलम्मि । घेत्तूण य पव्वज्जं कालगओ सुरवरो जाओ ॥४॥
अवहिविसएण नाऊं देवो हरिवाससंभवं मिहुणं । अवहरिऊण य तुरियं चंपानयरम्मि आणेइ ॥५॥
हरिवाससमुप्पन्नो जेण य हरिऊण आणिओ इहयं । तेणं चिअ हरिराया विक्खाओ तिहुअणे जाओ ॥६"
हरिवंशोऽभवत्तस्माद् हरिभूपात् सुविश्रुतः । हरेः पुत्रोऽभवत् पृथ्वी पतिः प्रबलविक्रमः ॥११॥
ततो महाहरिराजाऽभवद् हिमहरिस्ततः । ततो वसुगिरिर्भूप-स्ततः सुरगिरिर्नृपः ॥१२॥
ततो मित्रगिरिर्भूप-स्ततोऽभूत् सुयशा नृपः । ततो रूपगिरिर्भूपस्ततो हंसगिरिर्नृपः ॥१३॥
एते त्रिखण्डभोक्तार एते सङ्घाधिपा नृपाः । हरेर्भूमिपतेर्वंशे जिनधर्म्मधुरन्धराः ॥१४॥
एवं क्रमादसङ्ख्याता हरिवंशेऽभवन्नृपाः । केचिज्जग्मुः शिवं केचित् स्वर्गलोकं व्रतग्रहात् ॥१५॥
इतो राजगृहे वर्ये हरिवंशे मनोहरे । सुमित्रोऽजनि भूपालः समानस्तेजसा रवेः ॥१६॥
पद्मादेव्यभिधा पत्नी शीलादिगुणशालिनी । धर्म्मं जिनोदितं शश्व-च्चकार हर्षपूरिता ॥१७॥
निशीथे प्राणतात् स्वर्गात् पुण्यवान् निर्जरो वरः । तस्या राज्याः सुखं गर्भेऽ-वततार शुभे क्षणे ॥१८॥
चतुर्दशमहास्वप्न-वीक्षणाद् नृपगेहिनी । हृष्टा पत्या समं जाता गर्भे तस्मिन् स्थिते तदा ॥१९॥
उच्चस्थाने तु सूर्यादि-मुख्यग्रहेषु शालिषु । स्थितेषु सुषुवे पुत्रं पद्मादेवी सुखस्थिता । २०॥
अत्रेन्द्रमहोत्सवादि मुक्तिगमनपर्यन्तं श्रीमुनिसुव्रतचरित्रं व्याख्येयं विस्तरभयान्नोक्तमत्र ।
मुनिसुव्रततीर्थेश-तीर्थे हरिकुलोद्भवः । सुदृढोऽजनि भूपालो जितप्रत्यर्थिभूपतिः ॥२१॥
तस्माद्वसुमहीपाल-स्ततो वसुध्वजो नृपः । वसुकेतुस्ततो रत्न-केतू रत्नध्वजस्ततः ॥२२॥

एवं चामङ्क्ष्वयभूपेषु जातेषु भुजशालिषु । हरिवंशेऽभवद्भूपो यदुनामा लसद्बलः ॥२३॥
यदोर्भूपस्य पुत्रोऽभूद् यादवोऽरिवनानलः । तस्याऽजनि सुतः सूरनामा सूरसमप्रभः ॥२४॥
सूरस्य नन्दनौ शौरि-सुवीरौ वरविक्रमौ । अभूतां हरिवंशे तु वैरिकुम्भिभिदाहरी ॥२५॥
सूरः सञ्जातवैराग्यः शौरिं राज्ये निजे न्यधात् । युवराजपदं दत्त्वा सुवीराय व्रतं ललौ ॥२६॥
शौरिर्दत्त्वा सुवीराय मथुराराज्यमञ्जसा । कुशार्त्तविषये शौर्याभिधं पुरं न्यवेशयत् ॥२७॥
शौरेस्त्वन्धकवृष्ण्याद्या बहवः सूनवोऽभवन् । सुवीरस्याऽभवन् पुत्रा भोजवृष्ण्यादयः पुनः ॥२८॥
वितीर्य मथुराराज्यं सुवीरो भोजवृष्णये । सुवीराह्वं पुरं सिन्धु-विषयेऽस्थापयद् वरम् ॥२९॥
शौरिरन्धकवृष्णिं तु न्यस्य राज्ये निजेऽन्यदा । सुप्रतिष्ठगुरोरन्ते दीक्षां लात्वा शिवं ययौ ॥३०॥
मथुरां रक्षतो न्यायाद् भोजवृष्णेर्महीपतेः । उग्रसेनाभिधः पुत्रो-ऽजनिष्टोद्धतविक्रमः ॥३१॥
शौर्याभिधं पुरं पातो-ऽन्धकवृष्णेर्नरेशितुः । सुभद्रा गेहिनी पुत्रान् दशाऽसूत यथाक्रमम् ॥३२॥
समुद्रविजयोऽक्षोभ्यः स्तिमितः सागरोऽपि च । हिमवानचलश्चैव धरणः पूरणस्तथा ॥३३॥
अभिचन्द्रो वसुदेवो दशार्हाख्यो दशापि ते । अन्धकवृष्णिभूपस्य दशैते नन्दनाः स्मृताः ॥३४॥ युग्मम् ॥
वर्यशीला महीपाला अमी सर्वे नृपाङ्गजाः । प्रीतियुक्ता लसच्छास्त्राः पितुर्भक्तिं व्यधुस्तराम् ॥३५॥
दशार्हानां दशानां द्वे कुन्ती माद्र्यभिधे वरे । सहोदर्यौ मिथः प्रीति-परे जाते शुभाशये ॥३६॥
समुद्रविजयं ज्येष्ठं पुत्रमन्धकवृष्णिराट् । स्वराज्ये न्यस्य चारित्रं लात्वा प्राप शिवश्रियम् ॥३७॥
समुद्रविजये भूपे न्यायात् पालयति क्षितिम् । सुखिनो(नी) जनता जाता रामभूमीपतेरिव ॥३८॥
स्वयं जिनेश्वराज्ञां तु शीर्षे यो वहते सदा । दत्ते दानं सुपात्रेभ्यो जिनं पूजयति ध्रुवम् ॥३९॥
स एव विद्विषोऽशेषान् समुद्रविजयो नृपः । आज्ञां स्वां ग्राहयामास लीलया समराङ्गणे ॥४०॥
तस्यासीद् गेहिनी शील-गुणमाणिक्यरोहणः । शिवाभिधा मुकुन्दस्य श्रीरिवेशस्य पार्वती ॥४१॥
सुवत्सला परीवारे भक्ता देवगुरावपि । सुकृपा सूक्ष्मजीवेऽपि निःकृपा पापहिंसने ॥४२॥
परस्परं सदा प्रीति-परौ धर्मपरायणौ । शिवा-समुद्रविजयौ समयं निन्यतुः सुखम् ॥४३॥
मथुरायामितो भोज-वृष्णौ प्रव्रजिते सति । उग्रसेनोऽभवद्राजा प्रिया तस्य च धारिणी ॥४४॥
प्राग्भवोद्भववैरेण कश्चित् तापसपुङ्गवः । मृत्वाऽभूद्धारिणीकुक्षौ वासरे ह्यशुभेऽन्यदा ॥४५॥
तस्यास्तदाऽभवद् भर्तृ-पलभक्षणदोहदः । तेन ज्ञातं तया पुत्रो भावी पत्युर्मृतिप्रदः ॥४६॥
जातमात्रं सुतं क्षिप्त्वा कांस्यपेटां नरै रहः । यमुनायाः प्रवाहेऽम्भो मोचयामास वेगतः ॥४७॥
यान्ती पेटा गता सूर्य-पुरे यावत् प्रवाहतः । तावद्दासाद्रिता तत्र वणिजा केनचित्तदा ॥४८॥
तामुद्घाट्य शिशुं तत्र स्थितं प्राप्य वणिग्वरः । कांस्यपेटान्तरात्प्राप्तात् कंस इत्यभिधां ददौ ॥४९॥
वर्द्धमानः क्रमात् कंसो-ऽकुट्टयत् परबालकान् । ततो दिने दिने तस्य रावो याति वणिग्गृहे ॥५०॥
विज्ञाय स्वकुशलायोग्यं समुद्रविजयाय तम् । दत्त्वा वणिक् ततस्तत्र कंसो वृद्धिसमीयिवान् ॥५१॥
क्रमात् कंसोऽभवद् गाढं वसुदेवस्य वल्लभः । वसुदेवो ददाति स्म सन्मानं स्वन्नदानतः ॥५२॥
इतो राजगृहे न्यायी जरासन्धो महीपतिः । अभूत् त्रिखण्डभूभर्त्ता प्रतिविष्णुर्बली क्रमात् ॥५३॥

जरासन्धोऽन्यदा कंस-युतं यदुवरं वसुम् । जेतुं सिंहरथं सद्यो-ऽचालयत् सुबलं रिपुम् ॥५४॥
युद्धे सिंहरथो वैरी हतः कंसेन भूभुजा । ततस्तत्र जरासन्ध-भूपस्याऽऽज्ञा प्रवर्त्तिता ॥५५॥
वसुदेवः समायातः पश्चात् कंसाय भूभुजे । अदापयज् जरासन्ध-पार्श्वाज्जीवयशोऽङ्गजाम् ॥५६॥
पश्चाद्भवोद्भवाद् वैराद् जरासन्धसमीपतः । विवाहानन्तरं कंसो मथुराराज्यमाप्तवान् ॥५७॥
उग्रसेनं नृपं तातं स्वं मत्वा कस्यचिदाननात् । कंसश्चिक्षेप कारायां पूर्ववैरनियोगतः ॥५८॥
भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणा क्षणध्वंसिनः, स्तोकान्येव दिनानि यौवनसुखं स्फूर्तिः क्रियास्वस्थिरा ।
तत् संसारमसारमेव निखिलं बुद्ध्वाऽऽत्मपापक्षये, लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥५९॥
पितृदुःखाद् गुरूपान्ते-ऽतिमुक्तस्तत्तनूभवः । प्रव्रज्यामाददे मुक्ति-सातसन्ततिदायिनीम् ॥६०॥
जरासन्धनृपं कंसो दशार्हा अन्धवृष्णिजाः । सेवमानास्तदा स्वं स्वं राज्यं यान्ति निरन्तरम् ॥६१॥
यतः—"राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्त्तन्ते यथा राजा तथा प्रजा ॥६२॥
इतः सूर्यपुरे रूपं वसुदेवस्य सुन्दरम् । पश्यन्त्यो नाबला गेहे कृत्यानि कुर्वते मनाग् ॥६३॥
समुद्रविजयोपान्ते स्वस्वपत्नीविचेष्टिते । पौरैः प्रोक्ते नृपः प्राह सर्वं नयं भविष्यति ॥६४॥
समुद्रविजयः प्राह वसो-र्भ्रातुः पुरोऽन्यदा । वत्स ! ते भ्रमतः पुर्यां क्लमो देहेऽभिजायते ॥६५॥
अतस्त्वया निजावासात् प्रतोल्याश्च बहिः क्वचित् । न यातव्यं विलोक्येत यदूयत्ते तच्च लास्यताम् । ६६॥
भ्रात्रोक्तं वसुदेवोऽथ प्रतिपद्य स्थितो गृहे । यद्यद् विलोकयते खाद्यं तत्तदाऽऽनयतेऽनुगैः ॥६७॥
श्रीखण्डरससम्पूर्णं रूप्यकच्चोलकं वरम् । दासीहस्ताच्छित्वा प्रैषीत् पत्युरन्ते तु तापहृत् ।६८॥
दासी हस्तात्तदाऽऽकृष्य कच्चोलं वसुवासवः । चान्दनेन रसेन स्वं देहं लिलिम्प वान्यतः ॥६९॥
तदा दासी जगौ कुर्वन्नकृत्यं चेदृशं भवान् । न्यायेन गुप्तिवद् गेहे भ्रात्राऽस्यापि किलाऽधुना ॥७०॥
वसुदेवस्तदा दध्यौ यद्येवं सोदरो व्यधात् । तदा मयाऽत्र न स्थेयं गन्तव्यं दूरतः क्वचित् ॥७१॥
यदि दूरं व्रजन्तं मां ज्ञास्यते च सहोदरः । तदा यातुं न दास्येत भ्रात्रा मम मनागपि ॥७२॥
तेन छन्नमहं यामी-ति ध्यात्वा वसुनिर्जरः । पुर्या बहिश्चितां चक्रे रात्रौ रहसि दारुभिः ॥७३॥
तन्मध्ये मृतकं क्षिप्त्वा दत्त्वा वह्निं च गोपुरे । अक्षराणि लिलेखेति वसुः स्वाङ्गासृजा तदा ॥७४॥
वसुदेवश्चितामध्ये प्रविश्य मृतिमीयिवान् । तेनान्यत्र न कुत्रापि विलोक्योऽहं सहोदरः ॥७५॥
पत्तने च पुरे ग्रामे वैताढ्ये विपुले गिरौ । खग-भूमिधवादीनां कन्यकानां सहस्रशः ॥७६॥
स्वकलादर्शनात् रूप-सौभाग्याभ्यां वसुः सुरः । तदीयमातृपितृभ्यां दत्ताश्च परिणीतवान् ॥७७॥ युग्मम् ॥
रोहणक्षोणिभृत् पुत्र्या रोहिण्याः सत् स्वयंवरे । भूपानाकारयामास भूरीनुद्वाहहेतवे ॥७८॥
भूपःसु भूधवेष्वेव वाञ्छत्सु रोहिणीं तदा । परिणीयामिलद् भ्रातु-र्ज्येष्ठस्य वसुनिर्जरः ॥७९॥
हलभृज्जन्मकथकान् सुस्वप्नांश्चतुरो निशि । निरीक्ष्याऽसावि रोहिण्या शोभने वासरेऽन्यदा ॥८०॥
जन्मोत्सवं पिता कृत्वा सूनोः सज्जनसाक्षिकम् । बलभद्रेति नामाऽदात् जनाल्हादकरं मुदा ॥८१॥
कंसोपरोधतोऽन्येद्यु-र्देवकन्दमापनन्दिनीम् । देवकीं वसुगीर्वाणः परिणिन्ये सदुत्सवम् ॥८२॥
तस्मिन् क्षणे जरासन्ध-पुत्री कंसस्य गेहिनी । मद्यं जीवयशाः पीत्वा ग्रहिलाऽभूत् सखीयुता ॥८३॥

यतः—"मद्यपानरसे मग्नो नग्नः स्वपिति चत्वरे । गूढं च स्वमभिप्रायं प्रकाशयति लीलया ॥१॥"
वारुणीपानतो यान्ति कान्तिः कीर्त्तिः धृतिः श्रियः । विचित्राश्चित्ररचना विलुठत्कज्जलादिव ॥८४॥
तत्र भिक्षाकृते स्वीयं देवरं चातिमुक्तकम् । आगतं वीक्ष्य कंसस्य पत्नी जीवयशा जगौ ॥८५॥
अस्मिन् क्षणे वरं कान्तानुज ! त्वमतिमुक्तक ! । आगतोऽसि मया सार्द्धं मद्यं पिव रमस्व च ॥८६॥
जल्पन्त्येति तया कण्ठैः श्लिष्टः कंसाऽनुजो जगौ । देवक्याः सप्तमो गर्भो हन्ता ते तात-कान्तयोः ॥८७॥
आकर्ण्यैतद् वचो जीवयशा गतमदा क्षणात् । पत्यु रहो मुनिप्रोक्तं कंसस्य पुरतो जगौ ॥८८॥
मृत्युभीतेन कंसेन प्रीत्यै–वानकदुन्दुभिः । अर्थितो देवकीगर्भान् जल्पन्नेवं कृपास्वरम् ॥८९॥
स्वप्ने मेघसुरः कश्चित् प्राहेति कंस ! चेद्यदि । देवक्याः सप्तगर्भास्त्वं वर्द्धिष्यसि गृहे रहः ॥९०॥
तदा ते जीवितं भावि चिरं नो चेन्मरिष्यसि । अनुमेने वचस्तच्च वसुदेवस्तदादरात् ॥९१॥
देवक्या जनितं गर्भं कंसो नीत्वा रहस्तदा । हन्ति निःकरुणं स्फार–शिलायामुपरि स्फुटम् ॥९२॥
नैगमेषी तदाऽभ्येत्य रहोवृत्त्या तमर्भकम् । नीत्वाऽदात् सुलसाश्राद्ध्यै कंसाय तत्सुतां पुनः ॥९३॥
मृतं वसुसुतं गत्वा स्फालयित्वा दृढाश्मनि । न्यक्षिपद् धरापीठे कंसभूपो रहोऽन्यदा ॥९४॥
एवं षडपि तत्पुत्रान् सुलसाश्राद्ध्यै सुरो ददौ । सुलसाया सुताः पञ्च मृताः कंसाय चार्प्पयत् ॥९५॥
कंसोऽप्यास्फालयन् स्फारः पाषाणोपरि निर्दयम् । अहो ! निर्दयता पुंसां विद्यते दुःखदायिनी ॥९६॥
नाम्नाऽनीकयशोऽनन्त–सेनावजितसेनकः । निहतारिर्देवयशा शत्रुसेनोऽभवत् क्रमात् ॥९७॥
सुलसाऽपालयत् पुत्रान् देवक्याः षडपि स्वयम् । यथा यथाऽभवन् देव–कुमाराभाः स्वरूपतः ॥९८॥
अन्येद्युर्देवकी सिंह-सूर्याग्निकुञ्जरध्वजान् । विमानपद्मसरसी निशीथे सप्त चैक्षत ॥९९॥
सम्प्राप्तसमये प्राप्त-दोहदा देवकी क्रमात् । नभःसिताऽष्टमीरात्रौ प्रासूत तनयं वरम् ॥१००॥
शुभकर्म्मोदयात्तस्य शिशोः कंसानुयायिनाम् । नियुक्तानां ददौ निद्रां बालकाश्रितदेवता ॥१०१॥
नीत्वा शिशुं करे दुन्दु-र्मोक्तुं तु गोकुले यदा । चचालावक् तदा कारा-गृहस्थ उग्रसेनकः ॥१०२॥
कोऽधुना मध्यरात्रौ तु गच्छति त्वरितं रहः । तदाऽऽकाशेऽभवद्वाणी दिव्येति प्रकटाक्षरम् ॥१०३॥
वर्द्धमानो शिशुर्ह्येष कारागृहादितः किल । कर्षयित्वा भवन्तं तु सुखिनं प्राक् करिष्यति ॥१०४॥
नन्दपत्न्या यशोदाया दत्त्वा पुत्रं निजं तदा । गोकुलात्तत्सुतां दुन्दुः स्वीयगेहे समानयत् ॥१०५॥
अथ कंसानुगा बुद्धा-स्तामादाय सुतां तदा । कंसायार्प्पयन् दध्यौ ततः कंसो हृदि त्विति ॥१०६॥
हनिष्यति कथं ह्येषा बाला मां बलिनं नृपम् । मत्वेति छिन्ननासां तां कृत्वा कंसोऽमुचत्तदा ॥१०७॥
कंसोऽथ ध्यातवान् साधो-र्वाग् मया विहिताऽन्यथा । यतो मया हता गर्भाः सप्तापि देवकीभवाः ॥१०८॥
एवं छलात् तदा गत्वा गोकुले देवकी मुदा । स्तन्यपानादिना पुत्रं मोदयामास चेतसि ॥१०९॥
कृष्णांगत्वाद् ददौ नाम कृष्णेति नन्दगोकुली । शकुनिं पूतनां कृष्णो-ऽवधीदादौ बलादपि ॥११०॥
ततो बिभेद शकटं पादपौ यमलार्जुनौ । बभञ्ज बलतः कृष्णो मातुर्मोदं ददौ ततः ॥१११॥
कृष्णरक्षाकृते रामं दुन्दुस्तत्रामुचत्तदा । रेमाते तौ दशधनु-र्देहौ परस्परं सदा ॥११२॥
इतः सूर्यपुरे वर्ये समुद्रविजयप्रिया । चतुर्दश महास्वप्नान् शिवाऽपश्यन्निशान्तरे ॥११३॥

"गयवसहसीहदामससिदिणयरं झयं कुम्भं । पउमसरसागर-विमाण-भवण-रयणुच्चय सिहिं च ॥११४॥"
तदैव कार्त्तिके कृष्णे द्वादश्यां त्वाष्ट्रगे विधौ । अवातरत् शिवाकुक्षौ च्युत्वाऽपराजितात् प्रभुः ॥११५॥
नभसि श्वेतपञ्चम्यां निशीथे त्वाष्ट्रगे विधौ । शिवाऽसूत सुतं कृष्ण-देहं सच्छङ्खलाञ्छनम् ॥११६॥
षट्पञ्चाशद्दिग्कुमार्यः स्वस्थानादेत्य तत्र च । चक्रुर्निजं निजं कृत्यं वैयावृत्त्यादिकं प्रभोः ॥११७॥
स्वस्वस्थानात् ततोऽभ्येत्य चतुःषष्टिश्च वासवाः । मेरुशीर्षे व्यधुर्जन्मो-त्सवं तस्य जिनेशितुः ॥११८॥
"मेरु-अह-उड्ढलोआ चउदिसिरुयगाउ अट्ठ पत्तेय । चउविदिसिमज्झरुयगाउ पइंति छप्पन्न दिग्कुमरी ॥"
गतासु दिक्कुमारीषु कृत्वा कार्यं निजं निजम् । इन्द्र इन्द्रयुतो जन्मोत्सवं मेरौ व्यधात् प्रभोः ॥१२०॥
तासु दिक्कुमारीषु कृत्वा-गतासु शक्रः सर्वेन्द्रसहितोऽभ्येत्य जन्मोत्सवं प्रभोः करोति स्म ।

इन्द्रा १० देवलोकात् व्यन्तरेन्द्रा ३२ भवनेन्द्रा २० द्वौ चन्द्रसूर्यौ एवं शक्राः ॥

प्रातः पिता व्यधाज्जन्मो-त्सवं वन्दिविमोचनात् । अरिष्टनेमिरित्याह्वा-मदात् सज्जनसाक्षिकम् ॥१२२॥
वर्द्धमानो जिनोऽरिष्ट-नेमिर्निर्जरसेवितः । मातापित्रोरदान्मोदं स्वपराक्रमदर्शनात् ॥१२३॥
समेत्य स्वर्गतः शक्रो नित्यं श्रीनेमिनः प्रभोः । सेवां वितनुते भूरि-देवनिर्जरसंयुतः ॥१२४॥
नैमित्तिकमितोऽप्राक्षीत् कंसो मे स्यान्मृतिः कुतः । नैमित्तिको जगौ केशी मेषो हयः खरो रिपुः ॥१२५॥
पूतना वृषभोऽरिष्टो दुर्दमाः दुष्टमानसाः । हनिष्यतेऽथ येनैते स ते हन्ता भविष्यति ॥१२६॥
आरोपयिष्यति यः शार्ङ्गं धनुर्गुणं स्वलीलया । वरिष्यति च यः सत्य-भामां स त्वां हनिष्यति ॥१२७॥
अथ केशि-हयारिष्ट-मुख्यान् नैमित्तिकोदितान् । कृष्णेन निहतान् ज्ञात्वा कंसोऽभूदाकुलो हृदि ॥१२८॥
कंसो ज्ञातुमरिं शार्ङ्गं धनुः पूजापुरस्सरम् । सत्यभामां निजां जामिं धनुरग्रे न्यविविशद् ॥१२९॥
कंसोऽवग् य इमं चापं गुणे चारोपयिष्यति । तस्मै दास्याम्यहं सत्य-भामां जामिं सदुत्सवम् ॥१३०॥
कंसेनाऽऽकारिता भूपा भूरिशस्तत्र मण्डपे । आययुर्वरितुं सत्य-भामां स्वस्वपुरात्तदा ॥१३१॥
तत्र कम्रमयनाद्दृष्टि-र्वसुदेवसुतो बली । रथारूढोऽचलद्वीर-भूपेषु मिलितेष्वथ ॥१३२॥
रात्रौ स गोकुले सुप्तः कृष्णं सहायिनं प्रगे । कृत्वा विनिर्ययौ यातुं मथुरायां ततस्तदा ॥१३३॥
रथस्खलनहेतुं द्रुं रथादुत्तीर्य-माधवः । द्रुतमुन्मूलयामास तदा कमलनालवत् ॥१३४॥
उपविश्य रथे कृष्णं प्रीत्यानाधृष्टिरञ्जसा । समायौ शार्ङ्गकोदण्ड-रोचिष्टौ समुपाययौ ॥१३५॥
गृह्णन् चापमनाधृष्टि-रस्खलद् यदा तदा । जनोऽहासीत् समं सत्य-भामा लज्जामुपाययौ ॥१३६॥
तदा स कुपितः कृष्णोऽधिज्यं शार्ङ्गं विधाय द्राग् । कृत्वा करे टणत्कारं चक्रे तथा स लीलया ॥१३७॥
यथा कटाक्षकुसुमैः सत्य-भामाऽतिहर्षिता । अपूजयद् भुजायुग्मं कृष्णस्य देवक्त्तदा ॥१३८॥
कंसाहूतास्तदाऽनेके भूपा एयुः स्वदेशतः । मण्डिते मल्लयुद्धे तु मल्लयुद्धदिदृक्षया ॥१३९॥
कृष्णोऽपि कौतुकी सार्द्धं श्रीरामेण व्रजन् पथि । कालियाहिं जघानाशु यमुनायां हृदे खलु ॥१४०॥
कृष्णोऽवधीद् गजं पद्मो-त्तरं रामश्च चम्पकम् । ज्ञातमेतच्च कंसेन ज्ञातौ शत्रू ततः स्वकौ ॥१४१॥ युग्मम्॥
मल्लयुद्धाङ्गणे मल्लौ चाणूर-मुष्टिकाभिधौ । भुजास्फोटं वितन्वाना-वागतौ कुञ्जराविव ॥१४२॥
राम-कृष्णौ कुमारौ तु कुर्वाणौ केलिमादरात् । तत्रायातौ वितन्वानौ कौतुकं भूभुजामपि ॥१४३॥

चिरं तत्र वितन्वानौ मल्लयुद्धं बलाऽच्युतौ । समुद्रविजयक्ष्माप-मुख्ये भूपे समागते ॥१४४॥
मल्लाविव भुजास्फोट-परौ सिंहरवायुतौ । विराजेतांतरां तौ तु यमविग्रहसोदरौ । १४५॥
चाणूरं हतवान् कृष्णः सौमित्रो मुष्टिकं यदा । मृत्युभीतस्तदा कंसश्चकम्पे हृदये दृढम् ॥१४६॥
अथ साहसमालम्ब्य भुजास्फोटं दृढं तदा । कुर्वाणः कंस आचष्ट बल-कृष्णौ प्रति स्फुटम् ॥१४७॥
रे रे गोपौ गवां दुग्धं पीत्वा पीनतनू स्फुटम् । युवां स्वमरणं नैव पश्यतं मम पार्श्वतः ॥१४८॥
कृष्णः प्रोवाच भो कंस ! स्वोत्कर्षं यत् प्रजल्पसि । लभिष्यसि फलं तस्य गमनाद्यमसद्मनः ॥१४९॥
ततः कंसः समुत्थाय हन्तुं कृष्णमधावत । तदा कृष्णोऽपि तं हन्तु-मुत्थितः स्फोरयन्भुजाम् ॥१५०॥
मल्लक्रीडां मिथः कृष्ण-कंसयोः कुर्वतोस्तदा । देवा अपि समायाता द्रष्टुं व्योम्नि क्षितौ नृपाः ॥१५१॥
तथा चण्डबलः कृष्णः कंसं जघान मर्मणि । यथा मुक्तौ मुनिः कंसो यमसद्म समीयिवान् ॥१५२॥
कंसे मृतेऽथ कारोक्नो-मध्यान्निःकाश्य तत्क्षणात् । उग्रसेननृपं राज्ये समुद्रविजयो व्यधात् ॥१५३॥
रामकृष्णाङ्गजौ लात्वा समुद्रविजयादयः । आययुः स्वपुरे सूर्य-पुरे सूत्सवपूर्वकम् ॥१५४॥
इतो जीवयशा रोदं रोदं पत्यौ मृते चिरम् । जरासन्धनृपोपान्ते गता प्राहेति गद्गदम् ॥१५५॥
वसुदेवसुताभ्यां ते जामाता दुर्दमोऽपि हि । गमितो यमगेहे तु मल्लयुद्धविधानतः ॥१५६॥
ज्ञात्वा कंसवधोदन्तं जरासन्धो जगौ सुताम् । वत्स ! मा त्वं रुदस्तेऽरीन् रोदयिष्याम्यहं द्रुतम् ॥१५७॥
जरासन्धस्ततो भूपं सोमाह्वं स्वाङ्गरक्षकम् । प्रणिधायानुशिष्येति समुद्रविजयान्तिके ॥१५८॥
समुद्रं सोमको नत्वा-ऽऽवष्टेति भूपतेः पुरः । रामकृष्णौ कुलाङ्गारौ जरासन्धोऽथ याचते ॥१५९॥
एतौ कंसस्य हन्तारौ रामकृष्णौ तवाङ्गजौ । अतो वध्याविमौ नूनं शूलादिक्षेपणैः स्फुटम् ॥१६०॥
स्वकीयकुलरक्षायै बलकृष्णौ बलोत्कटौ । जरासन्धान्तिके प्रेष्य कुरु राज्यं चिरं नृप ! ॥१६१॥
आद्यो दशार्ह आचष्ट भोः सोमक ! पतिस्तव । अर्थयन् रामकृष्णौ तु बालकौ लज्जते न हि ॥१६२॥
क्रीडयाऽऽभ्यां हतः कंसः कुर्वन् मल्लरणक्रियाम् । तयोरूर्ध्वं कथं कोपः क्रियते स्वामिना तव ॥१६३॥
समुद्रविजयप्रोक्तं पश्चादागत्य सोमकः । यावज्जगौ जरासन्ध-स्तावत् क्रुद्धोऽभवद् भृशम् ॥१६४॥
इतः स्वनन्दिनीं सत्य-भामां पूर्वानुरागिणीम् । उग्रसेनो ददौ प्रीत्या कृष्णाय लसदुत्सवम् ॥१६५॥
मेलयित्वा निजान् सर्वान् यादवान् यादवेश्वरः । स्वभद्रहेतवेऽप्राक्षीत् क्रोष्टिकं कुशलं तदा ॥१६६॥
क्रोष्टिकोऽवग् भवत्पुत्रौ रामकृष्णौ महाभुजौ । त्रिखण्डभरताधीशौ भविष्यतः क्रमादिमौ ॥१६७॥
एष नेमिकुमारस्तु भविष्यति सुभाग्यवान् । तेनेदं स्थानकं त्याज्यं भवद्भिर्हितमिच्छुभिः ॥१६८॥
अधुना तु जरासन्धाद् भवतामिह तिष्ठताम् । मया विलोक्यते विघ्नं युक्तं तेनात्र न स्थितिः ॥१६९॥
समुद्रोऽवग् गमिष्यामो वयं कस्यां दिशि द्रुतम् । जगाद क्रोष्टिको यातं यूयं च वारुणीदिशि ॥१७०॥
सत्यभामा सुतद्वन्द्वं यत्र सूते स्म वासरे । तत्र निवेश्य नगरं स्थातव्यं सुखहेतवे ॥१७१॥
युष्माकं तिष्ठतां तत्र भविष्यति रिपुक्षयः । वर्द्धिष्यति कुटुम्बादि सर्वं राज्यं च सर्वतः ॥१७२॥
युष्माकं गच्छतां मार्गे कुलाधिष्ठातृदेवता । भवन्तीरापदः सर्वा हनिष्यति न संशयः ॥१७३॥
षट्पञ्चाशत् कुलैः कोट्या यादवानां सहाऽन्यदा । पश्चिमां दिशमुद्दिश्या-ऽचालीद्यादवभूपतिः ।

देशानुल्लङ्घयन् भूरीन् मध्ये विन्ध्याचले क्रमात् । समुद्रविजयस्तस्थौ विश्रामार्थं कुटुम्बयुग् ॥१७४॥
इतः समुद्रविजय-प्रोक्तं सोमकवक्त्रतः । श्रुत्वा हन्तुं रिपूँस्तांश्च जरासन्धोऽचलत् क्षणात् ॥१७५॥
कालकोऽथ सुतोऽभ्येत्य नत्वा तातं जगावदः । निहन्तुं कीटिकां स्वामि-न्नुद्यमस्ते न युज्यते ॥१७६॥
त्वं तिष्ठाऽत्र रिपून् हन्तु-मादेशं देहि मेऽधुना । स्वर्गमर्त्य-बिलादिस्थान् हनिष्याम्येकहेलया ।.१७७॥
हत्वा कंसं नृपं यच्च मेलितं पातकं किल । प्रायश्चित्तं प्रदास्यामि तस्य तेषां द्विषामहम् ॥१७८॥
यतः–अत्युग्रपुण्य-पापाना-मिहैव फलमाप्यते । त्रिभिर्वर्षैस्त्रिभिर्मासै-स्त्रिभिः पक्षैस्त्रिभिर्दिनैः ॥१७९॥
जठराग्निः पचत्यन्नं फलं कालेन पच्यते । कुमन्त्रैः पच्यते राजा पापी पापेन पच्यते ॥१८०॥
राज्ञां सप्तशतीयुक्तो भूरीभाश्वभटान्वितः । कालकः प्राप्य ताताज्ञां हन्तुं तान् त्रिद्विषोऽचलत् ।१८१।
जरासन्धसुते काल-कुमारे समुपेयुषि । कृतान्त इव रामस्य कृष्णस्य रक्षका सुरी ॥१८२॥
एकद्वाराश्रि(चि)ता वह्नी-र्ज्वलन्ती वह्निना भृशं । कृत्वोपान्ते स्थिता वृद्ध-रूपा रोति कृपास्वरम्॥१८३युग्मम्
कालस्तत्रागतोऽप्राक्षीद् भो रोदिषि किं त्वकम् ? । सा प्राहाऽस्ति जरासन्धो नृपस्त्रिखण्डभूमिभुग् ॥१८४॥
जरासन्धनृपाद् भीताः समुद्रविजयादयः । यादवा बलकृष्णाभ्यां युक्ता नेशुः स्वदेशतः ॥१८५॥
मार्गे ते यादवाः सर्वे चलन्तस्त्वरितं क्रमात् । अत्रायाता नृणामास्यात् शुश्रुवुस्त्विति सादरम् ॥१८६॥
हन्तव्याः यादवाः सर्वे यत्र तत्र गता मया । प्रतिज्ञामिति कृत्वा स कालकः सबलोऽचलत् । १८७॥
श्रुत्वेति यादवाः सर्वे वारिता मयका बहु । चितास्त्वाशु प्रविष्टास्ते मृत्युहेतोः कृतत्वराः ॥१८८॥
तेषां वियोगतोऽत्राहं दुःखिता मानसे भृशम् । रोदिम्युच्चैःस्वरं नाभू-द्रक्षिता कोऽपि निर्जरः ॥१८९॥
स्वां प्रतिज्ञां स्मरन् काल-कुमारो यादवांस्तदा । कर्पितुं ज्वलने सद्यः प्रविष्टो मूढमानसः ॥१९०॥
अपरे बहवः काल-कुमारस्यानुगास्तदा । प्रविष्टाः स्वामिनः पृष्ठे स्वामिभक्ताः कृतत्वराः ॥१९१॥
यतः-'क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते । अनुकूलः शुचिर्दक्षः स्वामिन्! भृत्योऽपि दुर्लभः ॥१९२॥'
प्रविश्य यादवा वह्नौ मृता विन्ध्याचलान्तिके । तत्पृष्ठे कालको गत्वा मरणं समुपागमत् । १९३॥
आकर्ण्यैतज्जरासन्धो हर्षशोकभयाकुलः । भूत्वा दध्यौ मृतः काल-कुमारो न हि तद् वरम् ।.१९४॥
यादवानामितो यातां पश्चिमाककुभि द्रुतम् । अब्धेः कूले सुतौ सत्य-भामाऽसूत वरेऽहनि ।१९५॥
तयोर्जन्मोत्सवं कृत्वा यादवा भानुभामरौ । ददुर्नाम ततो देवा-नुज्जयन्तेऽचलेऽनमन् ॥१९६॥
समुद्रविजयेनोक्तः कृतस्नानो बलिर्हरिः । कृताष्टमतपा पूजा चकार पश्चिमाम्बुधेः ।१९७॥
तृतीयनिशि पाथोधि-देवोऽभ्येत्य जगौ हरिम् । स्मृतोऽहं भवता कस्मै हेतवे वद माधव ! ॥१९८॥
कृष्णोऽवग् नगरीं स्फारां कारयित्वाऽम्बुधेस्तटे । आरामान् विपुलान् वास-हेतोर्नः कुरु साम्प्रतम् ॥१९९॥
द्वादशयोजनायामां नवयोजनविस्तृताम् । रैरत्नवप्र संयुक्तां पुरीं स धनदो व्यधात् ॥२००॥
तत्रैकद्वित्रिकादींश्च भौमान् सप्तान्तिकान् वरान् । आलयान् धनदश्चक्रे जिनचैत्याननेकशः ॥२०१॥
तस्या द्वारवतीत्याह्वा प्रददौ धनदो यदा । तदैव यादवाः सर्वे तत्र वासं व्यधुर्मुदा ॥२०२॥
पाञ्चजन्याभिधं शङ्खं हरयाऽदात्तदा सुरः । रामाय च सुघोषं तु रत्नमाल्याम्बराणि च ॥२०३॥
कुबेरो हरये पीत-वाससी कौस्तुभं मणिम् । शार्ङ्ग-चापं वरं खड्गं नन्दनाह्वं प्रदत्तवान् ॥२०४॥

गदां कौमोदकीं वर्यं स्यन्दनं गरुडध्वजम् । धनदः प्रददौ कंस-द्विषे सन्मानपूर्वकम् ॥२०५॥
वनमालां हरेस्ताल-ध्वजं नीलाम्बरे हलम् । रामाय प्रददौ सद्यो धनदो रुचिरोत्सवम् ॥२०६॥
अरिष्टनेमये ग्रीवा-ऽऽभरणं वाहुरत्नकम् । हारं त्रैलोक्यविजयं चन्द्रसूर्याख्यकुण्डले ॥
गङ्गातरङ्गविशदे वाससि विमले दरे । सर्वतेजोमयं रत्न-मप्यदाद् धनदो मुदा ॥२०७॥
मिलित्वा यादवैः सर्वैः धनदाऽऽद्यैः सुरैरपि । राज्येऽभिषिषिचे कृष्णो वलभद्रसमन्वितः ॥२०८॥
नेमिर्दशधनुर्देहः क्रमात् प्राप्य च यौवनम् । निर्विकारः स्वरूपेण जिगाय स्मरवैभवम् ॥२०९॥
एकदा दिवि शक्रेण सुराणामग्रतो मुदा । वर्णितं नेमिनाथस्य सत्त्वशौर्यादि सुन्दरम् ॥२१०॥
सत्त्वे शौर्ये कुले शैले दानरूपगुणेष्वपि । प्रभुर्नेमिर्न केनाऽपि चाल्यते त्रिदशैरपि ॥२११॥
आकर्ण्यैतत् सुराः केचित् दधतोऽमर्षमात्मनि । प्रभुं चालयितुं द्वार-वत्युपान्ते समाययुः ॥२१२॥
मर्त्यरूपधराः कृत्वा पुरं स्फारं तदन्तिके । स्थिता जहुर्गवादीनि नरान् नारींश्च भूरिशः ॥२१३॥
तान् जेतुं ये ययू राजसेवकास्ते तदा द्रुतम् । हताः पश्चात् समायाताः प्रोचुश्च तद्विचेष्टितम् ॥२१४॥
अनावृष्णिर्द्विपो जेतुं गतस्तैः समराङ्गणे । बद्ध्वा निजपुरीमध्ये क्षिप्तश्च भृत्यसंयुतः ॥२१५॥
ततः समुद्रविजयं यान्तं जेतुं रिपूंश्च तान् । निषिध्य रामकृष्णौ तु गतौ हन्तुं द्विषस्तदा ॥२१६॥
कुर्वाणौ समरं राम-कृष्णौ तैर्वैरिभिः समम् । बद्ध्वा क्षिप्तौ दृढं कारा-गृहे स्वभृत्यसंयुतौ ॥२१७॥
ततो नेमिकुमारस्तु गत्वा तत्र रणाङ्गणे । सकृपोऽपि च तैः सार्द्धं युद्धं चक्रेऽतिदारुणम् ॥२१८॥
युद्धं कुर्वन् प्रभुः शत्रून् सर्वान् निश्चेष्टकाष्ठवत् । चकार न यथोच्छ्वासं कर्त्तुं शेकुर्मनागपि ॥२१९॥
ततस्ते निर्जराः सर्वे स्वं रूपं विभ्रतस्तदा । नत्वा प्रभुं जगुः स्वीया-गमहेतुमशेषतः ॥२२०॥
तदा तैर्निजरैश्चारु-हारं कुण्डलयामलम् । दत्तं यदा तदा शक्रस्तत्रैत्य प्रभुमानमत् ॥२२१॥
जगौ शक्रः प्रभुर्ह्येष केनापि चाल्यते नहि । अनन्तौजा लसत्सत्त्व-गाम्भीर्यशौर्यवानसौ ॥२२२॥
रामकृष्णावनावृष्णिं समुद्रविजयादयः । विधाय नेमिनं हस्त्या-रूढमानिन्युरालये ॥२२३॥
तदा शक्रयुताः सर्वे यादवा मुदिताशयाः । शत्रुञ्जयमहातीर्थे यात्रां चक्रुः सविस्तरात् ॥२२४॥
नेमिं प्रणम्य गीर्वाणै-र्भूरिभिः सह वासवः । आददानो गुणान्नेमि-जिनस्य स्वर्गमीयिवान् ॥२२५॥
ततः कृष्णो बलेनाऽमा राज्यं कुर्वन् लसन्नयात् । पपालोर्वीं तथा वाढं सुखिन्यासीद्यथा दृढम् ॥२२६॥
अन्यदा नारदोऽभ्येत्य कृष्णस्य पुरतो जगौ । रुक्मिक्षोणिपतेर्वर्या समस्ति रुक्मिणी स्वसा ॥२२७॥
ततः कृष्णनृपः प्रेष्य रुक्मिभूमिपतिं स्फुटम् । याचते रुक्मिणीं पाणि-ग्रहहेतोः शुभेऽहनि ॥२२८॥
यदा न ददते रुक्मी स्वपुत्रीं हरये स्वयम् । तदा दध्यौ हरिर्ग्राह्या रुक्मिणी हठतो मया ॥२२९॥
तत्रैत्य रुक्मिणं भूप-मददानं स्वसोदरीम् । मत्वा हत्वा च तां कृष्णोऽचालीत् स्वीयपुरीं प्रति ॥२३०॥
समायातं तदा पृष्ठौ रुक्मिणं कमलापतिः । निर्जित्य स्वपुरोपान्ते समियाय वराशयः ॥२३१॥
परिणीय रमानाथो रुक्मिणीं लसदुत्सवम् । आनीय नगरीमध्ये तस्यै वर्यं गृहं ददौ ॥२३२॥
जवाञ्जम्बुवतो विद्या-भृतो जम्बुवतीं सुताम् । स्नातां सुरनदीतीरे जहार पुरुषोत्तमः ॥२३३॥
आनीय स्वपुरोपान्ते गन्धर्वोद्वाहतो द्रुतम् । परिणीयानयद्विष्णुः पुर्यां जम्बुवतीं प्रियाम् ॥२३४॥

लक्ष्मणा च सुसीमा च गौरी पद्मावती ततः । गन्धारी चेति कृष्णस्याभूवन् यदष्ट वल्लभाः ॥२३५॥
अन्यदा रुक्मिणी स्वप्ने बलक्षवृषभस्थिते । विमाने स्वां निषण्णां तु दृष्ट्वा पत्युः पुरोऽवदत् ॥२३६॥
कृष्णोऽवक् ते प्रिये ! पुत्रो भविष्यति मनोहरः । श्रुत्वेति सत्यभामायै कापि दासी न्यवेदयत् ॥२३७॥
ईर्ष्यया सत्यभामाऽपि गत्वा कृष्णान्तिकेऽवदत् । स्वप्नेऽदर्शि मया हस्ति-मल्लोऽथ गिरिसोदरः ॥२३८॥
कृष्ण आचष्ट ते सूनु-रनूनवैभवक्रमः । भविष्यति लसद्रूप-पराभूतमनोभवः ॥२३९॥
गर्वस्त्वया न कर्त्तव्यः कार्यो धर्म्मो जिनोदितः । श्रुत्वैतन् कापि दास्येत्य रुक्मिण्याः पुरतो जगौ ॥२४०॥
सत्यभामोदितं कूटं ज्ञात्वाऽवग् रुक्मिणी तदा । कूटं किं जल्प्यते सत्यभामे ! सत्कुलया त्वया ॥२४१॥
भामाऽऽचष्ट ममोक्तं च कूट भवति दैवतः । ततः सूनोर्विवाहस्य समये समुपागते ॥२४२॥
रुक्मिक्षोणिभुग्पुत्रि ! भवत्यै त्वरितं किल । भद्रीकृत्य शिरो देया वालास्तुभ्यं मया तदा ॥२४३॥
रुक्मिण्यवग् मयोक्तं चेत् कूटं भवति दैवतः । भद्रीकृत्य शिरो देया वालास्तुभ्यं मया तदा ॥२४४॥
विधाय साक्षिणं ते द्वे गते स्वस्वगृहे क्रमात् । तदैव दधतु गर्भं पृथक् पृथक् शुभेऽहनि ॥२४५॥
सुप्रद्योतं सुतं चारु-दिने प्रद्युम्ननामकम् । रुक्मिणी सुषुवे सत्य-भामाथ भानुसंज्ञकम् ॥२४६॥
पूर्ववैरात् सुरो धूम-केतुश्छन्नं दिनात्यये । रुक्मिणीपुत्रमादाया-मुचद् वैताढ्यपर्वते ॥२४७॥युग्मम्॥
गते तस्मिन् सुरे काल-संवराभिधखेचरः । लात्वा कनकमालायै पत्न्यै दत्त्वा जगावदः ॥२४८॥
त्वयोच्यं सर्वलोकानां पुर एव स्फुटाक्षरम् । मयाऽसावि सुतो गूढगर्भयाऽद्य शुभेऽहनि ॥२४९ ।
जल्पन्तीति पतिप्रोक्तं लोकानां पुरतस्तदा । पपाल तं सुतं स्तन्य-पानदानात् प्रमोदिता ॥२५०॥
प्रद्युम्नाह्वां धरन् पुत्रः पोष्यमाणो दिने दिने । मातापित्रोर्ददौ मोदं वारिधेरिव चन्द्रमाः ॥२५१॥
इतोऽकस्माद् हृतं पुत्रं विज्ञाय रुक्मिणी हृदि । दुःखिताऽभूद् भृशं शश्वत् रुदन्ती करुणं स्वरम् ॥२५२ ।
तदेत्य कृष्ण आचष्ट शोको नैव विधीयते । पूर्वार्जिताघपुण्यानां वियोगो न हि जायते ॥२५३॥
यतः-"यदुपात्तमन्यजन्मनि शुभमशुभं कर्म्मपरिणत्या । तच्छक्यमन्यथा नैव कर्त्तुं देवाऽसुरैरपि ॥२५४॥
आरोहतु गिरिशिखरं समुद्रमुल्लङ्घ्य यातु पातालम् । विधिलिखिताऽक्षरमालं फलति कपालं न भूपालम् ॥२५५॥
श्रुत्वैतद् रुक्मिणी पुत्र-वियोगसम्भवं तदा । दुःखं त्यक्त्वा सदा धर्म्मं चकार जिनवरोदितम् ॥२५६॥
इतः सीमन्धरोपान्ते प्रद्युम्नस्य गतं भवम् । निशम्य नारदोऽभ्येत्य कृष्णस्य सन्निधौ जगौ ॥२५७॥
रुक्मिण्या प्राग्भवे ह्येक-मण्डं प्रलिप्य कुंकुमैः । दुःखिनी चटिका चक्रे षोडशप्रहरावधि ॥२५८॥
तेन षोडशवर्षान्ते रुक्मिण्या नन्दनोऽनघः । मिलिष्यत्यन्यथा नैव प्राक् कृतं कर्म्म जायते ॥२५९॥
यतः—"हसंतो हेलया कर्म्म ते कुर्वन्ति प्रमादिनः । जन्मान्तरशतैरेते शोचन्तेऽनुभवन्ति तत् ॥१॥"
इतो निःशेषशास्त्रार्थ-विदुरं मदनोपमम् । प्रद्युम्नं वीक्ष्य रागान्धा-ऽभवत् खगप्रिया भृशम् ॥२६०॥
प्रद्युम्नेन समं भोगं वाञ्छन्त्यवक् खगप्रिया । तापं स्मरोद्भवं मे त्वं रतदानाद् दयां कुरु ॥२६१॥
श्रुत्वेति जननीवाणीं विस्मितः कृष्णसूर्जगौ । इदं दुर्गतिदं प्रोक्तं वचः किं जननि ! त्वया ॥२६२॥
यतः—"अप्पउं धूलिहिं मेलिउं सयणह दीधउ छार । पगि पगि माथा ढाकणुं जिणि जोइ परनारि ॥१॥
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि । सुकर्त्तव्यं तु कर्त्तव्यं प्राणैः कण्ठगतैरपि ॥२॥"

ततः कनकमालाऽवग् नाहं ते जननी निजा । किन्तु त्वं कानने प्राप्तः पालितोऽत्र मयाऽधुना ॥२६३॥
जगज्जयकरे विद्ये गौरीप्रज्ञप्तिकाभिधे । गृहाणाऽनुगृहाण त्वं भोगदानात् कृपाऽऽकर ! ॥२६४॥
अकृत्यं न करिष्येऽह-मिति ध्यात्वाऽऽह कृष्णसूः । मातः ! प्रयच्छ मे विद्ये प्रमाणं वचनं तव ॥२६५॥
विद्ये तयोदिते प्राप्य साधयित्वा स कृष्णसूः । याचमानां हृदं तां च त्यक्त्वाऽगान् नगराद् बहिः ॥२६६॥
तदा दत्त्वा नखैः स्वाङ्गं तया कलकले कृते । उदायुधा रिपुं हन्तुं तत्रैयुस्तत्सुतास्तदा ॥२६७॥
मातुः पराभवकरं नरं ज्ञात्वाऽथ तत्सुताः । कुपिता बहिरुद्याने प्रद्युम्नं हन्तुमागमन् ॥२६८॥
आयान्तस्ते हता विद्या-बलेन हरिसूनुना । तथा यथाऽगमन् रक्तं वमन्तः स्वीयमन्दिरे ॥२६९॥
ताडितान् तत् सुतान् वीक्ष्य क्रुद्धः संवरखेचरः । ययौ कृष्णसुतं हन्तुं सर्वानुगसमन्वितः ॥२७०॥
प्रद्युम्नः संवरं खेटं बलिष्ठमपि लीलया । जित्वोद्याने स्थितो यावन् नारदस्तावदागमत् ॥२७१॥
प्रद्युम्नो नारदं नत्वो-पविश्य यावदग्रतः । तावद् ऋषिर्जगौ कृष्ण-रुक्मिण्योर्नन्दनोऽसि भोः ! ॥२७२॥
केशदानादिसम्बन्धस्तव भानोश्च जन्मनि । रुक्मिणीसत्यभामाभ्यां कृतोऽस्ति कृष्णनन्दन ! ॥२७३॥
यदि त्वं नाधुना तत्र गत्वाऽम्बां प्राग् प्रमोदय । तदा बालप्रदानेन मृत्युर्मातुर्भविष्यति ॥२७४॥
प्रज्ञप्त्या विद्यया वर्य-विमाने रचिते तदा । उपविश्याऽचलत् कृष्ण-सूनुर्नारदसंयुतः ॥२७५॥
पश्यन् पदे पदे ग्राम-नगराणि बहून्यपि । द्वारकानगरीपार्श्वे कानने समुपागमत् ॥२७६॥
तदोत्तरकुरुभागे कन्यां दुर्योधनो नृपः । दातुं भानुकुमाराया-गत्याऽस्थात् स्वीयपत्तनात् ॥२७७॥
विवाह्यां कन्यकां हृत्वा प्रद्युम्नो नारदान्तिके । वहिर्यानेऽमुचद् विद्या-बलाददृश्यरूपभृत् ॥२७८॥
कृष्णोद्यानं ततश्चक्रे फलपुष्पच्युतं स च । अशोषयच्च पानीय-स्थानान्यखिलान्यपि ॥२७९॥
यज्जयात्राश्वमातङ्ग-गवां भक्षणहेतवे । यस्तृणौघः कृतस्तं चा-ऽदृश्यं चक्रे स कृष्णभूः ॥२८०॥
विद्यया सार्थपो भूत्वा प्रद्युम्नो वाहयन् हयम् । दृष्टो भानुकुमारेण ततस्तत्रागमत् स च ॥२८१॥
लातुं सूल्यात् हयं भानु-र्वाहयन् पातितो भुवि । प्रद्युम्नविद्यया सर्वै-र्हस्यमानः पुरीं ययौ ॥२८२॥
प्रद्युम्नः प्रपठन् वेदं गच्छन् वाडववेषभृत् । भामायाः कुब्जिकां दासीं सरलां विदधेतराम् ॥२८३॥
दासीपार्श्वे तु भोज्य समया विप्रोऽर्थयन् बहु । दास्या स्वस्वामिनी पार्श्वे नीतोऽन्यासि तयाऽऽसने ॥२८४॥
भामाऽवग् द्विज ! रुक्मिण्याः कुरु मां रूपतोऽधिकाम् । विप्रोऽवक् प्रथमं शीर्षं रूपार्थं मुण्डयाऽधुना ॥२८५॥
विप्रोक्त्या वर्यरूपार्थं सत्यभामाऽतिहर्षिता । आकार्य नापितं शीर्षं मुण्डयामास वेगतः ॥२८६॥
जीर्णाम्बरधरा चक्षु-रञ्जयित्वैककं च सा । वषट् स्वाहेति वर्णालीं जल्पन्त्यस्थात् सुरीपुरः ॥२८७॥
चेटीविश्राणितं भोज्यं भुञ्जानो वाडवो बहुम् । न तृप्तोऽभूद्यदा दासी तदेति प्राह तं प्रति ॥२८८॥
भक्षितं निखिलं भोज्य त्वयाऽद्य तिष्ठ साम्प्रतम् । उत्थाय स द्विजः प्राहा-न्यत्र भोज्याय गम्यते ॥२८९॥
सबालो मुनिवेषोऽथ यदाऽगात् रुक्मिणीगृहे । तद्दर्शनात्तदा तस्या श्चित्ते श्वासोऽभवत्तराम् ॥२९०॥
रुक्मिणी विष्टरं यावन्नानिनाय गृहान्तरात् । तावत् कृष्णासने दृष्ट्वो-पविष्टं तं जगाविति ॥२९१॥
हरिं वा हरिजातं वा विनाऽस्मिन् हरिविष्टरे । अन्यं नरं समासीनं सहन्ते न हि देवताः ॥२९२॥
मुनिः प्राह पुरा मां न विघ्नेयुस्तपोबलात् । षोडशाब्दतपोन्तेऽहं पारणार्थमिहागमम् ॥२९३॥

देहि भोज्यं ममेदानीं नो चेद् भामानिकेतने । यास्यामि पारणायेति तेनोक्ते रुक्मिणी जगौ ॥२६४॥
नारदोक्तोऽपि नो पुत्र आयातोऽत्र ममालये । तेनोद्वेगेन मे गेहे पेचेऽन्नं न मनाग् मया ॥२६५॥
पृष्टया कुलदेव्या तु ममाऽद्य पुत्रसङ्गमः । कथितो नाभवत् सत्योऽतो त्वं वच्मि तदागमम् ॥
सोऽप्याह रिक्तपाणीनां पृष्टं न सफलं भवेत् । दीयते भोजनं वर्य-मथवा भक्तिपूर्वकम् ॥२९६॥
यतः—"रिक्तपाणिर्न पश्येत् देवं नैमित्तिकं गुरुम् । उपाध्यायं च वैद्यं च फलेन फलमादिशेत् ॥२९७॥
रुक्मिण्याऽऽचष्ट किं पेया रोचते वद साम्प्रतम् । स प्राह यदि लभ्येत पेया स्यादमृतं मम ॥२९८॥
राध्यमाना तया पेया न सिसेध यदा तदा । ययाचे स मुनिः कृष्ण-मोदकान् रुक्मिणीं वरान् ॥२९९॥
रुक्मिण्याऽऽह मुकुन्दस्य मोदका अन्यदेहिनाम् । भक्षिता नहि जीर्यन्ति तेनान्यन् मार्गयाधुना ॥३००॥
सोऽवक् त्वं मोदकान् देहि किं ते जरणचिन्तया । तपोबलाद्बलिष्ठान्न-मपि जीर्यति तत्क्षणात् ॥३०१॥
सशंका सा ददावेकं मोदकं मुनये तदा । सोऽपि भुक्त्वा क्षणार्त्तां च तं याचितवान् पुनः ॥३०२॥
प्रदत्तान् मोदकान् भूरीन् भुञ्जानं तं मुनिं तदा । वीक्ष्याऽवग् रुक्मिणी तेऽस्ति बलिष्ठं तपसो बलम् ॥३०३॥
इतो मुण्डितशीर्षां तां जल्पन्तीं मुनिनोदितम् । भामां प्रत्यवदन् भृत्याः फलरिक्तमभूद्वनम् ॥३०४॥
बभूवु निर्जलानीतः सरांसि सकलान्यपि । पपात तुरगाद् भानु-र्वाहयन् वाहनं क्षितौ ॥३०५॥
भान्वर्थागतकन्यास्तु स्वर्गनारीसहोदरीः । अकस्माज्जहिरे केन-चिन्नरेणापि साम्प्रतम् ॥३०६॥
भामया प्रेपिता दासी केशानयनहेतवे । रुक्मिणीसदने गत्वा ममार्ग शीर्षबालकान् ॥३०७॥
दासी सन्मानिता यावद् रुक्मिण्या रुचिरोक्तितः । तावत्तत्र स्थितो माया-मुनिरेवं जगाद स ॥३०८॥
प्रच्छन्नं प्रेपिता सत्य-भामया तद्वरं कृतम् । रुक्मिण्याश्च शिरोजातान् सत्या ते स्वामिनी किल ॥३०९॥
आनयन्ती स्वकीयान्ते भवत्याः पाणिनाऽधुना । कथं लज्जति नो पापा-न्न बिभेति च साम्प्रतम् ॥३१०॥ युग्मम् ॥
मुनिस्तस्याः शिरोजातैर्भृत्वा कंचन भाजनं । तां दासीं प्रेपयामास भामोपान्ते तथास्थिताम् ॥३११॥
अनागतान् शिरोजातान् रुक्मिण्या दासिकां पुनः । भद्रीकृतोत्तमाङ्गां तां वीक्ष्य सत्या चिखेद सा ॥३१२॥
दास्या एव शिरोजातान् दासीं तादृशमस्तकाम् । नीत्वा कृष्णान्तिके सत्य-भामा रोषादिदं जगौ ॥३१३॥
प्रतिभूस्त्वमभू रुक्मि-पुत्र्या केशकृते तदा । रुक्मिण्या तु मे दासी चक्रे एवंविधाऽधुना ॥३१४॥
कृष्णोऽवग् दृश्यसे भद्री-कृतशीर्षाऽधुना कथम् । स्वामिन्या सदृशी दासी तया चक्रेऽधुना प्रिये ! ॥
सत्यभामा जगौ स्वामिन् ! हास्येनानेन मे सृतम् रुक्मिणी शीर्षजान् सद्यो भवानानयतु स्फुटम् ॥३१५॥
कृष्णेन रुक्मिणीगेहे केशार्थं प्रेपितो हली । कृष्णं तत्र स्थितं वीक्ष्य लज्जितो ववले द्रुतम् ॥ १६॥
पश्चादेत्य हली तत्रो-पविष्टं केशवं स्वयम् । प्राह रूपद्वयकृते स्नुषाऽहं हेपितो त्वया ॥३१७॥
रुक्मिणीसदने रूपं त्वयैकं विहितं किल । रूपेणैकेन चात्रेदं वीक्ष्यसे साम्प्रतं हरे ! ॥३१८॥
हरिराह न तत्रागा-महं शपथपूर्वकम् । मायेयं ते गदित्वेति रामः स्वस्थानमीयिवान् ॥३१९॥
इतो मुनिर्जगौ रुक्मि-पुत्र्यग्रे ते सुतो ह्ययम् । रुक्मिण्याह कथं पुत्र एष्यति क्षण ईदृशे ॥३२०॥
प्रद्युम्नो ऽथ स्वरूपस्थोऽनमन्मातुः पदौ मुदा । बाहुभ्यां रुक्मिणी पुत्र-मालिलिङ्गातिमोदतः ॥३२१॥
रुक्मिण्यालिङ्गिते पुत्रे बाहुभ्यां स्नेहपूर्वकम् । पुत्रोऽवग् न पितुः पार्श्वे वाच्योऽहं पुत्रवाक्यतः ॥३२२॥

उक्त्वेति स्यन्दनारूढां विधाय रुक्मिणीं लघु । शंखमापूरयन् राजमार्गेऽचालीत् स कृष्णभूः ॥
हृत्वाऽहं रुक्मिणीं यामि कृष्णो वाऽन्योऽपि रक्षतु। प्रद्युम्नो व्याहरन्नेवं ययौ पुर्या बहिः द्रुतम् ॥३२३॥
वैरिणं रुक्मिणीं हृत्वा गच्छन्तं नगराद्बहिः । श्रुत्वा कृष्णोऽचलद् हन्तुं प्रियां वालयितुं द्रुतम् । ३२४॥
तत्र गत्वा दृढं शार्ङ्ग-मास्फालयन् हरिर्जगौ । रे! मुमूर्षुः कथं पत्नी-मिमां मम हरिष्यसि ? ॥३२५॥
मुञ्चेमां रुक्मिणीं सद्यो नो चेन्मत्तो मरिष्यसि । न ज्ञातं किं बलं माम-कीनं वैरिहरं त्वया ? ॥३२६॥
भङ्क्त्वा तच्छिबिरं विद्या-बलात् सद्यः स कृष्णभूः । कृष्णं निरायुधं चक्रे निर्दन्तमिव दन्तिनम् ॥३२७॥
यद्यच्छस्त्रं करे कृष्णः कुरुते तच्छिरश्छिदे । तत्तद् दूरे क्षिपत्येष कृष्णपुत्रोऽर्कतूलवत् ॥३२८॥
विषण्णेऽथ हरावेत्य नारदः प्रोक्तवानिति । प्रद्युम्नोऽयं सुतस्ते यो रुक्मिण्याऽसावि दीप्तिमान् ॥३२९॥
श्रुत्वेति हरिरालिङ्ग्य प्रद्युम्नं प्रेमपूर्वकम् । कृत्वा पट्टेभमारूढं चचाल स्वपुरं प्रति ॥३३०॥
प्रद्युम्न-रुक्मिणीयुक्तः कृष्णः कुर्वन् महोत्सवम् । दृश्यमानः पुरीलोकैः स्वीयगेहं समाययौ ॥३३१॥
इतो दुर्योधनोऽप्येत्य जगौ पुत्रकृते तव । आनीताऽत्र कनी सा तु हृता केनाऽधुना रहः ॥३३२॥
कन्या विलोक्यमानापि यदा लब्धा न केनचित् । तदाऽतिदुःखिनश्चासन् सर्वे दुर्योधनादयः ॥३३३॥
अथ कृष्णो जगौ कोऽस्ति यः कन्यां नयतेऽत्र हि। आनयिष्याम्यहं कन्या-मित्युक्त्वा कृष्णजोऽचलत् ॥३३४॥
तेनानीतां कनीं तस्मै दीयमानां बलादपि । प्रद्युम्नो दापयामास भानवे लसदुत्सवम् ॥३३५॥
खेचराः खेचरीर्भूमि-चरा भूमिचरीर्बहूः । प्रद्युम्नाय ददुश्चारूत्सवं तत्रैत्य कन्यकाः ॥३३६॥
जीर्णमञ्चस्थितां भामां दृष्ट्वाऽप्राक्षीद्रमापतिः । किं तेऽस्ति हृदये दुःखं ? सत्यभामा ततो जगौ ॥३३७॥
प्रद्युम्नसदृशं पुत्रं प्रापेऽहं तव पार्श्वतः । कृष्णोऽवग् न त्वया दुःखं कार्यं पुत्रो भविष्यति ॥३३८॥
चतुर्थतपसा तुष्टो नैगमैषी हरिं जगौ । किं ते विलोक्यते कृष्ण ! ततो हरिर्जगावदः ॥३३९॥
तथा कुरु यथा सद्यः प्रद्युम्नस्य समः सुतः । जायते सत्यभामाया बलरूपरमादिभिः ॥३४०॥
हारं दत्त्वा जगौ देवः पत्न्या देयस्त्वया ह्ययम् । भविष्यति क्रमात्पुत्रो भामाया मदनोपमः ॥३४१॥
गतेऽथ निर्जरे हार-स्वरूपं विद्यया तया । ज्ञात्वा जाम्बुवतीं भामा-तुल्यां द्युम्नो ह्यकारयत् ॥३४२॥
विद्यया प्रेरिता जाम्बु-वती कृष्णान्तिके ययौ । भामाभ्रान्त्या च तं हारं दत्त्वा तां बुभुजे निशि ॥३४३॥
सुस्वप्नसूचितः स्वर्गा-च्च्युतः कोऽपि सुधाशनः । चञ्चत् पुण्यप्रभावेन तस्याः कुक्षाववातरत् ॥३४४॥
गतायां जाम्बुवत्यां तु भामाऽगाद् भोगहेतवे । कृष्णो दध्यावियं भोग-कृतेऽगात्तत्क्षणात् पुनः ॥३४५॥
भोगेनैकेन जायेत तृप्तिः पुंसश्च न स्त्रियः । जायतेऽष्टगुणः कामो यतो नार्यो नरात् किल ॥३४६॥
यतः-'आहारो द्विगुणः स्त्रीणां निद्रा तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥३४७॥
सुवंशजो-ऽप्यकृत्यानि कुरुते प्रेरितः स्त्रिया । स्नेहलं दधि मथ्नाति पश्य मन्थानको न किम् ? ॥३४८॥
ध्यात्वेति भुञ्जमानस्य कृष्णस्य तां प्रियां पुनः । भम्भामवादयद् द्युम्नो निःशेषबलतस्तथा ॥३४९॥
केनेयं वादिता भम्भेत्येवं संशयवान् हरिः । रत्यासक्तोऽभवच्चित्ते चकितो हृदये बहु ॥३५०॥
प्रद्युम्नताडितां भम्भां ज्ञात्वा क्षुब्धो हरिर्जगौ । भावी तव सुतोऽनर्घ्य रूपो भामे ! प्रियोत्तमे ! ॥३५१॥
प्रगे जाम्बुवतीकण्ठे हारमालोक्य केशवः । प्रद्युम्ननिःकृतिं शंसन् बाढं विस्मयमाप्तवान् ॥३५२॥

काले जाम्बुवती पुत्रं शाम्बाभिधमजीजनत् । भामाऽपि जन्मतो भीरुं भीरुकाह्वं सुतं तदा ॥३५३॥
अथोपायात् कनीं वर्यां वैदर्भीं रुक्मिणीसुतः । उपयेमे तदा शाम्बः सुहृगिण्यां हिमात्मजाम् ॥३५४॥
भामाऽन्यदाऽवदद् जाम्बु-वति ! शाम्बः सुतस्तव । मत्सूनुं भीरुकं भीष-यति त्वया न कार्यताम् ॥३५५॥
भामया प्रेरितः कृष्णः प्राह जाम्बुवतीं प्रति । शाम्बस्त्वत्तनयो धीष्णो भीषयत्येव भीरुकम् ॥३५६॥
जगौ जाम्बुवती शाम्बः सौम्योऽस्ति मे सुतः सदा । विरुद्धं न मनाक् कस्य कुरुते कर्हिचित् प्रिय ! ॥३५७॥
यतः-"जो जस्स वट्टए हियए सो तं ठावेइ सुन्दरसहावं । वग्घी छावं जणणी भद्दं सोमं च मन्नेइ ॥१॥"
कृष्णोऽवक् ते सुतः सौम्यो विद्यते तद् सदा प्रिये ! । तथाऽपि क्रियते सूनोः परीक्षा तस्य साम्प्रतम् ॥३५८॥
आभीरिरूपभृज्जाम्बु-वत्याऽऽभीरोऽभवद्धरिः । तौ गतौ नगरस्यान्तर्दधिविक्रयदम्भतः ॥३५९॥
दृष्ट्वाऽऽभीरीं जगौ शाम्ब इहेहि लामि ते दधि । इत्युक्त्वा तां बलान्नीन्ये शून्यगेहान्तरे स च ॥३६०॥
तदा जाम्बुवती लक्ष्मी-पतिश्चाभ्यां प्रकटीकृते । स्वरूपे चानशच्छाम्बो लज्जितः स्थगिताङ्गकः ॥३६१॥
जगौ जाम्बुवतीं कृष्णः सूनोः कृत्यं त्वयेक्षितम् । वरं सौम्यं सुतं सा ही मन्यते क्रूरमप्यहो ॥३६२॥
द्वितीयेऽह्नि व्रजन् शाम्बो हस्तात्तकीलको जगौ । वृत्तं यो ह्यस्तनं मेऽत्र वक्त्याऽऽस्येऽस्य क्षिपाम्यमुम् ॥३६३
श्रुत्वैतद्वचनं तस्य रुष्टः कृष्णो जगौ तदा । स्वेच्छाचरण रे शाम्ब ! मा तिष्ठाऽत्र पुरे मम ॥३६४॥
शाम्बः प्रद्युम्नतो विद्यां प्रज्ञप्तिं प्राप्य निर्ययौ । प्रद्युम्नोऽप्यर्दयच्छाम्ब इव भीरुकमन्वहम् ॥३६५॥
भामयोक्तं न किं याहि प्रद्युम्नान्यत्र शाम्बवत् । प्रद्युम्नोऽवकक्क गच्छामि मातः ! सम्प्रति गद्यताम् ॥३६६॥
सत्यभामा जगौ प्रेत-वने गच्छ त्वकं द्रुतम् । प्रद्युम्नोऽवग् वचो मात-स्तव प्रमाणमेव मे ॥३६७॥
अहं मातः ! कदेष्यामि सत्यभामा जगौ ततः । शाम्बं हस्ते गृहीत्वाऽहं पुर्यां यदाऽऽनयाम्यहम् ॥३६८॥
तदा त्वया समागम्यं महोत्सवपुरस्सरम् । ततो मातुः गिरा सद्यः प्रद्युम्नोऽगात् पितुर्गृहे ॥३६९॥
भ्रमन् देशान्तरे शाम्ब-स्तत्र प्रेतवने क्रमात् । समेत्य मिलितो भ्रातुः प्रद्युम्नस्य करन्नतिम् ॥३७०॥
इतो भामा कनीनां त्वे-कोनशतममेलयत् । भीरूद्वाहकृते कन्या-नैकामिलति सुन्दरी ॥३७१॥
प्रज्ञप्त्या विद्यया ज्ञात्वा भामाचेतसि चिन्तितम् । प्रद्युम्नः कृतवान् शाम्बं दिव्यकन्यां च विद्यया ॥३७२॥
जितशत्रुनृपो भूत्वा स्वयमादाय तां कनीम् । द्वारकासन्निधावेत्य तस्थौ भूरिपरिच्छदः ॥३७३॥
ज्ञात्वा तामागतां कन्यां जितशत्रुनृपं कनीम् । भामाऽयाचत पुत्रार्थं वर्यसन्मानपूर्वकम् ॥३७४॥
जितशत्रुर्जगौ चेन्मत्-पुत्रीं धृत्वा करे स्वयम् । भामा नयति पुर्यन्तो महोत्सवपुरस्सरम् ॥३७५॥
उद्वाहसमये त्वस्याः शयं भीरुशयोपरि । चेत् कारयसि भामे ! त्व तदा भीरुर्वृणोतिमाम् ॥३७६॥
अङ्गीकृत्य वचस्तस्य धृत्वा तां कन्यकां करे । पुरे भामां समायान्तीं दृष्ट्वेत्यूचुः पुरीजनाः ॥३७७॥
भामा पुण्यवती ह्येषा पुत्रोद्वाहक्षणोऽधुना । सन्मान्य शाम्बमानैषीत् पुरीमध्ये विचक्षणा ॥३७८॥
प्रज्ञप्त्या विद्यया शाम्बं कन्यारूपधरं स्फुटम् । सत्यभामेक्षते हृष्टा वधूबुद्ध्या पदे पदे ॥३७९॥
शाम्ब पुरीजना दर्शं दर्शं तत्र नृपाध्वनि । दध्युः किं साम्प्रतं सत्याऽऽ-नयते जाम्बुवतीभवम् ॥३८०॥
एके जना जगुः सत्य-भामेयं विद्यते वरा । यत आनयते शाम्बं सपत्नीजमपि स्फुटम् ॥३८१॥
नात्मीयं न परं लोका उत्तमा मन्यते क्वचित् । उत्सवे तु रिपुं केचि-न्मानयन्ति जनाः सदा ॥३८२॥

भामौकसि गता कन्या दक्षिणं स्वशयं तदा । भीरोर्हस्तोर्ध्वमायातः तस्थावुद्वाहमण्डपे ॥३८३॥
कन्यानां नवनवतेः पाणीनामुपरि स्वयम् । कृत्वा निजं शयं कन्या-ऽनलस्य परितोऽभ्रमत् ॥३८४॥
उद्वाहादनु शाम्बेन स्वरूपे प्रकटीकृते । भ्रकुट्या भीषितो भीरु-र्भामायाः शरणं ययौ ॥३८५॥
भामाऽपि शाम्बमालोक्य प्राह रे ! केन हि त्वरम् । आनीतोऽसि पुरीमध्ये पापिन् ! मूर्खोत्तमाऽधुना ॥३८६॥
ततो मातुः पदौ नत्वा भक्त्या शाम्बो जगाविदम् । आनीतोऽस्मि त्वयेदानी-महं सज्जनसाक्षिकम् ॥३८७॥
सर्वासां कन्यकानां तु भीरुकस्य करग्रहम् । भवत्याऽऽकारितः सर्व-लोकमज्जनमाक्षिकम् ॥३८८॥
तया पृष्टा जनाः प्रोचुः शाम्बोऽस्माभिर्निरीक्षितः । अनेन कन्यका सर्वा परिणीता सदुत्सवम् ॥३८९॥
जितशत्रुनृपो जातः प्रद्युम्नो रुक्मिणीसुतः । सत्यभामा जगौ खिन्ना शाम्बं प्रतीदमीर्ष्यया ॥३९०॥
मायी बन्धुः पिता मायी मायिनी यस्य च प्रसूः । मायी सोऽछलयत्कन्या-रूपो मां सहजो रिपुः ॥३९१॥
जननीजनकभ्रातृ-प्रमुखा यस्य मायिनः । मायावी स भवत्पुत्रो-ऽछलयन्मां रिपूपमः ॥३९२॥
उक्त्वेति दुःखिनी भामा निःश्वस्य सुचिरं तदा । आगत्य स्वगृहे जीर्ण-मञ्चमाशिश्रियद् द्रुतम् ॥३९३॥
वसुदेवं नमस्कृत्य शाम्बोऽवग् भ्रमता त्वया । परिणीता बहूः कन्याः मयाल्पेनानेहसा शतम् ॥३९४॥
वसुदेवोऽगदत् कन्याः स्वयंवरसमागताः । सहस्रशः तदम्बादि-दत्ता अङ्गीकृता मया ॥३९५॥
जननीं छलयित्वा त्वं मायया बन्धुसंयुतः । एकोनं च शतं कन्याः पर्यणैषीरिहागताः ॥३९६।
क्रुद्धं पितामहं मत्वा नत्वा शाम्बो जगावदः । क्षन्तव्यं मत्कृतं सर्व-मपराधं पितस्त्वया ॥३९७॥
तादृग् विनयगर्भेण वचसा प्रीणितो भृशम् । शाम्बं पितामहस्तत्र प्रशशंस लसद्गिरा ॥३९८॥
यादवानां कुमारास्तु प्रद्युम्नप्रमुखा वराः । पाण्डुभूपसुतैः सार्द्धं रंरम्यन्ते मुदा तदा ॥३९९॥
इतश्च यवनद्वीपाद् वणिजो रत्नकम्बलान् । विक्रीणन्तः पुरे पुर्यां द्वारवत्यां समाययुः ॥४००॥
सपादलक्षद्रव्येण तत्रैकं रत्नकम्बलम् । विक्रीणतोऽन्यदा तेषु वणिजः शुश्रुवुश्रुवम् ॥४०१॥
पुरे राजगृहे रत्न-कम्बलं ह्येककं किल । द्विलक्ष्या लभ्यते नैव प्राप्यते स्तोक एव सः ॥४०२॥
वणिजस्ते ततो रत्न-कम्बलान् निखिलानपि । लात्वा राजगृहे जग्मु-र्मगधादेशभूपतेः ॥४०३॥
विक्रीणन्तः क्रमात्पुर्यां जरासन्धमहीपतेः । गेहोपान्ते ययुर्यावद् वणिजस्ते च तावता ॥४०४॥
जरासन्धमहीपाल-पुत्री जीवयशाः खलु । वणिजः सन्निधौ याता गृहीतुं रत्नकम्बलान् ॥४०५॥
अल्पमूल्येन सा मार्ग-यन्ती जीवयशास्तदा । वणिग्भिर्जगदे पुण्य-वत्येवं किं प्रजल्प्यते ?॥४०६॥
द्वारकाह्वपुरीमध्ये एते च रत्नकम्बलाः । विक्रीता द्विद्विलक्ष्या तु कथं त्वमिति मार्गय ? ॥४०७॥
अतस्तन्नगरं वर्यं विद्यतेऽतः पुरा ननु । ततो जीवयशाः प्राह कुत्रास्ति सा पुरी वरा ? ॥४०८॥
वणिजो जगदुः स्फुटं पश्चिमाम्भोधिसन्निधौ । विद्यते द्वारका नाम्ना पुरी स्वर्गपुरीसमा ॥४०९॥
तत्र यादववंशीयः कृष्णो नाम महीपतिः । पपाल जनता न्याय-मार्गेण शक्रविक्रमः ॥४१०॥
समुद्रविजयो भूपो नवसोदरसंयुतः । प्रतापी विद्यतेऽन्येऽपि यादवाः कोटिसम्मिताः ॥४११॥
हट्टश्रेणौ मणीनां तु राशीन् कैलाससोदरान् । वीक्ष्य ज्ञैस्तर्क्यतेऽम्भोधि-र्मणिशेषोऽधुनाऽभवत् ॥४१२॥
स्थाने स्थाने तु कल्याण-पुञ्जान् प्रौढतरान् बहून् । स्वर्णद्वीपः किमत्रागाद् वीक्ष्येति चिन्त्यते बुधैः ॥४१३॥

दुकूलसञ्चयान् भूरीन् स्थाने स्थाने निरीक्ष्य तु । लोकाः प्रोचुर्जगत् सर्व-दुकूलान्यैपुरत्र तु ॥४१४॥
कृष्णनामश्रुते जीवयशा एत्य पितुः पुरः । जगाद तव जामातु-र्हन्ता सम्प्रति जीवति ॥४१५॥
तेन मे विद्यते शल्यं दुःखं कुर्वन् दृढे हृदि । तत् कर्षयाऽधुना तात ! नो चेन्मृताऽस्म्यहं द्रुतम् ॥४१६॥
जरासन्धो जगौ सर्वे यादवाः कृष्णसंयुताः । प्रविश्याग्नौ मृतिं जग्मु-रतो मा त्वं कराऽसुखम् ॥४१७॥
इतस्तत्र समागत्य वणिजोऽप्यपरे पुनः । जरासन्धनृपस्याग्रे-ऽमुञ्चन् स्थालं मणीभृतम् ॥४१८॥
सन्मान्य तान् नृपोऽप्राक्षीद् रत्नानीदृशि कुत्र नु ? । विद्यन्ते च कुतः स्थाना-दानीतानि निवेद्यताम् ॥४१९॥
रत्नानि चन्द्रमार्तण्ड-बिम्बाभानि त्विषाम्भरैः । स्फारामलकमानानि मौक्तिकानि शुभानि च ॥४२०॥
दर्शयित्वा नृपस्योचु-र्वणिजो विनयाश्रितम् । अपश्चिमाब्धितटे द्वार-वत्यस्ति नगरी वरा ॥४२१॥युग्मम्॥
तत्र कृष्णाभिधो राजा सर्वयादवपुङ्गवः । पालयन्न्यायतो राज्यं रामं रमायति प्रजाः ॥४२२॥
समुद्रविजयो राजा नवसोदरसंश्रितः । प्रीतिमान् विद्यतेऽत्यन्तं लोकेषु निखिलेष्वपि ॥४२३॥
ईदृशानि मणीमुक्ता-फलानि भूरिशो नृप ! । लभ्यन्तेऽन्यानि वस्तूनि रुचिराणि बहून्यपि ॥४२४॥
स्थित्वा द्वादश वर्षाणि रहोवृत्त्याऽथ पाण्डवाः । समागत्य हरेः पार्श्वे तिष्ठन्ति साम्प्रतं सुखम् ॥४२५॥
तत्र सन्मानिता सार्द्धं यदुभिः पाण्डुनन्दनाः । स्वं राज्यं सस्मरुश्चन्द्रं चकोरा इव सन्ततम् ॥४२६॥
दूतं दुर्योधनोपान्ते प्रेष्य राज्यं निजं स्फुटम् । पाण्डवा मार्गयामासुः स्नेहवाक्यपुरस्सरम् ॥४२७॥
यदा दुर्योधनो राज्यं पाण्डवेभ्यो ददौ न हि । तदा ते सुभटान् भूरीन् मेलयामासुरञ्जसा ॥४२८॥
दुर्योधनोऽपि सन्नह्य स्वकीयं शिबिरं द्रुतम् । आगच्छन् विद्यते युद्धं कर्तुं तैः सार्द्धमञ्जसा ॥४२९॥
श्रुत्वैतत्तु जरासन्धो मेलयित्वा बलं बहुम् । चचाल वैरिणं कृष्णं हन्तुं राजगृहात् पुरात् ॥४३०॥
तदा दुर्योधनोऽभ्येत्य जरासन्धान्तिके जगौ । हन्म्यहं पाण्डवान् याव-त्तावत्त्वं तिष्ठतात् स्थिरम् ॥४३१॥
ततो दुर्योधनः कुर्वन् युद्धं पाण्डुसुतैः समम् । स्वसोदरयुतो यातः परलोकं रणाङ्गणे ॥४३२॥

अयं सम्बन्धस्तच्चरित्राद्विस्तराद् ज्ञेयः ।

ततो दुर्योधनं भूपं पाण्डवैर्यममन्दिरे । प्रेषितं मगधाधीशः श्रुत्वा खिन्नोऽभवद् हृदि ॥४३३॥
ततः प्राह जरासन्धः स्वभृत्यानां पुरस्त्विति । दुर्योधनो वरो भृत्यो हतः पाण्डुतनूभवैः ॥४३४॥
अतश्चेद् हन्यते कृष्णः पाण्डुपुत्रैः महाचिरात् । तदा मे निर्वृतिश्चित्ते भविष्यति शुभोदयात् ॥४३५॥
विचार्येत्यनुगैः सार्द्धं जरासन्धो नरेश्वरः । शिक्षयित्वा वरं दूतं मदनाह्वं स्फुटाक्षरम् ॥४३६॥
प्रेषयामास कृष्णस्य समीपे च जगौ स च । अहमस्मि जरासन्ध-भूपदूतो नरेश्वर ! ॥४३७॥ युग्मम् ॥
जरासन्धोऽगदन्माम-क्षीनाऽऽस्यादिति साम्प्रतम् । जामाता मे हतः कंस-स्त्वया यत्तद्वरं न हि ॥४३८॥
पार्थस्य सारथीभूत्वा दुर्योधनः सहानुजैः । मद्भृत्यो गमितो मृत्युं त्वया यत्तद्वरं न हि ॥४३९॥
जरासन्धोदितं दूत-मुखाच्छ्रुत्वा हरिस्तदा । धिक्कृत्य तं पुनः पश्चात् प्रेषयामास वेगतः ॥४४०॥
ततो दूतो जरासन्धो-पान्ते गत्वा जगाविति । पाण्डुपुत्रैर्बलेनैव युतः कंसरिपुर्बली ॥४४१॥
न मन्यन्ते तृणं त्वां तु साम्प्रतं चान्यभूपतीन् । ........ ॥४४२॥
ततः क्रुद्धो जरासन्धः सज्जोऽभूद्रणहेतवे । यावत्तावद् हरिरपि सन्नह्य प्रस्थितोऽध्वनि ॥४४३॥

गूर्जरात्रस्य देशस्य भूषणे वर्द्धिकारके । विषये चाऽमिलत् सैन्यं जरासन्धमुकुन्दयोः ॥४४४॥
जरासन्धोऽथ सेनानीं हरिण्यनाभभूपतिम् । विधाय गरुडव्यूहं प्राववर्त्त युधे द्रुतम् ॥४४५॥
कृच्छ्रात् कृत्वा त्वनावृष्टिं सेनान्यं वरविक्रमम् । ढुढौके वैरिणं हन्तुं धर्म्मपुत्रादियुग् हरिः ॥४४६॥
हयानां हेषितैः गाम-योनीनां च गर्जितैः । भटानां सिंहनादेन नभोऽभूद्बधिरं तदा ॥४४७॥
विभिद्य गरुडव्यूहं महानेमि-धनञ्जयौ । अनावृष्टिश्च भूयिष्ठ-शत्रून् यमगृहेऽनयत् ॥४४८॥
अथ रुक्मी महानेमिं शिशुपालो धनञ्जयम् । हरिण्यनाभोऽनावृष्टिं योद्धुं क्रोधादचीचलन् ॥४४९॥
षण्णामपि महीशानां तेषां विशिखवर्षिणाम् । संग्रामो दारुणोऽत्यन्त-मसह्योऽभून्मिथस्तदा ॥४५०॥
न स सादी निषादी न पदाती न रथी न च । महानेमेः शरा यत्र निपतन्ति रणाङ्गणे ॥४५१॥
महानेमिशरैर्व्याप्तं रुक्मिणं रक्षितुं नृपाः । वेणुदारिमुखाः सप्त जरासन्धाज्ञया स्थिताः ॥४५२॥
महानेमिशरैस्तेषा-मष्टानामपि सायकान् । चिच्छेद लघुहस्तत्वाज् ज्योतिषीव प्रभाकरः ॥४५३॥
तदा यादवसुरेशै-र्मगधेशस्य भूपतेः । सङ्ग्रामे जघ्निरे क्रुद्धै-र्बहवो बाहुशालिनः ॥४५४॥
अवधीज्जयसेनं तु हरिण्यनाभभूपतिः । न्यहन् हरिण्यनाभं तु क्रुद्धोऽनावृष्टिभूधवः ॥४५५॥
एकोनविंशतिं सूनून् जरासन्धस्य भूपतेः । रथनेमिर्यमावासं प्रेषयामास वेगतः ॥४५६॥
विलोडिते निजे सैन्ये भूभुजा रथनेमिना । शिशुपालं च सेनान्यं जरासन्धो व्यधात्तदा ॥४५७॥
रामकृष्णवधे कृत्वा प्रतिज्ञां मगधेश्वरः । शिशुपालयुतोऽचाली-न्निहन्तुं रामकेशवौ ॥४५८॥
चिह्नेन मुरविद्वेषि-हलिनावुपलक्ष्य च । जरासन्धो निहन्तुं तौ समागात् समराङ्गणे ॥४५९॥
इतोऽष्टाविंशतिः पुत्रा जरासन्धावनिपतेः । रामेण सह युध्यन्तो-ऽलञ्चक्रुर्यममन्दिरम् ॥४६०॥
रामपुत्रान् जरासन्धो हत्वा नव निजासिना । गच्छन् भीमेन गदया निहतो न्यपतद्भुवि ॥४६१॥
क्षणादुत्थाय भीमं तं तथा शिरस्यताडयत् । जरासन्धो यथा वायुपुत्रोऽवनितलेऽपतत् ॥४६२॥
तदाऽर्जुनो जरासन्ध-मताडयत् तथा शरैः । यथा शक्नोति नो बाणं संधितुं कार्मुके मनाग् ॥४६३॥
एकोनसप्ततिं पुत्रान् जरासन्धस्य युध्यतः । अवधीद् रुक्मिणीनाथ-स्ततश्च नव सप्त च ॥४६४॥
प्रगेऽन्यदा चमूं सुप्त-प्रायां वीक्ष्य हरिर्जगौ । भो नेमे ! स्वं बल सुप्तं किं नोत्तिष्ठति साम्प्रतम् ? ॥४६५॥
नेमिः प्राह जरा विद्या मुक्ता मगधभूभुजा । तेनात्मीयं बलं सुप्त-मिवाऽशेषं विलोक्यते ॥४६६॥
शान्तिकादिषु भूयिष्ठो-पचारेषु कृतेष्वपि । यदोत्तिष्ठति नो चक्रं तदाऽऽह नेमिमच्युतः ॥४६७॥
त्वं विज्ञोऽसि कृपावाँस्त्वं नेमे ! जल्प यथाऽधुना । यथा स्वं शिविरं सर्वं जायतेऽत्र सचेतनम् ॥४६८॥
नेमिर्जगाविह क्षोणी-मध्ये पार्श्वजिनेशितुः । बिम्बमस्त्यहिनाथार्च्यं सुप्रभावं शिवप्रदम् ॥४६९॥
उपवासत्रयप्रान्ते तुष्टः पातालनायकः । तुभ्यं दास्यति लक्ष्मीश ! बिम्बं पार्श्वजिनेशितुः ॥४७०॥
तस्य स्नात्राम्बुना सेना-ऽभिषिक्ता निखिला लघु । उत्थास्यति यतोऽस्यास्ति प्रभावः प्रबलो भुवि ॥४७१॥
नेम्युक्तकरणात् पार्श्व-बिम्बस्य स्नात्रवारिणा । अभिषिक्तं बलं कंस-शत्रुणोत्थितमञ्जसा ॥४७२॥
तत्र स्थाने मुकुन्देन प्रासादः कारितो महान् । तस्मिन्निवेशितं पार्श्व-नाथबिम्बं च सूत्सवम् ॥४७३॥
स्थापयित्वा पुरं तत्र वर्यं शङ्खेश्वराभिधम् । अपूरयत्तथा शङ्खं कृष्णो-रोभीर्यथाऽजनि ॥४७४॥

तदद्यापि महातीर्थं श्रीमच्छङ्खेश्वराभिधम् । विघ्नानि निजभक्तानां हन्ति ध्यानार्चनादिभिः ॥४७५॥
अथ सन्नह्य मगध-नाथो हन्तुं द्विषद्बलम् । समेत उत्थितान् शत्रून् वीक्ष्येति ध्यातवान् हृदि ॥४७६॥
मया दत्ता जरा ह्येषां केनाथोत्तारिता लघु । पार्श्वस्नात्राम्बुनोत्तीर्णां ज्ञात्वा मगधभूभुजा ॥४७७॥
नभोमण्डपमातन्वन् रविमाच्छादयन् समम् । जरासन्धो व्यधाद्बाण-वृष्टिं पाथोदवत्तदा ॥४७८॥
एकदा मगधाधीशे सम्पूर्णानुगमंयुते । कुर्वाणे सङ्गरे शत्रु-संहारकारकं भृशम् ॥४७९॥
इन्द्रदत्तरथारूढो नेमि-र्लक्षमितद्विपाम् । परितो भ्रामयामास तथा स्वं स्यन्दनं दृढम् ॥४८०॥युग्मम्॥
यथा निगडसन्नद्धा इवासंस्ते द्विपोऽखिलाः । स्तम्भिता इव ते तत्र दृश्यन्ते नरनिर्जरैः ॥४८१॥
निवृत्तेऽथ रणे ते तु मुत्कलाः प्रभुणा कृताः । कम्पमाना द्विपो नेमुः प्रभुपादाम्बुजद्वयम् ॥४८२॥
बलभद्रोऽथ शत्रुघ्नं मुशलेन रणाङ्गणे । चूर्णयन् विदधेऽकस्मात् प्रलयानेहसं तदा ॥४८३॥
पञ्चापि पाण्डवाः स्वस्व-शस्त्रैः शत्रून् प्रयुध्यतः । अतिथीन् विदधे प्रेत-पतेः प्राणापहारतः ॥४८४॥
जरासन्धः शये चक्रं स्फुरद् वह्निकणाऽऽचितम् । लात्वा जगाद भो गोप ! मुञ्च मानं च मां श्रय ॥
जीवन् भद्रमवाप्नोति जीवन् पश्यति मेदिनीम् । जीवन् करोति पुण्यानि जीवन् यासि निजं पुरम् ॥४८६॥
श्रयिष्ये त्वं न मे पादौ तदा चक्रमिदं द्रुतम् । कृष्ण ! भेत्स्यति ते मौलिं पयोजनालवद् द्रुतम् ॥४८७॥
जल्पन्तमिति मगधा-धीशं प्राह जनार्दनः । हत्वा त्वामहं समागां तु पाताऽस्मि न्यायमार्गतः ॥४८८॥
मुञ्च चक्रं जरासन्ध ! मा विलम्बं कुरु त्वकम् । इदं चक्रं ममेदानी-मनुकूलं भविष्यति ॥४८९॥
क्रुद्धस्ततो जरासन्धो भ्रामयित्वा शिरोऽभितः । कल्पान्तानलवद् भीदं चक्रं मुमोच तं प्रति ॥४९०॥
चक्रं प्रदक्षिणीकृत्य कृष्णस्य सुकृतोदयात् । अलश्चक्रे शयं विद्यु त्-पुञ्जवद्धरणीधरम् ॥४९१॥
स्वमर्द्धचक्रिणं कृष्णो जानन् सुस्वप्नसूचनात् । भ्रामयित्वाऽभितः शीर्षं (घनं) प्राहेति वैरिणं प्रति ॥४९२॥
चक्रं मम शये तस्थौ तव सैन्यं हतं बहु । यद्यद्यापि श्रय त्व मां चक्रं मुञ्चामि नो तदा । ४९३॥
जरासन्धो जगौ चक्रं ममेदं विद्यते हरे ! । तेन मे च न किमपि विघ्नमत्र करिष्यति ॥४९४॥
कृष्णमुक्तं तदा चक्रं जरासन्धस्य मस्तकम् । तथाऽछिन्दद् यथा सद्यो जरासन्धो मृतिं गतः ॥४९५॥
जरासन्धो हतः कंस-द्विषा चक्रेण तत्क्षणात् । जगाम नरकं तुर्यं नानादुःखप्रदायकम् । ४९६॥
यतः-"एगो य सत्तमीए पंच य छट्ठीइ पंचमी एगो । एगो य चउत्थीए कण्हो पुण तच्चपुढवीए ॥१॥"
जीयादेष मुराराति-श्चिर वासवविक्रम ! । इत्युक्त्वा ववृषुर्देवाः पुष्पौघं तस्य मस्तके ॥४९७॥
इतो मगधनाथस्य सहदेवमुखा सुताः । एत्य नेमुर्मुरारातिं मुक्त्वा प्राभृतमद्भुतम् ॥४९८॥
मुकुन्दो विनयात्तेषां तुष्टो राजगृहेशताम् । तेभ्यो ददौ लसन्मान-दानपूर्वं तदाऽचिरात् ॥४९९॥
पाटलाह्वां पुरीं वर्यां संस्थाप्य पञ्च पाण्डवाः । स्वकारिते जिनागारे-ऽतिष्ठिपन्नेमिनायकम् ॥५००॥
पुरं पञ्चासुरं पञ्च सुराः संस्थाप्य हर्षिताः । प्रासादान् कारयामासुः पञ्च कैलाससोदरान् ॥५०१॥
तेषां पार्श्वमहावीर-शान्तिनेम्यादिबोधिदान् । अस्थापयन् सुरास्ते तु भूयिष्ठकमलाव्ययात् ॥५०२॥
कुमाराह्वं पुरं राज-कुमाराः कमलाव्ययात् । स्थापयित्वा जिनागारे नेमिनाथमतिष्ठिपन् ॥५०३॥
पुरीं छत्रपतीत्याह्वां स्थापयित्वा शुभेऽहनि । नृपाश्छत्रधराः स्फारं जिनागारमकारयत् ॥५०४॥

तत्र श्रीशान्तिनाथस्य प्रतिमां बहुरैव्ययात् । कुमाराः स्थापयामासुः पूजयामासुरादरात् ॥५०५॥
येषां यत्राभवद्राज-धानी पूर्वमहीभुजाम् । कृष्णस्तेभ्यस्सुतेभ्यस्तां ददौ सन्मानपूर्वकम् ॥५०६॥
चक्रानुगोऽथ कंसारी-भूरिभूपनिषेवितः । चचाल भरतार्द्धं तु सद्यः साधयितुं ध्रुवम् ॥५०७॥
भरतार्द्धस्थितान् भूपान् मासैः षड्भिर्मुरारिणा । विजित्योर्ध्वं कोटिशिलां दध्रे च चतुरङ्गुलम् ॥५०८॥
यतः—"वामभूयंगे पढमेण धारिआ सरीरेण बीएण । तइएण कंठदेसे नेइ चउत्थो अ वच्छअले ॥१॥
पंचमओ पुण हियए छट्ठो पावेइ कडियल पएसं । सत्तमओ जा उरुजो जाणु नेइ अट्ठमओ ॥२॥
एएण नवमहरिणा एसा चउरंगुलं समु क्खित्ता । उच्चत्तवित्थरेण पत्तेअं जोअणपमाणं ॥३॥"
षोडशप्रमितै राज्ञां सहस्रैः सेवितः क्रमात् । कृष्णोऽलङ्कृतवान् द्वार-वतीं विलब्धुत्सवम् ॥५०९॥
मणी चक्रं धनुः खड्गं वनमाला गदा पुनः । शङ्खश्चेत्यभवद्रत्न सप्तकं कमलापतेः ॥५१०॥
अथ नेमिः सदा तुल्यैः कुमारैर्निर्जरोपमैः । सार्द्धं वितनुते क्रीडा-मुद्यानादिषु सन्ततम् ॥५११॥
रममाणोऽन्यदा कृष्ण-युधशालान्तरे प्रभुः । गतो गदां शये यावल्लातु-कामोऽभवल्लघु ॥५१२॥
तावदायुधपालोऽवग् गदामेनां विना हरिम् । नैवोत्पाटयितुं कोऽपि नरो वा नृपतिः प्रभुः ॥५१३॥
एवं जल्पति तस्मिंश्च गदामुत्पाट्य लीलया । भ्रमयामास शीर्षस्या-भितो नेमिः शिवाङ्गजः ॥५१४॥
तदैवायुधपालेन वार्यमाणः प्रभुस्तदा । कुलालचक्रवच्चक्रं नेमिरभ्रामयत्तदा ॥५१५॥
ततश्चायुधपालेन वार्यमाणः प्रभुर्भृशम् । चटयित्वा धनुश्चक्रे टणत्कारं मुकुन्दवत् ॥५१६॥
ततश्च वार्यमाणोऽपि शस्त्रपालेन तत्क्षणात् । खड्गमुल्लालयामास पतन्तं च करे दधौ ॥५१७॥
ततश्चायुधपालेन मुकुन्दादधिकारवम् । वार्यमाणो भृशं स्वामी शङ्खमापूरयद् दृढम् ॥५१८॥
शङ्खनादेन मातङ्गा रज्जूरत्रोटयन् दृढाः । तुत्रोटुर्गिरिशृङ्गाणि कम्पमापन्नसुन्धरा ॥५१९॥
उत्कल्लोलेनाभवद्वार्द्धिः प्लावयन् वसुधातलम् । आवासा भित्तयस्त्रोटं त्रोटंपेतुर्दृढा अपि ॥५२०॥युग्मम्॥
उक्तञ्च—"चक्रं येन कुलालचक्रवदलंगुल्या भृशं भ्रामितं, सारङ्गं च धनुर्मृणालवदलं येन स्वयं नामितम् ।
विष्णोरप्यसमं श्रमभ्रमकरीं कौमोदकीं यष्टिवद्, येनोत्पाट्य निज वदा भुजतरौ शाखाश्रियं प्रापिता ॥१॥
विष्णोः शङ्खवरेऽरविन्दवदलं येन स्वयं पूरिते, स्तम्भोन्मूलमनेकपा हयवरा उद्बन्धनास्त्रस्तिरे ।
विश्वं द्राग् बधिरं धरापि विधुरा वप्रश्चकम्पेऽधिकं, पेतुस्ते मृतका इवाभवदलं शङ्का स्वबन्धो हरेः ॥२॥
सञ्चेलुः शैलनाथा विचलितमिलया भीतिभीताः समुद्राः सत्रासुर्दिग्करीन्द्राः भ्रमणपरिगतैर्मूर्च्छितं यादवेन्द्रैः ।
ब्रह्माण्डं खण्डखण्डैः स्फुटितमुदधिभिः प्लावितं भूमिपीठं यस्येत्थं शङ्खखड्ग भ्रमणविलसिते सोऽस्तु नेमिः शिवाय
शङ्खस्यारवमाकर्ण्य चकितो ध्यातवान् हरिः । उत्पन्नः किं नवः कृष्णः साम्प्रतं बलवान् पुनः ? ॥५२१॥
जरासन्ध इवाह्वाय प्रत्यर्थी साम्प्रतं ह्ययम् । यमस्य सदने प्राण त्यागान्नेतव्य एव तु ॥५२२॥
इत्युच्चरन् हरिर्हस्तघात-कम्पितभूतलम् । सिंहनादादरिर्हन्तु-मुत्तस्थौ त्वरितं तदा ॥५२३॥
नेदुर्यद्विग्रहारम्भ-कारिवादित्रनिस्वनाः । तावदस्त्रगृहाध्यक्षो-ऽभ्येत्य नत्वा हरिं जगौ ॥५२४॥
नादयित्वा धनुः शार्ङ्गं कृत्वा खड्गं करे निजे । उत्पाट्य ते गदा चक्रं नेमिरभ्रामयद् भृशम् ॥५२५॥
मयका वार्यमाणोऽपि कौतुकान्नेमिनन्दनः । लीलयाऽपूरयच्छङ्खं चक्रे च बधिरं जगत् ॥५२६॥

तस्मान्मुञ्च रुषं शत्रु-समागमसमुद्भवम् । तवाऽयं विघ्नते भ्राता-ऽरिष्टनेमिर्बली नयी ॥५२७॥
आकर्ण्यैतन्निजभ्रातु-र्बल श्रीनेमिनस्तदा । कंसारिर्व्यरमद् वैरि-वधारम्भाच्च तत्क्षणात् ॥५२८॥
तदा नेमिः समागत्य तत्र संमर्दि केशवम् । बलभद्रं ननामान्य-वृद्धानपि च यादवान् ॥५२९॥
नमन्तं नेमिनं बाल-कुमारं वीरविक्रमम् । वीक्ष्य क्रीडावनक्षोऽभूद् भूमि पश्यन् जनार्दनः ॥५३०॥
क्षणात् कृष्णो जगौ भ्रात-र्गत्वा त्वमायुधालये । शङ्खस्य वादनं बाटं व्यधात् तच्च वरं कृतम् ॥५३१॥
चक्रासिभ्रामणं चाप-ताडनं विहितं हि यत् । भवता तदधीदानीं वरं बालत्वभावतः ॥५३२॥
कदाचिद् हस्ततश्चक्रं भ्रमत्पतति मस्तके । तदाऽकस्माद्भवत्येव मृतिर्वा तेऽङ्गभञ्जनम् ॥५३३॥
तेन नैवंविधा क्रीडा क्रियते बालभावतः । त्वं विज्ञोऽसि ततः शिक्षा दीयतेऽस्माभिरत्र किम् ? ॥५३४॥
शङ्खादिपूरण क्लेश-कारकं दुःखदायकम् । विद्यतेऽतो मया तेऽग्रे कथ्यते मृदुवाक् पुनः ॥५३५॥
नेमिर्जगौ त्वया कृष्ण ज्येष्ठभ्रात्राऽत्र शिक्षणम् । जल्प्यते तद्वरं भ्रातु-र्लघोर्हितकृते भवेत् ॥५३६॥
श्रुत्वैतच्चकितः कृष्णो द्रष्टुं नेमिबलं जगौ । मया तेऽसे शयो न्यस्तः मद्यस्त्वं बालयाऽधुना ॥५३७॥
नेमिः सुलीलया कृष्ण-शयं कमलनालवत् । अबालयत् ततः कृष्णः प्राहेति नेमिनं प्रति ॥५३८॥
स्वस्कंधे स्वशयं बाढं स्थापय त्वं तु लीलया । बालयिष्याम्यहं श्रीश-प्रोक्तं नेमिस्ततो व्यधात् ॥५३९॥
मुकुन्दो बालयन्नेमि-हस्तं न बलतो यदा । तदा दोपि प्रभोः शाखा-लग्नकीर इवाभवत् ॥५४०॥
नेम्यंसतरुशाखायां कृष्णो हिण्डोलिते सति । हरिर्हिण्डोलितः ख्याति-रिति जाता तदा जने ॥५४१॥
नेमेस्तादृग् बलं दृष्ट्वा विखिन्ने केशवे सति । बलभद्रो जगौ कृष्ण ! त्वं विषादं कुरुष्व मा ॥५४२॥
अस्मिन् नेमौ स्थितो गर्भे शिवा माता वराशया । चतुर्दश महास्वप्नान् सुखसुप्ता ददर्श सा ॥५४३॥
तेनासौ न हि राज्यार्थी दीक्षार्थी नेमिरस्ति च । दृश्यतेऽस्य मनो नित्यं निस्पृहं शिवशर्मणि ॥५४४॥
असौ नेमिकुमारस्तु द्वाविंशो जिननायकः । तीर्थं चतुर्विधं स्थाप-यिष्यति शिवशर्मणे ॥५४५॥
कृष्णेन स्वबलावलोकनकृते बाहुं तिरोनामितं, श्रोद्दण्डं निजलीलया व्यनमयत् स्वं नालनासं तदा ।
यद् बाहुं नमयन्नयं पुनरभूत् पादोज्झितोर्वीतलं, शाखालम्बितकीरवत् स जयतात् त्वं विश्वविश्वाद्भुतः ॥
श्रुत्वैतद् बलभद्रस्य वचस्तत्र जनार्दनः । हृष्ट सन्मान्य नेमिं तु निजावासे समीयिवान् ॥५४७॥
यतः-एव बलोक्तमाकर्ण्य भिन्नसंशय आशये । स्वागसः क्षमयामास नेमिमालिङ्गयन् हरिः ॥५४८॥
द्वास्थायुधगृहाध्यक्षा-नाकार्यादिशदच्युतः । निषेध्यो न हि कुत्राप्या गच्छन् यान् नेमिरेष हि ॥५४९॥
शिवा वक्ति मुकुन्दस्य पुरतो नेमिनन्दनः । बोधनीयस्तथा कन्यां यथाऽङ्गीकुरुतेतराम् ॥५५०॥
भो गोपिका ! भवन्तीभिस्तथा बोधाऽङ्गजो मम । यथाऽसौ वृणुते कन्या-मित्याचष्ट शिवा तदा ॥५५१॥
वत्सोद्वाहकर्नीं माता यदाऽऽहाऽवग् तदा सुतः । कन्यां योग्या यदा लप्स्येऽङ्गीकरिष्ये तदाऽम्ब ! ताम्॥५५२
"वत्स ! त्वं कुरु नः प्रमोदविधये वीवाहमेवं यदा, प्रोक्तं श्रीशिवयाऽम्बया जिनमतोऽवादीस्त्वमेवं तदा ।
योग्यामम्ब ! कनीमहं ननु यदा लप्स्ये वरिष्ये तदेत्युक्त्वा मोदयदंबिका गुरुतरं तत्ते गुरुत्व गुरोः ॥१॥"
अन्यदा केशवो नेमि-युक्तोऽन्तःपुरसंयुतः । दीर्घिकायां जलक्रीडां विधातुं प्राविशत्तमाम् ॥५५३॥
कृष्णेन प्रेषिता गोप्यो नेमेरुद्वाहहेतवे । जलोच्छलनदम्भेना छोटयन् देवरं भृशम् ॥५५४॥

चश्वत् कुङ्कुमपिण्डेन निजघान हरेरुरः । काचित् कृष्णं जलक्षेपाद् व्याकुलं कुरुतेतराम् ॥५५५॥
भो देवर ! जलक्रीडां क्रियतां हरिवल्लभाः । जल्पन्तीति जलक्षेपान्नेमिनं व्याकुलं व्यधुः ॥५५६॥
गोपीनां वहुभिर्हाव-भावैर्लोचनकूणितैः । न विकारमगान् नेमि-चित्तं मेरुरिवानिलैः ॥५५७॥
निर्गत्य जलतो गोप्यः सुमनोमुकुटादिभिः । भूषयन्त्यो हरिं नेमिं भूषयामासुरादरात् ॥५५८॥
हास्यं रसं वितन्वन्त्यो गोप्यो भामादयो जगुः । भो नेमे ! कुरु कन्यायाः सङ्ग्रहं सुखहेतवे ॥५५९॥
पुरुषः शोभते नार्या नरेण तु नितम्बिनी । भाति भूपोऽनुगैर्भूपैं राजन्ते सेवकाः पुनः ॥५६०॥
किं नेमे ! प्रियया रिक्तो लब्धं देहमिदं किल । विश्ववंद्य ! त्वमेकाकी हा ! हा ! हारयसि वृथा ॥५६१॥
स्युः षोडश सहस्राणि स्त्रीणां भ्रातुर्हरेस्तव । एकस्या योषितोऽपि त्वं निर्वाहं किं करोषि न ? ॥५६२॥
जगौ जाम्बुवती भामे ! देवरोऽयं नपुंसकः । विद्यते तेन न स्त्रीणां सङ्ग्रहं कुरुते मनाग् ॥५६३॥
भामाऽवग् नाभिपुत्राद्या जिनाः कृतपरिग्रहाः । शिवं ययुरतः स्थान-मधिकं किं समीहसे ? ॥५६४॥
नेमिः प्राह कनीं योग्यां लप्स्ये तदा वृणोमि ताम् । भामा प्रोवाच ते योग्यां कन्यामत्रानयाम्यहम्॥५६५॥
यतः-'वसन्ते विविधाः क्रीडा गोपिकागणमध्यगः । चकार निर्विकारस्तु सविकारं न मानसम्' ॥५६६॥
नेमिर्दध्यौ रुषमेषा विधाय स्थास्यति स्वयम् । तेन मौनव्रतं श्रेय इदानीं मम निश्चितम् ॥५६७॥
आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधकम् ॥५६८॥
नेमिना विहिते मौने सत्यभामा जगावदः । पाणिग्रहमसौ मेने देवरो नेमिनायकः ॥५६९॥
तदा गोप्योऽखिला प्रोचु-र्वयं जातमिदं खलु । यतोऽसौ देवरः पाणि-ग्रहणं च करिष्यते ॥५७०॥
मया न मानितं ह्येतद् यद्येवं च वदाम्यहम् । तदैताभिः प्रजल्प्येत देवरोऽमत्यवागयम् ॥५७१॥
एवं मौने कृते तत्र कुमारेण जनार्दनः । नेमिनं गजमारोप्य सप्रियो गृहमाययौ ॥५७२॥
नेमिर्मातुः पितुः पार्श्वे गत्वाऽऽचष्ट रमापतिः । कन्यापाणिग्रहोऽमानि नेमिना मद्वचश्छलात् ॥५७३॥
मत् प्रियोदितान् ........ ॥५७४॥
समुद्रविजयश्रीश-शिवाः प्रोचुर्वरां कनीम् । विलोक्य कार्यते पाणि-ग्रह नेमिरय क्षणात् ॥५७५॥
भामा तदा जगौ राजी मती मे भगिनी कनी । योग्याऽस्ति नेमिनो रूप-लावण्यसम्पदा स्फुटम् ॥५७६॥
शिवाया रुचितं ज्ञात्वा यदोग्रसेनसद्मनि । कृष्णो गतस्तदाऽमानि तेन विष्टरदानतः ॥५७७॥
कृष्णोऽवग् भवतो राजी-मती पुत्री तु विद्यते । तेन नेमिकुमारेण सहोद्वाहश्च कार्यते ॥५७८॥
उग्रसेनो जगौ गेहा-दिक सर्वं तवास्ति च । मां किं प्रक्ष्यसि लक्ष्मीश ! यथारुचि विधीयताम् ॥५७९॥
ततो नैमित्तिक मद्य आकार्य कमलापतिः । श्रावणश्वेतपष्ठ्यां तु ललौ लग्नं समीपतः ॥५८०॥
ततो यदुनिकेतेषु मधुरैर्धवलाग्र्यैः । गायन्त्यो योषितः श्रुत्वा श्रोतुं लोकाः समाययुः ॥५८१॥
मुकुन्दो द्वारकापुर्या-मुद्वाहागमनवासरे । प्रत्यट्टं च प्रतिद्वारं तोरणालीमकारयत् ॥५८२॥
श्रृङ्गारितेषु सर्वेषु सज्जनेषु मुरारिणा । दीयते स्वन्नपानादीस्तेभ्योऽप्यादरपूर्वकम् ॥५८३॥
कर्पूरगन्धवृल्यादि-वासितैर्वारिभिर्वरैः । स्नपयित्वा प्रभुं गोप्यः प्रददुर्धवलानि तु ॥५८४॥
स्नानान्ते दिव्यवसनैः परिधाप्याऽथ नेमिनम् । गोप्यः सिंहासने वर्ये सद्यो न्यवीविशन् मुदा ॥५८५॥

उग्रसेनालये गत्वा कोसुम्भीं वरटिकां वराम् । राजिमत्यै ददौ कृष्णः सद्यः सन्मानपूर्वकम् ॥५८६॥
अथ लग्नक्षणे श्वेत-वस्त्राभरणभूषितः । गोशीर्षचन्दनालिप्त-तनुः स्वामी विराजते ॥५८७॥
चामरैर्वीज्यमानो स्व-धृतछत्रोलसच्छिरा । नेमिरारूढवान् वर्य-रथं मन्मथसन्निभः ॥५८८॥युग्मम्॥
यदूनां कोटिभिर्वर्य-कुमारैः सदृशै रयात् । कृष्णादिभिर्नरेन्द्रैश्च नेमिः परिवृतोऽभितः ॥५८९॥
उच्चार्यमाणैर्धवलै नृत्यद्भिर्नर्त्तकैर्जनैः । पठद्भिर्बन्दिभिर्वाद्य-मानैरतूर्यैरनेकशः ॥५९०॥
दृश्यमानोऽक्षिकोटिभि-र्वर्ण्यमानो विचक्षणैः । वर्द्धाप्यमानो नारीभिः नेमिनाथः पदे पदे ॥५९१॥
चचाल भूमिभुग्मार्गे उग्रसेननृपात्मजाम् । राजीमतीं लसद्रूपां परिणेतुं शुभे क्षणे ॥५९२॥ त्रिभिर्विशेषकम्
इतः स्नाता लसद्वस्त्रा वर्यभूषणभूषिता । सखीपरिवृता तस्थौ ध्यायन्ती नेमिनं हृदि ॥५९३॥
वातायनमथाऽऽरुह्य सखी राजीमती जगौ । आयान्तं नेमिनं पश्य रूपावर्जितमन्मथम् ॥५९४॥
तदा राजीमती वीक्ष्य नेमिमायान्तमध्वनि । अय चेन्मे पतिर्जात-स्तदा भाग्यं महत्तमम् ॥५९५॥
क्षणेन दक्षिणे नेत्रे स्फुरिते राज्यवक् तदा । दक्षिणं प्रस्फुरच्चक्षुः किं करिष्यति साम्प्रतम् ? ॥५९६॥
यतः—"साहेइ विप्फुरंतं इट्ठं पुरिसस्स दाहिणं नयणं । वामं कहेइ अणिट्ठं इय भणियं पुव्वपुरिसेहिं ॥१॥
साहेइ इट्ठं नारीण वामयं चक्खु दाहिणं कहेइ अणिट्ठं" इय० ॥२॥"
थूत्कारं तु सखी कृत्वा जगौ राजीमतीं प्रति । अशुभं ते गतं श्रेयः समेतं विद्धि साम्प्रतम् ॥५९७॥
राजीमती जगौ भद्र-वाण्या किं जायते शुभम् ? । शर्करोच्चारतो वक्त्रे शर्करा किं प्रविक्ष्यति ? ॥५९८॥
सखी प्राहेति तदा—"एकच्चिअ राइमई विणयावग्गंमि वण्णणिज्जगुणा ।
जीसे नेमि करिस्सइ लावण्णनिही करग्गहणं ॥१॥
चन्द्रानना जगौ तदा-'रायमईए रूवं विही विनिम्मिय रंभरूवहरं । न करिज्जावि संजोगं हविज्ज ता नूणमजसभरं ॥
किं वा पायालकुमरो किं वा मयद्धओ अह सुरिंदो । मह चेव मुत्तिमंतो अह एसो पुण्ण(संदोहो)मय वरो॥२"
हमित्वैका सखी जगौ-एषा परिणीतात्मनो नोपलक्षिष्यति इत्यादि, ।
इतो नेमिः समागच्छन् पशून् करुणसंरवान् । श्रुत्वा सारथीमप्राक्षी-देते के पशवो वद ? । ५९९॥
सारथिः प्रोक्तवान् पाणि-पीडने ते शिवाङ्गज ! । यदूनां गौरवार्यैते पशवो मेलिता यथा ॥६००॥
छागी छग हुडा हुडो ललायुर्गण्डकः किरिः । भल्लूकोऽपि च जम्बूको मर्कटो हरिणो दरः ॥६०१॥
कलापी बर्हिणः काक पुष्टः सकृत्प्रजः पुनः । मद्गुर्वनाश्रयो घूक-स्ताम्रचूडः सितच्छदः ॥६०२॥
चरटा खञ्जरीटश्च खञ्जरीटः सलक्षणः । क्रौञ्चः किकिदिवश्चम-वाकश्चटुकश्चुटी ॥६०३॥
दात्यूहश्च बकोटश्च क्रूरः शारिकस्तथा । पारापतः शकुन्तश्च गुञ्जलो विपक्षचकः ॥६०४॥
तित्तिरं कुम्भकारश्च हारीतो मरुलस्तथा । इत्याद्या पशवोऽनेके मेलिताः सन्ति साम्प्रतम् ॥६०५॥
स्वं स्वं मोचयितुं ह्येतान् पशून् प्रजल्पतः सतः । नेमिर्ज्ञात्वा जगौ सूत ! रथं वालय सत्वरम् ॥६०६॥
तदलं बन्धुवर्गस्य स्नेहेन विषयेन मे । प्रस्थितस्य शिवागारे जीवहिंसाऽर्गला स्मृता (तेनैव पापात्मनः) ॥६०७
छोटयित्वा पशून् सर्वान् बन्धान् सारथिपार्श्वतः । नेमिः स्वस्यन्दन सद्योऽवालयत् सूतपार्श्वतः ॥६०८॥
नेमिं व्यावर्त्तितरथं दृष्ट्वा तदा यदूत्तमः । समुद्रविजयो माता शिवा गोप्योऽखिला जगुः ॥६०९॥

वत्स ! स्वच्छाऽधुना मा त्वं रथं पश्चाच्च वालय । परिणीय वधूं हर्ष-मस्माकं कुरु शीघ्रतः ॥६१०॥
नेमिः प्राह पशूनां तु वधे भवति दुर्गतिः । अतो मया न कर्तव्यं कन्यायाः पाणिपीडनम् ॥६११॥
समुद्रविजयः प्राह पूरयाऽस्मन्मनोरथान् । नाभेयाद्याः कृतोद्वाहाः मुक्तिं जग्मुर्जिनोत्तमाः ॥६१२॥
ततोऽप्युच्चैः पदं ते स्यात् कुमार ब्रह्मचारिणः । ततो राजीमती पाणि-पीडनं कुरु वेगतः ॥६१३॥
नेमिः प्राहैककन्यायाः सङ्ग्रहेऽनन्तदेहिनाम् । वधो भवति नो तेन वक्तव्यं भवता यतः ॥६१४॥
तदा शिवा जगौ-पत्थेमि जणणिवच्छलवच्छ ! तुमं पढमपत्थणं किंपि । काऊण पाणिग्गहणं मह दंसे निअ वहूवयणं
चन्द्रानना जगौ—"आकण्णय कण्णरसायण जणणि भणियस्स पडिवयणं ।
तित्थयरेहिं वि जणणी मन्निआ भिन्नए लोए ।१॥"
राजीमती जगौ--"जइ सयलसिद्धभुत्ताइ धुत्त ! रत्तोऽसि मुत्तिगणीयाए ।
ता एवं परिणयणारंभेण विडंबिआ किमहं ॥१॥"
सख्यः प्रोचुश्चेति—"पिम्मरहिअंमि पियसहिअ ! एयम्मि किं करिमि पियभावं ? ।
विम्मपरं किंपि वरं अन्नयरं ते करिस्सामो ॥१॥"
राजीमती कर्णौ पिधाय जगाविति—"सहि ! एयं असोअव्वं तुमंपि जंपसि किमिह मज्झ पुर ।
जइ कह वि पच्छिमाए उदयं पावइ दिणयरो तहवि । मोत्तूण नेमिनाहं करेमि नाहं वरं अन्नं ॥१॥
जय विहु एअस्स करे मज्झ करो नत्थि परिणयणसमए । तहवि मिरे मह सु चिय दिक्खासमए करो होउ ॥२॥"
नेमिः प्राह मया ज्ञातं संसारस्य सुखं किल । ममाऽतो विद्यते मुक्ति-सातवाञ्छा मनोहरा ॥६१५॥
इतः सारस्वता देवा समेत्य स्वर्गतस्तदा । प्रोचुरेवं जय त्वं तु धर्मतीर्थं प्रवर्त्तय ॥६१६॥
जय निर्जितकन्दर्प ! जन्तुजाताभयप्रद !। नित्योत्सवावतारार्थं नाथ ! तीर्थं प्रवर्तय ॥६१७॥
ततोऽभ्येत्य गृहे नेमि-र्दानं सांवत्सरं रयात् । वर्षं यावददौ पृथ्वी-मनृणां विदधे क्रमात् ॥६१८॥
तथाहि-'एगा हिरण्णकोडी अट्ठेव य अणूणगा सयसहस्सा । सूरोदयमाइयं दिज्जइ जा पाउरासाओ ॥१ ।
तिन्नेव य कोडी सया अट्ठासीयं च हुंति कोडीओ । असीयं च सयसहस्सा एयं संवच्छरे दिन्नं ॥२ ।'॥
ततः स्नानं प्रभुः कृत्वा परिधायाऽम्बराणि च । कृष्णेन शिबिकायां तु कृतायां न्यविशत्तमाम् ॥६१९॥
विज्ञायाऽवधिना नेमेः संयमग्रहणक्षणम् । इन्द्रोऽभ्येत्य व्यधाचार्वी-मुत्तरा शिबिकां वराम् ।६२०॥
आदौ तु कृष्णविहितां शिबिकामारुह्य नेमिः । पुराद्बहि स्तात् ···· त्सवं समुपेयिवान् ॥६२१॥
द्वयोः शिबिकयोरेकी-भूतयोस्तत्र तीर्थपः । उपविष्टोऽचलच्छक्र-धृतछत्रेन्द्रवीजितः ॥६२२॥
हरिमुख्यनृपैः शक्रे-शानाभ्यां भूमिनिर्जरैः । परिवृतोऽर्थिभिर्गीय-मानानूनगुणव्रजः ॥६२३॥
गत्वा रैवतकोद्याने-ऽवरुह्य शिबिकासनात् । कृतषष्ठतपाः पञ्च-मुष्ट्या लोचं व्यधात्तदा ॥६२४॥ त्रिभिर्विशेषकम्
हायनानां त्रिशत्या तु जन्मधस्त्राद् गते सति । नभोधवलषष्ठ्यां तु पूर्वाह्णे त्वाष्ट्रगे विधौ ॥६२५
निवृत्ते तुमुले सामा-यिकस्योच्चरणक्षणे । प्रभोर्ज्ञानं समुत्पन्नं तुर्यं वाचंयमोचितम् ॥६२६ ।युग्मम् ।
तिहिं नाणेहिं समग्गा तित्थयरा जाव हुंति गिहिवासे । पडिवन्नम्मि चरित्ते चउनाणी जाव छउमत्थे ॥१।
सहस्रं भूभुजा लोचं विधाय प्रभुवत्तदा । जग्राह संयमं स्वामि-भक्त्या केचित् स्वभावतः ॥६२७॥

कृष्णेन्द्रादिषु यातेषु स्वस्वस्थाने नृपादिषु । वरदत्तद्विजावासे गोष्ठस्थेऽह्निद्वितीयके ॥६२८॥
पारणं परमान्नेन यावत् प्रभुर्व्यधात्तमाम् । तावत्तत्र गृहे रत्न-वृष्टिं चक्रुः सुधाभुजः ॥६२९॥युग्मम्॥
यत-'अद्ध य तेरस कोडी उक्कोसा तत्थ होइ वसुहारा । अद्ध य तेरस लक्खा जहन्निया होइ वसुहारा ॥१॥'
विहारं कुर्वतोऽहस्सु चतुःपञ्चाशति व्रतात् । गतेषु केवलज्ञानं सहसाम्रवनेऽजनि ॥६३०॥
सद्यः सुरवर्गैरेत्य तत्र वप्रत्रये कृते । उपविष्टो जिनो नेमि-र्दातुं धर्मोपदेशनाम् ॥६३१॥
इत उद्यानपस्याऽऽस्याद् ज्ञानोत्पत्तिं प्रभोस्तदा । मत्वा हृष्टो ददौ दानं मुरारातिर्यथोचितम् ॥६३२॥
कृष्णः समुद्रविजय-शिवाभामादिसंयुतः । गत्वा तत्र प्रभोस्तिस्रः प्रदक्षिणा व्यधाद् द्रुतम् ॥६३३॥
वलिं कृत्वा प्रभुं नत्वा स्थाने यथोचिते हरौ । उपविष्टे परे स्वस्वो-चिते स्थाने न्यवीविशत् ॥६३४॥
"राया व रायमच्चो तस्सासइ पउर जणवओ वावि । दुब्बलिखंडिय वलि छडीअ तंदुलाणाढगं कलमा ॥१॥
भाइअपुणाणियाणं अखंडफुडियाण फलगसरियाणं । कीरइ वली सुरावि अ तत्थेव च्छुहंति गंधाइ ॥२॥
वलिपविसणसमकालं पुव्वदारेण ठाई परिकहणा । तिगुणं पुरओ पाडण तस्सद्धं अवडियं देवा ॥३॥
अद्धद्धं अहिवइणो तदद्धमो होइ पागयजणस्स । सव्वामयप्पसमणी कुप्पइ नऽन्नो अ छम्मासे ॥४॥"
इतः पुरे कुबेराह्वे कोटिनार्यभिधे पुरे । देवभट्टद्विजन्माभू-द्देवलाऽजनि गेहिनी ॥६३५॥
क्रमात् तयोर्भूत् सोम-भट्टः पुत्रो मनोहरः । सोमभट्टस्य पत्न्यासी-दम्बिका जिनधर्मकृत् ॥६३६॥
क्रमाद्दिवं गते देव-भट्टे निकेतनप्रभुः । सोमभट्टो व्यधात् पितृ-कृत्यं सद्गतये तदा । ६३७॥
तदैव श्राद्धदिवसे मासक्षपणपारणे । भिक्षायै संयतं द्वन्द्वं सोमभट्टालये ययौ ॥६३८॥
साधू तौ शमिनौ वीक्ष्य दध्याविस्यम्बिका हृदि । ममाऽद्य सदनं जातं पवित्रं संयतागमात् ॥६३९॥
श्वश्रूरेव गृहे नास्ति शुद्धमन्नं गृहे पुनः । प्रतिलाभ्य यती चेमौ कृतार्थाऽद्य भवाम्यहम् ॥६४०॥
ध्यात्वेति हर्षिताऽऽदाय शुद्धमन्नं करे निजे । अम्बिकाऽवग् यतीनां तु चान्नं प्रासुकमुत्तमम् ॥६४१॥
शुद्धमन्नं तदा ज्ञात्वा धत्तः पात्रं यती वरौ । तदाऽम्बिका मुदा साध्वो-स्तयोरन्नं ददौ द्रुतम् ॥६४२॥
हव्यकव्यमकृत्वा तां ददानां दानमम्बिकाम् । दृष्ट्वा प्रातिगृहिण्येका तस्यामीर्ष्यां व्यधात्तमाम् ॥६४३॥
तस्याः श्वश्रूर्यदाऽऽयाता तदाऽवक् प्रातिगेहिनी । अकृत्वा हव्यकव्यादि भवत्याः स्नुगेहिनी ॥६४४॥
अनादृत्य भवन्तीं तु साधुभ्यामन्नमाददात् । अदिताथ न तेनैव रुचिरा विद्यते ननु ॥६४५॥
तदाऽम्बिका भिया कम्प-माना श्वश्रूसमीपतः । कृष्णपक्षेन्दुवत् कार्श्यं बभारानघमानसा ॥६४६॥
इतः सोमो द्विजान् प्रेत-कृत्यायाऽऽनीतवान् गृहे । पत्नीकृत्यं निशम्याथ तर्जयामास तां प्रियाम् ॥६४७॥
अम्बिका तर्जिता पत्या श्वश्रा च दूनचेतसा । लात्वा शुभंकरं विभु-करं सूनुद्वयं तदा ॥६४८॥
तौ मुनी मानसेऽत्यन्तं स्मरन्ती नेमिनं जिनम् । चचाल रैवतक्षोणी-धरस्य दिशि वेगतः ॥६४९॥युग्मम्॥
मार्गे यान्त्यम्बिका खिन्ना बुभुक्षापीडितौ सुतौ । दर्शं दर्शं रुरोदेति जल्पन्ती दैवतं प्रति ॥६५०॥
रे दैव ! किं मया चक्रे-ऽपराधस्तेऽधुना किल । येनेदृशामहं नीताऽवस्थां पुत्रयुता त्वया ॥६५१॥
साधुभ्यां शुद्धमाहारो मया मुक्तिप्रदो ददे । पापं न विहितं किञ्चित् किन्तु धर्मः कृतः किल ॥६५२॥
एवं कृते मया पुण्ये साधुदानेन ते किल । यत्ते समे न चित्ते तत् कुरु त्वमपि साम्प्रतम् ॥६५३॥

जल्पन्त्या इति तस्यास्तु सरो वर्याम्बुपूरितम् । फलिताम्रतरुश्चासि समागाद् दृष्टिगोचरे ॥६५४॥
एकं पुत्रं कटौ धृत्वा कृत्वाऽन्यं पाणिनाऽन्तिके । अम्बिका त्वरितं कान्त-भीता चचाल कानने । ६५५॥
पाययित्वा पयः पुत्रौ सरस्याम्रमहीरुहात् । गृहीत्वाऽऽम्रलताद्वन्द्वं पुत्राभ्यामम्बिका ददौ ॥६५६॥
पुण्यप्रभावतोऽरण्य-मभूदाम्रलतोदयम् । ध्यायन्ती हृदयेऽचाली-दम्बिका नेमिनं जिनम् ॥६५७॥
इतो ममान्नमुच्छिष्टं बध्वाऽद्य साधुदानतः । चक्रे ध्यात्वेति गेहान्त-र्ययौ रोषेण पूरिता ॥६५८॥
अन्नपूर्णान्यमत्राणि बहिः क्षेप्तुं यदाऽम्बिका । गृहमध्ये ययौ ताव-दपश्यद् रमयानि सा ॥६५९॥
अध्यासीदम्बिका जैन-साधुदानप्रभावतः । ममागमद् गृहे स्वर्णा-ऽमत्रमेतन् मनोहरम् ॥६६०॥
मुधा मया वृषो जैनो धिक्कृतो मुक्तिशर्मदः । जगद्वन्द्या जगद्ध्येयाः साधवश्चावहीलिताः ॥६६१॥
अतो मे दुर्गतौ पातो भविष्यति न संशयः । भ्रमिष्यामि च संसारे भवान् भूरितरान् पुनः ॥६६२॥
इतः पतिः प्रियां पुत्र-युतां यातां निजालयात् । सद्यो वालयितुं भ्रान्त-चेताः पुर्या बहिर्ययौ ॥६६३॥
पदे पदे प्रियापादौ पश्यन् सोमस्तदाऽचलत् । वने बभ्राम सर्वत्र सोमभट्टस्य गेहिनी ॥६६४।
शब्दयन् पतिः पत्नीति सोमभट्टः पुनः पुनः । आगच्छन् त्वरितं दृष्टोऽम्बिकया कम्पितं ततः ॥६६५॥
अध्यासीदम्बिका रुष्टः कान्त एव ममोपरि । आहत्य हस्तपादाद्यैः मां हनिष्यति वेगतः ॥६६६॥
नाधुना रक्षिता कोऽपि मामत्र वीक्ष्यते वने । दत्ते भूर्विवरं चेन्मे प्रविशामि तदाऽहकम् ॥६६७॥
मुनिभ्यां यन्मया दानं दत्तं तच्छरणं मम । ध्यायन्त्या इति तस्यास्तु कूप एकः समागमत् ॥६६८॥
भूयासुः शरणं मेऽत्र पञ्चैव परमेष्ठिनः । धर्मो जिनोदितो नेमि-नाथस्य चरणौ पुनः ॥६६९॥
स्मरन्तीत्यम्बिका पुत्रौ स्मारयन्ती पदे पदे । पुत्रयुक्ता ददौ झम्पां कूपे तस्मिन् कृतत्वरा ॥६७०॥
मृत्वाऽजनिष्ट पाताल-वासिनी निर्जरी वरा । पुत्रद्वयाश्रितोत्सङ्गा भास्वद्द्युतिधारिणी ॥६७१॥
मा पत त्वं प्रिये ! कूपे सोमभट्टे प्रजल्पति । सुतद्वयीयुता सद्योऽम्बिका पपात वेगतः ॥६७२॥
मृतां पुत्रयुतां पत्नीं दृष्ट्वा सोमो व्यचिन्तयत् । इमां प्रियां विना किं मे जीवितेनामुनाऽधुना ॥६७३॥
विना पुत्रौ विना पत्नीं गत्वा पश्चान्निजालये । कथं दर्शयिता वक्त्रं स्वजनानामहं किल ॥६७४॥
प्रिया पुत्रयुता मृत्युं गता ममाधुना खलु । अतो मृत्युरपि श्रेयान् जीवितेन किमस्तु मे ? ॥६७५॥
विमृश्येति ततः कूपे पतित्वा सोमभट्टकः । आसीदम्बावने सिंह-नामा देवः स्फुरद्द्युतिः ॥६७६॥
इभारिवाहनीं तां च जितेन्दुवरभूषणाम् । पीयूषदेश्यवाग्मार्गां कम्बुकण्ठीं स्फुरद्द्युतिम् ॥६७७॥
सुरस्त्रीसेव्यमानाङ्घ्रीं दर्शनीयां चतुष्टमाम् । पाशाम्रलुम्बके वामे हस्ते च दधतीं वराम् ॥६७८॥
वहन्तीं दक्षिणेनाङ्ग-जन्मद्वयाङ्कुशौ पुनः । हेमप्रभावतीं वीक्ष्य प्राहेत्येकः सुरस्तदा ॥६७९॥त्रिभिर्विशेषकम्
देव ! त्वया पूर्वभवे तपांसि दानानि तीर्थानि वृषाणि कानि ।
कृतानि यद् व्यन्तरसुन्दरीणा जातासि नः स्वामिनि ! सेवनीया ॥६८०॥
निशम्येदं वचः पूर्व-भवं स्मृत्वाऽथ चेतसि । अम्बिका नेमिनं साधू तावस्मार्षीं पुनः पुनः ॥६८१॥
मरुत्कृतलसद्याना-रूढा गीतगुणा सुरैः । द्योतयन्ती दिशोऽगादीद् रैवताचलमम्बिका ॥६८२॥
तस्मिन् कथयतो नेमे-र्जिनस्य धर्मदेशनाम् । नत्वाऽम्बिका वृषं श्रोतुं यथास्थानमुपाविशत् ॥६८३॥

वरदत्तादयो भूपा महेभ्या बहवस्तदा । तत्राऽऽगत्य स्थितास्तत्र धर्मं श्रोतुं स्त्रियोपि च ॥६८४॥
धर्म्मो जगद्बन्धुरकारि येन धर्म्मो जगद्वत्सल आर्तिहर्त्ता ।
क्षेमङ्करो निर्वृतिदोऽत्र धर्मो धर्म्मस्ततो भक्तिभरेण सेव्यः ॥६८५॥
सत्पात्रदानं प्रथमाऽत्र शाखा धर्म्मद्रुमे शीलमथ द्वितीया ।
ततस्तपोऽपायभयापहारि भवापहन्त्री शुभभावना च ॥६८६॥
सिद्धोज्जयन्ताचलतीर्थसेवा देवार्चनं सद्गुरुसेवनं च ।
अघौघहृन्मन्त्रपदानि पञ्च तदग्रशाखा कुसुमाङ्कुराणि ॥६८७॥ त्रिभिर्विशेषकम्॥
श्रुत्वा नेमिगिरं तत्र वरदत्तमहीपतिः । राज्ञां द्वाभ्यां सहस्रेण समं संयममाददौ ॥६८८॥
वरदत्तादयो भूपा वर्या एकादश क्रमात् । सम्प्राप्य त्रिपदीमासन् प्रभोर्नेमेर्गणाधिपाः ॥६८९॥
यक्षिण्याद्याः प्रवर्त्तिन्यो बह्व्योऽभूवन् सुमानसाः । सम्यक्त्वं लेभिरे विष्णु-मुख्याः श्राद्धाश्च भूरिशः ॥६९०
रुक्मिणी-सत्यभामाद्याः श्राद्ध्यो बह्व्योऽभवन् पुनः । एवं चतुर्विधः सङ्घः प्रभोरासीत् क्रमात्तदा ॥६९१॥
श्रीनेमिशासनाधिष्ठा-यिका श्रीसङ्घविघ्नहृत् । अम्बिकाऽजनि सुत्रामा-देशाद्रैवतभूधरे ॥६९२॥
इतो गोमेधयागादि-कारी गोमेधवाडवः । सुग्रामेऽजनि निःशेष-क्षीणश्रीर्भूरिरोगयुग् ॥६९३॥
क्रमात् कुर्वन् भृगुपातं गोमेधः पूतिगन्धयुग् । निषिद्धः साधुना नत्वा तस्य पादाम्बुजं जगौ ॥६९४॥
किं मां प्राणांस्त्यजन्तं हि निषेधयसि संयत ! । न शक्नोमि रुजः पीडां सोढुं तेन म्रियेऽधुना ॥६९५॥
साधुः प्राह न छुट्टन्ति जीवाः स्वात्महतेः क्वचित् । किन्तु स्याच्छुट्टनं पापात् तीव्रेण तपसा पुनः ॥६९६॥
गच्छ त्वं रैवतशैले भजस्व नेमिनं जिनम् । स्नानं कुरु गजेन्द्राह्वे कुण्डे रोगहराम्भसि ॥६९७॥
ततः स वाडवो गत्वो-ज्जयन्ते संयतोदितम् । कृत्वा नीरोगतां प्राप्य जैनधर्म्मं व्यधात्तमाम् ॥६९८॥
नेमिनाथार्चनां कुर्वन् मृत्वा गोमेधवाडवः । यक्षेश्वरोऽभवद्यक्षः सेवको नेमिनः प्रभोः ॥६९९॥
अन्यदेन्द्रो जगौ नेमे ! वरदत्तो गणी तव । कस्मात् पुण्यादभूत् तन्मे संशयं भिन्धि साम्प्रतम् ॥७००॥
प्रभुर्जगाद चम्पायां वरज्ञानधरो मुनिः । अवर्णयत् सभामध्ये मुक्तेः स्वरूपमादरात् ॥७०१॥
तथाहि-'सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणराविति । सिद्धिगइनामधेयं ठाणं संपत्ताणं नमो जिणाणं ॥'
अनन्तमचलं शान्तं शिवं सङ्ख्यातिगं महत् । अक्षयारूपमव्यक्तं जगुः केवलिनः पदम् ॥७०२॥
"एगा जोअणकोडी बायाल स भवे सयसहस्साइं । तीसं चेव सहस्सा दो चेव सया अउणवन्ना ॥१॥
जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नुन्नसमोगाढा पुट्ठा सव्वे य लोगंते ॥२॥
सुरगणसुहं समग्गं सव्वद्धापिंडियं अणंतगुणं । नवि पावइ मुत्तिसुहंऽणंताहिं वग्गवग्गूहिं । ३॥"
तदा पञ्चमकल्पेशो नत्वाऽप्राक्षीत् प्रभो ! मम । कदा मे भाविनी मुक्ति-स्ततो ज्ञानधरो जगौ ॥७०३॥
ज्ञान्यवगवसर्पिण्या-मग्रे तन्यां हरेस्तव । नेमेर्द्वाविंशसार्वस्य भविष्यत्यादिमो गणी ॥७०४॥
गणेशो वरदत्तस्त्वं प्रबोध्य भविनो बहून् । श्रीरैवताभिधे शैले ज्ञानी भूत्वा गमी शिवम् ॥७०५॥
श्रीब्रह्मेशो निशम्येति नत्वा तत्र जिनं मुदा । गत्वा स्वर्गे वरैः रत्नै-र्व्यधान्मे मूर्तिमुत्तमाम् ॥७०६॥
तस्याः पुरोऽनिशं गीत-नृत्यादि सोऽकरन् मुदा । ततः प्रान्तेऽत्र शैलान्तर्गुसं देवगृहं व्यधात् ॥७०७॥

आयुःप्रान्ते ततश्च्युत्वा लब्ध्वोत्तरोत्तरान् भवान् । वरदत्ताभिधो गच्छा-धीशोऽयं मेऽभवद्वरे ! ॥७०८॥
यस्मान् मूर्तिस्तदा ब्रह्म-नाथेन पूजिता मम । तत्फलात् प्राप्य गच्छेश-पदं मुक्तिं गमिष्यति ॥७०६॥
उक्तं च—श्रीब्रह्मेन्द्रकृतेयं श्रीनेमेमूर्त्तिरमरगणपूज्या ।
विंशतिसागरकोटीं स जयति गिरिनारगिरिराजः ॥२॥"
नेमिनाथान्तिके दीक्षां लात्वा राजीमती सती । ययौ मुक्तिं प्रभोरर्वाक् पुण्यपापक्षयाल्लघु ॥७१०॥
नेमिपार्श्वे व्रतं लात्वा यादवा बहवः क्रमात् । कृष्णस्य पुत्रपुत्र्यश्च पत्न्यश्च निर्वृतिं ययुः ॥७११॥
महानेमिरथनेमी तथाऽन्येऽपि यदूत्तमाः । श्रीनेमिसन्निधौ दीक्षां लात्वा मुक्तिं ययुः क्रमात् ॥७१२॥
यादवो मेघनादाह्वश्चलन् रैवतके गिरौ । यत्र सिद्धोऽभवत्तत्र तद्बिम्बं सद्मसंश्रितम् ॥७१३॥
यत्रस्थेन भगवता नेमिनाऽऽलोकितो गिरिः । अवलोकननामाऽभूत् शृङ्गं तन्नेमिबिम्बयुग् ॥७१४॥
उक्तञ्च—"पुण्डरीकगिरेः शृङ्गमेतन्मुख्यं हि काञ्चनम् । मन्दारकल्पवृक्षाद्यैरावृतं तरुभिर्वरम् ॥१॥"
सम्पातिनिर्झरैर्धौत-पातकं प्राणिनां सदा । स्पर्शतोऽपि महातीर्थ-मेतत्पापं व्यपोहति ॥७१५॥
पुण्योऽयं पर्वतो वर्यः पृथिव्यास्तिलकोपमः । श्रीसर्वज्ञक्रमैः पूतो भाति त्रैलोक्यभूषणम् ॥७१६॥
उत्तमः सर्वतीर्थानां सर्वतीर्थफलप्रदः । दर्शनस्पर्शनेनापि दुरितं हन्ति सर्वतः ॥७१७॥
न्यायोपात्तं धनं यैत्र कुर्वते पात्रमङ्गिनाम् । तेषां समृद्धयः सर्वा सम्पद्यन्ते भवे भवे ॥७१८॥
अम्बिका निर्जरी यत्र स्थिता पाति च यात्रिकान् । अम्बिकाख्यमभूच्छृङ्गं तदम्बाबिम्बसद्मयुग् ॥७१६॥
छत्रं यत्राऽमुचत्कृष्ण-स्तीर्थं नन्तुं समागतः । स्थानस्य तस्य तु छत्र-शिलेत्याह्वाऽभवत्तदा ॥७२०॥
सहस्रबिन्दुरुर्वीशः सहस्रभूपसंयुतः । आत्तदीक्षोऽगमन्मुक्तिं यत्र स्थाने तमःक्षयात् ॥७२१॥
सहस्रबिन्दुनामाऽभूत्तस्य स्थानस्य लोकतः । तीर्थं तदपि कल्याण-कमलादायि विद्यते ॥७२२॥
सहस्राम्रवने नेमि-जिनस्य प्रवरं गृहम् । कारयामास लक्ष्मीशो भूयिष्ठकमलाव्ययात् ॥७२३॥
लक्षाम्रकानने नेमि-नाथस्य सदनं महत् । नेमिबिम्बयुतं कृष्णः कारयामास रैव्ययात् ॥७२४॥
कृष्णः सङ्घं बहुं नीत्वा सिद्धाद्रयुज्जयन्तयोः किल । यात्रां कुर्वन् बहूनां तु बोधिबीजं न्यधात्तमाम् ॥७२५॥
यत्र राजीमती साध्वी रथनेमियतीश्वरम् । यातमुन्मार्गमानैषीत् सन्मार्गं वरया गिरा ॥७२६॥
तस्य स्थानस्य लोकेन रथनेमिगुहाऽभिधाम् । ददेऽतो विद्यते तीर्थं तदेव शिवशर्मदम् । ७२७॥
मेघे वर्षति एकस्यां गुहायां रथनेमि-राजीमत्योः समागमनं जातं, राजीमतीरूपं दृष्ट्वा रथनेमिस्तां भोगाय याचते स्म, तयाऽतः स प्रबोधित इत्यादिसम्बन्धः स्वयमेव विस्तराद् ज्ञेयः ।
"अहं च भोगरायस्स तं च सि अंधगवह्णिणो । मा कुले गंधणा होमो संजमं निहुओ चर ॥१॥"
अन्यदा प्राभृते तार्क्ष्य-युग्मे समागते सति । शाम्बश्च पालकः पुत्रौ याचेते युगपत् स्फुटम् ॥७२८॥
तदाऽऽचष्ट हरिः शाम्ब-पालकाङ्गजयोः पुरः । कल्ये यः प्रथमं नौति नेमिं तस्मै ददाम्यहम् ॥७२६॥
यामिनीपश्चिमे यामे उत्थायोच्चैःस्वरं गदन् । गत्वा पुर्या बहिर्नेमिं पालकः प्राणमन्मुदा । ७३०॥
स्वस्थानकस्थितः शाम्बः कृत्वोत्तरयिकं वरम् । रजनीपश्चिमे यामे नेमिं भक्त्याऽनमत्तमाम् ॥७३१॥
प्रातः कृष्णः प्रभुं नत्वा जगौ पालकशाम्बयोः । मध्ये केन भवान् भक्त्याऽवन्दि प्राह ततः प्रभुः ॥७३२॥

शाम्बेन भावतोऽर्वा दि पालकेन च द्रव्यतः । ततः कृष्ण ददावश्वं शाम्बाय पालकाय न ॥७३३॥
यतः—"ध्यात्वा हृदि त्वं फलमाप शाम्बः साक्षान्निरीक्ष्यापि न पालकश्च ।
तेनान्तराङ्गं विधिमामनन्ति मनीषिणो बाह्यविधेर्बलिष्ठम् ॥१॥
द्वारवत्यां हरेर्भेर्य-स्तिस्रो विद्यन्त एव तु । आद्या सङ्ग्रामिकोद्भूता वर्या कौमुदिकी क्रमात् ॥७३४॥
उद्भूतिका तु कस्मिंश्चित् कार्येऽमात्यादिभूस्पृशाम् । ज्ञापनार्थं पुरीमध्ये वाद्यते सेवकैर्दृढम् ॥७३५॥
उक्तश्च—'तिन्नि गोसीसचंदणमइआउ देवयापरिग्गहियाओ । तस्स चउत्थी भेरि असिवोवसमणी । तीसे उप्पत्ति कहिज्जइ-सक्को देवलोगे वासुदेवस्स गुणकित्तणं करेइ-अहो ! उत्तमपुरिसा एए अवगुणं न गिण्हन्ति, नीएण जुद्धेण न जुज्झंति, तत्थ एगो देवो असद्दहंतो आगओ. वासुदेवोवि जिणसगासं वंदओ पट्ठिओ, सो अन्तरा कालसुणयरूवं मययं दुब्भिगंधं विउव्वइ, तस्स गंधेण सव्वो लोगो पराभग्गो, वासुदेवेण दिट्ठो, भणियं चणेण-अहो ! इमस्स कालसुणयस्स पंडुरा दंता मरगयभायण-निहिअमुत्ताहलव्व रेहंति, देवो चितइ सच्चं गुणग्गाही, तओ वासुदेवस्स आसरयणं हरइ, वासुदेवो भणइ, कीस मम आसरयणं हरसि ? देवो भणइ, नीअजुज्झेण पराजिऊण गिण्हाहि, वासुदेवेण भणियं, पराजिओहं, नेहि आसरयणं, नाहं नीअजुज्झेण जुज्झामि, देवो तुट्ठो भणइ किं ते वरं देमि ? सो भणइ-असिवोवसमणिं भेरिं देहि, तेण दिन्ना, सा छण्हं मासाणं अंते वाइज्जइ, तत्थ जो सद्दं सुणेइ तस्स पुव्वुप्पन्ना रोगा उवसमंति नवगावि छम्मासे ण उप्पज्जंति । अन्नया आगंतुगो वाणियओ आगओ अईव दाहजरेण अभिभूओ तं भेरिपालगं भणइ-गिण्ह तुमं सयसहस्सं मम इत्तो पलमित्तं देहि, तेण लोभेण दिन्नं, तत्थ अन्ना चंदणथिगलिआ दिन्ना, एवं अन्नेण अन्नेण मग्गिओ दिन्नं च सा सव्वा चंदणकंथा जाया, सा कइया असिवे वासुदेवेण ताडाविया, जाव तं चेव सभं पूरेइ, तेण भणियं-भेरि सव्वा विणासिया, सो भेरीपालो ववरोविओ, अन्ना भेरी अट्ठमंते देवेण दिन्ना ॥"
अन्यदा सुलसा श्राद्धी-वर्द्धिता देवकीसुताः । श्रीनेमिसन्निधौ दीक्षां गृहीत्वा कुर्वते तपः ॥७३६॥
द्वारकाबहिस्थाने नेमिं पृष्ट्वा हरेः सुताः । षडपि पुरीमध्ये च ते भिक्षायै मध्यवासरे ॥७३७॥
एकः साधुहरेर्गेहे देवकीकरतो यदा । भिक्षां लात्वा गतस्ताव-दन्यस्तत्र समागमत् ॥७३८॥
सोऽपि भिक्षां गृहीत्वाऽगा-द्यावत् तावत्तृतीयकः । आगाद् भिक्षाकृते सोऽपि देवक्या प्रतिलाभितः ॥७३९॥
एव षडपि देवक्या प्रतिलाभ्येति चिन्तितम् । स एव संयतो भूयो भूयः किं याचतेऽदनम् ? ॥७४०॥
ततो नेम्यन्तिकेऽभ्येत्य पप्रच्छ देवकी प्रभुम् । किमेको भूरिशो वारान् भिक्षायै साधुरागमत् ? ॥७४१॥
ततः प्रभुर्जगौ तेषां साधुनामादितस्तदा । सम्बन्धं देवकी हृष्टा नेमे षडपि नन्दनान् ॥७४२॥
ततो नत्वा प्रभुं गेहे समेत्य पुरतो हरेः । जगौ सप्तापि नो पुत्राः पालिता लालिता मनाग् ॥७४३॥
तेनैकश्चेत् सुतो मे स्या-त्तत्तदा मम जीवितम् । ततो हरिः समाराध्य सुरं याचितवानिति ॥७४४॥
एकं देहि सुतं मातु-र्देवक्याः शर्मणेऽधुना । भाविनं तनयं नत्वा सुरः प्राह हरिं प्रति ॥७४५॥
देवक्या यः सुतो भावी स च दीक्षा गृहीष्यति । कृष्णोऽवग् नन्दनो भूयात् गृह्णातु संयमं पुनः ॥७४६॥
एषा मे जननीवाञ्छा पूर्णीभवतु साम्प्रतम् । यतः पूज्या प्रसूः सर्व-जनानां हितकारिणी ॥७४७॥

क्रमाज्जाते सुते माता देवकी भर्तृसंयुता । सूनोर्नाम ददौ गज-सुकुमालेति सोत्सवम् ॥७४८॥
सोमभट्टस्य विप्रस्य पुत्री मनोरमाभिधा । पितुरादेशतस्तेन सूनुनाङ्गीकृता तदा ॥७४९॥
अन्येद्युर्नेमिनः पार्श्वे माहात्म्यं सिद्धभूभृतः । शुश्राव केशवश्चैवं योजयित्वाञ्जलिद्वयम् ॥७५०॥
प्राणिभिर्यं समारुह्यैर्लोकाग्रमतिदुर्लभम् । प्राप्यते सर्वतीर्थेशः शाश्वतोऽयं शिवाचलः ॥७५१।
तीर्थं चानादि सिद्धाद्रि यत्रानन्ताः शिवं ययुः । तत्र यः कुरुते यात्रां नौति श्रीवृषभं जिनम् ॥७५२।
तस्य स्तोकैर्भवैरेव मुक्तिर्भवति निश्चितम् । प्रभुं पूजयतो भावात् स्तवतो रुचिरैः स्तवैः ॥७५३।
नमस्कारसमो मन्त्रः शत्रुञ्जयसमो गिरिः । गजेन्द्रपदजं नीरं निर्द्वन्द्वं भुवनत्रये ॥७५४॥
कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । शत्रुञ्जयं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥७५५॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥७५६॥
श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु बंभ्रमणतो न भवे भ्रमन्ति ।
तीर्थेश्वरार्चनकृतो जगदर्चनीया-स्तीर्थव्ययादिह नराः स्थिरसम्पदः स्युः ॥७५७॥
श्रुत्वेति तीर्थमाहात्म्यं रैमयान् जिनपालयान् । आदौ पञ्चशतीं कृष्णः कारयामास मोदतः ।७५८॥
यात्रां शत्रुञ्जये कर्त्तुं सर्वान् देवालयान् क्रमात् । रथारुढान् व्यधात् कृष्णः शोभने वासरे किल ॥७५९॥
काष्ठात्मकान् सहस्रं तु शतानि सप्त च क्रमात् । कारयामास कंसारि भूयिष्ठविभवव्ययात् ।.७६०॥
सम्प्रेष्य भूमिदेशेषु बह्वीः कुंकुमपत्रिकाः । सङ्घमाकारयामास कृष्णः शोभनवासरे ।७६१॥
नृणां कोट्यश्चतुर्विंश-प्रमाणा भूधवादयः । मिलिता वृषभं देवं नन्तुं सङ्घो हरेस्तदा ॥७६२॥
ग्रामे ग्रामे पुरे पुर्यां श्रीजिनेश्वरसद्मसु । पूजोत्सवं वितन्वानः कृष्णः सङ्घयुतोऽचलत् ।७६३।
क्रमाच्छत्रुञ्जये गत्वा चक्रे स्नात्रमहोत्सवम् । विस्तरान्मुख्यसर्वज्ञ गेहे कृष्णनरेश्वरः ॥७६४।
ततो गजादनीं मुक्ता-फलैरामलकोपमैः । मुदा वर्द्धापयामास त्रिःप्रदक्षिणया हरिः ।।७६५॥
पुष्पैर्मनोहरैः स्वामि-पादुके मुक्तिशर्म्मदे । कंसारिः पूजयामास भूरिसङ्घसमन्वितः ॥७६६॥
ततः सर्वेषु सर्वज्ञ-गेहेषु श्रीजिनाधिपान् । अर्चयामास कंसारिः पुत्रपत्न्यादिसंयुतः ॥७६७॥
ततो रमाधवोऽभ्येत्य वरदत्तगुरोर्मुखात् । माहात्म्य सिद्धशैलस्य शुश्रावेति कृतादरम् ॥७६८॥
यतः—"बंभणखत्तियवइसा सद्दाविन्नाणवाहिरा जेवि । तित्थफलं पावेंति अचयसताते वि सित्तुंजे ॥१॥
जं लहइ अन्नतित्थे चरणेण तवेण बंभचेरेणं । त लहइ पयत्तेणं सित्तुंजगिरिम्मि संपत्तो ॥२।
जं कोडीए दिन्नं कामिअआहारभोयणाए य । तं लहइ तित्थपुन्नं इक्को वासेण सित्तुंज्जे ॥३॥
गाविय सुवण्णभूमीअ दाणे अ जं भवे पुण्णं । तं लहइ पयत्तेणं पूयाकरणेण सित्तुंज्जे ॥४॥
जो पडिमां चेइयहर सित्तुंजगिरिस्स मत्थए कुणइ । भोत्तूण भरहवासं वसइ सग्गे निरुवसग्गे ॥५॥
पूयं करेइ विहिणा सित्तुंज्जे चेइयाण सव्वेसिं । सो पूइज्जइ निच्चं देवासुरमाणुसेहिंपि ॥६॥
जंकिंचि नाम तित्थं सग्गे पायालि माणुसे लोए । तं सयलमेव दिट्ठं पुंडरीए वंदिए जाण ॥७॥
अट्ठावय सम्मेए चंपा पावाइ उज्जिंतनगे य । वंदित्ता पुण्णफलं सयगुणियं होइ पुण्डरीए ॥८॥
नवकारपोरिसिए पुरिमड्ढेगासणे य आयामे । पुंडरीअं च सरंतो फलकंखी कुणइ अभत्तट्ठं ॥९॥

छट्ठट्ठमदसमदुवालसाइं मासद्धमासखमणाइं । तिगरणसुद्धो लहइ मित्तुंजं संभरंतो य ॥१०॥"
इत्यादि तीर्थमाहात्म्यं श्रुत्वा कृष्णो धनं बहु । व्ययित्वा तत्र भूमिध्रे भूरि पुण्यमुपार्जयत् ॥७६९॥
ततः श्री उज्जयन्ताद्रौ गत्वा नेमिजिनेश्वरम् । अर्चयन् विस्तरात् कृष्ण-भूपः सङ्घसमन्वितः ॥७७०॥
परिधाप्याखिलं सङ्घं वस्त्रैर्वरतरैस्तदा । विसृज्य चाऽऽगमत् स्वीय-पुर्यां मधुरिपुः क्रमात् ॥७७१॥
ततः प्रतिदिनं ध्यानं शत्रुञ्जयसमाश्रितम् । कृष्णश्चकार पूतात्मा प्रातः प्रमोदतः ॥७७२॥
अन्यदा नेमिनः पार्श्वे देवकीनन्दनो गजः । धर्म्मोपदेशनासेतां सुश्रावाऽनघमानसः ॥७७३॥
अनाज्यभोज्यमप्राज्य विप्रयोगः प्रियैः समम् । अप्रियैः सम्प्रयोगश्च सर्वपापविजृम्भितम् ॥७७४॥
निर्द्रव्यो धनचिन्तया धनपतिस्तद्रक्षणे व्याकुलो, निश्रीकस्तदुपायसङ्गतमतिस्त्रीप्राप्त्यपत्येच्छया ।
प्राप्तापत्यपरिग्रहोऽपि सततं रोगैरभिद्रूयते, जीवः कोऽपि कथञ्चनाऽपि नियतं प्रायः सदा दुःखितः ॥७७५॥
आकर्ण्येतच्च सम्प्राप्त-वैराग्यो गजनन्दन. । नेमिपार्श्वे व्रतं लात्वा तीव्रं वितनुते तपः ॥७७६॥
कायोत्सर्गे स्थितं गज-सुकुमालं यतिं स्थिरम् । विलोक्य श्वशुरो रुष्टो जगावेवं पुनः पुनः ॥७७७।
मुञ्च व्रतं न चेद् हन्मि त्वां नः पुत्रीपते ! द्रुतम् । ध्यानलीनोऽभवत् साधु-र्गजस्तत्र क्षणे दृढम् ॥७७८॥
तदा तन्मस्तके मुक्त्वा शकटीं वह्निपूरिताम् । चिक्षेपेन्धनसङ्घातं भूयोभूयः स वाडवः ॥७७९॥
गजस्य कुर्वतः शुक्लं ध्यानं सर्वतमःक्षयात् । उत्पन्नमव्ययं ज्ञानं मुक्तिश्चाभूत्तदा द्रुतम् ॥७८०॥
तदाऽप्राक्षीद्धरिः स्वामिन् ! गजस्य कस्य हस्ततः । अभून्मृतिस्ततोऽवादी-न्नेमिर्हरे पुरः किल ॥७८१॥
तवाऽद्य गच्छतः पुर्यां स्फुटित्वा हृदयं स्वयम् । मृतिं यास्यति ते भ्रातुर्हन्ता स एव भूपते ! ॥७८२॥
आगच्छन् केशवः पुर्यां सोमभट्टं-द्विजं तदा । अकस्मान्मरणे यान्तं भीत्या ददर्श वेगतः ॥७८३॥
ततः कृष्णो जगावेष भाग्यहीनो द्विजो ननु । मुधाऽनेन यतिः प्राण-त्यागश्च कारितः किल ॥७८४॥
कृष्णेनाभिग्रहो नेमि-पार्श्वे लले इति ध्रुवम् । यो लास्यति व्रतं पुत्रः पुत्री वा प्रभुसन्निधौ ॥७८५॥
न निषेध्यो मया स्वामिन् ! स एव नन्दनः क्वचित् । ततो लले व्रतं विष्णो-र्भूरिपुत्रीसुतादिभिः ॥७८६॥
कृष्णोऽन्यदा जगौ स्वामिन् ! द्वारकेयं मनोहरा । संस्थास्यति कियत्कालं कुतो मे स्यान्मृतिः पुनः?॥७८७
द्वारकायाः स्वरूपं तु भावि ज्ञात्वा दृढं तदा । प्रभुर्नेमिजिनः प्राह विष्णोरिति पुरः स्फुटम् ॥७८८॥
कृष्णद्वीपायनान्मद्याद् दाहः पुर्यां भविष्यति । जराकुमारतो भ्रातु-र्मृत्युर्भावी तवाऽचिराद् ॥७८९॥
ततः कृष्णो बहिः पुर्यां सुरामत्याजयत् क्षणात् । कृष्णद्वीपायनो बाह्यो-द्याने तस्थौ तपः परः ॥७९०॥
अस्माद् भ्रातुर्मृतिं मत्वा जराको दूरमीयिवान् ।७९१॥
प्रद्युम्नसाम्बभीर्वाद्याः कुमाराः कंसविद्विषः । क्रीडां कर्त्तुं गता बाह्यो-द्याने शिलास्थितां सुराम् ॥७९२॥
वीक्ष्याऽऽकण्ठं पपुर्नर्म-कुर्वाणाश्च परस्परम् । कृष्णद्वीपायनं दृष्ट्वा दध्युस्ते कृष्णनन्दनाः ॥७९३॥
अस्माद् ऋषेः पुरश्छेदो भव्यतः पापमानसः ।
त्वं पापी त्वं पुरछेद-कारीति कृष्णसूनवः । जल्पन्तो यष्टिमुष्ट्या तु बाढं तेऽकुट्टयंस्तदा ।
हन्यमान ऋषिस्तैश्च निदानमकरोदिति । द्वारकाया विनाशाय भूयासमहमग्रतः ॥७९४॥
मृतप्रायं ऋषिं कृत्वा गत्वास्ते नगरान्तरे । स्वपुत्रचेष्टितं श्रुत्वा कृष्णोऽगाद् ऋषिसन्निधौ ।७९५॥

पतित्वा पादयोस्तस्य कृष्णो जगाविदं तदा । क्षमस्व दुर्विनीतत्वं मम देहभुवां ऋषे ! ॥७९६॥
न कुप्यन्ति रिपौ सन्तः पीडिता अपि बालिशैः । किन्तमःपीडितोऽपीन्दुः करैर्दहति जातुचित् ॥७९७॥
द्वीपायनो जगौ क्षान्तं मयाऽद्योपरि ते नृप ! । निदानं नान्यथा प्रायो जायते विहितं नृप ! ॥७९८॥
प्रणम्य तमृषिं कृष्णो गत्वा पुर्यां विस्मृत्य तत् । पपाल जनता भुङ्क्ते भोगान् स्वचित्तचिन्तितान् ॥७९९॥
ततो मृत्वा ऋषिर्वह्नि-कुमारेषु सुरोऽभवत् । जज्ञौ चावधिना कृष्ण-पुत्रैः कृतं पराभवम् ॥८००॥
इतोऽप्राक्षीज्जिनं कृष्णः कथं शाम्यत्युपप्लवः । पुरस्यास्य ततः प्राह नेमीशस्तपसा खलु ॥८०१॥
श्रुत्वैतत् पटहात् कृष्ण-वादितान् नगरीजनः । आचाम्लादि तपः शश्वत् कुरुते स्माऽऽदरपूर्वकम् ॥८०२॥
अत्रान्तरे प्रभुः कुर्वन् विहारं रैवताचले । उपेत्य समवासार्षीद् भूरिसंयतसेवितः ॥८०३॥
तत्र प्रभोर्गिरं भूरि-भवासातापहारिणीम् । यादवा बहवा दीक्षां जगृहुः स्वामिसन्निधौ ॥८०४॥
शाम्बप्रद्युम्नमुख्यास्ते कोटिशो हरिसूनवः । वैराग्यवासितस्वान्ताः स्वाम्यन्ते संयमं ललुः ॥८०५॥
रुक्मिण्याद्या हरेः पत्न्यो बह्व्योऽन्याः श्राविकाः पुनः । प्रभोः पार्श्वे व्रतं लात्वा तेपुश्च प्रचुर तपः ॥८०६॥
भाविनं द्वारकादाहं निशम्य प्रभुसन्निधौ । जिनं नत्वा हरिः पुर्यां जगामाऽमलमानसः ॥८०७॥
तपस्यति जने तीव्रं तपः श्रुत्वा जिनाननात् । दग्धुं न नगरीं शक्तः कृष्णद्वीपायनस्तदा ॥८०८॥
दैवयोगाद् विहारं तु प्रभावन्यत्र कुर्वति । कारं कारं तपो लोको निवृत्तस्तपसोऽखिलः ॥८०९॥
ऋषिः सोऽग्निसुरः पुर्या-मुत्पातान् दर्शयन् जने । वात्याभिस्तृणकाष्ठानि चिक्षेपान्तः पुरेऽभितः ॥८१०॥
सर्वं पुरं तदा सोऽग्नि-कुमारोऽमरशात्रवः । भस्मीचक्रे विना राम-कृष्णौ दीक्षाभिलाषिणः ॥८११॥
उक्तञ्च-'षष्टिं बाह्या कुलकोटिः द्वासप्ततिं तु मध्यगाः। संपीड्य द्वारकापुर्यां सो सुरोऽग्निमदीपयत् ॥८१२॥
दह्यमाना जना ये येऽस्माषुर्नेमिं व्रतेच्छवः । तांस्तान् सुराः प्रभूपान्ते मुमुचुस्ते व्रतं ललुः ॥८१३॥
देवकीवसुदेवौ च कृष्यमाणौ पुराद्बहिः । पुत्राभ्यां ददते नासौ सुरो निर्गन्तुमंहसा ॥८१४॥
वसुदेवो देवकी च रोहिणी च समाधिना । गृहीत्वाऽनशनं प्रापु-निर्जरालयमञ्जसा ॥८१५॥
बलकृष्णौ तदा देव-प्रोक्तौ पुर्या बहिर्भुवि । गत्वाऽग्निदह्यमानां तु पुरीं वीक्ष्योचतुर्मिथः ॥८१६॥
यतः-'अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसङ्ग्रहः ॥१॥''
स्फुरन्त्युपायाः शान्त्यर्थ-मनुकूले विधातरि । प्रतिकूले पुनर्यान्ति तेऽप्युपाया अपायताम् ॥८१७॥
ज्वालामालाकुलां स्वीय-पुरीं द्रष्टुमशक्नुवन् । कृष्णो भ्रातृयुतोऽचालीन् मथुरां प्रति तत्क्षणाद् ॥८१८॥
इतोऽनलासुरो ज्वाल-यित्वा तामग्निना पुरीम् । षण्मासातिक्रमे वार्द्धि-वारिणा ऽप्लावयत् पुनः ॥८१९॥
मार्गे यान्तौ बलश्रीशौ जातौ बुभुक्षितौ तराम् । हस्तिकाह्वपुरोद्याने जग्मतुः कर्म्मयोगतः ॥८२०॥
मुक्त्वा कृष्णं वने भक्ता-नयनाय पुरान्तरे । गतो बलो निरुद्धस्तत् पुरेशेनारिणा द्रुतम् ॥८२१॥
युद्धं कुर्वन् बलस्तेना-रिणा सार्द्धं पुरान्तिके । सिंहनादं तथा चक्रे यथा तत्राऽगमद्धरिः ॥८२२॥
बलकृष्णौ रिपुं जित्वा तस्मिन्नेव पुरान्तरे । बुभुजाते ततोऽटव्यां जग्मतुर्निर्भयौ तदा ॥८२३॥
गच्छन्नथ हरिर्लग्न-तृषो बलं जलहेतवे । प्रेष्य स्वयं तु सुष्वाप वसनाच्छादिताननः ॥८२४॥
इतो भ्रमन् मृगव्येन वने तत्र जराङ्गजः । मृगबुद्ध्या न्यहन् कृष्णं बाणेन चरणे दृढम् ॥८२५॥

उत्थायाऽथ हरिः प्राह हतोऽहं केन पत्रिणा । वृक्षान्तरे स्थितो जज्ञौ जरासूनुर्हरेर्वचः ॥८२६॥
आगत्य सोदरस्याङ्घ्री नत्वा जरासुतो जगौ । मया मृगधिया त्वं तु हतः पापात्मनाऽधुना ॥८२७॥
द्वादशाब्दीमहं दूर-देशेऽस्थां ते मृतेर्भिया । पापात्मना मयाऽद्य त्वं हतो दुर्गतिहेतवे ॥८२८॥
कृष्णो जगौ न छुट्यते कर्म्मतः केनचित् क्वचित् । जरासूनो ! अलाहाय दूरे व्रजतु साम्प्रतम् ॥८२९॥
गतोऽम्बुनो(धुना) वलोऽत्रैतो मां त्वया निहतं यदि । ज्ञास्यति त्वां तदा सद्यो हनिष्यति सहोदर ! ॥८३०॥
क्षमयित्वा ततः कृष्णं सद्यो जरासुतो ययौ । यावद्धरिर्मृतस्तावत्तृतीयं नरकं ययौ ॥८३१॥
यतः-'एगो य सत्तमाए पंच य छट्ठीइ पंचमी एगो । एगो य चउत्थीए कण्हो पुण तच्चपुढवीए ॥१॥"
यतः—"ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः ।
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्म्मणे ॥१॥"
इतो वलो जलं नीत्वाऽऽगतः सुप्तं सहोदरम् । मत्वा सोऽवक् पिब भ्रात-[illegible] ॥७७६॥
अब्रुवन्तं हरिं स्नेहात् धूनयन् सोदरो बलः । मृतं सहोदरं मत्वा [illegible]गावेवं पुनः पुनः ।७७७।
अपश्यन् घातकं भ्रातु-र्वनेऽभितो हली तदा । सिंहनादान् व[illegible]भवत् साधु-र्गजस्तत्र क्षणे दृढम् ॥७७८॥
स्नेहादंसे हरिं कृत्वा स्थाने स्थाने वने भ्रमन् । क्षितो मुक्त[illegible] भूयोभूयः स वाडवः ॥७७९॥
यदा न मन्यते कृष्णं मृतं लाङ्गलभृत्तदा । देवा एत्य शिलाय[illegible] मुक्तिश्चाभूत्तदा द्रुतम् ॥७८०॥
प्रपील्य वालुकास्तैलं कर्षयन्तः पुनः पुनः । प्राबोधयन् मृतं कृ[illegible]ऽत्रादी-न्नेमिर्हरे पुरः किल ॥७८१॥
षण्मासातिक्रमे कृष्णं मृतं ज्ञात्वा तु लाङ्गली । चकार वह्निसंस्कारं[illegible]तुर्हन्ता स एव भूपते ! ॥७८२॥
श्रीनेमिसन्निधौ दीक्षां लात्वा हली तपस्तपन् । तुङ्गिकाक्षितिभृच्छृङ्गे[illegible]त्या ददर्श वेगतः ॥७८३॥
पारणायाऽन्यदा गच्छन् पुरु पाल्तेऽवटे स्त्रियम् । स्वरूपमोहितां रज्वा बध्नन्तीं[illegible] किल ॥७८४॥
कुम्भबुद्ध्या विमुश्चानां वीक्ष्योद्विग्नो हली जगौ । मा पुत्रं प्रक्षिपाऽन्धौ त्वं सावधानी भवावधौ ॥७८५॥
तस्यां स्त्रियि निवृत्तायां पुत्रकण्ठस्य बन्धनात् । अभिग्रहं हली तत्र जग्राहेति स्वचेतसि ॥८४३॥
अतः परं मयाऽऽहारो निरवद्यो वनान्तरे । गृहीतव्योऽन्यथा भूया-दुपवासो निरन्तरम् ॥८४४॥
तपस्यतो मुनेस्तस्य साम्यभाजोऽनुभावतः । व्याघ्रसिंहादयः सेवां कुर्वते श्वापदाः सदा ।८४५॥
पूर्वसंसारसम्बन्धी कश्चिदेको मृगो वने । हल्यर्षेः शिष्यवत् सेवां करोति स्म पदोस्तले ।८४६॥
यदा तत्र वने कोऽपि सार्थो जिमति तत्र च । ऋषिं नीत्वा सदा प्रत्य-लाभयत् पारणे मृगः ।८४७॥
अन्यदा स मृगस्तं च मासक्षमणपारणे । काष्ठहेत्वागताऽनःकृत्-पार्श्वेऽनैषीत् स्वसंज्ञया [मृगः] ॥८४८॥
ऋषिं भिक्षा कृते तत्रा-गतं निरीक्ष्य सूत्रकृत् । मुक्त्वा छिन्नार्द्धशाखाकं वृक्षं दानोत्सुकोऽभवत् ॥८४९॥
ददानो रथकृद्दानं यतये ध्यातवानिति । मदीयं विद्यते भाग्य-मीदृक्साध्वन्नदानतः ॥८५०॥
साधुर्दध्यौ तदा भाग्यं विद्यते च ममाधुना । यतो मे प्रासुकान्नस्य प्राप्तिर्वर्याधुनाऽर्जिता ॥८५१॥
मृगो दध्यौ ममाप्यन्नं चेत् प्रासुकं भवतीदृशम् । तदाऽहं साधुमीदृशं प्रत्यलाभयमादरात् ॥८५२॥
तदाऽहं साधवे दानं ददामीदृक्षमादरात्, पाठान्तरे-एवं चिन्तयतां तेषां मुन्यादीनां तदात्मनि ।
अकस्मान्मस्तके वृक्ष-शाखाऽपतन्महत्तमा ॥८५३॥

त्रयाणामपि तेषां तु प्राण-त्यागात्तदाऽभवत् । उत्पत्तिः पञ्चमे स्वर्गे एकस्मिन् स्थानके समम् ॥८५४॥

"अट्ठंतकडा रामा एगो पुण बंभलोयकप्पंमि । उववन्नो तत्थ भोए भोत्तुं अयरोवमा दस उ ॥१॥
तत्तो अ चइत्ताणं इहेव उस्सप्पिणीइ भरहम्मि । भवसिद्धीओ भयवं सिज्झिस्सइ कण्हतित्थम्मि ॥२॥"

प्रद्युम्नाद्याः कुमाराश्च तपस्यन्तश्च भूरिशः । पप्रच्छुर्नेमिनं मुक्ति-सौख्यं कदा भविष्यति ॥८५५॥
स्वाम्यवक् सिद्धिशैले च तपो वितन्यतांतराम् । भविष्यति शिवप्राप्ति-र्यूयं तत्रैव तद् द्रुतम् ॥८५६॥
श्रुत्वा स्वामिगिरं सद्यः सार्द्धं त्रिकोटिसम्मिताः । प्रद्युम्नाद्याः कुमाराश्च ययुः शत्रुञ्जयाचले ॥८५७॥
तत्र प्रदक्षिणीकृत्य प्रियालां जिनपादुके । सिद्धाद्रौ सप्तमे शृङ्गे तस्थू रैवतकान्तिके ॥८५८॥
शुक्लध्यानवराः सर्वेऽध्युष्टा कोटयस्तदा । प्रद्युम्नाद्या कुमारास्तु विष्णोर्मुक्तिपुरीं ययुः ॥८५९॥
अन्येऽपि यादवा दीक्षां लात्वा श्रीनेमिसन्निधौ । सर्वकर्म्मक्षयान्मुक्ति-नगरीमगमन् क्रमात् ॥८६०॥
शाम्बप्रद्युम्नमुख्योस्सं कोटीक्षां जिनान्तिके । लात्वा प्रान्ते मृतः प्राप माहेन्द्रं ताविषं क्रमात् ॥८६१॥
रुक्मिण्याद्या हरेः पत्न्यो बह्व्योऽन्य..न्नि. ईसाणे । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोधव्वा ॥ १ ॥
भाविनं द्वारकादाहं निशम्य प्रभुसन्निधौ । सिद्धाओ । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोधव्वा ॥२॥"
तपस्यति जने तीव्रं तपः श्रुत्वा जिनाननात् ।श्रीनद्वारकायां तु महानेमिसुतं यदुम् ॥८६२॥
दैवयोगाद् विहारं तु प्रभावन्नत्र कुर्वति । व सुराष्ट्रासूज्जयन्ताद्रौ गिरिदुर्गे न्यवीविशत् ॥८६३॥युग्मम्॥
ऋषिः सोऽग्निसुरः पुर्या-मुत्पातान् दर्शयन्नात् । यथा पूर्वनृपान् चित्ता-द्वयस्माधुरुदितोदिताः ॥८६४॥
सर्वं पुरं तदा सोऽग्नि-कुमारोऽमरगाव्रग्स्तरात् । आपृच्छ्य यादवं भूपं परीक्षिः स्वपुरं ययौ ॥८६५॥
उक्तश्च-'षष्टिं वाह्या कुलकोटिः द्वासप्तपुरे । प्रतिवोध्यासुरं धूम-केतुमभ्रपुरे ययौ ॥८६६॥
दह्यमाना जना ये येऽस्मा।पपरं सदा । ग्राहयामास सम्यक्त्वं नेमिनायो जिनेश्वरः ॥८६७॥
देवकीवसुदेवौ च कृष्ण,,कोंटमसुरं पुनः । अबोधयत् सिद्धवटे सिद्धनाथं सयोगिनम् ॥८६८॥
वसदेवो ...
नाग तु नगरे कोटे इन्द्रकेतुमिलागिरौ । दुर्गादित्यं देवगिरौ ब्रह्माद्रौ ब्रह्मनायकम् ॥८६९॥युग्मम्॥
अन्यानपि बहून् भिल्ल-म्लेच्छादिकवनेचरान् । पक्षिणो धर्म्मविध्वंस-करान् लोकद्रुहान् पुनः ॥८७०॥
चौरान् पारिखिकान् कूट-जल्पकांश्च कुतीर्थिकान् । प्रबोधय गमयामास सद्गतिं नेमितीर्थकृत् ॥८७१॥
आर्यानार्येषु देशेषु विहरन् नेमिजिनेश्वरः । ज्ञात्वा निजायुषः प्रान्तं रैवताद्रिं समीयिवान् ॥८७२॥
दिनानि कतिचित्तत्र स्थित्वा प्रबोध्य भाविकान् । प्रपेदेऽनशनं नेमिः सिताष्टम्यां शुचौ प्रभुः ॥८७३॥
षट्त्रिंशदधिकैः पञ्च-शतैर्वाचंयमैः समम् । अलञ्चकार कल्याण-पुरीं पुण्यतमःक्षयात् ॥८७४॥
इन्द्रोऽभ्येत्य दिवो नेमेः कल्याणगमनोत्सवम् । कृत्वा नन्दीश्वरेऽष्टाह्नीं निष्पाद्य स्वर्गमीयिवान् ॥८७५॥
दीक्षाज्ञानशिवान्यासन् यत्र नेमिर्जिनेशितुः । तं रैवतगिरिं भव्याः सेवध्वं शिवहेतवे ॥८७६॥
बन्धवोऽद्य विभोरष्टौ प्रेयस्योऽपि सुरद्विपः । राजीमती च मुक्तिश्री-भाजो रैवतकेऽभवन् ॥८७७॥
यतः-"उज्जिंतसेलसिहरे दिक्खा नाणं निसीहिआ जस्स । तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥१॥"
यत्रार्हत एकमपि भवेत् कल्याणकं किल । तत्तीर्थं मुनयः प्राहु-र्गिरिनारस्ततोऽधिकः ॥८७८॥

पवित्रा भगवत्पादै रैवताचलरेणवः । पुनन्ति विश्वसंयुक्ताः शुद्धिकृच्चूर्णजा इव ॥८७९॥
भूरुहा द्विपदो भूमि वाय्वम्ब्वग्निशरीरिणः । अचेतना अपि शिवं यातारोऽत्र कियद्दिनैः ॥८८०॥
तपःक्षमाभ्यां संयुक्ता स्तथा साम्यरसप्लुताः । त्यक्त्वा धातुमयं देहं देही प्राप्नोति निर्वृतिम् ॥८८१॥
यथा स्पृष्टमयः स्पर्शो-पलेनाप्नोति हेमताम् । तथाऽस्य स्पर्शतो देही भवेच् चिन्मयरूपभाग् ॥८८२॥
मलयाद्रौ यथाऽन्येऽपि यान्ति चन्दनतां द्रुमाः । तथाऽत्र पापिनोऽप्यङ्गि-गणा यान्ति हि पूज्यताम् ॥८८३॥
न श्रीनेमिसमः स्वामी नोज्जयन्तसमो गिरिः । न गजेन्द्रपदाभं तु कुण्डमस्ति जगत्त्रये ॥८८४॥
सिद्धाभिधगिरेः शृङ्गं रैवतोऽयं च विद्यते । अतोऽत्र कुर्वतः पुण्यं सिद्धाद्राविव जायते ॥८८५॥
उक्तञ्च—"भावतः प्रतिमामत्र जिनानां जन्तुरर्चयन् । लभते शिवसौख्यानि नृसौख्यस्य किमुच्यते ? ॥१॥
प्रत्याख्यानं दशविधं विवेकी यो व्यधान्नरः । अस्मात्तस्य क्रमात् स्वर्ग-सौख्यानि दशधा पुनः ॥२॥"
न्यायोपात्तं धनं यत्र कुर्वते पात्रसान् निजम् । तेषां समृद्धयः सर्वाः सम्पद्यन्ते भवे भवे ॥८८६॥
शैलमेकाहमत्रस्थो बिभर्त्ति भविकाग्रणीः । सुरासुरनृनारीभिः सेव्यते स सदा यतः ॥८८७॥
शुद्धान्नवस्त्रपानाद्यैर्यः साधुं प्रतिलाभयन् । मुक्तिनारीहृदानन्द-दाता स जायते नरः ॥८८८॥
रूप्यस्वर्णसुवस्त्रादि यो ददात्यत्र भावतः । तदनन्तगुणं सोऽपि लभते लीलया जनः ॥८८९॥
महातीर्थमिदं सर्व-तीर्थोत्कृष्टं जगत्त्रये । तिर्यञ्चोऽपि हि यद्वासात् सिध्यन्त्यन्तर्भवाष्टकम् ॥८९०॥
द्रुमा धन्या मयूराद्याः पक्षिणः पुण्यशालिनः । वसन्ति रैवते यत्र मनुष्याणां किमुच्यते ? ॥८९१॥
देवता ऋषयः सिद्धा गन्धर्वा किन्नरादयः । सोत्साहाश्च समायान्ति यं सेवितुमनारतम् ॥८९२॥
न ता औषधयो दिव्या न ताः स्वर्णादिसिद्धयः । रसकूपा न ते यत्र गिरौ सन्ति न शाश्वताः ॥८९३॥
गजेन्द्रपदमत्रास्ति कुण्डं तुण्डं शिवश्रियः । न यत्र जीवसंसक्तिः शक्तिः पापापनोदने ॥८९४॥
परेषामपि कुण्डानां प्रभावोऽयं पृथक् पृथग् । षण्मासस्नानतो रोगा कुष्ठाद्या यान्ति जन्तुषु ॥८९५॥
नेमिनिर्वाणतोऽब्दानां द्विसहस्रे गते सति । अम्बासान्निध्यतो हेम-बलानकादवाप्य च ॥८९६॥
रत्नाह्वः श्रावको नेमे-र्बिम्बं वज्रमयं ततः । पूजयिष्यति भक्त्याऽत्रा-र्चयिष्यन्ति च मानवाः ॥८९७॥
उक्तश्च शत्रुञ्जयमाहात्म्ये-'द्विसहस्रीमतिक्रम्य वर्षाणामतिदुःखदाम् । अस्मन्निर्वाणसमयादम्बादेशाद्वणिग्वरः ।
ततोऽप्यानीय रत्नाह्व एतां सम्पूजयिष्यति । पुना रैवतकेऽत्रैव सुप्रसादां सुवासनः ॥८९८॥
उक्तं च-स्थिरता लक्षं सहस्राश्च समास्तिस्रः शतद्वयम् । पञ्चाशतं तथात्रासौ तिरोधास्यत्यतः परम् ॥८९९॥
एकान्तदुःषमाकाले तां नेमिप्रतिमां किल । लात्वाम्बिका सुरी श्राद्धीं पूजयिष्यति भावतः । ९००॥
प्राग्वाट् स सुराष्ट्रीयः काश्मीरविषयादिह । समेत्य प्रतिमां पूज्य-मानां नेमेः करिष्यति ॥९०१॥
अस्य सम्बन्धः मत्कृताद् जावडि प्रबन्धात ग्रन्थान्तराद् वा ज्ञेयः स्वयम् ।
पूर्वं कृष्णो गिरावुज्ज-यन्ते जिनालयं व्यधात् । ततो लेप्यमय बिम्ब-मतिष्ठिपत्प्रमोदतः ॥९०२॥
उक्त च-'विष्णुस्ततोऽवग् मच्चैत्ये स्थापितेऽयं मयाऽत्र किं । कालं स्थास्यत्यथान्यत्र क्व क्व पूजामवाप्स्यति ॥
उवाच स्वाम्यसौयं ते प्रासादे त्वत्पुरावधि । पूजामवाप्स्यत्यतः शैले काञ्चनाख्ये सुरैः कृते ॥९०३॥

अस्मिन् रैवतके शैलेऽसङ्ख्याता जिनालयाः । कारिता नृपतीभ्याद्यै-स्तेषामुद्धृतयः पुनः ॥६०४॥
बिम्बान्यपि मणि मृत्स्ना-दृपल्लेप्यमयानि च । असङ्ख्यातानि जातानि भविष्यन्ति वसन्ति च ॥६०५॥
सर्वकर्म्मक्षयं कृत्वा सङ्ख्यातीतास्तनूभृतः । मुक्तिं याता गमिष्यन्ति प्रयान्ति च न संशयः ॥६०६॥
क्रमाद्यादववंशेऽभूत् सोमचन्द्रमहीपतिः । जीर्णदुर्गे जिनागार-महेभ्योको विराजते ॥६०७॥
अन्येद्युस्तत्र नगरे चन्द्रशेखरसूरयः । बोधयन्तोऽवनीं भूरि-साधुयुक्ताः समाययुः ॥६०८॥
तदानीं वन्दनायाते तस्मिन् वसुन्धरापतौ । गुरवो जगदुः शत्रु-ञ्जयमाहात्म्यमद्भुतम् ॥६०९॥
कृता शत्रुञ्जये येन यात्रा विस्तारपूर्वकम् । स एव लभते सद्यो-ऽपवर्गस्वर्गसम्पदम् ॥६१०॥
विना तपो विना दानं विनाऽर्चा शुभभावतः । केवलं स्पर्शनं सिद्ध क्षेत्रस्याक्षयसम्पदाम् ॥६११॥
शत्रुञ्जयसमं तीर्थ-मादिदेवसमः प्रभुः । जीवरक्षासमो धर्मो नास्ति विश्वत्रये परः ॥६१२॥
श्रुत्वेति भूपतिर्भूरि-संघलोकसमन्वितः । शत्रुञ्जये जिनं नन्तुं कुर्वन्महोत्सवं ययौ ॥६१३॥
पुष्पैरादौ युगादीश-मर्चयित्वा सविस्तरम् । आरात्रिकं च मङ्गल-दीपकं च व्यधान्नृपः ॥६१४॥
ततश्च स्वामिनः पादौ प्रणम्य च प्रपूज्य च । वर्द्धयामास भूपालः प्रियालुं मणिभिर्वरैः ॥६१५॥
तत्र श्रीगुरुपादान्ते धर्म्मं श्रोतुं ययौ नृपः । यदा तदा जगादेति माहात्म्यं तस्य भूभृतः ॥६१६॥
अत्र तीर्थे तपो यच्च क्रियते प्राणिभिर्मनाग् । तन्मुक्तिफलसङ्घातैः फलति क्ष्मापतेऽचिरात् ॥६१७॥
न रोगा न च सन्तापो न दुःखं न वियोगिता । न दुर्गतिर्न नाशश्च पुंसां शत्रुञ्जयस्पृशाम् ॥६१८॥
दीक्षां लात्वा तपो योऽत्र कुरुते शुभभावतः । तस्याशु जायते मुक्ति-सातं तनु भृतो नृप ! ॥६१९॥
श्रुत्वैतन्नृपतिः पुर्यां समेत्य निजसूनवे । दत्त्वा राज्यं गुरूपान्ते ललौ दीक्षां शिवप्रदाम् ॥६२०॥
क्रमात् सूरिपदं प्राप्य भूरिसाधुनिसेवितः । शत्रुञ्जये ययौ चन्द्र-शेखरसूरिराट् क्रमात् ॥६२१॥
तत्र तीव्रं तपः कृत्वा केवलज्ञानमादरात् । आसाद्य निर्वृतिं यातो भूरिसाधुसमन्वितः ॥६२२॥

卐 इति श्रीकृष्णचरिते नेमिनाथसम्बन्धगुफितसाम्बप्रद्युम्नप्रमुख-श्रीकृष्णनरकगमनस्वरूप समाप्तम् 卐



मुद्रक—शांति प्रिन्टर्स, इन्दौर २

# शत्रुञ्जय - कल्पवृत्तिः

## ( द्वितीयो विभागः )

अन्नेवि भरह–सेलक–थावच्चासुयसुयाइ असंखा। जहिं कोडिकोडि सिद्धा जयउ तं पुंडरी तित्थं ॥२३॥

अन्येऽपि भरतः सेलकः स्थापत्यासुतश्च तस्य सुतः, इत्यादयोऽसङ्ख्या कोटिकोटयः सिद्धाः यत्र जयतात् तत् पुण्डरीकाख्यं तीर्थम् ॥ अत्र कथा—

द्वारवत्यामभूत् स्थाप-त्याह्व सार्थपतिर्वरः। स्थापत्या गेहिनी तस्य बभूव शीलशालिनी ॥ स्थापत्यासूनुरित्याह्वः सूनुस्तस्याऽभवत् क्रमात्। द्वात्रिंशत्कन्यकाना तु चकार पाणिपीडनम् ॥ यतः— "धम्मेण कुलप्पसूइ धम्मेण य दिव्वरूवसपत्ती। धम्मेण धणसमिद्धी धम्मेण सवित्थरा कित्ती ॥१॥" अन्येद्युर्नेमिनः पार्श्वे स्थापत्यानन्दनोऽनघः। धर्म्मस्य देशनां सम्यक् सुश्रावेति कृताञ्जलिः ॥ संसारे पर्यटन् जन्तु–र्बहुदुःखसमाकुले। शारीर मानसं दुःखं लभतेऽतीव दारुणम् ॥ आर्त्तध्यानगतो मूढो न करोत्यात्मनो हितम्। तेनासौ सुमहत् क्लेशं परत्रेह च गच्छति ॥ ज्ञानभावनया जीवो लभते हितमात्मनः। विनयाचारसम्पन्नो विषयेषु पराङ्मुखः ॥ आत्मानं भावयन्नित्यं ज्ञानेन विनयेन च। दुःखं न लभतेऽमुत्र परत्र च जनः क्वचित् ॥ इत्यादि–देशनां नेमि–नाथस्य सन्निधौ तदा। निशम्य विषय–ग्रामे विमुखोऽजनि स क्रमात् ॥ स्थापत्यासूनुरन्येद्यु–र्ययाचे मातर व्रतम्। माताऽवग् दुष्करा दीक्षा त्वं लघुर्विद्यसे सुतः ॥ पुत्रः प्राह लघुः कोऽस्ति वृद्धो वा मानवोऽत्र हि। वृद्धं लघुं यतो लाति दुःखिनं सुखिनं यमः ॥ यावत् स्वास्थ्यं शरीरस्य यावच्चेन्द्रियसम्पदः। तावद्युक्त तपः कर्त्तुं वार्द्धके केवलं श्रमः ॥ यतः— "गर्भस्थं जायमानं शयनतलगतं मातुरुत्सङ्गसंस्थं, वालं वृद्धं युवानं परिणतवयसं विज्ञमार्यं खलं वा। वृक्षाग्रे शैलशृङ्गे नभसि पथि जले कोटरे पञ्जरे वा, पाताले च प्रविष्ट हरति सततं दुर्निवार्यः कृतान्तः ॥१॥" गुरुशुश्रूषया जन्म चित्तं सद्ध्यानचिन्तया। श्रुतं यस्य शमे याति विनियोगं स पुण्यवान् ॥ छित्त्वा स्नेहमयान् पाशान् भित्त्वा मोहमहार्गलाम्। सच्चारित्रसमायुक्ता शूराः मोक्षपथे स्थिताः ॥ कर्म्मणा मोहनीयेन मोहितं सकलं जगत्। धन्या मोहं समुत्सार्य तपस्यन्ति महाधियः ॥ इत्यादि–सूक्तसङ्घातैः स्थापत्यानन्दनः क्रमात्। जननीं मानयामास संयमादानहेतवे ॥ तदा सर्वाः स्नुषा प्रोचु श्वश्रूं प्रति कृतादरम्। यत् पतिः करोत्येवा–स्माभिः कार्यं तदेव तु ॥ यतः —"पत्यौ प्रव्रजिते सा स्त्री गृह्णाति संयमं किल। तस्याः शिवेन्दिरा हस्ते जायते नात्र संशय- ॥१॥" स्थापत्या रत्नसम्पूर्णं स्थाल मुक्त्वा हरेः पुरः। व्यजिज्ञपत् स्वसूनोस्तु दीक्षादानकदाग्रहम् ॥ कृष्णोऽवक् ते सुतो धन्यो यस्यास्त्येवं मनोरथः। ममाभाग्यवतो नेच्छा संयमग्रहणे मनाग् ॥ ततस्तत्र समाकार्य स्थापत्यासुतमच्युतः। प्राह कथं त्वया सौख्य–मीदृग् यत्र विमुच्यते ॥ स्थापत्यानन्दनः प्राह संसारे विषमेऽत्र हि। दुःखाघ्रातं सुखं सर्वं दृश्यते साम्प्रतं मया ॥ २३ ॥

यतः—"अहो! मोहस्य माहात्म्यं विद्वांसोऽपि च मानवाः। मुह्यन्ति तेऽपि संसारे कामार्थं रतितत्पराः॥ कामः क्रोधस्तथा लोभो रागो द्वेषश्च मत्सरः। मदो माया तथा मोहः कन्दर्पो दर्प एव च॥ एते हि रिपवो घोरा धर्मसर्वस्वहारिणः। एतैर्वम्भ्रम्यते जीवः संसारे बहुदुःखदे॥ रागद्वेषमयो जीवः कामक्रोधवश गतः। लोभमोहमदाविष्टः संसारे ससरत्यसौ॥ श्रुत्वैतद्वचनं तस्य कृष्णो दीक्षामिलापिणः। पटहोद्घोषणात् तत्रा–कारयत् सर्वतो बहून्॥ अमिलन् पुरुषा धूर्त्तेच्छवः सहस्रशस्तदा। स्थापत्या कारयामास पुरीशोभा पदे पदे॥ स्थापत्यानन्दनोऽसङ्ख्य–सज्जनश्रेणिसंयुतः। मातृकंसरिपुभ्यां च कार्यमाणे महोत्सवे॥ पूजयित्वा जिनं दानं ददत् पदे पदेऽर्थिने। नेमिनाथान्तिके दीक्षां गृहीतुं समुपेयिवान्॥ युग्मम्॥ स्थापत्यानन्दनस्यैव गृह्णतः संयमं तदा। दीक्षोत्सव व्यधात् कृष्णो भूयिष्ठकमलाव्ययात्॥ तदा सहस्रशो भूप–सुता इभ्याङ्गजादयः। नेमिपार्श्वे ललु–र्दीक्षा कल्याणकमलाप्तये॥ स्थापत्यासूनुगेहिन्यः सर्वाः पत्या सम तदा। संयम जगृहुर्नेमि–जिनेशस्यान्तिके मुदा॥ ज्ञातनिःशेषसिद्धान्तं स्थापत्यानन्दनं क्रमात्। ज्ञात्वा नेमिर्ददौ तस्मै पद सूरेः सदुत्सवम्॥ स्थापत्यासूनुराचार्यः समेत्य शैलके पुरे। शैलक भूपति जैन–धर्म्ममग्राहयत्तदा॥ तत्र सुदर्शनो मिथ्या–दृष्टिः शैलकसन्निधौ। त्यक्त्वा मिथ्यात्वमादातु–कामोऽभूदार्हत वृषम्॥ यतः—"या देवे देवताबुद्धि–र्गुरौ च गुरुतामतिः। धर्म्मे च धर्म्मधीः शुद्धा सम्यक्त्वमिदमुच्यते॥१॥ अदेवे देवताबुद्धि–रगुरौ गुरुधीः पुनः। अधर्म्मे धर्म्मधीरेव मिथ्यात्वमिदमुच्यते॥२॥" सुदर्शनगुरुः शिष्य–सहस्रयुक् शुकाभिधः। सुदर्शनस्य बोधाय सद्यस्तत्र समागमत्॥ गत्वा सुदर्शनोपान्ते परिव्राट् शुक ऊचिवान्। त्वया पाखण्डिनः पार्श्वे धर्म्मः किं जगृहेऽधुना॥ सुदर्शनो जगौ ज्ञानी स्थापत्यानन्दनो गुरुः। कृपापात्रं गुरुधिया–ङ्गीचक्रे साम्प्रतं मया॥ स गुरु सेव्यते सद्भिः योऽपारभववारिधिम्। स्वयं तरन् परानुत्ता–रयत्येव जनान् बहून्॥ "भारीकम्मा जीवड़ा जो बुज्झिस्सइ तो बुज्झ। सयल कुटुम्बह खायसि माथाइ पडिसेह तुज्झ॥१॥ बाहिरि मूढ म जोइ ए खाइवा मेलावड़ो। धणकारणे सहु कोइ तूं कारणी कोइ नहीं॥२॥" धर्म्मज्ञो धर्म्मकर्त्ता च सदा धर्म्मप्रवर्त्तकः। सत्त्वेभ्यो धर्म्मशास्त्रार्थ–देशको गुरुरुच्यते॥ "अक्खर अक्खइ किंपि न इहइं चउगइ भव संसारह बीहइ। सजमनियमेहिं खण नवि मुंचइ साहम्मी सुहगुरु वुच्चइ॥१॥ दुह थ घरि भज्जा करिसण किज्जइ कवण सीस कवणु। गुरु भणिज्जइ–मूढउ लोओ अयाणु भणिज्जइ (न बुज्झइ) कद्दम कद्दमेण किमु सुज्झइ॥२॥" इत्यादि–युक्तिवचनैः सुदर्शनेन सद्धिया। शुको निरुत्तरीचक्रे तथा मौनं यथा व्यधात्॥ ततो धर्म्ममयैर्वाक्यै–र्मिथ्यात्वगरलं क्रमात्। उत्तार्य सूरिणोऽग्राहि शुकः शिष्ययुतो व्रतम्॥ पठित्वा जैनशास्त्राणि प्राप्य सूरिपद गुरोः। शुकाचार्यो बहून् भव्यान् ग्राहयामास धीवरः॥ प्रबोध्य भविनो भूरीन् जैनधर्म्मे शिवप्रदे। ज्ञात्वा मृत्युं ययौ सिद्ध–शैले स्थापत्यकाङ्गजः॥ संसारभीलुकस्तत्र स्थापत्यानन्दनो गुरुः। क्षमित्वा निखिलान् जीवान् सम्प्राप्याऽनशनं तदा॥ मासान्ते केवलज्ञान प्राप्य स्थापत्यकाङ्गजः। परिवारयुतः कर्म्म–क्षयात्तत्र शिव ययौ॥ इतः शुकगुरुः पृथ्व्यां प्रबोधयन् बहून् जनान्। शीलकाख्यपुरं प्राप शीलकक्ष्मापपालितम्॥ शुकः सूरिः प्रबोध्य च शीलक तत्र भूपतिम्। मन्त्रि–पञ्चशतीयुक्त–मदीक्षयत सदुत्सवम्॥ अधीत–द्वादशाङ्गः श्री शीलकाचार्य इद्धधीः। प्राप्य सूरिपदं भव्यान् बोधयामास भूरिशः॥ शुकाचार्योऽपि भव्याङ्ग–भाजः प्रबोधयन् बहून्। गत्वा शत्रुञ्जये प्राप केवलज्ञानमादरात्॥ मासान्ते ज्येष्ठराकाया सहस्रसाधुसेवितः। सर्वकर्म्मक्षयात्तत्र

सिद्धिक्षेत्रमुपागमत् ॥ इतः शीलकसूरीशो रोगाक्रान्ततनुः क्रमात् । शीलके पत्तने स्वर्गि-पुरवर्ये समीयिवान् ॥ आगतं पितरं वाह्यो-द्याने मण्डुकभूपतिः । ज्ञात्वा गत्वा च तत्राशु शुश्राव धर्मदेशनाम् ॥ नास्ति कामसमो व्याधि-र्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्नि-र्नास्ति ज्ञानसमं सुखम् ॥ कषायविषयार्त्तानां देहिनां नास्ति निर्वृतिः । तेषां च विरमे सौख्यं जायते परमाद्भुतम् ॥ धर्म्मं करोति यो नित्यं सम्पूज्यस्त्रिदशेश्वरैः । लक्ष्मीस्तं स्वयमायाति भुवनत्रयसंस्थिता ॥ वैराग्यसारं भज सर्वकालं निर्ग्रन्थसङ्गं कुरु मुक्तिबीजम् । विमुञ्च सङ्गं कुजनेषु मित्र ! देवार्चनं त्वं कुरु वीतरागे ॥ देशनान्ते गुरूपान्ते श्राद्धधर्म्मं महीपतिः । लात्वाऽप्राक्षीद् गुरो ! किं ते रोग ईदृग् विलोक्यते ? ॥ चिकित्सा क्रियतां किञ्चित् यया नीरोगता भवेत् । देहेन क्रियते धर्म्मो महोदयसुखप्रदः ॥ इत्यादि-युक्तितः पर्य-वसाय्य भूपतिर्गुरुम् । अनैषीद् भेषजं रोग-छेदाय तत्र तत्क्षणात् ॥ आदौ कुर्वन्नसावद्य-मौषधं स गुरूत्तमः । भुङ्क्ते मधुरमाहार-मौषधं च निरन्तरम् ॥ कल्पाकल्पाविभागेना-हारादिकौषधानि च । भुञ्जानो गुरुराड् नैव विरराम मनागपि ॥ बहूनि हायनान्येवं भोजं भोज यथेप्सितम् । आहारमौषधं सूरि-र्बुभुजे रसगृद्धितः ॥ यतः—" क्रमाद्रोगे गतेऽप्येष सूरिः सुरसलोलुपः । भुङ्क्ते स्म स्वयमानीतं साध्वानीतं गलावधि ॥ १ ॥ ततश्चारित्रिणः शश्वद् गुरूणां पुरतस्त्विति । उपदेशं ददुर्नैवाकल्पं भोक्तव्यमेव हि ॥ धर्म्म एवौषधं शश्वत् कार्यं स्वहितमिच्छुभिः । धर्म्मौषधाद् भवन्त्येव स्वर्गादिसुखसम्पदः ॥ यतः—" व्याधिदुःखभराक्रान्ता नीयन्ते यममन्दिरे । प्राणिनः को भवेत् त्राता धर्म्मं देवगुरुं विना ? ॥ १ ॥ " धर्म्मं ज्ञानं च चारित्रं तपो दानं जपादिकम् । शरण्यं मुनिभिः प्रोक्तं दुःखशोकान्तकं नृणाम् ॥ स्वयं घर्षति हस्तौ च प्राणी भालं निहन्ति च । वाक्येनापि समर्थोऽयं हा ! हा ! धर्म्मं विना मृतः ॥ निषिद्धः साधुभिर्वृद्धै-र्न निवृत्तो यदा रसात् । तदैकं पिच्छिकं साधुं मुक्त्वाऽन्यत्र ययुश्च ते ॥ भुङ्क्त्वा स्वपिति सूरीश-स्तथा निर्भरमन्वहम् । यथा जानाति नो सायं प्रातर्वा धर्म्मकर्म्म च ॥ कार्त्तिके मासि राकाया-मन्यदा पिच्छको यतिः । प्रतिक्रमन् गुरौ सुप्ते क्षमणार्थमदाच्छयम् ॥ हस्तस्पर्शनतोऽकस्मा-दुत्थितः शीतलो जगौ । केनाथ पापिनेदानी-महमुत्थापितः खलु ॥ पिच्छकस्तु गुरोः पादे लगित्वाऽऽचष्ट शिष्टधीः । चतुर्मासिकपर्वत्वात् क्षामिता गुरवो मया ॥ अपराधो मया यो यश्चक्रे विमूढचेतसा । स एव भवतेदानीं क्षन्तव्यो हितमिच्छता ॥ यतः—" अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ " विना गुरुभ्यो गुणनीरधिभ्यो जानाति धर्म्मं न विचक्षणोऽपि । विना प्रदीपं शुभलोचनोऽपि निरीक्षते कुत्र पदार्थसार्थम् ? ॥ धिग् मया क्षमणा-दम्भा-चतुर्मासिकपारणे । यूयं जागरिताः पूज्या-स्तत् क्षमध्वं क्षमापराः ॥ शिष्यस्येति वचः श्रुत्वा चित्ते विलज्जितो गुरुः । चारित्रदूषकं वाढं निनिन्दात्मानमात्मसात् ॥ रसनेन्द्रियदोषेण मया पापात्मना खलु । आनीन्ये धर्म्ममाणिक्ये मालिन्यं साम्प्रतं ध्रुवम् ॥ यतः—" यो जिह्वालम्पटो मूढः खाद्याखाद्यं न मन्यते । अखाद्यं भक्षयित्वा स दुर्गतिं याति पापधीः ॥ १ ॥ तिलमात्रसमे कन्देऽनन्ता जीवसंस्थिताः । तस्य भक्षणतो मुक्ताः सर्वे जीवाः कुदृष्टिभिः ॥ २ ॥ " शीतलः सूरिराट् शिष्यं क्षमयित्वाऽऽत्मसाक्षिकम् । प्रतिक्रान्तिं व्यधात् सम्यक् कृतपाप-ततिच्छिदे ॥ " सीइज्ज कयावि गुरु तंपि सुसीसा सुनिउण-महुरेहिं । मग्गे ठवंति पुणरवि जह सेलगपंथगो नायं ॥ १ ॥ " विकृतीः षडपि त्यक्त्वा स्वकृत्यगर्हणापरः । परिवारयुतोऽचालीद् भव्यान् बोधयितुं क्षितौ ॥ धारापुरे धरापालः

पालिते शैलको गुरुः । ययौ यावत्तदाऽऽयातो वन्दितुं तं महीपतिः ॥ शीतलोऽवक् तदा जीवदयामूलं वृषं तु यः । करोति स व्रजत्येव महोदयपुरीं रयात् ॥ यश्चारित्रमादाय गत्वा शत्रुञ्जये गिरौ । तंतन्यते तपस्तीव्रं स याति परमं पदम् ॥ श्रुत्वेति देशनां पुत्रं राज्ये न्यस्य निजे क्षणात् । धरापालो ललौ दीक्षां शीतलाचार्य-सन्निधौ ॥ भूपेन सह भूपालाः सहस्र तस्य सेवकाः । सयम जगृहुस्तत्र कल्याणसुखदायकम् ॥ प्रबोध्यैवं नृपान् भूरीन् जनांश्च जिनधर्म्मिणः । ययौ शत्रुञ्जये शैले कल्याणकमलाप्रदे ॥ तत्रस्थः शीतलाचार्यो बोधयन् भविनो बहून् । अनेक-साधु-संयुक्तो ललावनशनं तदा ॥ तदा शैलकसूरीश-शिष्यः शुभङ्करामिधः । देवान् नन्तु शिवक्ष्माध्रे समागाद् भूरि-साधुयुग् ॥ तत्रोपदिशतस्तस्य सूरेर्भविकमानवाः । लक्षमेक ललौ दीक्षा संसारार्णवतारणीम् ॥ धर्म्मध्यानपरः सूरिः शीतलोऽसङ्ख्य-साधुयुग् । अवाप केवलज्ञानं घातिकर्म्म-ततिक्षयात् ॥ तत्र शीलकसूरीश. शुकाचार्यादि-संयुतः । सर्वकर्म्मक्षयान्मुक्ति-नगर्यां समुपेयिवान् ॥ शुभङ्करगुरोः शिष्य-शतानन्दगुरूत्तमः । विहरन् पृथिवीपीठे भृगुकच्छपुरे ययौ ॥ तत्र कुन्तलभूपालो गुरूपान्ते वराशयः । धर्म्मं श्रोतुं यदायासीत्तदेति गुरुरूचिवान् ॥ औषधं परमं ज्ञेयं धर्म्मो वृत्तं तपो जपः । दानं पूजादिकं सर्व-रोगक्लेशविनाशकम् ॥ नश्यन्ति येन धर्म्मेण जन्ममृत्युजरादिकाः । किं न नश्यन्ति तेनैव रोगक्लेशभयादयः ? ॥ इन्द्रियाणां जये शूरः कर्म्मबन्धे च कातरः । तत्त्वार्थाहितचेतस्कः स्वशरीरेऽपि निस्पृहः ॥ कुन्तलो भूपतिः श्रुत्वा धर्म्मं सोमाभिधं सुतम् । स्वपट्टे न्यस्य जग्राह चारित्रं मुक्तिदायकम् ॥ कुन्तलोऽथ यतिः शत्रु-ञ्जये गत्वाऽन्यदा क्रमात् । ध्यानं कुर्वन् ययौ मुक्ति-नगर्यां तमसः क्षयात् ॥ एव स्थापत्यकासूनु-सूरिमुख्या गणाधिपाः । शत्रुञ्जये गिरौ सिद्धि-नगर्यां समुपाययुः ॥ एवमन्येप्यासङ्ख्याताः साधवः सिद्धपर्वते । क्षिप्त्वा कर्म्माष्टकं मुक्ति-नगर्यां समुपागताः ॥ ८९ ॥

इति स्थापत्यासुत-शुकसूरिमुक्तिगमनस्वरूपम् ।

---

**अस्संखा उद्धारा असंखपडिमाउ चेइआसंखा । जहिं जाया जयउ तयं सिरिसित्तुंजयमहातित्थं ॥२४॥**

यत्र शैले प्रासादबिम्बोद्धाराः, असङ्ख्याता 'जाता' बभूवुः, तत्तीर्थं जयतात् ॥ तथा हि—

भरतप्रमुखक्षोणी-नायकैर्बहुभिः क्रमात् । यैरुद्धाराः कृताः शत्रु-ञ्जये तीर्थे शिवप्रदे ॥ तेषां सङ्ख्या मनाग् नैव ज्ञायते मन्दबुद्धिभिः । श्रूयन्ते ज्ञायन्तेऽधुना तेषां क उद्धारका जने ॥ अयोध्यायां पुरि क्षोणी-नाथश्चन्द्रमहीपतिः । स्वामिवंशेऽभवत् प्रौढो बहुसेनासमन्वितः ॥ सोऽन्यदा कमलाचार्य-समीपे धर्म्ममार्हतम् । शृण्वान् सिद्धशैलस्य माहात्म्यमशृणोदिति ॥ यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्घेशार्हन्त्यपदकृत् स जीयाद् विमलाचल ॥ महास्नात्रमहापूजा-ध्वजावारिक्रियान्वितः । सङ्घपूजेति कृत्यानि पञ्च सङ्घाधिपे क्रमात् ॥ तौ द्राविडवारिखिल्लौ दशकोटिसमन्वितौ । निर्मलं केवलं प्राप्य सिद्धिं शत्रुञ्जये गतौ ॥ यथा चैत्रस्य राकायां पुण्डरीकोऽगमच्छिवम् । कार्त्तिकस्य तथैवेति तदेते पर्वणी स्मृतौ ॥ सिंहव्याघ्राहिशबर-पक्षिणोऽन्येऽपि पापिनः । दृष्ट्वा शत्रुञ्जयेऽर्हन्तं भवन्ति स्वर्गगामिनः ॥ यात्रां शत्रुञ्जये तीर्थे ये कुर्वन्ति सुधर्म्मिणः । त एव स्वर्गसौख्यानि लब्ध्वा

यान्ति च निर्वृतिम् ॥ प्रासादं कारयन्त्येवो–द्धारं च जिनसद्मनः । त एव क्षीणकर्म्माणो व्रजन्ति शिवपत्तने ॥ श्रुत्वेति चन्द्रभूपालो गत्वा शत्रुञ्जयाचले । पूजयित्वा युगादीशं व्यधात् ध्वजादिकं पुनः ॥ द्वासप्ततिसुरावास–सहितं जिनमन्दिरम् । कारयित्वा नृपो नाभि–पुत्रबिम्बमतिष्ठिपत् ॥ ततश्चन्द्रनृपस्तत्र लात्वा दीक्षां क्रमान्मुदा । शत्रुञ्जये ययौ मुक्ति–पुर्यां सर्वतमःक्षयात् ॥ धर्म्मपुर्यां धनक्षोणी–पति-र्न्यायैकमन्दिरम् । तथाऽपात् पृथिवीलोकान् यथाऽभूवन् सुखान्विताः ॥ आगते परचक्रे तु भूपः सन्नह्य तत्क्षणात् । निर्गत्य विद्विषो शेषान् वशीचक्रे भुजौजसा ॥ अन्येऽपि धर्म्मसूरीशो–पान्ते धर्म्मं जिनोदितम् । शुश्राव भूपतिर्भक्त्या कल्याणसातदायकम् ॥ आत्मानं सततं रक्षेद् ज्ञानध्यानतपोबलैः । प्रमादिनोऽस्य जीवस्य शीलरत्नं विलुप्यते ॥ छित्त्वा स्नेहमयान् पाशान् भित्त्वा मोहमहार्गलाम् । सच्चारित्रसमायुक्ताः शूरा मोक्षपथि स्थिताः ॥ कर्म्मणा मोहनीयेन मोहितं सकलं जगत् । धन्या मोहं समुत्सार्य तपस्यन्ति महाधियः ॥ अहो ! मोहस्य माहात्म्यं विद्वांसो येऽपि मानवाः । मुह्यन्ति तेऽपि संसारे कामार्थं रतितत्पराः ॥ शत्रुञ्जये गिरावेत्य येऽर्चयन्ति जिनेश्वरान् । तेषां स्यात् सफलं जन्म जीवितव्यं धनं पुनः ॥ शत्रुञ्जये जिनागारं कारयन्ति जना हि ये । तेषां करतले स्वर्ग–कल्याण-शर्म जायते ॥ पूजाऽर्हतां गुरौ भक्तिः श्रीशत्रुञ्जयसेवनम् । चतुर्विधस्य सङ्घस्य सङ्गमः सुकृतैर्भवेत् ॥ श्रुत्वेति धर्म्मभूपालः प्रेष्य कुङ्कुमपत्रिकाः । सङ्घमाकारयामास गन्तुं शत्रुञ्जयाचले ॥ भूरिस्वर्णजिनावासान् कारयित्वा वरेऽहनि । स्थापयित्वा जिनांस्तेषु चचालावनिनायकः ॥ ग्रामे ग्रामे पुरे पुर्यां स्नात्रपूजाध्वजादिकम् । कुर्वाणः कारयन् शत्रुञ्जये तीर्थे नृपोऽगमत् ॥ तत्र मुख्यजिनावासे स्नात्रपूजाध्वजादिकम् । कृत्यं स्वयं वितन्वानो नृपश्चाकारयज्जनान् ॥ मुख्यार्हदालये तीर्थो–द्धारं विधाय रैव्ययात् । स्नात्रपूजादिकृत्यानि चकारावनिनायकः ॥ शिखरे मरुदेवाया अजितस्य जिनेशितुः । प्रासादं कारयित्वा तद्–बिम्बं न्यवीविशत् क्रमात् ॥ श्रीसम्भवजिनाधीश–प्रासादं प्रौढमन्यदा । कारयित्वा च तद् बिम्बं तत्र न्यवीविशन्नृपः ॥ क्रमाल्लात्वा व्रतं क्षिप्त्वा सर्वकर्म्म शुभाशुभम् । कल्याणनगरे भूपो जगामामलमानसः ॥ ३२ ॥

इति असङ्ख्योद्धारविषये कथा ।

---

अन्यदा पार्श्वतीर्थेशः प्रबोधयन् भुवस्तलम् । भूरिसाधुसुरासेव्यः सिद्धाद्रौ समवासरत् ॥ कृते वप्रत्रये रूप्य–स्वर्णरत्नमये सुरैः । उपविष्टः प्रभुर्धर्म्मो–पदेशमिति चक्रवान् ॥ 'आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् '॥ जइ धम्मक्खर संभलइ नयणे निद्द न माइ । वत्त करंता मरकलइ कवकइं रयणि विहाइ ॥ अनादि–भवपाथोधि तारकोऽयं शिवाचल । य श्रयन्ति जना भव्या नाभव्याः स्प्रष्टुमप्यहो ! ॥ सर्वतीर्थमयोऽद्रीशो विमलो विमलात्मनाम् । दुर्गति-द्वितयं हन्ति दृष्टमात्रोऽर्चया तु किम् ? ॥ नामुष्य तीर्थतोऽप्युच्चो, विद्यते कनकाचलः । अत्रस्थैस्त्वरितं मुक्तिः प्राप्यते दूरगापि हि ॥ आकर्ण्येतज्जना भूपा बहवः श्रीजिनोदितम् । धर्म्मं ललुर्व्रतं चापि

कल्याणशर्मदायकम् ॥ प्रभोर्व्याख्यानतः सर्प-नकुलेभकुरङ्गकाः । प्रबुद्धाः प्रययुस्तत्र शिवं साम्य-समाश्रयाः ॥ रैवतादिषु शृङ्गेषु विहृत्य त्रिजगद्गुरुः । काशीपुर्यां समायातो भूरिसाधुसमन्वितः ॥ हस्तिसेनः प्रभोर्श्रोता राजाऽभ्येत्य नृपान्वितः । प्रणम्य स्वामिनं धर्म्मं शुश्रावेति तदादरात् ॥ शत्रुञ्जयः सुरेशार्चा सयतत्वं च सद्गुरुः । सम्यक्त्व शीलसाम्ये च शिवसौख्याय सप्तकम् ॥ अनन्तभवसम्भूत-दुष्कृतद्रोहकृद्गिरिः । शत्रुञ्जयः सिद्धिपदं शाश्वतः सेव्यते न कैः ? ॥ मिथ्यात्वविषसङ्घ्रात जन सम्यग्व-चोऽमृतैः । निर्वापयन् गुरुर्ध्यातः पातकान्तकरोऽङ्गिनाम् ॥ तावज्जीवो भ्रमत्येव भवेन्मिथ्यात्व-मोहितः । सम्यक्त्व न स्पृशत्येष यावन्निःशेषपापनुद् ॥ जलत्यग्निर्विषं पीयू-षत्यत्राही रज्जति । कि-ङ्करन्ति सुरा यस्मात् तच्छीलं सेव्यमङ्गिभिः ॥ हस्तिसेनस्ततः प्राह सङ्घेशत्वं शिवाचले । प्राप्यते भविकैः स्वामिन् ! ततः पार्श्वप्रभुर्जगौ ॥ मेलयित्वा बहु सङ्घ देवालयस्थितान् जिनान् । पूजयन् नगरे ग्रामे जिनेन्द्रजिनसद्मसु ॥ तिलकं सङ्घनाथस्य पार्श्वात् स मेदनीपतिः । कारयन् विभव भूरि सफल विदधेतराम् ॥ युग्मम् ॥ क्रमाच्छत्रुञ्जये गत्वा कृत्वा स्नात्र जिनेशितुः । पूजयामास सङ्घेशः सुगन्धिकुसुमैर्वरैः ॥ ततो ध्वजा जिनागारे शृङ्गे दत्त्वाऽतिविस्तरात् । चकाराऽऽरात्रिकं दीपं मङ्गलं च नराधिपः ॥ तत आदिजिनाधीश-पादुके कुङ्कुमादिभिः । अर्चयित्वा स्तुतिं चक्रे श्रीमतो वृषभ-प्रभोः ॥ ततो राजादनीं मुक्ता-फलैरामलकप्रभैः । हस्तिसेनो नृपो वर्द्धा-पयामास प्रमोदतः ॥ तदा राजादनी क्षीर-वर्षतः सङ्घनायकम् । त्वरित स्नपयामास बाह्येऽङ्गे मानसेऽपि च ॥ ततः सर्वेषु सर्वज्ञ-गेहेषु जिननायकान् । हस्तिसेनोऽर्चयामास तुष्टाव च स्तवैर्वरैः ॥ ततस्तत्र गिरौ पार्श्व-नाथस्य सदनं महत् । कारयित्वा प्रभोर्बिम्बं हस्तिसेनो न्यवीविशत् ॥ ततोऽन्येषु च सिद्धाद्रि-शृङ्गेषु श्रीजिना-लयान् । हस्तिसेनो महीपालोऽकारयद् भूरि-रैव्ययात् ॥ ततोऽन्नपानसद्वस्त्र-दानेन हस्तिसेनकः । सङ्घं गौरवयामास श्रीमद्गुरुसमन्वितम् ॥ ततोऽभ्येत्य पुरे स्वीये दत्त्वा राज्य स्वसूनवे । हस्तिसेनो लत्वौ दीक्षा श्रीपार्श्वजिनसन्निधौ ॥ कुर्वंस्तीव्रं तपः शत्रु-ञ्जयेऽभ्येत्यान्यदा क्रमात् । हस्तिसेननृपालर्षि-र्ध्यानं चक्रे प्रभोः पुर ॥ हस्तिसेनस्य राजर्षेः शुक्ल ध्यानं वितन्वतः । उत्पन्नं पञ्चमं ज्ञानं सर्वकर्म्म-ततिक्षयात् ॥ तदा तेषा यतीशाना बहूनां ध्यानसञ्जुषाम् । उत्पन्नं पञ्चमं ज्ञानं सर्वकर्म्मततिक्षयात् ॥ तत्रायुःक्षयतो हस्ति-सेनो भूयिष्ठसाधुयुग् । यदाऽगान्निर्वृतिं देवा-स्तदा चक्रुर्महोत्सवम् ॥ ३२ ॥

इति असङ्ख्योद्धारप्रतिमाविषये कथानकं समाप्तम्

---

ललिताह्वे पुरे भीम-श्रेष्ठिनः पद्मिनो प्रिया । असूत तनयं चन्द्र-कुमारं मारसन्निभम् ॥ वर्द्धमाने सुने तस्मिन् गृहे लक्ष्मीर्दिने दिने । वर्द्धते स्म तथा श्रेष्ठी यथाऽभूच्छ्रीदभः श्रिया ॥ अन्यदा श्रेष्ठिना लक्ष्मी-पुरे सोमधनेशितुः । पुत्र्या कमलया सार्द्धं विवाहोऽमिलि सद्दिने ॥ लग्नं लात्वाऽन्यदा भीमो भूरिसज्जनसयुतः । दुकूलैरैमयैर्वय-भूषणैर्भूषितो भृशम् ॥ रैरत्नशालितैः शृङ्गे शृङ्खलाश्रितैर्गलैः । घृषभैर्भूषितांश्चक्रे स्यन्दनान् भूरिशस्तदा ॥ चलन् श्रेष्ठी यदा लक्ष्मी-पुरोद्याने समी-पुष्यौ तदाऽनेन श्रेष्ठिना भूषिता घृषाः ॥ अतोऽहमपि कुर्वेऽत्र तथा यथा हि गौरवम् ।

यया गर्वं दधद् भीमो मार्गमायाति तत्क्षणात् ॥ ध्यात्वेति श्रेष्ठिनो रत्न–रुप्यसौवर्णकैर्वरैः । आपूर्य शुण्डकान् जग्धुं गवामप्रेषि हेलया ॥ तदा भीमो जगौ गाव–स्तृणान्यदन्ति निश्चितम् । न मे भक्षितं क्वचिद् गौर्मि–रैरत्नादिकवैभवः ॥ सोमोऽवग् भवतो गावः स्वर्णरत्नविभूषिताः । विद्यन्तेऽतो नो चारिं ते चरिष्यन्ति मनागपि ॥ अतो मया मणीस्वर्ण–रुप्यपूरितगुण्डकान् । प्रेषितास्ते गवां चारि–स्थाने भीमावधारय ॥ भीमोऽवग मयका शोभा–हेतवे घृषभा अमी । शृङ्गारिता मणीस्वर्ण–रुप्यात्मकविभूषणैः ॥ ततः सोमो जगौ ध्यातं मया वैवाहिको वरः । यत एवंविध वास्त–वार्यं सम्यग्विलोक्यते ॥ ततस्तयोरभूद्वर्यो विवाहो रुचिरोत्सवम् । सोमेन श्रीर्ददे वह्नी चन्द्राय भीमसूनवे ॥ परिणाय्य सुतं भीम–श्चलन् पद्मपुरान्तिके । समेत्य तस्थिवान् कर्त्तुं भोजन सज्जनान्वितः । वरकन्ये तदा तत्रो–द्याने श्रीवृषभालये । जग्मतुर्वृषभं देव नन्तुं सूत्सवपूर्वकम् ॥ प्रणम्य घृषभं स्तुत्वा यावत्ते तस्थतुर्मुदा । तावन्मूर्च्छा समायाता वरकन्यकयोस्तयो ॥ वातादिक्षेपतः सज्जी–कृतौ तौ स्वजनादिभिः । प्राप्तजातिस्मृती पूर्व–भवं ददृशतुर्निजम् ॥ ततश्चोल्लापितौ माता–पितृभ्यां वरकन्यके । जजल्पतः स्म नो मौनं विधाय तस्थतुर्दृढम् ॥ हर्षस्थाने विषादे तु जाते भीमो वणिग्वरः । मन्त्रतन्त्रौषधादीनि तयोः सज्जीकृतेऽकरोत् ॥ तदा तत्र समायातो ज्ञानी शुभङ्करामिधः । वन्दित्वा देशना श्रुत्वा पप्रच्छे श्रेष्ठिनेति सः ॥ वरकन्ये च यद् ह्येतौ कथं मौनं प्रचक्रतु ? । ज्ञानी जगौ पुरे ह्यस्मिन् महेभ्योऽस्ति धनामिधः ॥ तस्य पत्नी रमादेवी प्रसूते स्म सुताङ्गजे । जन्मोत्सवे कृते वृद्धिं गच्छन्तौ यौवनं श्रितौ ॥ इतोऽकस्मात् समुत्पन्ने रोगे सुतसुते क्रमात् । विहिताराधने मृत्युं जग्मतुः शुभभावतः ॥ धनस्य श्रेष्ठिनः पुत्रो मृत्वा भीमाङ्गजोऽभवत् । पुत्री मृत्वाऽभवत् सोम–श्रेष्ठिनो नन्दिनी त्विमा(य)म् ॥ ज्ञात्वैतौ प्राग्भवं भ्रातृभगिनीभावमात्मनः । मौनं प्रचक्रतुः कान्त–पत्नीत्व सश्रितौ ध्रुवम् ॥ तत श्रेष्ठी जगावेतौ जल्पत स्म यथा तथा । विधीयेते त्वया ज्ञानिन् ! ततो ज्ञानी जगावदः ॥ प्रजल्पन्तौ कृतावेतौ संयम लास्यतः खलु । श्रेष्ठी प्राह विधीयेते प्रजल्पन्तौ त्वया त्वरा ॥ ततो ज्ञानी जगौ मौनं मुक्त्वा स्वस्वमनोरथम् । जल्पतं तु युवां मातृ-पित्रोरग्रे हि साम्प्रतम् ॥ ततस्त्यक्त्वा तु तौ मौनं जजल्पतुः स्फुटाक्षरम् । प्राग्भवे भगिनीभ्रातृ–भावावभवतां हि वाम् ॥ अस्मिन् भवेऽभवत् कान्त–कान्ताभावोऽधुना पुनः । अतः संयममावाभ्यां गृहीतव्योऽधुना द्रुतम् ॥ ततस्तौ सयमं लात्वा ज्ञानिन सन्निधौ तदा । तपतः स्म तपस्तीव्रं स्वर्गापवर्गशर्मदम् ॥ कमलायतिनी माया–रहितं संयमं तदा । पालयन्ती ववन्धाऽऽशु नृभवं सरलाशया ॥ ततो मृत्वाऽच्युते स्वर्गे चन्द्रः पत्नीयुतः क्रमात् । उत्पन्नो निर्जरो दिव्य–देहद्युतिधरः स्फुटम् ॥ ततश्च्युत्वा रमापुर्यां मुकुन्दमेदिनीपतेः । अभूतां नन्दनौ पद्म–चन्द्राह्वौ मनोहरौ ॥ राज्यं प्राप्य क्रमाच्छत्रु–ञ्जये कृ(ग)त्वाऽतिविस्तरात् । कारयामासतुः स्वामि–प्रासादं प्रवरं मुदा ॥ धर्म्ममाकर्ण्य सार्वोक्तं चन्द्राचार्यान्तिकेऽन्यदा । लात्वा दीक्षां तपस्तीव्र तपेते भूपनन्दनौ ॥ तपःपरायणौ तौ तु विहरन्तौ भुवस्तले । शत्रुञ्जये गतौ ध्यानं कुर्वतः स्म जिनोदितम् ॥ तत्र क्षिप्त्वा स्वकर्म्माणि सम्प्राप्य ज्ञानमव्ययम् । आयुःक्षये तु कल्याण–नगर्यां तौ समीयितुः ॥ ३८ ॥

इति शत्रुञ्जये उद्धारकथा

---

यः शत्रुञ्जयतीर्थे तु यात्रां कुर्वन् जिनाधिपान् । प्रपूजयति मोक्षं स प्राप्नोति रामविप्रवत् ॥ तथाहि—भाग्येन सर्वसम्पत्तिः सञ्जायेत पदे पदे । द्वियामरामविप्रस्य यथा तथा नृणामपि ॥ अवन्त्यां हरिविप्रस्य गेहिनी हरिसुन्दरी । बभूव विना लक्ष्मीं दुःखी विप्रोऽभवद् भृशम् ॥ भ्रामं भ्रामं पुरी-मध्ये स्वल्पं प्राप्य धनं सदा । कष्टेन विदधे स्वीय-निर्वाहं विभवं विना ॥ क्रमात् सप्ताऽभवन् पुत्रा-स्तस्य न श्रीर्गृहे पुनः । अतो बुभुक्षयाऽत्यन्तं पीड्यते तत् कुटुम्बकम् ॥ यतः—"कुग्रामवासो(सः) कुनरेन्द्रसेवा कुभोजनं क्रोधमुखी च भार्या । कन्याबहुत्वं च दरिद्रता च षड् जीवलोके नरका भवन्ति ॥ अजत्येव तदा काले पुत्रोऽभवद्यदा तदा । मध्याह्ने द्रम्मलाभोऽभूत्तदा तस्यैव भाग्यतः ॥ जन्मोत्सवे कृते तस्य सूनोः सज्जनसाक्षिकम् । द्विप्रहरक राम इति प्रददौ जनकस्तदा ॥ क्रमात् स यौवनं प्राप्तो जगौ मातुः पितुः पुरः । द्रव्यार्थमन्यदेशेऽहं गमिष्याम्यनुमन्यताम् ॥ यतः—"दीसइ विविहचरियं जाणिज्जइ सुजणदुज्जणविसेसो । अप्पाणं च किलिज्जइ हिंडिज्जइ तेण पुहवीए ॥ १ ॥" इत्युक्त्वा मातृपित्रोर्ह्री-नत्वा देशान्तरे चलन् । रामोऽप्राक्षीन्नरं कञ्चित् कुत्र श्रीः प्राप्यते वद ? ॥ नरोऽवग् रोहणे वार्द्धौ रत्नानि सन्ति भूरिशः । यस्य भाग्यं भवेत्तस्मै दत्तस्तौ तानि निश्चितम् ॥ ततो वार्द्धितटे गत्वा जगौ स जलधे ! त्वकम् । रत्नाकरोऽसि तेन त्वं मह्य रत्नानि देहि भो ! ॥ नो चेदहं करिष्याम्या-त्मनो हत्यां तवोपरि । महत्त्वं तेऽम्बुधे ! सर्वं गमिष्यति न संशयः ॥ उपवासेषु बहुषु जातेषु स वारिधिर्जगौ । साहसं तु त्वया चक्रे प्रसन्नोऽस्मि ततस्तव ॥ यतः—"साहसियाण लच्छी हवइ न हु कायराण पुरिसाइं(ण) । कन्नह कुण्डल रयणमय अंजण होइ नयणाइं ॥१॥" मह्य रत्नानि देहि त्व-मित्युक्ते तु द्विजन्मना । वितीर्य पञ्च रत्नानि जगाविति पयोनिधिः ॥ कष्टेन तव रत्नानि स्थास्यन्ति सन्निधौ द्विज ! । विप्रोऽवग् मयि रत्नानि कथं स्थास्यन्ति वारिधे ! ॥ अब्धिदेवोऽभणद् वाम—याम्यौ मार्गौ स्त एव तु । वामे मार्गेऽटवीमध्ये भिल्ला विद्यन्त एव हि ॥ ते लुण्टन्ति धनं पान्थ-पार्श्वात् सर्वं बलादिना । ज्ञापयन्ति व्रजन्त श्री-मन्तं नन्वत्र-वायसाः ॥ यास्यामि दक्षिणे मार्गे गदित्वेति तदा द्विजः । सभीरूरं विदार्यैव रत्नानि प्राक्षिपद्द्रढ ॥ ततश्चलन् द्विजो मूढो वाममार्गे गतो यदा । तदोर्ध्वं तस्य शीर्षस्य चक्रुः कोलाहलं द्विकाः ॥ रामो दध्याव-भाग्य मे साम्प्रतं विद्यते भृशम् । यतोऽब्धिमरुता मार्गे निषिद्धोऽपि समागमम् ॥ यतः—"अघटित-घटितानि घटयति सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति यानि पुमान् नैव चिन्तयति ॥ एवं चिन्तयतस्तस्य पल्लीशसेवकास्तदा । गृहीत्वा त हठात् पल्ली-पतेः पार्श्वेऽनयन् द्रुतम् ॥ पल्लीशः प्राह जामातः ! कुत आगा इहाधुना । स साहसी जगौ वार्द्धि-तटादत्रागमं ध्रुवम् ॥ पल्लीशोऽ-वक् पवित्रं मे गृह जातं तवाऽऽगमात् । त्वं तिष्ठाऽत्र सुखं दास्ये भोजनं वसनादि च ॥ एका मे विद्यते पुत्री वर्या तां धृणु साम्प्रतम् । ततः कपटतः पुत्री तस्मै पल्लीपतिर्ददौ ॥ ततश्च मर्दनाङ्गे दापयित्वाङ्ग-मर्दकात् । पल्लीशः पञ्च रत्नानि जज्ञौ तस्यान्तिके तदा ॥ ततः पुत्र्यन्तिकाद् वर्यं दापयित्वाऽथ भोजनम् । हत्वा तमीहते पञ्च रत्नान्यात्तु स पल्लिराट् ॥ ततः पल्लीपतेः पुत्री भोजयन्ती पतिं निजम् । अन्तरा घूर्णिक मद्यं ददौ रत्नाप्तये रहः ॥ शायितं वरपल्यङ्के सुप्त पल्लीपतेः सुता । छन्न करौ क्रमौ तस्याऽवध्नात्तल्पांह्रिपु ध्रुवम् ॥ हन्तुं कान्त गळे पाशं यावद् दत्ते प्रियाऽधमा । तावदुत्थाय रामोऽवग् वाण्या मधुरया प्रियाम् ॥ यतः—"महुरं निउणं थोव कज्जावडिअं अगव्वियमतुच्छं । पुव्वं मइ-संकलियं भणंति जं धम्मसंजुत्तं ॥ १ ॥" भो कान्ते ! त्वं कथं हंसि मां पतिं प्राणवल्लभम् । भर्तृहत्या

भवेत् श्वभ्र-पातो नार्या न संशयः ॥ यतः—" नारी स्वं पात हन्ति या स्वं शीलं निहन्ति च । तस्यास्तिर्यग्गतौ श्वभ्रे जायते नात्र संशयः ॥ १ ॥" सती पत्युः प्रभोः पत्ति–र्गुरोः शिष्यः पितुः सुतः । आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् ॥ वरीतोऽहं त्वया नारि ! भुक्तं मया त्वया समम् । अतो न हन्यते कान्तं वाञ्छया हितमात्मना ॥ २८ ॥

उक्तं च कथानकम्—पुरापि कानने गत्वा भूपतिः कनकाभिधः । आखेटकगतो हन्ति पशून् दृष्टिपथागतान् ॥ मृगादिषु बहुष्वेव तिर्यक्षु निहतेषु च । राज्ञा, मृगकुलं प्राह–भ्येत्येति भूपतेः पुरः ॥ दुर्बलानामनाथाना बालवृद्धतपस्विनाम् । अन्यायैः परिभूताना सर्वेषां प्रार्थिवो गुरुः ॥ वने निरपराधाना वायुनोयतृणाशिनाम् । निघ्नन् मृगाना मांसार्थी विशिष्येत कथं शुनः ? ॥ एवं त्वयि मृगान् नित्यं ध्नति सर्वे मृगाः क्रमात् । गमिष्यन्ति मृतिं तेऽनो भक्ष्यं नक्ष्यति निश्चितम् ॥ जीवहिंसाकृतं पापं तव हन्त्वे समेष्यति । ततस्ते दुर्गतिर्दुष्टा भविष्यत्यसुखप्रदा ॥ यतः—" पुरुषः कुरुते पापं बन्धुनिमित्तं च वपुर्निमित्तं च । वेदयते तत सर्वं नरकादौ पुनरसावेकः ॥ १ ॥" यत्नेन पापानि समाचरन्ति धर्म्मं प्रसङ्गादपि नाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोके क्षीरं परित्यज्य विषं पिबन्ति ॥ २ ॥" एको दिनं प्रति ग्राह्यो मृगो भिक्षाकृते सदा । तुभ्यमेको मृगोऽस्माभि–र्नित्यं प्राप्तः करिष्यति ॥ भूपेन(ते) मानिते सर्वे मृगाः सुस्थितचेतसः । प्रेषयन्ति वधस्थाने मृगमेकं यथाक्रमान् ॥ यतः—" त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १ ॥" एकं मृगं वनेषु हरिणेषु मेदिनीभुजे । स्ववारके यदा खञ्जो मृगो गच्छन् जगौ मृगीम् ॥ बहुकालं स्थितं भुक्त–मेकत्रावां प्रियोत्तमे ! । अमस्व त्वं गमिष्यामि भूमिभुग्भक्ष्यहेतवे ॥ यतः—" यस्य येन सह जन्मनि पूर्वं प्रेमबन्धनमजायत तथ्यं । तन्मुखालयन दर्शन–हारिश्चित्तमुल्लसति तस्य नरस्य ॥१॥" ततो मृगी जगौ सार्द्धं त्वयाहं वध्यभूतले । गच्छामि मरणायाथ निश्चितं (जीवित) मे त्वया सह ॥ त्वं तिष्ठाहं गमिष्यामि मृग्या हि हरिणोदिते । जगाद हरिणी स्वामिन् ! कथामेका शृणु त्वकम् ॥ वनेऽन्यदा सरस्यल्प–जले मृगो मृगीयुतः । तृषाशुष्कगलोऽभ्येत्य जगादेति मृगीं प्रति ॥ तृषया यान्ति ते प्राणा अतस्त्वं सलिलं पिब । मृग्यवक् ते गमिष्यन्ति प्राणा आदौ पिब प्रिय ! ॥ विद्यतेऽत्र सरस्येव जलं स्तोकं तृषा बहु ॥ अतो न हि पिबाम्यम्बु त्वमेव पिब साम्प्रतम ॥ इति स्नेहनिबद्धौ तावे–पीत्वा सलिलं यदा । मृगो मृगी गतौ मृत्यु तदोमेशौ समागतौ ॥ मृगं मृगीं मृतौ दृष्ट्वा गौरी प्राहेश्वरं प्रति । विना घातं कथं मृत्युं यातावेतौ पते ! वद ? ॥ यतः—" वने न देखिओ पारधि अंगे न देखिओ बाण । हुं तई पुछउ इश्वर ! किणि गुणि गिया पराण ॥ १ ॥" ईश्वरोऽवग्–जल थोडु नेहु घणो कीधी ताणाताणि । ईसर भणइ पारवती ! इणि गुणि गया पराण ॥ एकं कथानकं प्रोक्त्वा वारिताऽपि मृगी तदा । पत्या सार्द्धं वधस्थाने ययावदीनमानसा ॥ राज्ञोऽग्रे हरिणी प्राह पत्यु प्राग् मा जहि द्रुतम् । मृगो जगौ प्रियापूर्वं मां प्रापय यमालयम् ॥ प्रियास्निहोऽत्यन्तम् ; यथा—" भद्देडी गोरेडी तरुवणि दुन्नि कयाइं । नीसासे सर सोसिय रोयंती भरियाइं ॥ १ ॥" श्रुत्वेति भूपतिः प्राह युवा यातं निजास्पदे । नातः परं मया कोऽपि हन्तव्यो हरिणः कचित् ॥ स्वेच्छया पिबतां वारि तृणानि खातमन्वहम् । अहं

लोकयुतो नैव हन्मि कचित मृगं मृगीम् ॥ हरिण्येव त्वया भर्तृ-भावं नीतोऽस्म्यहं दृढम् । अधुना त्वं कथं हसि मां पतिं प्राणवल्लभम् ? ॥ यत —"पत्यौ मृतेऽपि या योषि-द्वैधव्यं पालयेत् कचित् । सा पुनः प्राप्य भर्त्तारं स्वर्गभोगान् समश्नुते ॥ १ ॥" तस्येति वचनं श्रुत्वा तस्याः स्नेहोऽभवद् भृशम् । जगौ तवोचितं स्यातुं नेह मृत्योर्भयात् किल ॥ मत्पिता विद्यते दुष्ट-स्तेन दूरे च गम्यते । ततो रामो जगौ पत्न्य-नुरक्ता जायते वरम् ॥ यतः—"रक्ता हरन्ति सर्वस्वं प्राणानपि विरागतः । अहो राग-विरागाभ्यां कष्टं कष्टेन योषितः ॥ १ ॥" स्वप्ते भर्त्तरि मातैत्य जगौ किं मारितः पतिः । पुत्री प्राह न निद्राऽस्य समेति मार्यते कथम् ? ॥ ततश्च कन्यया पृष्टं स्वग्राम-जनकादिकम् । तत्रागमनपर्यन्तं रामः पत्न्याः पुरो जगौ ॥ ततो रत्नैर्वरैर्गोणीं भृत्वा सायं प्रिया जगौ । एकोष्ट्री विद्यते वेग-वती मम पितुर्गृहे ॥ तामारुह्य द्रुतं दूरे गत्वैतैर्मणिभिः सुखम् । स्थास्यतेऽतस्तदा रामो मेने पत्नीवचः स्फुटम् ॥ उष्ट्रीमारुह्य रामस्तु पत्नीयुक्तश्चलन् पथि । यदाऽगमन्महाटव्यां तदा लग्ना तृषा द्वयोः ॥ उष्ट्र्या उत्तीर्य रामस्तु वाप्यन्तर्जलहेतवे । प्रविवेश यदा चौरस्तदोत्तीर्णस्तरोर्द्रुतम् ॥ आरुह्योष्ट्रीं तया नार्या युतश्चौरश्चलन् पथि । पृष्टः कस्त्वं ततोऽवक् स स्तेनोऽहं त्वां पश्यतोहरः ॥ भविष्यसि प्रिया मे त्वं यदि स्यात्ते तदा सुखम् । स्व शीलं रक्षितुं प्रोक्तं तयेति च तदग्रतः ॥ वयं जातं पतिः पूर्वो गतस्त्वमागतो यतः । मयेति मानितं देव्याः काल्या उज्जयिनीपुरि ॥ यदि मेऽन्यः पतिर्वर्यो भविष्यति तदा ध्रुवम् । तत्र पूजां विना भोगं कुर्वे पत्या समं नहि ॥ युग्मम् । तत उज्जयिनीपुर्यां गत्वा रामपितुर्गृहम् । प्रवृत्या गत्वाऽऽलये तस्थो-श्चौरोष्ट्रीतः समागमत् ॥ श्वश्रूश्वशुरयोरंह्यो-र्नत्वा यावत्स्थिताऽग्रतः । तावत्ताभ्यां-न्यवेदीति कस्यासि त्व प्रिया वद ? ॥ तयोक्तं भवतः सूनो-र्गेहिन्यस्मि रमाभिधा । ताभ्यां प्रोक्तं कथं पत्नी मत्सूनोरऽस्ति सत्तमे ! ॥ ततः सोद्वाहसम्बन्धो रामेण सह सम्भवः । यदा तयोदितो हृष्ट खिन्नं ताभ्या यथाक्रमम् ॥ ताभ्यां प्रोक्तं कथ सूनु-र्मिलिष्यत्यावयोर्वद ? । तयोक्तं वे सुतो रामः कुशल्येव समेष्यति ॥ निर्धाटितस्ततश्चौर-स्ताभ्यां गत्वा वने द्रुतम् । योगी भूत्वा गतो हेम-पुरे कुम्भकृतो गृहे ॥ इतो रामोऽपि रत्नाना गमसीर्योगिवेषभृत् । पूर्वं कुम्भकृतो गेहेऽभ्येत्य तस्थौ समाधिना ॥ मिथ आदेश आदेश इत्युक्त्वा नतिपूर्वकम् । निविष्टौ तौ तदा स्वस्वो-दन्तं प्रजल्पतः स्म हि ॥ योगी पूर्वागतः प्राह कस्त्वं किमिह सद्व्रतः । योगी जातोऽस्मि केन त्वं वैराग्येण वदाऽधुना ? ॥ अन्यो योग्यभणच्चौरो वरोष्ट्रीं कन्यकायुताम् । लात्वाऽवन्त्यामगाद् यावद् हृष्टचेता अहं भृशम् ॥ तावद्वरद्विजावासे मध्ये-गत्वा वलाच्छलात् । रत्नगोणियुतामुष्ट्री-ममाहयद् द्विजन्मना ॥ अतोऽहं दुःखितो लोके त्यक्त्वा सर्वधनं तदा । अत्रायातोऽमिलत्ते तु साम्प्रत दुःखितो भृशम् ॥ सतीं स्वां गेहिनीं ज्ञात्वा योगिनं तस्करं पुनः । रामो जहर्ष चित्ते स्वे चक्रश्चक्रप्रियामिव ॥ चौरो योगी जगौ कस्त्व ततो रामो जगाविति । पञ्चैव भ्रातरो जाता वयं कुसुमपत्तने ॥ चतुर्भिः सोदरैरेष धिक्कृतोऽहं विरागवान् । योग्यभूवं ततश्चौर-योगी सत्यमिदं जगौ ॥ रामेणाचिन्ति यद्धर्य-मवश्यं चिन्त्यते खलु । तदेव तस्य जायेत शुभं वाऽशुभमेव-तत् ॥ गत्वान्यत्र ततो योगि-वेषं त्यक्त्वा स रामकः । हेम्नो लक्षत्रयेणैक विचिक्राय मणिं पुरे ॥ यतः—"राज्य सुसम्पदो भोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ २ ॥" गृहीत्वा वर्यवस्त्राणि परिधाय शुभेऽहनि । इभ्यीभूय ललौ भूरि-क्रयाणकसमुच्चयम् ॥ अनेकान पौष्ठिकान् लात्वा बभार वस्तुभिर्घनैः । जात्यानश्वान् ललौ भूरीन् शकटान्यपि भूरिशः ॥ अनेकाः

सेवकास्तेन रामेण चक्रिरे वराः । ततः सार्थपतिर्भूत्वा व्यवसायं व्यधात् स च ॥ ततो रामश्चलन्नुज्ज-यिनीनगरीसन्निधौ । गत्वा तस्थौ यदा ताव-द्वस्तु लातुमगाज्जनः ॥ ज्ञापयित्वा पितुर्मातुः स्वागम मिलितस्तदा । रामः स्वार्जितलक्ष्म्यादि-सम्प्राप्तिमूचिवान् स्फुटम् ॥ सूनोर्विभूतिमालोक्य मातृपित्रादयस्तदा । हृष्टा महोत्सवं चक्रु-र्जिनपूजनपूर्वकम् ॥ ततः स्नुषा मुदा भक्ति श्वसुरादिपतेः सदा । कुर्वाणा विनयं चक्रे धर्म्मकर्म्म च सादरम् ॥ द्वियामावसरे रामो भक्तद्रव्याम्बरार्पणात् । अर्थिभ्यो विदधे स्वीय-नाम-सत्यं शुभोदयात् ॥ आदौ रामोऽभवद्दुस्थः क्रमाद्धन्यभवत् स च । अतः शुभोदये लक्ष्मी-रलक्ष्मीरशुभोदये ॥

यतः—" आपदः सन्ति महतां महतामेव सम्पदः । इतराणा मनुष्याणां नाऽऽपदो नैव सम्पदः ॥१॥ " स्वोत्कर्षप्रकाशाय भवन्ति विपदः सताम् । जायते गुणयोगाय वज्रवेधं मणेरिवः ॥ " चंदस्स खओ नहि तारयाणं इड्ढीवि तस्स न हु तारयाणं । गुरुयाण चडणपडणं इयरजणा निच्च पडियावि ॥१॥ " अन्यदा श्रीगुरूपान्ते मातृपितृसमन्वितः । गत्वा धर्म्मं जिनेन्द्रोक्तं शुश्रावेति कृतादरम् ॥ " पूजा जिणिंदे सुरुई-वएसु जुत्तो अ सामाईअ-पोसहेसु । दाणं सुपत्ते सवणं सुतित्थे सुसाहुसेवा सिवलोयमग्गो ॥ १ ॥ जिणाणं पूयजत्ताए साहूणं पज्जुवासणे । आवस्सयम्मि सज्झाए उज्जमेह दिने दिने ॥ २ ॥ " धर्म्म-सम्बलतः स्वर्गः श्वभ्रे पापफलाद् भवेत् । सुखं दुःखं विदित्वा च यदिष्टं तत् समाचरेत् ॥ धर्मात् सम्बलतो नृदेवखचरव्यालेन्द्रसौख्यं भवे-दत्रामुत्र च चन्द्रनिर्म्मलयशः-पूजादिकं प्रत्यहम् । पापेनैव च दुःखदुर्गतिभवं श्वभ्रादिकं दुःसहं, निन्दाकीर्त्तिगणं तदेव कुरुतां भ्रातर्यदिष्टं तव ॥ धर्म्मं श्रुत्वेति रामस्तु पप्रच्छ भगवन् ! मया । किं कृतं सुकृतं येन दुःखमादौ ततः सुखम् ॥ गुरुराचष्ट कल्याण-पुरे भीमोऽ-भवद् वणिग् । दुःस्थो निजोदरं दुःखाद् बभार गेहिनीयुतः ॥ रोहणक्ष्माधरे रत्न-राशिर्लभ्येत मानवैः । श्रुत्वेति प्रययौ तत्र रत्नानां ग्रहणेच्छया ॥ यत्र यत्र स रत्नानि लातुं खनति भूतलम् । तत्र तत्र दृषत्-खण्डं निर्गच्छत्यशुभोदयात् ॥ ततो भ्रमन् महीपीठे उपार्ज्य विंशतिद्रम्मान् । वलमानो ललौ सक्तून् सम्बलाय स नैगमः ॥ आर्द्रीकृत्याखिलान् सक्तुन् पिण्डीर्दश व्यधात् स च । यदा तदा समायातौ साधू भिक्षाकृते किल ॥ उत्थाय हर्षतः सक्तुपिण्डीः पञ्च वणिक् स च । साध्वोर्विश्राणयामास हर्षोत्कर्षप्रपूरितः ॥ ततो भुक्त्वा वणिक् सक्तून् शेषान् मार्गे चलन् क्रमात् । कस्यचित् सन्निधौ द्रव्यं दृष्ट्वा हन्तुमना अभूत् ॥ पुनः क्षणाद् वणिग्दध्यौ मया मुधा धनी ह्ययम् । हंसितुं वाञ्छितो धिग् धिग् मामतो दुष्टमानसम् ॥ ततो गत्वा गृहे कुर्वन् व्यवसायं स नैगमः । आम्र-जम्बूक-जम्बीर-मुख्यैः फलै-र्जिजीव हि ॥ एकदाऽऽम्रफलान्येवा-गणितानि स नैगमः । ढौकयित्वा प्रभोरग्रे-ऽनुमुमोद पुरस्तदा ॥ क्रमादायुःक्षये भीमो मृत्वा रामोऽभवस्त्वकम् । प्राग्भवे साधवे सक्तु-पिण्डीः पञ्च दद्दे त्वया ॥ एकदा चागणय्यैव फलान्याम्राणि भावतः । अढौकयत् प्रभोरग्रे प्राग्भवे भवता पुनः ॥ तेन पुण्येन रत्नानि पञ्चादौ ते करेऽभवन् । ततो रत्नभृता गौणी पत्नीयुक्ताऽभवस्तव ॥ एकदा भवता हन्तुं चिन्तितो मानवः पथि । तेन त्वं प्रियया हन्तुं वाञ्छितो रामवाडव ! ॥ यस्त्वया प्राग्भवे मर्त्यो हंसितुं चिन्तितः पथि । स मृत्वा तत्र पत्न्यासी-द्भवेऽस्मिन्नवधारय ॥ पत्नीजीवस्त्वया हन्तु प्राग्भवे चिन्तितो यतः । अतस्त्वमनया पत्न्या हंसितुं चेह वाञ्छितः ॥ श्रुत्वेति राम आचष्ट पापानि प्राक् कृतान्यपि । काक-नाशं कथं याति ततो गुरुर्जगाविति ॥ अनन्तभवभूतानि पापानि निविडान्यपि । सिद्धाद्रौ यात्रया यान्ति समायाति शिवेन्दिरा ॥ यतः—" नवि तं सुवण्णभूमी भूसणदाणेण अन्नतित्थेसु । जं पावइ पुण्णफलं पूया-न्हवणेण सित्तुंजे ॥१॥ "

पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥ श्रुत्वेत्यस्मा-गुरोरास्या-द्रामः पत्न्यादिसंयुतः । धर्मं जिनोदितं मुक्ति-सातदायकमाददौ ॥ मातृपितृप्रियायुक्तः महत्सङ्घसमन्वितः । यात्रां शत्रुञ्जये चक्रे पूजास्नात्रविधानतः ॥ शत्रुञ्जये जिनागारं कारयित्वा पृथुं स च । मुक्तिगमोचितं पुण्य-मर्जयामास भावतः ॥ ततः क्रमाद् व्रतं लात्वा प्रपाल्य यत्नतः सदा । रामो मित्रादि-पत्नीयुग् मुक्तिपुर्यां समीयिवान् ॥ १०१ ॥

इति असङ्ख्योद्धारप्रतिमायात्रादिविषये द्विप्रहररामकथा समाप्ता ॥

---

कुलध्वजमहीपालो भूरिसङ्घसमन्वितः । नत्वा शत्रुञ्जये देवान् जिनागारमकारयत् ॥ तथाहि—

परस्त्रियः त्यजन् शश्व-दिहामुत्र बहुश्रियम् । मानवो लभतेऽत्राय कुलध्वजकुमारवत् ॥ तथाहि—

इहैव भरतेऽयोध्या-पुर्यां शङ्खमहीपतेः । धारिणी गेहिनी शील-शालिन्यासीन्मनोहरा ॥ तयोः पुत्रोऽभवच्चेतो-भवतुल्यः कुलध्वजः । क्रमाद् द्वासप्तति र्वर्याः कलाः शिक्षितवान् सुखम् ॥ यतः—
“ आहारनिद्राभयमैथुनानि सामान्यमेतत् पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणां ज्ञानेन हीनाः पशवो मनुष्याः ॥ १ ॥ ” एकदा भूमिभुक्पुत्रो मन्त्रिपुत्रयुतो वने । गत्वा श्रीमानतुङ्गस्य सूरेः पार्श्वेऽशृणोद् वृषम् ॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपातिवित्तमनघं शीलं सुगत्यावहम् । शीलं दुर्गतिनाशनं सुविपुलं शीलं मनः पावनं, शीलं निर्वृतिहेतुरेव परमं शीलं तु कल्पद्रुमः ॥
“ काएण बंभचेरं धरंति भव्वाउ जे असुद्धमणा । कप्पम्मि बंभलोए ताण नियमेण उववाओ ॥ १ ॥ देवदाणवगंधव्वा जक्खरक्खसकिन्नरा । बंभयारीं नमसन्ति दुक्करं जे करंति तं ॥ २ ॥ अक्खाणरसणी० गोत्राचारपरीहारः प्राणनाशो यशोगमः । साधुवादपरिभ्रंशः परस्त्रीगमने ध्रुवम् ॥ श्रुत्वेति भूमिभुक्-पुत्रो व्रतं तुर्यं शिवप्रदम् । लात्वाऽन्येद्युर्ययौ राज-मार्गे दीव्यन् निजेच्छया ॥ तस्मिन्नपि सङ्कटे मार्गे सन्मुखे द्वे स्त्रियौ समम् । समेते कलहायेते वदतश्चेति कर्कशम् ॥ आद्याऽत्रग लोहकारस्य पत्नी सौभाग्य-सुन्दरी । नीरपूर्णघटं शीर्षे दधानाऽन्या स्त्रियं प्रति ॥ पयोरिक्तघटा त्वं तु रथकारस्य गेहिनी । मार्गं मुञ्च प्रयास्यामि स्वगृहे सखि ! साम्प्रतम् ॥ अत्रैव नगरे भर्त्ता मदीयो यो ह्यय वरम् । तथा घटयति प्रातः-शोभने वासरे खलु ॥ यथा मीनः स पाथोधौ गत्वा मुक्तामणीन् वरान् । चुटित्वाऽभ्येत्य मे भर्त्तु-र्दत्तेऽतो वां सुखान्वितौ ॥ हेतुभ्यामहमेवाभ्या-मुत्कृष्टास्मि महीतले । अतस्त्वं मुञ्च मे मार्गं रथकृत्प्राण-वल्लभे ! ॥ मोटयित्वाऽऽननं किञ्चित् रथकृद्गेहिनी जगौ । विज्ञानेनामुना भर्त्तु-र्लभ्यते न कपर्दिका ॥ मम भर्ता तु कन्दर्प्पामितो रूपमनोभवः । सूत्रधारः करोत्यश्वं तथा दारुमयं वरम् ॥ यथा स गगने गच्छन् नीत्वाऽऽरूढं नरं ध्रुवम् । नयते चिन्तितं स्थानं षड्भिर्मासैः समेति च ॥ लोहकारप्रियायास्तु वापयित्वाऽथ तत क्षणात् । भूपपुत्रः समेत्यावग् तद्वृत्तं पितुरग्रतः ॥ भूपेनाकारितो लोह-कारो भूपति-गिरा क्रमात् । मीनं लोहमयं चक्रे शुभे घस्रे प्रयत्नतः ॥ कीलिकाकिलितो मीनो गत्वा भूपदृशोः पुरः । समुद्रादानयामास मुक्ताफलानि विंशतिम् ॥ द्वितीयेऽह्नि रथकृद्भूपा-दिष्टो विशिष्टदारुभिः । आकाश-गामिनं तार्क्ष्यं रचयामास यत्नतः ॥ वारितोऽपि महीशेन कौतुकान्नन्दनस्तदा । अश्वारूढोऽचलद् दूरदेशे

वीक्षणहेतवे ॥ यतः "दीसइ विविहंचरियं०॥ ' सभार्यः परदेशस्य बहालस्यः प्रमादतः । स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ अश्वारूढः कुमारः स गच्छन् पश्यन् पदे पदे । ग्रामाकरादि संयातः कस्यचित् सन्निधौ पुरः ॥ कौलिकाऽऽकर्पणात् पुञ्जीकृत्वा दारूणि तत् क्षणम् । शीर्षे दत्त्वा समियाय वाटिकायाश्च मध्यतः ॥ इतस्तत्रागतो मालाकारः कुसुमहेतवे । दृष्ट्वा सुप्तं नरं वृक्ष–छायामश्रमिवामरम् ॥ क्रमाज्जागरितं नीत्वा स्वगृहे स्वन्नदानतः । युक्त्या गामयामास सादरं वरभक्तितः ॥ युग्मम् । अश्व-काष्ठानि तद्गेहे कोणे मुक्त्वा नरेन्द्रसूः । पुरीविलोकनार्थं स निर्ययौ मालिकालयात् ॥ पश्यन् पुरीं क्रमाद् श्रीमन्मुनिसुव्रतसद्मनि । उदारैः स्तवनैर्देव-मस्तवीत् स नरेन्द्रसूः ॥ ततो बलानके गत्वा क्षणं विश्रम्य भूपसूः ॥ सुष्वाप निर्भर सौख्य–निद्रया स कुलध्वजः ॥ इतोऽभ्येत्य प्रतीहारी लोकान् देवालयान्तरात् । सद्यो निष्काशयामास सुप्तं भूपसुतं विना ॥ ततः सखीयुता राज–पुत्र्यभ्येत्य जिनेश्वरम् । पुष्पैः पूजयित्वाऽऽदौ तुष्टावाथ लसत्स्तवैः ॥ इतो जागरितो भूप–पुत्रो वीक्ष्य नृपाङ्गजाम् । यान्तीं पप्रच्छ मनुजं कञ्चित् कासौ कनी वरा ॥ स प्राहास्मिन् पुरे रत्ने विजयस्य महीपतेः । वर्या पत्नी जिनागार–मकारयद् धनव्ययात् ॥ तयोर्भुवनसुन्दर्य–भिधा पुत्री कुमारिका । ललावभिग्रहं चेन्मे भूचरः खचरः पतिः ॥ यस्मिन् भव एवास्ति करोऽस्य मे करोपरि । तदा पाणीग्रहो भूया–दन्यथा ज्वलनः पुनः ॥ अभिग्रहमसु श्रुत्वा भूपो व्यधाविदं हृदि । कथं परिणाय्यते पुत्री तादृशं खचरं विना ॥ ततश्च स्थानकेऽभ्येत्य कुमरस्तुरङ्गमम् । सज्जीकृत्य ययौ रात्रौ भूपपुत्रीनिकेतने ॥ भूचरः खचरो मे स्याद्–भर्त्ताऽङ्गीकरवं तदा । श्रुत्वेतद् भूपभूर्ध्या–वस्याः साहसमेधते ॥ तत्र कोणेषु ताम्बूलं क्षिप्त्वा छन्नं नृपाङ्गजः । दिने दिने प्रयाति स्म शृण्वंस्तस्याः प्रजल्पितम् ॥ ताम्बूलं पतितं दृष्ट्वा व्यधाविति नृपाङ्गजा । ताम्बूलोज्झनतः कश्चित् समेत्यात्र पुमान् रहः ॥ स गच्छन्नन्यदा छन्नं कन्यया च धृतोऽञ्चले । प्रोचे कस्त्वं कुतोऽत्रागाः किंनामा कस्य नन्दनः ? ॥ स च स्वागमनोदन्त प्रोक्त्वाऽश्वेन खगामिना । भूचरोऽप्यभवद् व्योम–चरः कन्ये ! अवधारय ॥ श्रुत्वेति कन्यका पूर्ण–वाञ्छा तं भूपनन्दनम् । गन्धर्वविवाहेन पर्यणैषीत् तत्रैव तु ॥ यतः 'वरं वरयते कन्या माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः' ॥ क्रीडां तया समं कृत्वा छन्नं नित्यं स भूपभूः । यदा याति स्वके स्थाने तदा प्रीतिर्द्वयोर्भवेत् ॥ नृभुक्ता पीवराङ्गा तां दृष्ट्वा सखीजनस्तदा । तस्याः स्वरूपमाचष्ट तन्मातुः पुरतो रहः ॥ ततः कृष्णानना पत्नीं दृष्ट्वा राजा जगौ प्रिये ! । किं ते गत इत दोषो जल्पितोऽन्येन साम्प्रतम् ॥ किमाज्ञा खण्डिता केन नरेण वा स्त्रिया वद । ततो भूपप्रिया आह पुरतो मेदिनीपतेः ॥ ततो भूपप्रियाऽऽचष्ट त्वयि स्वामिनि केन मे । शासनं खण्ड्यते प्रोक्त्वे–त्येव मौनमधात्तदा ॥ यदा राज्ञी न वक्त्येव तदा राजा जगाविति । येन ते क्रियते दुष्टं तं नेष्ये यमसद्मनि ॥ यतः—दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातो रिपुराष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ १ ॥" अन्तःपुरे समागच्छन् यदा ज्ञातो नरो न हि । तदा राज्ञोदित येना–गच्छन्ना ध्रियते दृढम् ॥ तस्मै लक्षत्रयीं हेम्नां दास्ये सन्मानपूर्वकम् । तदाऽभ्येत्यावदद् वारा–ङ्गना स कर्ष्यते मया ॥ ततः सा तैलसिन्दूरौ लात्वा कन्यालये गता । रहोवृत्याऽवनीं लिप्त्वा ययौ स्वस्थानके लघु ॥ प्रातः स्वां स्वामिनीं नन्तुं समेताः नृपदानि तु । वीक्ष्य वाराङ्गना राज्ञः पुरः प्राह नरागमम् ॥ तत आरक्षकैरायान् स नरो गणिकोदितः । बद्धो निवेदितो भूमि–पालाय चाचिरात्तदा ॥ घृतसिक्ताग्निवत्कोप–कृशानुज्वलितो भृशम् । राजाऽवग्

हन्यतामेव शूलाप्रक्षेपतो द्रुतम् ॥ वध्यस्थाने सदा नीय–मानं तं रुचिराकृतिम् । दृष्ट्वा लोको जगावेवं हन्यतेऽद्य मुधा नरः ॥ अस्यैव दीयते राज्ञा कन्या चेद् रुचिरं तदा । अस्मौ च विद्यते कोऽपि महान् भूपोऽथवा खगः ॥ नरस्यास्य वियोगेन राजपुत्री प्रयास्यति । क्षय निशाकरस्येव राका दर्शदिने यथा ॥ इत्यादिलोकवचनं शृण्वन् स भूपनन्दनः । मालिकौकोन्तिकं गच्छन् प्राह भूपानुगान् प्रति ॥ मालिकस्यास्य गेहस्य पार्श्वे मे कुलदेवता । विद्यते तां नमस्कुर्वे हन्तव्योऽहं ततो द्रुतम् ॥ ततो मुक्तस्तकारक्षैर्गत्वा मालिकसद्मनि । काष्ठघोटकमारूढः स ययौ गगनाङ्गणे ॥ ततो पश्यन्तु भूपादि–लोकेषु नृपनन्दिनीम् । आरोप्य काष्ठवाहे तां चचाल स नभोऽध्वना ॥ गत्वा समुद्रतीरे तु पर्यङ्कवृक्षविराजिते । उत्तीर्य तुरगात् सोऽपि सुष्वापाऽथ बुभुक्षितः ॥ बुभुक्षितं पतिं मत्वाऽधिरुह्य तं तुरङ्गमम् । पक्वान्नादि निजावासे लातुं सा कन्यका ययौ ॥ वातायने तया मुक्तोऽकस्मात् स घोटकः पतन् । भग्नस्तथाविधं तं च दृष्ट्वा खिन्नाऽभवद् भृशम् ॥ यतः—"अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति यानि पुमान् नैव चिन्तयति ॥ ततो भुवनसुन्दर्या दुःखिन्या चिन्तितं हृदि । पूर्वनिर्मितदुष्कर्म–योगादेतदजायत ॥ वारिधौ गमनं पत्युर्भग्नो मे दारुवाजिनम् । सर्वं कष्टावह जातं मम भाग्यविपर्ययात् ॥ दृष्ट एव मया कान्ते भोक्तव्यं नान्यथा पुनः । इति कृत्वा प्रतिज्ञां तु तस्थौ सा नृपनन्दिनी ॥ इतो जागरितो भूप–पुत्रोऽदृष्ट्वा प्रियां तदा । दध्यौ क गेहिनी याता हृता वा केनचिद् द्रुतम् ॥ अत्रान्तरे समायातां काञ्चिद् विद्याधरीं वराम् । दृष्ट्वा कुमार आचष्ट भद्रे ! त्वमागता कुतः ॥ सा नारी प्राह वैताढ्ये मणिविद्याभृतः प्रिया । अहं जह्रेऽरिणा विद्या–धरेण दुष्टचेतसा ॥ ततो नष्टाऽहकं नाव–क्षीणोपान्ते समागमम् । त्वां दृष्ट्वा पीडिता काम–बाणेन हृदये दृढम् ॥ कुमारोऽवक् समा नार्यः सोदर्यः स्युः सदा मम । अतोऽन्यां वनितां देव–कन्यातुल्यां वृणोमि न ॥ अलसा होइ अकज्जे पाणिवहे पंगुला सया होइ । परतत्तीसु य बहिरा जच्चंधा परकलत्तेसु ॥ यस्तु स्वदारसन्तोषी विषयेषु विरागवान् । गृहस्थोऽपि स्वशीलेन यतितुल्यः स कल्पते ॥ ततस्तया तथा रोषान्मुक्ता विद्या च तं प्रति । यथा स मूर्च्छितः क्षोण्यां पपात शुष्कवृक्षवत् ॥ ततः सचेतनीभूतं तं प्राहेति वशा दृढम् । यदि भोगसुखं दत्से मह्यं स्यात् ते तदा सुखम् ॥ ततो विस्मित्सरूपं सा कृत्वा हस्ते विधृत्य तम् । जगौ सन्यस्व मे वाणीं न चेन्मृतोऽसि साम्प्रतम् ॥ अजल्पन्तं कुमारं त–मुत्पाट्य मकराकरे । यावद् चिक्षेप तावद्वार्देव्या हस्ते धृतः स च ॥ तुष्टाऽहं तव याचस्व वरं चित्तेप्सित नर ! । कुमारः प्रोक्तवान् पूर्वं भार्यायोगं कुरुष्व मे ॥ देव्योत्पाट्य कुमारः स नीतः पत्न्यन्तिके द्रुतम् । जगौ देवि ! कुरुष्व त्वं सज्जं मम तुरङ्गमम् ॥ ततः सज्जीकृते तस्मिन्नश्वे दारुमये तदा । आरूढो गगने गच्छन् ययौ चन्द्रपुरे वरे ॥ तत्र चन्द्रमहीशस्य पुत्रीं रूपवतीं वराम् । परिणिन्ये कुमारः स नानोत्सवपुरस्सरम् ॥ इतः शङ्खनृपः पूर्णेऽवधौ पुत्रे ह्यनागते । अचालयद् वधायाथ सूत्रधारं निजानुगैः ॥ रुष्टो राजा यमाभः स्यात् सर्वद्रव्यापहारतः । तुष्टो धनदतुल्यः स्याद् भूरिलक्ष्मीप्रदानतः ॥ शूलायां सूत्रधारं तु क्रूरस्वान्ता नृपानुगाः । यावत्क्षिपन्ति तावच्च कुमारः समुपागमत् ॥ निष्कास्य सूत्रधारं तु शूलाया नृपनन्दनः । अभ्येत्याङ्घ्रौ पितुर्मातु–र्ननामाऽनघमानसः ॥ यतः—" ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥ ततो राजा पुरीमध्ये कारयन् विविधोत्सवम् । जिनौकस्सु जिनेन्द्रार्चां चकाराङ्गजसंयुतः ॥ तदा ग्रामशतं सूत्र–धाराय नृप-

प्राग्रवतः । कुमारो दापयामास भूरि-सन्मानदानतः ॥ सूत्रधारो विधायाऽश्वान् दारुभिर्व्योमगामिनः ।
प्राभृतीकुरुते नित्यं ततो हृष्यति भूपतिः ॥ राज्यं वितीर्य पुत्राय वीरसूरीशसन्निधौ । लात्वा व्रतं
तप्रस्तप्त्वा स्वर्गसातमवाप सः ॥ ततः कुलध्वजो राज्यं कुर्वाणः सन्नयाऽध्वना । सुखिनीर्जनताश्चक्रे
श्रीराममेदिनीशवत् ॥ अन्यदा वहिरुद्याने ज्ञानिनं धर्म्मशेखरम् । श्रुत्वाऽऽयातं नृपः पत्नी-युतो वन्दितु
मीयिवान् ॥ तिस्रः प्रदक्षिणा दत्त्वा गुरोर्नत्वा क्रमाम्बुजम् । धर्म्मं श्रोतुमुपाविष्ट सूरीशाभिमुखाननः ॥
तथाहि—" हस्तो दानविधौ मनो जिनमते वाचः सदा सूनृते, प्राणाः सर्वजनोपकारकरणे वित्तानि
चैत्योत्सवे । येनैवं विनियोजितानि शतशो त्रिश्वत्रयीमण्डनं, धन्यः कोऽपि स विष्टपैकतिलकं काले कलौ
श्रावकः ॥ १ ॥" कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । इदं तीर्थं समासाद्य तिर्यञ्चोऽपि दिव
गताः ॥ शत्रुञ्जये जिने दृष्टे दुर्गतिद्वितयं क्षयेत् । सागराणां सहस्रं तु पूजास्नात्रविधानतः ॥ कुलध्वजो
जगौ पूर्व-भवे किं सुकृतमया । कृतं येनाभवद्राज्यमीदृशं सुखदायकम् ॥ ज्ञानी प्राह रमापुर्यां भीमदुः-
स्थोऽभवद् भवान् । तत्र त्वयाऽन्यदा दानं दत्त सुसाधवे मुदा ॥ तेन पुण्येन गत्वा त्वं स्वर्गे शङ्करभूपतेः ।
पुत्रो भूत्वा महद्राज्यं प्रापस्त्वं मेदिनीपते ! ॥ श्रुत्वेति भूपतिर्भूरि-सङ्घलोकसमन्वितः । ययौ शत्रुञ्जये
देवान् नन्तुं चञ्चन्महोत्सवम् ॥ तत्र सङ्घेशकृत्यानि कृत्वा कुलध्वजो नृपः । प्रासादं कारयामासा-
धाऽर्हद्बिम्बं न्यवीविशत् ॥ ततः कुलध्वजो भूपो गत्वा रैवतके गिरौ । प्रणम्य नेमिनाथं तु स्नात्रपूजा-
पुरस्सरम् ॥ परिधाप्य गुरून् वस्त्रैः श्रीसङ्घं च वराम्बरैः । विससर्ज नृपः स्वस्व-पुरं प्रति वराशयः ॥
क्रमात् स्वसूनवे सोम-दत्ताय विनयात्मने । राज्यं वितीर्य जग्राह संयमं गुरुसन्निधौ ॥ प्रपठन्नागमं
शश्वत् कुलध्वजो यतीश्वरः । विज्ञातसर्वशास्त्रार्थः क्रियासु कुशलोऽभवत् ॥ शुद्धां साधुक्रियां कुर्वन्
शास्त्राणि पाठयन् पठन् । कुलध्वजो व्यधान्नैवं प्रमादक्षणमेककम् ॥ यतः—" हयं नाणं कियाहीणं हया
अन्नाणओ किया । पासंतो पंगुलो दड्ढो धावमाणो य अंधओ ॥१॥ संयोगसिद्धीइ फलं वयंति नहि एगचक्केण
रहो पयाइ । अंधो य पंगू य वणे समिच्चा ते संपउत्ता नगरे पविट्ठा ॥ २ ॥" ततः सूरीश्वरपदं प्राप्य
शत्रुञ्जयाचले । गत्वा ध्यानपरो भूरि-साधुयुक्तोऽभवद् भृशम् ॥ सम्प्राप्य केवलज्ञानं भूरिसाधुयुतः
क्रमात् । शत्रुञ्जये ययौ मुक्तिं कुलध्वजयतीश्वरः ॥ ११९ ॥

इति दाने शत्रुञ्जययात्रायां फले कुलध्वजकुमारकथा.

इति असङ्ख्योद्धारविषये कथा समाप्ता

---

श्रीनाभेयान्वये चन्द्र-चण्डो भूमिपतिर्नयी । चन्द्रप्रभाम इत्याह्वं पुरं न्यवीविशद् वरम् ॥ तेन
राज्ञाऽन्यदा चन्द्र-कान्तरत्नमयं महत् । कारितं जिननाथौक-स्कैलासाचलसोदरम् ॥ चन्द्रचूडो नृपश्चन्द्र-
प्रभस्य प्रतिमाद्वयम् । कारयामास कल्याण-सूरिं प्रातिष्ठिपच्च तत् ॥ एकदा राक्षसद्वीपा-लङ्कापुर्यधिपो नृपः ।
रविचूडोऽचलद् देवा-न्नन्तु व्योमगविद्यया ॥ वन्दमानोऽर्हतां मूर्त्ती-र्ग्रामे ग्रामे पुरे पुरे । चन्द्रप्रभास-
पुर्यां स रविचूडः समीयिवान् ॥ तत्र भूरिजिनाधीश-प्रासादेषु जिनान् बहून् । प्रणमन् ध्यातवानेवं,
वन्दिता बहवो जिनाः ॥ रविचूडो ददौ देव-पत्तनं तस्य नाम तु । चन्द्रप्रभस्य बिम्बं हि विशेषादर्चयत्पुनः ॥

यतः—" न यान्ति दास्यं न दरिद्रभावं न प्रेष्यतां नैव च दीनभावम् । न चापि वैकल्यमिहेन्द्रियाणां ये कारयन्त्यत्र जिनेन्द्रपूजाम् ॥ १ ॥ " चन्द्रप्रभजिनस्यैकां प्रतिमां दुःखहारिणीम् । " रविचूडः पुरे स्वीये-ऽनैपीदुत्सवपूर्वकम् ॥ स तत्र हरधात्रीभृत्-सकाशं जिनमन्दिरम् । द्वासप्तत्या जिनागारैर्लघुभिः संयुतं व्यधात् ॥ शोभने वासरे चन्द्र-प्रभमूर्त्तिं मनोहराम् । स्थापयामास भूपालो भूयिष्ठविभवव्ययात् ॥ यावज्जीवं वितन्वानः पूजां चन्द्रप्रभार्हतः । रविचूडः सुतं प्रान्ते न्यस्य राज्येऽगमद्दिवि ॥ असङ्ख्यातनरा एवं प्रपूज्य प्रतिमां च ताम् । केचित् स्वर्गं ययुः केचि-न्मुक्तिं जग्मुर्जना अपि ॥ तद्वंशे रावणो राजा चन्द्र-प्रभप्रभोः पुरः । अष्टाम्भोधिमहस्र व-गाया विद्याः ससाध तु ॥ पूजयन् प्रतिमां चान्द्रप्रभीं रावण आत्मसात् । चन्द्रहासाभिधं खड्गं विमानं पुष्पकं व्यधात् ॥ दशाननो नृपश्चान्द्र-प्रभीं तां प्रतिमां मुदा । अर्जयामास सर्वज्ञ-गोत्रं गोत्रभिदर्चितं ॥ यतः—" स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा, सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि । संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा, यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ १ ॥ " क्रमाद्दशाननः खण्ड-त्रयं दक्षिणदिग्गतम् । साधयामास दोर्वीर्यात् प्रत्यर्थिविजयाद्रयात् ॥ श्रीशत्रुञ्जयमाहात्म्यं समाकर्ण्य दशाननः । भूरिसङ्घयुतः शत्रु-ञ्जये नन्तुं जिनान् ययौ ॥ तत्र श्रीवृषभस्वामि-प्रासादः भूरि-रैव्ययात् । कारयित्वा प्रभोर्बिम्बं वर्षान्सव न्यवीविशत् ॥ इतो दशरथस्याङ्ग-जन्मा रामः प्रियादियुग । पितुर्निदेशतः कक्षं प्रपन्नः सबलोऽपि हि ॥ चक्रे दशाननः सीता-पहारं छलतो यथा । सुग्रीवादीन् यथा भृत्यान् चकारः स्वपकारतः ॥ मेलयित्वा यथा सैन्यं रामो लङ्कामवेष्टयत । यथा द्वयोरभूद्युद्धं ज्ञेयमत्र तथा बुधैः ॥ यदा न गृह्यते लङ्का रामेण कुर्वता रणम् । तदा नैमित्तिकः पृष्टः प्रोवाचेति तदग्रतः ॥ चन्द्रप्रभजिनेन्द्रस्य प्रतिमायाः प्रभावतः । अग्राह्या वर्त्तते लङ्का दुर्दान्तानां द्विषामपि ॥ यद्यत्रानीयते चन्द्र-प्रभबिम्बं प्रभावभृत् । पूज्यते च त्वया लङ्का तदा सद्यो ग्रहीष्यते ॥ नैमित्तिकवचः श्रुत्वा रामो मारुतिपार्श्वतः । अनैषीत् प्रतिमां चान्द्रप्रभीं स्वशिबिरान्तरे ॥ रामेण प्रेषितो वायु-पुत्रो गत्वा नभोऽध्वना । लङ्काया मध्यतश्चन्द्र-प्रभमूर्त्तिं बलान्नयेत् ॥ प्रातश्चन्द्रप्रभस्यार्चा कृत्वा रामो रणाङ्गणे । युद्धं कर्त्तुं दशास्येन सार्द्धं यावत् समीयिवान् ॥ तावद्दशाननोऽप्रेक्ष्य बिम्बं चन्द्रप्रभं मगे । व्याकुलो निर्ययौ कर्त्तुं सार्द्धं रामेण सङ्गरम् ॥ दशाननो दिने तस्मिन् भग्नो नंष्ट्वा दिनात्यये । मध्येलङ्कं समायातो दत्त्वा द्वारं पुरः स्थितः ॥ यतः—
" अनाज्यभोज्यमप्राज्यं विप्रयोगः प्रियैः सह । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥ १ ॥ "
यं यं मन्त्रं सुरं देवीं सस्मार रावणो नृपः । प्रादुर्भूतानि नो तानि तस्य संस्मरतो भृशम् ॥ यतः—
" प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहु साधनता । अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि ॥ युद्धं कुर्वन् रणेऽत्यन्तं रावणो विश्वकण्टकः । जगाम नरकं राम-लक्ष्मणाभ्यां हतः क्षणात् ॥ यतः—" विक्रमाक्रान्तविश्वोऽपि परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप नरकं दशकन्धरः ॥ १ ॥ " रावणस्य बलं सर्वं रामस्य मिलितं तदा । रामो लङ्कापुरीमध्ये जगामातुलविक्रमः ॥ आदौ जिनालये गत्वा नत्वा भक्त्या जिनेश्वरान् । पश्चादुत्तारकं गत्वा बुभुजेऽनुगसंयुतः ॥ रामो दशाननभ्रातु-र्विभीषणस्य भूपतेः । राज्यं दत्त्वा प्रियां सीता-मङ्गीचक्रे भुजाबलात् ॥ गृहीत्वा प्रतिमां चान्द्र-प्रभीं रामः समोदरः । अयोध्यानगरीं गच्छन् वागडं विषयं ययौ ॥ वागडाह्वपुरं तत्र स्थापयित्वा रघूद्वहः । रामश्चन्द्रप्रभं देवं पूजयामास सादरम् ॥ ततो यदाऽचलद्रामोऽग्रतो निजं पुरं

प्रति-। तदा न प्रतिमाऽचालीत् स्थानात्तस्मान्मनागपि ॥ ततस्तत्र जिनागारं कारयित्वा महत्तमम् । रामेण स्थापिता चान्द्र-प्रभीयं प्रतिमा वरा ॥ चन्द्रप्रभप्रभोरग्रे ध्यानं कृत्वा च पाण्डवाः । प्रापुर्विद्या द्विषज्जैत्रीः कौरवारि-निकृन्तनीः ॥ चन्द्रप्रभप्रभुं चित्ते स्मरन्तः पञ्च पाण्डवाः । अजयन् कौरवान् सर्वान् प्रापू राज्यं निजं पुनः ॥ नाशिक्ये नगरे स्फारं कारयित्वाऽर्हदालयम् । चन्द्रप्रभार्हतो विम्वं कुन्त्याऽस्थापि सदुत्सवम् ॥ भृगुकच्छपुरस्वामी मदनो मन्मथोपमः । त्रपुवत्या पुरो भीमभूपेनात्याजि राज्यतः ॥ स भूपो मदनो भ्राम्यन् वनेऽन्येद्युर्विसङ्कटे । वागडविषयं प्राप्य वहुभिल्लनिषेवितः ॥ प्रासादे प्रतिमा चन्द्र-प्रभतीर्थेशितुस्तदा । दृष्ट्वा नत्वाऽनमद् भूपः प्रगे प्रगे सदाऽऽदरात् ॥ एकदा प्रकटीभूय जगौ चन्द्र-प्रभः प्रभुः । त्वं भिल्लैः पञ्चभिः सार्द्धं गच्छ स्वच्छ ! निजे पुरे ॥ कुर्वतस्तव सङ्ग्रामं स्मरत सुव्रतं जिनम् । वैरी भूरिवलः सद्यो गमिष्यति यमालयम् ॥ श्रुत्वेति भारतीं चन्द्र-प्रभस्य मदनो नृपः । युद्धं कृत्वाऽरिणा सार्द्धं राज्यं प्राप रिपुक्षयात् ॥ ततो मदनभूपालः सङ्घेन सहितो मुदा । वागडोइ पुरेऽभ्येत्या-नंसीच्चन्द्रप्रभ प्रभुम् ॥ स च भूपो वहुकालं राज्यं कुर्वन् निजे पुरे । शत्रुञ्जयादितीर्थेषु यात्रां विस्तरतो व्यधात् ॥ शत्रुञ्जयेऽपि सर्वज्ञ-प्रासादं जनहर्षदम् । कारयाभास भूपालो भूरिलक्ष्मीव्ययात्मुदा ॥ अन्येद्युः स्व सुतं मल्ल-देवं राज्ये निजे मुदा । न्यस्याऽऽदात संयमं चन्द्र-देवसूरीशसन्निधौ ॥ मदनो मेदिनीपाल-यतिः शत्रुञ्जयाचले । ध्यानं कुर्वन् ययौ मुक्तिं सर्वकर्म्मततिक्षयात ॥ वागडोइ पुरस्वामी भूपः सिंहरथाभिध. । चन्द्रप्रभार्हतः पूजां विना नाऽऽद क्वचिद्दिने ॥ प्रभुं चन्द्रप्रभं पूज-यतस्तस्य महीपतेः । वश्यभूवन् द्विष. सर्वे दुर्दान्ता अपि तत्क्षणात् ॥ ततो विशेषतः स्फारं चन्द्रप्रभजिनालयम् । कारयामास भूपालः सद्यः सिंहरथाभिधः ॥ इत्यादि भूधवश्चन्द्र-प्रभस्वामिपदार्चनात् । अनेके सम्पदः प्रापुर्मुक्तिं प्रापुश्च भूरिशः ॥ चन्द्रप्रभप्रभोर्गेहं पतितं कालत क्रमात् । कुमारपालभूपाल उद्दधाराऽनघाशयः ॥ चन्द्रप्रभार्हतो ध्यानात कुमारो मेदिनीपतिः । सर्वत्र विजयं प्राप शात्रवाणां पराभवात् ॥ इत्यादि महिमानं तु श्रुत्वा चन्द्रप्रभप्रभोः । जगचन्द्रगुरुर्नन्तु-मीयिवाँस्तत्र हर्षतः ॥ जगच्चन्द्रगुरुस्त्यक्त्वा प्रमादं चरणस्य तु । चन्द्रप्रभप्रभोरग्रे शुद्धं चारित्रमाददे ॥ लात्वा स सूरिराट् वृत्तो-पसम्पदं स्वयं मुदा । आचाम्लाभिग्रहं याव-ज्जीवं जग्राह निश्चितम् ॥ आचाम्लानि सदाभावात् सूरेस्तस्य वितन्वतः । तपागच्छेति नामाभूद् गच्छस्य तस्य कालतः ॥ ततो दिने दिने गच्छस्तपो नाम्नेह वर्द्धते । यस्य चन्द्रप्रभेशस्य प्रभावो विद्यते यतः ॥ अग्रे चन्द्रप्रभेशस्य लेपकाह्वा कुटुम्बिका । स्थापिता भूभुजा लक्ष्मी-धरेण धीमता सता ॥ जातिः शालविकल्पेऽस्य जिनस्य पुरतः पुंसाम् । चोक्षा. कुमारपालेन भूपेन विहिता ध्रुवम् ॥ ऊकेश-ज्ञातिवर्यस्य पोल्हाकस्य धनेशितुः । तत्रैव वसतो भूमि-मध्यस्था प्रतिमाप्यसौ ॥ स्वप्नेऽभ्येत्य त्रियामिन्यां प्रादुर्भूता प्रभावभृत् । कामितं ददते भव्य-जीवानां स्मृतिमात्रतः ॥ श्रीसोमप्रभसूरीश-पार्श्वे शृण्वन् सना वृषम् । पाल्हाको विदधे देव-पूजादि पुण्यमादरात् ॥ उद्धृत्य पतितं चन्द्र-प्रभप्रभोर्निकेतनम् । स्थापयामास तद्बिम्बं पाल्हाको वहुरैव्ययात् ॥ वापीकूपतटाकादि कारयित्वा स रैपतिः । तीर्थभक्त्या ततो वाटीं कुसुमार्थमकारयत् ॥ गोपालाह्वोऽधुना डीसा वालो लक्ष्मीपतिः स्वयम् । अर्चीकरज्जिनागारं चन्द्रप्रभजिनेशितुः ॥ गोपालोऽपि महत्सङ्घं कृत्वा शत्रुञ्जयाचले । गत्वा श्रीवृषभं देवं ननामाऽर्चापुरस्सरम् ॥ अग्निना ज्वलिते ग्रामे विम्बं चन्द्रप्रभ-प्रभोः । न जज्वाल यतस्तस्य प्रभावः

प्रचुरः स्फुटम् ॥ अग्निना ज्वलितेऽन्यस्मिन् विम्बे सोऽपि रमापतिः । गोपालः स्थापयामास विम्बमन्यद् धनव्ययात् ॥ रत्नशेखरसूरीशस्तपागच्छधुरन्धरः । प्रातिष्ठिपच्च तद्विम्बं रमक्ष्मेपुखवत्सरे ॥ रत्नशेखरसूरीश-प्रसादादधुना सदा । कुरुते धर्म्मकृत्यानि जैनानि शिवहेतवे ॥ शत्रुञ्जयमहातीर्थे गोपालोऽपि धनेश्वरः । वह्वी यात्रा व्यधाद् भूरि-सङ्घयुक्तः सदुत्सवम् ॥ ८ ॥

इति वागडचन्द्रप्रभजिनसम्बन्धः

---

**कयजिणपडिमुद्धारा पंडवा जत्थ वीसकोडिजुआ । मुत्तिनिलयं पत्ता तं सित्तुंजयमहातित्थं ॥२५॥**

व्या०-कृतजिनप्रतिमोद्धाराः 'पाण्डवाः' युधिष्ठिरादयः पञ्च यत्र तीर्थे विंशतिकोटियतियुता, 'मुक्तिनिलयं' शिवसद्म प्राप्ता-गताः, तच्छत्रुञ्जयतीर्थं महद्धियते;—

कथात्र तेषाम्-पूर्वं वृषभदेवस्य कुरुनामा सुतोऽभवत् । तस्य नाम्नाऽजनि क्षेत्रं कुरु श्रीद्धं मनोहरम् ॥ कुरोर्हस्त्यभवत्पुत्रो यन्नाम्ना हस्तिनापुरम् । तस्यान्वये लसद्वीर्यो विश्ववीर्यो नृपोऽजनि ॥ स कुमारोऽभवच्चक्री तस्य पुत्रो लसद्बलः । स च प्रान्ते व्रतं प्राप्य तृतीयं त्रिदिवं ययौ ॥ अस्य कथा विस्तरात् स्वयं ज्ञेया । यतः—"थेवेणवि सप्पुरिसा सणंकुमारुव्व केइ बुज्झति । देहे खणपरिहाणी ज किर देवेण से कहिय ॥ १ ॥" तस्मिन् वंशे क्रमाच्छान्तिः कुन्थुश्चारजिनेश्वरः । एते त्रयोऽभवंश्चक्र-वर्त्तिनश्च जिनेश्वराः ॥ इन्द्रकेतुस्ततः कीर्त्ति-केतुर्वैरिकुलान्तकृत् । शुभवीर्यः सुवीर्यश्चा-नन्तवीर्यो नृपोऽजनि ॥ कृतवीर्यस्ततश्चक्री सुभोमोऽजनि सन्नयी । ततोऽसङ्ख्यमहीनेषु गतेष्वजनि शान्तनुः ॥ हस्तिनाह्वं पुरं न्यायात् पपाल शान्तनुर्नृपः । स्वभावाद् व्यसनी वैरि-मतङ्गजमृगाधिपः ॥ नीलाम्बरधरोऽन्येद्युः शान्तनुः शस्त्रपङ्क्तिभृत् । गतोऽरण्ये मृगैणादीं-स्त्रासयामास सर्वतः ॥ पापर्द्धिरससम्पृक्तो हयाऽऽकृष्टो व्रजन् वने । शान्तनुर्धृत-धन्वैव मृगपृष्ठे समीयिवान् ॥ अतीतायां वहुक्षोण्यां भूपेनाथ मृगोऽनशन् । गङ्गातटे नृपोऽपश्यच्चैत्यं चाम्बरमार्गगम् ॥ कैलासोऽयं गिरिः किं वा किं वा काञ्चनपर्वतः । ध्यायतीति ययौ भूपश्चैत्यमध्ये मनोहरे ॥ तस्मिंश्चैत्ये युगादीशं नत्वा स्तुत्वा पृथुस्तवैः । निविष्टः शान्तनुर्भूपो मुदितो मत्तवारणे ॥ इतः पूजयितुं देवं तत्र कन्यां समागताम् । दृष्ट्वा दध्यौ नृपः स्वःस्त्रीः किं किं पातालकन्यका ? ॥ पूजयित्वा जिनं याव-द्वलिता कन्यका शनैः । तावद् भूपो जगौ काऽसि कन्यका कस्य भूपते ॥ तदैवैत्य नरः कश्चि-न्नत्वा प्रथमबोधिदम् । प्रोवाचास्याश्चिरश्चारु-चरित्रं श्रूयतां त्वया ॥ जह्नोर्भूपस्य पुत्रीयं सर्व-शास्त्रार्थपारगा । गङ्गाह्वा यौवनं प्राप्ता नृणां मानसमोहनम् ॥ पित्र्युत्सङ्गे निषण्णाया कन्या अस्या दिनोदये । चारणश्रमणो ज्ञानी कश्चिदेव समाययौ ॥ उपावेश्यासने तं च जह्नुर्नत्वा जगावदः । कोऽस्या वरोऽस्ति रूपेण विद्यया सदृशो वद ? ॥ मुनिर्जगौ मरुन्नद्यास्तटे शान्तनुभूपतिः । एष्यत्येव हयाऽऽकृष्टो योग्योऽस्यास्तु वरो ननु ॥ गदित्वेति मुनौ तस्मिन् गते पितुर्निदेशतः । कारयित्वाऽत्रसावौकः सार्वयत्यादि वोधिदम् ॥ यतः—"वरगंधधूवचोक्खक्खएहि कुसुमेहिं पवरदीवेहिं । नेवेज्ज-फलजलेहि अ जिणपूया अट्ठहा भणिया ॥ १ ॥ नेत्रानन्दकरी भवोदधितरी श्रेयस्तरोर्मञ्जरी, श्रीमद्धर्म्ममहानरेन्द्रनगरी

ध्यापङ्कताधूमरी । हर्षोत्कर्षशुभप्रभावलहरी भावद्विपा जित्वरी, पूजा श्रीजिनपुङ्गवस्य विहिता श्रेयस्करी देहिनाम् ॥ २ ॥" अस्याश्चेत्क्रियते पाणिग्रहोऽत्र तेन भूभुजा । तदा पितुश्च मातुश्च प्रमोदो जायते भृशम् ॥ इयाऽऽकृष्ट इहायातस्त्वमेवाद्य नरेश्वर । अतः शान्तनुभूपस्त्वं कुर्वस्याः पाणिपीडनम् ॥ श्रुत्वेति शान्तनुः प्राह सोऽहं स्यां धरणीधवः । रोचते यदि ते स्याच्च तदाशु भवतोदितम् ॥ स्वासक्तं मानसं तस्य मत्वा जह्नुसुता जगौ । घृणोम्यहं वरं तं च यो मे कथितकारकः ॥ अहं तु धर्म्मविषयं यत्कार्यं कथयामि तु । तच्चेत्करोषि भूप त्वं तदेष्टं तेऽस्तु साम्प्रतम् ॥ तद्रूपमोहितो भूपः शान्तनुः प्रोक्तवानिति । यद्यत्त्वयोच्यते तत्तत् क्रियतेऽत्र मया ध्रुवम् ॥ गङ्गयाकारितस्तत्र पिताऽऽगत्य च तत्क्षणात् । ददे शान्तनवे पुत्रीं तस्मै ऋषभसाक्षिकम् ॥ जह्नुः शान्तनवे कन्या दत्त्वा प्रथमतीर्थपम् । प्रणम्य शान्तनुः पुत्रीं मुत्कलाप्य स्वपुर्यगात् ॥ इतः साधुद्वयं तत्रा-भ्येत्य नत्वा जिनेश्वरम् । बलानके स्थितं कुर्वद् जिनेन्द्रगुणवर्णनम् ॥ शान्तनुभूपतिः प्राह युवां कस्मादिहागतौ । तयोर्मध्ये जगावाद्य-साधुर्मधुरया गिरा ॥ उज्जयन्ते गिरौ सार्व-नेमिनं भक्तितस्तदा । नत्वा यावत्स्थितावावां ध्यानं कर्त्तुं वरात्मनि ॥ तावत्सूर्यकराकारं तेजःपुञ्जो दिशोदिशम् । उद्योतयन् समायातोऽनमन्नेमि जिनं नरः ॥ ध्यानान्ते श्रीजिनस्याग्रे तेजःपुञ्ज सुरो वरः । नमन् पुन पुनर्देव-मावाभ्यां वीक्षितस्तदा ॥ ततश्चैकेन मुनिना पृष्टः कोऽसि त्वमत्र तु । स देवोऽवग् गिरेरस्यो-पान्ते सुग्रामनामनि ॥ क्षत्रियो भीमदेवाह्वो यात्रिकान् धर्म्मिणो नरान् । उपाद्रवत्तदा द्रव्य-वसनाद्यपहारतः ॥ तेषां हत्याहसा त्वता-रोगोऽङ्गे मे समागमत् । यदा न मे गतो रोगस्तदैको मिलितो मुनिः ॥ पठित्वा नव पूर्वाणि विहारं स महीतले । गुरूणामाज्ञया शश्वत् कुरुते स सदादरात् ॥ "पडिवज्जइ संपुण्णो संघयणी धिइजुओ महासत्तो । पडिवज्ज जिणमयम्मि सम्मं गुरुणा अणुण्णाओ ॥ १ ॥ गच्छेवि अ निम्माओ जा पुव्वा दस चेव सपन्ना । नवमस्स तइयवत्थू होइ जहन्नो सुयामिगमो ॥ २ ॥" इत्यादि श्रीआवश्यके । वन्दित्वा स मया पृष्टः कथं मे रुगगमिष्यति । ज्ञानेनाऽऽलोक्य स ज्ञानी धर्म्महेतोर्जगावदः ॥ पूर्वं ऋषभदेवस्य नन्दनेनाऽऽदिचक्रिणा । कारितं नेमिनः सद्म गिरिनाराभिधे गिरौ ॥ नेमिं पूजयतो रोगोऽहसा सह प्रयास्यति । ततः स मानवो गत्वोज्जयन्ते नेमिमर्चति ॥ नेमिं पूजयतः पुण्यैर्भावात्तस्मिन् भवे मुदा । रोगस्तस्याङ्गतो यातो भूरिपापचयः पुनः ॥ मृत्वा तस्माद् भवान्नेमि-नाथपूजाप्रभावत । ईदृग्रूपोऽभवद्देवो ताविषे प्रथमे खलु ॥ विज्ञायावधिना पूर्वं भवं चेह जिनेश्वरम् । अपूजयं भवादस्मादग्रेह च शिवं गमी ॥ सिद्धिविनायकाख्योऽहं देवोऽत्र शिखरे स्थितः । विघ्नानि सङ्घलोकस्य हरामि प्रतिवासरम् ॥ यतः—
"पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदं, पुण्यं सञ्चिनुते श्रियं वितनुते पुष्णाति नीरोगताम् । सौभाग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः, स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चार्हतां निर्मिता ॥१॥ फलं पूजाविधातुः स्यात् सौभाग्यं जनमान्यता । ऐश्वर्यं रूपमारोग्यं स्वर्गमोक्षसुखान्यपि ॥ २ ॥" इत्थं रैवततीर्थस्य माहात्म्यं शिवशर्म्मदम् । श्रुत्वा नत्वा जिनं नेमिमावाभ्यां जल्पितं तदा ॥ यदत्र भवता तीर्थ-माहात्म्यं जल्पितं खलु । तत् सत्यं पुण्यवान् देव-दीर्घसेवापरोऽसि यत् ॥ सुतीर्थेष्वानमन्तौ वां जिनान् ग्रामे पुरे पुरे । नन्तुं प्रथमतीर्थेश-मिहागातां तु साम्प्रतम् ॥ यतः— "जिनं पूजयतां ध्यानं कुर्वतामर्हतः सताम् । नमतां तन्वतां जीव-रक्षां मुक्तिसुखं भवेत् ॥ १ ॥" इत्युक्त्वा गतयोः साध्वोः शान्तनुर्ध्यातवानिति । कदाऽहं करवे पूजां जिनस्य रैवताचले ॥ एतच्चिन्तयतस्तस्या-कस्माच्छान्तनु

भूपतेः । आगत शिविरं हर्षा–न्ननाम शान्तनुक्रमौ ॥ तदा जयजयारावा उच्चैर्याचकमानवाः उच्चरन्ति स्म भृत्याश्च नमन्ति स्म प्रभोः पदौ ॥ ततस्त्वागमनोदन्त तेभ्यः प्रोक्त्वा नरेश्वरः । सप्रियः कुञ्जरारूढ स्वपुर समुपागमत् ॥ गते कियति काले तु गङ्गा सत्स्वप्नसूचितम् । अजीजनत सुत वर्यं रूप शान्तनुगेहिनी ॥ पिता जन्मोत्सव कृत्वा गाङ्गेय इति नाम तु । प्रददौ स च दीप्त्याभूत् सूर्यस्य सदृशः क्रमात ॥ यतः—"तेजोभिर्भास्कर इव कलाभिरमृतांशुवत् । कविः कवित्वकरणाद् बुधो विबुधवन्पुनः ॥ १ ॥" गुरुवत् सर्व विद्यावि–न्मङ्गलो मङ्गलाकृते । असत्कर्म्मणि-मन्दोऽभूद् गाङ्गेयः शान्तनूद्भवः ॥ गङ्गाऽवग् पते ! त्व तु पापर्द्धिव्यसन त्यज । पापर्द्ध्या लभतेऽमुत्र परत्रासुखसन्ततिम् ॥ वार्यमाणोऽपि पापर्द्धिं शान्तनुर्न यदाऽत्यजत् । तदा गङ्गा जगौ श्वभ्रं व्यसना-ज्जायते नृणाम् ॥ द्यूतं च मांसं च सुरा च वेश्या पापर्द्धिचौर्यं परदारसेवा । एतानि सप्त व्यसनानि लोके घोरातिघोरं नरक नयन्ति ॥ वैरं वैश्वानरं व्याधि–वादव्यसनलक्षणाः । महानर्थाय जायन्ते वकाराः पञ्च वर्द्धिताः ॥ एव प्रोक्तो यदाऽमुञ्चद् व्यसनं न हि शान्तनुः । तदाऽऽदाय सुतं गङ्गा ययौ तातनिकेतने ॥ वनाद् गेह समायातः शान्तनुः ससुता प्रियाम् । अप्रेक्ष्य मूर्छितो लब्ध–चेतन्योऽथ स जगावदः ॥ गङ्गेऽनङ्गेन रङ्गेण मदङ्गं तीक्ष्णसायकैः । तक्ष्यमाणं कथ दृष्ट्वो–पेक्षसे क्षत्रियाण्यसि ॥ त्वं विनाऽद्य मम प्राणाः करिष्यन्ति प्रयाणकम् । अतोऽभ्येत्य स्थिरीकर्त्तुं प्राणांस्त्वमेपि साम्प्रतम् ॥ अमात्या जगदुः शोकवायुभिरस्थिरैः किमु । बाध्यसे साम्प्रत भूपः यतः स्युर्मेरुवत् स्थिराः ॥ संयोगा देहिना नित्य भवन्ति न भवन्ति च । तत्कृते कः सुधीर्हर्ष–शोकाभ्यामपि बाध्यते ॥ धर्म्मशोकभयाहार–निद्रा-कामकलिक्रुधः । यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी ॥ पापर्द्धित्यजने चक्रे प्रतिज्ञा या प्रियाऽ-ग्रतः । त्यक्ता सा च त्वयेदानीं तेन त्वामत्यजत्प्रिया ॥ इत्थं वचनयुक्त्यानु–बोधितः शान्तनुर्नृपः । अमु-चद् बाह्यतः शोक नान्तरङ्गं मनागपि ॥ चतुर्विंशतिरब्दानि विना पत्न्या तया तदा । दुःखितः शान्तनुश्चित्ते शोकव्याप्तोऽत्यवाहयत् ॥ इतो गङ्गा पितुर्गेहे स्थिता गाङ्गेयनन्दनम् । वर्द्धयामास सुस्थत्वन्न–पानदानेन सन्ततम् ॥ गुरुपार्श्वे कला शिक्ष–यित्वा गङ्गातनूभवः । अधीयानो धनुर्विद्यां सम्पूर्णां ज्ञातवान् क्रमात् ॥ आषाढो जलधाराभिर्यथा वर्षति लक्षशः । तथा गङ्गासुतो बाणधोरणीभिश्च वर्षति ॥ सर्व-शास्त्राब्धिपारीणो गाङ्गेयो गुरुसन्निधौ । धर्म्मं शृण्वन् दयामूल–मभूद्विरागवान् हृदि ॥ गाङ्गेयः सुगुरोः पार्श्वे धर्म्मं शृण्वन् सदादरात् । गङ्गातटे वने चाति देवं नौतितमां पुनः ॥ इतस्तु शान्तनुर्भूपो भूरि-भृत्ययुतो भ्रमन् । गङ्गाकूलस्थकक्षान्त–रागात् पापर्द्धिहेतवे ॥ भ्रमणैर्भेषणाना तु व्याघातां हक्कितार-वैः । तद्वनं व्याकुल जातं नानापशुभिराश्रितम् ॥ वेष्टिता अपि नश्यन्ति केचित् तत्र पशूत्कराः । केचिद्विद्धाः शरैः प्रापुर्हता यमनिकेतनम् ॥ त्रस्यन्तो हरिणा व्योम्नि चन्द्राङ्कस्थं मृगं तदा । उत्पतन्ति स्म वेगेन मिलितु तत्र कानने ॥ निघ्नन् पशून् बहून् राजा शान्तनुस्तत्र कानने । गाङ्गेयेनेक्षितो भक्त्या नतः प्रोक्तस्तदेति च ॥ राजंस्त्वमसि लोकाना पालको न्यायमार्गतः । अतस्त्वयाऽखिला जीवा रक्षणीयास्तु विघ्नतः ॥ यतः—"क्षत्रियाः सागसो जन्तून् घ्नन्ति नैव निरागसः । निरागसस्ततस्त्व तु कथं हनसि साम्प्रतम् ॥ १ ॥ पङ्गुकुष्ठिकुणित्वादि दृष्ट्वा हिंसाफलं सुधीः । निरागस्त्रसजन्तूनां हिंसां सङ्कल्पतस्त्यजेत् ॥ २ ॥ आत्मवत्सर्वभूतेषु सुखदुःखे प्रियाप्रिये । चिन्तयन्नात्मनोऽनिष्टां हिंसा-मन्यस्य नाचरेत् ॥ ३ ॥ निरर्थिकां न कुर्वीत जीवेषु स्थावरेष्वपि । हिंसामहिंसाधर्मज्ञः काङ्क्षन् मोक्ष-

मुपासकः ॥ ७ ॥ प्राणी प्राणितलोभेन यो राज्यमपि मुञ्चति । तद्वधोत्थमघं सर्वो–र्वीदानेऽपि न शाम्यति ॥ ८ ॥ वने निरपराधानां वायुतोयतृणाशिनाम् । निघ्नन् मृगाणा मांसार्थी विशेष्येत कथं शुनः ? ॥९॥ दीयमाणः कुशेनापि यः स्वाङ्गे हन्त ! दूयते । निर्मन्तून् स कथं जन्तू–नन्तयेन्निशितायुधैः" ॥ १० ॥ गङ्गायाः सूनुनैवं तु निषिद्धोऽपि च शान्तनुः । प्रावर्त्तत पशून् हन्तुं मृगयारसलम्पटः ॥ विधायाधिज्यमिष्वासं टणत्कारं दृढं स्वरम् । तथा गङ्गासुतश्चक्रेऽनेशुश्च पशवो यथा ॥ सिंहनादं दृढं कुर्वंस्त्रासयन् नृपसेवकान् । व्याधाश्च शान्तनूपान्तं ययौ गङ्गातनूभवः ॥ कोपाच्छान्तनुभूपालो धन्वी रणप्रियस्तदा । युद्धायाकारयद् गङ्गा–सुतं दोर्बलगर्वितः ॥ गाङ्गेय–शान्तनू कोपा–विष्टौ रणरसप्रियौ । युयुधाते मिथो बाण–मोक्षणे शमनाविव ॥ पुत्रकान्तौ मिथो युद्धं कुर्वाणौ रणे तदा । विज्ञायेत्य जगौ गङ्गा सुतस्य पुरतो धुरि ॥ अयं तव पिता पुत्र ! शान्तनुर्मेदिनीपतिः । तेन पित्रा समं युद्धं कर्तुं न युज्यते मनाग् ॥ गङ्गा गत्वा ततः पत्युः पार्श्वे जगाविदं स्फुटम् । अयं ते नन्दनस्तेन समं युद्धं वरं न हि ॥ ततो गङ्गासुतश्चापं मुक्त्वा–ऽनमच्छिरस्तदा । ययौ यावत्पिता तावत् सम्मुखं समुपागमत् ॥ गाङ्गेयोऽभ्येत्य तातस्य चरणावलुठत् यदा । तदा दोर्भ्यां समालिङ्ग्या–चुम्बत्पुत्रं मुखे पिता ॥ शान्तनुः प्राह पत्नि ! त्वंससुता साम्प्रतं द्रुतम् । अङ्गीकुरु निजं राज्यं यतस्त्वमसि वल्लभा ॥ ततो गङ्गा जगौ स्वामिन् ! प्रतिज्ञा या कृता त्वया । हिंसता भवता जीवान् लुप्ता सा साम्प्रतं ध्रुवम् ॥ या हिंसा विद्यते श्वभ्र–तिर्यग्गतिप्रदायिनी । त्वया त्यक्ता न सा तेन नाहमेमि तवालये ॥ अयं पुत्रस्तवं मया वर्द्धितः स्वन्नपानतः । त्वत्पितुस्तत्रोपान्ते तिष्ठनाद् विनयान्वितः ॥ त्वया त्यक्तुं न शक्येत हिंसा जीवाभिघातिनी । तेनादेशं पितुर्गेहं स्थातुं मे वितराऽधुना ॥ गङ्गायास्तु पितुर्गेहं स्थातुमादात्थ शान्तनुः । ततः शान्तनुभूमीशःससुतः स्वपुरं ययौ ॥ पालयन्न्यायतो राज्यं रेजे पुत्रेण भूपतिः । दिवसेनेव मार्त्तण्ड-स्तटाकमिव वारिजैः ॥ अन्येद्युः शान्तनुस्तार्क्ष्या–रूढोऽगाद्यमुनातटे । दृष्ट्वा तस्याः प्रवाहं तु ध्यातवानिति चेतसि ॥ किमेषा भूस्त्रिया वेणि–स्तस्या एवाक्षिकज्जलम् । किं वाप्सरः कुचभ्रष्टा कस्तूरी वाम्बुधरः किमु ? ॥ किमस्या नीरमादाय वारिदः कज्जलप्रभः । तस्योत्सर्गात् पुनः श्वेतो जायते स शरद्दतौ ? ॥ नावारूढाऽबला दिव्य–रूपा काचिद्वगादितः । तां दृष्ट्वा भूपतिर्दध्यौ किमेषा यमुनासुरी ॥ मया चेत् क्रियते पाणि–ग्रहोऽस्या वरयोषितः । तदा मे सफलं जन्म जायतेऽस्याश्च निश्चितम् ॥ ध्यात्वेति भूधरोऽप्राक्षीत् कस्येयं विद्यते कनी । नाविकेशो जगौ पुत्री ममैषा गुणशालिनी ॥ उक्तञ्च ग्रन्थान्तरे—

" विज्ञाताखिलशास्त्रौघा जङ्गमेव सरस्वती । सर्वलक्षणसम्पूर्णा लक्ष्मीरिव शरीरिणी ॥ १ ॥ त्रिद्यौपधी वसन्तस्य सर्वरोगविघातिनी । कल्पवल्लीव गेहस्था दारिद्र्याद्रिविदारिणी ॥ निष्कलङ्केन्दुलेखेव गुरुकाव्यबुधाश्रया । द्यौरिवासद्दृगश्रेयोयुक्ता कुमारिकोऽगमत् ॥ त्रिभिर्विशेषकम् ॥ गतेषु नाविकेषु च गृहे भमिधवस्तदा । प्रेष्याऽमात्यान् कनीं तां च ययाचे स्नेहपूर्वकम् ॥ कन्यापिता जगौ नीचा वयं भूपतिरुत्तमः । समानकुलयोरेव विवाहः शोभतेतराम् ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु योगः ॥ १ ॥ अमात्या जगदू राजा कनीं नीचकुलोद्भवाम् । अङ्गीकुर्वन्ति कल्याण-मिवाशुचिस्थितं ननु ॥ नाविकोऽवग् नृपस्यास्य कुलीनाः सन्ति वल्लभाः । इयं नीचकुले जाता–पमानं तु लभिष्यति ॥ गङ्गापत्नीभवः पुत्रो गाङ्गेयोऽस्यास्ति शौर्यवान् । तस्य कालक्रमाद्राज्यं भविष्यत्येव निश्चितम् ॥ मन्त्रीश्वरो

महीशान्तेऽभ्येत्य नाविकजल्पितम् । व्यजिज्ञपत् ततो भूपः कृष्णाऽऽस्योऽजनि तत्क्षणात् ॥ ज्ञात्वैतत् स्वर्नदीपुत्रोऽभ्येत्य नाविकसन्निधौ । मत्पित्रे कन्यकेयं तु देहि नाविकसत्तम ! ॥ इयं त्वन्नन्दिनी पूज्या मया गङ्गेव सन्ततम् । अहं तु रागवान् पूर्वमभवं संयमश्रियि ॥ ममास्तु ब्रह्मचर्यं तु यावज्जीवं तु नाविकः । अतस्त्वन्नन्दिनीपुत्रो राज्यश्रीभाग्भविष्यति ॥ अत्रार्थे तपनः साक्षी साक्षिणो निर्जराः पुनः । भूपः साक्षीवृषसाक्षी कन्याऽतो दीयतां पितुः ॥ गाङ्गेयेनेति गदिते गाङ्गेयमस्तकोपरि । पुष्पवृष्टिं विधायोच्चैः-स्वरं वृन्दारका जगुः ॥ चिरं त्वं जय गाङ्गेय ! ब्रह्मचर्यधरो ध्रुवम् । भीष्मं व्रतमिदं स्वर्गा-पवर्गसुखदायकम् ॥ भीष्मव्रतमलादेप ब्रह्मचर्यं सुदुष्करम् । अतो भीष्मा-भिधाऽस्यास्तु वाणीत्यासीन्नभोध्वनिः ॥ यतः—" देवदाणवगंधव्वा जक्खरक्खस्सकिंनरा । वभयारिं नमंसन्ति दुक्कर जे करंति तं ॥ १ ॥ " जो देइ कणयकोडिं अथवा कारेइ कणयजिणभवणं । तस्स न तत्तियपुन्नं जत्तिय वंभव्वए धरिए ॥ २ ॥ काएण वंभचेरं धरंति भव्वाउ जे विसुद्धमणा । कप्पम्मि वंभलोए ताणं नियमेण उववाओ ॥ ३ ॥ " अकर्त्तव्यं नैव कर्त्तव्यं प्राणैः कण्ठगतैरपि । सुकर्त्तव्यं तु कर्त्तव्यं प्राणैः कण्ठगतैरपि ॥ स्वर्गच्युतानामिह जीवलोके चत्वारि नित्यं हृदये वसन्ति । दानप्रसङ्गो विमला च वाणी देवार्चनं सद्गुरुसेवनं च ॥ नाविकोऽथ जगौ हृष्टः शृण्वस्यास्तु कुलादिकम् । इहैवा भरते रत्न-पुरमासीन्मनोहरम् ॥ तस्मिन्नासीन्नृपो रत्न-शेखरो न्यायमन्दिरम् । पत्नी रत्नवती तस्य शीलरत्नमणीखनिः ॥ सुस्वप्नसूचिता पुत्रीं लग्ने प्रश्नेऽतिशोभने । असूत सुखतो रत्न-वती पूर्वेव रोहि-णीम् ॥ कश्चिद्विद्याधरः पूर्व-वैरादुत्पाट्य तां कनीम् । जातमात्रां विमुच्याशु यमुनासैकतेऽगमत् ॥ रत्नशेखरभूपस्य पुत्री सत्यवती त्वियम् । शान्तनोर्भूपतेः पत्नी भाविनीत्यभवत् खगीः ॥ इत्याकाशगिरं श्रुत्वा कन्यां नीत्वा स्वसद्मनि । अवर्द्धयमहं पुत्री-मिव सद्योऽन्नदानतः ॥ अतो व्योमभवां वाणीं देवोक्तां जनकस्तव । सत्यां करोतु कन्याया अस्याः पाणिग्रहाद् द्रुतम् ॥ ततो गङ्गासुतो हृष्टः कन्यावृत्ता-न्तमादितः । कथयित्वा पितुर्मोदं विदधे सात्त्विकाग्रणीः ॥ राजा सुतोदितं श्रुत्वा नानोत्सवपुरस्सरम् । पर्यणैषीत् सतीं सत्य-वतीं कन्यां शुभेऽहनि ॥ गङ्गयेव पयोराशिः व्योमेव चन्द्रलेखया । मुद्रयेव वरं रत्नं सत्यवत्याऽशुभत् नृपः ॥ क्रमात् सत्यवती पुत्रावसूत शोभनेऽहनि । आद्यश्चित्राङ्गदो नाम्ना चित्र-वीर्योऽपरः सुतः ॥ तदा गुरुसमीपे तु श्रुत्वा पापर्द्धिजं फलम् । धर्म्मकृत्यानि कुरुते तैः पुत्रैः सह भूपतिः ॥ यतः—" राजदण्डभयात्पापं नाचरत्यधमो जनः । परलोकभयान्मध्यः स्वभावादेव चोत्तमः ॥ १ ॥ " गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ पापर्द्धि-विरतं कान्तं गङ्गा श्रुत्वा सुताननात् । सत्यवत्या समं प्रीतिं व्यधात्पत्युर्गृहागता ॥ पुत्रत्रयसखः पत्नी-द्वयशाली तु शान्तनुः । शत्रुञ्जयादितीर्थेषु यात्रां चक्रे शिवाप्तये ॥ शान्तनौ स्वर्गते भीष्मः सत्यसन्धः सुधर्म्मवान् । राज्येऽस्यपिश्चयच्च चित्रा-ङ्गदं शान्तनुभूपतेः ॥ गाङ्गेयोक्तमनादृत्य चित्राङ्गदमहीपतिः । नीलाङ्गदेन सार्द्धं तु युद्धं वितनुते स्म सः ॥ नीलाङ्गदो रणे क्रुद्धो न्यहञ्चित्राङ्गदं नृपम् । भीष्मो नीला-ङ्गदं निन्ये यमगेहं रणाङ्गणे ॥ नीलाङ्गदं तु गाङ्गेयो गान्धर्वकुलसम्भवम् । प्रेषयामास सङ्ग्रामा-ङ्गणे यमनिकेतने ॥ चित्राङ्गदपदे भ्राता विचित्रवीर्यभूपतिः । स्वर्नदीसूनुनाऽस्थापि कुर्वता लसदुत्सवम् ॥ इतः फारिसहीशस्य पुत्र्यम्बाद्यादिमाऽभवत् । अम्बालाङ्गा द्वितीया तु तृतीयाम्बालिकाभिधा ॥ कारिणा कारिते तासां विवाहार्थं च मण्डपे । आकारिता नृपास्त्यक्त्वा विचित्रवीर्यभूपतिम् ॥ हीनजातिभवो भूपो

विचित्रवीर्यभूपतिः ॥ यतोऽस्या जननी जाता नाविकस्य कुलोद्भवा ॥ क्रमात्कस्यचिदास्यात्तु श्रुत्वैतत् स्वर्नदीभवः ॥ दध्यौ किं भूधरा एते परिणेष्यन्ति कन्यकाः ॥ कन्यकार्थमसङ्ख्येयेषु भूपेषु मिलितेष्वपि । गङ्गापुत्रोऽहरत् कन्या-स्तिस्रः पश्यत्सु तेषु च ॥ क्रुद्धा भूमिधवास्ते तु शस्त्राण्यादाय वेगतः । अढौकन्त रणं कर्तुं समं गङ्गातनूभुवा ॥ भीष्मे बाणानसङ्ख्येयातान् मुञ्चमाने रिपून् प्रति । निश्चेष्टकाष्ठवज्जाताः पतिताश्च क्षितौ तके ॥ क्षणात् सचेतनीभूय गाङ्गेय सबलं तदा । मत्वा नत्वा जगुस्तेऽतः किंकराः स्मो वयं तव ॥ ततः कारिनृपो नत्वा गाङ्गेयं प्रोक्तवानिति । अपराधो मयाऽकारि यः सर्वं क्षम्यतां त्वया ॥ एतास्तिस्रः सुता माम-कीनाः परिणयाधुना । गाङ्गेयोऽवग् न मे कार्यं कन्याभिर्ब्रह्मचर्यतः ॥ कारिः प्राह मया कस्मै दास्यन्ते कन्यका इमाः । भीष्मोऽवग् वितराकार्यं विचित्रवीर्यभूभुजे ॥ ततस्तेषु महीशेषु क्रियमाणेषु सूत्सवम् । कारिणा स्वसुता दत्ता विचित्रवीर्यभूभुजे ॥ भुञ्जानस्य महीशस्य भोगान् पत्नीषु तासु च । प्रत्येकमभवन् पुत्रा-स्त्रयस्तासां मनोहराः ॥ अम्बिका धृतराष्ट्राह्व-मम्बाला पाण्डुनन्दनम् । अम्बाह्वा विदुरं नाम्ना पुत्र प्रासूत सद्दिने ॥ त्रयोऽपि नन्दना मातृपितृभ्यां पाठिताः क्रमात् । विनीता देवगुरुषु भक्ता आसन्निरन्तरम् ॥ स पुत्रो यः पितुर्भक्तः स पिता पुत्रमोदकः । तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥ विचित्रवीर्यभूपस्य भुञ्जानस्य सुख रतेः । पत्नीभिः सह सञ्जातो राजयक्ष्मामयस्तनौ ॥ दिने दिने क्षयं याति शरीर तस्य भूपतेः । कुत्सनीयं च वपुर्जातं क्रमाज्जुगुप्स ते जनः ॥ विचार्य सचिवाः सर्वे पाण्डुपृथ्वीपतिं व्यधुः । यस्य भाग्यं समस्त्युग्रं तस्य राज्यं भवेद्यतः ॥ पाण्डौ पाति मही न्यायात् सुखिन्यो निखिलाः प्रजाः ॥ बभूवुः सेवकाश्चापि साधवोऽपि सुखान्विताः ॥ पूजार्हः स्वगुणैरेव जायते मानवः खलु । यः सेवते जिनं भक्त्या पूज्यते सोऽरिभिः समम् ॥ मधूत्सवेऽन्यदा पाण्डु-र्वनलक्ष्मीं मनोहराम् । वीक्षितु प्रययौ बाह्यो-द्याने फलितपादपम् ॥ राजादनाम्रकंकेल्लि-पुन्नागश्रीफलादयः । वृक्षाः फलभरैर्नम्रा नमन्ति च महीपतिम् ॥ आम्रवृक्षतले कश्चिन्नरः फलकमद्भुतम् । पश्यन् पुनः पुनर्दृष्टोऽकस्मात् पाण्डुमहीभुजा ॥ यावत्तत्रैति भूपालस्तावत्तत्फलकं द्रुतम् । वस्त्रेणाच्छादयामास स नरश्चकिताशयः ॥ राजाऽवक तव पार्श्वे किं विद्यते वद कोविद । स तत् फलकं भूमीपालं दर्शयत्तदा ॥ तत्र रूपं कुरङ्गाक्ष्या कमनीयं महीपतिः । निरीक्ष्य धूनयन् शीर्ष दध्यावेवं स्वचेतसि ॥ अहो ! सर्वाङ्गसौन्दर्य-महो लवणिमा पुनः । अहो ! कान्तिभरः कश्चित् सहजोऽस्याः शरीरजः ॥ अस्या य. कुरुते पाणिपीडनं मानवः खलु । स एव श्लाघ्यते सर्वैः सुरासुरनरैरपि ॥ पाण्डुः प्राह नरोत्तंस ! कस्या इयं प्रतिकृतिः । सोऽभाणीद्विद्यते सौर्यपुरं सुरपुरोपमम् ॥ तत्पाति नगरं भूपोऽन्धकवृष्णिर्नयाऽध्वना । दशाऽऽसन् सूनवस्तस्य समुद्रविजयादयः ॥ यतः — "समुद्रविजयोऽक्षोभ्यः स्तमितिः सागरस्तथा । हिमवानचलश्चैव धरणः पूरणस्तथा ॥ अभिचन्द्रो वसुदेवो दशार्हाख्या दशापि ते । गुणैर्दश समानास्ते दशार्हा लक्षणे यथा ॥ पुत्री कुन्त्यभिधा चारु-चतुःषष्टिकलानिधिः । रूपश्रीनिर्जितप्रीति-रतिदेवाङ्गनाऽभवत् ॥ तस्या रूपमहं वीक्ष्य फलके रुचिरेऽखिलम् । आलोक्याह ततो रूपमलिखं पत्रके वरम् ॥ धनं तस्मै नृपो दत्त्वा लात्वा तत्फलक तदा । पश्यंस्तां वरितु शश्वद्वाञ्छत्येव स्मरातुरः ॥ एकदा कानने गच्छन् पाण्डुः कीलकयन्त्रितम् । वरं कञ्चिदयोबाणै-र्विद्धं ददर्श मूर्च्छितम् ॥ तदग्रे पतितं सोऽसिं दृष्ट्वा कोशादपाकरोत् । यदा तदौषधीयुग्म साक्षर दृष्टवान् मुदा ॥ वाचयित्वाऽक्षरश्रेणी-मेकया तं नरं तदा । विशिल्यं विदधे भूपोऽपरया विगतव्रणम् ॥ स पुमान् मुत्कलीभूतः स्वस्थः पृष्टो महीभुजा ।

कस्त्वं ? नियन्त्रितः केन ? जगावथ नरः स च ॥ विद्याधरोऽनिलगति-रहं मे गेहिनी रमा। हृताऽद्याशनिवेगेन खगेन सदने स्थिता ॥ अहं वालयितु पत्नीं धावंस्तत्पृष्ठितो हठात् । बद्धोऽत्र तेन लेभेऽथ दशामेवं-विधां नृप ! ॥ निष्कारणोपकारिणा मद्भाग्यादिह साम्प्रतम् । आगतेन त्वयाऽमोचि कष्टादस्मान्नरेश्वर ! ॥ मम जीवितदाता त्व-मौषध्यौ द्वे गृहाण भो ! । मुद्रिकां कल्पितस्थान-नेत्रीं लाहि चाऽचिरात् ॥ त्वयाऽहं च स्मृतः कुर्वे सान्निध्यं तव सन्ततम् । इत्युक्त्वा स ययौ विद्या-धरः स्वीयपुरे रयात् ॥ इतः फलकमृन् पाण्डु-रूपमालेख्य कागदे । सूर्यपुरेऽन्धकवृष्णे-र्भूपस्य पुरतोऽमुचत् ॥ राजा दृष्ट्वा तु तत्पाण्डु-रूप ज्ञात्वा व्यचिन्तयत् । किमेष मदनो देवः किमश्विनीकुमारकः ॥ पितुरुत्सङ्गतः कुन्ती कन्या पाण्डोर्महीभुजः । रूपं ज्ञात्वा व्यधादेवं प्रतिज्ञा स्वीयचेतसि ॥ अस्मिन् भवे तु मे पाण्डु-र्भर्त्ता वैश्वानरोऽथवा । सलज्जा कथितु शक्ता मातुः पितुः पुरश्च न ॥ दत्त्वा दानं नृपस्तस्मै चित्रकाराय तत्क्षणात् । तं विसृज्य व्यधाच्चिन्तां राज्यसत्कां दिनोदये ॥ दुष्प्रापं तं वरं मत्वाऽन्यदा कुन्ती वने गता । निवध्नन्ती गले पाशं प्रोवाचेति पुनः पुनः ॥ मातरः कुलदेव्यो वा कुतोऽप्यानीय तं पतिम् । सद्यो मेलय चेदानी-मन्यथाऽहं मृता ध्रुवम् ॥ यावन्मुञ्चति पाशात् स्वं मर्त्तुं कुन्ती स्वयं कनी । तावन्मुद्राप्रभावेण पाण्डुस्तत्रागमद्वने ॥ स्वं नाम गृहतीं तां च मत्वा पाण्डुनरेश्वरः । पाशं छित्त्वा जगादेति मा साहसपराऽभवः ॥ अह पाण्डुनृपस्ताव-कीनं रूप निरीक्ष्य च । मुद्रा-प्रभावतोऽत्रागां वरीतु ता नृपाङ्गजे ! ॥ ज्ञात्वा पाण्डुपतिश्चित्त-चिन्तितं समुपागतम् । अकारयस्तयोः सद्यो गन्धर्वोद्वाहमञ्जसा ॥ तदैव सा ऋतुस्नाता-ऽऽलिङ्गिता भोगदानतः । कुन्ती पाण्डुमहीशेन गर्भं दधे शुभोदयम् ॥ कुन्ती प्राह पतिस्त्वं मे भवेऽस्मिन् करवै तथा । यथा मे जनकस्तुभ्यं दास्यत्युद्वाह-योगतः ॥ श्रुत्वा कुन्त्या वचो हृष्टः पाण्डुर्मुद्राभियोगतः । समेत्य स्वपुरं राज्य कुरुते पालयन् प्रजाः ॥ इतः कुन्ती गृहे यान्ती गोप्यमानाऽऽमयच्छलात् । गर्भं सखीयुताऽन्येद्यु-र्नन्दनं सुषुवे सुखम् ॥ कांस्य-पेट्यां शिशुं क्षिप्त्वा ह्रिया कुन्ती सती तदा । छन्नं प्रवाहयामास स्वनद्यामालिपार्श्वतः ॥ पेटीं यान्तीं मरुन्नद्यां हस्तिनापुरसन्निधौ । सूतसारथिनाऽऽदायो-द्घाटितैत्य निजालये ॥ तन्मध्ये बालकं कर्णं भरसुतं निरीक्ष्य सः । कर्ण इत्यभिधां दत्त्वा वर्द्धयामास पुत्रवत् ॥ सूतेन पाल्यमानोऽसौ कर्णः सूतसुतः सदा । लोकेन प्रोच्यते तस्माद् वल्लभोऽभूत्तयोस्तदा ॥ इतः कुन्ती जगौ मातुः पार्श्वे रहसि संस्थिता । मया पाण्डोर्गृहीतव्यः पाणिर्नान्यस्य कस्यचित् ॥ सुभद्रयोदित पत्युः पार्श्वे कुन्तीसुतेप्सितम् । ततः कुन्तीमदात् पाण्डु-भूपायान्धकवृष्णिराट् ॥ मद्रकक्ष्माभुजः पुत्रीं मद्रकीं पाण्डुभूपतिः । परिणिन्ये लसल्लग्ने सत्स्वयंवरमण्डपे ॥ इतो गन्धारविषये शकुनेर्धरणीभुजः । गन्धारीप्रमुखा अष्टौ पुत्र्यो जाता मनोहराः ॥ शकुन्यथ महीपालो गन्धार्याद्याः सुताः समाः । सूत्सवं धृतराष्ट्राय भूपायादा-च्छुभेऽहनि ॥ देवकक्ष्मापतेः पुत्रीं नाम्ना कुमुदिनीं वराम् । परिणिन्ये लसल्लग्ने विदुरो मेदिनीपतिः ॥ धृतराष्ट्रस्य गन्धार्या पत्न्या गर्भे धृते सति । बभूवुर्दोहदा भूरि-जनसंहारकारकाः ॥ आरुह्य कुञ्जरं हन्मि विद्विषः समराङ्गणे । गुप्तौ क्षिपाम्यह लोकान् वैरं कुर्वेऽरिणा समम् ॥ युग्मम् । तस्मिन् गर्भे तु गन्धारी नानंसीद् गुरुसज्जनान् । साहङ्कारात्तृणं विश्वं विश्वं च मन्यते सदा ॥ इतः पाण्डुप्रिया कुन्ती स्वप्नेऽपश्यन्मरुद्गिरिम् । क्षीराब्धिं भास्करं धर्म्मं मूर्त्तं ददर्श सुन्दरम् ॥ गर्भप्रभावतः कुन्ती धर्म्मं सार्वो-दितं वरम् । कुर्वाणा सन्ततं दानं ददावर्थिभ्य ईप्सितम् ॥ ग्रहेपूच्चेषु भूयस्सु सुलग्ने शोभनेऽहनि ।

कुन्त्यसूत सुतं पुष्प-वृष्टिरासीत्तदादि च ॥ जन्मोत्सवं नृपः कृत्वा स्वप्ने धर्म्मावलोकनात् । धर्म्मपुत्रेति नामाऽदात् सूनोः सज्जनसाक्षिकम् ॥ भावी युधिष्ठिरो ह्येष इति व्योममरुद्गिरा । युधिष्ठिरेति नामाऽदात् पाण्डुः सुधर्मिणीसखः ॥ कुन्ती स्वप्नेऽन्यदा वायुं स्वस्तरुं फलितं पुनः । दृष्ट्वा पत्या समं हर्षं ततानातीव मानसम् ॥ कुन्ती युधिष्ठिरं पुत्र-मसूताऽन्यं मनोहरम् । जनिष्यतीति श्रुत्वाऽथ गान्धारीति व्यचिन्तयत् ॥ कुन्त्याः पुत्रोऽभवद्वर्यो द्वितीयश्चेद्भविष्यति । तदा सूनोर्न मे राज्यं भविष्यति मनागपि ॥ वहन्त्यां मयि गर्भं तु वत्सरा बहवोऽभवन् । आसन्नप्रसवा कुन्ती दृश्यते किं करिष्यति ? ॥ गान्धारी पातयन्ती तु गर्भं बहुभिरौषधैः । असूत तनयं मासैस्त्रिशता पूर्णविग्रहम् ॥ घृतमध्ये सुतं क्षिप्त्वा तं मासान् षट् प्रयत्नतः । गान्धारी वर्द्धयामास कष्टेन पेटिकास्थितम् ॥ अस्मिन् गर्भे स्थिते दुष्ट-युद्धध्यानाद्यभूद् दृढम् । अतो दुर्योधन इति नामासीत्तस्य तत्र तु ॥ कुन्ती दुर्योधनादर्वाक् त्रिभिर्यामैः सुतं वरम् । असूताऽतो नृपो जन्मो-त्सवं चक्रे पिता तदा ॥ तस्य वायुसुतेत्याह्वां पाण्डुर्भूमिपतिर्व्यधात् । क्रमात्तस्याभवन्नाम भीमो भीमाऽऽकृतिः क्षणात् ॥ एकदा जननीहस्तात् पतितो वायुनन्दनः । शैलस्य शिखरान्माता तदाऽभू दुःखिनी भृशम ॥ रुदन्ती जननी शैला-दुत्तरन्ती दृषच्चयान् । चूर्णीभूतान् बहून् दृष्ट्वा दध्यौ मे तनयो मृतः ॥ अक्षताङ्गं तदा भीमं रममाणं महीतले । आसाद्य जननी हृष्टा-ऽऽलिलिङ्ग च पुनः पुनः ॥ स्वप्ने सुरपतिं दृष्ट्वा कुन्त्यसूत सुतं पुनः । तस्य शक्रसुतेत्याह्वां ददौ राजा युधिष्ठिरः ॥ धनुर्वेदकलाः सम्यग् जज्ञौ तृतीयनन्दनः । अतो धनुर्धरेत्याह्वा जाता तस्य सुतस्य तु ॥ नकुलः सहदेवश्च मद्र्या तु जनितौ सुतौ । तनयैः पञ्चभिः पाण्डु-र्बभौ भैरिव चन्द्रमाः ॥ धृतराष्ट्रस्य पुत्राणां दोष्मतां नवतिं क्रमात् । गान्धार्यसूत ते सर्वे पुत्रा जाता शतं ततः ॥ सुतैः शतमितै रेजे धृतराष्ट्रः सुविक्रमैः । चन्द्रः शतमिषकृतारै-रिव व्योम्नि समन्ततः ॥ नासिक्यनगरेऽन्येद्युः कुन्ती नन्तुं जिनान् गता । चन्द्रप्रभप्रभोश्चैत्य-मकारयन्नवं वरम् ॥ चन्द्रप्रभार्हतो मूर्तिं कुन्ती तत्र शुभेऽहनि । व्ययन्ती विभवं भूरि-मतिष्ठिपत् प्रमोदतः ॥ दुर्योधनश्छलात् पाण्डून् वञ्चयन् खेलनैः सदा । तेषां राज्यं समीहानो रमन्ते स्म च ते समम् ॥ दुर्योधनश्छलं ज्ञात्वा भीमो भीमाकृतिर्दृढम् । धार्त्त(धृत)राष्ट्रसुतान् शत्रुवत् कुट्टयामास हेलया ॥ सुप्तं भीमं बलाद् दुर्योधनो बद्ध्वा क्षिपद् जले । प्रबुद्धस्तु स ता रज्जू-स्त्रोटयामास लीलया ॥ दुर्योधनो विषं भोज्ये क्षिप्त्वा भीमाय दत्तवान् । तत् पीयूषमभूत्तस्य भीमस्य सुकृतोदयात् ॥ यद् यद् दुर्योधनो हन्तु भीमायाऽथ ददौ रहः । तत्तद् वृथाऽभवद् भीमे ऊपरे बीजवापवद् ॥ दुर्योधनादयः पाण्डु-सुताः कर्णसमन्विताः । पित्रादेशात्कृपाचार्यो-पान्ते विद्या लळुः क्रमात् ॥ तेष्वभूतां धनुर्विद्या-दक्षौ कर्णधनञ्जयौ । दुर्योधनोऽभवद्गाढं छलछद्मकलादिविद् ॥ क्रीडता तु कुमाराणा-मनध्यायेऽन्यदाऽवटे । कन्दुको न्यपतत्ते तु न शेकुः कर्षितुं मनाग् ॥ इतस्तत्रागतो द्रोणा-चार्योऽश्वत्थामपुत्रयुग् । कुमारान् व्याकुलान् वीक्ष्य प्राहेति तान् मृदुस्वरम् ॥ भवतां किं गतं क्व वा कूपेऽस्मिन् पतितं किमु ? । प्रोचुः कन्दुकोऽस्माक-मिदानीं पतितोऽवटे ॥ द्रोणः शरैरनुस्यूत-पुङ्खैः पुङ्खस्य दानतः । कूपकण्ठस्थितो हस्ते जग्राह गेन्दुकं लघु ॥ विज्ञाय कोविदं द्रोणं धर्म्मपुत्रादिनन्दनान् । धनुर्वेदस्य शिक्षायै तस्मै पाण्ड्वादयो ददुः ॥ तेषु कर्णो धनुर्वेद-कलासु कुशलोऽजनि । ततोऽधिको धनुर्वेद-विज्ञोऽभवद् धनञ्जयः ॥ छात्रेषु तेषु सर्वेषु धनुर्विद्यादिशालिषु । विक्रमे विनये द्रोणः पार्थं स बहुमन्यते ॥ सर्वेषु प्रवरं पार्थं ज्ञात्वा द्रोणो गुरुर्जगौ । अतोऽन्यस्मै मया विद्याऽ-

धिका पार्थान् न दास्यते ॥ अन्येद्युरेकदे भिल्लो-ऽभ्येत्य द्रोणस्य सन्निधौ । याचते स्म धनुर्वेद-विद्यां सोऽपि न दत्तवान् ॥ द्रोणं मृत्स्नामयं कृत्वा संस्थाप्य द्रुतले वने । तत्र पुरः साधयन् भिल्लो विद्याविद्जनि क्षणात् ॥ एकदे गुरुभक्तः स-न्नेवं शिक्षन् कला वने । विध्यति स्म तरोर्मौलि-स्थितं पत्रं मनोमतम् ॥ धनुर्वेदविदं भिल्लं दृष्ट्वा पार्थो जगौ गुरुः । धनुर्विद्या त्वयाऽन्यस्मै किं भिल्लायाधुना गुरो ! ॥ द्रोणो जगौ न कस्मैश्चि-द्धनुर्विद्या मया ददे । अदर्शयत्ततः पार्थो भिल्लं धनुर्विदं गुरोः ॥ द्रोणः पप्रच्छ तं भिल्लं गुरोः कस्यान्तिके त्वया । धनुर्वेदकलाऽशिक्षि ततो भिल्लो जगावदः ॥ मया मृन्मामयी मूर्त्ति तव कृत्वा तदग्रतः । शिक्षिता चापविद्याऽसौ समेवा साऽधुना मम ॥ स्वप्रतिज्ञामिदाभीत्या द्रोणोऽङ्गुष्ठं तमर्थयन् । गुरुभक्त्या ददौ भिल्लोऽङ्गुष्ठं छित्त्वा गुरोस्तदा ॥ यतः—" जितेन्द्रियत्व विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ १ ॥ " केनाञ्जितानि नयनानि मृगाङ्गनाना, को वा करोति रुचिराङ्गरुहान् मयूरान् । कश्चोत्पलेषु दलसञ्चयमातनोति, को वा करोति विनय कुलजेषु पुंसु ॥ विणए सिस्सपरिक्खा सुहडपरिक्खा य होइ संगामे । वसणे मित्तपरिक्खा दाणपरिक्खा य दुक्काले ॥ गुरुभक्तेर्विनाऽङ्गुष्ठ प्रक्षिपन् पूर्ववच्छरान् । भिल्लोऽजनि धनुर्वेद-कुशलो विमलाशयः ॥ द्रोणोऽथ शिक्षयन् पार्थं राधावेधकलां किल । गदायुद्धं च कम्मीर-रिपुं दुर्योधन तथा ॥ अस्त्रक्षेपकलास्वग्रौ सहदेव-युधिष्ठिरौ । नकुलः शकुलविद्याः शिक्षन्तो गुरुसन्निधौ ॥ द्रोणान्तयाऽन्यदा धर्म्म-पुत्रादीन् निखिलान् सुतान् । आकार्य प्राह गाङ्गेयो यूयं दर्शयथ कलाः ॥ दर्शयत्सु कलाऽभ्यासं तेषु भूपतिसूनुषु । भीमदुर्योधनौ क्रुद्धौ मिथो बाढमयुद्ध्यताम् ॥ भुजास्फोटपरो भीमो-ऽभेपयन् मनुजान् बहून् । गदोच्छालनिका वर्या कलां समदर्शयत्तदा ॥ गाण्डीव कार्मुक पार्थ-स्ताडयन् ध्वनिना तदा । संसदो निखिलाश्चक्रे चित्रालिखितचित्रवत् ॥ ततः पृथक् पृथक् सर्वे दुर्योधनानुजास्तदा । स्वाः स्वाः कलाः कला गङ्गापुत्रायाऽदर्शयस्तदा ॥ तदा पाण्डुमहीपाला-द्यो नत्वा गुरुं मुदा । पप्रच्छुरर्जुनस्याभू-द्राधावेधकला कथम् ॥ द्रोणो जगावयं पार्थो विनीतो भाग्यवान् पुनः । विद्यतेऽतोऽस्य सञ्जाता राधावेधकला वरा ॥ यतः—" विनयः राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् । अनृत द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ १ ॥ जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ २ ॥ केनाञ्जितानि नयनानि मृगाङ्गनाना, को वा करोति रुचिराङ्गरुहान्-मयूरान् । कश्चोत्पलेषु दलसञ्चयमातनोति, को वा करोति विनय कुलजेषु पुंसु ॥३॥ विणए सिस्सपरिक्खा सुहडपरिक्खा य होइ संगामे । वसणे मित्तपरिक्खा दाणपरिक्खा य दुक्काले ॥ ४ ॥ " तदा कर्णोऽपि कल्याण-कला प्रदर्शयन् स्वयम् । मोदमुत्पादयामास सर्वेषां तत्र संसदि ॥ सर्वेऽपि पार्थिवास्तेषां कला वीक्ष्य पृथक् पृथग् । धूनयन्तः शिरांसीव प्रशशंसुर्यथोचितम् ॥ राधावेधकला पार्थो दर्शयंस्तत्र संसदि । रञ्जयामास गाङ्गेय-प्रमुखान् मेदिनीपतीन् ॥ भ्रूसंज्ञया तदा नुन्नो दुर्योधनेन सूतसूः । उदस्थात् समरं कर्तुं पार्थेन सह निर्दयम् ॥ ध्मानयन् गगने ध्वानै-र्भुजास्फोटं सृजन् भृशम् । अदर्शयत् कलां स्वीयां कर्णस्तेषां महीभुजाम् ॥ कर्णस्य तादृशी वर्या धनुर्वेदकला किल । दृष्ट्वा दुर्योधनश्चेदि-देशः राज्यसदापयत् ॥ सूतपुत्राय कर्णाय दुर्योधनेन भूभुजा । दत्ता चम्पां निरीक्ष्याऽवक् पार्थो दुर्योधनं प्रति ॥ नीचाय सुभटाय त्व-मदाच्चम्पापुरीं कथम् । ततः कर्णोऽभवद्द्वेषी पार्थे वासवविक्रमे ॥ पाण्डुपुत्रेषु सर्वेषु प्रजाः प्रीतिजुषोऽभवन् । धृतराष्ट्रसुतेष्वासन् द्वेषयुक्ताः कुकर्मतः ॥ पाण्डुर्विभज्य

विषयान् यथायोग ददुस्तदा । प्रददौ धार्तराष्ट्रेभ्यः कुशस्थलपुरं परम् ॥ दुर्योधनो बहून् ग्रामान् प्राप्य पाण्डुनृपान्तिकात् । न प्राप मानसे तृप्ति यत आशा दुरुत्तरा ॥ अग्निर्विप्रो यमो राजा समुद्रमुदरं गृहम् । सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः ॥ तृष्णाखानिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ अन्येद्युः पाण्डुभूपस्य सभास्थस्यैकको नरः । अभ्येत्य प्राह, काम्पील्य-पुरं वयं विभासते ॥ तत्र द्रुपदभूपस्य चूलन्यजनि वल्लभा । धृष्टद्युम्नोऽङ्गजश्चासीद् द्रौपदी तनया पुन ॥ तस्याः स्वयंवरे सर्वे दशार्हा यादवादयः । दमदन्तादिभूपाश्च समेष्यन्ति वरे दिने ॥ पाण्डो ! त्वमपि पुत्रैः स्वैः पञ्चभिः सह सत्वरम् । अलङ्कुरुष्व काम्पील्य-पुर स्वःपुरवद्धरिः ॥ ततः पाण्डुनृपः पुत्रैः पञ्चभिः सह सत्वरम् । गतो द्रुपदभूपेन तत्र सन्मानितो मुदा ॥ विवाहमण्डपे तस्मिन् मञ्चोन्मञ्चेषु शालिषु । दशार्हादिषु भूपेषू-पविष्टेषु यथाक्रमम् ॥ द्रौपदी वाससी वर्ये परिधाय दिनोदये । सुखासनसमासीना ययौ विवाहमण्डपे ॥ इतो द्रुपदभूमीशा देशाद्वेत्रधरो जगौ । रावास्तम्भस्य मौल्यग्रे चक्रं भ्रमति सुन्दरम् ॥ वामदक्षिणपक्षेऽस्य द्वादशारी भ्रमत्यलम् । चक्राग्रे विद्यते राधा-नाम्नी सुन्दरपुत्रिका ॥ सर्पिर्भृतकटाहान्त-स्तस्या वाम विलोचनम् । प्रतिविम्बितमात्रं सत् स्तम्भस्याधः स्थितो नरः ॥ ऊर्ध्ववाहुरधो वक्त्रो यो व्यधिष्यति लाघवात् । वरिष्यति वरं तं च द्रौपदीयं नृपाङ्गजा ॥ युग्मम् ॥ ततो यो यो नृपश्चापं धृत्वाऽमुञ्चत् शरं दृढम् । तस्य तस्य शरो जातः शतखण्डोऽश्मखण्डवत् ॥ ततः पश्यत्सु भूपेषु भूरिषु स्मेरितेक्षणम् । शास्त्रोक्तविधिना राधा-वेधं ससाध फाल्गुनः ॥ तदा जयजयारावं खे कुर्वत्सु सुपर्वसु । न्यपतत् सुमनोवृष्टिः पार्थस्य मस्तकेऽम्बरात् ॥ यतः—" लक्ष्मीर्विवेकेन मतिः श्रुतेन, शक्तिः शमेन प्रभुता नयेन । श्रद्धा च धर्म्मेण समं समेत्य, धन्यस्य पुंसः सफलीभवन्ति ॥१॥ " यावद् द्रुपदभूः पार्थे कण्ठेऽक्षैप्सीद्वरस्रजम् । तावत सा वरस्रग् जाता पञ्चरूपधरा वरा ॥ भ्रातॄणामपि पञ्चानां कण्ठे स्रक् साऽपतद् द्रुतम् । द्रौपद्याः पतयः पञ्चा-ऽमी स्युः वाण्यभवच्च खे ॥ यदा तु द्रौपदी पार्थ-कण्ठेऽक्षैप्सीद्वरस्रजम् । तदा पतति पञ्चानां भ्रातॄणा युगपद् गले ॥ पाण्डुदशार्हभूपाद्याः प्रोचुरेवं मिथस्तदा । किमस्याः पञ्च पतयो-ऽभूवन् कोऽप्यत्र पृच्छ्यते ॥ तदाऽकस्मान्नभोमार्गा-च्चारणश्रमणं मुनिम् । आगतं वीक्ष्य कृष्णाद्या-स्तं नन्तुमगमन्मुदा ॥ तदा स श्रमणः प्राह विना धर्म्मं जिनोदितम् । जा(जा यन्ते सुखिनो जीवा इहाऽमुत्र कदापि न ॥ दुःखं स्त्रीकुक्षिमध्ये प्रथममिहभवे गर्भवासे नराणां, वालत्वे चापि दुःखं मललुलितवपुःस्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्य-सारः, संसारे रे मनुष्या ! वदत यदि सुख स्वल्पमप्यस्ति किञ्चित् ॥ गतसारेऽत्र ससारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे वालाना स्तन्यविभ्रमः ॥ निर्विवेकतया वाल्यं कामोन्मादेन यौवनम् । वृद्धत्व विकलत्वेन सदा सोपद्रवं नृणाम् ॥ प्रातर्मूत्रपुरोषाभ्यां मध्याह्ने क्षुत्पिपासया । तृष्णा कामेन वाध्यन्ते प्राणिनो निशि निद्रया ॥ " कम्मह वारइं ज्झडपडउ धम्मह मंदीदेह । आपण सरसी चोरडी तइं किम सीखी एह ॥१॥ जे जिणधम्मह वाहरा ते जाणे जे वारि । ऊगी ऊगी खय गया ससारी संसारि ॥ २ ॥ " श्रुत्वा धर्मं ऋषिं नत्वा पाण्डुकृष्णादयो नृपाः । पप्रच्छुर्द्रौपदी ह्येषा पञ्चकान्ताऽभव-त्कथम् ? ॥ मुनिराचष्ट चम्पायां श्रेष्ठी सागरदत्तकः । अभूत्तस्याः सुभद्राभू-र्नन्दिनी सुकुमारिका ॥ जिन-दत्तस्य पुत्रेण सागरेण तु यौवने । परिणीता सती रात्रौ तल्पं पत्याश्रयत् समम् ॥ ज्वलदङ्गारतुल्याङ्ग-स्पर्शात्तस्याः स सागरः । दह्यमानतनुर्मुक्त्वा तां नष्ट्वा दूरतो ययौ ॥ निद्राच्छेदे गतं कान्तं ज्ञात्वा

रोदनतत्पराम् । पुत्रीं पप्रच्छ जननी किं त्वया रुद्यते सुते ! ॥ सुताऽवग् मा पतिर्मुक्त्वा गतो मातः ! क्वचिद् ध्रुवम् । माताऽवग् मा रुद' पुत्रि ! पतिस्तेऽत्र समेष्यति ॥ विलोकितो यदा नैव लब्धः स सागरः क्वचित् । तदाऽन्यस्मै वरायाऽथ सा ददे जनकेन हि ॥ सोऽपि मुक्त्वा प्रिया कान्तः पूर्वकान्तपदाशु च । ययौ दूरेऽथ साऽन्यस्मै वराय प्रददे रहः ॥ सोऽपि ज्वलदङ्गार-तुल्याङ्गस्पर्शतस्तदा । रात्रौ विमुच्य ता कन्या दूरतोऽनशदञ्जसा ॥ अनाज्यं भोज्यमप्राज्यं विप्रयोगश्च प्रियैः सह । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥ क्रमात्पुन्यास्तनुस्पर्शं ज्वलदङ्गारमोदरम् । मत्वा पिता जगौ धर्म्मं ध्यानं कुरु स्थिताऽत्र तु ॥ वैराग्यादन्यदा गङ्गा-मयतिन्यास्तु सन्निधौ । तयाऽथ संयमो लातस्तीव्रं च क्रियते तपः ॥ एकद्वित्रिचतुःपञ्च-प्रभृतीन् क्षमणान् सदा । कुर्वाणाऽऽतापना ग्रीष्मे गृहात्युपवने मुदा ॥ सुखासनस्थिता वेश्या देवदत्ता वराकृतिः । पञ्चभिः पुरुषैः सेव्यमाना तत्र समागमन् ॥ तस्या एव तनूपास्तिं पादप्रक्षालनादिभिः । पञ्चभिः पुरुषैस्तैश्च क्रियमाणा निरन्तरम् ॥ निरीक्ष्य यतिनी दध्यावहमस्मिन् भवेऽभवम् । नरद्वेष्या त्वसौ पञ्च-नृभोगभाक् समस्ति हि ॥ अतो मेऽग्रे भवे पञ्च पुरुषा मदनोपमाः । भवन्तु पतयस्तीव्र-तपःप्रभावतः खलु ॥ सा तु तीव्रं तपः कृत्वा प्रान्ते संलेखना पुनः । स्वचिन्तितमनालोच्य सौधर्मेशप्रियाऽभवत् ॥ स्वर्गाच्च्युता पुराऽऽचीर्ण-तपःप्रभावतोऽद्य सा । नरेन्द्रनन्दिनी भूत्वा पञ्चानामभवत् प्रिया ॥ अनया प्राग्भवे चक्रे तपसो यन्निदानकम् । अस्यास्तस्योदयादासन् पतयः पञ्च साम्प्रतम् ॥ सत्येषा द्रौपदी-पञ्च कान्तेषु सत्सु विद्यते । एवं व्योम्न्यभवद्दिव्यावाण्यतो मुमुदे पिता ॥ ततः सदुत्सव पञ्च-पाण्डवैर्द्रौपदी कनी । परिणीता यदा माता-पितृभिर्मुदिता तदा ॥ सदन्नपानवसन-दानेन पाण्डुभूपतिः । सपुत्रो द्रुपदक्षोणी-पतिना पूजितस्तदा ॥ अपरेऽपि महीपाला द्रुपदक्ष्माभुजा तदा । वर्यवस्त्रादिदानेन पूजिताः स्वपुरं ययौ ॥ पाण्डुभूपः सुतैः सार्द्धं द्रुपदेन विसर्जितः । हस्तिनागपुरीमगा-ल्लसदुत्सवपूर्वकम् ॥ नारदेन सम पाण्डु-र्व्यवस्थामकरोदिति । धर्म्मपुत्रादिभिः स्थेय वारकाद् द्रौपदीगृहे ॥ यतः—" वृकोदराद्याः सहसा मनस्विनः सहोदरास्तं परिवव्रिरे नृपम् । धुहस्तिनो हस्तमिवासुहृद्व्रण-छिदानिदानं रणपारदादरात् ॥ १ ॥ " द्रौपद्याः सदने सत्ये-कस्मिन् पत्यौ समेति यः । तेन द्वादशवर्षाणि कर्त्तव्यं तीर्थसेवनम् ॥ ऋषिपार्श्वे तदाऽनेकैः कृष्ण-धर्म्मसुतादिभिः । धर्म्मो जीवदयामूलो जगृहे शिवशर्मदः ॥ अहिंसासम्भवो धर्म्मः स हिंसातः कथं भवेत् ? । न तोयजानि पद्मानि जायन्ते जातवेदसि ॥ सर्वाणि भूतानि सुखे रतानि सर्वाणि दुःखस्य समुद्विजन्ति । तस्मात् सुखार्थी सुखमेव दत्ते सुखप्रदाता लभते सुखानि ॥ द्रौपद्याः सदने धर्म्म-सुते तिष्ठति चैकदा । वालिते गोधने चौरैर्जाते वंबारवे सति ॥ अजानन्नर्जुनश्चाप-कृते प्रविश्य तत्र तु । लात्वा धनुर्निहत्यारीन् वालयामास गा वनात् ॥ युग्मम् ॥ पुरोद्याने स्थितः पार्थो यदा मैति पुरान्तरे । तदा धर्म्मसुतो भ्रातृ-युतोऽभ्येत्य जगाविति ॥ भो पार्थ ! गच्छ पुर्यन्त-पालय पृथिवीं नयात् । किमर्थं भवतोद्याने स्थीयतेऽथ स ऊचिवान् ॥ यत्ते सेन्द्र्या गृहे धर्म्मपुत्र स्थाणौ धनुःकृते । प्रविष्टोऽहमतः स्थेय द्वादशाब्दीं मया वने ॥ धर्मपुत्रो जगौ भ्रात रेव किं प्रोच्यते त्वया । मम चित्ते मनाग् नास्ति द्वेषस्त्वयि धनञ्जय ! ॥ धनञ्जयो जगौ भङ्गः प्रतिज्ञाया अभून्मम । अतो मया वने स्थेयं द्वादशाब्दानि धर्म्मसु ॥ चलति कुलाचलचक्रं मर्यादामधिपतन्ति जलनिधयः । प्रतिपन्नममलमनसा न चलति० ॥ " अलसायंतेणवि सज्जणेण जे अक्खरा समुल्लविया । ते पत्थरटंकुक्कीरियव्व न हु अन्नहा हुंति ॥ १ ॥ " इत्युक्त्या वारितः पार्थ-भ्रातृन्

सहोदरैस्तदा । चचाल तीर्थसेवार्थे स्वप्रतिज्ञाऽवनाय च ॥ नमस्यन् फाल्गुनो देवान् तीर्थेषु भक्तिपूर्वकम् । वैताढ्यपर्वतेऽनंसीन् नाभेयादिजिनेश्वरान् ॥ इतस्तत्राऽऽगतो व्योम-धरः कश्चित्सदीनवाग् । पृष्टो धनञ्जयेनाऽऽह स्वदुःखमिति तत्पुरः ॥ वैताढ्यस्योत्तरश्रेण्या मणिचूडाभिधे पुरे । मणिचूडाह्वयो व्योम-गामी बल्यभवद् वरः ॥ चन्द्रचूडपुरादेत्य हेमाङ्गदखगो रिपुः । मणिचूड निजाद्राज्या-त्त्याजयामास वेगतः ॥ उपविष्टः स विद्याभृत् तस्मिन् राज्ये वलोत्कटः । स चाहं भूतले भ्राम्य न्त्राऽऽगा नगरे किल ॥ श्रुत्वैतत्फाल्गुनस्तेन खगेनाऽमा विमानगः । जित्वा हेमाङ्गद तत्रा-स्थापयत्तं खग तदा ॥ क्रमाद्धनञ्जयो भूरि-विद्याधरनिषेवितः । वैताढ्ये शाश्वतान् सार्वान् ननामाऽनघमानसः ॥ महीपतिनभोगाना-मुपकारपरायणः । कुर्वन् धनञ्जयोऽनंसीद् जिनान् श्रीरैवताचले ॥ नत्वा तीर्थङ्करानेका नारीं दृष्ट्वा धनञ्जयः । अप्राक्षीत् त्वं कुतोऽत्राऽऽगाः कस्याऽसि प्रेयसी वद ? ॥ स्त्री प्राह श्रीपुरे राज्ञः पृथोर्दुर्गन्धविग्रहाम् । दुर्गन्धाह्वा सुतां सोमदेवोऽथ परिणीतवान् ॥ तादृग्दौर्भाग्यतो माता-पित्रोर्द्वेष्याऽभव त्वहम् । सर्वत्र मान्यते लोकः पुण्यतो न हि पापतः ॥ ततोऽहं निर्गता तीर्थ-सेवायै दुस्तमश्छिदे । अभ्रमं भूरितीर्थेषु दुर्गन्धोऽगान्न स(त्व)ङ्गतः ॥ रज्जुग्रहावटाम्भोधि-वह्न्यादिभिरहं पुनः । मर्तुकामा वने यान्त्य-पश्यमेकं मुनिं वरम् ॥ नतोऽपि स मुनिर्भक्त्या यावज्जल्पति नो मनाग् । तावन्मयोदित कस्मा-न्मुने ! मा न विलोकय ॥ मुनिः प्राहाहकं ध्यानं कर्तुकामोऽस्मि साम्प्रतम् । यतो ध्यानाच्छुभादेव जायन्ते शिवसम्पदः ॥ ममाऽधुना गुरुर्धर्म-घोषोऽस्त्यत्र वने वरः । तेन तत्र व्रजित्वा त्वं नम भक्त्या गुरूत्तमम् ॥ ततोऽहं कुलपतेस्तस्याश्रयतः प्रथमं जिनम् । पदौ नत्वाऽहमपृच्छं रोगोऽय मे कुतोऽभवत् ॥ मा त्यक्त्वाऽऽदौ पतिर्नष्टो द्वेष्याऽभूवं कथं पितुः । निर्गताऽहमतः पूर्व-कर्म्मछेदाय दूरतः ॥ अद्य त्वं जगदाधार कृपाकर जगद्धित । मिलितोऽसि ममेदानीं तेन भाग्यं महत्पुनः ॥ प्राग्भवोपार्जितात्पापा-न्मोचयित्वा] जगद्गुरो ! ॥ तथा जल्प यथा रोगो याति मे देहतोऽचिरात् ॥ मुनिः प्राह न मे ज्ञानं विद्यतेऽत्र निरत्ययम् । येन विज्ञायते नृणा प्राग्भवादिशुभाशुभे ॥ तथापि याहि सिद्धाद्रि-शृङ्गे रैवतनामनि । गजेन्द्राह्वं वरं कुण्ड तत्रास्तीन्द्रविनिर्मितम् ॥ स्नान तत्र विधाय त्वं पूजय प्रथम जिनम् । ततो यास्यति दुर्गन्धः देहतस्तेऽखिलोऽचिरात् ॥ श्रुत्वेत्यहं मुनिं नत्वा स्मरन्ती सिद्धपर्वतम् । दिनैः कतिपयैरत्रा-गम रैवतकाचले ॥ अर्हच्चैत्येऽहमलभं-माना प्रवेशमात्मनः । गजेन्द्रकुण्डतो वारि लात्वा स्नान व्यधामहम् ॥ ध्यायन्त्यह प्रभुं कुण्डे स्नान तथा तथा व्यधाम् । यथा मे देहतो रोगो दुर्गन्धो विलय ययौ ॥ न ज्ञायते मया पूर्व-भवे किं दुःकृतं कृतम् । विना केवलिन पार्थ ! प्रक्ष्यतेऽतः स साम्प्रतम् ॥ एवं तस्यां स्वसम्बन्ध कथयन्त्यां सुविस्तरात् । तत्रागात् केवली ताभ्या ववन्दे भावतः पुनः ॥ दुर्गन्धाऽवग् मया पापं किं कृत प्राग्भवे मुने ! । येन मेऽजनि दुर्गन्धो देहे प्राहाऽथ केवली ॥ पद्मपुर्यां मुकुन्दस्य द्विजस्य पद्मिनी प्रिया । स्वरूपगर्वतो विश्वं तृणवन्मन्यते च सा ॥ एकदा त्वद्गृहे श्वेता-म्बरा भिक्षाकृतेऽगमन् । भिक्षां दत्त्वा त्वयाऽहासि मोटयन्त्या स्वनासिकाम् ॥ अमी दुर्गन्धमलिना-म्बराः स्नानविवर्जिताः । नासिका-नेत्रयोः कुर्यु-र्दुर्गन्धत्वं ममाधुना ॥ तेनैव कर्म्मणा मृत्वा नरके प्रथमे गता । ततश्चाण्डालिका जाता ततश्च ग्रामशूकरा ॥ ततः शून्यभवत् पूति-कर्णा दुर्गन्धविग्रहा । ततो मृत्वा गता श्वभ्रे द्वितीये साधुहीलनात् (निन्दनात्) ॥ एवं भ्रान्त्वा भवान् भूरीन् विघ्नता शेषकर्म्मणा । दुर्गन्धविग्रहा भूप-पत्न्यासीस्त्वमिहाऽबले ! ॥ निन्द्यन्ते न जनाः कैश्चिज्जनैः स्वहितमिच्छुभिः । साधवस्तु विशेषेण हीलिता स्युरशर्मणे ॥ यतः—“ महाव्रतधरा ये तु ये च

मिथ्यात्वनाशकाः । येऽर्हन्मतनभस्सूर्या निर्ग्रन्थास्ते गुरवः कथम् ? ॥ १ ॥ वन्दिज्जमाणा न समुक्कसंति हीलिज्जमाणा न समुज्जलंति । दंतेण चित्तेण चरंति धीरा मुणी समुग्घाइअरागदोसा ॥ २ ॥ तो समणो जइ सुमणो भावेण य जइ न होइ पावमणो । सयणे अ जणे अ समो समो अ माणावमाणेसु ॥३॥ नत्थि अ से कोइ वेसो पिओ व सव्वेसु चेव जीवेसु । एएण होइ समणो एसो अन्नो वि पज्जाओ ॥४॥" अस्य तीर्थस्य सेवा त्वं तथा कुरु निरन्तरम् । यथा स्यात्ते क्षयोऽशेष-कर्मणां शिवशर्म्मदः ॥ सुर्गन्धोपि ततस्तीर्थ-सेवा चक्रे तथाऽऽदरात् । तथा सोकभवात्तस्या सुरभिश्रीर्जायते तथा ॥ अर्जुनोऽपि गुरुं नत्वा धन्यंमन्यः सुवासनः । मणिचूडयुतस्तीर्थे तत्रास्थाद्वासरत्रयम् ॥ ततोऽर्जुनो ययौ द्वार-वत्यां शोभन-वासरे । सुभद्रां कृष्णभगिनीं परिणीन्ये समदुत्सवम् ॥ यतः—" सतां पथा प्रवृत्तस्य तेजोवृद्धी रवेरिव । यदृच्छयाऽतु वृत्तस्य रूपनाशोऽस्ति वायुवत् ॥ १ ॥ " अथापरेष्वपि पुरेषु तीर्थेषु तीर्थनायकान् । नमन् द्वादश वर्षाणि पूर्णीचक्रे धनञ्जयः ॥ पूर्णीकृत्य प्रतिज्ञां तां पार्थो भूरिसमान्वितः । आरूढाव्यनभो भूमि-विमानैः स्वपुरेऽगमत् ॥ सवधूकं सुतं पार्थ-मालिङ्ग्य पाण्डुभूपतिः । आनिन्ये मन्दिरे स्वीये प्रवेशोत्स-वपूर्वकम् ॥ कस्यचिद्दनुजाऽजामिं प्रभावतीं निजां तदा । हृता विद्याभृता ज्ञात्वा मणिचूडोऽभवत्स्वभूत् ॥ तदानीं मणिचूडेन समं पार्थो नभोऽध्वना । गत्वा जित्वा रिपु पक्षान् निन्ये प्रभावतीं रयात् ॥ पाण्डुर्युधिष्ठिरं राज्ये योग्यं ज्ञात्वा क्रमादथ । स्वपट्टेऽस्थापयत्पुत्रा-नन्यान् युवपदे पुनः ॥ चत्वारः सोदरा भीम-मुख्या भ्रातृनिदेशतः । विद्विषो साहयामासू राज्यं भ्रातुः सुभक्तितः ॥ भ्रातॄणामपि पञ्चानां पाञ्चालीगर्भसम्भवाः । अभूवन् बलिनः पञ्च पञ्चास्या इव नन्दनाः ॥ आखण्डलसभातुल्यां सभां विद्यावलान्नराम् । मणि-चूडो व्यधात्तत्र प्रीत्या पार्थस्य तत्क्षणात् ॥ तत्र धर्म्मसुतो राजा चतुर्भिः सोदरैः समम् । उपविष्टो विराजेत वासवस्त्रिदशैरिव ॥ तत्र धर्म्माङ्गजः शान्ति-नाथस्य बहुरैव्ययात् । प्रासादं कारयामास जाम्बूनदमयं वरम् ॥ कल्याणकत्रयं यत्र श्रीशान्तेरर्हतोऽभवत् । तत्तीर्थं शिवदं नृणां हस्तिनागाभिधं पुरम् ॥ सभायां प्रविशंस्तस्या दुर्योधनमहीपतिः । अजलेऽपि जलभ्रान्त्या प्रोच्चैश्चक्रे वर पदौ ॥ क्वचित्तेजो-भ्रमाद्गच्छन् भित्तावास्फलितो दृढम् । दुर्योधनोऽथ भीमेन हसितोऽतीव लज्जितः ॥ अन्तः क्रुद्धो बहिः शीत-स्वभावो धार्त्त धृत राष्ट्रजः । दुर्योधनो जगौ मृद्व्या वाण्या पाण्डुसुतान् प्रति ॥ यत —" मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं कर्त्तरीतुल्यं त्रिविधं धूर्त्तलक्षणम् ॥ दानशोण्डायिते धर्म्म-पुत्रेऽ-र्थिभ्यो निरन्तरम् । दुर्योधनोऽतिदूनोऽभू-त्तस्य श्रुत्वा यशोभरम् ॥ शान्तिनाथप्रतिष्ठाया उत्सवे धर्म्म-सूनुना । सन्मानितोऽपि बह्वायै-र्दुर्योधनोऽभवत् सरुड ॥ यतः—" वृश्चिकानां भुजङ्गानां दुर्जनानां च वेधसा ॥ विभज्य निहितं न्यस्तं विषं पुच्छे मुखे हृदि ॥१॥ दध्यौ दुर्योधनः पाण्डु-पुत्रा एते बलोत्कटाः । आबाल्यादपि ते तु सर्वे) मया प्रेष्या यमालयम् ॥ रामकृष्णबलेनैते गर्वं तन्वन्ति पाण्डवाः । दर्शयिष्याम्यहं तस्य फलं राज्यापहारतः ॥ विचिन्त्येति पुरीमेत्या-चीकरद् रुचिरां सभाम् । प्रापाऽक्ष जैत्रकं देवी-माराध्य धार्त(धृत)राष्ट्रजः ॥ दुर्योधनः सभां द्रष्टुं सेवकान् प्रेष्य पाण्डवान् । अकारयंस्ततस्तेऽपि सभां वीक्ष्य मुदं व्यधुः ॥ यतः—" यः परप्रीतिमावातुं भस्सतामपि गच्छति । विवेकमानिना पश्य धात्रा सोऽप्यगुरुः कृतः ॥१॥ पिबन्ति नद्यः स्वयमेव नाम्बु स्वदन्ति न स्वादुफलानि वृक्षाः । पयोमुचां किं क्वचिदस्ति शस्यं परोप-कारायसतां विभूतिः ॥२॥ " दुर्योधनो जगौ द्यूत-क्रीडाऽऽवाभ्यां विधीयते । पाण्डवा जगदुर्द्यूत-क्रीडाऽ-त्रैव विधीयताम् ॥ राज्यं हारयते यस्तु स एव कानने रहः । तिष्ठति द्वादशाब्दानि तस्य राज्यं ततः

पुनः ॥ यद्येकशो वने तिष्ठन् ज्ञास्यते वैरिणा क्वचित् । स एव द्वादशाब्दानि तिष्ठेत् स्वभ्रातृसंयुतः ॥ दुर्योधनः प्रलोभ्येति सभायां धर्म्मनन्दनम् । द्यूतक्रीडाकृतेऽन्वैषी–च्छलछद्मपरायणः ॥ ततो धर्म्मसुतो द्यूतं दीव्यन् कौरवसूनुना । आदौ सभां पणीचक्रे जेतुकामः सुयोधनम् ॥ दुर्योधनस्तदा धर्म्म–नन्दनेन समं छलात् । आदौ सभामजैषीच्च ततस्तार्क्ष्यांस्ततो गजान् ॥ जयाशया तदा धर्म्म–पुत्रोऽयं कृतवान् पणम् । ततः कोशपुरग्रामा–दीनि हारयति स्म सः ॥ द्यूतं सर्वापदां धाम द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन कुलमालिन्य द्यूताय श्लाघ्यतेऽधमः ॥ "करघट्टा नह पङ्गुरा सज्जन दुज्जण हूअ । सूनां देउल सेवीइ तुज्झ पसाइ जूअ ।" ॥ राज्यादिकेऽखिले धर्म्म–पुत्रेण हारिते सति । पणीकृता च पाञ्चाली हारिता सा मृगेक्षणा ॥ नश्यन्ती द्रौपदी दुष्ट-बुद्धया दुर्योधनेन तु । आनायिता सभामध्ये गाङ्गेयादौ प्रपश्यति ॥ दुर्योधनेन पाञ्चाल्याः शाटी सेवकपार्श्वतः । अपाचक्रे यदा नव्या तदाऽऽगादपरा पुनः ॥ एवं दुर्योधनस्तस्याः शाटीमेकं शतं क्रमात् । कर्षयामास शीलेन नव्या नव्या तदाऽगमत् ॥ यतः—"शीलं नाम कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपाति चित्तमनघं शीलं सुगत्यावहम् । शीलं दुर्गतिनाशनं सुविपुलं शीलं यशःपावनं, शीलं निर्वृतिहेतुरेव परमं शीलं तु कल्पद्रुमः ॥ १ ॥" हन्तुं दुर्योधनं भीमो गदया यावदुत्थितः । तावद्धर्म्मतनुजेन निषिद्धोऽस्थान्निजे पदे ॥ दुर्योधनो जगौ मुञ्चे तदाऽहं द्रौपदीमिमाम् । यदा यूयं वनेऽस्थास्त वर्षाणि द्वादशाचिरात् ॥ एकं वर्षं च कान्तारे रहसि स्थेयमेव तु । ततस्ते पाण्डवाः स्वीय-प्रतिज्ञा कर्तुमुद्यताः ॥ पश्यत्सु लोकगाङ्गेय–मुखेषु भूरिषु स्फुटम् । भीमोऽवग् धार्त्तराष्ट्रेन यच्चक्रेऽथ वरं न तत् ॥ दुर्योधनं प्रति प्राह गङ्गानन्दन उच्चकैः । द्रौपदी भवताऽमुष्याऽधुना विगोपिता खलु ॥ उत्तिष्ठन्तो निहन्तुं त्वां भीमाद्याः सोदराः समे । वार्यन्ते धर्म्मपुत्रेण तेन तिष्ठन्ति ते पुनः ॥ गाङ्गेय–पाण्डु–प्रभृतीन् स्वजनान् जनता अपि । मुत्कलाप्याऽचलद्धर्म्म-पुत्रः सबान्धवो वने ॥ गत्वा द्वारवतीपुर्यां मुत्कलाप्य स्वसोदरात् । कौन्ती च द्रौपदी सार्द्धं चलितु चेच्छतो हि ते ॥ ततः कुन्ती च पाञ्चाली वार्यमाणे अपि स्फुटम् । चेलतुर्वने वासाय पुत्रकान्तसमन्विते ॥ लोका जगुस्तदैवं च युधिष्ठिरस्य भूपतेः । सत्यप्रतिज्ञता वज्र–रेखावद् दृश्यतेऽधुना ॥ यतः—"सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः । सकृत्कन्या प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥ १ ॥" पाण्डवानां वने यातां मिलित्वा हरिरूचिवान् । स्वपूर्यां यूयमायात दास्यते स्थानमेव च ॥ एष दुर्योधनः कूट-कपटानां निकेतनम् । करिष्यति छलं हन्तुं युष्माकं वसतां वने ॥ यतः—"एष दुर्योधनो राजा मधुपिङ्गललोचनः । न केवलं कुलस्यान्तं क्षत्रियान्तं करिष्यति ॥१॥" षष्टिर्वामनके दोषा अशीतिर्मधुपिङ्गले । शतं टुण्टमुण्टे च काणे अन्तो न विद्यते ॥ पाण्डवा प्रोचुरस्माकं प्रतिज्ञामवतां निजाम् । भूयान्मृत्युरऽथ श्रीर्वा दारिद्र्यं वा शिवेन्दिरा ॥ कृष्णोऽवक् चलतेदानीं हस्तिनागपुरे वरे । शत्रून् हत्वा ददे राज्यं युष्मभ्यं पाण्डवा ! द्रुतम् ॥ पाण्डवैरूचिरे नीत्वा त्रयोदश समा वने । हनिष्यामो वयं शत्रून् युक्ताः सहायिना त्वया ॥ इत्युक्ते पाण्डवैः कृष्णो विसृष्टः स्नेहपूर्वकम् । सुभद्रां भगिनीं नीत्वा स्वपुरीं समुपागमत् ॥ पाण्डवानां वने यातां दुर्योधनपुरोहितः । एत्येति पाण्डवान् प्राह लसद्विनयपूर्वकम् ॥ मन्मुखाद् धृतराष्ट्राङ्ग–जन्मनेति निवेदितम् । धर्म्मसूनोर्मया मौढ्या–दवज्ञा विहिता खलु ॥ ज्येष्ठो भ्राता तु लोकानां मान्य एवास्ति सर्वतः । मया स एव तु भ्राता वञ्चितो दुष्टबुद्धिना ॥ कृत्वा मयि कृपागार–परेण भवता द्रुतम् । इन्द्रप्रस्थपुरे राज्ये कर्त्तव्यं रक्षता प्रजाः ॥ श्रुत्वैतत्सरलस्वान्तो धर्म्मसूनुः सुधर्म्मधी । दुर्योधनोदितं

सद्यः प्रपेदे बान्धवैः समम् ॥ ज्ञात्वेतो विदुरो मूढ-चेता दुष्टं छल रहः । दुर्योधनकृतं पाण्डुपुत्रेभ्योऽज्ञापयत्तदा ॥ मा विश्वस्व रिपोस्तस्य दुर्योधनस्य कुत्रचित् । इन्द्रप्रस्थपुरीदानाद् भक्तिमद्वचनश्रुतेः ॥ वेश्याक्षानृपतिश्चौर-नीरमार्जारमर्कटाः । जातवेदा कलादाश्च न विश्वस्या इमे कचित् ॥ शकटं पञ्च हस्तेन दश हस्तेन वाजिनम् । हस्तिनं शतहस्तेन देशत्यागेन दुर्जनम् ॥ तत्र दुर्योधनो विप्र-पार्श्वाज् जतुनिकेतनम् । कृत्रिमं कारयामास भवतां मृत्युहेतवे ॥ फाल्गुनस्य चतुर्दश्यां कृष्णायां च महानिशि । सुप्तस्य ते कुटुम्बेन युक्तस्य धर्म्मनन्दन ! ॥ विप्रो दुर्योधनादेशा-द्दहो लाक्षानिकेतनम् । ज्वालयित्वा यमावासं भवतः प्रेषयिष्यति ॥ इत्याकर्ण्य जगौ भीमो भो ! भ्रातस्ते द्विपीदृशि । क्षमा नहीक्ष्यते किन्तु प्रेष्यते स यमालयम् ॥ यद्यादेशं ददस्व त्वं मह्यं सम्प्रति सोदर ! । तदाऽहं गदया हत्वा तं नेष्यामि यमालयम् ॥ धर्म्मपुत्रो जगौ यद्यत् कूटं रिपुः करिष्यति । तत्तस्य मस्तके तस्मात् पापादेव पतिष्यति ॥ यतः—"अत्युग्रपुण्यपापानामिहैव फलमाप्यते । त्रिभिर्मासैस्त्रिभिः पक्षै-स्त्रिभिर्वर्षैस्त्रिभिर्दिनैः ॥ १ ॥" शिष्याणां हि गुरुः शास्ता शास्ता राजा दुरात्मनाम् । अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ जठराग्निः पचत्यन्नं फलं कालेन पच्यते । कुमन्त्रैः पच्यते राजा पापी पापेन पच्यते ॥ इत्यादि वचनाम्भोभि-र्भीमं क्रोधाग्नितापितम् । धर्मसूः शमयामास मेघो दावं यथाम्बुना ॥ विदुरेण कलाविद्भिः सुरंगा जतुसद्मनि । कारिता छन्नमहाय यथा कोऽपि न वेत्त्यरिः ॥ विप्रेण प्रोणिता वाक्यैः पाण्डवा जतुसद्मनि । वासिता द्रौपदी कुन्ती-युता कूटात्मना तदा ॥ विदुरोक्तदिनेऽकस्मात् तत्रैका ज्यायसी वशा ॥ पञ्चपुत्रयुता वध्वै-कया युक्ता समागमत् ॥ भ्रान्त्वा पुरान्तरे सायं युधिष्ठिरगृहान्तिके । एकस्मिन् पार्श्वतः सुप्ताः श्रान्तदेहाः सुनिर्भरम् ॥ तस्मिन् गृहेऽनले दत्ते वाडवेन रहो निशि । शल्यारिर्निर्ययौ भ्रात्रा-दिकयुक्तः सुरङ्गया ॥ युधिष्ठिरो वहिः पुर्या निर्यान् पश्चान् स्वमन्दिरम् । ज्वलद् दृष्ट्वा जगौ भ्रातृ-मात्रादीनां पुरस्त्विति ॥ भाग्ययोगादिदं विघ्न-मकस्माद्विलयं गतम् । तेन पुण्यं विशेषेण क्रियतां सकलैरपि ॥ यतः—"वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि ॥ १ ॥ व्यसनशतगतानां क्लेशरोगाऽऽतुराणां, मरणभयहतानां दुःखशोकार्दितानाम् । जगति बहुविधानां व्याकुलानां जनानां, शरणमशरणानां नित्यमेको हि धर्म्मः ॥ २ ॥ भग्गं न जाइ घडणं दुज्जणहियियं कुलालभंडं व । सयखडो वि घडिज्जइ कंचणकलसो सुअणचित्तं ॥ ३ ॥ दुज्जणजण वव्वुलवन्न जइ सिंचोइ अमीएण । तोइ कटा भगणा जातिहानणइ गुणेण ॥ ४ ॥" अधुना गम्यते तत्र वने शैले वा गह्वरे । यत्र कोऽप्यात्मनो नैव स्थितिं ज्ञास्यत्यरिर्मनाग् ॥ इतस्तत्रत्यमनुजा दृष्ट्वा नॄन् पञ्च सुन्दरान् । द्वे स्त्रियौ दग्धदेहाश्च प्रोचुरेवं परस्परम् ॥ पापी दुर्योधनश्छन्नं प्रेष्य विप्रपुरोधसम् । पाण्डवान् भस्मसाच्चक्रे लाक्षागेहाग्निदानत ॥ ततस्ते मनुजा विप्र-माहत्य यष्टिमुष्टिभिः । प्रेषयामासुरह्नाय यमस्य सदने ध्रुवम् ॥ यतः—"अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैः सह । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥ १ ॥" इतो दुर्योधनः पाण्डु-पुत्रान् विप्रसमन्वितान् । गतान् यमगेहे मत्वा प्रेतकर्म्म व्यधान्मुदा ॥ ततो दुर्योधनः प्राप्य राज्यं निष्कण्टकं किल । निर्भय सोदरान् सर्वान् मानयामास सादरम् ॥ यतः—"न श्रीः कुलक्रमायाता शासनलिखिता न वा । खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ १ ॥ नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥२॥" इतो गुहाद्रिमध्ये तु चलन्तः पाण्डुनन्दनाः । विश्रामं न ललुः स्वीय-स्थिति-

ज्ञानमभीतितः ॥ यतः—"सव्वे जीवा वि इच्छन्ति जीवियं न मरिज्जिउं । तम्हा पाणवहं घोरं निग्गंथा वज्जयंति णं ॥ १ ॥" दुर्भगोत्करकण्टक-मुखव्याप्तमहीतले । दुःखितेन चलन्ति स्म पाण्डुपुत्रा वने सदा ॥ तादृग्मार्गे तु पाञ्चाली-कुन्त्यौ न क्रमितुं क्षमे । यदा तदा सद्यो भीमो वहते स्म श्रमच्छिदे ॥ मातृपत्न्यौ वहन् भीमः स्कन्धेऽतिक्रम्य यामिनीम् । प्रातः प्राप वनं भीमाऽ-मिधं धरणिमण्डनम् ॥ तृषितान् भ्रातृपित्रादीन् मत्वा तत्र विमुच्य च । जलाय दृतिमादाया-चालीद्भीमो वराशयः ॥ उल्लङ्घ्य काननं पद्मा-करे भीमो गतो द्रुतम् । भृत्वाऽम्बुना दृतिं पश्चा-द्वलितस्त्वरितं तदा ॥ रे मर्त्य ! त्वं क्षणं तिष्ठ जल्पन्तीमिति भामिनीम् । आयान्तीं पृष्ठितो दृष्ट्वा भीमस्तत्र विभीः स्थितः ॥ तावद्भयाच्च भेतव्यं यावद्भयमनागतम् । आगतं तु भयं दृष्ट्वा प्रहर्त्तव्यमशङ्कितैः ॥ भीमं दृष्ट्वा वृषस्यन्ती तस्य रूपेण मोहिता । प्राहाऽत्र कानने रक्षो हिडम्बो विद्यते बली ॥ हिडम्बिकामिधा तस्य भगिन्यहं कुमारिका । नृगन्धात्त्वमिहायातं ज्ञात्वा ग्रसितुमिच्छति ॥ भ्रात्राऽहं प्रेषिता दृष्ट्वा त्वामहं मोहिता सती । वाञ्छामि वरितुं तेन वृणु मां नरपुङ्गव ! ॥ नो चेन्मत्सोदरोऽत्रैत्य हिडम्बस्त्वां हनिष्यति । भीमोऽवक् सोदराः सन्ति चत्वारोऽम्बाप्रिये च मे ॥ तेषामनुज्ञया पत्नीं वरिष्याम्यन्यथा न हि । तयोः प्रजल्पतोरेव तत्र हिडम्ब ईयिवान् ॥ यावद्भीमं निहन्तु तु दधाव राक्षसः स च । तावद्भीमस्तरुं मूला-दुन्मूल्य हन्तुमुत्थितः ॥ क्षणं भूमौ क्षण व्योम्नि द्वावेव च परस्परम् । अस्त्रवृक्षादिभिर्युद्धं कुर्वाते स्मातिदारुणम् ॥ अन्योऽन्यमह्निसङ्घट्टा-त्तयोर्दारुणरूपयोः । चकम्पे साम्बुधिर्भूमिः कम्पयत्यव(च)लानपि ॥ क्षणं दृढप्रहारेण रक्षसा भीममाहतम् । दृष्ट्वा कुन्त्याः पुरः प्राह हिडम्बा भीमचेष्टितम् ॥ ततः कुन्तीनिदेशेन खड्गपाणिर्युधिष्ठिरः । अधावत रिपुं हन्तु भीमस्य चान्तिके ययौ ॥ युधिष्ठिरं समायान्तं भीमो नत्वा सुभक्तितः । तथा मुष्ट्या न्यहन् शत्रुं यथाऽगाद्यममन्दिरम् ॥ यतः—" श्रियमनुभवन्ति धीरा न भीरवः किमपि पश्य शस्त्रहतः । कर्णः स्वर्णालङ्कृतिर-ञ्जनरेखाङ्कित चक्षुः ॥ १ ॥ खेडि म खूंटो टालि खट्टा विणु सिखइ नहीं । साहसि हुतउ हल वहइ देवह तणइ कपालि ॥ २ ॥ " ततो हिडम्बिका भीम-पृष्ठिं न मुञ्चते क्षणम् । वक्तीति च वृणुष्व त्वं मामुद्वाहप्रयोगतः ॥ यतः—" रागी बध्नाति कर्म्माणि वीतरागो विमुच्यते । जना जिनोपदेशोऽयं सक्षेपाद्बन्धमोक्षयोः ॥ १ ॥ " रागद्वेषौ यदि-स्यातां तपसा किं प्रयोजनम् ? । तावेव यदि न स्याता तपसा किं प्रयोजनम् ? ॥ मुखे पुरीषप्रक्षेपं तथा पाषाणपेषणम् । एकेन्द्रियापि सहते मतिष्का रागदोषतः ॥ रागोऽयं दोषपोषाय चेतनारहितेष्वपि । मञ्जिष्ठा कुट्टनस्थान-भ्रंशतापसहा भृशम् ॥ तेषां याता पथि स्कन्धे कुन्तीं च याज्ञसेनिकाम् । कृत्वा हिडम्बिकाऽचालीत् कुर्वाणा विनय तयोः ॥ एकदा द्रौपदी भ्रष्टा मार्गाद् युधिष्ठिरादिभिः । विलोकिताऽपि न यदा लब्धा दुःखं तदाऽभवद् ॥ ततो हिडम्बिका गत्वा विलोक्य काननेऽमितः । द्रौपदीमनयद् हृष्टास्तदा पाण्डुसुतादयः ॥ स्वस्मिन् भक्त-कुटुम्बस्य मत्वा हिडम्बिका तदा । अनुमत्या प्रसूपत्न्यौ भीमस्तां परिणीतवान् ॥ तदङ्घ्रिक्षालनादीनि कृत्यान्येत्र हिडम्बिका । कुर्वाणाऽरञ्जयत् श्वश्रू-ज्येष्ठादींश्च यथोचितम् ॥ यतः—" अमृतं शिशिरे वह्नि-रमृत क्षीरभोजनम् । अमृतं राजसन्मान-ममृतं प्रियदर्शनम् ॥१॥ जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि नरोऽनुरज्यते गुणानुरागप्रभवा हि सम्पदः ॥ २ ॥ विणए सिस्सपरिक्खा सुहडपरिक्खा य होइ संगामे । वसणे मित्त-

परिक्खा दाणपरिक्खा य दुक्काले ॥ ३ ॥" चलन् युधिष्ठिरश्चक्र-नगरे देवशर्म्मणः । द्विजस्य सदने तस्थौ नेतुं कालं प्रतिज्ञितम् ॥ धर्म्मसू नुर्जगौ तत्र स्थितां हिडम्बिकां प्रति । सोढव्यं द्वादशाब्दानि दुःखमस्माभिरन्वहम् ॥ तेन त्वं स्वगृहे गच्छ यतो दुःखं न ते भवेत् । हिडम्बाऽवक् कथं यामि युष्मान्मुक्त्वेह साम्प्रतम् ॥ गच्छेति धर्म्मपुत्रोक्ते गर्भं भीमसमुद्भवम् । कुन्त्यै निवेद्य गच्छन्ती जजल्पेति हिडम्बिका ॥ समये स्मरणीयाहं भवत्यादिभिरञ्जसा । कुन्त्याऽऽचष्ट व्रज स्वच्छे ! गर्भः पोष्यः सुभोजनैः ॥ वातलैश्च भवेद्गर्भः कुब्जान्धखञ्जवामनः । पित्तलैः स्खलतिः पिङ्गुः श्वित्री पाण्डुः कफात्मभि. ॥ ततो नत्वा पदौ श्वश्रूपोश्चालयोश्च यथाक्रमम् । हिडम्बा जनकावासे जगामाऽनघमानसी ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रिया । धन्यास्ते त्रितये येषा विसंवादो न विद्यते ॥ तत्रान्यदा भृशं देव-शर्मपत्नीं शिवाभिधाम् । रुदन्तीं वीक्ष्य पप्रच्छ भीम' किं रुद्यते त्वया ? ॥ सा प्राहाऽत्र पुरे पूर्वं वकाख्यो राक्षसाधमः । पुरीप्रमां शिला भृत्वा करेऽगान्नगरोपरि ॥ वकोऽवग् नगरीमेना चूर्णीकुर्वेऽधुनाऽनया । भयत्रस्तस्ततो राजा तस्मै चक्रे वलिं बहु ॥ अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताऽऽकाङ्क्षा समं मृत्युभयं द्वयोः ॥ प्रादुर्भूय स यक्षोऽवक् पुरेऽत्राहं द्विजोऽभवम् । दत्त्वा स्तैन्यकलङ्कं मे हतोऽहं चौरदण्डतः ॥ मृत्वाऽह राक्षसोऽभूवं वकाख्यो राक्षसालये । ज्ञाता मया मृतिः पूर्व-भवे स्यान्नृपलोकतः ॥ ततोऽह कुपितो हन्तु-मनाः (गां)सर्वान् पुरीजनान् । राजाऽवग् राक्षसेदानीं याचस्व चित्तचिन्तितम् ॥ वकोऽवग् यदि मह्यं त्व-मेकं मर्त्यं प्रगे प्रगे । ददस्वाऽहं शिला पश्चात् कुर्वे तदाऽन्यथा न हि ॥ ततो भूपः प्रजाः सर्वा आकार्य नगरीनृणाम् । नामालङ्कृतपत्राणि कुम्भे चिक्षेप वेगत' ॥ राजाऽवग् यस्य पत्र तु निःसरिष्यति कुम्भतः । सोऽस्मै वलिकृते यातु व्यवस्थेति कृता जनै' ॥ यतः—" अन्यस्मादपि लब्धोष्मा नीचः प्रायेण दुःसहो भवति । न तपति रविरिह तादृग् यादृगय वालुकानिकरः ॥ अद्याऽस्मत्पत्रमायात तेन मे नन्दनो ह्यसौ । तत्र गतो वकेनैष स्फाम्यते तेन रोदिमि ॥ वायुपुत्रो जगौ मातः ! छिद्यते न हि रोदनात् । धाष्टर्यं च क्रियतेऽत्रैव व्यसने ह्युत्तमैर्जनै ॥ यत'—" दाराः परिभवकारा वन्धुजनो वन्धनं विष विषया । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १ ॥ पुत्रो मे भ्राता मे स्वजनो मे गृहकलत्रवर्गो मे । इति कृतमेमेशब्द पशुमिव मृत्युर्जनं हरति ॥ २ ॥" ब्रह्मपुरन्दरदिनकररुद्राः सुरगिरिसरितः सप्त समुद्राः । नष्टो यत्र विचित्रापायः स्थास्यति तत्र कथ ननु कायः ? ॥ विप्रपत्नी जगौ वत्स ! त्वया सत्यमुदीरितम् । अपत्येषु भवेन्मोहः पशूनामपि सर्वतः ॥ श्रुत्वैतद् ध्यातवान् भीमो रक्षामि यद्यमु नरम् । तदा मे जीवनं श्लाघ्य- फल च जायते ध्रुवम् ॥ यतः—" हेमधेनुधरादीनां दातारः सुलभा भुवि । दुर्लभः सर्वजीवानां य. प्राणिष्वभयप्रदः ॥ १ ॥" धिग् वल धिक् शरीर च धिक् चात्र नरवैभवम् । धिग् जन्म धिग् मति तस्य यो जीवं न हि रक्षति ॥ जन्तुः स्वय विपद्येत रोगशस्त्राग्निभिर्जलैः । स च देह परप्राण-त्राणायादिश्यते सुधीः ॥ ध्यात्वेति प्रोक्तवान् भीमः कौणपतृप्तिहेतवे । अद्याहं च गमिष्यामि त्व तिष्ठ निजसद्मनि ॥ विप्रः प्राह समानेऽपि नृत्वेऽमुष्माच्च राक्षसात् । त्वा भक्षयाम्यह कोऽत्र नयोऽहं याम्यतो न हि ॥ ततो वलाद् द्विज भीमो निषिध्य तत्कराद् वलिम् । आदाय रक्षसस्तृप्ति-हेतवे तत्र जग्मिवान् ॥ वध्यस्थाने वलिं मुक्त्वा निर्भयो वायुनन्दनः । तस्थौ यावद्विधातु तृ-पकार करुणापर ॥ यतः—" पात्रार्थं भोजन येषा दानार्थं च धनार्जनम् । धर्म्मार्थं जीवितं येषा ते नराः स्वर्गगामिन. ॥ १ ॥" इतः क्षुधातुरो भोक्तु स्वभक्ष्यं कौणपस्तदा । समायातः शिलापृष्ठे

विशाले क्रूररूपभृत् ॥ शिलासुप्तं महाकायं नरं वीक्ष्य स कौणपः । दध्यौ मे सकुटुम्बस्या-नेन तृप्तिर्भविष्यति ॥ खण्ड खण्ड तनु तस्य यावदत्ति स राक्षस । तावदुत्थाय तं हन्तुं वृक्षं लात्वा जगावदः ॥ लोकभक्षणजं पापं रे कौणप ! त्वया कृतम् । स्मरेष्टं दैवतं हन्तु त्वामहं समुपागमम् ॥ मुष्टिमुष्टि मिथो युद्धं वृक्षावृक्षि परस्परम् । भीमराक्षसयोर्जातं रामरावणयोरिव ॥ उत्पाट्य राक्षसं छत्र-वत्कृत्वा मस्तके निजे । भीम आस्फोटयामास शिलाया उपरि दृढम् ॥ पुनर्भीमः करे कृत्वा तं जगौ स्मर दैवतम् । कौणपोऽवग् मुधा भीम ! कुर्वन्नेव मरिष्यति ॥ ततो भीमस्तथा मुष्ट्या हतवान् कौणपं हृदि । यथा मुक्तोऽसुभि. सद्यो जगाम स यमालयम् ॥ वृकोदरेण निहत कौणपं त महीपतिः । सप्रजः कारयामास पुरीमध्ये सदुत्सवम् ॥ समेत्य सकला लोका हर्षिताः स्वस्वमन्दिरात । भीमं प्रवर्द्धयामासु-र्जनजीवितदायकम् ॥ भीमेन निहतं यातु-धानं मनुजाननात् । ज्ञात्वा दुर्योधनश्चक्रे विषादं रिपुजीवनात ॥ पुनर्दुर्योधनः सार्द्धं मन्त्रिभि. पाण्डवान् द्रुतम् । हन्तुं न्यमन्त्रयच्छन्न पापाः स्युर्यत ईदृशाः ॥ यतः–" पापी रूपविवर्जितः स पिशुनो यो नारको नाऽभवत्, तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः । मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्त्यलोकागतो, यस्तु स्वर्गपरिच्युतः स सुभगः प्राज्ञः कविश्रीयुतः ॥ १ ॥ " विज्ञाय चिन्तित धार्त्त-राष्ट्रस्य विदुरो रह' । चरमप्रेषयत् पार्श्वे पाण्डवानां कृपात्मनाम् ॥ चरो द्वैतवने गत्वा नत्वा पाण्डुसुतान् जगौ । ज्ञापित विदुरेणेति न विश्वस्यं रिपोर्मनाग् ॥ आयुषो राजचित्तस्य पिशुनस्य धनस्य च । खलस्नेहस्य देहस्य नास्ति कालो विकुर्वतः ॥ यतः—" आहिवाहिविमुक्कस्स नीसोस ऊसास एगगो । पाणु सत्त इमो थोवो सो वि सत्तगुणो लवो ॥ १ ॥ लवसत्तहत्तरीए होइ मुहुत्तो इमम्मि ऊसासा । ३७७३ सगतीससयतिहुत्तर तीसगुणा ते अहोरत्त ॥ लक्ख तेरससहसा नउय सया एगमासम्मि, लक्खा इगतीस य तदा तीससहस्सा मुणेअव्वा ॥ " तदाऽवग् द्रौपदी कान्तान् युष्माकं दोर्बलेन किम् । यस्मिन् सत्यपि कुर्वन्ति विद्विषो वः पराभवम् ॥ तद्बलं यातु पाताल यस्मिन् रिपोः पराभवः । तद्विद्या यातु पाताल यया न क्रियते वृषम् ॥ तद्धनं यातु पाताल यन्न धर्म्मे समेत्यहो ? । तन्मनो यातु पाताल येन न ध्यायते जिनः ॥ तदा भीमादयः सर्वे सोदरा ज्येष्ठसोदरम् । उत्थाय स्फालयन्तो दो-र्युगं प्रोचुरिति ध्रुवम् ॥ एवंविधे रिपौ दुष्टे यदि तेऽस्ति क्षमा दृढम् । तदा दत्से न तान् हन्तुं किमादेश च साम्प्रतम् ? ॥ युधिष्ठिरो जगौ पूर्वं प्रतिज्ञा स्वा स्वयं कृताम् । पूर्णीभूय च हन्तव्यो भवद्भिः स ततो रिपुः ॥ इति ज्येष्ठवचः श्रुत्वा सर्वे भीमादयस्तदा । प्रसन्नीभूय शुश्रूषां चक्रे भ्रातुर्दिवानिशम् ॥ यतः—" विवेकः सह सम्पत्त्या विनयो विद्यया सह । प्रभुत्व प्रशमोपेतं चिह्नमेतन्महात्मनाम् ॥ १ ॥ यथा यथा परा कोटिं गुणः समधिरोहति । सन्तः कोदण्डधर्म्माणो विनमन्ति तथा तथा ॥२॥ जो गुणवंतओ सो नमइ निग्गुण वट्टओ थाइ । अवसि नमता गुण चढइ धणुह कहंतओ जाइ ॥ ३ ॥ " विसृज्य तं चरं सर्वे धर्म्मस्वाद्याः सहोदराः । चलन्तः कानने धर्म्म-ध्यानं न मुमुचे मनाग् ॥ यतः—" धर्म्माद्धिगतैश्वर्यो धर्म्ममेव निहन्ति यः । कथं शुभगतिर्भावी स्वस्वामिद्रोहकारकः ? ॥ १ ॥ " यस्य त्रिवर्गशून्यस्य दिनान्यायान्ति यान्ति च । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ गन्धमादनभूमिध्रे गत्वाथ धर्म्मनन्दनम् । तस्थौ यावत्तदा पार्थः प्राहेति शिल्पारिं प्रति ॥ इन्द्रकीले नगे यामि विद्यां साधयितुं वराम् । ततोऽवग् धर्म्मसू पार्थ ! गच्छ विद्यां प्रसाधय ॥ प्रणम्य मातर ज्येष्ठ-भ्रातरं भक्तिपूर्वकम् । विद्या साधयितुं पार्थ इन्द्रकिलाचले ययौ ॥ तत्र नत्वा युगादीशं पार्थः पवित्रविग्रहः । साधितुं मणिचूडेन दत्तां विद्यां

स्थितो लये ॥ स्थिरो मेरुरिव श्वासो–च्छ्वासहीनो धनञ्जयः । विद्यां सस्मार सद्भक्त्या ध्यानस्थः कमलासनः ॥ भूतप्रेतहरिव्याघ्र–शाकिन्याद्या अनेकशः । शेकुश्चालयितु पार्थं न ध्यानलीनमानसम् ॥ समयेऽथ समा विद्या–देव्यः सन्तुष्टमानसाः । जगदुर्वत्स ! याचस्व वाञ्छित वरमञ्जसा ॥ " दृष्ट्वान्नं सविष चकोरविहगो धत्ते विरागं दृशोर्हंसः कूजति सारिका च वमति क्रोशत्यजस्रं शुकः । विष्ठां मुञ्चति मर्कटः परभृतो मन्दध्वनिर्म्रीयति, क्रोञ्चो रौति च कुर्कुटोऽपि नकुलः संहृष्टरोमा भवेत् ॥१॥ " पार्थः प्राह मनोभीष्टदायिनीम् व्योमगामिनीम् । वैरिजैत्रीं धनुर्विद्या–मसङ्ख्यशरवर्षिणीम् ॥ चञ्चत्कलाप्रदां विद्यां सौभाग्योदयदायिनीम् । भवन्त्यो यदि तुष्टाः स्म तद्दत्त मेऽधुना ॥ एव चानेकशो विद्या दत्त्वा पार्थाय भाग्यतः । विद्यादेव्यो ययु' स्वीय–स्थानके हृष्टमानसाः ॥ ततोऽर्जुनोऽचलद्याव–त्तावच्छबर एककः । पार्थस्याभिमुख मुञ्च–न्नाययौ शरधोरणीम् ॥ पार्थोऽपि लीलया मुञ्चन् बाणान् तच्छरधोरणीम् । शतखण्डां व्यधात्कांश्चित्त कांश्चिच्च मण्डप पुनः ॥ भिल्लमुक्तान् शरान् पश्चा–न्मुखान् कृत्वा निजैः शरैः । तथा चिक्षेप पार्थस्त प्रति सोढा यथा न सः ॥ भिल्लमुक्तान् शरान् वह्नि–बाणैर्धनञ्जयस्तदा । भस्मीकृत्य मरुद्बाणै–रुड्डयामास खे क्षणात् ॥ अदृशीभूय भिल्लोऽथ भिल्ल्या रूपं विधाय स । आगत्य फाल्गुन प्राह मुञ्चन्ती सा कटाक्षकान् ॥ अहमत्र निराधारा कुमारी वनवासिनी । वाञ्छन्ती रमणं भाग्या–द्वद्यं त्व स्मरोपमम् ॥ उद्वाह्य मा कुमारीं त्व यदि तिष्ठसि साम्प्रतम् । तदाऽऽवयोर्जनुः सद्य' कृतार्थं जायतेऽखिलम् ॥ इत्यादि बहुशो रूपैर्भिल्लेन विहितैर्यदा । नैवाचालीन्मनाग् पार्थ–स्तावद्देवोऽभवत् स च ॥ जगाद स सुरोऽह त्वा–मिह चालयितु त्वगाम् । मेरुवच्चलितो न त्वं मनसो धीरमानम' ॥ यतः—" वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत् क्षणात्, मेरुः स्वल्पशिलायते मृगपतिः सद्य' कुरङ्गायते । व्यालो माल्यगणायते विषरसः पीयूषवर्षायते, यस्याङ्गेऽखिललोकवल्लभतमं शील समुन्मीलति ॥ १ ॥ " तुष्टोऽथ स सुरश्चाप गाण्डीवं जयदायकम् । दत्त्वाऽर्जुनाय सत्सत्त्व–शालिनेऽथ तिरोऽभवत् ॥ प्राप्तविद्योऽर्जुनश्चापं गाण्डीवं स्वशये करन् । अभ्येत्य भ्रातृमात्रादीन् यथायोगं ननाम सः ॥ यतः—" विनय राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् । अनृत द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ १ ॥ " अन्येद्युर्द्रौपदी पुष्पं वर्यं पतितमम्बरात् । दृष्ट्वा भीमपुरोऽप्राक्षीत पुष्पमीदृक्षमानय ॥ गच्छन् भीमोऽथ पुष्पार्थं पश्यन्नेक सरोवरम् । तन्मध्ये वरपुष्पाणि ददर्शाऽनिलनन्दनः ॥ इतोऽप्रेक्ष्य मरुत्पुत्र धर्म्मस्वादिसहोदराः । दुःखिनो लोकयामासु–र्न दृष्टस्तैः स वायुभूः ॥ ततः कुन्त्या स्मृता चित्ते स्नुषा हिडम्बिकाभिधा । समेत्यावगद कस्मै–श्चिदर्थं सस्मरे त्वया ॥ कुन्त्यवक् ते पतिर्भीमः कुसुमार्थमितो गतः । नायात्तेन मया ध्याता तज्ज्ञप्तिहेतवेऽधुना ॥ ततो हिडम्बिका स्कन्धे कृत्वा धर्म्मसुतादिकान् । भीमोपान्ते विमुच्यागात् स्वीयताततनिकेतने ॥ भीमः पद्माकरे याव–दविशत् पद्महेतवे । तावद् दृग्गोचराद् यातः सर्वेषां पश्यता तदा ॥ तत्पृष्टौ धर्म्मसूर्यात–स्तत्पृष्ठे च धनञ्जयः । तत्पृष्ठे सहदेवश्च तत्पृष्ठे नकुलोऽपि च ॥ सर्वेष्वदृश्यभूतेषु कुन्ती च द्रुपदात्मजा । दु'खिन्यौ विग्रहोत्सर्गे स्थिते सुध्यानतत्परे ॥ यतः–कारणात् प्रियतामेति द्वेष्यो भवति कारणात् । स्वार्थार्थी जीवलोकोऽयं न कश्चित् कस्यचित्प्रियः ॥ मोहबद्धा जना एते लभन्ते दुःखसन्ततिम् । मोहमुक्तास्तु जायन्ते सुखभाजो निरन्तरम् ॥ इतः खगो व्रजन् कुन्त्याः शीर्षोर्ध्वं यानमात्मनः । स्थितं मत्वा मनः कुन्त्या जज्ञौ स गगनाध्वगः ॥ कुन्त्या ध्यानबलाद् व्योमचरस्तत्र सरोवरे । गत्वाऽनैषीत् सुतान् सर्वान् कुन्त्याः पार्श्वे द्रुतं किल ॥ पारयित्वा तनूत्सर्गं कुन्त्या-

ऽऽलिङ्ग्य स्वनन्दनान् । पप्रच्छ मे सुता अत्रा–नीताः स्थानात्कुतो वद ॥ खगोऽवग् निर्जरं ह्येक-माराध्य कृत्रिमं सरः । कारयित्वा सुमाऽऽदान-व्याजाद् दुर्योधनो नृपः ॥ वन्धयामास ते पुत्रान् क्रौञ्चवन्धं सरोवरे । नेतुं यमगृहं सद्यः स पापी दुष्टमानसः ॥ युग्मम् ॥ स्थाप्यते महतां पङ्क्तौ क्वचिन्नीचोऽपि कार्यत. । स्थैर्याय स्थाप्यतेऽङ्गार' कर्पूरसमकक्षया ॥ खलानां कण्टकाना च द्विविधैव प्रतिक्रिया । उपानद्-मुखभङ्गो वा दूरतो वा विसर्ज्जनम् ॥ दुज्जणजण वव्वूलवण जइ सिचह अमीएण । तोइज कंठा फाडण जातिहां तिणइं गुणेग ॥ वन्धान्मोचयित्वाशु भवत्या नन्दनाः समे । मया ह्यत्र समानीताः धर्म्मस्यैव प्रभावतः ॥ शङ्खचूडादिकव्योम–भृतां तत्र तनूभवाः । राज्यादिवालनाच्चक्रु–रुपकारं कृपापराः ॥ यतः—" तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसम्पत्त्या खलाः परविपत्तिषु ॥ १ ॥ " नालिकेरसमाकारा दृश्यन्ते केऽपि सज्जनाः । अन्ये तु वदराकारा वहिरेव मनोरमाः ॥ भीमोऽवक् सर्वभ्रातॄणा पुरस्तादिति सादरम् । यथाऽऽदेशो भवेद् वो मे हन्मि दुर्योधनं तदा ॥ कुन्ती जगौ सदा धर्म्म–मार्गे तु चलता नृणाम् । कल्याण जायते नून क्षीयन्ते वैरिणः स्वयम् ॥ यतः—" राज्यं सुसम्पदो भोगाः कुले जन्म सुरूपताम् । पाण्डित्यमायुरारोग्य धर्म्मस्यैतत्फलं विदुः ॥ १ ॥ " क्रमतोऽथ महीं पाण्डु–नन्दनानागतान् रहः । द्वैतवने निशम्याऽगात् तत्र दुर्योधनोऽधमः ॥ तत्र सरस्तटे सैन्यं न्यस्य दुर्योधनो नृपः । विघ्न पाण्डु-सुतानां तु कर्त्तुकामः स्थितः प्रगे ॥ स्नेहेन भूतिदानेन कृतः स्वच्छोऽपि दुर्जन' । दर्पणभ्रान्तिके तिष्ठन् करोत्येकमपि द्विधा ॥ सरसि प्रविशन् चित्रा-ङ्गदेन व्योमगेन तु । निषिद्धोऽपि मदोन्मत्तः प्राविशद्धार्त्त-राष्ट्रजः ॥ ततश्चित्राङ्गद. क्रुद्धो दुर्योधनं दुराशयम् । अहार्षीत्सानुज सार–परिवारसमन्वितः ॥ तदा हृतं पति मत्वा खगेनान्तःपुरीजनः । क्रन्दन् युधिष्ठिरं भर्तृ–भिक्षामयाचताऽऽदरात् ॥ धृतराष्ट्रसुतैश्चक्रेऽ-पराधोऽत्र यदि त्वयि । तथापि त्वं कृपां तेषु कुरुष्व ते यतोऽनुजाः ॥ यतः —" सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ १ ॥ " धर्मस्वं धार्त-राष्ट्रस्य मोचनायेप्सितं तदा । निषिध्य फाल्गुनोऽचालीज्जेतुं विद्याधरं रिपुम् ॥ अर्जुनो लोहनाराचान् मुञ्चन् पयांसि मेघवत् । गतास्त्रं वैरिणं चक्रे छित्त्वा शस्त्राणि तस्य तु ॥ वशीकृत्य क्षणाच्छत्रुं नीत्वा दुर्योधनं नृपम् । एत्य धर्म्मसुतोपान्ते–ऽनसीत्पार्थः सुभक्तिनः ॥ पार्थेन मोचितः स्वं तु ज्ञात्वा दृष्ट्वा घृषाङ्कजम् । धर्म्मसूपदयोर्युग्मं भक्त्या दुर्योधनोऽनमत् ॥ तदा धर्म्मसुतश्वेत–हययोश्चरणद्वयीम् । नमतः खेचरान् भूरीन् सवलान् मेदिनीपतीन् ॥ भक्तितो नमतो वीक्ष्य स्वस्मिन्निर्वलतां पुनः । दुर्योधनोऽभ-वत्क्रुद्धो हृदि वक्त्रे प्रसन्नजुट् ॥ यतः—' राई–सरिसवमित्ताणि परछिद्दाणि अ पासई । अप्पणो विल्लमि-त्ताणि पासंतोवि न पासइ ॥१॥ " अन्त शल्यमिवात्यन्त मन्यमानो रिपून् हृदि । दुर्योधनो निहन्तुं तान् पाण्डुपुत्रान् समीहते ॥ दध्यौ युधिष्ठिरो दुर्यो-धनेऽपि शात्रवे मया । उपकारः कृतो यश्च मन्ये तद्भाग्यमेव मे यतः—" दुर्जनजनसन्तप्तो यः साधुः साधुरेव स विशेषात् । अपि पावकसन्तप्तः खण्डः स्याच्छार्करो मधुरः ॥ १ ॥ " व्रजति विरसत्वमितरः सत्यं परिमिलितसुन्दराः सन्तः । यान्ति तिलाः खलभावं स्निग्धः पयसो विकारोऽपि ॥ नत्वा युधिष्ठिरं चेतो विना दुर्योधनोऽचलत् । यावत्तावच्च गाङ्गेय-विदुरावूचतुश्च तम् ॥ पार्थतेजस्त्वया दृष्टं स्वस्मिन्निर्वलता पुनः । अतः सन्धेहि तैः पाण्डु–नन्दनैः सह शीघ्रतः ॥ गाङ्गेयविदुरप्रोक्त हितं तथ्यमपि स्फुटम् । तस्य दुर्योधनस्यासी–द्धौपरक्षेत्रवापवत् ॥ प्रेषितो धार्तराष्ट्रेण रहो जयद्रथो नृपः । दुःशिल्यापतिरायासीत् युधिष्ठिरान्तिकेऽन्यदा ॥ कुन्त्या

निमन्त्रिते तस्मिन् जामातरि निजालये । अर्जुनोऽभोजयत्त च रसवत्याऽथ दिव्यया ॥ पाण्डवान् वञ्चयित्वाऽऽद्रौ छलजल्पनतत्परः । पाञ्चालीं स्यन्दनारूढा कृत्वाऽचालीद्दुराशयः ॥ द्रौपदीहरणोदन्त श्रुत्वा भीमार्जुनौ तदा । त हन्तु व्रजतो ज्ञात्वा कुन्त्यवक् तनयौ प्रति ॥ भवद्भ्या द्रौपदी वाल्या कुर्वद्भ्या समर तथा । यथा म्रियति जामाता नैवेदानीं जयद्रथ ॥ शैले शैले न माणिक्यं मौक्तिक न गजे गजे । साधवो न हि सर्वत्र चन्दन न वने वने ॥ अय निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ प्रतिपद्य वचो मातुर्भीमश्वेतद्द्वयावपि । पत्नीं वालयितु नत्वा मातरं चेलतुर्द्रुतम् ॥ यतः—" शृण्वन्ति पितुरादेशं ते केऽपि विरलाः सुताः । आदिष्टं यदि कुर्वन्ति सर्वं ते यदि पञ्चपाः ॥ १ ॥ " ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वास सा भार्या यत्र निर्वृतिः ॥ जयद्रथस्य छत्रादि छिन्दन् धनञ्जयोऽभितः । न जघान रिपुं मातुः स्मरन् वाणीं निजे हृदि ॥ गदया चूर्णयस्तस्य रथ मौलि तदा दृढम् । न जघान मरुत्पुत्रो रिपुं जयद्रथ मनाग् ॥ जयद्रथशिरः पार्थो मुण्डयन् विशिखैस्तदा । भापयामास भूपाल दृढं जयद्रथ ध्रुवम् ॥ भीमेन गदया चूर्णी–कृते पर्पटवद्रथे । पलायनपरस्वान्तो जातो जयद्रथस्तदा ॥ मुक्त्वाऽथ द्रौपदीं नष्टो यदा जयद्रथो नृपः । तदानीं गेहिनीं लात्वा मात्रन्ते तौ समीयतुः ॥ भीमोऽर्जुनश्च पाञ्चाली नत्वा मातुः क्रमद्वयम् । मानसं मोदयामासुः स्वस्वस्नेहप्रदर्शनात् ॥ अन्यदा नारदोऽभ्येत्य पाण्डवानां पुरो जगौ । युष्माभिर्मोचितो वैरी युष्मासु वहते रुषम् ॥ अशक्तो वो निहन्तु स कपटेन धृतराष्ट्रजः । पृच्छं पृच्छं रहो लोकान्नार राधामरीं वराम् ॥ तयोक्तं भवता मुक्ता विशिखाः शात्रवान् प्रति । अनिष्फला भविष्यन्ति नक्ष्यन्ति चारवः क्षणात् ॥ मया तु भवता धर्म्म-शालिना पुरतोऽधुना । उक्तं हितकृते शत्रोः स्वरूपं द्रोहकृद् ध्रुवम् ॥ चैत्रशुक्लाष्टमीघस्रे सुरी सैव वरप्रदा । युष्माकं विघ्नमाधातु–मायास्यति दुराशया ॥ यतः—" न विश्वसेत् कृष्णसर्पस्य खड्गहस्तस्य वैरिणः । आचाराच्चलितस्यापि स्त्रीचरित्रं न विश्वसेत् ॥ १ ॥ " प्रणतो विनयात् पाण्डु–नन्दनैर्नारदो मुनि. । हृष्टो व्योमाध्वना नन्तु ययौ शाश्वततीर्थपान् ॥ चैत्रमासे समायाते धर्म्मसूनुकुटुम्बक । कायोत्सर्गे स्थितो ध्याय–न्नमस्कारान्पुनः पुनः ॥ यतः कामार्थयशसां कृतोऽपि विफलो भवेत् । धर्म्मकर्म्मसमारम्भ–सङ्कल्पोऽपि न निष्फल ॥ एव वितन्वतस्तस्य ध्यानं सप्त दिना गताः । अष्टमेऽह्नि सूरी सापि दुर्योधनवशीकृता ॥ आगत्य धर्म्मज सर्व–कुटुम्बेन समन्वितम् । प्रणम्य नृत्यमाधाय जगादोच्चैःस्वरं तदा ॥ युग्मम् ॥ दुर्योधनगिरा युष्मान् हन्तु यावद्विहागमम् । तावदिन्द्रानुगो देवः क्रौञ्चबन्ध ववन्ध माम् ॥ कुशाघातैस्तथा मेऽङ्ग–मताडयत्सुरः स च । यथा प्राणात्ययकरा वेदनाऽजनि विग्रहे ॥ मारैर्नवनवैर्यामं याम प्रति निरन्तरम् । तथाऽहं ताडिताऽत्यन्त तेन तत्र सुधाभुजा ॥ यथा ध्यात मया दुःखा–दस्मात्प्राणात्ययप्रदात् । छुटिष्यतेऽधुना चेद्धि सेव्यो धर्म्मसुतस्तदा ॥ अथावक् स सुर. पाण्डु–नन्दनान् न्यायगामिनः । हन्तुं यास्यसि हन्तव्या मया त्वं च तदा द्रुतम् ॥ मयोक्तं न मया पाण्डु–पुत्राणां धर्म्मशालिनाम् । विघ्न नैव विधातव्य तेषा सेवनमेव च ॥ ततोऽहं भवता पार्श्वे समेत्य नर्त्तन वरम् । अकार्पमग्रतः कार्यो न विश्वासो रिपोस्त्वया ॥ एवं प्रोक्त्वा प्रयाताया तस्या देव्या निजास्पदे पारणं विदधुः पाण्डु–पुत्रा मात्रादिसंयुताः ॥ ततो गतान्तरायास्ते पाण्डुपुत्रा विशेषतः । सर्वविद्धर्धान्तकरण–तत्परा अभवन् भृशम् ॥ यतः—" महिषविपण्णो मशकः शशकः शैले पिपीलिका पङ्के । सच्चरिते गुणिजने पिशुनः कुपितोऽपि किं कुरुते ? ॥ १ ॥ " मध्याह्नेऽन्यदा ध्याने निष्पन्ने कोऽपि संयतः ।

अगान् मासतपःप्रान्ते भिक्षार्थं पाण्डवास्पदे ।। साक्षात् शान्तरसं साधुं निरीक्ष्य पाण्डुनन्दनाः । हर्षोत्कर्षभरान्नेमुः पञ्चाङ्गप्रणतेस्तदा ।। रोमाञ्चं दधतः पाण्डु-पुत्रास्तस्मै मुमुक्षवे । प्रददुः शुद्धमाहार-मनुमोदनतत्पराः ।। सत्पात्रं महती श्रद्धा काले देय यथोचितम् । धर्म्मसाधनसामग्री वहुपुण्यैरवाप्यते ।। "केसिं च होइ वित्त चित्तं अन्नेसिमुभयमन्नेसिं । चित्त वित्त पत्तं तिन्नि वि केसिं च धन्नाण ।।१।।" सैव भूमिस्तदेवाम्भः पश्य पात्रविशेषतः । आम्रे मधुरतामेति कटुत्वं निम्बपादपे ।। नेदुर्दुन्दभयो व्योम्नि पाण्डवानां पुरस्तदा । सुपात्रदानतः पेतु-रष्टौ काञ्चनकोटयः ।। तदा शासनदेव्योक्त भवद्भिः पाण्डुनन्दनैः । त्रयोदशममेवाब्दं स्थेयं देशे मनोरमे ।। एवं कष्टानि भूयासि सहमाना वने गिरौ । शत्रुञ्जयगिरौ जग्मुश्छन्न पाण्डुतनूभवा. ।। तत्रादौ ऋषभं देवं नत्वाऽर्चित्वा सुमैर्वरैः । पाण्डुपुत्रा ययुर्धर्म्मं श्रोतु श्रीगुरुसन्निधौ । तदा श्रीगुरवः प्रोचुः शैलेऽस्मिन् जगदुत्तमे । अनन्ता यतयो मुक्तिं ययुः सर्वतमःक्षयात् ।। अनादि-तीर्थमेतद्धि सिद्धास्तीर्थकृतोऽत्र ये । अनन्ता मुनयश्चापि क्षिप्त्वा स्वं कर्म्मसञ्चयम् ।। ये चात्र पक्षिणः सन्ति क्षुद्रा अन्येऽपि जन्तवः । ।सहका अपि सेत्स्यन्ति ते भवैस्त्रिभिरुत्तमाः ।। अभव्या पापिनो जीवा नाऽमुं पश्यति पर्वतम् । भव्याः पश्यन्ति भूयिष्ठ-वारं भूरिसुखाप्तये ।। राज्यादि लभ्यते भूरि-वारं तीर्थार्चनादृतः । इदं तीर्थं सदा सेव्यं भव्यैः कल्याणशर्मदम् ।। गतेषु तीर्थनाथेषु गते ज्ञाने च भूतले । तारकोऽयं भवाम्भोधौ पर्वत सिद्धिदायकः ।। सगरश्चक्रभृद्रामो भूरिसाधुसमन्वितः । अस्मिन् शत्रुञ्जये तीर्थे मुक्तिपुर्यां समागमत् ।। श्रुत्वेति तस्य तीर्थस्य सेवा कृत्वा वहून् दिनान् । युधिष्ठिर-नृपोऽचाली-न्मत्स्यदेश प्रति ध्रुवम् ।। विमृश्य पाण्डवाः स्वस्मिन् स्वस्मिन् वेषमिति व्यधुः । द्विजवेषधरो धर्म्म-सूनु कङ्काभिधोऽभवत् ।। भीमः सूदोऽभवद् वल्ल-नामभृदर्जुनः पुनः । बृहन्नटाख्य नाम दधानो नाट्यकोविदः ।। नकुलोऽश्वाधिभूर्जातो गन्धिकाह्वो विशारदः । गोविन्दसुतपालाह्वः सहदेवस्तदाऽभवत् ।। सैरन्ध्र्याह्वाऽभवत् कृष्ण-दासिका वेषधारिणी । इत्यालोच्याऽभवन् सर्वे स्वस्ववेषधरास्तदा ।। पुरीपार्श्वे पितृवने शमीस्कन्धेऽस्त्रसञ्चयम् । शवैस्तिरोहित चक्रुः स्वं स्व पाण्डुतनूभवाः ।। आदौ विराटभूपस्य स्वाशीर्वादपुरस्सरम् । युधिष्ठिरोऽभवत् सूक्त-कथको विप्रवेषभृत् ।। राज्ञो भीमोऽभवत् सूपकारो वल्लाभिधाधर । नटरूपधरः पार्थो नाट्यकृद्र्जुनोऽजनि ।। अश्वपालोऽभवत् तत्र सहदेवः सीयनामभृत् । वैद्यकर्म्मकरो नित्य नकुलः समजायत ।। ब्रह्मव्रतधरा दासी-रूपभृद्द्रौपदी तदा । तस्य राज्ञो गृहे दासी जाता राज्ञीनिसेविका ।। कङ्कद्विजन्मना धर्म्म-सूनुना स्वस्वकर्म्मणि । स्थापिता जननी कस्य-चिदावासे च भक्तित. ।। उक्तञ्च—"प्राप्तसभा विराटेन नियुक्ताः स्वस्वकर्म्मणि ।। सन्मानिताः सुख तत्र तस्थुस्ते गुप्तवृत्तयः ।। १ ।।" प्रातः सर्वे समुत्थाय जननीं रहसि स्थिताम् । रहो वृत्त्या प्रणम्यैव जीमन्त्यम्बुं पिवन्ति च ।। यतः—"ते धन्या ये सदा माता-पित्रोश्चरणचर्चनम् । कुर्वते नमनं ये तु पोषण भुवि नो मुदा ।। १ ।।" सूदवेषधरो भीमोऽन्यदा मल्लभटान् रणे । हत्वा भूमीपतेर्मानं प्राप्य व्यस्तारयद् यशः ।। नृपपत्न्याः सुदेष्णायाः शत तत्र षडुत्तरम् । वभूवुः सोदरास्तेषु मुख्योऽजनिष्ट कीचकः ।। सुदेष्णासदनेऽन्येद्युः कृष्णा मद्रूपधारिणीम् । निरीक्ष्य कीचकः कामा-तुरः काममयाचत ।। यतः—"दिवा पश्यति नो घूकः काको नक्त न पश्यति । अपूर्वः कोऽपि कामान्धा दिवा नक्त न पश्यति ।।१।।" विकलयति कलाकुशल हसति शुचिपण्डितं विडम्बयति । अधरयति धीरपुरुष क्षणेन मकरध्वजो देवः ।। द्रौपद्या धिक्कृतोऽभ्येत्य सुदेष्णायाः पुरस्तदा । कामाभिलापमात्मीयं न्यवेदयत् स कीचकः ।।

सुदेष्णाऽवक् सतीतुल्या दृश्यतेऽसौ नितम्बिनी । तेनाऽस्यां न विधीयेत रागः सोदर ! साम्प्रतम् ॥ यतः—"सत्यां न क्रियते वाञ्छा रागबुद्ध्या सुबुद्धिना । सती रुष्टा ददाति स्म दुर्गतिं देहिनामपि ॥१॥ अप्पउ धूलिहिं मेलिउ सयणह दीधउ छार । पगि पगि माथा ढांकणउं जिणि जोइ परनारि ॥ २ ॥" कीचकोऽवग् भगिन्येव त्वया यदुच्यतेऽधुना । एना विना मृतिं मे स्या-त्ततो दुःखं भवेत्तव ॥ भ्रातुर्मृत्यु-भिया प्राह सुदेष्णा सोदरं प्रति । इदानीं त्वत्कृते वाचः वलाद् याचिष्यते च सा ॥ किञ्चिदुक्त्वाऽन्यदा भ्रातृ-समीपं द्रौपदीं निशि । सुदेष्णा प्रेषयामास तद्गृहे कामहेतवे ॥ तामायान्तीं निरीक्ष्याशु त्याचाऽवक् कीचकः स्मरी । प्राह प्रिये ! समागच्छा-लिङ्गनं देहि मे तनौ ॥ एतत्तस्य श्रुतिकटु वाक्यमाकर्ण्य पापकम् । द्रौपदी प्राह रे मूढ ! वदैव त्वं कथं मयि ॥ यतः—" दुर्मन्त्रान् नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनात् विप्रोऽनध्ययनात् कुलं कुतनयात् शीलं खलोपासनात् । स्त्री मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान् मैत्री चाप्रणयात् समृद्धिरनयात् त्यागात् प्रमादाद्धनम् ॥ गुप्ताः पञ्च ममाभीष्टा–स्तिष्ठन्तोऽत्र पुरेऽधुना । त्वां जल्पन्तमिति प्रेष–यिष्यन्ति यममन्दिरे ॥ एवं बहुतरैरुक्ते–त्यवगेत्य स कीचकः । धृत्वा-केशेषु तां पादैर्निजघानातिनिर्दयम् ॥ ततो सा तादृशी धूलि–लिप्ताङ्गा भूपसंसदि । गत्वा धर्म्माङ्गज दृष्ट्वा जल्पन्तीत्यरुदन् भृशम् ॥ विराटक्ष्मापतौ न्याया-ऽध्वना शासति मेदिनीम् । विगोपितेत्यहं केशा कर्षणात् कीचकेन तु ॥ यतः—" सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दयालुरपि चार्थपरा वदान्या नित्यव्यया प्रचुरनित्यधनागमा च वाराङ्गनेव नृपनीतिरनेकधा च ॥ १ ॥ " श्रुत्वेति न यदा भूपोऽ जल्पन् कङ्कस्तदा जगौ । याह्यत्र पावकोपान्ते स्व दुःखं जल्प वेगतः ॥ गम्भीरं धर्मसूजल्पं ज्ञात्वा सम्यक् च चेदिजा । रोदं रोदं चिरं तस्याः सभाया निर्ययौ शनैः ॥ भीमोपान्ते समेत्यावक् कीचकस्य कुचेष्टितम् । भीम आचष्ट गच्छ त्वं शिक्षा तस्मै प्रदास्यते ॥ ततः सैरन्धिका भीमो–पान्ते कीचकचेष्टितम् । यावज्जगौ ततः क्रुद्धो भीमोऽवददिदं वचः ॥ दुर्योधनकृत चाऽऽगः सेहे मया पुरापि यत् । तद्धर्म्मसू-गिरेदानीं ना सहेऽहं च कीचकम् ॥ गच्छ त्वं तत्र तस्याग्रे वक्तव्यमिति सादरम् । भोः कीचक ! त्वया गम्यं चित्रौकसि दिनात्यये ॥ अहं तत्रैत्य दास्यामि भोगशर्म्म तवाचिरात् । इत्युक्ते कीचकः सोपि हृष्ट-स्तत्र समेष्यति ॥ चित्रौकसि त्वया नेत्यं तस्मिन् दिनात्यये प्रिये ! । अहं तत्र गमिष्यामि तव स्थाने प्रियोत्तमे ! ॥ भीमोक्ते कृष्णया प्रोक्ते हृष्टात्मा कीचको निशि । वर्यखाद्यानि लात्वाऽगान् चित्रावासे सुखे-च्छया ॥ इतो निवार्य सैरेन्ध्रीं पाञ्चालीवेषभृद्यदा । गजगत्या ययौ भीम (मः) कीचको मुदितस्तदा ॥ खाद्येषु रुचिरेष्वादौ दत्तेषु तेन हर्षितः । वकारिर्बुभुजे सद्यो वुकैकैकविधानतः ॥ यत्र कर्पूरकस्तूरी–लवङ्गेलादिवस्तुषु । दत्तेषु तेन भीमस्तु तानि भक्षितवान् दृढम् ॥ ततः स कीचकस्तस्योपरि दत्ते शयं यदा । तदा भीमो ददत्तस्या-ऽऽलिङ्गं दोर्भ्यां दृढं जगौ ॥ यस्त्वया परनार्यां तु रन्तु चिन्तितमात्मना । तस्येदानीं फलं प्राणा–पहाराद् दर्शयाम्यहम् ॥ स्मर देवं कुरु बलं वदन्निति च कीचकम् । हत्वोत्पाट्य तदा भार–पट्टाऽध क्षिप्तवाँस्तकम् ॥ ततो भीमोऽलिखद् वर्णान् भारपट्टे सृजेति च । मयाऽसौ मारितो क्षिप्तो भारपट्टान्तरे लघु ॥ खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके, वाञ्छन् देशमनातपं विधिव-शाद् बिल्वस्य मूलं गतः । तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः, प्रायो गच्छति यत्र भाग्य-रहितस्तत्रैव यान्त्यापदः ॥ स्वकृत्यं भीम आधाय स्वकं स्थानं समीयिवान् । नैव प्रगे स्वसोदर्यं कीचका ददृशुर्गृहे ॥ अनालोक्य स्वसोदर्यं गृहे ते कीचका समे । चित्रौकोभारपट्टाध क्षिप्तं मृतं निरीक्ष्य च ॥

हतः स्वसोदरः केन प्रोक्त्वेत्याहतमस्तकाः । रुदन्तो जगदुर्भ्रातः ! क्व गतोऽस्यधुना वद ॥ युग्मम् ॥ तदा नृपानुगा मन्त्रि–सामन्ताद्या अनेकशः । तत्रैत्य कीचक त्यक्त–प्राणं वीक्ष्यावदन्निति ॥ हत्वाऽमुं कीचकं योऽत्र चिक्षेप पापवान् ध्रुवम् । स एव कर्षयित्वाऽऽशु हन्यते स्वापहारतः ॥ एव जल्पपरा भार–पट्टे रक्ताक्षरावलिम् । दृष्ट्वा न वाचयन्त्युच्चैः–स्वैरमेयेति मारितः ॥ विभ्यन् भूपान्न कोऽप्युच्चै–र्वाचयत्यक्षरावलीम् । तदा तान् नृन् शये धृत्वा भीम उच्चैःस्वर जगौ ॥ येनासौ निहतस्तेनालेखीति भारपट्टके । मयाऽसौ मारितो रात्रौ कीचकोऽकार्यकृद् ध्रुवम् ॥ तदा लोका जगुर्वर्णान् वल्लो वाचितवानसौ । तत्रैत्य सोदरं दृष्ट्वा सुदेष्णाऽवग् नृपप्रिया ॥ सैरन्ध्री चित्रशालायां सोदराऽऽकारिता निशि । भोगायाऽगाद्धतो नूनं तया दुष्टाशयाऽचिरात् ॥ राजाऽऽदेशात्ततस्तत्र नीत्वा कीचकसोदराः । सैरन्ध्रीं सोदरेणाऽमा चेलुः क्षेप्तुं हुताशने ॥ रे रे सैरन्ध्रि ! पापिष्ठे ! त्वयाऽयं कीचको हतः । भारपट्टान्तरे क्षिप्तोऽलेखि वर्णावली पुनः ॥ अतस्त्वमबलाऽप्येवं दृश्यसे सबला दृढम् । अस्य हत्यांहसा श्वभ्रे गमिष्यस्याशु दासिके ! ॥ इत्कयन्निति ते साद्धं कीचकैर्वा युतश्चतां । चचाल भूमिभुग् मार्गे तस्य दाहकृते तदा ॥ वालयित्वा जनान् सर्वान् कीचकभ्रातरोऽखिलाः । वल्लयुक्ता ययु' प्रेत–वने दूरं नदीतटे ॥ रचयित्वा चिता तस्यां क्षिप्त्वा स्वं सोदरं तदा । जगदुः कीचका एषा क्षिप्यतां ज्वलनेऽद्यमा ॥ ततस्ते यावता धृत्वा हस्ते कृष्णां बलात् स्वयम् । क्षिपन्ति तावता भीम–स्तामुन्मोच्य जगाविति ॥ दासि ! गच्छ निजे स्थाने–ऽपापिन्या किं त्वयाऽधुना । क्षिप्यन्तेऽग्नौ मयाऽत्रैव पापिनः सन्ति ये च तान् ॥ ततः स मूलमुन्मूल्य तरून् स्फारान् वृकोदरः । अग्नौ प्रक्षिप्य तान् भीमः क्षिपते कीचकान् क्रमात् ॥ नश्यतः कीचकान् धृत्वा धृत्वा बाढं हुताशने । क्षिपन् भीमो ररक्षैकं कीचकं भयविह्वलम् ॥ छित्त्वा तस्य रसज्ञां तु धृत्वा हस्ते वृकोदरः । अभ्येत्य भूपतेः पार्श्वे जगादेत्युच्चसंरवम् ॥ स्वभ्रातुः स्नेहतो वह्नौ क्षिप्ते दृष्टे सहोदरे । अपरे सोदरास्तत्र प्रविष्टा भस्मतां श्रिताः ॥ एकस्तु कीचको वह्नौ प्रविशन् मोहतो मया । अरक्षि सोऽपि चिच्छेद जिह्वां दन्तैः स्वयं द्रुतम् ॥ यतः—"दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १ ॥" राजाऽवग् भ्रातरो वह्नौ किमु ते प्राविशन् वद । तदैवोत्पाट्य हस्तं स्व, काचकः सोऽक्षिपत् क्षितौ ॥ भीमो जगावयं वक्ति भ्रातरो मेऽखिला वसौ । रक्षिता अप्यनेनैव प्रविष्टा वलतस्तदा ॥ अहमेकोऽमुनाऽरक्षि धृत्वा हस्तेन वह्नितः । एषाऽपापात्मिकेत्युक्त्वा सैरन्ध्र्यमोचि बन्धनात् ॥ पुनर्भीमो जगौ स्वामिन् ! स्थविरः शालकस्तव । भीमेन बलिना केन–चिदेव निहतस्तदा ॥ असौ नितम्बिनी मुग्धा हन्यते येन पापिना । सोऽपि भीमेन सत्त्वेन क्षिप्यते नरकावनौ ॥ भ्रातृमृत्योः सुदेष्णां तु रुदन्तीं प्रत्यवग् नृपः । शोको न क्रियते सद्भिः जानद्भिश्च भवस्थितिम् ॥ धर्म्मशोकभयाहार–निद्राकामकलिक्रुधः । यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी ॥ असौ सैरन्ध्रिका मुग्धा वह्नौ क्षेप्तुं मुधेहिता । सतीतुलया विलोक्येत साम्प्रतं पुण्यभाक् पुनः ॥ एषा सैरन्ध्रिका साध्वी तिष्ठतादात्मनो गृहे । अग्रतो ज्ञास्यते सम्यक् त्वद्भ्रातृहा नरो मया ॥ ततः सुदेष्णया त्यक्त–कोपया निजवेश्मनि । सैरन्ध्री स्थापिता स्नेह–वाणीदानपुरस्सरम् ॥ इत' पाण्डुसुतानाम स्थितिं विज्ञाय तत्र हि । आगत्य धार्त्तराष्ट्रस्य पुरः प्रोचुश्चरा इति ॥ राजन् ! पाण्डुसुता भीतास्त्वत्तश्छन्नं क्वचित् स्थिताः । कच्छपा इव

पाथोधौ मैनिकेभ्यो निरन्तरम् ॥ ततो दुर्योधनोऽप्राक्षीत् वर्यं नैमित्तिकं रहः । कुत्र सन्त्यधुना पाण्डु-पुत्रा ग्रामे वने गिरौ ॥ नैमित्तिको जगौ यत्र धान्यं वप्तं नारक्षितौ । गृह्यते सप्त वर्षाणि सुखिन्यः स्युः प्रजाः सदा ॥ उक्तञ्च—" नाऽनयो यत्र नो भीति–र्यत्र नो रोगसम्भवः । लक्ष्यन्ते पाण्डवास्तत्र स्वय-मर्हद्विहारवत् ॥ तत्र देशेऽधुना सन्ति पाण्डवा निर्भया नृप ! । ततो दुर्योधनो द्रव्यं वितीर्य विससर्ज तम् ॥ तदा चरा जगुर्मत्स्य–देशो नैमित्तिकोदितः । विद्यते तेन ते तत्र सम्भाव्यन्तेऽधुना नृप ! ॥ कथं तत्र स्थिता ज्ञेयास्ते च पाण्डुनृपाङ्गजाः । इत्युक्ते धार्त्तराष्ट्रेण सुशर्मा छलवान् जगौ ॥ कुशलजनन-वन्ध्या सत्यसूर्यास्तसन्ध्या कुगतियुवतिमाला मोहमातङ्गशालाम् । शमकमलहिमानीं दुर्यशोराजधानीं व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ १ ॥ " गम्यते तत्र देशे तु गोकुल दक्षिणे स्थितम् । वाल यिष्याम्यह चाढौ यदा पाण्डुसुतास्तदा ॥ एष्यन्ति सुरभीः पश्चात् सद्यो वालयितुं नृप ! । त्वमप्युत्तर-दिग्भागे चरन्तीर्गाश्च वालय ॥ विचार्येति तदा गङ्गा–पुत्रादिभिः सहास्फुटम् । दुर्योधनोऽचलज्ज्ञातुं पाण्डवस्थितिमञ्जसा ॥ आदौ सुशर्म्मभूपालो गत्वा याम्यदिशि स्थिताः । यत्र गा वालयामास तदा गोपारवोऽभवत् ॥ गोपैर्गोहरणोदन्ते प्रोक्ते विराटभूपति । चचाल तूर्यशब्दादि(सि)–पुत्रयुग् याम्यदिग् तटे ॥ विना पार्थं तदा धर्म्म–पुत्रो भीमादिभिः समम् । विप्रादिवेषभृद्वाल–यितुं गाश्चाचलत्तदा ॥ सन्नद्धः शिविरो राजा–मिवेष्टयन् रिपु द्रुतम् । विदधे व्याकुलं तीक्ष्ण–वाणधोरणीमोचनात् ॥ विराटराट् सहस्रा-शु–वैरितामससन्ततिम् । सपदि ध्वंसयामास तीक्ष्णवाणगभस्तिभिः ॥ हृतं सैन्यं त्रिगर्त्तेशो ज्ञात्वा सन्नह्य तत्क्षणात् । ध्वनयन् कार्मुकं वैरि–चक्र हन्तुमधावत ॥ त्रिगर्त्तेशे शरश्रेणीं वर्षत्यापाढमेघवत् ! नष्ट वैरिवल तस्य भूप एक स्थिरोऽभवत् ॥ शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ सुशर्मा विशिखश्रेण्या वर्षन् कुर्वन् तमोऽमितः । निरस्त्रं विरथं कृत्वा बबन्ध-मत्स्यभूपतिम् ॥ मत्स्यभूप रथे क्षिप्त्वा यदाऽचालीत् सुशर्म्मराट् । तदा न कोऽपि शक्तोऽभू–ज्जेतुं वैरिवलं मनाग् ॥ ततो युधिष्ठिरो भ्रातृ–युत सन्नह्य तत्क्षणात् । त्रिगर्त्तेशं नृपं हन्तु–मधावतातिवेगतः ॥ समूलान् पादपान् भूरी–नुत्पाट्य घ्नन् रिपून् बहून् । ययौ युधिष्ठिरादेशा–द्भीमो हन्तुं द्विपान्तिके ॥ त्रिगर्त्तनगराधीश मत्स्याङ्गुलिप्रदानतः । मुक्त्वा भीमो जगौ न्याय–मार्गः सद्भिश्च सेव्यते ॥ यत :—" रेवा हा मग्गेण वह मत उनमूलि पलास । कहे जलहर थक्कसि कवण पराइ आस ॥ १ ॥ रे कारिछि हयासे ! चडिआ निम्बमि पायवे पडरे । अहवा तुज्झ न दोसो सरिसा सरिसेहि रज्जति ॥२॥" एव प्रोक्त्वा सुशर्माण मुक्त्वा गा निखिला लघु । वालयित्वाऽनयद् भीमो मत्स्येशं शिविरे निजे ॥ हृष्टो भूपस्तदा त च सन्मान्याऽऽसनदानतः । तत्रोवास निशीथिन्या कुर्वन्ज्ञानोत्सवं वरम् ॥ इति दक्षिण गोग्रहः । इत उत्तरदिग्भागाद् दुर्योधननृपोऽर्जुनीः । अवालयत्तदा गोपा वुवारवं व्यधुस्तदा ॥ गोपाऽऽस्याद् धेनुहरणं श्रुत्वोत्तरो नृपाङ्गभूः । उवाच जननीयाम्योः पुर' प्रस्फोरयद् वचः ॥ यद्यत्र सारथिर्वर्यो जायते कोऽपि मे नरः । तदाऽह वैरिणो हत्वा वालयिष्यामि गा॰ समाः ॥ श्रुत्वा तद्वचन कृष्णो–त्तरं प्रति जगावदः । तव स्वसु कलाचार्यो विद्यतेऽत्र बृहन्नटः ॥ पार्थस्य सारथिः सोऽभूद् विद्विपा मर्दने क्षणे(मः) । तवापि सारथिर्वर्यो भविष्यति रणाङ्गणे ॥ उत्तरः स्वानुजावाण्या बलाद् बृहन्नटं तदा । धारयामास सारथ्यं कर्म्म बहुप्रयत्नतः ॥ पार्थः परिदधत् वर्म व्यत्ययेन तदा द्रुतम् । हास-यंश्चावलावर्गं रथमध्यास्त सादरम् ॥ गच्छन्तमुत्तर प्रोचु–र्भगिन्यः सोदरं व्रज । जित्वाऽरीन् वरवस्त्राणि

त्वमत्रानयताद् द्रुतम् ॥ तैर्वस्त्रैर्वस्त्रवनिताः करिष्यन्ते मनोहराः । अस्माभिर्नर्मणे वाल क्रीडापरासिरादरात् ॥ हसत्सु स्त्रीजनेपूच्चै-रुत्तरश्च बृहन्नटम् । विधाय सारथिं हन्तुं विद्विपोऽचलदञ्जसा ॥ गच्छन् मार्गे श्मशानद्रु-स्थितान्यस्त्राणि वेगतः । आदायाऽथ रथे तस्मि-न्नुपविष्टो बृहन्नटः ॥ अग्रे महत्तरां सेनां दृष्ट्वा कम्पभृदुत्तरः । रथादुत्तीर्य नश्यन् स धृतः सारथिना जगौ ॥ दृश्यतेऽग्रे महच्चक्रं तेन युद्धं तु दुष्करम् । वालय स्यन्दनं पश्चा-न्नागच्छाम्यग्रतोऽधुना ॥ बृहन्नटो जगौ स्फूर्तिः प्रोक्ता स्वभगिनीपुरः । निर्गतस्त्वं कथं पश्चाद् व्रज हत्वा रिपून् विना ॥ यतः—“ चलति कुलाचलचक्रं मर्यादामधिपतन्ति जलनिधयः । प्रतिपन्नममलमनसां तथापि न चलति युगान्तेऽपि ॥ १ ॥ ” रणारम्भप्रणयिणां क्षत्रियाणां रिपुग्रहे । जीवितं राज्यलाभाय कीर्तिलाभाय पञ्चता ॥ एतेषां वैरिणां सेना-डम्बराभ्रविभूपिता । ममाग्रे त्वरितं दूरं गमिष्यति न संशयः ॥ यतः—“ दुद्द(ढ्ढु) रराडिय महिषीण कडक्खयं सेवडाण मंतणयं खमणाण य वक्खाणं साडंबरो निष्फलो चेव ॥ १ ॥ ” कुमारोऽवग् मृते कीर्ति-फलं कोऽत्र निरीक्ष्यते । दृश्यते त्वधुना मृत्यु-र्गतस्य मम संगरे ॥ अर्जुनोऽवग् जगत्यस्मिन् सुयशः सारमुच्यते । नश्यद्भिर्न हि शक्येत वैरिणोऽस्य समीपतः ॥ यतः—“ दैवोऽपि शङ्कते तेभ्यः कृत्वा विघ्नानि खिद्यते । विघ्नैरस्खलितोत्साहाः प्रारब्ध ये त्यजन्ति न ॥ १ ॥ ” स्वस्थीकृत्योत्तरं पार्थः प्राह त्वं सारथिर्भव । अहं तु वैरिणो जित्वा वालयिष्याम्यर्जुनीः क्षणात् ॥ वैरिदृग्गोचरं गत्वा वादयन् शङ्खमर्जुनः । यदा तदाऽभवन् सर्वे प्रत्यक्षा वैरिणोऽग्रतः ॥ पार्थो जगावयं गङ्गा-सुतः शक्रसमो वलात् । अयं दुर्योधनो राजा पाण्डवानां रिपुर्दृढम् ॥ पाण्डोः सहोदरो ह्येषो विदुरो विदुराग्रणीः । पाण्डवाना गुरुर्द्रोणो-ऽश्वत्थामाऽयं वली ध्रुवम् ॥ अयं कर्णो रवेः पुत्रो दानी मानी महावलः । अयं सुयोधनो भ्राता दुर्योधनस्य दीप्तिमान् ॥ तस्येत्यादि रिपून् भूरीन् दर्शयन्नर्जुनो जगौ । यदीच्छास्ति ततो याहि वस्त्रादिग्रहणेऽधुना ॥ तदेकेन शरेणैव सर्वान् सुप्तान् करोम्यहम् । इपुणैकेन सर्वेषां शिर्षाणि मुण्डयामि च ॥ इतो गङ्गाङ्गजः श्रुत्वा शङ्खस्वानं जगावदः । भो दुर्योधन ! वामाक्षी-वेपभृत् फाल्गुनो ह्ययम् ॥ कृत्वा सन्धानमधुना राज्यमद्याऽस्य दीयते । नो चेदयं रिपून् प्राप्त-समये च हनिष्यति ॥ श्रुत्वैतद्गोकुलं लात्वा यावद् दुर्योधनो नृपः । याति तावद्रथं पार्थो-ऽप्रेरयद्वैरिणः प्रति ॥ अर्जुनोऽपूरयच्छङ्खं तथा यथा तदा रयात् । स्वयं व्याघुटिता गावः उत्पुच्छाः स्वपुरं प्रति ॥ अर्जुनोऽवक् त्वया गावो हरता स्वकुलेऽमले । कलङ्कः स्थापितो धार्त्त-राष्ट्रेण नश्यताऽधुना ॥ यतः—“ सम्यग् शोचेन हीनं क्षुतविवशतनु मुक्तकेशं हसन्तं निष्ठिवन्तं रुदन्तं मदनपरवशं जृम्भमाणं स्खलन्त । भ्रातभ्रातं विवस्त्रं परिकलितरुषं लङ्घितोच्छिष्ट ध्यानं छिद्रं लब्ध्वा विशन्ति ध्रुवमिह पुरुषं प्रायसो दुष्टलोपाः ॥ १ ॥ ” शात्रवे मिलिते गन्तु शक्यते किमु वैरिभिः ? । तिष्ठ क्षणं कुरुष्व त्वं रणं वलं प्रदर्शय ॥ उक्त्वेति फाल्गुनो वाण-धोरणीममुचत्तथा । यथाऽभून्मण्डपोऽरीणा-मुपरि क्षणतोऽमितः ॥ ततः सम्मोहनास्त्रेण मुक्तेन फाल्गुनस्तदा । निद्राणिताः कृता भूमौ पतिताः शत्रवोऽखिलाः ॥ विना भीष्मं द्विपोऽशेषा निश्चेष्टा अभवन् यदा । तदेति शक्रतनयः प्रोवाचेत्युत्तरं प्रति ॥ दुर्योधनस्य नीलानि वस्त्राणि त्वं विलोकय । पीतान्यार्के विचित्राण्य-न्येपां च मत्स्यनन्दन ! ॥ विलोक्यते दुकूलादि त्वद्भगिन्याः कृते ध्रुवम् । तत्त्वं गृहाण निःशङ्को यतः सुप्ता द्विपो ह्यमी ॥ केपाञ्चिदुत्तरो दिव्यदुकूलानि शिरोमणिम् । असिपुत्रीमसिं लात्वाऽऽरूढवान् स्यन्दनं निजम् ॥ अर्जुनो स्वर्नदीपुत्रं नत्वा विनयपूर्वकम् । निद्रोन्मोचकं वाणं मुमुचोपरि विद्विपाम् ॥ यतः—“ जितेन्द्रियत्वं विनयस्य कारणं

गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ १ ॥" दर्शयित्वा निजं देह दुर्योधनाय फाल्गुनः । ययौ विराटनगरो-पान्ते चोत्तरसंयुतः ॥ याम्युत्तरदिगायातौ वैरिणौ लज्जितौ स्वयम् । यय्तुः स्वपुरे ज्ञात-पाण्डुभूपाङ्गजस्थिती ॥ इतो भीमस्य सान्निध्याज् जित्वा शत्रून् क्षणादपि । सूतस्व स्वपुरीमध्ये विराटः समुपागमत् ॥ अर्जुनोऽवग् मया यद् यत् कृत चोपरि विद्विषाम् । तत्तत्त्वया पितुः पार्श्वेऽकथ्य दिनत्रयावधि ॥ यौवनेऽपि प्रशान्ता ये ये च हृष्यन्ति याचिताः । वर्णिता ये च लज्जन्ति ते नरा जगदुत्तमाः ॥ उत्तरं वैरिणं हन्तुं यातं मत्वा महीपतिः । सन्नह्य यावताऽचाली-द्रिपुसैन्यवधेच्छया ॥ तावदेको नरोऽभ्येत्य जगौ ते भूप ! नन्दनः । विजित्य विद्विपोऽशेपा-नुद्याने समुपागमत् ॥ तदा कङ्कोऽगदद्यस्य सारथिः स्याद् बृहन्नटः । तस्य हस्ते समायाति जयश्रीर्वैरिणा वधात् ॥ इतोऽकस्मादवारुह्य रथादुत्तरनन्दनः । नत्वा तातं जगौ सर्वे वैरिणो विजिता मया ॥ उत्तरो विद्विपोऽशेपान् जित्वा यदाऽऽगमद् गृहे । तदा नरेश्वरोऽकार्षी-न्नन्दनस्य जयोत्सवम् ॥ चतुर्थेऽह्नि कृताप्तार्चा-क्षुद्रदेवोल्लसद्बलिः । युधिष्ठिरः स्ववेषाढ्यो भीमादिभ्रातृसेवितः ॥ यावदायाति भूपाल-सभाया मदनोपमः । तावत्तान् पाण्डवान् ज्ञात्वो-त्तस्थौ विराटभूपतिः ॥ युग्मम् ॥ विराटः स्वासनारूढं कृत्वा युधिष्ठिरं बलात् । नत्वाऽवगपराध यत् कृत तत् क्षम्यतां मम ॥ युधिष्ठिरो जगौ युष्मत्-पार्श्वेऽस्माभिः सुखं स्थितम् । प्रतिज्ञा पूरिता चात्र पुर्या प्रसादतस्तव ॥ यतः—"गुणदोपसमाहारे गुणान् गृह्णन्ति साधवः । क्षीरनीरसमाहारे हंसाः क्षीरमिवामलम् ॥ १ ॥" स्वगुणं परदोषं वा वक्तुं याचयितुं परम् । अर्थिनं च निराकर्तुं सता जिह्वा जडायते ॥ स्वश्लाघा परनिन्दा च मत्सरो महता गुणे । असम्बद्धप्रलापित्व-मात्मानं पातयत्यधः ॥ विराटोऽवगिदं राज्य-मिभाश्वादिविभूपितम् । अङ्गी-कुरु प्रसद्येह धर्म्मसूनो युधिष्ठिर ! ॥ प्राह धर्म्मसुतो मत्स्य-भूपते ! सूनुना समम् । राज्यं कुरु चिरं देशा-न्तरेऽस्माभिर्गमिष्यते ॥ ततो विराटभूपालः प्राह धर्म्माङ्गजं प्रति । कियन्तो दिवसा अत्र स्थातव्यं सुखतः खलु ॥ अथाऽऽययौ हरिर्द्वार-वत्या मत्स्यपुरे वरे । मिलितु पाण्डवानां तु समागादभिमन्युयुग् ॥ विराटः केशवं सुष्ठु-भक्तपानादिदानतः । भक्त्या गौरवयाञ्चक्रे वर्यवस्त्रप्रदानतः ॥ तदा विराट-भूपाल उत्तरा निजनन्दिनीम् । वरोत्सवं वितन्वानः प्रददावभिमन्यवे ॥ कृष्णो विराटभूपालं पृष्ट्वा पाण्डु-तनूभवान् । समातृकान् निनाय स्वां नगरीं लसदुत्सवम् ॥ यादवानां कनीः कम्रा-श्चतस्रो रुचिरोत्सवम् । चत्वारः पाण्डुतनयाः पर्यणैषुः शुभेऽहनि ॥ अन्येद्युर्यादवाः सर्वे पाण्डवा भूपतीन् प्रति । सत्यवाग्भिश्च युष्माभिः सर्वं सेहेऽरिचेष्टितम् ॥ प्रतिज्ञा पूरितेदानीं तेन युष्माभिरञ्जसा । छेद्याः कण्टकिन सर्वे धार्त्त-राष्ट्राद्यो रयात् ॥ धर्म्मसूः प्रोक्तवान् को हि लक्ष्मीलवकृते नर । हन्ति स्वबान्धवान् प्राह भीमो धर्म्मसुतं प्रति ॥ युष्मद्वचनतोऽस्माभि-र्वर्द्धमाना द्विपोऽखिला । सेहिरे न त्विदानीं ते छिद्यन्ते पादपा इव ॥ आयुपो राजचित्तस्य पिशुनस्य धनस्य च । खलस्नेहस्य देहस्य नास्ति कालो विकुर्वतः ॥ अर्जुनोऽपि जगौ राज्य-मात्मीयं धार्त्तराष्ट्रजः । स्वयं न दास्यते चेद्धि हन्तव्योऽसौ तदा मया ॥ नकुलः सहदेवश्च प्रोचतुः को हि मानव । राज्ये सति निजेऽन्येपां लक्ष्मीं भुङ्क्ते युधिष्ठिर ! ॥ समुद्रविजयश्रीश-पाण्डवानां निदेशतः । इतो विजयनामाऽगात् हस्तिनागपुरं परम् ॥ दुर्योधनसभायां तु भीष्मादिषु नृपेष्वथ । उपविष्टेपु नृपं नत्वा विजयः प्रोक्तवानिति ॥ द्वारकाया अहं कंस-द्विषाऽत्र प्रेषितोऽधुना । कृष्णोक्तं त्वं महीपालाऽऽकर्णयाननतो मम ॥ पालयित्वा प्रतिज्ञां स्वां पाण्डवा आगता इह । याचन्ते भवतः पार्श्वे

निजं राज्यं मदाननात् ।। दुर्योधनो जगौ दूत ! पाण्डवा मूढमानसाः । गतं राज्यं हरेराशा—याचन्ते न हि तद्वरम् ।। विराटनगरस्थैस्तैः स्वस्य ज्ञापनतस्तदा । खण्डिता स्वप्रतिज्ञा तु पाण्डवैर्मुग्धबुद्धिभिः ।। इतः प्राह प्रतिज्ञां स्वा—मापूर्य पाण्डुनन्दनैः । विराटनगरे प्रादु—र्भूतं विद्धि सुयोधन ! ।। मासानामधिकानां तु गणनात्पाण्डुनन्दनैः । प्रतिज्ञा पूरिता स्वीया वाञ्छद्भिर्धर्म्ममात्मनः ।। दुर्योधनोऽभणद्दूत ! गच्छ त्वं पाण्डवान्तिके । युद्धं विना न दास्येऽहं तेभ्योऽपि ग्राममेककम् ।। यद्यागच्छन्ति ते पाण्डु—पुत्रा युद्धकृते त्विह । राज्याशा पूरयिष्यामि तेषां वधप्रदानत ।। ततो दूतो जगौ पाण्डु—पुत्राः सम्प्रति दुर्दमाः । विद्यन्ते दास्यते तेन राज्य तेभ्यस्तदीयकम् ।। तावकीनं त्वकं राज्य भुङ्क्ष्व पित्रार्पितं खलु । क्रियते नान्यराज्याशा दुःखदौर्गत्यदायिनी ।। दुर्योधनोऽवदद् द्यूते राज्यं तैर्हारितं पुरा । लभन्ते ते कथ राज्यं मत्तः सम्प्रति दूतराट् ।। सोऽथ पश्चात् समेत्यावग् दुर्योधनोदितं समम् । ततस्तत्र हरिर्गत्वा जगौ दुर्योधनं प्रति ।। आदौ तेषा समं राज्यं तेभ्य एव प्रदीयते । ततः कीर्त्तिः प्रजायेत भवतो जगतीतले ।। धार्त्तराष्ट्रसुतोऽभाणीद्राज्यं तैर्हारितं पुरा । मार्गयद्भिर्न लभ्येत साम्प्रतं पाण्डुनन्दनैः ।। कृष्णोऽवग्—महीलवकृते युद्धं न बुधैः क्रियते मनाग । अतस्ते मार्गयन्ति स्म साम्प्रतं ग्रामपञ्चकम् ।। उक्तञ्च-इन्द्रप्रस्थं निलप्रस्थं वारुणावतमेव च । कासीं च हस्तिनाख्य च देह्यभ्यो ग्रामपञ्चकम् ।। दुर्योधनोऽभणत् कृष्ण ! विना युद्ध कदाचन । क्षेत्रमेकं प्रदास्यामि पाण्डवेभ्योऽहमत्र तु ।। कृष्ण उवाच—अथवा ग्राममेकं हि तेभ्यो देहि कुरूत्तम ! । यशो भवति संसारे कुटुम्बे जायते रसः ।। तदा कृष्णाग्रे धृतराष्ट्र उवाच—यत्त्वया भाषित कृष्ण ! सर्वं सत्यं यथोचितम् । दुर्योधनो मदेनान्धो न करोति ममोदितम् ।। दुर्योधनोऽवग् तदेति—सूच्यग्रेण सुतीक्ष्णेन भिद्यते यावती मही । तावन्तीं नैव दास्यामि विना युद्धेन केशव ! ।। कृष्णोऽवग्—पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । युद्धे विजयसंदेहः प्रधानपुरुषक्षयः ।। मन्त्रहीनं हत राज्य मन्त्रहीन न मन्दिरम् । मन्त्रहीना हता लक्ष्मीर्मन्त्रहीनो हतो नृपः ।। दु० उवाच—अथ गृद्ध्रोदरे वासो वासो वा हस्तिनापुरे । अथ दुर्योधनो राजा राजा वा पाण्डुनन्दनः ।। धृतराष्ट्रो दुर्योधनस्य पुरः प्राह—एषा दिव्या गतिर्वत्स ! लक्ष्मीः कस्य न जायते । अकृतार्थे गते कृत्स्ने सर्वनाशो भविष्यति ।। सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः । अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ।। द्वावेतौ मूर्खराजानौ दुर्योधनदशाननौ । गोग्रहं वनभङ्गं च दृष्ट्वा यौ न निवर्त्तितौ ।। तदा कृष्णो धृतराष्ट्रस्याग्रे प्राह—एष दुर्योधनो राजा मधुपिङ्गललोचनः । न केवलं कुलस्यान्तं क्षत्रियान्त करिष्यति ।। हेमन्ते प्रथमे मासे त्रयोदश्यां तिथौ सिते । प्रवृत्तं भारतं युद्धं नक्षत्रे यमदैवते ।। दुर्योधनान्तिकेऽभ्येत्य केशवः प्रोक्तवानिति । अधुना पाण्डवा जाता बलिष्ठा नन्दनादिभिः ।। हिडम्ब-कीचक क्रूर-बक-किर्मीरराक्षसान् । जघान वायुसूर्यत् तच्छ्रुत भावि त्वया पुरा ।। अपाये पतितः प्राणा—पहारे त्वं पुरा हि यत् । पार्थेन रक्षितस्तत्र तच्च किं विस्मृतं तव ? ।। धर्म्मपुत्रस्त्वयेदानीं विद्यते हितकारकः । तेन कर्तुं न युज्येत युद्धं राज्यं तु दीयते ।। दुर्योधनोऽगदत् सूची—प्रान्तमात्रां वसुन्धराम् । विना युद्धं न दास्यामि तेभ्यः कृष्णाऽवधारय ।। भीष्म—द्रोण—कृपाचार्य—विदुराद्यास्तदाऽगदन् । स्वभ्रातृभ्यो वितीर्येत मार्गित ग्रामपञ्चकम् ।। तद्वाक्यैस्ताडितोऽत्यन्तं तीक्ष्णबाणैरिवाश्रितः । दुर्योधनोऽज्वलत्क्रोध—वह्निना हृदि दुर्मतिः ।। भीष्माद्या जगदुः कृष्ण ! गच्छ पाण्डवसन्निधौ । तेभ्यो लवमात्रां क्ष्मां धार्तराष्ट्रो न दास्यति ।। ततः कृष्णः समागत्य पश्चात् पाण्डवसन्निधौ । दुर्योधनो-

दितं तेभ्यो-ऽज्ञापयन्निखिल नरा ॥ दुर्योधनस्य राज्येच्छा विद्यतेऽत्यन्तमात्मनि । या सा तु पूर्यते युद्धे जीवितव्यापहारत ॥ राज्यलक्ष्म्यान्धलीभूतो दुर्योधनो दुराशयः । हितं वाक्यं न मन्येत पित्रादीनामपि स्फुटम् ॥ यतः—“ न पश्यति हि जात्यन्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्त अर्थी दोष न पश्यति ॥ १ ॥ ” राज्यलक्ष्मीमदोन्मत्तः पितरं मातरं गुरुम् । सुहृदं बान्धव पुत्र तृणाग्र नैव मन्यते ॥ युधिष्ठिरो जगौ युद्धे सहारो जायते नृणाम् । तथापि पूर्यते वाञ्छा दुर्योधनस्य साम्प्रतम् ॥ विचार्येति तदा कला-रिणा सार्द्धं तु पाण्डवा । सैन्यवर्न्य व्यधुः सद्यस्तस्य शत्रोर्मदच्छिदे ॥ याग्वा मत्स्यराट् धृष्ट-द्युम्नप्रद्युम्नसुन्दराः । सत्यकि-प्रबलाविष्ट-निविष्टाद्या महाभटा ॥ पार्थपुत्रोऽभिमन्य्वाह्वो भीमसूर्घटोत्कचः । इन्द्रचूडो मणिचन्द्र-श्चन्द्रचूडो वियद्गतिः ॥ महाबलो महावीर्यो महावेगो महामना । महासेनो महामनो महावीरो महाभटः ॥ एवंविधा भटा युद्ध-कर्म्मकुशलास्तदा । मिलिताः पाण्डवाना तु सैन्ये सङ्ख्यातिगाः किल ॥ कर्णं धनञ्जयो हन्तुं पार्थं कर्णोऽपि वाञ्छति । भीमं दुर्योधनो भीमो धार्त्तराष्ट्रं समीहते ॥ भीष्म. कृपो गुरुर्द्रौणिः शल्यः शकुनि रङ्गराट् । भगदत्तो महादन्त-सोमवाह्लीकशुक्तयः ॥ सौबलोलूककल्याण-वर्माणो वृषवाहनः । भूरिश्रवाः युधा कृष्ण-वर्मा हलायुधो धनी ॥ एवं भूरिबलं धार्त्त-राष्ट्रस्य मिलित तदा । दृष्ट्वा गोत्रवधं मत्वा विदुरो व्रतमाददे ॥ हन्तुं पाण्डुसुतान् पञ्च प्रतिज्ञां कुर्वतः किल । जयद्रथस्य श्रुत्वाऽवग् धनञ्जयो महाभुजः ॥ यतः—अनध्याये दिने छात्रान् पाठयेत् पण्डितः कुधी । तेन पापेन लिप्येऽहं यन्न हन्या जयद्रथम् ॥ एककूपादके ग्रामे धर्म्मकर्म्मविवर्जिते । तेन पा०॥ शीतभीताश्च ये विप्राः क्षत्रिया रणभीरवः । तेपा पा०॥ श्वानकुर्कुटमार्जारान् ये पुष्यन्ति दिने दिने । तेषां पा० ॥ कूटसाक्षी कृतघ्नश्च सुरापो वृषलीपतिः । तेन०॥ अन्नदाता भयत्राता यो गुरुं नाभिमन्यते । तेन०॥ सोदरे यस्य न प्रीतिः प्रीतिः स्यादितरे जने । तेन पा०॥ कुन्त्या कर्णः स्वसुतत्व ज्ञापितोऽपि जगाविति । पूर्वं मया कृता सेवा दुर्योधनस्य भूभुजः ॥ अधुना मुञ्चतो मेऽत्र दुर्योधनस्य सन्निधिम् । का शोभा जायते वाढ-मकीर्त्तिश्च प्रजायते ॥ माताऽपत्यस्य वाञ्छेत हितमेव महीतले । अहं तु दुर्योधनं मोक्तु न शक्तोऽस्मि मनागपि ॥ कुन्ती जगौ तु सर्वेषां माता मान्या निरन्तरम् । कर्णोऽवग् वेद्म्यहं ताव-कीनोक्त क्रियते किमु ? ॥ इतश्च यवनद्वीपात् वणिजो रत्नकम्बलान् । विक्रीय द्वारकापुर्यां जग्मू राजगृहं पुरम् ॥ जरासन्धाङ्गजा जीव-यशस चाल्पमूल्यतः ।-गृह्णाना वाणिजः क्रुद्धास्तत्र तामिति चुक्रुशुः ॥ अस्मामिर्द्वारिकायां तु कृष्णभूपस्य वल्लभाः । ललुर्द्विगुण-मूल्येन भवज्जल्पनमूल्यतः॥ श्रुत्वैतज्जीवयशसा प्रोक्त कः कृष्ण उच्यताम् । तैरुचे निहतः कंसो यत. स कृष्ण उच्यताम् ॥ आकर्ण्यैतद्वचो जीव यशा रोदनतत्परा । पितुः पार्श्वे समेत्याऽवक् कृष्णादियादवस्थितिम् ॥ यदि त्वया न हन्येत कृष्णो मे पतिघातकः । तदा ते जीवितं नास्ति ममापि तात ! साम्प्रतम् ॥ यत.—“ अणथोव वणथोव अग्गिथोव कसायथोवं च । न हु मे वीससिअव्वं थेवेपि कसायसेसम्मि-॥ १ ॥ ” वृश्चिकाना भुजङ्गाना दुर्जनाना च वेधसा । विभज्य नियतं न्यस्तं विषं पुच्छे मुखे हृदि ॥ वैरं वैश्वानरो व्याधि-वादव्यसनलक्षणाः । महानर्थाय जायन्ते वकाराः पञ्च वर्द्धिताः ॥ श्रुत्वेति नन्दिनीवाक्यं जरासन्धो रुपारुणः । बभूव वैरिण हन्तु-मुद्यतस्तत्र निर्दयम् ॥ वणिजां सन्निधौ सम्यक् पृष्ट्वा कंसरिपोः स्थितिम् । जरासन्धोऽभवत्कृष्णं रिपुं हन्तुमजायत ॥ सहदेवादयः पुत्रा लक्षशश्चेदि-भूपतिः । शिशुपालो मरुत्तेजाः स्वर्णनाभश्च रुक्मिराट् ॥ धरापालो धराधीशो महोजा गजकेसरी ।

रिपुमल्लादयोऽनेके मिलितास्तस्य भूपतेः ॥ मन्त्रीशैः कुशकुनैश्च वार्यमाणोऽपि भूरिशः । जरासन्धोऽचलत् चम्वा–चालयन् पृथिवीतलम् ॥ जरासन्धं समायात–माकर्ण्य नारदाननात् । कृष्णोऽपि कृष्णवर्त्मेव क्रोधाग्निज्वलितोऽजनि ॥ पार्श्वे श्रीवासुदेवस्य समुद्रविजयो नृपः । महानेमिर्मरुन्नेमिः सत्यनेमिर्धनञ्जयः ॥ अरिष्टनेमिकल्याण–नेमी केसरिवाहनः । जयसेनो महासेनः शिवानन्दः शिवाङ्गजः ॥ तेजःसेनो महाविष्णुर्महांसो गौतमो बली । इत्यादयो महायोद्धा बहवो मिलिताः क्रमात् ॥ अनेके यादवा राज–पुत्राः प्रबलविक्रमाः । कृष्णसैन्येऽमिलन् जेतुं वैरिचक्रं कृतत्वराः ॥ प्रद्युम्नशाम्बसारङ्ग–प्रमुखाः कृष्णनन्दनाः । बभूवुर्वैरिणं जेतु सज्जाः स्फुटभुजाबला. ॥ दशार्हाणां सुताश्चान्ये रामस्य नन्दना वराः । उग्रसेनादयो भूपा आसन् सज्जाः महौजस. ॥ शुभेऽह्नि शकुनैर्वर्यैः कृत्वाऽर्हत्पूजनं पुष्पैः । चचाल वैरिणं जेतुं विष्णुर्भूरिबलान्वितः ॥ पञ्चाशद्योजनान्यास ( नेरवीक ) स्वपुरात्कमलापतिः । शनिपल्याभिधे ग्रामे तस्थौ सङ्ग्रामहेतवे ॥ चतुर्भिर्योजनैरर्वाग् जरासन्धबलं महत् । विष्णोर्बलात् स्थितं वाञ्छन् रणं कर्त्तुं सहारिभिः ॥ इतो विद्याधरा भूरि–विद्याः प्रीतिजुषोऽनघाः । कृष्णसैन्ये समागत्याऽनमन् कृष्णस्य भूपतेः ॥ आदौ दुर्योधनो ज्ञात्वा यादवान् पाण्डवान् बहून् । प्रणम्य मगधाधीशं व्यजिज्ञपदिति द्रुतम् ॥ कृष्णसैन्येषु सन्त्येव बलिष्ठाः पञ्च पाण्डवा' । तानादौ समरे शत्रून् हनिष्यामि पृथग् रणैः ॥ इत. (तत') कृष्णो रिपु सद्यो भवता घातयिष्यते । दुर्योधनो जरासन्धा–देशाद्रणोद्यतोऽजनि ॥ इतो मुकुन्दमापृच्छ्य पाण्डवा अपि युत्कृते । अमेलयद् बल भूरि हन्तु शत्रूनशेषतः ॥ दुर्योधनबलं लात्वा भूरि कुरुक्षितौ द्रुतम् । गत्वा रणाय विदधे स्वान्ते हितावनीतलम् ॥ अक्षौहिण्योऽभवन्नेका–दश दुर्योधनेशितुः । अक्षौहिण्यो बभुः सप्त पाण्डवाना बले तदा ॥ कुटुम्ब–कलहं दृष्ट्वा पाण्डुभूपोऽथ संयमम् । लात्वा जगाम गीर्वाण–सदनेऽनघमानसः ॥ मुकुन्द सारथीभूतः फाल्गुनस्य रथे तदा । कुरुक्षेत्रे समाजग्मुः पाण्डवा अपि सद्बलाः ॥ नदत्सु रणतूर्येषु सैन्ययोरुभयोस्तदा । सङ्ग्राम सुभटाः कर्त्तुं प्रवृत्ता रणभूमिषु ॥ दण्डादण्डि तदा खड्गा–खड्गि शराशरि स्फुटम् । तेषु कुर्वत्सु शूरेषु द्रष्टुमेयुः सुरा अपि ॥ अभिमन्यौ शरश्रेणीं वर्षत्येव पयोदवत् । दुर्योधनबल भग्न गतं च विशरारुताम् ॥ तदा कृपः शरश्रेणीं मुञ्चन् लक्षप्रमाणतः । पाण्डवाना बल चक्रे विहस्तमसितो भृशम् ॥ विहस्तं स्वबलं दृष्ट्वोत्थाय फाल्गुननन्दनः । मुञ्चन् बाणान् कृप चक्रे जर्जर जीर्णवस्त्रवत् ॥ दुर्योधन–सुतः पार्थ–सूनुरुत्थाय तत्क्षणात् । तथा प्रचक्रतुर्युद्धं द्रष्टुमेयुः सुरा यथा ॥ सङ्ग्रामायोत्थिते भीमे उदस्थाद् धर्मनन्दनः । व्यालोडयन् रिपोः सैन्यं बाणश्रेणिविमुञ्चनात् ॥ भीष्मोऽपि विशिखश्रेणीं तीक्ष्णा मुञ्चन् द्विपः प्रति । सद्यो व्यावर्त्तयामास धर्मसूनुं रणाङ्गणात् ॥ भीमो रथचीत्कारैः क्षोभयन् संगरे जगत् । शत्रून् हन्तुं ययौ वैरि–सेनामध्ये सुविक्रमः ॥ दुर्योधनोऽथ दुष्टात्मा हन्तुं भीमं कृतत्वरः । शत्रून् निघ्नन् ययौ भीम–समीपे यमसोदरः ॥ तदा तथाऽभवद्युद्ध वायुसूधार्त्तराष्ट्रयोः । यथा समाययुर्द्रष्टुं विद्याभृतः सुरा अपि ॥ उत्तरायामुचच्छक्तिं शल्यभूपस्तथा करात् । यथा यमगृहं सद्योऽलञ्चकार गमान्निजात् ॥ युद्धं कुर्वन् नदीपुत्र तृषार्त्तं च धनञ्जयः । पाययित्वा जलं प्राहो–त्तिष्ठ युद्धं कुरूत्तम ! ॥ तदा कृष्णो जगौ धार्त्त–राष्ट्र ! सन्धेहि पाण्डवैः । सन्धिं दुर्योधनो नैव चक्रे स्वबल–गर्वितः ॥ तत्र भूरिमनुष्याणां संहारं वीक्ष्य संगरे । लात्वा दीक्षा नदीपुत्रो द्वादशस्वर्गमीयिवान् ॥ ततो दुर्योधनो द्रोणं सेनानीं चक्रिवान् द्रुतम् । तस्मै वितन्वते युद्धं पार्थो नमस्कृति व्यधात् ॥ द्रोणं

युद्धं वितन्वानं दृष्ट्वा धनञ्जयस्तदा । प्रावर्त्त रिपून् भूरीन् शमनोपमविक्रमः ॥ वासरान् द्वादशा-भीक्ष्णं कुर्वन् युद्धं धनञ्जयः । जघान विद्विषो भूरीन् यमसन्निभविक्रमः ॥ भगदत्तं नृपं धार्त्त-राष्ट्रस्य सेवकं वरम् । घ्नन्तं निजवलं दृष्ट्वा फाल्गुनस्तमयोधयन् ॥ पार्थस्तीक्ष्णशरैर्भित्त्वा भगदत्तं महीपतिम् । अजीगमद्यमावास भूरिसेवकसयुतम् ॥ भगदत्ते हते चक्र-व्यूहं दुर्योधनो व्यधात् । सप्तभिर्वलयैर्युक्तं दुर्लक्षागमनिर्गमम् ॥ चक्रव्यूहं द्रुतं भित्त्वा भीमोऽभिमन्युसंयुतः । प्रविष्टो विदधे युद्धं भूपैर्दुर्योधना-दिभिः ॥ सुयोधनमुखैर्धार्त्त-राष्ट्रजैः सवलैरपि । भीमादिषु च रुद्धेष्व-भिमन्युर्व्याकुलोऽजनि ॥ अभि-मन्युं दिनप्रान्ते जघानाशु जयद्रथः । अभिमन्यु हतं पार्थो मत्वा क्रुद्धोऽभवत्तदा ॥ विलोक्य कटकं सर्वं शत्रोर्जयद्रथं नृपम् । कपिध्वजो यमावास गमयामास वेगतः ॥ भीमस्तत्र रणं कुर्वन् हत्वा शत्रून् वहूँस्तदा । चक्रव्यूहाद्बहिः शीघ्रं निरगादक्षपागकः ॥ पार्थः कुर्वद्रणं कर्ण-मप्रेपयद्यमालयम् । विराट-द्रुपदौ द्रोणो निनाय यममन्दिरम् ॥ उक्तञ्च—" रणे चतुर्दशदिनाऽवधौ क्षयमुपाययुः । धार्त्तराष्ट्रस्य सप्ताप्य-क्षौहिण्योऽक्षीणदुःखदाः ॥१॥ " हते मालवभूभर्त्तु-रश्वस्थामाभिधे गजे । धर्म्मपुत्रो जगावश्व-स्थामाय मृतोदितः ॥ श्रुत्वैतद्वचनं द्रोणो-ऽश्वस्थामाह्वं निज सुतम् । मन्यमानोऽमुचत्तूणं हस्ताद्दुःखेन पीडितः ॥ तदा कृष्णगिरा पार्थो व्यधाद्द्रोणं तथा शरैः । यथा पपात भूपीठे महापर्वतशृङ्गवत् ॥ क्षणाद्धर्म्मसुतः प्राह न नरः कुञ्जरो हतः । ततो द्रोणो जगौ कृष्ण ! न मेऽगात् प्राणधारणा ॥ बाणविद्ध-तनुर्द्रोणो लात्वाऽनशनमञ्जसा । कृत्वा क्षपणकं ब्रह्म-लोकं त्रिदिवमीयिवान् ॥ हतं स्वपितरं मत्वा-ऽश्व-स्थामा कूटजल्पनात् । वैरिसेनामिपुव्रातै-र्व्याकुला विदधेतराम् ॥ सहदेवो रणे शत्रून् भूरीन् यमगृहेऽ-नयत् । नकुलोऽप्यनयद्धार्त्त-राष्ट्र पुत्रं वलाभिधम् ॥ एवं परस्परं युद्धं कुर्वतो-र्वलयोर्द्वयोः । अनेके मेदिनीपाला जग्मुर्यमनिकेतनम् ॥ अथ दुर्योधनः क्रुद्धो भीम-पुत्रं घटोत्कचम् । अवधीदसिना निघ्नन् भूरि पार्थिवनन्दनान् ॥ सुरेण कर्दमे क्षिप्ते रथे रविसुतं रणे । धनञ्जयो यमावासं प्रेपयामास लीलया ॥ भीमोऽथ गदया शत्रून् निघ्नन् दुर्योधनान्तिके । ययौ यावत्तदा धार्त्त-राष्ट्रोऽमुञ्चच्छरावलीम् ॥ धार्त्तराष्ट्रसुता ये ये भीमं हन्तु समुत्थिताः । भीमेन गदया ते ते प्रेपिता यममन्दिरम् ॥ भीमेन कुर्वता धार्त्त-राष्ट्रेण सह सङ्गरम् । अनेके प्रेपिता वैरिभूपाला यममन्दिरम् ॥ भीमेन गदया धार्त्तराष्ट्रस्तथा हतो हृदि । यथा दण्डधरावास-मलञ्चक्रे समाधिना ॥ दुर्योधने हते वायु-सूनुना समराङ्गणे । पुष्पवृष्टिं सुराश्चक्रुः पाण्डवानां शिरस्सु तु ॥ यतः—" धरान्तस्थं तरोर्मूल-मुच्छ्रयेणानु-मीयते । तथा पूर्वकृतो धर्म्मो-ऽप्यनुमीयेत सम्पदा ॥ १ ॥ राज्यं सुसम्पदो भोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्म्मस्यैतत्फलं विदुः ॥ २ ॥ धनदो धनमिच्छूनां कामदः काममि-च्छताम् । धर्म्म एवापवर्गस्य पारम्पर्येण साधकः ॥ ३ ॥ " तदा रणक्षितावेत्य गान्धार्यवग् हरिं प्रति । मया न भोक्ष्यते किन्तु धुक्ष्यते तनयैः समम् ॥ तदा प्राह हरि कार्यं न काष्ठाग्निप्रवेशनम् । यतो दुर्गतिपात स्या-त्काष्ठभक्षणतो नृणाम् ॥ यतः—" रज्जुगह-विसभक्खण-जलजलणपवेसतण्ह छुहदुहओ । गिरिसिरपडणाउ मुआ सुहभावा हुंति वंतरिआ ॥ इत्युक्ते हरिणाऽप्याक्षीद्गान्धारी न कदाग्रहम् । यदा तदाऽखिलो लोकः पुरमध्ये समीयिवान् ॥ रात्रौ कृष्णे स्थिते छन्नं गान्धारी लग्नक्षुद् यदा । तदा तत्र वरश्चूतः फलितोऽकारि नाकिना ॥ क्षुधातुरा तु गान्धारी तस्याम्रस्य फलानि तु । अत्युच्चत्वाद् गृहीतुं न शक्ताऽजनि मनागपि ॥ ततो भूरितनूजाना भूरिमिश्र कलेवरैः । उच्चस्थानं

विधायाशु तस्योपरि स्थिता च सा॥ तथापि न फलान्यात्तुं समर्था साऽभवद् यदा। तदा कलेवरैरन्यै-रुच्चस्थानं व्यधात्पुनः॥ तदा तु प्रकटीभूत्वा प्रोवाचेति रमाधरः। किमीदृग् दृश्यते निन्द्यं भवत्या विहितं खलु ?॥ ततोऽतिलज्जितातीव क्षुधया पीडिता सती। गान्धारी कमलेशस्य पुरस्तादित्यवक् स्फुटम्॥ वासुदेव! जरा कष्टं कष्टं वैधव्यवेदना। पुत्राणां मरणं कष्टं कष्टात्कष्टतरा क्षुधा॥ यतः—"पञ्च नश्यन्ति पद्माक्षि! क्षुधार्त्तस्य न संशयः। तेजो लज्जा मतिर्ज्ञानं मदनश्चापि पञ्चमः॥ १॥ जीवंति खग्गछिन्ना पव्वयपडियावि केवि जीवंति। जीवंति उदहिपडिया कुच्छिछिन्ना न जीवंति॥२॥ जीवंति अवडपडिया भयरवपडिया पुणोवि जीवंति। जीवंति खग्गछिन्ना कुच्छि०॥३॥ भूख मे माझी तू भणउं सव्वावाइ माई। मारिय कुडिया वहिरा माणुस आणइ ठाइ॥ ४॥" ततः कृष्णो जगौ पूर्व-कृतदुःकर्म्मतो दृढम्। न छुट्टन्ति सुराः शक्रा भूपास्तीर्थंकरा अपि॥ अटव्यां करिण हन्तुं व्याधेन सन्धितः शरः। व्याधं हन्तुं तदा ध्यातं करिणा स्वीयचेतसि॥ वृक्षस्थेनाहिना व्याधो निहन्तु वाञ्छितस्तदा। अत्रान्तरे समायातो गजस्तरोरधः पुनः॥ तदा व्याधः शरं क्षिप्त्वा गज हन्तुं स्ववीर्यतः। यावद्धस्त्यन्तिके यातस्तावत् स पतितो भुवि॥ हस्तिना पतता व्याधः प्रपितो यमसद्मनि। व्याधेन पतता सर्पो गमितो यममन्दिरे॥ तदैकेन बुधेनेति ज्ञात्वा तेषां विचेष्टितम्। अनित्यज्ञापनायेति श्लोक एक प्रजल्पितः॥ "अन्नं गयस्स हियए अन्नं वाहस्स संधियसरस्स। अन्नं फणिणो हियए अन्नं हियए कयंतस्स॥ १॥" पञ्चाशत्कोटि भूपीठे अनन्ते च नभस्थले। मिते पाशेविपत्यादेः (त्त्यादिः) पक्षिणा विधियोगतः॥ कृतकर्म्मसमूहेभ्यो न छुट्टन्ति शरीरिणः। अतः शोको न कर्त्तव्यः पण्डितेन हितेच्छुना॥ यतः—"धर्म्म-शोक-भयाहार-निद्रा-काम-कलि-क्रुधः। यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी॥ १॥" त्यक्ते शोके तदा देव्या गान्धार्या कमलापतिः। दाहं दुर्योधनादीनां देहिना विदधेतराम्॥ तत उत्थाय गान्धार्या पतित्वा पदयोर्भृशम्। युधिष्ठिरो जगौ मात-स्त्वमस्माकं मनोहरा॥ कुन्तीमिव भवन्तीं च स्वन्नपानादिदानतः। सततं पालयिष्यामो वयमादरपूर्वकम्॥ यतः—"नात्मीयं न हि परं सुजना मन्वते क्वचित्। दुर्जनानां तु न तथा जायन्ते मानसं मनाग॥१॥" ततोऽभ्येत्य निजे स्थाने समेत्य धर्म्मनन्दनः। कृष्णाद्यैर्बन्धुभिः सार्द्धं बुभुजे भक्तिपूर्वकम्॥ कुन्त्या इव तु गान्धार्या दत्त्वा भोजनमादितः। भुङ्क्ते युधिष्ठिरो भ्रातृ-सहितः प्रतिवासरम्॥ ततस्तैर्बन्धुभिः पाण्डु-पुत्रैः सार्द्धं रणाङ्गणे। कृष्णो न्यहञ्जरासन्धं त्रिखण्डमेदिनीपतिम्॥ ततो द्वारवतीपुर्यां कृष्णो राज्याभिषेकतः। राज्येऽस्थापि महीपालैः समुद्रविजयादिभिः॥ कृष्णराज्यप्राप्तिसम्बन्धः कृष्णचरित्राज्ज्ञेयः॥ मुत्कलाप्य ततः कृष्णं पञ्चापि पाण्डवाः क्रमात्। हस्तिनागपुरेऽभ्येत्या-ङ्गीचक्रे राज्यमात्मनः॥ प्रातरुत्थाय सततं स्मृत्वा पञ्चनमस्कृतिम्। नत्वा जिनं पदौ मात्रो-र्नेमुस्ते पाण्डुनन्दनाः॥ हस्तिनागपुरे पाण्डु-पुत्रान् न्यायाऽध्वना प्रजाः, पालयन्तो वितन्वन्ति धर्म्मं सर्वज्ञभाषितम्॥ यतः—"निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः। रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति, निर्देवं भवनं न राजति तथा धर्म्मं विना मानवः॥ इतश्च विहरन्नेमि-र्हस्तिनागपुरसन्निधौ। वप्रत्रयकृते देवैः सुरार्च्यः समवासरत्॥ तदा युधिष्ठिरो भ्रातृ-मातृपत्नीसुतान्वितः। धर्म्मोपदेशनां श्रोतु प्रभोरग्रे ह्युपाविशत्॥ तथाहि—"आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते। दृष्ट्वा

जन्मजराविपत्तिमरण त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ १ ॥ प्रमादः परमो द्वेपी प्रमादः परमं विषम् । प्रमादो मुक्तिपुर्दस्युः प्रमादो नरकप्रदः ॥ २ ॥ पुरुषः कुरुते पापं वन्धुनिमित्तं च वपुर्निमित्तं च । वेदयते तत्सर्वं नरकादौ पुनरसावेकः ॥ ३ ॥ स्वर्गच्युतानामपि जीवलोके चत्वारि नित्यं हृदये वसन्ति । दानप्रसङ्गो विमला च वाणी देवार्चन सद्गुरुसेवनं च ॥ ४ ॥ नमस्कारसमो मन्त्रः शत्रुञ्जयसमो गिरिः । गजेन्द्रपदज नीर निर्द्वन्द्वं भुवनत्रये ॥ ५ ॥ कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । शत्रुञ्जयं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥ ६ ॥ यो दृष्टो दुरितं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्घेशार्हन्त्यपदकृत् स जीयाद्विमलाचलः ॥ ७ ॥ पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुःकर्म्म क्षीयते मार्गे सागरोपमसञ्चितम ॥ ८ ॥ ” शत्रुञ्जयमाहात्म्यं तु श्रुत्वेति नेमिनो मुखात् । यात्रा कर्त्तुमना धर्म्म-पुत्रोऽभूत सिद्धपर्वते ॥ एकभुक्तं मया कार्यं तावन्नित्य जिनाधिप ! । यावन्न नम्यते शत्रु-ञ्जये आदिजिनेश्वरः ॥ चिन्तयत्यन्यदा धर्म्म-पुत्रो गन्तुं शिवाचले । पाण्डुसुरो दिवोऽभ्येत्य वभाषे तं शुभोदयात् ॥ सिद्धधात्रीधरे देवान् वन्दस्व श्रावृसंयुतः । साहाय्यं ते करिष्यामि प्रौढपुण्योदयान्ननु ॥ पितुरेतद्वचः श्रुत्वा प्रेष्य कुङ्कुमपत्रिकाः । यात्रायै भूपतीन् भूरीन्नाकारयद्युधिष्ठिरः ॥ सुदिने रैमये देवा-लये विम्वं जिनेशितुः । स्थापयित्वाऽचलद् भूरि-भूपैभ्यलोकयुग् नृपः ॥ तदा शतत्रयं स्वर्ण-मया देवालया वरा. । अन्येपामचलन् रूप्य-मयाश्चाष्टौ शतानि च ॥ कोटिद्वयमिताः श्राद्धा-स्तस्मिन् सङ्घेऽमिलंस्तदा । आचार्याणां शतान्यष्टौ सहस्राण्यष्ट साधवः ॥ भूपा अष्टौ शतान्येव महेभ्याः कोटिरेव च । लक्षार्द्धं कुञ्जरा अश्वा लक्षाण्यष्टौ तदाऽचलन् ॥ ग्रामे ग्रामे पुरे पुर्यां पूजां कुर्वन् जिनेशितु' । शत्रुञ्जयगिरिं हर्षा-दारूढः सङ्घसंयुतः ॥ तदा द्वारवतीपुर्याः कृष्णः श्रीसङ्घसंयुतः । तत्राययौ युगादीशं जिनं नन्तुं प्रमोदतः ॥ शृङ्गं मुख्यं प्रियालु च त्रिःप्रदक्षिणयन्मुदा । कृष्णः पाण्डवसंयुक्तः पादुकामनमद्धुरि ॥ मुख्ये जिनालये मूल-नायकस्यातिविस्तरात् । पाण्डवा वासुदेवश्च स्नात्रोत्सवमचीकरन् ॥ आरात्रिकं च मङ्गल-दीपकं हरिपाण्डवौ । कुर्वाणौ निर्वृतेर्यान-योग्यमर्जयतः स्म शम् ॥ अतीव जर्जरं चैत्यं दृष्ट्वा पाण्डवकेशवौ । जल्पतः स्म मिथश्चैत्यं नव्यमत्र च कार्यते ॥ तदाऽवक् पाण्डवो ज्येष्ठ-स्त्वया रैवतकाचले । उद्धृते जिनपागारः स्थापिता' प्रतिमाः पुनः ॥ यद्यादेशो भवेत्ते मे तदाऽस्मिन्नर्हदालये । उद्धारं करिष्यामि कल्याणसुखहेतवे ॥ हरिः प्राह यदीच्छा ते चैत्योद्धारकृतेऽधुना । तदोद्धाराऽऽदिदेवस्य चैत्यमेतद्युधिष्ठिर ! ॥ तदा पाण्डुसुरोऽभ्येत्य दत्त्वैकं रत्नमद्भुतम् । जगौ युधिष्ठिरेदानीं तीर्थोद्धारेहिता वरा ॥ कीरकाष्ठैरदार्वैश्चा-भेद्यैश्च वहुवारिभिः । चैत्यमुद्धारयामासा-ऽऽदिदेवस्य युधिष्ठिरः ॥ पारिजातद्रुशाखामि' शङ्कुं शल्यि समीपतः । अद्भुतं कारयामास युधिष्ठिरनरेश्वर' ॥ विम्वं लेप्यमयं मध्य-स्थितशङ्कुं युधिष्ठिरः । कारयित्वा मणिं तं च हृदि, तस्याध्यतिष्ठिपत् ॥ नेमेराद्यो गणाधीशो वरदत्तो वरेऽह्नि । विम्वं प्रत्यतिष्ठिपत्तस्मिँ-श्चैत्ये पाण्डवकारिते ॥ पूजामष्टविधा कृत्वा सङ्घयुग् धर्म्मनन्दनः । महाध्वजं ददौ चैत्ये तस्मिन् सूत्सवपूर्वकम् ॥ आदावारात्रिकं कृत्वा ततो मङ्गलदीपकम् । वरदत्तगुरूपान्ते शुश्राव धर्म्मसूदृपम् ॥ पूजा कृता प्रभोर्येन पुष्पेनैकेन देहिना । तस्य पाणितले स्वर्गशिवश्रीरेति लीलया ॥ ततो द्वारवतीपुर्यां गत्वा नत्वा जिनेश्वरम् । पाण्डुसूनुः समायातः सूत्सवं नगरे निजे ॥ अन्यदा नारदं तत्रा-यात वीक्ष्य च वेदिजा । न गौरवं यदा चक्रे तदा रुष्टोऽथ नारद' ॥ ततश्च

धातकीखण्डेऽपरकङ्कामिधे पुरे । पद्मोत्तरनृपोपान्ते गत्वा नारद ऊचिवान् ॥ अत्रैव भरते कुम्भि-पुर्यां पाण्डुनन्दनाः । विद्यते द्रौपदी पत्नी तेषा यादृग् वरास्ति हि ॥ तादृगैकापि ते पत्नी समस्त्यन्तःपुरे न च । श्रुत्वेति द्रौपदीं हर्तु-कामः पद्मोत्तरोऽभवत् ॥ तत एकं सुरं भक्त्याऽऽराध्य द्रुपदनन्दिनीम् । पद्मोत्तरो नृपोऽनैषीत् स्वकीयान्तःपुरे रहः ॥ द्रौपदी मार्गिता भोगं पद्मोत्तरमहीभुजा । जगौ न जल्प्यते सद्भिर्वच ईदृक् तमोमयम् ॥ " अलसा होए अकज्जे पाणिवहे पगुला सया होइ । परतत्तीसु अ बहिरा जच्चंधा परकलत्तेसु ॥ १ ॥ अप्पउ धूलिहि मेलियां सयणह दीधउ छार । पगि पगि माथा ढंकणउं जिणि जोइ परनारि ॥ २ ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सम्पूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥ ३ ॥ " अहं सती त्वया नैव याचनीया मनागपि । सत्याः सत्त्वस्य भङ्गे स्याद् गतिः श्वभ्रे न संशयः ॥ पद्मोत्तरप्रियामिः सा बोध्यमाना दिने दिने । मनाग् मनसि नाचालीद् मेरुपर्वतशृङ्गवत् ॥ इतश्चाऽपहृतां कृष्णां ज्ञात्वा पाण्डुतनूभवाः । व्यलोकयंश्च सर्वत्र लब्धा न द्रौपदी यदा ॥ गत्वा द्वारवतीपुर्यां पाण्डवा हरिसन्निधौ । द्रौपदीहरणोदन्तं जगदुश्च रहःस्थिताः ॥ ततः कृष्णोऽपि सर्वत्र प्रेष्यप्रेष्यान् बहूंस्तदा । कृष्णां विलोकयामास न ज्ञाता सा कचित्तदा ॥ इतस्तत्रागतः पृष्टो नारदो हरिणा जगौ । द्रौपदीसदृगी नारी धातकीखण्डगे पुरे ॥ रुचिरेऽपरकङ्काह्वे पद्मोत्तर-महीपतेः । शुद्धान्ते विद्यते कृष्ण ! शीलमाणिक्यवारिधिः ॥ युग्मम् ॥ ततः पाण्डुसुतैः सार्द्ध-माराध्य स्वस्तिकं सुरम् । दत्ते मार्गेऽम्बुधौ कृष्णो रथस्थश्चलितस्तदा ॥ पृथक् पृथग् रथस्थास्ते कृष्णाद्याः षडपि द्रुतम् । चलन्तोऽब्धौ ययुः पार्श्वे-ऽपरकङ्कापुरस्य तु ॥ पद्मोत्तरो नृपः शत्रू-नागतान् वीक्ष्य सानुगः । युद्धं कर्तुं यदा पुर्या निःससार पुरान्तरात् ॥ तदाऽऽदौ पाण्डवा युद्धं कुर्वाणास्तेन वैरिणा । भग्ना जनार्दनोपान्ते शरणं समुपागमन् ॥ भग्नान् पाण्डुसुतान् वीक्ष्य कृष्णो वप्रस्य तस्य तु । ऊर्ध्वमारुह्य चक्रे नृ-सिंहरूपं विभीषणम् ॥ पद्भ्यां स कम्पयन् वप्र-मकम्पयत्तथा भुवम् । यथा त्रुटत् त्रुटत् गेह-भित्त्यादीन्यपतन् भृशम् ॥ विभ्यन् पद्मोत्तरो भूपो ज्ञात्वा कृष्णं समागतम् । लात्वा कृष्णां च कृष्णं तु ननामामलभक्तिभृत् ॥ तदा शङ्खरवं विष्णोः श्रुत्वा पद्मामिधे पुरे । पद्मतीर्थङ्करोपान्ते वीरः कृष्णो जगावदः ॥ मच्छङ्खारववत् कोऽय शङ्ख वादयतेऽधुना । जिनेन्द्रः प्राह कृष्णस्या-गमनं भरतात्तदा ॥ वीरकृष्णो जगौ तस्य मिलिष्याम्यहमेव तु । जिनोऽवग् न हि जायेत सङ्गः केशवयोर्द्वयोः ॥ एवं प्रोक्तेऽ-र्हता वीरो यावत्तत्र ययौ द्रुतम् । तावत् स केशवो वार्द्धौ ययौ दूरतरं जले ॥ ततः शङ्खारवो लक्ष्मी-धवयोर्द्वितयोस्तदा । परस्परं श्रुतो द्वाभ्या केशवाभ्यां मनोरमः ॥ नावोत्तीर्य मरुत्कुल-ङ्कषां पाण्डुतनू-भवाः । हरेर्बलपरिक्षायै नाव नाप्रेषयत्पुनः ॥ दोर्भ्यां मरुन्नदीं सद्य उत्तीर्य केशवस्तदा । ज्ञात्वा पाण्डु-सुतस्वान्त-चिन्तितं रुष्ट ऊचिवान् ॥ पद्मोत्तरमहीपाल-जितैर्भवद्भिरेव किम् । न बलं मे स्वकीयं च दृष्टं तत्र पुरान्तिके ? ॥ लात्वा रुष्टो हरिर्हस्ति-पुरीं पाण्डुतनूभवे । दक्षिणां मथुरां प्रादात् कुन्तीवचोऽनु-कूलितः ॥ युधिष्ठिरः सदा भ्रातृ-मातृपत्नीसमन्वितः । जैनधर्म्मं विशेषेण कुरुते स दिनं प्रति ॥ अन्येद्युः सन्निधौ पाण्डु-पुत्राणामेत्य तत्क्षणम् । द्वारकादाहसम्बन्धं जराकुमार ऊचिवान् ॥ स्फुरद्द्युतिं वराकारं कौस्तुभं मणिमुज्ज्वलम् । दर्शयामास धर्म्माङ्ग-भुवे जराङ्गजस्तदा ॥ निरीक्ष्य पाण्डवाः शोकं कृत्वा दध्युरिदं हृदि । प्रव्रज्या गृह्यते चेद्धि तदा वयं प्रजायते ॥ कुर्वद्भिः समरं द्विड्भिः सार्द्धम-स्माभिरेव तु । अनेकशो हता जीवा-स्तदा दुर्योधनादयः ॥ भूरिकालं कृतं राज्य-मधुना चेन्न हि मुच्यते ।

नरकान्तं ततो राज्य-मस्माकमिह जायते ॥ विना न तपसा पाप-शुद्धिर्भवति कर्हिचित् । वसनं मलिनं शुद्धं वारिणा नैव जायते ॥ यतः—" यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, काम. शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति । उन्मीलन्ति महर्द्धय' कलयति ध्वंस चयः कर्म्मणां, स्वाधीन त्रिदिव शिवं च भवति श्लाघ्यं तपस्तन्न किम् ? ॥ पाण्डवाना मनो दीक्षा-गृहणेच्छु शिवाङ्गजः । ज्ञात्वा प्रैषि-न्मुनिं धर्म्म-घोप प्रबोधहेतवे ॥ पाण्डवा अपि सूरीश धर्म्मघोपं सुभक्तितः । नत्वाऽऽकर्णयितुं धर्म्म-मुप-विष्टास्तदग्रतः ॥ यतः—" अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसङ्ग्रह ॥ १ ॥ " धर्म्मं श्रुत्वाऽथ पप्रच्छुः किमस्माभिर्गते भवे । पुण्यं कृतं ? ततो धर्म्म-घोपज्ञानी जगाविति ॥ ग्रामेऽचलेऽभवन् पूर्व-भवे पञ्च सहोदराः । सुरभिः शान्तनुर्देव. सुमतिश्च सुभद्रकः ॥ कुर्वाणाः कृपिमुद्विग्ना दारिद्र्यविद्रुता भृशम् । यशोधरमुनेः पार्श्वे पञ्चापि व्रतमाददुः ॥ यतः — " यावत् स्वस्थमिद कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नाऽऽयुपः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-नादीप्त भवने तु कूपखननं प्रत्युद्यमः कीदृशः ? ॥१॥ " स्वदेहे निस्पृहो वैया-वृत्त्यकृत्यकरो गुरो । सुमतिः संयतश्चक्रे सत् तपः कनकाचलम् ॥ रत्नावलिं द्वितीयस्तु मुक्तावलिं तृतीयकः । सिंहनिकेतन तुर्योऽन्तिम आचाम्लवर्द्धकम् ॥ युग्मम् ॥ पश्चाद्भव-तपो व्यक्त्या वाच्य.-॥ एवं तप्त्वा तपो मृत्वा भूत्वाऽनुत्तरनाकिनः । ततश्च्युत्वा सुता यूय पाण्डो. स भवथाऽधुना ॥ श्रुत्वा पूर्वभवे राज्ये न्यस्य पुत्रं परीक्षितम् । पाण्डवा द्रौपदीकुन्ती-युता व्रतमलुस्तदा ॥ पठन्तस्ते सदा भक्त्या गुरुपार्श्वे जिनागमम् । एकादशाङ्गिनो जाता-स्तपःकरणतत्पराः ॥ पाण्डवा यथा तीव्रं तपस्तेपुस्तथा ग्रन्थान्तराद्वाच्यम् ॥ बोधयन्तो जनान् पाण्डु-तनया हस्तिकल्पके । पुरे नेमि-शिवप्राप्तिं शुश्रुवुर्मनुजाननात् ॥ ततः स्वकर्म्मसघात-क्षेपाय सिद्धपर्वते । गत्वा नानाविधं तेपु-स्तपः पाण्डुतनूभवाः ॥ आदायानशनं पाण्डु-पुत्रा' सर्वे क्षमाकराः । क्रमाद्घातीनि कर्म्माणि चिक्षेपुर्मोदसंयुताः ॥ मुनीना कोटिविंशत्या पञ्चापि पाण्डुनन्दनाः । कुन्त्या सह ययुर्मुक्तिं निःशेषकर्म्मणा क्षयात् ॥ सार्द्ध-पञ्चशतं भूप-पुत्रा' शत्रुञ्जयाऽचले । पाण्डुसूपृष्ठितो मुक्तिं ययुः कर्मक्षयात्तदा ॥ तपस्यन्ती तपस्तत्र द्रौपदी जीवितात्यये । जगाम पञ्चमे कल्पे क्रमान्मुक्तिं गमिष्यति ॥ युधिष्ठिरसुतो वैरि-मर्दनो मेदिनीपतिः । मथुरायां महीनाथै-रभिषिक्तः सदुत्सवम् ॥ तस्य पत्नी सुशीलाह्वाऽसूत पुत्र शुभेऽहनि । तस्य चन्द्राभिधां राजा ददौ सज्जनसाक्षिकम् ॥ मन्त्री सुमतिनाम्नाऽभू-न्मतिमान् भूपवल्लभः । राज्यकार्यं तथा चक्रे मन्त्री दृष्टो यथा नृपः ॥ अन्येद्युस्तस्य देशस्य सीमायां हरभूपतिः । हस्त्यश्वसुभटानीकैः शालितः समुपागमत् ॥ तदा पुर्या बहिर्गत्वा वैरिमर्दनभूधवः । युद्धं तथा व्यधाद् बाढ यथा भग्नोऽभवत् स्वयम् ॥ तत' कुञ्जरमारूढो वैरिमर्दनभूपतिः । यमवत् समरे शत्रून् हन्तुं सद्यः समागमत् ॥ तदा तथा व्यधाद् युद्ध वैरिमर्दनभूधवः । यथा वैरी ययौ यतो यमस्य मन्दिरे रयात् ॥ ततस्तस्य द्विपः पुर्यां गत्वा स्वाज्ञां प्रजाः समाः । ग्राहयामास भूपालो वैरिमर्दन इद्धधीः ॥ यतः—" रम्यं रूपं करणपटुताऽऽरोग्यमायु-र्विशालं, कान्ता रूपानमितरतयः सूनवो भक्तिमन्तः । पट्खण्डोर्वीतलपरिवृढत्वं यशः क्षीरशुभ्रं, सौभाग्यश्रीरिति फलमहो धर्म्मवृक्षस्य सर्वम् ॥ तत्रोद्यानेऽन्यदा धर्म्म-सूरीशाः साधुसेविताः । ययुर्भूपतिर्नन्तुं तदा गत्वाऽनमंश्च तान् ॥ तदा सूरीश्वराः प्रोचु-र्धर्म्म एव जिनोदितः । विहितः शिव-सौख्याय जायते भविकाङ्गिनाम् ॥ विशेपतः शिवक्ष्माध्रे गत्वा यो वृपभं प्रभुम् । भक्त्याऽर्चयति

सोऽर्हन्नाय लभते शिवसम्पदः ॥ यतः—पदे पदे विलीयन्ते भवकोटिभवान्यपि । पापानि पुण्डरीकाद्रे-र्यात्रां प्रति यियासताम् ॥ एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः स मुच्यते ॥ प्रत्यहं पुण्डरीकाद्रिं ध्यायेद् यस्तु सुवासनः । संसारतापमुत्सृज्य प्राप्नोति सः परं पदम् ॥ श्रुत्वेति श्रीगुरोर्वाणीं वैरिमर्दनभूधवः । भूरिसङ्घयुतः शत्रु-ञ्जये नन्तुं जिनान् ययौ ॥ तत्र श्रीऋषभेशस्य पूजामादौ सुविस्तरात् । विधाय पादुके भूयः पूजयामास भक्तितः ॥ ततो राजादनीं वर्या-क्षतैर-वर्द्धयत्तथा । नृपो यथाऽक्षरत् क्षीरं स्नेहयद् वसनानि च ॥ ततोऽन्येषु जिनाधीश-सद्मसु बिम्ब-महताम् । पूजयामास भूपालः सङ्घलोकसमन्वितः ॥ ततो रैवतकक्ष्माध्रे गत्वा श्रीनेमिनं जिनम् । वैरिमर्दनभूनाथोऽर्चयामास च सादरम् ॥ ततः क्रमान्निजे पुत्रे सिंहाह्वं न्यस्य सूत्सवम् । दीक्षां लात्वा ययौ मुक्तिं वैरिमर्दनभूपतिः ॥ १२३२ ॥

इति पाण्डवचरित्रं समाप्तम्

---

**भरहकराविअ बिंबे चिल्लतलाई गुहाठिअ नमंतो । जहिं होइ इगवयारी तं सित्तुंजय महातित्थं ॥२६॥**

'भरतः' चक्री प्रथमः तेन कारापितं विम्बं श्रीऋषभदेवस्य 'चिल्लतलाइ' चिल्लक्षुल्लकसरसी-गुहास्थितो नमन् प्रभुर्यत्र 'एकावतारी' एकभवमोक्षगामी भवति, तत् शत्रुञ्जयो महातीर्थं जयतात् ॥

**दहिफलफलयसमीवे अलक्खदेउलियपरिसरपएसे । सिवदारं पिव दारं जीइ गुहाए विहाडेउ ॥२७॥**
**अट्ठमतवेण तुट्ठो कवडिजक्खो जहिं भरहपडिमं । वंदावइ जयउ तयं सिरिसित्तुंजय महातित्थं ॥२८॥**

व्याख्याऽनयोरेवं—'दधिफलः' विभीतकः स एव फलको वृक्षः तस्य 'समीपे' पार्श्वे अलक्षाह्वा देवकुलिका तस्य परिसरः-समीपं तस्य प्रदेशे द्वारं विद्यते प्रासादस्य शिवद्वारमिव यस्या गुहाया 'विहाडेउं' विघटयितुं अष्टमतपसा तुष्टः कपर्दियक्षः 'जहिं' यत्र भरतकारापिते प्रासादे भरतप्रतिमाम् आदि-चक्रिप्रतिमां बिम्बं वन्दापयति अष्टमतपसः कर्तृकस्य तज्जयतात् श्रीशत्रुञ्जयमहातीर्थम् ॥

अत्र कथा—उज्जयिन्यां नृपो वीरसेनो वीरमती प्रिया । तनयौ मदनो नन्दः पितृभक्तिकरौ सदा ॥ अन्यदा गेहिनी पत्यु-र्मस्तकात्पलितं सितम् । आदाय मुमुचे हस्ते प्रोवाचेति तया पतिः ॥ वृद्धत्वानल-दग्धस्य सारयौवनवस्तुनः । दृश्यते देहगेहेषु भस्मेव पलितच्छलात् ॥ पटु रटति पलितदूतो मस्तक-मासाद्य सर्वलोकस्य । परिभवति जरामरणं कुरु धर्म्मं विरम पापेभ्यः ॥ स्वामिन् ! पलितमेतद्धि त्वां ज्ञाप-यति साम्प्रतम् । त्यज त्वं त्वरितं राज्यं श्वभ्रं राज्याद्भवेद्यतः ॥ यममिव गृहीतदण्डं हरिमिव सगदं शशाङ्कमिव वक्रम् । शम्भुमिव विरूपाख्यं जरा करोत्यकृतपुण्यमपि ॥ श्रुत्वा पत्नीवचः पुत्रे राज्ये न्यस्य सदुत्सवम् । प्रियायुक्तोऽभवत् सद्य-स्तापसो मेदिनीपतिः ॥ देवी गर्भमनाख्याय तदा पत्या समं ध्रुवम् । तापस्यजनि कल्याण-कमलाहेतवे द्रुतम् ॥ क्रमात्पुत्र्यां प्रजातायां मृत्वा वीरमती द्रुतम् । तस्या नाम ददौ तातः सुन्दरी सुन्दराकृतिः ॥ क्रमाद्यौवनमापन्ना श्रान्तस्य पितुरन्वहम् । विश्रामं ददते नित्य-मिन्धना-नयनादिना ॥ मोहाविष्टोऽन्यदाश्लेष्टुं पुत्रीं स तापसो ध्रुवम् । प्रधावन् पतितोऽकस्मा-द्दन्ता भग्नास्तु

वेगतः ॥ ततः स तापसो दध्या–विदं स्यादैहिकं फलम् । परलोके प्रजायेत कीदृग् न ज्ञायते मया ॥ चिन्तयन्निति भूपः स जातिं स्मृत्वा स्वयं तदा । आसीत्प्रत्येकबुद्धस्तु यतिलिङ्गधरः क्रमात् ॥ बोधयन् पृथिवीं वीर–सेनोऽवन्तीपुरान्तिके । आगतो बोधितुं सूनो–रन्यदो वरचिन्तया ॥ दानशीलतपोभाव-भेदैर्धर्मं चतुर्विधम् । आराधयन् सुरावासं शिवश्च लभते क्रमात् ॥ पल्योपमसहस्रं तु ध्यानाल्लक्षमभि-ग्रहात । दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥ भरतेन गुहायां तु कारितायां शिवाचले । यो जिनान् नौति तस्य स्या–न्मुक्तिर्भवान्तरे ध्रुवम् ॥ यतः—" यः कारयति सर्वज्ञ–प्रासादं शिवपर्वते । तस्य स्वर्गापवर्गादि–सुखं नो दुर्लभं भवेत् ॥ १ ॥ " आकर्ण्यैतत्तदा–नन्दो गत्वा शत्रुञ्जयाचले । अलक्षदेव–कुलिका–मध्ये तस्थौ समाहितः ॥ अष्टमान्ते कपर्दी तु यक्षोऽभ्येत्य जगावदः । सन्तुष्टस्तपसा तेऽहं मत्पृष्ठौ त्वं समाव्रज ॥ गुहायां वृषभं देवं वन्दयिष्ये तवाचिरात् । नन्दोऽवग् वाञ्छितं मे त्वं यक्षराट् ! पूरयाधुना ॥ ततो गुहान्तरे नीत्वा नन्दं कपर्दिको मुदा । वन्दयामास नाभेयं भरतस्थापितं ध्रुवम् ॥ ततो गत्वा जिनं धर्मं कृत्वा स नन्दभूपभूः । मृत्वाऽभूत् स रमापुर्यां पद्मो भूमीपतेः सुतः ॥ लात्वा दीक्षां गुरूपान्ते क्षिप्त्वा कर्म्माखिलं तदा । अवाप्य केवलज्ञानं लोकालोकावलोककम् ॥ प्रबोध्य भविनो भूरीन् जैनधर्म्मे स केवली । आयुःप्रान्ते ययौ मुक्तिं भूरिसाधुसमन्वितः ॥२५॥

इति गुहास्थश्रीऋषभजिननमनतो भवत्रयमुक्तिगमने नन्दभूपकुमारकथा

---

कल्याणनगरे वज्र–सेनस्य मेदिनीपतेः टङ्ककानां तु पञ्चाशत् षड्युता अभवन् गृहे ॥ इत-श्चन्द्रपुरे वीर–भूपस्य सुभटा वराः । लक्षपञ्चमिता आसन् लक्षमेकं तुरङ्गमाः ॥ हायनं प्रति वीरक्ष्मा-पतिः कल्याणपत्तनम् । भङ्क्त्वा जयपताकां तु लभते न च वैभवम् ॥ शीर्षाणि पतयो राणां समानयति सन्ततम् । तस्मै दत्ते सहस्रं तु टङ्ककानां महीपतिः ॥ आगच्छन् स रिपुः क्षीण–बलो भूत्वाह धीसखम् । कथं प्रजेष्यते वज्रसेनो मन्त्री ततो जगौ ॥ निष्काशय निजाद् देशाद् मां पौरभूसाक्षिकम् । ततो निष्काशितो मन्त्री भगवान् भवतः क्रमात् ॥ भगवद्रूपभृद् वज्रसेनस्य मेदिनीपतेः । मिलितो मानि-तोऽत्यन्तं मन्त्रीशो मेदिनीभुजा ॥ क्रमाद्धर्म्मोपदेशस्य छलात् स भगवान् जगौ । वापीकूपतटाकर्तु-भवनानि धनव्ययात् ॥ यतः—" यः कारयति भूपालो जनोऽन्यो वा सुभावतः । तस्य स्वर्गापवर्गादि-शर्माणि स्युः करे किल ॥ १ ॥ " श्रुत्वैतद् भूपतिर्वापि–कूपर्त्तुसदनादिकम् । कारयन् कृतवान् कोशं रिक्तं द्रव्येण कालतः ॥ स्वल्पद्रव्ये नृपे वज्रसेने जाते स धीसखः । समेत्य स्वासिनः पार्श्वे वैरिस्वरूपमुक्त-वान् ॥ ततः सर्वबलेनैव गत्वा वीरमहीपतिः । मन्त्रिबुद्ध्या रिपुं जित्वा स्वपुरं समुपागमत् ॥ कृत्वा सङ्घं महान्तं च गत्वा शत्रुञ्जयाचले । अर्चयित्वा युगादीशं ध्वजादि च व्यधान्नृपः ॥ गुहाया महिमानं तु श्रुत्वा धरणिनायकः । अलक्षमरुत्तो गेहे तपश्चक्रे यथोदितम् ॥ अष्टमान्ते कपर्दी तु यक्षोऽभ्येत्य जगा-विदम् । सन्तुष्टस्तपसाऽहं ते त्वं मत्पृष्ठौ समेहि भोः ! ॥ वन्दयिष्ये गुहायां त्व–मादिदेवं जिनेश्वरम् । राजाऽवग् वाञ्छितं मे त्वं यक्षराट् पूरयाधुना ॥ ततो गुहान्तरे नीत्वा भूपं कपर्दिको मुदा । वन्दयामास नाभिक्ष्मा-पतिनन्दनमादरात् ॥ ततः श्री उज्जयन्ताद्रौ गत्वा श्रीनेमिनं जिनम् । नत्वाऽगात् स्वपुरीं भूपो नातो-

त्सवपुरस्सरम् ॥ कृत्वा राज्यं चिरं भूपो मृत्वा स्वर्गे च पञ्चमे । सुखं भुक्त्वा ततो भीम-पुरेऽभून्नृपनन्दनः ॥ श्रुत्वा धर्म्मं गुरूपान्ते लात्वा दीक्षां सुभावतः । सर्वकर्म्मक्षयान्मुक्तिं जगाम मेदिनीपतिः ॥२०॥

इति द्वितीयकथा

---

श्रीमद् बृहत्तपोगच्छे श्रीजगच्चन्द्रसूरयः । अभूवँस्तत्पदे वर्या देवेन्द्रसूरयोऽभवन् ॥ तत्पट्टे धर्म्मघोषाह्वाः सूरयो वरबुद्धयः । तत्पट्टे चाभवन् सोम-प्रभाचार्या वराशयाः ॥ तत्पट्टे सोमतिलका वभूवुर्गुरवो वराः । तत्पट्टे चाभवन् देव-सुन्दराभिधसूरयः ॥ ततः पञ्चशती वाचं-यमानामभवद्वरा । पञ्चाशीतिमिति बुद्धा भव्यानबोधयन् क्रमात् ॥ एकदा सिद्धभूमिध्रे विबुधा देवमङ्गलाः । श्रीयुगादिजिनं नन्तुं जग्मुः साधुसमन्विताः ॥ प्रणम्य श्रीयुगादीशं विबुधा देवमङ्गलाः । क्षुल्लकाह्वसरस्यन्ते देवान्नन्तुं समागमन् ॥ विभीतकतरूपान्ते-ऽलक्षदेवकुलस्य तु । समीपे विबुधा देव-मङ्गलाः समुपागमन् ॥ कारिते भरतेनादि-जिनबिम्बं गुहास्थितम् । नन्तुं चित्तं समाधाय स्थितास्ते विबुधा जगुः ॥ भोः कपर्दिन् ! सुरोत्तंस ! मां वन्दयादिबोधिदम् । यदा तदा मया कार्यं पारणं क्षपणस्य हि ॥ युग्मम् । उपवासत्रयोपान्ते कपर्दी यक्षराट् तदा । [ पुङ्गव ] उत्पाटय नीतवानादि-जिनस्य सन्निधौ बुधम् ॥ कपर्दी प्रोक्तवान् देव-मङ्गल ! त्वं बुधोत्तम ! । कारितं भरतेनादि-जिनं वन्दस्व भावतः ॥ एकावतारकत्वेन त्वं नीतोऽत्र मयाधुना । ततो बुधोऽनमद्देवं युगादीशं सदादरात् ॥ स्वकटीदोरकेनैव प्रभोरङ्गुष्ठमद्भुतम् । वेष्टयित्वा मिनीते स पण्डितो देवमङ्गलः ॥ उरुजप्रमितान् शालि-तन्दुलान् स्वामिनः पुरः । ढौकितान् निर्जरैर्वीक्ष्य मुमुदे विबुधस्तदा ॥ दीपान् मणीमयान् देव-विहितान् स्वामिनः पुरः । उद्योतं कुर्वतोऽपश्यत् पण्डितो देवमङ्गलः ॥ उदारैः स्तवनैर्भूरि-भक्तिभावितमानसः । तुष्टाव प्रथमं देवं पण्डितो देवमङ्गलः ॥ ततो यावत्प्रभोरग्रे ध्यानं कर्त्तुं स्थितो बुधः । तावदुत्पाटय यक्षेन पश्चान् नीतो निजे पदे ॥ यावद्विलोकते विद्वान् तावद् बिम्बं न हीक्षते । किन्त्वलक्षाभिधं देव-कुलं ददर्श नेत्रयोः ॥ तत उत्थाय मुख्यादि-भवनेऽभ्येत्य पण्डितः । नत्वाऽऽदिमं जिनं भक्त्या-ऽवततार गिरेस्ततः ॥ अष्टमान्ते बुधः पाद-लिप्ताह्वे नगरे तदा । स्वयं विहृत्य चक्रे तु पारणं भवतारणम् ॥ एतत् सर्वं ततोऽभ्येत्य देवसुन्दरसन्निधौ । बुधोऽगदत् तत ख्यातिर्विद्यतेऽद्यापि सा पुनः ॥ २१ ॥

इति देवमङ्गलविबुधदेवनमस्कारसम्बन्धः

---

संपइ-विक्कम-वाहड-हालपलित्तामदत्तरायाइं । जं उद्धरिहंति जयउ तं सित्तुंजय महातित्थं ॥२९॥

सम्प्रतिभूपः-कुणालकुमारो, विक्रमादित्यो, वाहडः, शातवाहनः, पादलिप्त, आमभूप-दत्तभूपादयो बहवो नरेन्द्रा यत् तीर्थमुद्धरिष्यन्ति तत्तीर्थं महातीर्थं जगज्जनमध्ये वर्त्तते । तत्रादौ सम्प्रतिभूपतेः सम्बन्धो लिख्यते, तथाहि—

पाटल्याह्वे पुरे पूर्वं नन्दा अष्टौ महीधराः। आसन् वशीकृतानेक-भूपाः स्वभुजलीलया॥ एतेषां चरितानि अष्ट स्वर्णमयपर्वतरचनाद्यात्मकानि तेषु तेषु शास्त्रेषु ज्ञेयानि। नवमस्य नन्दनस्य किञ्चित् स्वल्पं सङ्क्षेपात् कथ्यते पाटल्याह्वपुरे पूर्वं०॥ इतो गोल्लाभिधे देशे ग्रामे चणकनामनि। चण्यभूद्वाडवो जैन-धर्म्मकर्मणि कर्म्मठः॥ तस्या भद्रस्वभावाऽभूत् पत्नी चणेश्वरी वरा। द्विजकुलागतं धर्म्मं मुञ्चते नैककं क्षणम्॥ यतः—"धनदो धनमिच्छूनां कामदः काममिच्छताम्। धर्म्म एवापवर्गस्य पारम्पर्येण साधकः॥१॥" क्रमाच्चणेश्वरी शील-शालिनी शोभनेऽहनि। सूते स्म नन्दनं भूत-धात्रीव निधिमद्भुतम्॥ दन्तान् सूनोर्मुखे दृष्ट्वा जन्मकाले पिता तदा। पप्रच्छ संयतान् किं स्यात् सूनावस्मिन् शुभाशुभम्॥ मुनिः प्राह सुतो राजा क्रमाद् भावी तवैष च। चणी दध्यावयं पुत्रो राज्याद् श्वभ्रं गमिष्यति॥ यतः—"विशाखान्ता घना राज्यं नरकान्तं निगद्यते। प्रासादः स्याद् ध्वजान्तो हि मुक्त्यन्तं सातमुच्यते॥१॥" राज्याप्राप्तिकृते सूनो-स्तस्य चणी द्विजस्तदा। अघर्षयद् रदान् सर्वान् प्रस्तरैः कर्कशैर्भृशम्॥ दन्तघर्षणवृत्तान्ते पित्रोक्ते मुनिरूचिवान्। भाव्येष भूपतिर्बिम्बान्तरितो दन्तघर्षणात्॥ चाणिक्य इति नामाऽदात् सूनोश्चणी पिता तदा। अपाठयत् क्रमात्पुत्रं शास्त्राणि पण्डितान्तिके॥ कृष्णविप्रस्य कुन्त्याख्यां पुत्रीं चणी द्विजोत्तमः। शोभने वासरेऽन्येद्यु नन्दनं पर्यणीणयत्॥ चणिकस्याभवद् गेहे दारिद्र्यं दुःखदायकम्। ततः प्राप्नोति सततमपमानं पदे पदे॥ सहोदयव्ययाः पञ्च दारिद्र्यस्यानुजीविनः। ऋणं दौर्भाग्यमालस्यं बुभुक्षाऽपत्यसन्ततिः॥ विवाहे जायमाने तु चणिभार्या पितुर्गृहे। यदाऽगमत्तदा तत्रा-ययुर्भूयिष्ठसज्जनाः॥ भगिन्योऽपि लसद्दिव्य-वस्त्रभूषणभूषिताः। समेता जहसुर्वोढं चणिपत्नीं कुभूषणाम्॥ यतः—"विद्यावृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः। सर्वे ते धनवृद्धस्य द्वारि तिष्ठन्ति किङ्कराः॥१॥" दध्यौ चणिप्रिया ह्येष संसारोऽसार एव तु। स्वसारोऽपि हसन्ति स्म यतो मां कुत्सिताम्बराम्॥ यतः—"यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् गुणज्ञः। स एव वक्ता स च माननीयः, सर्वे गुणाः काञ्चनमाश्रयन्ते॥ आगतां स्वगृहे म्लान-मुखीं स्वीयप्रियां वराम्। दृष्ट्वा बभाण चाणिक्यः किं दूनासि प्रिये! ऽधुना?॥ पत्न्या प्रोक्ते स्वदूनत्व-स्वरूपे चणिनन्दनः। जगौ प्रिये! न कर्त्तव्यं दुःखं शं ते भविष्यति॥ न ह्येकदिशया कालो गमिष्यति नृणां क्वचित्। यतोऽर्के द्वादशो वर्षावर्षोऽवस्था क्रमात्पुनः॥ पाटलिपुत्रनगरे-ऽर्थिभ्यो नन्दनृपं धनम्। ददानं सादरं श्रुत्वा तत्र चाणिक्य ईयिवान्॥ मण्डितेष्वासनेषु क्ष्मा-पतिभृत्यैः स वाडवः। मौले यदासने स्वेच्छ-मुपविष्टो मृगेन्द्रवत्॥ नन्दः सनन्दनोऽभ्येत्य रुद्धं द्विजन्मनासनम्। मौलं दृष्ट्वा रोषेणाह भृत्यान् प्रत्युच्चसंरवम्॥ उत्थायाऽमुं द्विजं दुष्टं मौलादस्माद्धि विष्टरात्। ततो नृपानुगः प्राह चाणिक्यं वाडवं प्रति॥ उत्तिष्ठाऽऽसनतोऽमुष्मादुपविशान्यविष्टरे। द्वितीये विष्टरे न्यासी-द्विप्रो निजं कमण्डलुम्॥ दण्डेनाथ तृतीयं तु चतुर्थं जपमालया। पञ्चमं चोपवीतेनो-त्थाप्यमानो रुरोध सः॥ बलादुत्थाप्यमानोऽथ चाणिक्योऽवग् नृपं प्रति। भवन्तं ससुतं राज्यात् करिष्येऽहं च दूरतः॥ राजा प्राह वराकोऽयं सुप्तो व्योम्नि दिनात्यये। वातूलोऽजनि तेनाऽयं जल्पत्येवमतोऽधुना॥ गते चाणसुते राजा दध्यौ नन्दमहीधवाः। अष्टावष्ट गिरीन् स्वर्ण-मयान् विदधिरे ध्रुवम्॥ अहं च नवमं स्वर्ण-गिरिं कुर्वेऽधुना द्रुतम्। ततस्तेनापि नन्देन कारितः स्वर्णपर्वतः॥ निर्गत्य नगरात्तस्माच्चाणिक्यः कोपवह्निमान्। दध्यौ बिम्बान्तरीभूत्वा भूपाद्राज्यं करोम्यहम्॥ "कइ अप्पण पइ थाइ कइ प्रभु कीजइ हाथि। कज्जकरे वा मानुसह बीजओ माग न अत्थि॥१॥" राज्ययोग्यं नरं द्रष्टुं

भ्रमंश्चाणिक्यवाडवः । नन्दभूमिपतेर्ग्रामे मयूराह्व समीयिवान् ॥ तत्र भूमिपतेर्ग्रास-मदन् मयूरपोषकः । मयूरान् पोषयामास तेषां रक्षाविधानतः ॥ तत्र गृहे गृहे भिक्षा-हेतवे चणिनन्दनः । भ्रमन् समगमद् गेहे मयूरपोपकस्य तु ॥ मयूरपोषकस्यैव दुहितू रूपसञ्जुषः । आसीदापन्नसत्त्वाया-श्चन्द्रपानाय दोहदः ॥ पप्रच्छ चणिसूर्मोर-पोपकान्ते कृतादरम् । कस्मात्ते दृश्यते दुःखं कृष्णाननविरीक्षणात् ॥ मयूरपोषकेनोक्ते दुहितुर्दोहदे सति । चणिसूः प्रोक्तवान् कार्य उपचारो द्रुतं त्वया ॥ दोहदेऽपूरिते त्वस्या मरणं प्राग् भविष्यति । मयूरपोषकः प्राह तर्ह्युपायो निगद्यताम् ॥ चाणिक्योऽवक् समुत्पन्न-मस्यामपत्यमेव तु । यूयं दत्ताऽधुना मह्यं पूर्णः स्याद्दोहदस्तदा ॥ नो चेत् ते दुहिता गर्भ-सहिता प्राग् मरिष्यति । ततो मातृपितृभ्यां तु मेने तद्वचनं भिया ॥ चाणक्योऽचीकरच्छिद्र-युक्तं मण्डपमद्भुतम् । अधस्ताच्छायिता सैव नार्यूर्ध्व-वदना ततः ॥ राकायां मध्यरात्रौ तु नभोमध्ये निशाकरे । दर्शयामास चाणिक्य-स्तस्या बिम्बं विधोस्तदा ॥ ऊर्ध्वं सितापयःक्षेपा-त्तस्या आस्यस्य तत्क्षणात् । चन्द्रामृतस्य पानेच्छा पूर्णा च धिषणाबलात् ॥ क्रमाच्चन्द्रेऽग्रतो याते लोका एवं जगुस्तदा । पीतोऽनया विधुः पूर्णः पीयूषेणाधुना ध्रुवम् ॥ ततो मयूर-पोषस्य पुत्री सुस्था सती भृशम् । असूत नन्दनं चारु-वेलायां सुखभाक् किल ॥ पूर्णोऽस्या दोहदो गुप्त-चन्द्रात्तस्यैव पानतः । अतः पिता ददौ चन्द्र-गुप्तेत्याह्वां प्रमोदतः ॥ अमुं चावसरे ह्यङ्गी-करिष्ये बालकं ननु । अतोऽधुनाऽर्जनायाहं भ्रमामि पृथिवीतले ॥ चणिप्रसूर्विमृश्येति ग्रामे ग्रामे पुरे पुरे । पृष्ट्वा धातुविदो धातु-वादं चक्रे धनाय सः ॥ युग्मम् ॥ इतोऽर्भकैः समैः सार्द्धं चन्द्रगुप्तो दिने दिने । दीव्यन् ग्रामपुरस्वामी स्वयं भवति निश्चितम् ॥ हस्तीकृत्य हयीकृत्य बालकानारुरोह सः । प्रायो भाविस्वरूपं तु ज्ञायते स्वस्वकृत्यतः ॥ कृत्रिमैः कुञ्जराऽश्वाद्यैः राज्यस्थितिं वितन्वतः । चन्द्रगुप्तस्य चाणिक्यो वीक्ष्याऽऽचष्ट कुमार ! भोः ! ॥ मह्यं विश्राणयाऽश्वादि ततः कुमार आह तु । यथारुचि गृहाण त्व-मश्वेभादिधनं बहुम् ॥ चाणिक्यो ध्यातवानेष दानशौण्डो महापुमान् । जगौ च स्वकृतं पूर्वो-पकारं पुरतः शिशोः ॥ यद्यागच्छ मया सार्द्धं तदा राज्यं तवाचिरात् । दास्यामीति शिशोरग्रे चाणिक्यः प्रोक्तवान् किल ॥ स्वराज्यप्राप्तिसम्बन्धं मत्वा चणिप्रसूगिरम् । चन्द्रगुप्तोऽनुमेने हि राज्यसम्प्राप्तिवाञ्छया ॥ यतः—" मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः, क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः । क्रीडासद्म कलेर्विवेकशशिनः स्वर्भाणुरापन्नदी-सिन्धुः कीर्त्तिलताकलापकलभो लोभो नृणां वर्द्धते ॥ १ ॥" चन्द्रगुप्तं गृहीत्वाऽथ चाणिक्यो धातुवादतः । कृत्वा स्वर्णादिपत्त्यादि-सेनां पृथ्वीं चकार सः ॥ ततः सर्वबलेनाऽऽशु तया पत्त्यादिसेनया । आवेष्टयच्चतुर्दिक्षु पाटलीपुत्रपत्तनम् ॥ नन्दभूपोऽल्प-शिविरं मत्वा चाणिक्यमागतम् । निर्गत्य नगरात् सद्यः कुट्टयामास लीलया ॥ शकुनेनावगत्य स्व-विषये विघ्नमञ्जसा । मत्वा नंष्ट्वा ययौ दूरं चाणिक्यश्चन्द्रगुप्तयुग् ॥ गृहीतुं चन्द्रगुप्तं तु नन्दोऽपि वरसादिनः । आदिशदथ तं चेलु-स्तस्य पृष्ठौ कृतादराः ॥ जितकाश्यथ नन्दोऽपि समेत्य स्वपुरे द्रुतम् । जयढक्कारवं वाद-यामास वस्संरवम् ॥ तेषां च सादिनां मध्या-देकः सादी कृतत्वरः । अधावच्चन्द्रगुप्तस्य पृष्ठौ हन्तुमना ध्रुवम् ॥ चाणिक्योऽपि तमायातं दृष्ट्वा सरोवरान्तरे । चन्द्रगुप्तं रहः स्थाप-यामास वरबुद्धिमान् ॥ सादी पप्रच्छ चाणिक्यं चन्द्रगुप्तः क विद्यते ? । चाणिक्योऽवग् सरोमध्ये स्थितोऽऽस्ति चन्द्रगुप्तकः ॥ मुक्त्वा तत्र हरिं सादी यावच्चन्द्रान्तिके ययौ । तावत् स मज्जनं कृत्वा सादिहस्तादसिं ललौ ॥

तेनासिना शिरस्तस्य छित्त्वाऽऽगत्य बहिस्तदा । चाणिक्यायामिलन् खड्गं दर्शयामास तस्य तु ॥ अश्वारूढं द्रुतं चन्द्र-गुप्तं कृत्वा चणिप्रसूः । चलन् सादिनमन्यत्तु नन्दस्य दृष्टवान् पुनः ॥ तदा चन्द्रं च चाणिक्यं दृष्ट्वाऽऽयान्तौ यमाकृती । नंष्ट्वाऽगाद्रजकोऽन्यत्र तत्र चाणिक्य ईयिवान् ॥ स्थापयित्वा प्रद्रोमध्ये चन्द्रगुप्तं चणिप्रसूः । बद्ध्वा छन्नं हरिं कूप-पार्श्वे तस्थौ स्वयं पुनः ॥ सादी पप्रच्छ रजक ! दृष्टोऽत्र ना व्रजं-स्त्वया । चणिप्रसूर्जगौ कूप-मध्ये स्वाङ्गुलिसञ्ज्ञया ॥ तत्रापि पूर्ववत् मुक्त्वा नाक्ष्यं कूपे प्रविश्य च । यावच्चन्द्रं न्यहत् तावत् सोऽप्यसिं लातवान् करे ॥ तेनासिना च तं हत्वा सादिनं नन्दसेवकम् । बहि-र्निर्गत्य चाणिक्य-मन्त्रिणो मिलितः पुनः ॥ ततो द्वावपि वर्माणि पत्त्राणि परिधाप्य च । अश्वारूढौ चलन्तौ तु ययतुर्ग्रामसन्निधौ ॥ बुभुक्षया म्रियन्तं तं चन्द्रगुप्तं सुरूपकम् । मत्वा भिक्षाकृतेऽचाली-च्चाणिक्यो नगरं प्रति ॥ मार्गे भुक्तघृतक्षीर-खण्डं नरं मनोहरम् । आयान्तं ज्ञातवान् पृष्ट्वा प्रपश्यन् चणिनन्दनः ॥ तस्योदरं विदार्याशु लात्वा क्षीरादिकं तदा । क्षिप्त्वा च भाजने चन्द्रो-पान्ते चाणिक्य ईयिवान् ॥ स्वामिभक्त्या च चाणिक्यः क्षीरादि चन्द्रगुप्तकम् । भोजयित्वा जलं स्वच्छं पाययामास शीघ्रतः ॥ स्वस्थीभूतस्ततश्चन्द्र-गुप्तश्चाणिक्यमन्त्रिणम् । जगौ त्वदुपकाराच्च च्छुटिष्याम्यहकं कथम् ॥ ततः स्वोदरपूर्त्यै तु भ्रमंश्चणिप्रसूः पुरे । कस्यचित् सदनेऽश्रौषी-च्छार्या वचनमीदृशम् ॥ भो डिम्भ ! उष्ण-रब्बातः मा शयं क्षिपदात्मनः । चाणिक्य इव नन्दस्य पुरवेष्टनवद् धुरि ॥ आदौ बहिः स्थिता रब्बा भक्षयेत शनैः शनैः । सुखेन मध्यमा रब्बा पूर्वकं भक्षयाविराट् ॥ श्रुत्वैतच्चणिसूर्दध्यौ मामेषा धर्षयत्यलम् । तेनादौ परितो ग्रामान् स्वीक्रियन्ते मया दृढम् ॥ ततः सुखान्निगृह्येत पाटलीपुत्रपत्तनम् । ततो नन्दोऽपि हन्येत सुखेन मयका खलु ॥ चन्द्रगुप्ताय दास्येत राज्यं नन्दमहीपतेः । ततो मनोरथः स्वीयः पूर्णं मम भविष्यति ॥ ततो हिमवतः कूटे गत्वा पर्वतभूभुजा । सार्द्धं मैत्रीं व्यधाद्गाढं चाणिक्यश्चन्द्रसंयुतः ॥ चन्द्रगुप्तं गुरुमिव चाणिक्यः सेवते मुदा । नन्दराज्येऽथ चन्द्रं तु वाञ्छन् स्थापयितुं स च ॥ पर्वतं भूपतिं प्राह चाणिक्यो वाडवोत्तमः । यदि त्वं कथितं मे च कुरुषे साम्प्रतं द्रुतम् ॥ तदा नन्दस्य भूपस्य राज्यार्द्धं दास्यते तव । राज्यार्द्धं चन्द्रगुप्ताय मया देयं प्रपश्यतः ॥ मानिते पर्वतक्षोणी-भुजा चाणि-क्यमन्त्रिराट् । पर्वतक्षोणिभुग्युक्तो नन्ददेशे समागमन् ॥ परितः परितो ग्रामान् पुरदुर्गाणि बुद्धितः । वशीकुर्वन् क्रमाच्चन्द्र-गुप्तः पर्वतयुग् ययौ ॥ पाटलीपुत्रपर्यन्ते गत्वा भूयिष्ठसेनया । चन्द्रगुप्तः स्थितो जेतुं नन्दं चाणिक्यसंयुतः ॥ चन्द्रगुप्तबलेनाऽथ पाटलीपुत्रपत्तने । रुद्धे नन्दः प्रजायुक्तो विह्-स्तोऽभूद्विशेषतः ॥ चन्द्रगुप्तोऽथ नन्देन सार्द्धं युद्धं तथाऽकरोत् । यथा दत्त्वा पुरीद्वारं नन्दोऽस्थाद्रण-तत्परः ॥ यदा न गृह्यते चन्द्र-गुप्तेन पाटलीपुरम् । तदा चणिप्रसूर्जज्ञौ मातॄणां बलमद्भुतम् ॥ पुस्तकं स्वशये कृत्वा चाणिक्यो नगरान्तरे । गत्वा पृष्टो जनैः किञ्चिन् किञ्चिद् वक्ति चतुःपथे ॥ जनैः पृष्टं कदा ह्येतत् पुरमुद्वेष्टयिष्यते । चाणिक्योऽवग् न वक्तुं तु शक्यते बिभ्यता मया ॥ लोका जगुः कुतो भीस्ते विद्यते तन्निगद्यताम् । चाणिक्यः प्राह मातॄणां देवीनां पार्श्वतो भयम् ॥ लोका जगुस्त्वया यद्यत् प्रोच्यते वः पुरोऽधुना । तदास्माभिः करिष्येऽतः दुष्करं सुकरं पुनः ॥ नाटयित्वा क्षणं ध्याने चाणिक्यः प्रोक्त-वानिति । सन्ति देवगृहे सप्त मातरो याः स्थिताः पुरः ॥ ताश्चेदन्यत्र गीर्वाणा-लये स्थाप्यत एव तु । तदा निखिललोकानां सुखं भवति निश्चितम् ॥ तत उत्पाटयामासुः पौरास्तन्मातृमण्डलम् । मुमुचुः

सदनेऽन्यत्र पुरस्य सातहेतवे ॥ स्वस्वार्थं मनुजः क कि-मकार्यं कुरुते न हि ? । चाणिक्यश्च तदाऽतीव मुमुदे मानसे भृशम् ॥ यतः—" वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः । निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः, सर्वं कार्यवशा-ज्जनोऽत्र रमते नो कस्य को वल्लभः ॥ १ ॥ " चाणिक्यवचनाच्चन्द्र-पर्वतावपसृत्य च । यदा स्थितौ तदा लोकाः श्रयन्ते चणिनन्दनम् ॥ यतः—" मायाशीलह माणुसह किम पत्तिज्जणु जाइ । नीलकंठ महुरं लवइ सविससुयंगम खाइ ॥ १ ॥ " चाणिक्यप्रोक्तवेलायां चन्द्रपर्वतभूपती । अचिन्तितौ पुरे सेना-युक्तौ समीयतू रहः ॥ क्षीणकोशस्तदा नन्द-श्चाणिक्येनेति जल्पितः । प्रतिकूला ग्रहाः सन्ति तवेदानीं नरेश्वर ! ॥ उपायेनाऽधुना प्राणा रक्ष्यन्ते च त्वया खलु । ततोऽग्रे ते भवेद् भद्रं जीवतो न मृतस्य च ॥ नन्दो जगौ कथं प्राणा रक्ष्यन्ते मयकाऽधुना । कृत्वा ध्यानं ततः प्राह चाणिक्यस्तं नृपं प्रति ॥ भार्याद्वयीयुतः किञ्चिद्-धनयुक्तो नराधिप ! । धर्मद्वाररथेनाथ निर्याहि साम्प्रतं द्रुतम् ॥ कुर्वाणस्य मम ध्यानं बली कोपि न भूपतिः । विघ्नं करिष्यते दृष्टि-गोचरे मे च भूधव ! ॥ लात्वा पत्नी द्वयं पुत्री-मेकां च नन्दभूपतिः । यदा निर्याति च तदा नन्दपुत्र्यपि निर्ययौ ॥ चन्द्रगुप्तं नृपं दृष्ट्वा नन्दस्य दुहिता रमा । कामातुराऽभवद् बाढं वरितुं तं स्मरोपमम् ॥ दुहितुः स्वान्तगतं चन्द्र-गुप्तं ज्ञात्वा नृपो जगौ । पिताऽगदत्—वत्से ! गच्छ वृणु स्वेच्छं चन्द्रगुप्तं नराधिपम् ॥ यतः—" वरीतुं तु वरं कन्या-स्वान्तचिन्तितमेव हि । ईहते तु विशेषेण क्षत्रियस्य च कन्यका ॥ १ ॥ " ततस्तद्भवा सद्यो रथादुत्तीर्य वेगतः । चन्द्रगुप्तरथारूढा-ऽजनि नन्दस्य नन्दिनी ॥ तदा तस्य रथस्याशु अभज्यन्त नवारकाः । चन्द्रः प्राह च चाणिक्यं नेयं वर्या कनीनिका ॥ चाणिक्योऽवक् कनी ह्येषा भविष्यति तवानघा । वरीतायां त्वया त्वस्यां कन्यकायां नरेश्वर ! ॥ यावन्नव नृपान् राज्य-मखण्डं ते भविष्यति । यतो नृपा गजारूढा भवन्ति न रथश्रिताः ॥ युग्मम् ॥ सा कन्या चन्द्रगुप्तेन वरीता समुपागता । चाणिक्योऽवग् धुरि स्वामिन् ! रमा स्वयंवरागता ॥ अतस्तव महद्राज्यं वर्द्धमानं भविष्यति । एषा मुख्या त्वया कार्या सर्वासामपि योषिताम् ॥ ततस्तस्मिन् वरे राज्ये चन्द्रगुप्तः सदुत्सवम् । उपविष्टो ददौ दानं याचकेभ्यो यथेप्सितम् ॥ ततो नन्दनृपावासे प्रविष्टौ चन्द्रपर्वतौ । विभक्तुं नन्दलक्ष्मीं तु प्रारेभेते परस्परम् ॥ नन्दगृहे स्थिता चैका कनी सुराबलोपमा । वरीता पर्वतेनाशु तत्स्वरूपमजानता ॥ तस्या लग्ने करे सद्यः पर्वतो मेदिनीपतिः । दाहज्वरणसंव्याप्तो मरणाभिमुखयभवत् ॥ उपचारेषु भूयस्सु कारितेषु प्रयत्नतः । पर्वतः पार्थिवः प्राप पञ्चत्वं कर्मयोगतः ॥ श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं, सुखं दुःखाघ्रातं वपुरनियतं व्याधिविधुरम् । दुरापाः सत्पत्न्यो बहुभिरथवा किं प्रलपितै-रसारः संसारस्तदिह निपुणं जागृत जनाः ! ॥ माता पिता भेषजमिष्ट-देवो विद्या प्रिया नन्दनबन्धवाश्च । राजाश्वभृत्यावलपद्मवासे-नेशा जनं ! रक्षितुमन्तकाले ॥ अर्द्धराज्य-हरः सद्यः पर्वतः पृथिवीपतिः । चन्द्रगुप्तस्य पुण्यस्यो-दयात् पञ्चत्वमाप्तवान् ॥ यतः—" सत्तुं शरीरा-यत्तुं दैवायत्ति रिद्धि । इक्कलउ बहुहिं मिडइ जिहां साहस तिंहा सिद्धि ॥ १ ॥ खेडीम खूंटा टालि खूटा विणु खाखइ नहीं । साहसी हुतउ हलि वहइ देवह तणइ कपाली ॥ २ ॥ उद्यमं कुर्वतां पुंसां भाग्यं सर्वत्र कारणम् । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ ३ ॥ " जाते राज्यद्वये चन्द्र-गुप्तस्य मेदिनीपतेः । राज्याभिषेचनं चक्रे पुनर्मन्त्र्यादिभिर्मुदा ॥ चाणिक्यः सर्वराज्यस्य चिन्तां कुर्वन्

विशेषसः । भूपस्य वल्लभो जात आत्मेव सततं दृढम् ॥ उक्तञ्च—“महावीरस्य देवस्य मुक्तेः वर्षशते गते । पञ्चपञ्चाशदधिके चन्द्रगुप्तोऽभवन्नृपः ॥ १ ॥” अत्रान्तरे गुराचार्याः पावयन्तो महीतलम् । तस्यां पुर्यां वहिर्देशे समवासार्पुरञ्जसा ॥ ततो गत्वा नृपस्तत्र नत्वा श्रीगुरुराट्क्रमौ । धर्म्मं श्रोतुं ययौ याव-त्तावच्छ्रीगुरवो जगुः ॥ यतः—“निद्रान्ते परमेष्ठिसंस्मृतिरथो देवार्चनव्यापृतिः, साधुभ्यः प्रणतिः प्रमादविरतिः सिद्धान्ततत्त्वश्रुतिः । सर्वस्योपकृतिः शुचिव्यवहृतिः सत्पात्रदाने रतिः, श्रेयोनिर्मलधर्म्मकर्म्मनिरतिः श्लाघ्या नराणां स्थितिः ॥ १ ॥” इत्यादि धर्म्ममाकर्ण्य चाणिक्यचन्द्रगुप्तकौ । सम्यक्त्वादियुतं श्राद्ध-धर्म्ममादत्त आदरात् ॥ ततो महीपतिर्न्याया-ध्वना रक्षन् प्रजाः सदा । धर्म्मकृत्यानि कुरुते चाणिक्यमन्त्रिसंयुतः ॥ चन्द्रगुप्तस्य राज्ये तु प्रदेशे विषमे स्थिताः । नन्दानुजीविनश्चौर्यं कुर्वते पुरुषा रहः ॥ पुररक्षाकरं कञ्चिद् वीक्षमाणः चणिप्रसूः । कस्यचित् कोलिकस्यौको जगामामलबुद्धिमान् ॥ मत्कोटकदरिण्वग्निं क्षिपन्तं कोलिकं तदा । दृष्ट्वा चणिप्रसूः प्राह क्रियते किं त्वया ह्यदः? ॥ कोलिकः प्राहमत्पुत्रो-पद्रवोत्पादकानमून् । मत्कोटकानहं मूला-दुन्मूलयन्निहास्मि हि ॥ वयं धीव्यवसायाभ्यां ज्ञात्वा कोलिकमञ्जसा । चाणिक्यः प्रोक्तवाँश्चन्द्र-गुप्तस्य पुरतश्च तत् ॥ आकार्य कोलिकं तत्र चन्द्रगुप्ताच्चणिप्रसूः । पुराध्यक्षं व्यधात् सद्यो वैरिच्छेदनहेतवे ॥ कोलिकेन क्रमान्नन्दानुगाश्चौराः प्रपञ्चतः । विश्वास्य जघ्निरे नून-मुपलक्ष्येङ्गितादिना ॥ यत्र ग्रामे न चाणिक्यो भिक्षां प्रलब्धवान् पुरा । तेषां शिक्षां वितीर्यादौ जगाविति पुनः पुनः ॥ दीनदुःस्थतपस्व्यादि-जनेभ्य आदरात् सदा । स्वसम्पत्त्यनुसारेण दानं देयं भवादृशैः ॥ “न कयं दीणुद्धरणं न कयं साहम्मियाण वच्छल्लं । हिययम्मि वीयराओ न धारिओ हारिओ जम्मो ॥ १ ॥ अभयं सुपत्तदाणं अनुकंपा उचिअ कित्तिदाणं च । दोहिंवि मुक्खो भणिओ तिन्नि वि भोगाइयं दिंति ॥ २ ॥” ततो निरन्तरं दानं ददानो मेदिनीपतिः । कर्णादिदानिनां श्रेणौ रेखां समगमत् क्रमात् ॥ चन्द्रगुप्तस्य कोशं तु स्वल्पं ज्ञात्वा चणिप्रसूः । दीनारैः स्थालमापूर्य लोकान् प्रति जगावदः ॥ अक्षैर्दीव्यन् मया सार्द्धं यो मां जेष्यति मानवः । दीनारपूरितं स्थालं स गृह्णातु ममान्तिकात् ॥ जेष्यामि यं नरं दीव्यन् स तु दीनारमेककम् । मह्यं दास्यतु रेखेयं प्राविजेयं वचो मम ॥ ततो जयप्रदैः पाशै-र्दीव्यन् चणिप्रसूस्तदा । कोटित्रयप्रमाणाँश्च दीनारानर्जयज्जनात् ॥ दीनारशतमेकं तु इभ्यमिभ्यं प्रति स्फुटम् । याचते चणिसूः कोश-कृते चन्द्रस्य भूपतेः ॥ तदेभ्या जगदुः स्तोका श्रीरस्त्यसन्निकेतने । तेन किं दास्यते तुभ्यं लक्ष्मीरस्माभिरेव तु ॥ मण्डयित्वोत्सवं भोक्तु-मिभ्यानाकार्य मन्त्रिराट् । भोजयित्वा वरं भोज्यं पाययामास वारुणीम् । शायिताश्चित्रशालाया-मिभ्यास्ते हास्यतत्पराः । जगदुः स्वस्वगेहस्य लक्ष्मीसङ्ख्यां परस्परम् ॥ चाणिक्योऽवग् गृहे मे तु रैदण्डः स्वर्णकुण्डिकाः । चतस्रो वरमाणिक्य-सम्पूर्णाः सन्ति सुन्दराः ॥ चतुःकोटिमिताः सन्ति दीनाराच्चण्डिकाभिधा । विद्यते मद्वशो राजा तद् वादयत झल्लरीम् ॥ ततः झल्लरीवाद्ये वादिते कोलिकैस्तदा । जगाविभ्योऽपरो हस्त-मुत्क्षिप्योच्चैःस्वरं स्फुटम् ॥ योजनाष्टशतीयाने यानीभस्य पदानि तु । तानि स्वर्णसहस्रेण प्रत्येकमर्चयाम्यहम् ॥ प्राग्वद् वादितझल्लर्या-मपरः कश्चिदब्रवीत् । तिलानामूढके ह्युप्ते वृष्टे मेघे शुभेऽनिले ॥ तिला भवन्ति यावन्त-स्तावन्ति मम सद्मनि । जाम्बूनदसहस्राणि सन्ति वादत झल्लरीम् ॥ युग्मम् ॥ प्राग्वद् वादितझल्लर्या-मन्योऽवग् जलदागमे । वहन्त्यौ यमुनागङ्गे पूरिते वारिभिर्भृशम् ॥ स्खलाम्येकदिनस्यैव म्रक्षणेन गवां किल । झल्लरीं कोलिकाः सद्यो यूयं वादयत।

धुना ॥ युग्मम् ॥ प्राग्वद्वादितझल्लर्यां जगावन्यो धनेश्वरः। जात्यनव्यकिशोराणा-मेकवासरजन्मभाम् ॥ भ्रियेत सङ्ख्ययाऽयोध्याःपाटलीपत्तने यदि । तथा तेऽपि ते किशोराः स्यु-र्बहवो मे गृहे वरे ॥ युग्मम् ॥ अतो वादयतेदानीं झल्लरीं वाद्यवादकाः ! । प्राग्वद्वादितझल्लर्या-मिभ्योऽन्यः प्रोक्तवानिति ॥ यावद्भिः शालिभिः सर्वे जेम्यन्ते भारता नराः । वर्षमेकं तु तेनैव तुप्तन्ति मम मन्दिरे ॥ तावन्तः शालयो भिन्न-जातिकाः सन्ति मे गृहे । अतो वादयतेदानीं झल्लरीं कोलिका ! घनम् ॥ वादिते झल्लरीवाद्ये प्राहेभ्योऽन्यो मदेन हि । तावन्मे विद्यते धान्यं धनं गेहे मनोहरम् ॥ यावता करवै पृथ्वी-मनृणां चन्द्र पालिताम्। अतो वादयतेदानीं झल्लरीं कोलिका ! घनम् ॥ प्राग्वद् वादितझल्लर्यां महेभ्योऽन्यो जगाविति । रत्नानां कोटिरेका मे विद्यते सदने किल ॥ भारसप्तमितं हेम-मुक्तानां मूढकत्रयम् । प्रवालाद्यन्यवस्तूनां सङ्ख्या न ज्ञायते मया ॥ अतोऽस्मिन् समये सद्यः कोलिका ! झल्लरी वरा । वाद्यतां वाद्यतामेव युष्माभिर्मधुरध्वनिः ॥ सर्वत्र साक्षिणो लोका-श्चाणिक्येनैव कारिताः । यतो बुद्धिनिधिः स्वामि-भक्तो धर्म्मधुरन्धरः ॥ उक्तञ्च—“ एकयोजनगामीभ-पदप्रमितकाञ्चनम् । एकस्मिन् दिवसे जाता-स्तथा जात्यकिशोरकाः ॥ १ ॥ ” इत्यादि । ततस्ते धनिनो लक्ष्मीं तावतीं भूभुजे ददौ । यावत्या भूपतेः कोशः सम्पूर्णोऽजनि तत्क्षणात् ॥ एवं चणिप्रसूतेन कोशश्चन्द्रमहीपतेः । पूरितः स्वर्णरूप्यादि-वस्त्रभूषणसञ्चयैः ॥ तस्यां निवृति दुःकाले पतिते द्वादशाब्दिके । रैमूल्येन न लभ्येत धान्यं स्तोकमपि क्वचित् ॥ माता पुत्रं प्रिया कान्तं कान्तः पत्नीं वरामपि । त्यक्त्वा गच्छन्ति दूरे तु न कोऽपि कस्य विद्यते ॥ आचार्यः सुस्थितश्चन्द्र-गुप्तभूपगुरुस्तदा । अन्नाभावाद् गणं स्वीयं व्यसृजद् दूरनिर्वृति ॥ वियोगं गुरुपादानां क्षुल्लौ सोमशुभङ्करौ । तत्र तस्थतुरसह-मानौ श्रीगुरुसेवया ॥ यतः—“ श्लाघ्यन्ते गुरवः शश्वत् सूत्रार्थयोः प्रकाशकाः । याभ्यां विज्ञायते सर्वं हिताहितादि सर्वतः ॥ १ ॥” न जायते सदा सार्वः भवन्ति गुरवः सदा । अतः सेव्याः सदा सद्भि-र्गुरवो हितमिच्छुभिः ॥ गुरुराचष्ट तिष्ठद्भ्यां युवाभ्यामिह साम्प्रतम् । कृतं वर्यं न हि क्लेश-वार्द्धौ युवां पतिष्यथः ॥ तथापि गुरुभक्त्यैतौ स्थितौ क्षुल्लौ वराशयौ । भक्तपानादिदानेन सेवेते श्रीगुरुक्रमौ ॥ भिक्षया स्वल्पया क्षुल्लौ सीदन्तावन्यदा रहः । मन्त्रयामासतुश्चित्तं विना भिक्षां मरिष्यते ॥ कथ्यमानमदृश्यत्व-कारकं दिव्यमञ्जनम् । साधुभ्यो गुरुभिः क्षुल्ला-वश्रौष्टामें-कदा रहः ॥ तेनाञ्जनेन त्वञ्जित्वा नेत्रे क्षुल्लौ बुभुक्षितौ । अलक्ष्याङ्गौ सदाऽत्तः स्म चन्द्रगुप्तस्य भोजने ॥ एवं प्रतिदिनं ताभ्यां भुञ्जानाभ्यां धराधवः । ऊनोदरित्वभाग् दुःस्थ-स्तपस्वीवाऽभवत् कृशः ॥ उक्तञ्च—“ कृष्णपक्षक्षपाजानि-रिव क्षामः शनैः शनैः । चन्द्रगुप्तो नरेन्द्रोऽभूत् ताभ्यामाच्छिन्नभोजनः ॥ १ ॥ ” यतः—“ लज्जामुञ्झति सेवतेऽन्त्यजजनं दीनं वचो भाषते, कृत्याकृत्यविवेकमाश्रयति नो नापेक्षते सद्गतिम् । भण्डत्वं विदधाति नर्त्तनकलाभ्यासं समभ्यस्यते, दुष्पूरोदरपूरणव्यतिकरे किं किं न कुर्याज्जनः ? ॥ १ ॥ ” इतश्चन्द्रप्रसूः प्राह चन्द्रगुप्तनृपान्तिके । भुञ्जमानः कथं क्षीण-देहो भूस्त्वं नरेश्वर ! ॥ राजा जगौ ममेदानीं ह्रासान्न परिवेष्यते । किन्तु कोऽप्यसुरः प्रेतो हरते परिवेषितम् ॥ कदाचित् कवलानां तु द्वयं त्रयं चतुष्टयम । मम यात्युदरे नैवा-धिकं जानीहि मन्त्रिराट् ! ॥ विलोकितोऽपि न यदा भुञ्जमानोऽपरः क्वचित् । दृष्टस्ततोऽभवच्चिन्ता-चान्तश्चणिभवो भृशम् ॥ चाणिक्यो ध्यातवान्नूनं कोऽपि दिव्यो नरोऽमरः । आहारं हरतेऽमत्राद् भूपस्य लघुलाघवात् ॥ कर्पणीयो मया बुद्ध्या स एव मानवः परः । रक्षणीयो यतो भूपः प्रजारक्षणहेतवे ॥ यतः—“ दुष्टस्य दण्डः स्वजनस्य

पूजा, न्यायेन कोशस्य सदा प्रवृद्धिः। अपक्षपातो रिपुराष्ट्रचिन्ता, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ १ ॥" क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते। अनुकूलः शुचिर्दक्षः स्वामिन्! भृत्योऽपि दुर्लभः ॥ भुञ्जानस्य महीशस्य चूर्णं सूक्ष्मं गृहान्तरे। चाणिक्यः क्षिप्तवान् छन्नं चौरकर्षणहेतवे ॥ भुक्तोत्थितस्य भूपस्य पदानि नरयोर्द्वयोः। भूमिलग्नानि वीक्ष्याभू-च्चाणिक्यः कर्षितुं तयोः ॥ अर्द्धभुक्तस्य भूपस्य तस्मिन् गेहे चणिप्रसूः। अकारयद् दृढं धूम-मुत्कटं नेत्रदुःखदम् ॥ तयोस्तथा तदाऽक्षीणि गलितानि च धूमतः। अञ्जनं गलितं सर्वं प्रादुरास्तां च विग्रहौ ॥ गच्छन्तौ क्षुल्लकौ दृष्टौ चाणिक्येन च भूभुजा। ततोऽभ्येत्य तदोद्वाह-भीत्या प्रोक्तं गुरोः पुरः ॥ क्षुल्लाविमौ किमीदृश-मकार्यं कुरुतामिति। गुरवो ह्यवयन्ति स्म क्षुल्लौ कर्कशभाषणात् ॥ साधूनां युज्यते हे(नै)वं स्तैन्यं कर्तुं कदाचन? । अकार्यकरणात् श्वभ्र-पातो भवति देहिनाम् ॥ ततश्चणिप्रसूभूपा-वाकार्य गुरुणोदितम्। भिक्षामिमौ न लभेता-मभूतां दुःखिनौ ततः ॥ यतः—"पञ्च नश्यन्ति पद्माक्षि! क्षुधार्त्तस्य न संशयः। तेजो लज्जा मतिर्ज्ञानं मदनश्चापि पञ्चमः ॥१॥" किमकारि न कार्पण्यं कस्यालङ्घि न देहलीः? । अस्य दग्धोदरस्यार्थे किमनाटि न नाटिकाम्? ॥ युवाभ्यां दीयते नान्नं सत्यन्ने प्रचुरेऽप्यहो। ततश्चेमौ मृतिं सद्यो गमिष्यवस्तमां द्रुतम् ॥ येन न दीयते दानं सत्यपि प्रचुरे धने। स एव शोचते प्रान्त-काले मुञ्चन् श्रियं निजाम् ॥ यतः—"क्लेशाय विस्तराः सर्वे सङ्क्षेपास्तु सुखावहाः। परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ १ ॥" अनन्तैः पार्थिवैर्भुक्ता कालेनोर्वी धनानि च। मेलितानि परं त्यक्त्वा गतास्ते स्वकृतैः समम् ॥ गोशतादपि गोक्षीरं मानं मूढशतादपि। मन्दिरे मञ्चकः स्थानं शेषाः परपरिग्रहाः ॥ ततश्चणिप्रसूभूपौ क्षमित्वा श्रीगुरुक्रमौ। प्रोचतुर्गृह्यतां शुद्ध-मन्नमाभ्यां मदालये ॥ चाणिक्यः प्रोक्तवान् राजन्! भवान् भाग्ययुतोऽभवत्। क्षुल्लाभ्यां यत आभ्यां तु निष्पापस्त्वं कृतोऽदनात् ॥ ततः प्रभृति चाणिक्य-भूपौ भक्तिपुरस्सरम्। प्रतिलाभ्य गुरून् शुद्धा-हारं जिमतः स्म तौ ॥ यतः—"पढमं जइण दाऊणं अप्पणा पणमीऊण पारेइ। असई अ सुविहियाणं भुंजेइ अ कयदिसालोओ ॥ १ ॥ वसहीसयणासणभत्तपाणभेसज्जवत्थपत्ताइं। जइवि न पज्जत्तधणो थोवाउ वि थोवयं देइ ॥ १२ ॥" चाणिक्यस्य धियाऽनेके दुःशका अपि वैरिणः। भूभुजा ग्राहिताः स्वाज्ञां त्याजिताः केऽपि देशतः ॥ प्रायो विषप्रदानेन मृत्युं गच्छन्ति भूधवाः। अतश्चेत् क्रियते क्ष्वेड-सहितं स्यात्तदा वरम् ॥ मध्येभक्तं ततः स्तोकं स्तोकं क्ष्वेडं चणिप्रसूः। दत्ते तत्र रहः क्षोणी-पतेर्जानाति नो यथा ॥ अर्द्धटंकमितं क्ष्वेडं भक्षयन् भूपतिः सदा। रोगरिक्तो भृशं जज्ञे वर्यदेहच्छविः पुनः ॥ अन्येद्युर्विस्तरात् सङ्घपति-भूय नरेश्वरः। शत्रुञ्जयादितीर्थेषु यात्रां चक्रे धनव्ययात् ॥ प्रासादा अर्हतां शम्भु-महीधरसहोदराः। कारिता भूभुजा तेषु बिम्बानि स्थापितानि च ॥ अन्येद्युर्गुर्विणी राज्ञी-भुक्तां मध्ये महीपतेः। ज्ञात्वा चणिप्रसूः प्राह वयं राज्ञ्या कृतं न हि ॥ ततो राज्ञी ययौ मृत्युं यदा तस्माद्विषादनात्। भित्त्वा गर्भं तदाऽकर्षि यत्नात् पुत्रः स्मरोपमः ॥ विषबिन्दुं शिशोः शीर्षे दृष्ट्वा चणिप्रसूयुतः। भूपो नाम ददौ बिन्दु-सारेति तस्य सूत्सवम् ॥ बिन्दुसारः कुमारस्तु वर्द्धमानः क्रमात् किल। विना स्वजननीं दुःखं धरते मानसे सदा ॥ यतः—"पुत्तस्स मायमरणं भज्जामरणं च जुव्वणसमयम्मि। थेरस्स पुत्तमरणं तिन्नि वि दुक्खाइं गुरुयाइं ॥ १ ॥" स्वकीयभाग्यतोऽशेषपरिवारस्य सन्ततम्। बिन्दुसारः कुमारोऽभूद् वल्लभो भूमिपतेरपि ॥ बिन्दुसारे समारूढे यौवनं चन्द्र-

भूपतिः । समाधिमरणादाप स्वर्गलोकसुखं ननु ॥ तत्पट्टे विन्दुसारं तु न्यस्य चाणिक्यमन्त्रिराट् । राज्यं प्रवर्द्धयामास विन्दुसारस्य नित्यशः ॥ प्रायो राज्यं महीशानां मन्त्रिबुद्धिप्रपञ्चतः । वर्द्धते सितपक्षेन्दु–रिव लक्ष्म्यादिभिः सदा ॥ यतः—" चित्तज्ञः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः । यथोक्तवादी स्मृतिमान् मन्त्रीशः शस्यते सदा ॥ १ ॥ " इङ्गिताकारतत्त्वज्ञः प्रियवाक् प्रियदर्शनः । सकृदुक्तग्रही दक्षः सचिवः शस्यते नृपैः ॥ विन्दुसारोऽपि भूपालः साधयन् पृथिवीतलम् । वशीचकार भूयिष्ठ–प्रत्यर्थिपृथिवीपतीन् ॥ इतश्चाणिक्यवचनात् सुबन्धुः सचिवो वरः । दाक्षिण्याद् योऽभवत्तस्य भूपस्य चणिभूसखा ॥ क्रमात् सुबन्धुरामन्त्री–श्चाणिक्य–विन्दुसारयोः । विभिन्नं मानसं चक्रे यतोऽसारं जगत् समम् ॥ यतः—" विशिष्टकुलजातोऽपि यः खलः खल एव सः । चन्दनादपि सम्भूतो दहत्येव हुताशनः ॥ १ ॥ " सद्भिः संसिच्यमानोऽपि शान्तिवाक्यैर्जलैरिव । प्लुष्टपाषाणवद्दुष्टः स्वभावं नैव मुञ्चते ॥ [ इतश्चाणक्यभृत्यस्तु चाणक्याग्रे जगाविति । सुबन्धुरते सखा हन्तुं त्वामेव वाञ्छति ध्रुवम् ॥ विश्वासघातकस्यास्य मा चाणिक्य ! त्वं विश्वसीः ] । एष त्वन्मातुरुदरं दुरात्मा खल्वदारयत् ॥ ततश्चुकोप चाणिक्ये विन्दुसारो महीपतिः । कुपितं भूपतिं मत्वा सचिन्तश्चणिभूरभूत् ॥ सुबन्धुना कृतत्वेन मध्ये मम महीपतेः । विभेदो याचितो नूनं यतः स्याद्दुःखदः खलु ॥ अयं हि प्रागमात्यत्वे कारितोऽभून्मया ननु । तन्मे प्रत्यपकाराय युक्तमस्य कुलोचितम् ॥ अतो मम सृतं राज्य–चिन्तया श्वभ्रदा यका । परलोकमहं साध–यिष्यामि सुखहेतवे ॥ तथाऽहं करवै ह्यप सुबन्धुर्म्रियते यथा । अथवा निर्ग्रन्थतां लाति दध्यावेवं चणिप्रसूः ॥ विमृश्येति लसद्गन्ध–लिखिताऽक्षरपूर्वकम् । समुद्गकं स्वयं बद्ध्वा गुणैः सूक्ष्मैः स मन्त्रिराट् ॥ समुद्गं जतुना लिप्य पेटायां स सुधीर्न्यधात् । तालयामास तां पेटां तालकानां शतेन वा ॥ न्यस्य मध्येगृहं दत्त्वा दानं दीनेभ्य आदरात् । सप्तक्षेत्र्यां धनं दत्त्वाऽनशनं लातवान् स च ॥ यतः—" कारणात् प्रियतामेति द्वेष्यो भवति कारणात् । स्वार्थार्थी जीवलोकोऽयं न कश्चित् कस्यचित् प्रियः ॥ १ ॥ " " तावच्चिय सयलजणो नेहं दरिसइ जाव नियकज्जं । निअकज्जे संवित्ते विरला नेहं पवट्टंति ॥ १ ॥ " कस्यचित् पार्श्वतो मत्वा प्राप्तानशनमन्त्रिणम् । तत्र गत्वा नृपो मन्त्रि–मुख्यं क्षमितवान्मुदा ॥ त्वया यद्युपकारो मे कृतो राज्यप्रदानतः । मया मूढधिया सोऽपी–दानीं विस्मारितो हहा ! ॥ त्वयि पुण्यवति प्रौढे सर्वोपकारकारके । अपराधः कृतो यस्तु मया मूढधिया ध्रुवम् ॥ तेन श्वभ्रगतिर्भूरि–दुःखसन्ततिदायिनी । भविष्यति ममेदानी–मधमस्य न संशयः ॥ सुबन्धुरपि भूपोक्तो गत्वा चाणिक्यमन्त्रिणम् । क्षमयामास चान्येऽपि क्षमयामासुरादरात् ॥ स्मरन् पञ्चनमस्कारं चाणिक्योऽनशनग्रहात् । जगाम त्रिदिवं सर्वा–युषोऽन्ते बुधमृत्युतः ॥ विन्दुसारोऽन्यदा सार्द्धं सुबन्धुमन्त्रिणा खलु । चाणिक्यसदने यातः सारवस्तुजिघृक्षया ॥ भूपादिष्टसुबन्धुस्तु गत्वा मध्ये गृहे लघु । भित्त्वा समुद्गकं गन्ध–माघ्राय मुदितोऽभवत् ॥ तत्रस्थान्यक्षराण्येव सुबन्धुः समवाचयत् । आदौ लास्यति यो गन्धं स मुनिश्च भविष्यति ॥ नो चेत् सद्यो मृतिं याता गन्धस्यास्य प्रभावतः । ततः सुबन्धुरत्यन्तं सचिन्तोऽजनि चेतसि ॥ ततो मृत्युभयात्त्यक्त्वा व्यापारं निखिलं स्वयम् । सुबन्धुः संयमं लात्वा विजहाराऽवनीतले ॥ यतः—" पंथसमा नत्थि जरा खुहासमा वेअणा नत्थि । मरणसमं नत्थिभयं दारिद्दसमो वइरिओ नत्थि ॥ १ ॥ " क्रमेण विन्दुसारस्य राज्यं पालयतो नयात् । अशोकश्रीरभूत् सूनू रूपश्रीजितमन्मथः ॥ वर्द्धमानः क्रमा-

द्विन्दु-सारेण मेदिनीभुजा । अशोकश्रीः सुतोऽथापि स्वपट्टे स्वर्गमिय्यता ॥ अशोकश्रीमहीपस्य पृथ्वीं पालयतः सतः । कुमारोऽभूत् कुणालाह्वो विनयी मन्मथोपमः ॥ ज्ञात्वा भक्तं कुणालं तु भूभुगुज्जयिनीं पुरीम् । ददौ स्थित्यै मुदा तस्मै कुणालाय नयात्मने ॥ सदैव सोऽष्टवर्षीयः प्रजारञ्जितमानसः । पितुर्वचोऽनुसारेण यात्युत्तिष्ठति तिष्ठति ॥ यतः—" विनयं राज्यपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् । अलीकं द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ विद्याग्रहणयोग्यं तं ज्ञात्वा राजा प्रमोदभाग् । कुणालायाऽलिखल्लेखं शास्त्रपाठकृतेऽन्यदा ॥ अधीयतां कुणालस्तु प्राकृतं सुखहेतवे । सपत्नीजननी तत्र स्थित्वा दध्याविदं हृदि ॥ कुणालो मे सपत्नीजो म्रियते यदि सम्प्रति । तदा सूनोर्ममैव स्यात् क्रमाद्राज्यरमा पितुः ॥ ततो लात्वा रहो लेखं नेत्राञ्जनशलाकया । अकारे विन्दुकं राज्ञी ददावन्धीयतामिति ॥ तं लेखं मुद्रितं तात-प्रेषितं प्राप्य तत्क्षणात् । कुणालो वाचयामास लेखकोपान्ततस्तदा । तूष्णीको लेखको भूत्वा यावत्तस्थावधोमुखः । तावत् प्राह कुणालस्तु लेखे किं लिखितं वद ? ॥ अन्धीयतां कुणालोऽयं लेखेऽस्ति लिखितं त्विदम् । श्रुत्वेति लेखकस्याऽऽस्यात् कुणालो ध्यातवानिति ॥ तातेन वाञ्छता नूनं हितं मयि तनूभवे । लेखः प्रासादितो ह्येष मान्योऽत्रं मयका ततः ॥ मातृपितृगुरूणां तु पालयन्ति यके जनाः । तेषामत्र परत्रापि जायते सुखसन्ततिः ॥ मौर्यभूपान्वये कोऽपि पित्राज्ञालङ्को न हि । यदि लोपाम्यहमाज्ञां पितुरत्र स्थितोऽग्रतः ॥ तदा मत्कृत एवाध्वा-न्येषामपि भविष्यति । अतो मया प्रपाल्याज्ञा पितुरेवाऽसुखे सुखे ॥ पित्राज्ञाभञ्जनभयात् कुणालो लोचने निजे । कर्षयामास सहसा तदा तीक्ष्णशलाकया ॥ अन्धीभूतं सुतं लेखाद् ज्ञात्वा भूपोऽपि दुःखितः । दध्यौ मया न लेखेन तं ज्ञापितं सूनवे त्विदम् ॥ अधीयतामिति स्थानेऽलेखि ह्यन्धीयतां मया । अतोऽस्यान्धत्वहेतोर्हि जातोऽहं पापमान् किल ॥ राज्ययोग्यो ह्ययं सूनु-र्यादृशो विद्यते स्फुटम् । तादृग् न नन्दनोऽन्योऽस्ति क्रियतेऽतो मया किमु ॥ विधिना विहिते वर्ये पदार्थे हि कलङ्किता । यतोऽङ्को विहितश्चन्द्रे धात्राऽब्धौ क्षारता पुनः ॥ यतः— " शशिनि खलु कलङ्कं कण्टकाः पद्मनाले, जलधिजलमपेयं पण्डिते निर्धनत्वम् । स्वजनजनवियोगो दुर्भगत्वं सुरूपे, धनपतिकृपणत्वं रत्नदोषी कृतान्तः ॥ १ ॥ " यया राज्या छलादन्धः कुणालो विहितस्तदा । तस्याः पुत्राय भूपोऽदा-दवन्तीं कपटाद्यविद् ॥ कुणालाय तु पुत्राया-ऽऽजीविकाहेतवे पुनः । भूपो ददौ वरं ग्राम-मेकं चन्द्रपुराभिधम् ॥ कुणालस्याऽवतो ग्रामं शरश्रीर्गेहिनी वरा । असूत नन्दनं वर्ये लग्ने सल्लक्षणान्वितम् ॥ सूनोर्जन्मोत्सवं कृत्वा कुणालो ध्यातवान् हृदि । तुष्टो भवति चेद्राज्ञा मयि मन्नन्दनेऽपि च ॥ तदा महीपतिस्तुष्टो मयाऽमुष्मै हि सूनवे । राज्यं ददाति सत्कर्म्मो-दयात् शोभनवासरे ॥ मत्वेति पाटलीपुत्र-पत्तनेऽभ्येत्य तत्क्षणात् । पटचन्तरे महीशाग्रे कुणालो गायति स्फुटम् ॥ तदा महीपतिं गीतै-र्मन्द्रमध्यादिसुन्दरैः । कुणालो रञ्जयामास यथा तुष्टो जगावदः ॥ भोगाय न कलागारः त्वं याचस्व यथेप्सितम् । तुष्टो भूपो यतो नृणां दारिद्र्यं द्यति निश्चितम् ॥ ततः कुणाल आचष्ट यदि तुष्टोऽसि भूपते ! । तदा त्वया प्रदातव्यं मदुक्तं मम सूनवे ॥ ततो राजा जगौ यत्ते सुतो मार्गयति ध्रुवम् । तद्ददामि ततः प्राह कुणालोऽत्रग् नृपाग्रतः ॥ प्रपौत्रश्चन्द्रगुप्तस्य विन्दुसारस्य नप्तृकः । अशोकश्रीसुतो ह्येष याचते भूप ! काकिणीम् ॥ राजाऽऽचष्ट कुमारेह काकिणी याचिता कथम् । मन्त्री प्रोवाच काकिण्या रवेण राज्यमुच्यते ॥ क्रमान्मत्वा कुणालं तु पुत्रं गायन्तमद्भुतम् । राजाऽवग् याचसे राज्य-मन्धस्त्वं सुत ! साम्प्रतम् ॥ कुणालः प्रोक्तवाँस्तात ! प्रसादात्तव साम्प्रतम् । जातोऽस्ति नन्दनो वर्य-

लक्षणैर्लक्षितो मम ॥ तस्मै मन्मथरूपाय मदीयसूनवेऽधुना। प्रसज्य दीयतां राज्य–मशोकश्रियि तद् द्रुतम् ॥ कुणालनन्दनं तत्रा–नीय तुष्टो महीपतिः । राज्यं दत्त्वा ददौ नाम भूपोऽयं सम्प्रतिः खलु ॥ अशोकश्रीनृपो जैन–धर्म्मं कुर्वन् समाहितः । स्वर्गलोकसुखं प्राप कुणालोऽपि क्रमात् पुनः ॥ वर्द्धमानः क्रमाद् भूपः सम्प्रतिर्धर्म्मतत्परः । जनतां पालयामास न्यायमार्गेण रामवत् ॥ क्रमेण साधयामास भरतार्द्धं स दक्षिणम् । प्रचण्डशासनश्चाभू–द्वासवोपमविक्रमः ॥ अन्यदा सम्प्रतिक्ष्माप उज्जयिन्यां निजालये । गवाक्षस्थः पुरीशोभां व्यलोकत दिशोदिशम् ॥ तदा तत्र पुरे सूरी महागिरि–सुहस्तिनौ । जीवन्तस्वामिप्रतिमां वन्दितुं तौ समीयितुः ॥ उत्सवे क्रियमाणेऽथ जीवन्तस्वामिनो रथः । निर्ययौ रथयात्रायै सेव्यमानो जनैर्घनैः ॥ महागिरि–सुहस्तिभ्यां सङ्घेन निखिलेन च । स रथोऽन्वीयमानश्च पुरीमध्येऽमितोऽभ्रमत् । रथे राजकुलद्वारा–गते वातायनस्थितः । ददर्श सम्प्रतिर्भूपः सूरिसुहस्तिनं तदा ॥ दध्यौ चायं मुनीशो हि दृष्टः क्वापि मया पुरा । ऊहापोहं करन्नेवं मूर्च्छया न्यपतन्नृपः ॥ सरसैश्चन्दनैः सिच्य–मानो व्यजनवीजितः । जातिस्मरणमासाद्यो–दस्थादवनिनायकः ॥ पूर्वजन्मगुरुं ज्ञात्वा जातिस्मृत्या सुहस्तिनम् । गवाक्षात् सद्य उत्तीर्याऽ–नमद् भूपो गुरुक्रमौ ॥ वन्दित्वा विधिना सूरिं पप्रच्छ सम्प्रतिर्नृपः । कुर्वतो जिनधर्म्मस्य पुंसो भवति किं फलम् ? ॥ सुहस्ती सूरिराट् प्राह स्वर्गो मुक्तिः क्रमात् फलम् । पप्रच्छ सम्प्रतिर्भूपः सामायिकस्य किं फलम् ? ॥ सूरिः प्रोवाच सामायि–कस्याऽव्यक्तस्य भूपते ! । राज्यादिकं फलं प्रोक्तं जिनैर्गणधरैरपि ॥ यतः—" सामाइयं कुणंतो समभावं सावओ घडीयदुगं । आउं सुरेसु बंधइ इत्तियमेत्ताइं पलियाइं ॥ १ ॥ बाणवई कोडीओ लक्खा गुणसट्ठि सहस पणवीसा । नव सय पणवीसजुआ सतिहा अडभाग पलियस्स ॥ २ ॥ एकस्य सामायिकस्य पुण्यसङ्ख्या–पल्योपमानि ९२५९२५९२५३५/७ पल्यस्याष्टभागस्य त्रिभागाः साधिकाः ॥ सत्तहत्तरि सत्तसया सतहत्तरि सहस लक्ख कोडीओ । सगवीसं कोडीसया नव भागा सत्तपलियस्स ॥ एकस्य पौषधस्य पुण्यसङ्ख्या–पल्योपमानि २७,७७,७७,७७,७,७७७/९ । २७ शतकोटि ७७ कोटि ७७ लक्ष ७७ सहस्र ७ शत ७७ नव भागाः पल्योपमसप्तभागाः ॥ एकदिन दीक्षाफलम्–एगदिवसेण जीवो पवज्जमुवागओ अनन्नमणो । जइ नवि पावइ मुक्खं अवस्स वेमाणिओ होइ ॥ " गृहीतसंयमस्यैव ध्यानस्येह विशेषतः । स्वर्गापवर्गसौख्यानि जायन्ते नात्र संशयः ॥ श्रुत्वैतच्छ्रीगुरोरास्यात् प्रणम्य सम्प्रतिर्जगौ । सामायिकफलं सत्यं गदितं गुरुणाऽधुना ॥ मया किं सुकृतं चक्रे भवे पूर्वे गुरूत्तम ! । येनेह राज्यमीदृक्षं प्राप्तं (च) तन्निगद्यताम् ॥ कृत्वोपयोगमाचष्ट सूरि–र्भूमिपतिं प्रति । कौशाम्बी नगरी स्वर्ग–पुरीतुल्या विराजते ॥ तत्राजनिष्ट दुष्कालो रौरवो जनदुःखदः । श्रियापि दुर्लभं धान्यं प्राप्यते मनुजैर्न हि (पुनः) ॥ तत्रान्यदा क्षितौ कुर्वन् विहारं भूरिसाधुयुग । सुहस्तिसूरिराड् भव्या–नैयुर्बोधयितुं स्फुटम् ॥ तथाविधे च दुर्भिक्षे पतितेऽस्मासु भक्तिमान् । लोको भक्तादिकं दातु–मुपाक्रंस्त विशेषतः ॥ भिक्षायै यतयोऽन्येद्यु–रेकस्य श्रेष्ठिनो गृहे । यावद् गतास्तदा तेषां पृष्ठौ रङ्कोऽलगत् खलु ॥ ननेति कुर्वतां तेषां साधूनां श्रावकस्तदा । बह्वीं भिक्षां विशुद्धां तु प्रददौ भक्तिपूर्वकम् ॥ ततस्ते साधव आत्त–भक्ताः आग् वलिताः पथि । दृष्ट्वा स याचते रङ्को वदन् दिनं वचोऽदनम् ॥ यतः—" मानं मुञ्चति गौरवं परिहरत्यायाति दीनात्मतां, लज्जामुत्सृजति श्रयत्यकरुणं नीचत्वमालम्बते । भार्याबन्धु सुहृत्सुतेष्वपकृतीर्नानाविधा चेष्टते किं किं यन्न करोति निन्दितमपि प्राणी

क्षुधापीडितः ? ॥ १ ॥ " ततस्ते साधवः प्रोचू-र्जानन्ति गुरवः खलु । वयं गुरुवशा एव न किञ्चिद्दातु-मिष्यते ॥ ततस्तैर्यतिभिः सार्द्धं स रङ्को भक्तयाचकः ( मार्गकः ) । गुरुपार्श्वे ययौ धर्म्म-स्थानकं मुदिताशयः ॥ वन्दित्वा स गुरुं रङ्को दीनवाग् याचतेऽन्नम् । गुरुः प्राह प्रदीयेत भक्तं साधुभ्य एव तु ॥ असंयतजने दानं दत्तं साधुवरैरहो ! । विश्राणयति दुःखानि दुर्गत्यादिभयानि हि ॥ रङ्कोऽवक् तर्हि मां साधुं कुरुध्वं गुरुसत्तमाः ! । ततो ज्ञानाद् गुरुस्तंसो जज्ञाविति तदा हृदि ॥ अयं प्रवचनाधारो रङ्क एव भविष्यति । यतो विनयवान् मर्त्यो रङ्क एष विलोक्यते ॥ यतः—" विणओ सासणे मूलं विणीओ संजओ भवे । विणयाउ विप्पमुक्कस्स कओ धम्मो कओ तवो ? ॥ १ ॥ विणए सिस्सपरिक्खा सुहड-परिक्खा य होइ संगामे । वसणे मित्तपरिक्खा दाणपरिक्खा य दुक्काले ॥ २ ॥ " केनाञ्जितानि नयनानि मृगाङ्गनानां, को वा करोति रुचिराङ्गरुहान् मयूरान् । कश्चोत्पलेषु दलसञ्चयमातनोति, को वा करोति विनयं कुलजेषु पुंस्सु ॥ १ ॥ " ततो योग्यं तकं रङ्कं मत्वाऽस्मासिस्तदाऽचिरात् । दीक्षा विश्राणिता तस्मै संसाराब्धितरीनिभा ॥ चर्याहारवितरणात् सन्मानदानपूर्वकम् । श्राविकावसतौ अपि साध्वी-वन्दापनाकृते ॥ वृद्धाभिर्भिक्षुणीभिः सदिभ्याभिश्च सादरम् । वन्दितः स यती रङ्कः सदोलापनपूर्वकम् ॥ यतः—" अणुगम्मए भगवई रायसुअज्जा सहस्सविंदेहिं । तहवि न करेइ माणं परियच्छइतं तहा नूणं ॥ १ ॥ दिणदिक्खयस्स दमगस्स अभिमुहा अज्जचंदणा अज्जा । नेच्छइ आसणगहणं सो विणओ सव्वअज्जाणं ॥ २ ॥ " यदा स वन्दितः साधू रङ्कः साध्वीभिरादरात् । तदा दध्यावयं जैन-धर्म्मो वर्यतमो ननु ॥ अहो ! मे विद्यते भाग्यं यदयं च गुरूत्तमः । मामेव दीक्षयामास रङ्कमीदृक्षमादरात् ॥ यतः—" विना गुरुभ्यो गुणनीरधिभ्यो, जानाति धर्म्मं न विचक्षणोऽपि । विना प्रदीपं शुभलोचनोऽपि, निरीक्षते कुत्र पदार्थसार्थम् ? ॥ १ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २ ॥ अवद्यमुक्ते पथि यः प्रवर्तते, प्रवर्त्तयत्यन्यजनं च निस्पृहः । स एव सेव्यः स्वहितैषिणा गुरुः, स्वयं तरंस्तारयितुं क्षमः परम् ॥ २ ॥ " तस्यामेव निशीथिन्यां रङ्कस्याभूद् विसूचिका । तत्पश्चाद्भवन्नासा-गतश्वासानिलो भृशम् ॥ वरमद्य मया दीक्षा गृहीता भाग्ययोगतः । यया स्याद् भवपाथोधे-रुत्तारो देहिनां खलु ॥ एवं स चिन्तयन् मृत्वा कुणालस्य महीपतेः । भवान् सम्प्रति-नामोऽभू-न्नन्दनोऽनघविक्रमः ॥ ततः सम्प्रतिराचष्ट तर्हि पूर्वभवे गुरुः । भवानासीदतोऽस्मिंश्च भवे भव गुरुर्वरः ॥ मया न साम्प्रतं दीक्षा गृहीतुं शक्यते गुरो ! । पूर्वे भवे गृहीता सा तस्या ईदृग् फलं स्फुटम् ॥ अधुना संयमो लातुं न शक्नोमि गुरूत्तम ! । अतो मे कथ्यतां श्राद्ध-धर्म्मः शिवसुखप्रदः ॥ ततः सुहस्तिसूरीशाः श्राद्धधर्म्मं सुविस्तरात । सम्यक्त्वमूलमुर्वीश-पुरः प्रोचुः शिवप्रदम् ॥ अत्र श्राद्धधर्म्मसाधुधर्म्मयोः सुभाषितादि कथा वक्तव्या ॥ श्रुत्वा धर्म्मं गुरोः पार्श्वे सम्प्रति-भूपतिर्मुदा । जग्राह धर्म्ममार्हतं शिवसौख्यततिप्रदम् ॥ यतः—" निर्दन्तः करटी हयो गत-जवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः । रूपं निर्लवणं सुतो गत-गुणश्चारित्रहीनो यति-र्निर्द्रव्यं भवनं न राजति तथा धर्म्मं विना मानवः ॥ त्रिःसन्ध्यं पूजयन् सार्वान् सन्ध्ययोरुभयोः पुनः । प्रतिक्रान्तिं करन् शश्वद् गुरुपादौ निसेवते ॥ वर्षं प्रति चतुर्वारान् साधर्म्मिकान् सुधर्म्मिणः । लक्षद्वयत्रयमितान जेमयामास सम्प्रतिः ॥ सङ्घार्चां पञ्चधाः कुर्वन् गुरून् श्राद्धांश्च भक्तितः । परिधापयति सद्यो वस्त्रादिदानतो नृपः ॥ आवेताढ्यं जिनागारैः स चकाराऽविकारधीः ।

भूपः पप्रच्छ कुशलं तव ॥ सोऽप्याह—" काला कुशल न पुच्छीइ नितु न विलइ विहाणि । जर पहुवई जुव्वण गलइ नित हाणि विहाणि ॥ १ ॥ " मन्त्री प्राहामुना कालो भवान् चक्रे नरेश्वर ! । राजाऽवक् पृच्छ्यतामेष स्वेष्टं किं चर्चयाऽनया ॥ ततो नदीसममिति श्लोकस्यार्थोऽथ मन्त्रिणा । पृष्टोऽवक् छगीपालः स्पष्टमेवं तदग्रतः ॥ " मेवसमं न जलं बाहुसमं न बलम् । अन्नसमं न हेजं नयणसमं न तेजं ॥ श्रुत्वैतत् सम्प्रतिः श्लोकं हेम्नां लक्षमिलापतिः । तस्मै ददौ छगीपाय सन्मानदान-पूर्वकम् ॥ निशीथसमयेऽन्येद्युः सम्प्रतिः ध्यातवानिति । अनार्यविषये साधु-विहारं कारयाम्यहम् ॥ तत्र साधुविहारेण जैनधर्म्मप्रलब्धितः । लोकानां जायते लाभः स्वर्गादिप्राप्तिलक्षणः ॥ प्रेष्यादौ धर्म्मिणः श्राद्धा-ननार्यनीवृति स्फुटम् । तत्रस्थान् मनुजान् श्राद्धान् कारयिष्यामि साम्प्रतम् ॥ ततः सुखेन साधूनां विहारो भवति ध्रुवम् । वस्त्रे वेधं विना नैव गुणो विशति कर्हिचित् ॥ ततः प्रेष्य वरान् श्राद्धान् देशेषु तेषु सम्प्रतिः । तत्रस्थान् मनुजान् श्राद्धा-नचीकरत् विशारदान् ॥ उक्तञ्च—" भूपः प्रैषीदनार्येषु साधुवेषधरान्नरान् । ते सम्प्रत्याज्ञयानार्या-नेवमन्वशिषन् भृशम् ॥ १ ॥ " द्विचत्वारिं-शता दोषैः शुद्धमन्नं विशेषतः । देयं साधुभ्य एवात्रा-गतेभ्यं भवता सदा ॥ नमस्काराणि सूत्राणि तेषां पार्श्वे कृताऽऽदराः । तत्रत्या मनुजाः पेठु-र्जैनधर्म्मं व्यधुः पुनः ॥ ततो भूपाग्रहाद्वाचं-यमान् कतिपयान् वरान् । अनार्यविषयेष्वेव प्रेषयामास सूरिराट् ॥ अनार्या अपि मनुजाः प्रेक्ष्य साधून् समागतान् । निर्दोषं भक्तपानादि ददुस्तेभ्यः कृतादराः ॥ ततः सम्प्रतिभूपेन स्वशक्त्या बुद्धिगर्भया । देशाः साधु विहारार्हा अनार्या अपि चक्रिरे ॥ प्राग्जन्म स्मरता राज्ञा बहुग्रामपुरादिषु । सत्रागाराणि कार्यन्ते दुःस्थादिसुखहेतवे ॥ तेषु सत्रेषु सततं प्रचुरं भक्तपानकम् । भोजनं लेभिरे लोका जघन्यमध्यमोत्तमाः ॥ अन्नमुद्धरितं शुद्धं भक्तेषु मनुजेष्वथ । सम्प्रतिर्दापयामास सुहस्तिसूरिसाधवे ॥ ज्ञात्वा निर्दोषमाहारं सुहस्तिसूरिसाधवः । भुञ्जाना मेनिरे स्वीयं शुद्धं चारित्रमन्वहम् ॥ सत्रागारेषु गृह्णाना-नन्नं सुहस्ति-संयतान् । महागिरिर्गुरुः प्राह सूरिंसुहस्तिनं प्रति ॥ अनेषणीयं राजान्नं किमादत्से विदन्नपि ? । सुहस्त्यु-वाच भगवन् ! शुद्धमन्नमिदं खलु ॥ राजाऽनुवर्त्तनपराः पौराः साधुभ्य आदरात् । निर्दोषं ददते ह्यन्नं का तत्र परिदेवना ॥ ततोऽतिकुपितः सूरि-र्महागिरिर्जगावदः । सिद्धान्तार्थमपि न हि वेत्सि सुहस्तिसूरि-राट् ॥ यतः " आहाकम्मुद्दिसिय पूइकम्मे अ मीसजाए अ । इत्यादि; उद्दिसियमोहविभागओ अ ओहे सए जमारंभे भिक्खाओ कइ वि कप्पइ जो एही तस्स दाणट्ठा । बारसविहंमि विभागे च उद्दिट्ठं कडं च कम्मं च । उद्देससमुद्देसादेस-समाएसभेएणं ॥ १ ॥ जावंतिअमुद्देसं पासंडीणं भवे समुद्देसं । समणाणं आदेसं निग्गंथाणं समाएसं ॥ २ ॥ " इत्यादि दोषसंयुक्त-माहारं जिननायकैः । निषिद्धं गृह्यते कस्माद् भवद्भिर्हितमिच्छुभिः ? ॥ एवंविधे निषिद्धे-प्याहारे दोषदूषिते । यूयं गृह्णीथ चेदन्नं राज-कीयं हि सूरयः ! ॥ ततो नैवात्मनोरेक-स्थानके स्थितिरेकशः । भविष्यति सुहस्त्यार्य ! भूयिष्ठदोषसम्भवात् ॥ अतः परं विभिन्नाऽस्तु स्थितिरेवावयोः खलु । त्वमङ्गीकुरुषे भक्त-मशुद्धं जिनवर्जितम् ॥ महागिरि-गुरोर्वाणीं श्रुत्वा सुहस्तिसूरिराट् । दध्यौ मया जिनेन्द्राज्ञा लुप्ता निषिद्धलानतः ॥ उत्थायाऽथ सुहस्त्यार्यो लगित्वा गुरुपादयोः । क्षमयामास कृत्यं स्वं निन्दन् पापं स्वयं कृतम् ॥ उक्तञ्च—" सापराधोऽस्मि भगवन् ! मिथ्यादुःकृतमस्तु ते । क्षम्यतामपराधोऽयं करिष्ये नेदृशं पुनः ॥ १ ॥ " ततो महागिरिः प्राह दोषो नास्ति तवाधुना । पुरा भगवता वीर-स्वामिनैतन्निवेदितम् ॥ मदीयशिष्यसन्ताने स्थूल-

भद्रमुनेः परम्! पतत्प्रकर्षा साधूनां सामाचारी भविष्यति ॥ अन्येद्युः सम्प्रतिर्भूपः सुहस्तिसूरिसन्निधौ ॥ शत्रुञ्जयस्य माहात्म्यं शुश्रावेति कृतादरम् ॥ तथा हि—" एकैकस्मिन् पदे दत्ते शत्रुञ्जयगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः प्रमुच्यते ॥ १ ॥ " नन्दीश्वरेषु यत् पुण्यं यात्रायां जायते नृणाम् । ततश्च द्विगुणं पुण्यं तीर्थे कुण्डलपर्वते ॥ त्रिगुणं रुचके हस्ति–दन्तेषु च चतुर्गुणम् । एतद्द्विगुणं जम्बू–चैत्ये यात्रां वितन्वताम् ॥ षोढा तु धातकीखण्डे तच्छाखिजिनपूजनात् । पुष्करोदरबिम्बानां द्वात्रिंशद्गुणसम्मितम् ॥ मेरुचूलाऽर्हदर्चायां पुण्यं शतगुणं भवेत् । सहस्रं तु समेताद्रौ लक्षसङ्ख्याञ्जनाद्रितः ॥ दशलक्षमितं श्रीम–द्रैवतेऽष्टापदे च तत् । शत्रुञ्जये कोटिगुणं स्वभावात् स्पर्शतो मतम् ॥ मनोवचनकायानां शुद्ध्या पूजयतां नृणाम् । शत्रुञ्जये जिनं पुण्य–मनन्तं भवति ध्रुवम् ॥ श्रुत्वेति सम्प्रतिर्भूपः प्रेष्य कुङ्कुमपत्रिकाः । सङ्घमाकारयामास सिद्धाद्रिवन्दनाकृते ॥ सम्प्रतिभूपतेरेवं–विधा देवालयादयः । मिलिता रेजिरे सङ्घे नगरस्यान्तिके क्रमात् ॥ रैणां शतत्रयं देवा–लयाः काष्ठमयाः पुनः । शतान्यष्टौ तुरङ्गाश्च लक्षा एकोनविंशतिः ॥ रथाः कोटित्रयमिता वाहिन्यो लक्षमेककम् । महिषाः कोटिरेका च प्रौष्ठवाहाश्च भूरिशः ॥ शुभेऽह्नि सम्प्रतिभूप–श्चलन् शत्रुञ्जयं प्रति । वलभीनगरोपान्ते समहं समवासरत् ॥ नत्वा शत्रुञ्जयं तीर्थं कृत्वा च लपनश्रियम् । लम्भयामास सङ्घस्य मध्ये च स्यन्दनं प्रति ॥ ततः सङ्घश्चलन् शत्रु–ञ्जयशैले शिवप्रदे । आरुरोहाऽनमन् मूल–नायकं वृषभं जिनम् ॥ स्नात्रपूजाध्वजादान–मुखं कृत्यमशेषतः । सम्प्रतिमेदिनीपाल–श्चकाराऽनघसङ्घयुग् ॥ प्रासादं पतितं किञ्चिद् भूयिष्ठविभवव्ययात् । उद्दधार महीपालः सम्प्रतिः सिद्धपर्वते ॥ ततो रैवतके गत्वा नत्वा नेमिं जिनेश्वरम् । सम्प्रतिः पूजयामास ससङ्घः कुसुमादिभिः ॥ परिधाप्य गुरून् सङ्घं वरवस्त्रप्रदानतः । उत्ततार गिरेस्तस्मात् सम्प्रतिर्मेदिनीपतिः । ततो मार्गे चलँश्चन्द्र–पुरोपान्ते समेत्य च । श्रीसङ्घं जेमयामास वर्योशनप्रदानतः ॥ परिधाप्य गुरून् सङ्घं रुचिरैर्वसनैस्तदा । व्यसृजत् सम्प्रतिः स्वस्व–पुरीं प्रति जनान् मुदा ॥ ततः सम्प्रतिभूपालो महोत्सवपुरस्सरम् । निजपुर्यां समागत्य पपाल पृथिवीं नयात् ॥ एकदा धर्म्मसूरीश–पार्श्वे सम्प्रतिभूपतिः । धर्म्मं श्रोतुमुपाविष्टो यदा तदा जगौ गुरुः ॥ प्राग्भवार्जितपुण्यस्या–नुसारेण शरीरिणः । लभन्ते शर्मसङ्घातं चन्द्रनैगमवत् क्रमात् ॥ एकस्य श्रेष्ठिनः पुत्रे जातेऽभूद्वाग् नभोङ्गणे । शतकोटीश्वरो ह्येष भविष्यति वणिक्सुतः ॥ जन्मोत्सवं वरं कृत्वा सूनोश्चन्द्राभिधां व्यधात् । क्रमादभ्राण शास्त्राणि धर्म्मकर्म्मात्मकानि सः ॥ आपृच्छ्य जनकं यान–पात्रं भृत्वा क्रयाणकैः । ययौ चन्द्रो मणिद्वीपे शोभने वासरे क्रमात् ॥ व्यवसायं सदा तस्य कुर्वतस्तत्र सोद्यमम् । सहस्रकोटयो रैणां मिलिताः कर्म्मयोगतः ॥ चन्द्रो दध्याविभूद्वाणी या व्योम्नि मम जन्मनि । साऽन्यथाऽजनि भूयिष्ठ–धनोपार्जनतोऽधुना ॥ आपूर्य वाहनं सिन्धु–मार्गे चन्द्रः समाव्रजन् । विभवार्जनसङ्ख्यां तु कीरपार्श्वात् तदा द्रुतम् ॥ ज्ञापयामास ताताय ततः श्रेष्ठी व्यचिन्तयत् । पुत्रजन्मभवा सा वाग् बभूवैवाधुनाऽन्यथा ॥ इतोऽकस्माद् द्रुतं भग्ने याने चन्द्रस्सुदारुयुग् । सप्तमेऽह्नि तटे सिन्धोर्व्याकुलः समुपागमत् ॥ तदा तत्र छगीपालः प्राक्षिपत् प्रस्तरं तथा । यथा छागीमुखेऽकस्मात् प्रस्तरोन्यपतद् दृढम् ॥ स्थगिते प्रस्तरेणाऽऽस्ये छाग्या छागीपतिर्जगौ । भोः पुमन्! सहसाऽत्रैहि कर्षय प्रस्तरं मुखात् ॥ चन्द्रो जगावहं नैवोत्थातुं शक्नोमि साम्प्रतम् । तत उत्पाट्य तां छागीं तस्यान्ते छगपोऽनयत् ॥ एकपार्श्वे छगीं चन्द्रो यदा दध्रे स्वपाणिना । तदा छागीमुखाच्छागी–पालोऽश्मानमपाकरोत् ॥

अमुना प्रस्तरेणैव हृतं छागत्रयं पुरा । अतस्त्वं लाहि भो भद्र ! ततो नैगम ऊचिवान् ॥ मुधाऽहं प्रस्तरं नैव कस्यापि लामि कर्हिचित् । इत्युक्त्वाऽदात् वणिक् तस्मै मर्दलानां तु सप्तकम् ॥ नीत्वा तं प्रस्तरं पुर्यां मणिपरीक्षकान्तिके । मूल्यं पप्रच्छ चन्द्रः स ततो माणिक्यविद् जगौ ॥ शतकोटिसुवर्णस्य मूल्यमस्य समस्ति भोः ! । न्यूनं वाधिकं किञ्चिल्लभते मणिरेष हे ॥ रैणां हि शतकोट्या तु विक्रीय प्रस्तरं तकम् । चन्द्रः स्वजनकस्यान्ते समेत्य प्राणमत् पदौ ॥ पाथोधिगमनोदन्तं प्रोक्त्वाऽशेषं पितुः पुरः । चन्द्रोऽवपद् धनं सप्त-क्षेत्र्यां कल्याणहेतवे ॥ मृतेऽपि जनके चन्द्रो यात्रां शत्रुञ्जयाचले । कृत्वा कोटिद्वयं हेम्नां व्यययामास सादरम् ॥ यावन्मात्रं धनं धर्म्मे गृहकार्ये च सन्ततम् । तावन्मात्रा पुनः संघः समेति तन्निकेतने ॥ श्रीपुरे भीमभूपस्य पुत्री जाता यदा तदा । पुरोहितसुरारेश्च बभूव नन्दनः पुनः ॥ तदा व्योम्न्यभवद्वाणी पुरोहितमहीशयोः । पुत्रीनन्दनयोरेव भविष्यति ग्रहः ॥ वर्द्धमानं सुतं भूपः पाठाय लेखसद्मनि यत्रामुचत् सुतां तत्र पुरोहितोऽपि दैवतः ॥ क्रमाद् द्वयोरभूद्रागः पाणिपीडनहेतवे । धिग्जातित्वाद् नृपः पुत्रीं न तस्मै दातुमीहते ॥ राजाऽन्यदा जगौ विप्र ! पुत्र्यर्थं वीक्ष्यते वरः । पुरोहितोऽवदद्धाता निर्जरः पृच्छ्यतेऽधुना ॥ यस्य योग्या भवेत् कन्या तं वरं स च वक्ष्यति । राजाऽवग् स विधिः सत्यः कुत्रास्ति साम्प्रतं वद ? ॥ पुरोहितो जगौ सिन्धु-तटे चन्द्रपुरे वरे । अस्ति सत्यो विधिर्देवो यः स च पृच्छ्यतेऽधुना ॥ राजाऽवक् तर्हि ते पुत्रो विधिं प्रष्टुं प्रगच्छतु । ततो द्विजसुतोऽचाली-त्पित्रादिष्टोऽन्तिके विधेः ॥ व्रजन् मार्गे रमापुर्यां द्विजपुत्रो धनालये । जेमितुं स्थापितस्तेन वणिजा रुचिरादरम् । जेमनानन्तरं पृष्टो स द्विजो वणिजा खलु । कुत्र यासि किमर्थं त्वं ? ततो द्विजो जगावदः ॥ सिन्धुकूले विधेः पार्श्वे पित्राऽहं प्रेषितो ननु । राजपुत्र्या वरस्येक्षाहेतवे भूभुजापि च ॥ वणिजोक्तं बहून् दीन-दुःस्थान् लक्षमितानपि । मम जेमयतो गेहं कथं ज्वलति हायने ॥ प्रष्टव्यं विद्यते ह्येतन्ममापि विधिसन्निधौ । पुरोहितसुतः प्राह प्रक्ष्याम्यहं तवोदितम् ॥ एकं कार्यं ततश्चलन् द्विजो वीरपुरे महीभुजा । जेमितश्च ततः पृष्टो गमनोदन्त आदितः ॥ तेन स्वगमनोदन्ते कथिते भूपतिर्जगौ । पुण्यं मे कुर्वतः कस्मात् कुष्ठं जातं तनोर्भृशम् ॥ प्रष्टव्यं विद्यते ह्येतत्० ॥ द्वितीयं कार्यं ॥ ततो गच्छन् स पाथोधे-र्मध्यान्निःसारितोऽम्बुना । पुनः पुनर्झषो दृष्ट-स्तेनैव च द्विजन्मना ॥ मत्स्योऽवक् कुत्र देशे त्वं यास्यसि द्विज उक्तवान् । स्वीयगमनवृत्तान्तं ह्येतन्मत्स्यो जगावदः ॥ प्रविष्टोऽहं जले भूयो भूयोपि वा तदा भृशम् । निष्कास्ये च बहिः सिन्धोस्तत्र स्थातुं न हि प्रभुः ॥ प्रष्टव्यं विद्यते ह्येतत्० ॥ इति तृतीयं कार्यम् ॥ ततो व्रजन् द्विजो धातृ-पार्श्वेऽभ्येत्य नृपोदितम् । व्यजिज्ञपत्ततः प्राह विधिदेवस्तदग्रतः ॥ गच्छ पश्चाद् गद क्षोणी-पतेरग्रे पुरोहितः । विवाहस्य हि सामग्री क्रियतां मेदिनीभुजा ॥ आनयिष्याम्यहं पुत्र्या योग्यं वर्यं वरं द्रुतम् । विवाहदिवसे कार्यो विचारो न महीभुजा ॥ वणिक्सन्देशके प्रोक्ते ( पृष्टे ) द्विजेन विधिरूचिवान् । वणिग् कुलतुलामानै-र्जनं वञ्चयते बहुम् ॥ लोकवञ्चनपापेन बहुदानपरस्य हि । वणिजः सदनं वर्षं वर्षं प्रति ज्वलत्यहो ? ॥ उत्तर १ । भूपसन्देशके पृष्टे विप्रेण विधिरूचिवान् । निर्हेतु महिषीछाग-महिषाणां नृणां पुनः ॥ गोत्रिणां कन्दनं शश्वत् चकार स महीपतिः । तेन पापेन सञ्जातं कुष्ठं भूपतनौ भृशम् ॥ युग्मम् ॥ उत्तर २ । ततो मत्स्योदिते पृष्टे द्विजेन विधिरूचिवान् ॥ मत्स्यः स प्राग्भवे लक्ष्मी-पुरेऽजनि धनो नृपः । ज्वालं ज्वालं बहून् ग्रामान् लोकान् भूमीपतिः सदा । बाढमुद्वासयामासा-न्यत्र तिष्ठन्ति ते जनाः ॥ कर्षयित्वा तपोनिष्ठां-स्तपस्विनस्तदालयात् । स्वयं तस्थौ नृपोऽतो न स्थातुं शक्नोति वारिधौ ॥ उत्तर ३ ॥ तत आयान् द्विजः पश्चाद्वि-

धिना यन्निवेदितम् । तद्वणिग्–नृप–मत्स्यानां पुरः पृथक् पृथग् जगौ ॥ ततो वितन्वतं शुद्धं व्यवसायं छलोज्झितम् । वणिजो निश्चला लक्ष्मी–रजनिष्ट निरन्तरम् ॥ राज्ञो मानयतो गोत्रि–गुरुलोकान् सुभक्तितः । तीव्रं कुष्ठं गतं देहाद् वपुर्जातं सरोपमम् ॥ मत्स्यस्य निन्दतः पूर्वं–भयनिष्पादितं तमः । ददौ स्थानं पयोराशिः स्वस्मिन् वर्यवृषोदयात् ॥ कुष्ठिभूमीभुजा स्वीयां पुत्रीं त्रैलोक्यसुन्दरीम् । पुरोहितसुतायाऽऽशु ददौ चारुमहोत्सवम् ॥ ततो महीभुजा तस्मै पुत्रीकान्ताय भक्तितः । तिलङ्गविषयं सर्वं व्यश्राणि रुचिरेऽहनि ॥ इतो भीममहीशेन पुत्र्या वरं विलोकितुम् । प्रेषिता येऽनुगाः स्वीयास्तेऽभ्येत्येति जगुस्तदा ॥ तिलङ्गविषये चन्द्र–पुरे योऽस्ति नरेश्वरः । स एव विद्यते स्वीय–पुत्र्या योग्यो वरो वरः ॥ ततः स्वयम्वरां स्वीय–पुत्रीं प्रेष्य नरेश्वरः । तिलङ्गविषयेशाय प्रददौ रुचिरोत्सवम् ॥ पुरोहितो निजं पुत्रं ज्ञातुं स्वीयानुगास्तदा । प्रेष्य राज्ञा तिलङ्गस्य राज्यामिं तस्य तत्र तु ॥ नृपोऽन्यदा जगौ या गीः खेऽभूत्तदा पुरोहित ! । मम ते पुत्रिकासून्वो–र्भविष्यति करग्रहः ॥ साऽन्यथा मयका चक्रे तिलङ्गविषयेशितुः । पुत्र्या दानादिदानीं तु यतो भूपो बली ननु ॥ आकर्ण्यैतन्नृपपुत्र्या विवाहोदन्तमादितः । जगौ विधिकृतं नैवा–न्यथा भवति कर्हिचित् ॥ यतः—"दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत् । सरोम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ १ ॥" यद् धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं, तत् प्राप्नोति मरुस्थलेऽपि नितरां मेरौ गतो नाधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः, कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ १ ॥" ततो जामातरं पुत्री–युक्तमाकार्य तत्र च । इभाश्वधनदानेन प्रीणयामास भूपतिः ॥ ततो भीमनृपो जैनं धर्म्मं कुर्वन् विशेषतः । शत्रुञ्जये व्यधायात्रां युगादिजिनचर्चनाम् ॥ भीमभूपः सदा धर्म्मं कुर्वाणः श्रीजिनोदितम् । स्वर्गं प्राप्य क्रमान्मुक्तिं गमिष्यति न संशयः ॥ आकर्ण्यैतन्महीपाल–सम्प्रतिः प्रतिवासरम् । भूरिदानं प्रदत्ते स याचकेभ्यः सुभक्तितः ॥ भूरिसङ्घयुतो भूपः सम्प्रतिः सिद्धपर्वते । गत्वाऽर्चित्वा जिनान् धर्म्म–घोषसूर्यन्तिके ययौ ॥ श्रुत्वा धर्म्मोपदेशं तु सम्प्रतिर्भूपतिर्जगौ । किं जायतेऽस्य तीर्थस्य सेवनात् सुकृतं किल ? ॥ कानि कान्यत्र तीर्थेषु धर्म्मस्थानानि सद्गुरो ! । का को नद्योऽत्र विद्यन्ते शृङ्गाणि कति पर्वते ॥ गुरुर्जगाद भूपाल ! तीर्थस्यास्य निषेवनात् । जायते तद् वृषं तद्धि कथ्यमानं निशम्यताम् ॥ ग्रन्थान्तरे श्रीशत्रुञ्जयस्य माहात्म्यमेवं प्रोक्तमस्ति; तथाहि–तावद् गर्जन्ति हत्यादि–पातकानीह सर्वतः । यावच्छत्रुञ्जये–त्याख्या श्रूयते न गुरोर्मुखात् ॥ न भेतव्यं न भेतव्यं पातकेभ्यः प्रमादिभिः । श्रूयतामेकवेलं श्री–सिद्धि–क्षेत्रगिरेः कथा ॥ वरमेकदिनं सिद्धि–क्षेत्रे सर्वज्ञसेवनम् । न पुनस्तीर्थलक्षेषु भ्रमणं क्लेशभाजनम् ॥ पदे पदे विलीयन्ते भवकोटिभवान्यपि । पापानि पुण्डरीकाद्रि–र्यात्रां प्रति यियासताम् ॥ एकैकस्मिन् पदे दत्ते पुण्डरीकं गिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः स मुच्यते ॥ न रोगा न च सन्तापो न दुःखं न वियोगता । न दुर्गतिर्न शोकं च पुंसां शत्रुञ्जयस्पृशाम् ॥ छिद्यन्ते नास्य पाषाणाः खन्यते नो महीतलम् । शकृन्मुत्रादि नो कार्यं सुधियाऽत्र मुमुक्षुणा ॥ कृता शत्रुञ्जये यात्रा न येन जगतां विभुः । नाऽपूजि हारितं तेन स्वजन्म सकलं मुधा ॥ अन्यतीर्थेषु यद्यात्रा–शतैः पुण्यं भवेन्नृणाम् । तदेकयात्रया पुण्यं शत्रुञ्जयगिरौ स्फुटम् ॥ पुनस्तीर्थपतेरस्य माहात्म्यमिह केवली । वेत्ति वक्तुं समर्थो न सोऽपि दृष्टजगत्त्रयः ॥ प्रत्यहं पुण्डरीकाद्रिं ध्यायेद्यस्तु सुवासनः । संसारतापमुन्मूल्य प्राप्नोति परमं पदम् ॥ आसाद्य मानवं जन्म प्राप्य बोधं च सद्गुरोः । न पूजितमिदं तीर्थं येन तस्य वृथाऽखिलम् ॥ एकोन-

सप्तति कोटाकोटिर्यत्र जगद्गुरुः। पञ्चाशीति कोटिलक्षाः प्राप्तवान् पादुकापदे ॥ चतुश्चत्वारिंशत्कोटी सहस्रैरधिका पुरा। तं सिद्धाचलमानौमि सर्वतीर्थफलप्रदम् ॥ शत्रुञ्जयमिदं तीर्थं न यावन् पूजितं भवेत्। गर्भवासो हि तस्यास्ति तावद्दूरे भवेद् वृषम् ॥ यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम्। सङ्क्लेशार्हन्त्यपदकृत् स जीयाद्विमलाचलः ॥ महास्नात्रमहापूजा-ध्वजावारिकयान्विता। सङ्घपूजेति कृत्यानि पञ्च सङ्घाधिपः क्रियात् ॥ तौ द्राविडवारिखिल्लौ दशकोटिसमन्वितौ। निर्मलं केवलं प्राप्य सिद्धिं शत्रुञ्जये गतौ ॥ यथा चैत्रस्य राकायां पुण्डरीकोऽगमच्छिवम्। कार्तिकस्य तथैतेऽपि तदेते पर्वणी स्मृते ॥ सिंहव्याघ्राहिशवर-पक्षिणोऽन्येऽपि पापिनः। दृष्ट्वा शत्रुञ्जयेऽर्हन्तं भवन्ति स्वर्गगामिनः ॥ सुरासुरमनुष्यादि-भवेष्वालोकितो न यैः। शत्रुञ्जयस्ते स्पृशतो (मनुजा) न शिवोदयभाजिनः ॥ अन्यतीर्थेषु सद्ध्यान-शीलदानार्चनादिभिः। यत् फलं स्यात्तदधिकं शत्रुञ्जयकथाश्रुतेः ॥ त्रिंशतिर्भवनस्येन्द्रा द्वात्रिंशद्व्यन्तराधिपाः। द्वौ ज्योतिरिन्द्रौ दश चा-प्यूर्ध्वलोकनिवासिनः ॥ चतुःषष्टिमिता एव-मिन्द्रा देवैर्वृता घनैः। शत्रुञ्जयं जगन्नाथ-भूषितं नेमुरादरात् ॥ युग्मम् ॥ अहो महोद्यतैः रत्नै-र्निःसपत्नैर्मरीचिभिः। पवित्रक्षितितो भाति सर्वस्फातियुतो गिरिः ॥ सुवर्णशिखरैः शोभा-सम्भृतः शिखरीश्वरः। सर्वपर्वतनाथत्वान् मुकुटैरिव मण्डितः ॥ सुवर्णरूप्यरत्नाद्यैः शृङ्गैः कर्बरिताम्बरैः। पुनानोऽयं समं द्यावा-भूम्योरघहरो नृणाम् ॥ स्वर्णगिरि-ब्रह्मगिर्यु-दयार्बुदमुखैर्वरैः। अष्टोत्तरशतेनोच्चै-र्भाति शृङ्गैरयं गिरिः ॥ सर्वतः सिद्धायतनै-रर्हद्वेश्मविभूषितः ॥ यक्षालयैर्लक्षितोऽसौ सिद्धिशैलो विभासते ॥ यक्षकिन्नरगन्धर्व-विद्याधरसुरव्रजैः। अप्सरोभिः सदा सेव्यो भाति शत्रुञ्जयो गिरिः ॥ मुमुक्षवो योगिनोऽत्र विद्याधरनरोरगाः। कन्दरासु पवित्रासु ध्यायन्त्यर्हन्मयं महः ॥ रसकूपी-रत्नखानि-दिव्यौषधिभिरन्वितः। सदा शत्रुञ्जयोऽस्त्येप सर्वपर्वतगर्वभित् ॥ कस्तूरीमृगयूथैश्च मयूरैर्मत्तकुञ्जरैः। सञ्चरच्चमरीवृन्दैः सर्वतो भात्ययं गिरिः ॥ परस्परं विरुद्धा ये सत्त्वा आजन्मतोऽपि ते। त्यक्तवैरा रमन्तेऽत्र जिनाननविलोकिनः ॥ इतः शत्रुञ्जयां पश्य नदीं पूर्वाब्धिगामिनीम्। कृतामिव पुण्यरेखां पश्यतां शृण्वतामपि ॥ तालध्वजनगोत्सङ्गे तटिनी तटिनीपतेः। अटतीह तटं भाति याऽस्ति शत्रुञ्जयानुगा ॥ दिश्युत्तरस्यां पश्याच्छ-पयः प्राप्तमहोदया। इन्द्रेण निर्मितेत्यैन्द्री तटिनी स्फुटनीरजा ॥ कपर्दिकां नदीं दिव्य-जलकल्लोललालिताम्। पश्याम्भोरुहमध्यस्थ-हंससारससेविताम् ॥ प्रभोः पश्चिमदिग्भागे ब्राह्मी विश्वोपकारिणी। सरित् सलिलसम्पूर्णा भाति पापापहारिणी। शत्रुञ्जयैन्द्री नागेन्द्री कपिला यमला तथा। तालध्वजी च पक्षाङ्गा ब्राह्मी माहेश्वरी तथा ॥ साभ्रमती शवला पिवरतोया जयन्तिका। भद्रा चेति महानद्य इमा भान्ति चतुर्दश ॥ सूर्योद्यानसमानश्रि पूर्वस्यां दिश्यदोऽद्भुतम्। स्वर्गोद्यानमपाच्यां च स्वर्गोद्यानसमानरुक् ॥ प्रतीच्यां च सुराश्चारु चन्द्रोद्यानमिदं महत्। लक्ष्मीलीलाविलासाख्यं कौबेर्यां विपिनं ह्यदः ॥ चतुर्दिग्भ्यः समागच्छल्लक्ष्मीधम्मिल्लसन्निभैः। अदीप्यतामीभिरयं श्रीशत्रुञ्जयपर्वतः ॥ सौधर्मेन्द्रनियोगेन धनदेन विनिर्मितम्। कुण्डं कश्मलसङ्घात-विघातैन्द्रपुरमिदम् ॥ सरः स्फुरचन्द्रिकाभ-जलोर्मिभिरवराजितम्। भरतस्य यशोराशि-रिवैतद्भाति भारतम् ॥ ईषत्पवननिर्धूत-तरङ्गावलिलालितम्। सरः कपर्दियक्षस्य पश्य कस्य सुखाय न ॥ मुक्तिसीमन्तिनीशोभा-समालोकनदर्पणम्। तटागं विकसद्भागं मुनेः पश्यत पश्यत ॥ सर्वतीर्थावताराख्यं चान्द्रं सौरं च सत्पयः। कुण्डमन्यान्यपि सन्तु-र्नामभिः पश्यतामराः ॥ यदा शत्रुञ्जये साधुः पूजितो वा स्मृतः स्तुतः। श्रुतो

वा दृक्पथं प्राप्तस्तदा कर्म्मक्षयो भवेत् ॥ पापिनां शल्यरूपोऽयं धर्म्मिणां सर्वशर्म्मदः । कामिनां कामितं दाता जीयाच्छत्रुञ्जयो गिरिः ॥ विना तपो विना दानं विनाऽर्चां शुभभावतः । केवलं स्पर्शनं सिद्ध-क्षेत्रस्याक्षयसौख्यदम् ॥ शत्रुञ्जयसमं तीर्थ-मादिदेवसमः प्रभुः । जीवरक्षासमो धर्म्मो नास्ति विश्वत्रये नृप ! ॥ इन्द्रादयोऽपि ये देवा देव्योऽपि भुवनत्रये । सेवन्ते यं सदा तीर्थ-राजं सद्गतिकाम्यया ॥ अन्यत्र पूर्वकोट्या यत् शुभध्यानेन शुद्धधीः । प्राणी वध्नाति सत्कर्म्म मुहूर्तादिह तद् ध्रुवम् ॥ अन्य-तीर्थेषु यद्यात्रा-शतैः पुण्यं भवेन्नृणाम् । तदेकयात्रया पुण्यं शत्रुञ्जयगिरौ स्फुटम् ॥ जिना अनन्ता अत्रैयुः सिद्धाश्चात्रैव भूरिशः । मुनयश्चाप्यसङ्ख्याता-स्तेन तीर्थमिदं महत् ॥ चैत्रस्य पूर्णिमायां तु पुण्डरीकगिरे-र्नरः । स्वर्गापवर्गसौख्यानि कुरुते करगाण्यसौ ॥ श्रुत्वैतद्भूपतिर्गत्वा सर्वसङ्घसमन्वितः । नदनद्यादिशृङ्गेषु जिनानर्चितवान् मुदा ॥ ततोऽभ्येत्य नृपः स्वीय-पुरे धर्म्मपरायणः । कारयामास सर्वज्ञ-पूजां भव्यान् जनान् बहून् ॥ जैनधर्म्मं सदा भूप-सम्प्रतिर्मुदिताशयः । कुर्वन्नर्जयन् मुक्ति-गमयोग्यं वृषं बहु ॥६०४॥

इति सम्प्रतिभूपकथा शत्रुञ्जयोद्धारगर्भिता समाप्ता ।

---

तीर्थे शत्रुञ्जये श्रीमान् विक्रमार्कनरेश्वरः । यात्रां विस्तरतः कृत्वा चैत्योद्धारमकारयत् ॥ तथाहि— गर्दभिल्लमहीपाल-पुत्रो विक्रमभानुमान् । पपाल पृथिवीं न्याय-मार्गेण वरविक्रमः ॥ तस्य पत्न्योऽभवन् वह्व्यः कमलाद्या मनोहराः । सुकोमलाभवः पुत्रो विक्रमाच्चरितोऽभवत् ॥ क्रमाद् रै-पुरुषद्वन्द्वं बभूवाऽनघपुण्यतः । ववर्द्धे निखिलं राज्यं तस्याऽश्वेभादिभिः स्फुटम् ॥ सिद्धसेनगुरूपान्ते धर्म्मं जिनवरोदितम् । सम्यक्त्वसहितं भेजे विक्रमादित्यभूपतिः ॥ अत्र विस्तराद्राज्यप्राप्ति-पृथिव्यनृणी-करणादिसर्वसम्बन्धो मत्कृतांच्छ्रीविक्रमादित्यचरित्राज्ज्ञेयः । अन्यदा श्रीशिवक्ष्माध्र-माहात्म्यं विक्र-मार्यमा । सिद्धसेनगुरूपान्ते शुश्रावेति कृतादरम् ॥ एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटि-कृतेभ्योऽपि पातकेभ्यः प्रमुच्यते ॥ कृता शत्रुञ्जये यात्रा येन सङ्घयुताऽऽदरात् । स एव लभते मुक्ति-सातं स्तोकभवादपि ॥ एकोनसप्ततिं कोटा-कोटीर्यत्र जगद्गुरुः । पञ्चाशीतिकोटिलक्षाः प्राप्तवान् पादुका-पदे ॥ चतुश्चत्वारिंशत्कोटी सहस्रैरधिका पुरा । तं सिद्धाचलमानौमि सर्वतीर्थफलप्रदम् ॥ युग्मम् ॥ शत्रुञ्जयमिदं तीर्थं न यावत् पूजितं भवेत् । गर्भवासो हि तस्यास्ति तावद् दूरेऽभवद् वृषम् ॥ यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम् । यो ध्यातो निर्वृतिं दत्ते भव्यप्राणभुजामहो ! ॥ इति सिद्धाद्रि-माहात्म्य-माकर्ण्य मेदिनीपतिः । यात्रां शत्रुञ्जये कर्त्तु-मुद्यमं चक्रिवाँस्तदा ॥ ततः श्रीविक्रमादित्यः प्रेष्य कुङ्कुमपत्रिकाः । श्रीसङ्घं मेलयामास शोभने वासरे स्फुटम् ॥ शुद्धेऽह्नि विक्रमादित्यो नन्तुं शत्रुञ्जयेऽर्हतः । अनर्गलं ददद्दानं प्रस्थानं प्रददौ मुदा ॥ चतुर्दश नृपास्तस्य सङ्घे मुकुटवर्द्धनाः । शुद्धश्राद्धकुटुम्बानां लक्षाः सप्ततिरेव च ॥ सिद्धसेनादिसूरीशाः शतानि पञ्च सद्गुणाः । क्रियाकलापकुशला-श्चेलुर्नन्तुं जिनेश्वरम् ॥ एकोनसप्ततिशतं हैमा देवालया वराः । शतत्रयमिता रौप्य-मया जनमनोहराः ॥ शतपञ्चमिता दन्त-मया देवालयास्तथा । अष्टादश शतं काष्ठ-मयाश्च चलिताः पुनः ॥ एका कोटी रथा लक्ष-द्वयं नवशतानि च ।

लक्षा अष्टादशाऽ-र्वाणः षट् सहस्राणि हस्तिनः ॥ वेसरोष्ट्रवृषादीनां मनुष्याणां च योषिताम् । विक्रमादित्य-भूपाल-सङ्घे सङ्ख्या न विद्यते ॥ देवालयपताकस्थ-किङ्किणी-रुचिरक्कणाः । दूतमाह्वयितुं सङ्घ-मुद्यता अभवन् समम् ॥ पीतस्कन्धाः सदाकारा नानाभूषणभूषिताः । वहन्ति वृषभा देवालयान् कुञ्जर-गामिनः ॥ दिव्यरूपधराश्चारु-भूषणा हरिणेक्षणाः । चतुःकोटिस्थिता देवा-लयान् चामरपाणयः ॥ गायन्त्यो जिननाथस्य गीतानि मधुरध्वनि । लीलया वातयन्ति स्म चामराणि मनोहराः ॥ युग्मम् ॥ ग्रामे ग्रामे चलन्मार्गे स्नात्रपूजाध्वजादिभिः । कुर्वन् प्रभावनां शत्रु-ञ्जयोपान्ते नृपो ययौ ॥ अनर्गलं ददृशानं श्रीशत्रुञ्जयपर्वतम् । आरुरोह जिनं नन्तुं विक्रमादित्यभूपतिः ॥ स्नात्रपूजाध्वजारोप-वारिका वाहनादिकम् । कार्यं सर्वं नृपः कृत्वा चकारेत्यर्हतः स्तुतिम् ॥ सुरासुरमहीनाथ-मौलिमालानतक्रमम् । श्रीशत्रुञ्जयकोटीर-मणि श्रीऋषभं स्तुवे ॥ विभो ! त्वत्पदराजीवं ये सेवन्ते जनाः सदा । सुरासुरनृप-श्रेणी भजते तान् सुभक्तितः ॥ तदैव पतितं किञ्चित् प्रासादं वीक्ष्य भूपतिः । प्रोवाच सिद्धसेनार्यं प्रासा-दोऽयं पतिष्यति ॥ सिद्धसेनगुरुः प्राह कारिताज्जिनमन्दिरात् । उद्धारे द्विगुणं पुण्यं प्रोक्तं श्रीजिननायकैः ॥ यतः—"कारयन्ति मरुद्गेहं ख्यात्यर्थं केचनात्मनः । केचित् स्वस्यैव पुण्याय स्वश्रेयोऽर्थं च केचन ॥१॥" प्रासादोद्धारकरणे भूरि पुण्यं निगद्यते । उद्धारान्न परं पुण्यं विद्यते जिनशासने ॥ पुराऽत्र पर्वते चक्रे प्रासादं भरतो नृपः । श्रीनाभेयजिनेशस्य मणिरूप्यमयं महत् ॥ अस्मिन्नेव महातीर्थे प्रासादं वृषभप्रभोः । कारयामास सगर-चक्रवर्त्ती द्वितीयकः ॥ शत्रुञ्जये ततः सार-कार(कीर)काष्ठमयं पृथु । प्रासादोद्धार-मुर्वीशः कारयामास विक्रमः ॥ ततः श्रीविक्रमादित्य-श्चलन् शत्रुञ्जयाऽचलात् । श्रीरैवतगिरौ नेमि-नाथं नन्तुं समागमत् ॥ स्नात्रपूजाध्वजारोप-वारिकावाहनादिकम् । कार्यं सर्वं नृपः कृत्वा चकार स्तवनं मुदा ॥ यात्रां विस्तरतः कृत्वा द्वयोः तीर्थेशयोस्तदा । विक्रमार्कनृपोऽवन्त्यां नगर्यां समुपागमत् ॥ ४० ॥

इत्यादि विक्रमार्कचरितं मत्कृतं ( मत्कृताद् ) ज्ञेयं । विक्रमार्ककृतोद्धारस्वरूपम् ।

---

मरुस्थल्यां कलाग्रामे श्रीश्रीमालिकवंशजः । ऊदाभिधो वणिग्वर्यो वसन् धर्म्मं व्यधात् सदा ॥ वर्षाकालेऽन्यदोदाको गच्छन् घृतं पणायितुम् । मध्यरात्रौ बहिर्ग्रामात् केदारान् वारिपूरितान् ॥ स्फुटतस्त्वरितं पालि-करणान्मानवैर्वरैः । बध्यमानान्निरीक्ष्याऽवक् तान्प्रत्येव कृतादरम् ॥ युग्मम् ॥ यूयं कस्यानुगाः ? प्रोक्तं तैरेवं तं प्रति स्फुटम् । धनस्य श्रेष्ठिनोऽत्र स्मो वयं तु कामुकाः किल ॥ त्वरितं चलनात्त-त्स-जल्पनाद् व्यन्तरांश्च तान् । ज्ञात्वोदाको जगौ मे तु क सन्ति किल कामुकाः ? ॥ तैरुक्तं भवतः कर्णा-वत्यां सन्ति च कामुकाः । ऊदो दध्यौ ततस्तत्र पुर्यां वासो विधीयते ॥ ततः कुटुम्बयुक्तः स गत्वा कर्णावतीपुरीम् । वायटीयजिनावासे वन्दते स्म जिनेश्वरान् ॥ विधिवत् सकुटुम्बं तं वन्दमानं जिनाधिपान् । वीक्ष्य छंपिकया प्रोक्तं कस्यातिथिर्भवानिह ? ॥ ऊदाकोऽवग् न कोऽस्त्यत्र स्वकः सुहृच्च सम्प्रति । ततस्तया वरं श्राद्धं मत्वाऽनायि वणिग्गृहे ॥ तत्रैव जेमयित्वा तं दत्त्वा तस्मै धनं बहु । एकं सद्म च वासाय वितीर्या-तिष्ठिपच्च सा ॥ युग्मम् ॥ धर्म्माविरोधतो द्रव्य-मर्जयन् सन्ततं वणिग् । पूजयित्वा जिनं भुङ्क्ते नित्यं स करुणापरः ॥ उपार्ज्य विभवं किञ्चित् कारयन् मन्दिरं नवम् । ऊदाकः प्राप्तवाँस्तत्र निधानं हेमपूरितम् ॥ तत ऊदो निधिप्राप्तिं भूपालाय न्यवेदयत् । भूपस्तत्र समागत्य दृष्ट्वा

सेवधिमूचिवान् ॥ त्वयाद्य सेवधिः प्राप्तः पूर्वोपार्जितपुण्यतः । अतोऽमुं भुङ्क्ष्व वैदेह ! त्वमेव लाम्यहं न हि ॥ ऊदाकस्योदयो लक्ष्म्या-स्तदानीमजनि ध्रुवम् । अतो भूपो ददौ तस्यो-दयनेत्यभिधां तदा ॥ यतः—"धनदो धनमिच्छूनां कामदः काममिच्छताम् । धर्म्म एवापवर्गस्य पारम्पर्येण साधकः ॥ १ ॥ कृतप्रयत्नानपि नैति काँश्चित् स्वयं शयानानपि सेवते परान् । द्वयेऽपि नास्ति द्वितीयेऽपि नास्ति श्रेयःप्रचारो न विचारगोचरः ॥ २ ॥" ततः कर्णावतीपुर्या-मर्हत्सद्म मनोहरम् । चतुर्विंशतिसर्वज्ञ-शोभितं व्यरचत् स च ॥ पुत्रा उदयनस्यासँ-श्चत्वारो धर्म्मतत्पराः । आद्य आम्रभटो नाम्ना द्वितीयो वाहडः पुनः ॥ तृतीयश्चाहडः पुत्रः सो (ल्हा) न्हाकश्च चतुर्थकः । एते सर्वे बुधोपान्ते पेठुः शास्त्राणि भूरिशः ॥ जयसिंहमहीशस्य राज्ये उदयनो वणिग् । क्रमान्मन्त्रिपदं प्राप धर्म्मकर्म्मसु कर्म्मठः ॥ सिद्धराजे दिवं याते कुमारपालभूपतेः । सर्वेषु मन्त्रिषु प्राप मुख्यत्वं पुण्ययोगतः ॥ युग्मम् ॥ कुमारपालभूपालं नत्वाऽन्येद्युर्जनो जगौ । कोङ्कणे विषयेऽस्तीद्धो मल्लिकार्जुनभूपतिः ॥ स्वस्मिन् राजपितामह इति स विरुदावलिम् । वहमानो नृपान् सर्वान् तृणमेव न मन्यते ॥ मल्लिकार्जुनभूपस्य विरुदं तन्मयाऽचिरात् । उत्तार्यमिति चौलुक्य-नृपतिर्ध्यातवान् हृदि ॥ द्वितीयेऽह्नि नृपो लात्वा वीटकं स्वकरे जगौ । मल्लिकार्जुनभूपस्योत्तारयिष्यति को मदम् ? ॥ भूपहस्तान्न को मर्त्यो गृह्णीते वीटकं यदा । तदोत्थायाम्वडो लात्वा वीटकं प्रोक्तवानिति ॥ मदस्तस्य मयोत्तार्य इत्युक्ते मन्त्रिणा तदा । राजा तस्मै ददौ चक्र-मिभाश्वादि विराजितम् ॥ भूपदत्तं बलं लात्वाऽम्बडः कलवर्णां नदीम् ॥ उत्तीर्य कोङ्कणेशस्य देशमध्ये समीयिवान् ॥ मल्लिकार्जुनभूपेन सार्द्धं विरचयन् रणम् । अम्बडः सचिवो भग्नः पत्तनोपान्तसमीयिवान् ॥ लज्जमानोऽसितां तुङ्ग-पटीं कृत्वाऽखिले बले । तस्थिवानम्बडस्तत्राऽप्रोच्य स्वागमनं प्रभोः ॥ अन्येद्युर्बहिरायात-श्चौलुक्यो वीक्ष्य तद्बलम् । पप्रच्छ मनुजोपान्ते कृष्णा तुङ्गपटी कथम् ? ॥ नरोऽवक् तत्र यो मन्त्री मल्लिकार्जुनभूधवम् । जेतुं ययौ स भग्नः सन् पश्चादत्र समागमत् ॥ तेन तुङ्गपटीं कृष्णां लज्जमानः स मन्त्रिराट् । कृत्वा तस्थिवान् भूप-स्ततो दध्याविदं हृदि ॥ यस्य लज्जा भवेत् पुंसः स कार्यं दुष्करं किल । चकार भूपतेर्मातुः पितुरन्यनृणां स्फुटम् ॥ विमृश्येति नृपस्तत्र गत्वा सन्मान्य मन्त्रिणम् । स पुनः प्रेषयन् जेतुं मल्लिकार्जुनभूपतिम् ॥ कोङ्कणे विषये गत्वा कृत्वा सैन्यं द्विधा रहः । स्वागमं ज्ञापयामास मन्त्री वैरिमहीशितुः ॥ तदा स्तोकबलं ज्ञात्वा मल्लिकार्जुनभूपतिः । अल्पसैन्यो रिपुं जेतुं वैरिचक्रान्तिके ययौ ॥ युद्धं कुर्वंस्तदा राज्य-पितामहमहीपतिः । मन्त्रीशेन द्वयोः स्वीय-सैन्ययोरन्तराऽऽशु सः ॥ स्मरेष्टं दैवतं राजन् ! जल्पन्निति स मन्त्रिराट् । तस्यारेर्मस्तकं पद्म-नालवच्छिन्नवान् रणे ॥ स्वायत्तीकृत्य तत्सैन्यं चौलुक्याज्ञां प्रवर्त्तयन् । पुरीमध्ये प्रवेशं तु चकाराम्बडमन्त्रिराट् ॥ प्रथमं प्रथमं देवं नत्वा श्रीजिनसद्मनि । गत्वा नृपगृहे चक्रे भोजनं परिवारयुग् ॥ मल्लिकार्जुनभूपस्य स्वामिनः स्थगितं शिरः । कृत्वा तत्कोशमहाय ललावम्बडमन्त्रिराट् ॥ तत्र स्वं सेवकं मुक्त्वा लात्वा चारिशिरस्तदा । आम्बडः पत्तनेऽभ्येत्या-नंसीदादौ महीपतिम् ॥ शिरोऽरेः स्थगितं रात्रौ शृङ्गारकोटिशाटिका । तापक्षयङ्करं हारं माणिक्याह्वं प्रछेवटम् ॥ शुक्तिं विषापहाराह्वां द्वात्रिंशद्धैघटान् वरान् । मुक्तानां मूढकानां षट् कुञ्जराणां चतुःशतीम् ॥ सत्पात्राणां शतं विंश-त्युत्तरं तत्प्रभाजुषाम् । सहस्राण्यष्ट सार्य्याणां वेसराणां चतुःशतीम् ॥ हेम्नः टङ्कास्त्रयस्त्रिंश-ल्लक्षाणि रजतस्य च । चतुर्दशार्द्धसंयुक्तः कोटिद्रव्यस्य तत्क्षणात् ॥ मुक्त्वा भूमिपतेरग्रे वस्तून्येतानि मन्त्रिराट् । यावत् स्थितोऽनुगस्ताव-ज्जयोदन्तं

द्विषो जगौ ॥ द्रव्यकोटित्रयं तस्मै दत्त्वा राजपितामहम् । वितीर्य विरुदं भूपो हृष्ट उत्सवमातनोत् ॥ भूपदत्तेभमारूढो मन्त्री दानं ददद् बहु । जिनागारे जिनं नत्वा समागात् स्वीयमन्दिरम् ॥ ततोऽम्बड-मन्त्रीशो मानितो मेदिनीभुजा । चकार धर्म्मकृत्यानि काले काले सदादरात् ॥ यतः—" त्रिवर्ग-संसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य । तत्रापि धर्म्मं प्रवरं वदन्ति न तं विना यद्भवतोऽर्थकामौ ॥ १ ॥ " अम्बडो देवबुद्ध्या तु वन्दते श्रीजिनेश्वरम् । गुरुबुद्ध्या गुरुं हेम-सूरिं नौति निरन्तरम् ॥ स्वामिबुद्ध्या तु भूपालं कुमारपालमादरात् । प्रातर्मातुः पितुः पादौ नौति भक्त्या विशेषतः ॥ यतः— " सर्वज्ञो जितरागादि-दोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥ १ ॥ " त्रिकालं कुरुते पूजां प्रभोरावश्यकद्विकम् । सचित्तं नैव गृह्णाति मन्त्रिराडम्बडः क्वचित् ॥ अर्थिभ्यः प्रत्यहं दानं यथा पात्रं यथोचितम् । ददान अम्बडो नैव कुभावं कुरुते क्वचित् ॥ यतः—" पुहविकरंडे घंभंडसंपुटे भमइ कुण्डलिजंतु । तुह अंबडदेव जसो अलद्धपसरो भुयंगुव्व ॥ १ ॥ " कोटिदानं क्वचिल्लक्षदानं । सत्यां संयतसामग्र्या-मम्बडो दानिशेखरः । प्रतिलाभ्य यतीनन्नं शुद्धं भुङ्क्ते ततः स्वयम् ॥ यतः—" पढमं जइण दाऊणं अप्पाण पणमिऊण पारेइ । असइ सुविहियाणं भुंजेइ कयदिसालोओ ॥ १ ॥ साहूणं कप्पणिज्जं जं नवि दिन्नं कहंचि किंपि तहिं । धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥ २ ॥ " वहन् विरुदपङ्क्तिं तु स्वस्मिन् राजपितामहम् । देवबुद्ध्या जिनं गुरुं शुद्धं गुरुधियाऽनमत् ॥ अम्बडो ददते दान-मर्थिभ्यः प्रतिवासरम् । कर्ण-विक्रम-रत्नादि-दानिख्यातिमुपागमत् ॥ कुमारपाले उर्वीशे परलोकमुपागते । तत्पट्टेऽजयपालस्तू-पविष्टः स्वयमञ्जसा ॥ नतेषु सर्वमन्त्र्यादि-जनेष्वाम्रभटोऽनवः । विना जिनं तु(न)भूपालं ननाम धर्म्मबुद्धितः ॥ अजयो भूपतिः प्राह यदि त्वमाम्रभटाऽनघ ! । मा नंस्यसि तदा हन्मि भवन्तं मन्त्रिनायकम् ॥ ततोऽन्यदा प्रपूज्यार्हद्‌बिम्बं चानशनं मुदा । लात्वा मन्त्री युधं कर्त्तुं सार्द्धं भूमीभुजा दृढम् ॥ स्मरन् चित्ते जिनाधीश-मम्बडो मन्त्रिनायकः । युद्धं कुर्वन् मृतः स्वर्ग-सदनं समुपेयिवान् ॥ यतः-"वरैर्भट्टैर्भाव्यं वरमपि च खिड्गैर्धनकृते वरं वैश्याचार्यो( र्यै) वरमपि महाकूटनिपुणैः । दिवं याते दैवादुदयनसुते दानजलधौ न विद्वद्भिर्भाव्यं कथमपि बुधैर्भूमिवलये ॥ इत्यादि बहुशस्तीर्थ-यात्रादिपुण्यमम्बडे । कृत्वा स्वर्गं गते प्रोचु-र्जना एवं परस्परम् ॥ अयं मन्त्रीश्वरः पुण्य-सद्म प्राणि-हिताशयः । कृत्वा भूरितरं पुण्यं स्वर्गिगृहं समीयिवान् ॥७२॥

इति आम्रभटमन्त्रिकथा समाप्ता ॥

---

बंबेरपत्तनाद्भूपो नाम्ना वीसलदेवकः । परिधाय स्वयं पट्ट-कुलं च्यूतं धुरि स्फुटम् ॥ ततोऽन्यत्र-पणायन्ते पट्टकुलानि सन्ततम् । भूपेन तेन विषये-ऽन्यस्मिन् द्रव्यलोभतः ॥ भूपः कुमारपालोऽथा-णहिल्लाभि-धपत्तने । अर्चयन् श्रीजिनं पट्ट-कूलं पर्यदधत् सदा ॥ दुर्लभत्वाच्च तद्दिव्यं वस्त्रं पत्तनभूपतिः । स्थापयामास गेहस्य गर्भे धोतिकहेतवे ॥ वाहडो बालकैः सार्द्धं रममाणो निरन्तरम् । पर्यधत्त दुकूलं त-द्भूपस्य सदनाद् बहिः ॥ सप्तस्वहस्सु यातेषु दुकूलं मलिनं क्रमात् । जातं वीक्ष्य नृपोऽप्राक्षीत् केनेदं मलिनं कृतम् ? ॥ सेवका जगदुर्देव ! वाहडो मन्त्रिनन्दनः । व्यापारयत् तदेतद्धि तेनाऽभून् मलिनं त्विदम् ॥ आकार्य बाहडं सद्यो जगादेति महीपतिः । व्यापार्यं न हि दुकूलं मन्त्रिपुत्र ! यथा तथा ॥ दुर्लभं विद्यते वस्त्र-

मीदृग् दूरसमागतम् । अतः परं त्वया नैव व्यापार्यमम्बरं त्विदम् ॥ नृपवाक्यं निशम्यैतद् दूनः बाहड ऊचिवान् । आनेष्यन्ते मया पट्ट–कूलिकानीह पत्तने ॥ ततो भूपो जगौ मन्त्रि–पुत्र ! वाहड ! साम्प्रतम् । सुकुमारो भवान् तस्मान्मुञ्चामुं त्वं कदाग्रहम् ॥ बंबेरपत्तने भूमि–पतिर्वीसलदेवकः । दुर्दमो गुसदार्मस्ति त्रपुवप्रविनिर्मितेः ॥ वप्रस्य परितोऽङ्गार–पूर्णास्ति खातिका वरा । पट्टकूलकृतः सप्त शतानि सन्ति तत्र च ॥ व्यूतानि च दुकूलानि तैरादौ मेदिनीपतिः । परिधत्ते ततोऽन्यत्र देशे गच्छन्ति तानि च ॥ तत्रत्येभ्यजनाः प्रायो दुकूलानि निरन्तरम् । विक्रीणन्तेऽन्यदेशेषु गत्वा गत्वा धनेन तु ॥ वाहडोऽवग् मया ह्यत्र यावद्दुकूलकारकाः । आनेष्यन्ते न तावच्च भोक्तव्यमेकशो नृप ! ॥ तस्येति मूर्त्तिमालोक्य भूपो वह्वीं चमूं निजाम् । वितीर्य वाहडं जेतुं तमरातिमचालयत् ॥ मातरं पितरं देवं भूपं सज्जनसन्ततिम् । नत्वा भक्त्याऽचलच्छत्रु–क्षयेषु वाहड एव तु ॥ वम्वेरं प्रति यान्मन्त्रि–नन्दनो वाहडस्तदा । देशानेतान् ससाधाऽऽशु सुखेन भुजलीलया ॥ "जंगदूर जडहारडगीअ अज्जपुरनराणओ नयण वाहनागडउ नरउ नरहनखरजिठाणउ ॥ १ ॥ सज्जनाडमणिवाड भगाउ सयंभरि वग्घेरा । लडणूर गौकरण ह्व नूरझरि जंपेरा पीपलउ रहपुर हकर रायपुर मंडलपुरे मेलतूजरि विसलह नारि लसइ पइ अ गिइं तओ वलिवलि ॥" एवं देशान् जयन्मन्त्री–पुत्रो वम्वेरसन्निधौ । यावद्यातोऽभवत् ताव–द्रजो व्याप्त नभस्तलम् ॥ इतो वीसलदेवोऽवक् सद्यः सहचरीं प्रति–" हयहींसरा खहरओ दीसइ दुग्गवलंति " द्विट्चक्रमागतं ज्ञात्वा राज्ञी प्राह नृपं प्रति—" लोडिज्जइ तुह गुट्टजा वाहड पुहुतो कंत ! मन्त्रि धुरि कुमारपालह दलि समदलि संजुत्त करिहि कटि करवाल ॥ वाहडं सवलं पुर्या वहिरायातमञ्जसा । श्रुत्वा भूपो विधातुं तु रणं द्विपा समं ययौ ॥ वाहडो यमसदृशः कुर्वन् युद्धं तदाऽरिणा । न्यहन् वीसलदेवक्ष्मा–पतिं समरसीमनि ॥ वाहडस्याखिलं वैरि–सैन्यं तन्नन्दनोऽपि च । मिलितः सेवनं भक्त्या चकाते पादपङ्कजे ॥ तदा स्वसूनुराज्यार्थं वीसलस्य प्रिया रयात् । समेत्य वाहडस्याग्रे जगादोच्चैःस्वरं स्फुटम् ॥ "वाहड चउ पटमल्ल सल्ल सयल रिपुहिययस्स । तूं जिसरि ओ जमजओ सेवय वेरिणो निच्चं ॥ १ ॥ " त्वमेव मे सुतं हीनं महान्तं वा करिष्यसि । मम सूनोरतः स्वामी त्वमेव वाहड ! ध्रुवम् ॥ इत्यवरिप्रियां जल्प–परां विज्ञाय वाहडः । राज्यं वीसलदेवस्य सूनवे प्रददौ मुदा ॥ पुरमध्ये स सर्वज्ञ–प्रासादेषु जिनाधिपान् । नत्वा प्रपूज्य पूजायै मुमोच विभवं वहु ॥ पट्टकूलकृतां पञ्च–शतीं वाहडमन्त्रिराट् । अनैषीत् पत्तने तस्मा–त्पुराद्युत्वाल्य वेगतः ॥ पट्टकूलकृतः स्वीय–छत्रस्याधो नरेश्वरः । वारिणा स्नापयित्वाशु शुद्धं चक्रे स्वयं तदा ॥ आवासान् पृथुलान् भूपः कारयित्वा पुरान्तरे । तेभ्यो दुकूलकारिभ्यो ददौ सन्मानपूर्वकम् ॥ वाहडाय वहून् ग्रामान् पुराणि च वहून्यपि । तुरङ्गमान् ददौ भूपो भूरिसन्मानदानतः ॥ पट्टकूलकृतां तेषां वर्यमन्दिरसन्ततिम् । निरीक्षितुं पुरीलोकाः समायान्ति द्रुतं द्रुतम् ॥ तद्व्यूतैः पट्टकूलैस्तु श्रीसङ्घं परिधापयन् । परिधत्ते स्वयं भूपो दुकूलानि जनोऽपि च ॥ वाहडो भूयसीं लक्ष्मीं प्राप्तो भूपतिपार्श्वतः । दत्त्वा पित्रे नमस्कारं चक्रे मातुः पितुर्मुदा ॥२८॥

इति वाहडेन पट्टकूलकाः पत्तने आनीता इति सम्वन्धः ॥

---

समुद्रारिं सुराष्ट्रासु लुण्टयन्तं प्रजाः सदा । श्रुत्वा भूपो जगौ भृत्यः कस्तं जेतुं प्रयास्यति ? ॥

दुर्जेयं तं रिपुं ज्ञात्वा यदा कोऽपि न जल्पति । तदोदयनमन्त्र्याह देह्यादेशं ममाधुना ॥ भूपदत्तं वलं लात्वो-दयनो मन्त्रिपुङ्गवः । गत्वा शत्रुञ्जयोपान्ते दध्यावेवं निजे हृदि ॥ वालाकविषयस्वामी ससुरोऽऽरिर्दुराशयः । दुर्जेयोऽस्ति महीशानो वलेन वाहुनाऽपि च ॥ रणं वितन्वतां पुंसां सन्देहः स्यात् स्वजीविते । तेनाऽहं ऋषभं नत्वा करिष्येऽरिवधं ततः ॥ मुक्त्वा सैन्यमधः सिद्धि-गिरेरुदयनस्तदा । चञ्चत्परिच्छदः सिद्ध-शैलमारूढवान् स्फुटम् ॥ पूजां विस्तरतः कृत्वा दत्त्वा दानं यथोचितम् । रात्रावुदयनो मन्त्री प्रभोः पुर उपाविशत् ॥ दीपवर्तिं ज्वलन्तीं तु तदाऽकस्माच्च मूषकः । लात्वाऽर्हत्सदनच्छिद्रे यान्तं ददर्श मन्त्रिराट् ॥ मन्त्री दध्यावयं सार्वा-लयो दारुमयो निशि । अधक्ष्यच्चेत् तदाऽका स्याद् गतिस्तीर्थस्य साम्प्रतम् ॥ मया यावन्न चेद्देवप्रासादः कारयिष्यते । दृषन्मयो व्ययाल्लक्ष्म्या वृषभस्य जिनेशितुः ॥ मुनिसुव्रततीर्थस्य भृगुकच्छपुरे वरे । कारयिष्येत जीर्णस्य समुद्धारो मनोहरः ॥ आसापल्यां स्वनाम्नैव प्रासादः प्रथमार्हतः । प्रभोर्बिम्बयुतः कार्यो मया भूरिधनव्ययात् ॥ तावन्मयैकशो भोज्यं शयनीयं क्षितौ पुनः । एवमभिग्रहं मन्त्री ललौ प्रभोर्दृशोः पुरः ॥ युग्मम् ॥ प्रातः प्रभुं पुनर्नत्वा स्तुत्वागत्य वलान्तरे । पारणं चक्रिवान् मन्त्री शुद्धसाधर्मिकान्वितः ॥ वालाकस्वामिनां सार्द्धं गत्वा तत्र च मन्त्रिराट् । प्रावर्त्तत रणं कर्तुं सन्नद्धेभतुरङ्गमान् ॥ तथोदयनमन्त्रीशो युद्धं चक्रेऽरिणा समम् । यथा स ससुरः प्रेत-मन्दिरं समुपेयिवान् ॥ नश्यत्यरेर्वले कश्चि-द्बाणालिमक्षिपत्तथा । यथोदयनमन्त्रीशो विद्धो बाढं त्रिभिः शरैः ॥ मन्त्रीशे पतिते क्षोण्यां मन्त्रीश्वरभटास्तदा । शोधयन्तो रणं मन्त्रि-समीपे समुपाययुः ॥ श्वसन् मन्त्री जगौ भो ! भो ! भृत्याः ! केनाधुना जितम् ? । सुभटा जगदुः स्वामिन् त्वया जिग्येऽरिहिंसनात् ॥ मन्त्री जगौ ममेदानीं प्राणा यास्यन्ति दुःखतः । भटाः प्रोचुः प्रभोः ! किं ते दुःखं सम्प्रति विद्यते ? ॥ मन्त्री स्वामिग्रहाऽऽदानं प्रोच्य प्राहेति तान् प्रति । वेत्ति मेऽभिग्रहं पुत्रो वाहडश्चेत्तदा वरम् ॥ पत्रदाता जगौ यात्र-जल्पाम्यभिग्रहं न ते । पुत्रस्य पुरतस्ताव-न्ममाऽस्तु नियमस्तव ॥ ततो मन्त्री जगौ साधू अत्रैष्यतस्तदाहकम् । आराधनां विधायाऽऽशु गमिष्यामि शुभां गतिम् ॥ साधुवेषधरौ वंठौ तत्राभ्येत्य तदाऽचिरात् । सम्यगाराधनां तस्य कारयामासतुः सुखम् ॥ अत्राराधनाप्रकरणं वाच्यम् ॥ क्षामिते जीवराशौ तु नमस्कारान् स्मरन् हृदि । मन्त्रीश्वरो ययौ स्वर्गं सर्वायुषः क्षये तदा ॥ तत्र देशे निजं भृत्यं मुक्त्वा शेषवलं पुनः । आगत्याऽवग् नृपोपान्ते वैरिजेत्र्यादिकं वचः ॥ स्वर्गीधरात् पितुस्तीर्थो-द्धाराभिग्रहमञ्जसा । निशम्य वाहडोऽलासी-त्ताताभिग्रहमात्मना ॥ वाहडोऽश्ममयं सार्वा-गारं कारयितुं तदा । धनं दत्त्वा शिवक्ष्माध्रे ऽप्रेषयत् सूत्रधारकान् ॥ वर्षद्वयेन तैर्निष्पा-दिते श्रीवृषभालये । एकः पुमान् समेत्यावग् वाहडस्यान्तिके तदा ॥ स्वामिंस्तव पितुश्चित्त-चिन्तितं पूरितं किल । श्रीआद्यार्हद्गृहस्याद्य निष्पत्तेः सिद्धपर्वते ॥ ततः स्वर्णमयीं जिह्वां पञ्चाङ्गवसनानि च । तस्मै दत्त्वोत्सवं चक्रे मन्त्री दानं ददद् वहु ॥ प्रहरानन्तरे सिद्ध-शैलादन्यो नरः पुनः । कृष्णाऽऽस्यो वाहडोपान्ते समेत्य प्रोक्तवानिति ॥ सिद्धाद्रौ यस्त्वयाकारि वृषभावसथो महान् । पातितः स प्रचण्डेन वायुना पञ्चमीदिने ॥ तस्मै स्वर्णमयीं जिह्वा-द्वयीं मन्त्री प्रदत्तवान् । उत्सवं द्विगुणं चक्रे महादानप्रदानतः ॥ ततो मन्त्रीश्वरोपान्ते परिवारो जगाविति । अशुभोदन्तकथक-नरस्य किं ददे वहु ? ॥ मन्त्र्याह जीवति मयि प्रासादः पतितो यदि । तदाऽहं कारयिष्यामि पुनर्भूयिष्ठरैव्ययात् ॥ पतिष्यति जिनावासो यदि मे मरणादनु ।

तदा कारयिता कः स्यात् तादृग्लक्ष्म्या अभावतः ॥ तत्र शत्रुञ्जये गत्वा मन्त्री प्रासादकारकान् । आकार्याऽऽह कथं पातो जातो जिनेन्द्रसद्मनः ? ॥ शिलापट्टक आचष्ट प्रासादः सभ्रमस्त्वया । कारितोऽतोऽपतच्छीघ्रं वायुप्रवेशतोऽधुना ॥ निर्भ्रमश्च जिनावासः कार्यते स स्थिरस्तथा । परं कारयितुर्नैव सन्तानं जायतेऽग्रतः ॥ वाहडः प्राह सन्तान-वृद्धयालं मे चिरं ध्रुवम् । सन्तानेन न (च) को याति स्वर्गं शिवं च मानवः ॥ स्वर्गमुक्त्योर्गमाय स्याद् धर्म्म एव जिनोदितः । ततोऽर्हत्सदनं नूनं मयाऽऽशु कारयिष्यते ॥ शुन्याश्छाग्याश्च शूकर्याः सन्तानो वहुरीक्ष्यते । न तासां जायते स्वर्गः सन्ताने प्रचुरेऽपि हि ॥ सभ्रमस्याऽऽप्ररोहस्य पुंसः कारयितुर्यदि । भरतादिमहीशानां पङ्क्तिर्भवति निश्चितम् ॥ तदा किं किं न जायेत शुभं मम चमत्कृत् । अतस्त्वं निर्भ्रमं निष्पा-दयाऽऽदिजिनमन्दिरम् ॥ ततो भूरिधने दत्ते शिलापट्टाश्च ते तदा । निर्भ्रमं जिनपागारं कर्त्तुं प्रवर्त्तिरे द्रुतम् ॥ निर्भ्रमं जिनपागारं शिलापट्टाश्च ते मुदा । स्तोकैरेव दिनैः पूर्णा-चक्रिरे प्राप्तरैव्रजाः ॥ निर्भ्रमे श्रीजिनागारे निष्पन्ने सिद्धपर्वते । श्रीसङ्घं मेलयामास सद्यः लक्षदशप्रमम् ॥ श्रीहेमसूरयो विम्ब-प्रतिष्ठां शुभवासरे । चक्रुर्वाहडमन्त्रीशो व्ययति च श्रियं वहु ॥ सिद्धाद्रौ निर्भ्रमे सार्वा-गारे वाहडमन्त्रिराट् । सप्तषष्ट्यधिकां कोटीं स्वर्णानामव्ययन्मुदा ॥ उक्तञ्च—

"सप्तषष्टियुता कोटी व्ययिता यत्र काञ्चनी । स श्रीवाग्भट्टदेवोऽयं वर्ण्यते न बुधैः कथम् ? ॥ १ ॥" विक्रमार्काद् धरादित्य-वत्सरेषु गतेषु च । वाहडोऽचीकरत् सिद्ध-शैले वृषभमन्दिरम् ॥ अवासयत् पुरं स्वीय-नाम्ना वाहडमन्त्रिराट् । विमलाद्रेरधो भागे सवप्रं स्वःपुरोपमम् ॥ तत्र त्रिभुवनपाल-विहारे कारिते स्वयम् । वाहडोऽस्थापयत् पार्श्व-विम्बं भूरिधनव्ययात् ॥ तीर्थपूजाकृते सार्थ-प्रमिता वाटिका वराः । कारिता वाहडेन स्व-विभवात्तीर्थभक्तितः ॥ श्रीमालिकादिसज्जाति-सम्भवान् वणिजो वरान् । तत्र न्यवासयत्तीर्थ-साराय वाहडोत्तमः ॥ तेषामाजीविकाहेतोः क्षेत्राणि वाहडो ददौ । कारयित्वा वरावासान् वासाय दत्तवान् पुनः ॥ त्रिषष्ट्या कोटिभिर्हेम्नां (त्रिषष्टिर्लक्षात् काञ्चनी) व्ययित्वा वाहडस्तदा । पद्यामचीकरद्रैवतकाद्रौ पुण्यहेतवे ॥ चामीकरस्य षट्कोटी-र्व्ययित्वाऽऽम्रभटस्तथा । भृगुकच्छे विहारं तूद्दधे श्रीसुव्रतार्हतः ॥ द्वात्रिंशद् व्रह्मलक्षाभृगुपुरवसतेः सुव्रतस्यार्हतोऽग्रे, कुर्वन् मङ्गल्यदीपं ससुरनरवरश्रेणिभिः स्तूयमानः । योऽदाद्दर्थिव्रजाय त्रिजगदधिपतेः सद्गुणोत्कीर्त्तनायां, स श्रीमानाम्रदेवो जगति विजयते दानवीराग्रयायी ॥ आशापल्यां पितुर्नाम्ना कारयित्वा जिनालयम् । वाहडोऽस्थापयद्विम्बं प्रौढं श्रीवृषभप्रभोः ॥ वाहडो मन्त्रिराट् शत्रु-ञ्जयोज्जयन्ततीर्थयोः । महासङ्घयुतोऽकार्षी-द्यात्रां भूरिधनव्ययात् ॥ सूरीश्वरपदान्यष्टौ वाहडोऽचीकरन्मुदा । पञ्चविंशज्जिनावासा-नकारयत् पृथक् पृथग् ॥ विम्बान्यश्ममयान्यष्टौ सहस्राणि महन्ति च । सप्तधातुमयान्यष्टौ शतानि षट् युतानि च ॥ स्वर्णरूप्यमषीवर्णै-श्चित्कोशान् सप्त वाहडः । अलेखयत्ततोऽन्यानि पुस्तकानि तु लक्षशः ॥ दायं दायं सहस्रं तु हेम्नां साधर्मिकव्रजम् । प्रीणयामास मन्त्रीशो वाहडो विभवार्पणात् ॥ वर्षं वर्षं प्रति श्राद्ध-वात्सल्यानि नव पञ्च च । चकार वाहडः सङ्घ-पूजायाः पञ्चकं पुनः ॥ कुमारपालभूपान्ते-ऽन्यदेत्य कश्चिदूचिवान् । वाहडो लक्षशः स्वर्ण-टङ्कान् व्यश्राणयन् सदा ॥ अधिकस्वामितो वर्ण्य-मानोऽत्र याचकैः सदा । अतस्तस्मै प्रदीयेत शिक्षा सम्प्रति भूपते ! ॥ ततो रुष्टो नृपोऽप्राक्षी-द्रे वाहड ! धनं ददत् । मत्तोऽधिकः कथं जातस्ततो वाहड ऊचिवान् ॥ पिता ते द्वादशग्राम-स्वामी त्रिभुवनोऽभवत् । इदानीं मे पिता ह्यष्टा-दशदेशाधिपो वरः ॥ त्वत्तः पितुर्वलाद्भूरि-धनमर्थिभ्य आदरात् । दीयते तु मया स्वामि-न्नातो रोषस्तवेष्यते ॥ ततः कुमारभूपालो हृष्टो

भूरि धनं मुदा । वाहडाय ददौ वर्य–तरसन्मानपूर्वकम् ।। इत्यादि बहुशः पुण्य–कृत्यानि वाहडो व्यधात् । यानि तेषां विधीयेत न सङ्ख्या कोविदैरपि ।।७३।।

इति वाहडोद्धारप्रबन्धः समाप्तः ।।

---

दक्षिणाशाविभूषाकृत्–प्रतिष्ठानाभिधे पुरे । भगिन्या सहितौ विप्रौ द्वौ समेतौ विदेशतः ।। कस्यचित् कुम्भकारस्य शालायां द्वौ द्विजौ स्थितौ । कणवृत्त्या स्वनिर्वाहं चक्रतुर्भगिनीयुतौ ।। अन्येद्युर्द्विजभगिनी नीरानयनहेतवे । गोदावरीं गता यावत्तावच्छेषाहिरागतः ।। तस्या रूपेण मूढात्मा शेषाहिर्नररूपभृत् । तया सह बलाद्भोगान् भुङ्क्ते स्म रहसि स्थितः ।। सप्तभिर्धातुभिस्तस्य रिक्तस्य शेषभोगिनः । शुक्रपुद्गलसञ्चारात् तस्याद्वि (स्या वि) प्रस्वसुस्तदा ।। दिव्यशक्त्याऽभवद्गर्भ–स्ततः शेषो जगाविदम् । अहं नागपतिर्देवो मया भुक्ताऽधुना त्वकम् ।। युग्मम् ।।६।। "देवानां शुक्रपुद्गलाः सन्ति ? यत् सम्पर्कतो देवीनां सुखं स्यात् ? [स दिव्यप्रभावादवसेयः] भगवानाह–सन्ति, केवलं ते वैक्रियशरीरान्तर्गता इति न गर्भाऽऽधानहेतवः, ते पुद्गलास्तासां देवीनां श्रोत्रादीन्द्रियतया परिणमन्ति, स्पर्शरूपशब्दमनःपरिचारकदेवीनामपि यो देवीषु शुक्रपुद्गलसङ्क्रमः स दिव्यप्रभावादवसेयः । कायपरिचारकाणां तु स्पष्ट एव, इति प्रज्ञापनावृत्तौ । शुक्रेत्युपलक्षणं किन्तु सप्तापि धातवो वैक्रियसम्बन्धिनः स्युः किन्तु पारिशेष्यादौदारिकशरीरे गर्भाधानहेतवः ।। "

समेते व्यसनेऽहं तु स्मरणीयस्त्वया ध्रुवम् । ततः समगमन्नाग–नाथः स्वीयनिकेतने ।। तया तु क्रीडया नैव स्वं विचेष्टितमंशतः । न भ्रात्रोः पुरतः प्रोक्तं गर्भे वृद्धं गते सति ।। भगिन्या गर्भमालोक्य दध्यतुस्तौ सहोदरौ । अनया खण्डितं शील–मकार्यसेवनात् क्वचित् ।। विमृश्येति विमुच्याऽऽशु भगिनीं वाडवान्तिके । देशान्तरे क्वचिद्याता–वनिवेद्य दिनात्यये ।। प्रवर्द्धमानगर्भा सा कर्म्माणि परसद्मसु । कुर्वन्ति समये प्राप्ते सूते स्म तनयं वरम् ।। सवयोभिः क्रमाद्बालो रममाणः सदा मुदा । भूपो भूत्वा व्यधात् सेना–मश्वेभादिमयीं मुदा ।। मृत्स्नामयैरिभाश्वाद्यैः सुभटैर्भूरिभिः सदा । स्वकृते रमते बालः सवयोभिर्नृपोक्तितः ।। मृत्स्नामयानिभाश्वादीन् कारं कारं स बालकः । धनोति स वयोभ्यस्तु भूपो भूत्वा निरन्तरम् ।। धनोति धातुरस्येव दानार्थे धातुमध्यतः । अतः शिशोर्ददे सात–वाहनाह्वां जनैस्तदा ।। पाठ्यमानः स्वमात्रा तु सातवाहनबालकः । जानीते बहुशास्त्रार्थं धियं प्राप सुनिर्मलाम् ।। इतश्चोज्जयिनीपुर्यां विक्रमार्के नरेश्वरे । राज्यं कुर्वति कृष्णोऽभूद् द्विजो वृद्धोऽभवद्धनः ।। वार्द्धक्ये चतुरः पुत्रा–नाहूय वाडवो जगौ । मृते मयि न कर्त्तव्यः कलिर्भवद्भिरेकशः ।। चतुःकोणेषु गेहस्य सन्ति कुम्भाश्चतुर्मिताः । युष्माकं नामसम्मिश्रा ग्राह्या युष्माभिरेव तु ।। पितुर्वाक्यैस्तदा पुत्रैः स्वीकृते सति तत्क्षणात् । पिता स्वर्गं ययौ तस्मा–द्दाहं तस्य सुता व्यधुः ।। प्रेतकृत्यं पितुः कृत्वा पुत्रास्ते चतुरो घटान् । कर्षयित्वा तुषास्थ्यादि दृष्ट्वा कलिं वितन्वते ।। तेषु वाडवपुत्रेषु विवदत्सु निरन्तरम् । निर्णयो न कृतः कैस्तु तेषां तत्र पुरे जनैः ।। ततस्ते सोदरा जग्मुः प्रतिष्ठानपुरे वरे । प्रोचुश्च को विवादं नो भङ्क्ष्यत्येव नरो बली ।। ततोऽधिकारिणः प्रोचुः को विवादोऽस्ति वोऽधुना ? । ते प्रोचुर्म्रियता पित्रा चतुणा नो निवेदितम् ।। चतुर्षु कलशेष्वेव प्रत्येकं विद्यते हि तत् । तच्छ्रूयतां तु मन्त्रीशा ! भवन्तो वरबुद्धयः ।। आद्ये हेम द्वितीये तु कृष्णमृत्स्ना तृतीयके । बुसं कुम्भे चतुर्थे चाऽस्थीनि दृष्टानि तेषु हि ।। केनापि पुरुषेणैव विवादो

भञ्जितो न च ।। तदा बभञ्ज तेषां तु विवादं सात एव हि ।। यस्य कुम्भे भवेद्धेम तस्याशु कनकं समम् । यस्य मृत्स्ना घटेऽस्तीति क्षेत्राणि सन्ति तस्य च ।। यस्य कुम्भे बुसं धान्यं सर्वं तस्याशु निश्चितम् । अस्थीनि घटे तस्य द्व्यङ्घ्रिचतुःक्रमादयः ।। भग्ने तेषां विवादे तु ख्यातिस्तस्याऽभवज्जने । क्रमात् प्रतिष्ठानपुरे स बालोऽभून्महीपतिः ।। मृत्स्नामयान् तुरङ्गादीन् कारं कारं स भूपतिः । साधयामास विषयान् बहून् स्वभुजलीलया ।। हंसवत्सौ यथा पुत्रौ जातौ वत्सलकारकौ । तथाऽमू घृत्ततो ज्ञेयं सर्वमस्य महीपतेः ।। गोदानदीतटेऽन्येद्यु-र्यावच्छातः समीयिवान् । तावन्निर्गत्य पानीया-न्मीनो हास्यं व्यधात्तमम् ।। राजाऽऽचष्ट कथं मीन! त्वया हास्यं विधीयते ? । मीन आह रमापुर्यां सोमभीमौ सहोदरौ ।। अभूतां निःस्वताभाजौ काष्ठान्यानीय काननात् । विक्रीय तौ स्वनिर्वाहं कुर्वाते प्रतिवासरम् ।। युग्मम् ।। तदा काष्ठाय यातेन सक्तुत्रो भवता वने । साधोर्विश्राणिता भावा-न्मासक्षपणपारणे ।। तेनैव दानपुण्येन राजा त्वमभवोऽत्र हि । तेन दानं वितीर्यैत सत्यर्थे प्राणिनाऽऽदरात् ।। राजाऽवक् तत्र का चिन्ता मदीया विद्यते झष ! । मीनः प्राह त्वया पूर्व-भवे दानं ददे यदा ।। तदाऽनुमोदितं दानं त्वद्दत्तं साधवे मया । अतोऽहं निर्जरो भूत्वा ज्ञप्तये ते समागमम् ।। राजाऽऽचष्टे न मे हेम ताद्दग् लक्ष्मीः समस्ति हि । देवोऽवग् विद्यते नद्या अस्मिन् स्थाने ह्रदान्तिके ।। रसो हेमकरोऽस्त्येव तं गृहाण महीपते ! । प्राग्भवस्नेहतस्तुभ्यं मयाऽत्रैत्य निवेदितम् ।। युग्मम् ।। ततो रसान्नृपो हेम विधाय प्रचुरं तदा । अर्थिभ्यो ददते दानं यथेष्टं हर्षपूर्वकम् ।। एकदा नगरोद्याने श्रीमत्कालिकसूरयः । यदा जग्मुस्तदा राजा वन्दितुं समुपागमत् ।। ततः श्रीकालिकाचार्याः कुर्वाणा धर्म्मदेशनाम् । शत्रुञ्जयस्य माहात्म्यं प्रोचुरेवं नृपाग्रतः ।। यतः—"श्रीशत्रुञ्जये तीर्थे यात्रां सङ्घसमन्वितः । चकार तस्य गीर्वाण-शिवश्रीर्न हि दुर्लभा ।। वस्त्रान्नजलदानेन गुरोः शत्रुञ्जये गिरौ । तद्भक्त्याऽत्र परत्रेह जायन्ते सर्वसम्पदः ।। शत्रुञ्जयाभिधे तीर्थे प्रासादान् प्रतिमाश्च ये । कारयन्ति हि तत्पुण्यं ज्ञानिनो यदि जानते ।। आर्द्रिसावोदि-बिम्बानि मणिरत्नैश्च हेमभिः । रूप्यैः काष्ठैर्द्दपद्भिर्वा मृदा वा भावशुद्धितः ।। एकाङ्गुष्ठादि सत् सप्त-शताङ्गुष्ठावधिं प्रभोः । यः कारयति बिम्बानि मुक्तिश्रीस्तस्य वश्यगा ।। युग्मम् ।। एकाङ्गुलमितं बिम्बं निर्मापयति योऽर्हताम् । एकातपत्रसाम्राज्यं लभते स भवान्तरे ।। श्रुत्वेति सातभूपालो भूरिसङ्घजनान्वितः । चचाल सिद्धभूमिध्रे यात्रां कर्त्तुं शुभाशयः ।। सङ्घे हेममया देवा-लयाः षष्टिमिता वराः । शतं काष्ठमया श्राद्ध-कुटुम्बा लक्षसम्मिताः ।। एकोनशतलक्षाणि श्राद्धानां धर्म्मिणां तदा । आचार्याः शतसङ्ख्याश्च चेलुर्नन्तुं जिनेश्वरम् ।। गत्वा शत्रुञ्जये स्नात्र-पूजादि पुण्यमद्भुतम् । निःशेषं चक्रिवान् भूपः श्रीसङ्घजनसंयुतः ।। प्रासादं पतितं किञ्चिद् दृष्ट्वा सातमहीपतिः । उद्दध्रे भूरिपद्माया व्ययाद्रुचिरवासरे ।। ततो रैवतके तीर्थे गत्वा नेमिजिनप्रभोः । स्नात्राद्युत्सवमुर्वीश-श्चक्रे सङ्घसमन्वितः ।। क्रमान्निजपुरेऽभ्येत्य सातवाहनसञ्ज्ञिकम् । द्वासप्ततिलसद्देव-कुलिकाढ्यं जिनालयम् ।। कारयित्वा युगादीशं मूलनाथमतिष्ठिपत् । ततो जिनाधिपान् देव-कुलिकासु जनाधिपः ।। सातवाहनभूपालः प्रासादानां शतत्रयीम् । स्वदेशे परदेशे चा-ऽचीकरद् गगनाध्वगाम् ।।५९।।

इति सातवाहननृपोद्धारसम्बन्धः ॥

कोशलाह्वे पुरे भूपो विजयो धर्म्मनायकः । अभूत्तस्याऽभवन् मन्त्री नयविक्रमसागरः ।। फुल्ल नाम्नाऽभवच्छ्रेष्ठी जैनः प्राज्ञो वदान्यकः । तस्यासीद् गेहिनी वर्या प्रतिमाणा सुशीलभाग् ।। निष्पुत्रत्वेन सा खेदं दधाना पुत्रहेतवे । पप्रच्छ भूरिशो लोकान् दायं दायं धनं बहु ।। प्रतिमाणाऽन्यदा देवीं वैरोट्यां भक्तिपूर्वकम् । तथाऽऽराध सद्यः सा प्रत्यक्षाऽभूज्जगाद च ।। वत्से ! किमर्थमत्राहं स्मृता कार्यं निजं वद ? । प्रतिमाणा जगौ पुत्रो विलोक्यते ममाधुना ।। वैरोट्ययोदितं वत्से ! वंशे विद्याधराभिधे । अस्ति श्रीकालिकाचार्यः सर्वविद्याब्धिपारगः ।। तस्मिन् विद्याधरे गच्छे श्रीआर्यनागहस्तिकः । आचार्योऽन्यो वराऽऽचारः समस्तीहागतोऽधुना ।। सूरेः पादोदकं तस्य त्वं चेत् पिबसि साम्प्रतम् । तदा ते चिन्तितं चिन्ता-धिकं भवति निश्चितम् ।। ततः प्रमुदितो गत्वा बलाद् गुरोः पदोदकम् । शिष्यपाणिस्थितात् पात्रात् पपौ सद्भक्तिभाविता ।। ततो नत्वा गुरुपादौ श्रेष्ठिपत्नी जगाविदम् । वैरोट्यावचनात् पादो-दकं पीतं मया तव ।। गुरवो जगदुर्मत्तो दशहस्तान्तरस्थिता । अस्मत्पदोदकं पीत-वती त्वं धर्म्मशालिनि ! ।। ततस्ते प्रथमः पुत्रो दशयोजनसंस्थितः । महान् विद्याब्धि-पारीणो भविष्यति न संशयः ।। पश्चादन्ये वराः पुत्रा भवितारो नव क्रमात् । श्रेष्ठिपत्नी जगौ पुत्र आद्यस्तुभ्यं प्रदास्यते ।। गुरूक्ते गदिते पत्युः पुरस्तया तदादरात् । श्रेष्ठी हृष्टोऽगदत् सत्यं गुरूक्तं प्राग् भविष्यति ।। प्राप्ते काले शुभे घस्रे श्रेष्ठिन्यसूत नन्दनम् । नागेन्द्रस्वप्नरोचिष्णुं वर्यलक्षणलक्षितम् ।। पित्रा जन्मोत्सवं कृत्वा सूनोर्नागेन्द्रनाम च । ददे ततोऽपुषत् पुष्टिं शरीरावयवैर्गुणैः ।। अष्टमे वत्सरे सूरी-श्वरैः स दीक्षितः शिशुः । मुक्तः पाठाय सोमस्य मुनेः पार्श्वे महामतिः ।। बाल्येऽपि लक्षणच्छन्दो-ऽलङ्कारकवितादिकम् । शास्त्रं भूरि पपाठार्थ-सूत्राभ्यां क्षुल्लकः स च ।। ततः स क्षुल्लकः श्रीमत्-कालिकाचार्यसन्निधौ । पठन् विशेषशास्त्राणि विनयं कुरुते गुरोः ।। विहृत्याम्भोऽन्यदाऽऽगत्य गुरुणा प्रेरितः किल । क्षुल्ल आलोचयामास गाथयेति मनोज्ञया ।। " अबं तं-बच्छीए अपुप्फियं पुप्फदंतपंतीए । नवसालिकंजियं नववहूइ कुडएण मे दिन्नं ।। १ ।। " शिशोरास्यान्निशम्येमां गाथां चमत्करीं स्फुटम् । पलित्तउ ददौ नाम कालिकाचार्य आदरात् ।। शृङ्गारगर्भभणितिभणनात् श्रवणात्तथा । प्रदीप्त इति ते नाम विनेय ! करवाण्यहम् ।। नागेन्द्रक्षुल्लकः प्राह मम्मैकां मात्रकां प्रभो ! । नाम्नि वर्द्धय विधाय त्वं प्रसादं मयि साम्प्रतम् ।। यथा पालित्तउनाम्ना भूयासमहमत्र तु । भावार्थो विद्यतेऽतो मे नाम्नि त्वया निवेदिते ।। अन्तरिक्षगमोपाय-भूतां विद्यां मनोरमाम् । पादलेपाभिधां मह्यं देह्यतः स्यां वियद्गमी ।। पादलिप्तक इत्याह्व क्षुल्लस्य तस्य तत् क्षणात् । दत्त्वा वियद्गमां विद्यां दत्तवान् गुरुराट् तथा ।। बालोऽपि कुरुते पाद-लिप्तकः सन्ततं तपः । न च क्वापि प्रमादं तु संयमे तनुतेतराम् ।। दशवत्सरदेशीयः क्षुल्लकः पादलिप्तकः । स्थापितः सूरिणा सूरि-पदे सूत्सवपूर्वकम् ।। लघीयानपि सूरीशः स सुशिष्ययुतः सदा । बोधयामास भूयिष्ठ-श्राद्धान् धर्म्मे जिनोदिते ।। शत्रुञ्जयोज्जयन्ताष्टा-पदार्बुदगिरिष्वहो ! । सम्मेतशिखरे देवान् वन्दित्वा विधिपूर्वकम् ।। इयं पञ्चतीर्थी—" अट्ठावयम्मि उसभो सिद्धिगओ वासुपुज्ज चंपाए । पावाए वद्धमाणो अरिट्ठनेमि य उज्जिते ।। १ ।। अवसेसा तित्थयरा जाइजरामरणबंधणविमुक्का । सम्मेयसेलसिहरे वीस सुपरिनिव्वुए वंदे ।। २ ।। " समेत्य स्थानके स्वीये पादलिप्तकसूरिराट् । आहारं रसरिक्तं तु भुङ्क्ते प्रायस्तपस्तपन् ।। यतः—" यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् । तत् सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ।। तपसा तस्य सूरेस्तु अनेकाः सिद्धयो वराः । बभूवुः स यथा ख्यातो यातः सर्वत्र भूतले ।। एकदा विहरन् सूरिः पाटलीपुत्रपत्तने । ययौ

भव्यजनव्रात-प्रबोधाय सुसाधुयुग् ॥ धर्म्मोपदेशतस्तत्र वहवो भव्यमानवाः । लेभिरे गुरुणा श्राद्ध-धर्म्मं सम्यक्त्वशालिनम् ॥ मुरण्डो भूपतिस्तत्र खण्डिताऽरातिमण्डलः । शीरोर्त्त्या तीव्रया व्याप्तः षण्मासावधि सन्ततम् ॥ मन्त्रतन्त्रौषधैर्यन्त्रै-स्तद्वेत्तृभिर्जनैर्घनैः । व्यरमत् सा न भूपस्य तस्य दुष्कर्म्मयोगतः ॥ विशेषविदुरान् सूरी-नागतान् पादलिप्तकान् । श्रुत्वाऽऽकारयितुं ताँश्च प्रैषि मन्त्री महीभुजा ॥ तत्र गत्वा गुरुं नत्वा मन्त्री कृताञ्जलिर्जगौ । भगवन् ! राजराजस्य मुरण्डस्य महीपतेः ॥ निवर्त्त्यतां शिरोर्त्तिः श्राग् मन्त्रतन्त्राभियोगतः । सञ्जीयतां यशो धर्म्मो ततः स्यान्निर्वृतीन्दिरा ॥ ततो राजकुले गत्वा सूरीशो मन्त्रशक्तितः । अपाहरत् क्षणाद् भूमि-पतेः शिरोर्त्तिवेदना ॥ उक्तञ्च—" जह जह पएसिणिं जाणुअम्मि पालत्तउ भमाडेइ । तह तह से सिरवियणा पणस्सइ मुरंडरायस्स ॥ १ ॥ " प्रीतो राजा ततो नत्वो-त्थाय गुरुपदद्वयीम् । प्राहाऽद्याहं कृतार्थोऽस्मि त्वत्प्रसन्नविलोचनात् ॥ पादलिप्तकसूरीणां प्रसादान् मेदिनीपतिः । नगर्यां कारयामास स्थाने स्थाने महोत्सवम् ॥ सूरीश्वरयशो विश्वे विस्तार्य कीर्त्तनादिना । स्तौति स्म श्रीगुरूत्तंस-मेव सद्भक्तिभावितः ॥ " चेतः शान्ततरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता श्रुतं गतमदं श्रीर्दीनदैन्यापहा । रूपं शीलश्रितं मतिः श्रितनया स्वामित्वमुत्सेकतानिर्मुक्तं प्रकटान्यहो ! नव सुधाकुण्डान्यमून्युत्तमे ॥१॥ " ततो मुरण्डभूपाल-स्त्यक्त्वा मिथ्यात्वमञ्जसा । पादलिप्तकसूर्यन्ते जैनधर्म्मं प्रपन्नवान् ॥ मुरण्डो भूधवोऽन्येद्यु-र्गुरुपार्श्वे जगाविति । विनयो विद्यते राज-कुले सर्वोत्तमः खलु ॥ गुरुः प्राह गुरुकुले विनयो विद्यते वरः । ततो गुरुर्जगौ राजन् ! यस्ते भक्तोऽनुगोऽस्ति हि । स एव प्रेष्यतां गङ्गा-प्रवाहं वीक्षितुं किल ॥ पूर्वाशागामिनीं गङ्गां पश्चिमाशाप्रवाहिनीम् । विद्धि प्रेक्ष्यानुगं भक्तं मुरण्डावनिपाऽधुना ॥ प्रेषयिष्याम्यहं शिष्यं स्वर्गङ्गागतिचित्कृते । ज्ञास्यतेऽतो विनीतत्वं स्वस्वसेवकयोः क्रमात् ॥ त्रिभिः०। गङ्गाविलोकनकृते प्रेषिता भूभुजाऽनुगाः । यत्र तत्र भ्रमित्वैत्य प्रोचुर्भूमिपतेः पुरः ॥ आवाला अपि गोपाला जानते निखिला इति । पूर्वाशावाहिनी गङ्गा समस्तीति किमीक्ष्यते ॥ गुरुभिः प्रहितौ साधू गत्वा गङ्गाजलान्तिके । स्थापयित्वा ध्वजं वायु-गतीक्षावशतस्तदा ॥ पूर्वदिग्गामिनीं गङ्गां ज्ञात्वा सम्यग् निरीक्षणात् । गुर्वन्ते जल्पतः स स्व-र्नदी पूर्वाभिवाहिनी ॥ तत्त्वं न ज्ञायतेऽस्माभि-र्जानन्ति गुरवः पुनः । गुरूदितं विधातव्यं शिष्यैर्दुष्करमप्यहो ॥ यतः—"मिणगोणसंगुलीहिं गणेह वा दन्तचक्कलाइं से । इच्छंति भाणिऊणं कज्जं तु तमेव जाणंति ॥ १ ॥ कारणविउ कयाइ सेयं कायं वयंति आयरिया । तं तह सद्दहियव्वं भवियव्वं कारणेण तहिं ॥ २ ॥ " गुरुशिष्यस्वभृत्यानां ज्ञात्वा विनयकारणम् । भूपः प्राह विनीतत्वं दृष्टं गुरुकुले मया ॥ यत उक्तम्—" निवपुच्छिएण गुरुणा भणिओ गङ्गा कओमुही वहइ । संपाइअवं सीसो जह तह सव्वत्थ कायव्वं ॥ १ ॥ " ज्ञात्वा गुर्वनुगान् शिष्टान् विनीतान्मेदिनीपतिः । अनुमेने नृपं जैनं विशेषाच्छ्रीगुरुं नमन् ॥ अन्यदा पाटलीपुत्रात् लाटान् यातो गुरूत्तमाः । व्याख्यानं विदधे श्राद्ध-कर्णसातप्रदं दृढम् ॥ ततो गोचरचर्यार्थं गतेषु साधुषु क्रमात् । चिक्रीड वालकैः सार्द्धं शालामध्ये स सूरिराट् ॥ अतोऽकस्मात् समायातान् श्राद्धान् वीक्ष्य स सूरिराट् । संवृत्याकारमह्नाय तस्थिवान् विष्टरे स्वयम् ॥ गतेषु श्रावकेष्वेव गत्वाऽपवरकान्तरे । पुनः खेलति सूरीशः समेतास्तत्र वादिनः ॥ निरीक्ष्य विजनं तत्र कूकुडुकुरवे तदा । कृतं वादिभिः सूरि-र्म्याउं शब्दं व्यधात्तमाम् ॥ म्याउमोतुरवं श्रुत्वा सूरिणा विहितं तदा । ज्ञात्वेति वादिनः सूरेः पादौ नत्वाऽवदन्निति ॥ प्रत्युत्पन्नमतेः सूरे-र्जमुख्यवालभारति ! । त्वत्तुल्यः कोऽपि नोऽस्मा-

मिर्भ्रमद्भिर्वीक्षितो भुवि ॥ अमुणा सह कुर्वत्सु तेषु गोष्ठीं प्रवादिषु । एको वादी गुरुं नत्वा प्राहेत्युच्चैः-स्वरं स्फुटम् ॥ "पालित्तय कहसु फुडं सयलं महिमंडलं भमंतेण । दिट्ठो सुओ व कत्थवि चंदणरससीयलो अग्गी ॥ १ ॥" गुरुराह तदेति—"अयसामिओगसंदूसिअस्स पुरिसस्स सुद्धहियवस्स । होइ वहंतस्स फुडं चंदणरससीयलो अग्गी ॥ १ ॥" तुष्टास्ते वचसा सूरेः सुष्टूचुः श्रीगुरुं प्रति । साक्षाद्देवगुरुर्भूमा-ववतीर्णोऽसि सूरिराट ॥ इतश्चार्यखपुटेन तापिता ये द्विजादयः । ते बलाद् ग्राहिता दीक्षां केचिद्विद्याम्बुराशिना ॥ तेषां द्विजन्मनां स्वीय-पाटलीपुरसंस्थिताः । द्विजा जैनयतीन् पूर्ववैराद्रुपद्रवन्ति हि ॥ श्रुत्वोदन्तममुं पाद-लिप्ताचार्यो जनाननोत् । नभसा पाटलीपुत्रे (पुरे)ऽभ्येत्य जगावदः ॥ रे ! द्विट्हन्तरि मय्येव द्विजा जैनमतच्छिदः । मद्वाक्चपेटया-ध्वस्ता गमिष्यथ यमालयम् ॥ जर्जरापि हि यष्टिः स्यात् स्थालीभञ्जनहेतवे । यूयं जैनमतं हन्तु-कामाः स्थ सन्ततं मुधा ॥ सूरिणा इङ्गिताः केचि-न्नेमुर्नष्टाश्च केचन । मूर्च्छिताः केचिदेव स्युः केचित् कम्पितवक्षसः ॥ तत्र सार्वमतोद्योतं कृत्वा श्रीपादलिप्तकः । ययौ भृगुपुरोद्याने सुव्रतार्हत्पवित्रिते ॥ तत्राचार्यखपुटस्य सम्प्रदायात् कलाः कलाः । तथाऽग्राहीद् यथा जातः सूरिर्गुरुसमानधीः ॥ इतो ढङ्कगिरौ शत्रु-ञ्जयशृङ्गे मनोहरे । रेणसिंहस्य पुत्र्यासी-द्भोपालाह्वा महीपतेः ॥ रूपलावण्यसम्पूर्णां तां कन्यां पश्यतस्तदा । वासुकेर्नागराजस्या-नुरागोऽजनि तत्क्षणात् ॥ वासुकेः सेवमानस्य तां कन्यां रूपशालिनीम् । नागार्जुनाभिधः पुत्रो रूपलावण्यशोभभृत् ॥ सर्वासामौषधीनां तु फलमूलदलादिकम् । अभोजि नन्दनः स्नेहात् पित्रा वासुकिनाऽहिना ॥ औषधीनां प्रभावेण स महासिद्धिभिर्युतः । सिद्धपुरुष इत्याख्यां ख्यातिं प्रापाऽखिले जने ॥ पृथिव्यां व्यचरन् सात-वाहनस्य महीपतेः । कलागुरुरभून् नागा-र्जुनो वासुकिनन्दनः ॥ नागार्जुनो वियद्गामि-विद्यार्थं पालितानके । पादलिप्तं गुरुं शश्वत् सेवते स्म सदादरात् ॥ भोजनावसरेऽन्येद्युः पादप्रलेपयोगतः । व्योम्न्युत्पत्य गतः सूरि-र्नागार्जुने प्रपश्यति ॥ अष्टापदादितीर्थानि नत्वा स्वं स्थानमागतम् । सूरिं व्योम्नः स विज्ञाय नागार्जुनश्चमत्कृतः ॥ एवं दिने दिने सूरिं गच्छन्तं गगनाध्वना । वीक्ष्य नागार्जुनो भक्तिं चकार गुरुपादयोः ॥ प्रक्षालयन् गुरोः पादौ नागार्जुनोऽनुवासरम् । जज्ञौ सप्तोत्तरशत-मौषधीनां तदाभिधाम् ॥ गुरोः पदाम्भसो गन्धा-दौषधीनां स मानवः । सप्तोत्तरशतं जज्ञौ नामस्थानादिभित् क्रमात् ॥ नीत्वा तानौषधीन् घर्षं घर्षं पादावलेपनम् । कृत्वोत्पत्याम्बरे भूमौ पपात नागनन्दनः ॥ उत्पतन् भूरिशो व्योम्नि निपतंश्च क्षितौ पुनः । व्रणजर्जरितोऽभून्(स)तदा नागार्जुनो भृशम् ॥ व्योमोत्पतनवृत्तान्तं तदा नागार्जुनान्तिकात् । श्रुत्वा सम्यग् गुरुश्चित्तेऽतीवाऽजनि चमत्कृतः ॥ विनयेन तदा तस्य (यदा तेन) गुरुः पृष्टो जगावदः । षष्टितन्दुलनीरेण निखिला औषधीः स्फुटम् ॥ वर्त्तयित्वा व(घ)नलेपं दत्त्वा पदोस्तले पुनः । हिण्डसे व्योम्नि सर्पारि-रिव नागार्जुन! त्वकम् ॥ गुरूदितं विधिं कृत्वा गच्छन्नागार्जुनोऽन्यदा । शुश्रावेति गुरूपान्ते स्वर्णसिद्धिकरं वचः ॥ गुरूक्तविधिना कृत्वा रससिद्धिं वरे कृते । पिण्डं कर्तुं न शक्नोति नागार्जुनो मनागपि ॥ ततो गुरुपदोपान्ते रसबन्धं निशम्य सः । वीक्ष्यते पार्श्व-विम्बं तु सुनभावं वरे पुरे ॥ श्रुत्वा कान्तीपुरे पार्श्व-विम्बं वरप्रभावभृत् । वासुकेः पादलिप्तस्य मुखान्नागार्जुनोऽशृणोत् ॥ द्वारवत्यां पुरा पार्श्व-विम्बं वरप्रभावभृत् । पूजितं हरिणाऽब्दानां पुष्पैः सप्तशतीं मुदा ॥ दग्धायां द्वारवत्यां तु तद्बिम्बं जलधौ तदा । स्थितं सम्पुटमध्यस्थं वर्षाणि शतशः पुनः ( च सहस्रशः ) ॥ कान्तीनगरवास्तव्य-धनेन श्रेष्ठिनाऽन्यदा । प्राप्य तद्बिम्बमातीतं कान्तीपुर्यां

वरश्रियि ॥ श्रुत्वैतच्च तदा नागा–र्जुनः कान्तीपुरे रहः । यत्नेन रक्ष्यमाणं त–द्विम्बं चापहरत् क्षणात् ॥ सेटीनद्यास्तटे मुक्त्वा तद्विम्बं कुसुमैर्वरैः । पूजयित्वा प्रभोरग्रे रससिद्धिममण्डयत् ॥ धमं धमं रसं पार्श्व–प्रभोर्दृग्गोचरे तदा । नागार्जुनो व्यधात् स्वर्ण–सिद्धिं पूर्णां मनोहराम् ॥ सेटीसञ्ज्ञनदीकूले श्रीपार्श्वदृष्टिगोचरे । रसे स्तम्भमवापाऽतो–ऽजनि स्तम्भनकं पुरम् ॥ तत्र स्तम्भनके नाम्ना पुरे स्तम्भनकाभिधम् । प्रासादं कारयामास नागार्जुनो धनव्ययात् ॥ तत्र श्रीपार्श्वनाथस्य तद्विम्बं सुप्रभावभृत् । तस्मिन् जिनालये नागा–र्जुनोऽतिष्ठिपदञ्जसा ॥ तत उक्तञ्च—" स्तम्भनस्थमहं स्तौमि तां पार्श्वप्रतिमां तथा । पूर्वाचार्यैर्यथाख्याति नानास्थाननिवासिनी ॥ १ ॥ " एकादशाऽब्दलक्षाणि वरुणस्त्वामपूजयत् । नवाहराधिकान् सप्त–मासान् रामस्तमार्चयत् ॥ अशीत्यब्दसहस्राणि तक्षकेनापि पूजितः । सौधर्म्मसुरराजेन चर्चयित्वा चिरं नतः ॥ अद्यापि वासुदेवाय द्वारवत्यां जिनोत्तमः । ततः सागरतः कान्त्यां विंशत्यब्दशतानि च ॥ पद्मावत्या ततोऽपूजि पालितार्यनिदेशतः । आनीतः सेटिकानद्या नागार्जुनेन योगिना ॥ स्वामिंस्ते पुरस्तेन रसस्तम्भो विनिर्ममे । स्तम्भनाख्यं ततस्तीर्थं सञ्जातं जगतितले ॥ नवाङ्गवृत्तिकारेण त्वार्येणाभयसूरिणा । नवाङ्गदायको नाथ ! त्वं पुनः प्रकटीकृतः ॥ दुष्टैर्म्लेच्छभटैर्देशे गूर्जराख्ये परिप्लुते । मङ्गलत्वाग्निचन्द्राब्दे स्तम्भतीर्थमवातर(ः) ॥ प्रातः समुत्थाय जिनाधिनाथं यः स्तोत्रमेतत्पठति प्रवीणः । रोगोरगारिग्रहसिंहशङ्कां मुक्त्वा यशःश्रीः तिलकायते सः ॥ ततः शत्रुञ्जयं गत्वा पादलिप्तकसूरियुग् । विस्तरात् स्नात्रपूजादि नागार्जुनो व्यधात्तमाम् ॥ प्रासादं जर्जरं दृष्ट्वा नागार्जुनस्तदादरात् । उद्दधार गुरोर्नाम ददौ कुर्वन् महोत्सवम् ॥ उद्धारो विदधे पाद–लिप्तेन गुरुणा किल । शत्रुञ्जये इति ख्यातिं व्यस्तारयन् स नागभूः ॥ पादलिप्तकसञ्ज्ञं च पुरं नागार्जुनस्ततः । वासयित्वा गुरोर्नाम्ना जिनागारमचीकरत् ॥ तत्र पार्श्वजिनेशस्य विम्बं प्रस्थाप्य सूत्सवम् । नागार्जुनोऽर्जयामास पुण्यं मुक्तिगमोचितम् ॥ पादलिप्तकसूरीशो बोधयन् मनुजान् बहून् । प्रतिष्ठानपुरोद्याने मनोज्ञे समवासरत् ॥ तत्राऽऽसन्नप्रदेशेऽस्ति नदी गोदावरी वरा । नार्यङ्गकेसरप्राज्य–कस्तूर्यादिजलप्लुता ॥ तत्पुरं पाति भूपालः सातवाहन इद्धधीः । योद्धानां विदुषां मुख्यो दानशौण्डो नयी धनी ॥ तस्य संसदि कश्चिन्ना समागत्य जगाविदम् । पादलिप्तगुरुः सर्व–विद्यावानागतस्त्विह ॥ ततः सर्वैरपि बुधैः सम्भूयैकत्र तत् क्षणात् । स्त्यानसर्पिभृतं कच्चो–लकं स्वानुगपाणिना ॥ प्रेषितं सन्मुखं श्रीमद्–गुरूणां सन्निधौ ध्रुवम् । आचार्यैश्च तमध्ये तु क्षिप्तैका सूचिका दृढम् ॥ कच्चोलकं तथाऽवस्थं पश्चाच्छ्रीमद्गुरूत्तमैः । प्रेषितं भूपतेः पार्श्वे ततो राजा जगाविदः ॥ स्त्यानसर्पिभृते कच्चो–लके सूची गुरूत्तमैः । क्षिप्ता तस्य च को भावो जल्पतां विबुधा ! इह ॥ बुधाः प्रोचुर्गुरूत्तंसे–र्ज्ञापितं वोऽधुना खलु । स्त्यानसर्पिभृतामत्र–मिव ज्ञैः पूरितं पुरम् ॥ प्रविष्टा सूचिका स्त्यान–सर्पिमध्ये यथाधुना । तथाऽहं भवतः पुर्यां ज्ञपूर्णायां विशाम्यहम् ॥ ततः पण्डितयुग् राजा गुरोः सन्मुखमीयिवान् । तुष्टाव गुरुपादाब्जं पुनर्विपुलया गिरा ॥ गुरवो नगरीमध्ये समेता धर्मदेशनाम् । ददुस्तथा यथा राजा भक्तोऽजनि गुरौ भृशम् ॥ निर्वाणकलिका प्रश्नप्रकाशप्रमुखाणि च । शास्त्राणि रचयामास चमत्कारीणि चेतसाम् ॥ नवां तरङ्गलोलाख्यां चम्पूं विरच्य सूरिराट् । व्याचचक्षे महीशस्य पुरतः संसदि स्फुटम् ॥ चम्पूकाव्यार्थमाकर्ण्य तुष्टोऽतीव महीपतिः । कवीन्द्र इति नामाऽदात् पादलिप्तगुरोर्यथा ॥ शाणोत्तीर्णमिवोज्ज्वलद्युतिपदं बन्धोद्धनारीश्वरः श्लाघालब्धजनाङ्किको दिवि लतोद्भिन्नेव चार्थोन्नतिः । ईषच्चूर्णितचन्द्रमण्डलगलत्पीयूषवृद्धो रसस्तत्किञ्चित्

कविकर्म्म मर्म न पुनर्वाग्डिण्डिमाडम्बरः ॥ इत्यन्ये कवयः सूरि-राजं तुष्टुवुरादरात् । वेश्यैका विदुषी स्तौति गुरुं न स्वगिरा क्वचित् ॥ ततो राज्ञोदितं सर्वे वयं तुष्टा स्तुमो गुरुम् । किमियं गणिकाऽस्तौपी-न्न क्वचिद् गुणसागरम् ॥ गणिकेयं न मां स्तौति मत्वेति सूरिपुङ्गवः । ध्याने तथास्थितोऽत्यन्तं यथा मृत्युं-गतोऽभवत् ॥ पवनञ्जयसामर्थ्यात् शववत्संस्थितं गुरुम् । जम्पानकाधिरूढं तं शिष्या अकारयन् यदि ॥ यानमुत्पाट्यायान्तस्ते शिष्याः शितानानास्तदा । जगुर्गुरुर्मृतोऽस्माकं साम्प्रतं कर्म्मयोगतः ॥ आकर्ण्यैतत्तदा वेश्या रुदती सुदतीसरं । पादलिप्तकसूरेस्तु स्तुतिमेवं प्रचक्रमे ॥ "सीसं कहवि न फुट्टं जमस्स पालित्तयं हरंतस्स । जस्स मुहनिज्झराओ तरंगलोलानई वूढा ॥ १ ॥" एवं स्तुते गुरौ पण्य-स्त्रियोत्तस्थौ गुरुर्यदा । तदाऽवग् गणिकाऽजीवः कथं मृतोऽपि साम्प्रतम् ॥ सूरिः प्राह भवत्स्तुत्या सुधया कर्णसङ्गया । जीवितोऽहमिदानीं तु पण्यनारि ! शुभाशये ॥ ततो महोत्सवेऽत्यन्तं क्रियमाणे नृपादिभिः । स्वकीयवसतावागान् पादलिप्तकसूरिराट् ॥ सातवाहनभूपालः सोऽपि शत्रुञ्जयाचले । सूरिणाऽऽकारितो यात्रां भूरिसङ्घसमन्वितः ॥ मुरण्डभूपतिः शत्रु-ञ्जये यात्रां सुविस्तरात् । गुरुणा पादलिप्तेन कारितो भूरिसङ्घयुग् ॥ पादलिप्तगुरुः शत्रु-ञ्जये गत्वा शिवप्रदे । गृहीत्वाऽनशनं सूरि-पुङ्गवस्तस्थिवाँस्तदा ॥ द्वात्रिंशदुपवासान्ते पादलिप्तकसूरिराट् । ईशाने शक्रसदृशो बभूव भासुरद्युतिः ॥ नागार्जुनोऽपि सर्वज्ञ-धर्म्मं कृत्वा गुरूदितम् । जगाम त्रिदशावासे गत्वा शत्रुञ्जयाचले ॥१५९॥

इति पादलिप्तोद्धारकथा ।

---

आमभूपसम्बन्ध उच्यते; तथाहि—कान्यकुब्जाभिधे देशे गोपालगिरिपर्वते । गोपालाह्वपुरे भूपो यशोवर्म्माभिधोऽभवत् ॥ तस्य पत्न्या यशोदेव्या कुक्षिभूरामनन्दनः । अभूत् तस्य पिता जन्मोत्सवं चक्रेऽतिविस्तरात् ॥ वर्धमानः क्रमाद् दानं भूरि दत्तेऽर्थिने सदा । ततः स शिक्षितः पित्रा कुपितेनेति कर्कशम् ॥ रे ! पुत्रैवं व्ययन् लक्ष्मीं कोशं रिक्तं करिष्यसि । दानं प्रदीयतेऽर्थिभ्यो मितं स्वहितमिच्छता ॥ पित्रेति हक्कितः पुत्रो निर्गत्य नगराद्बहिः । मोढेरकपुरोद्याने ययौ देवकुले वरे ॥ सिद्धसेनगुरोः शिष्यो बप्पभट्ट्यभिधो यतिः । विहरन्नन्यदा देव-गेहे स समुपागमत् ॥ प्रशस्त्यर्थे महार्थे तु यतिना कथिते सति । आमोऽतिमुदितः साधो-श्चरणौ भक्तितोऽनमत् ॥ यतिनोक्तं कुतोऽत्र त्व-मागाः का तेऽभिधा पुनः ? । ततः खटिकयाऽऽलेख्य स्वनामादि जगौ स च ॥ यतः—"महाजनाचारपरम्परेदृशी, स्वनामनामाऽऽददते न साधवः । असौ पुमानेव ततोऽति बुद्धिमान्, भविष्यत्यग्रे जगतीमनोहरः ॥१॥" दध्यौ स संयतः पूर्वं यो मात्रा सह कानने । दृष्टोऽस्माभिर्यशोवर्म-भूपतेस्तनयोऽनघः ॥ यत्र वृक्षे स्थितो बाल-स्तस्य छायाऽनमन्नहि । ततोऽसद्गुरुभिर्नीतो भूपान्ते जननीयुतः ॥ भविष्यति महानेष इत्युक्त्वा नृपतेः पुरः । बालोऽयं स्थापितो मात्रा युतो जनकसन्निधौ ॥ सम्भाव्यते स एवायं यशोवर्म्मनृपाङ्गजः । आकृत्या ज्ञायते ह्येष भूपपुत्रो विचक्षणः ॥ बप्पभट्टिर्जगौ किं त्वं यशोवर्म्ममहीपतेः । पुत्र आमाभिधः पूर्वं दृष्टो स कानने वरे ॥ साम्प्रतं वत्स ! शुद्धात्मा निर्गतः कथमेककः ? । स प्राह धिक्कृतः पित्रा निरगां दूरनिर्वृति ॥ बप्पभट्टिरवक् तिष्ठ त्वमत्र पठ सन्ततम् । तत आमः पठन् सर्व-विद्यास्वजनि कोविदः ॥ बप्पभट्ट्यन्तिके पुत्रं ज्ञातशास्त्रं विचक्षणम् । ज्ञात्वा कस्यचिदास्यात् तु निनाय निजसन्निधौ ॥

कियत्यपि गते काले यशोवर्म्मनृपे मृते । मन्त्रिभिस्तत्पदे सूनू-रामनामा निवेशितः ॥ गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः । प्रासादशिखरस्थोऽपि काकः किं गरुडायते ? ॥ आमो राज्ये निविष्टः सन् वप्पभट्टिं मुनिं वरम् । मुञ्चते न क्षणं चित्ताज्जैनो जिनमिवानिशम् ॥ "आरम्भगुर्वी क्षयिणी क्रमेण, ह्रस्वा पुरा वृद्धिमती तु पश्चात् । दिनस्य पूर्वार्द्धपरार्द्धभिन्ना, छायेव मैत्री खलसज्जनानाम् ॥ १ ॥" लक्षद्वयी तुरङ्गाणां चतुर्दशशतप्रमाः । स्यन्दना हस्तिनश्चैव-मेका कोटिः पदातयः ॥ श्रीआमस्य महीशस्य वप्पभट्टिं मुनिं विना । पलालपूलकप्रायः सर्वं राज्यं विराजते ॥ प्रधानपुरुषानाऽऽमो वप्पभट्टिं मुनिं बुधम् । आह्वातुं प्रेषयामास ते च तत्र गता जगुः ॥ वप्पभट्टिमुने ! विद्वन् ! तव वन्दनमन्वहम् । आमो वाञ्छति तेन त्वं तत्रैत्य तं प्रमोदय ॥ वप्पभट्टिर्जगौ श्रीमद्-गुर्वादेशं विना मया । तत्राऽऽगन्तुं न शक्येत गुर्वायत्तो यतो यतिः ॥ ततस्तैरामभूपोक्तैः प्रोक्तं गुरोः पुरस्तदा । गुरुणा प्रेषितो वप्प-भट्टिस्तत्राम-सन्निधौ ॥ आमस्तस्य मुनेः पुर्यां प्रवेशोत्सवमद्भुतम् । कुर्वन् लक्षत्रयं रैणां व्ययति स्म प्रमोदतः ॥ वप्प-भट्टिमुनेर्नत्वा पादावाचष्ट भूपतिः । अर्द्धराज्यं प्रसद्य त्वं गृहाणानुगृहाण माम् ॥ मुनिनोक्तं किमस्माकं राज्येन क्रियते मम । निर्ग्रन्थाः स्युर्यतः सर्व-सावद्यवर्जकाः सदा ॥ अनेकयोनिसम्पाता-नन्तपापविधा-यिनी । अभिमानफला चेयं राज्यश्रीः सा विनश्वरी ॥ ततोऽतिरञ्जितो राजा मुनिं नत्वा जगावदः । त्वं धन्यवान् पुण्यवांस्त्वं यतस्ते स्यान्मतिर्वरा ॥ ततो नृपः प्रगे नन्तुं मुनिं यातो जगावदः । उपाविशाऽऽसने ह्यस्मिन् प्रसद्य मयि साम्प्रतम् ॥ मुनिपार्श्वस्थिता वाचंयमाः प्रोचुस्तदेति तम् । न कल्पते विना सूरि-पदं विष्टर आसितुम् ॥ तत आमोऽनुगान् प्रेष्य वप्पभट्टेर्मुनेर्गुरुम् । स्वपुर्यामानयामास नानोत्सव-पुरस्सरम् ॥ उपदेशं गुरोः श्रुत्वा भूपश्चमत्कृतो जगौ । भगवन् ! वप्पभट्टेस्त्वं देहि सूरिपदं द्रुतम् ॥ योग्यं शिष्यं पदस्याशु ज्ञात्वा श्रीमद्गुरूत्तमैः । देयं सूरिपदं सद्यो वाञ्छद्भिर्हितमात्मनः ॥ सूरिः प्राह महीपाल ! यदैव ते रुचिर्हृदि । तदा सूरिपदे वप्प-भट्टिश्च स्थापयिष्यते ॥ ततो विलोक्य शकुन-श्रेणी-मुदयकारिणीम् । गुरुभिर्मानितं सूरेः पदं तस्य मुनेर्मुदा ॥ यदा सूरिपदं वप्प-भट्टये गुरुणा ददे । तदा महीधवो रैणां लक्षत्रितयमव्ययत् ॥ सूरिपदक्षणे सूरिः शिष्याङ्गे कमलां स्वयम् । साक्षात् कनीमिवा-लोक्य रहः प्राहेति तं प्रति ॥ वत्स ! ते राजसत्कारो महान् भावी नृपालये । दुःशकः खजयस्तेऽस्ति ब्रह्म पाल्यमतस्त्वया ॥ यतः—'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' । त्वं ब्रह्मचर्या-यनतः प्रतिष्ठां लभिष्यसेऽमुत्र परत्र शिष्य ! ॥१॥" विक्रमार्कोद्भवश्रेयोमितेष्वब्देषु सूरिराट् । ददौ सूरिपदं वप्प-भट्टे चैत्राष्टमीदिने ॥ विहारं सूरिराट् कुर्वन्नन्यदा स महीभुजा । आकारितो ययौ गोपगिरौ श्रीवप्प-भट्टिकः ॥ महामहे महीशेन कार्यमाणे पुरान्तरे । वप्पभट्टिः पुरीमध्ये समागात् साधुसेवितः ॥ वन्दित्वा भूपतावग्रे निविष्टे सति संसदि । सूरीशो देशनां चक्रे भवाम्भोनिधितारिणीम् ॥ श्रीरियं प्रायशः पुंसा-मुपकारैककारणम् । तामुपकुर्वते ये तु रत्नसूस्तैरसौ रसा ॥ "जिणभवण-बिंब-पुत्थय-संघसरूवे-सु सत्तखित्तीए । ववित्रं धणंपि जायइ सिवफलयमहो ! अणंतगुणं ॥ श्रुत्वा गुरुवचो भूपः श्रीवीरजिन-मन्दिरम् । एकाधिकशतोच्छ्रायं कारयामास रैव्ययात् ॥ अष्टादशसुगाङ्गेय-भारनिर्मितमद्भुतम् । वीर-बिम्बं नृपस्तत्र सुष्ठूत्सवं न्यवीविशत् ॥ सपादलक्षरैटङ्का चैत्ये चादिममण्डपे । तत्र लग्ना महीशस्य क्रमात् कारयतश्च तत् ॥ यतः—"यत्तिष्ठति वरवेश्मनि सार्द्धाभिर्द्रविणकोटिभिस्तिसृभिः । निर्मापिते च राज्ञा

गोपगिरौ जयति जिनराजः ॥१॥" प्रातरुत्थाय भूपालो गजारूढः सुसेवकः। चैत्ये स्वकारिते वीरं नत्वाऽतो वन्दते गुरुम् ॥ मिथ्यादृशां तदा दृष्टयः पूर्यन्ते सैन्धवेन च। सम्यग्दृशां तु पीयूषै-र्भ्रियन्ते चैत्यवीक्षणात् ॥ प्रातर्निवेश्य कल्याणासने स्वस्य गुरूत्तमम् । आमोऽशृणोद्यदा धर्मं तदा केषु द्विजन्मसु ॥ द्विजा एत्य गृहे भूमि-पतेरग्रेऽवदन्निति । अमीषां श्वेतवस्त्राणां स्वर्णासनं न युज्यते। कुत्सनीया अमी भिक्षा-भोजिनः शूद्रजातयः । दीयतेऽस्योपवेशाया-तोऽधुनाऽन्यदासनम् ॥ एवं प्रोक्ते द्विजैः सूरेरुपवेशाय भूपतिः। लघीयो विष्टरं प्रेष्य मौलं कोशगतं व्यधात् ॥ तस्मिन् सिंहासने सूरि-रुपविश्य दितोदये। सूरीश्वरोऽपठत् श्लोक-मेकं नरपतेः पुरः ॥ "मर्दय मानमतङ्गगजदर्पं, विनयशरीरविनाशनसर्पम्। क्षीणो दर्पादृशवदनोऽपि, यस्य न तुल्यो भुवने कोऽपि ॥ १ ॥" श्रुत्वैतद् गुरुचित्तस्थं ज्ञात्वा ह्रीणो महीपतिः। मौलं सिंहासनं सद्योऽप्रेषयद् गुरवे तदा ॥ गुरोश्चरणयोर्भक्त्या लगित्वाऽऽममहीपतिः। श्रीगुरुं क्षमयामास मनोवाक्काययोगतः ॥ गुरुः प्राह द्विजाः स्वीय-जातिगर्वितमानसाः। तृणाय मन्वते नैव जातीरन्याः कदाचन ॥ ब्राह्मणो ब्रह्मचर्येण क्षत्रियाः शस्त्रपाणयः। कृषिकर्म्मकरा वैश्याः शूद्राः प्रेषणकारकाः ॥ अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् सलक्षणान्। शूद्रात् प्रतिग्रहं कृत्वा खरो भवति वाडवः ॥ खरो द्वादश जन्मानि षष्टि जन्मानि शूकरः। श्वानः सप्तति जन्मानि इत्येवं मनुरब्रवीत् ॥ शूद्रगेहाद् द्विजा लान्ति प्रतिग्रहं यतः सदा। ततो न वणिजः शूद्राः किन्तु वैश्या नराधिप ! ॥ यदा यो यादृशं कर्म्म कुर्यात् स तादृशो भवेत्। कर्म्मतो जायते जातिः शुभा वाऽप्यशुभा पुनः ॥ कुत्सितं कर्म्म कुर्वाणा दृश्यन्ते साम्प्रतं द्विजाः। अतः शूद्राः प्रजल्पन्ते ब्राह्मणा अपरे पुनः ॥ तदा कोटी सुवर्णस्य गुरुभ्यो मेदिनीभुजा। दत्ता ते जगृहे नैव निरीहत्वाद् गुरूत्तमैः ॥ ततो जीर्णजिनागारो-द्धारे सैकोटिरेकिका। व्ययिता भूभुजा सङ्घ-युक्तेन गुरुवाक्यतः ॥ अन्यदान्तःपुरे पत्नीं प्रम्लानवदनाम्बुजाम्। दृष्ट्वा गुरोः पुरो भूपो गाथार्धमूचिवानिति ॥ "अज्जवि सा परितप्पइ कमलमुही अत्तणो पमाएणं।" निशम्येमां समस्यां तु बप्पभट्टिर्जगावदः ॥ "पढमविबुद्धेण तए जीसे पच्छाइयं अंगं ॥ १ ॥" समस्यां निजचित्तस्थां सहसा गुरुपूरिताम्। ज्ञात्वा चमत्कृतो राजा ववन्दे भक्तितो गुरुम् ॥ पदे पदेऽन्यदा मन्दं मन्दं यान्तीं प्रियां पथि। दृष्ट्वा गाथार्धमुर्वीशो जगादेति गुरोः पुरः ॥ "बाला चंकमंती पए पए कीस कुणइ मुहभंगं।" ततः सूरिः प्रत्युत्तरं ददौ—"नूणं रमणपएसे मेहलिया छिवइ नहपंती ॥ श्रुत्वैवं भूपतिः काल-मुखो दध्यौ स्वयं हृदि। अमी किं गुरवो मेऽन्तः-पुरे हि कृतविप्लवाः ? ॥ ततो भूपाशयं मत्वेङ्गितेन ध्यातवान् गुरुः। अहो ! विद्यागुणोऽप्येष दोषतां मे गतोऽधुना ॥ यतः—"जलधेरपि कल्लोलाश्चापलानि कपेरपि। शक्यन्ते यत्नतो रोद्धुं न पुनः प्रभुचेतसः ॥ १ ॥" रात्रौ सङ्घमनापृच्छ्य राजद्वारकपाटके। काव्यत्रयं लिखित्वाशु नगर्या निर्ययौ गुरुः ॥ तथाहि—"यामः स्वस्ति तवाऽस्तु रोहणगिरे ! मत्तः स्थितिप्रच्युता, वर्त्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः। श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा, ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १ ॥ मैवं मंस्था स्थितिपदमहं मत्त एवाम्बुलाभो मय्यायत्तं जठरभरणं मत् कृपा सन् कृपा वा। स्थास्यन्ते ते परिभवमपि प्राप्यते हेमसद्म नैकस्यार्थे विमलसरसो निर्गता राजहंसाः ॥ २ ॥ अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्, किं वा विमुञ्चसि विभो ! यदि वा विमुञ्च। हा हन्त ! केकिवर ! हानिरियं तवैव, भूपालमौलिषु पुनर्भविता स्थितिर्नः ॥ ३ ॥" विहरन् भूतले सूरि-र्दिनैः कतिपयैः क्रमात्।

नगर्यां लक्षणावत्या-मुद्याने समवासरत् ॥ तत्र पुर्यां नृपो धर्मो न्यायी तस्य च संसदि । कविराजः कविकाव्य-पङ्क्तिं प्राह नृपाग्रतः ॥ सूरिं तत्रागतं ज्ञात्वा भूपः कविसमन्वितः । आनिनाय पुरीमध्ये प्रवेशोत्सवपूर्वकम् ॥ भूपदत्ते गृहे तुङ्गे स्थितं सूरिं निरन्तरम् । नत्वा श्रुत्वा कवित्वानि धर्मंश्च बूभुजे सुखम् ॥ रञ्जिताः कवयोऽनेके जिताश्च सूरिणा तदा । सेवन्ति तत्पदौ स्यन्ति सन्देहं चिरकालजम् ॥ युक्तोऽसि भुवनभारे मा नम्रां कन्धरां वितनु शेष ! । त्वय्येकस्मिन् दुःखिनि भवन्ति भुवनानि सुखितानि ॥१॥ " किं तेन हेमगिरिणा रजताऽद्रिणा वा, यस्याश्रयेण तरवस्तरवस्त एव । मन्यामहे मलयमेव यदाश्रयेण, कोरण्टनिम्बकुटजा अपि चन्दनानि ॥२॥ सज्जनस्य हृदयं नवनीतं गीतमत्र कविभिर्न हि तावन् । अन्यदेहविलसत्परितापान् सज्जनो द्रवति नो नवनीतम् ॥ ३ ॥ " इतो गोपगिरावाम-भूपोऽप्रेक्ष्य गुरुं निजम् । काव्यत्रयं पुरद्वारे दृष्ट्वा खिन्नोऽभवन्नृपः ॥ तथाहि—" यामः स्वस्ति तवास्त्विति० ॥ " वृक्षे समेत्य सन्ध्यायामुषित्वा रजनीं वयः । उड्डीयोड्डीय गच्छन्ति स्वेच्छितां ककुभं किल ॥ वर्षाकालं समाक्रान्तं वीक्ष्य सितच्छदाः खलु । गच्छन्ति मानसेऽभीष्टे सरसीति नरेश्वर ! ॥ काव्यार्थावगमाद्राजाक्षराण्येक्ष्य गुरोस्तदा । दध्यौ विमुच्य मां कस्मात् कारणादीयिवान् गुरुः ॥ अन्येद्यूर्भूपतिर्बाह्यो-द्याने कृष्णभुजङ्गमम् । मुखे धृत्वा गृहे नीत्वा वस्त्रेणाच्छाद्य मुक्तवान् ॥ कृत्वा पदद्वयं भूपः कविभ्योऽर्पितवानिदम् । " शस्त्रं शास्त्रं कृषिर्विद्या अन्यो यो येन जीवति " ॥ समस्येयं न केनापि पूरिता भूपचिन्तिता । यदा तदाऽस्मरद् वप्प-भट्टिं सूरीश्वरं गुरुम् ॥ ततश्चावीवदद्भूपः पटहो मन्त्रिपार्श्वतः । मम हृस्वां समस्यां यः पूरयिष्यति मानवः ॥ तस्मै रैटङ्ककान् लक्षं ददाम्यादरपूर्वकम् । ततो द्यूतकृता केना-गत्य सा पूरिता त्विति ॥ " सुगृहीतं हि कर्त्तव्यं कृष्णसर्प्पमुखं यथा " आकार्य भूभुजा पृष्टो द्यूतकारः क्षणात्तदा । सत्यं वद समस्येयं पूरिता केन कितव ! ॥ द्यूतकारो जगौ स्वामिन् ! श्रीलक्षणावती पुरी । अगामहमपृच्छं च समस्यार्थं गुरोः पुरः ॥ समस्या पूरिता वप्प-भट्टिना गुरुणा त्वियम् । ततो हृष्टो नृपस्तस्मै स्वप्रोक्तं दत्तवाँस्तदा ॥ राजाऽऽचष्ट सभायां तु श्रीवप्पभट्टिसूरिणा । समस्या पूरिता तेन तस्य तुल्योऽस्ति कोऽपि न ॥ अन्यदा नगरोद्याने न्यग्रोधद्रोरधः स्थितः । ददर्शाऽऽमनृपः पान्थं मृतं शाखाविलम्बितम् ॥ श्रवन्तं विप्रुषां व्यूहं करपत्रकमेककम् । गाथार्द्धं लिखितं प्राणि ददर्शेत्यवनीपतिः ॥ " तइया मह निग्गमणे पियाइ थोरंसुएहि जं रुण्णं । " तत् समस्यापदद्वन्द्वं पप्रच्छ कव्यन्तिके नृपः ॥ न केनापि यदाऽपूरि समस्या नृपचिन्तिता । तदाऽस्मार्षीन्महीपालो वप्पभट्टिं गुरूत्तमम् ॥ आह चेति-वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ प्रतिपत् चन्द्रं सुरभी नकुलो नकुलीं पयश्च कलहंसः । चित्रकवल्लीं पक्षी सूक्ष्मं धर्म्मं सुधीर्वेत्ति ॥ ध्यात्वेति भूभुजा द्यूत-कारः स एव चालितः । उपसूरि समस्याया अर्थं ज्ञातुं समीयिवान् ॥ स्वागमे कारणं प्रोक्ते द्यूतकारेण तत् क्षणात् । वप्पभटिरुवाचेति समस्यार्थं तदग्रतः ॥ "करवत्तय विंदु निवाडणमिहेण तं अज्ज संभरिअं ॥ " द्यूतकारः समेत्यावग् समस्यापूरणं गुरोः । यावत्तावन्नृपो हृष्टोऽनंसीत्तं चेतसा गुरुम् ॥ तत आह्वयितुं सूरिं वाग्मिनः सचिवा वराः । भूभुजा प्रेषिता वप्प-भट्टिसूर्यन्तिके ययुः ॥ गुरुं नत्वाऽऽमभूपेन प्रेषिता वयकं त्विह । जल्पन्तस्ते तु विज्ञप्तिं प्रददुः सूरये तदा ॥ " न गङ्गां गाङ्गेयं सुयुवतिकपोलस्थलगतं, नवा शुक्तिं मुक्तामणिरुरसिजस्पर्शरसिकः । न कोटीरारूढः स्मरति च सविश्रीं मणिचय-स्ततो

मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥१॥ छायाकारण सिरधरिय पत्तिवि भूमि पडंति । पत्तहं इहुपत्तत्तणउ तरुअर काइं करंति ॥ २ ॥" ततो विशेषतो मन्त्री-श्वरा नत्वा गुरुक्रमौ । जगदुः श्रीआमभूपेन विज्ञप्ता इति यूयकम् ॥ अविलम्बं कृपां कृत्वा ममोपरि गुरूत्तम ! । त्वयाऽत्रैत्य विधातव्या पवित्रा मम मेदिनी ॥ भगवद्वचनं ये तु शुश्रुवुर्मनुजा नृपाः । तेषामन्यकवित्वेषु न रुचिर्भवति कचित् ॥ कथासु ये लब्धरसाः कवीनां, ते नानुरज्यन्ति कथान्तरेषु । न ग्रन्थिपर्णप्रणयाश्चरन्ति, कस्तूरिकागन्धमृगास्तृणेषु ॥ श्रुत्वेतत् सूरिराड् बप्प-भट्टिः प्रोवाच तान् प्रति । युष्माभिरपि भूपाल आमो ज्ञाप्यो विदांवरः ॥ अस्माभिर्यदि वः कार्यं तदा धर्म्मस्य भूपतेः । सभायां छन्नमागत्य स्वयमापृच्छ्यतां द्रुतम् ॥ धर्म्मेण भूभुजा सार्द्धं प्रतिज्ञेति कृता मया । ममाऽऽममेदिनीपालो यद्याह्वातुमिहैति तत् ॥ तदा मया समं तेन गन्तव्यं तत्र भूपते ! । नाऽऽगन्तुं शक्यते तत्र प्रतिज्ञालोपभीतितः ॥ यतः—" प्रतिज्ञाकरणं स्वीयं श्वित्युदन्तसमन्वितम् । गुरुलेखं समादाय सचिवाश्चलितास्ततः ॥ १ ॥" समेत्य सचिवा गोप-गिरौ भूपतिसन्निधौ । गुरुविश्राणितं लेखं प्रददावामभूभुजे ॥ तत्र लिखितं यथा—" विंझेण विणा वि गया नरिंदभवणेसु हुंति गारविया । विंझो न होइ अगओ गएहिं बहुएहिं वि गएहिं ॥१॥ माणसरहिएहिं सुहाइं जइवि न लब्भंति रायहंसेहिं । तह तस्स वि तेहिं विणा तीरुच्छंगा न सोहंति ॥ २ ॥ परिसेसिअहंसउलंपि माणसं माणसं न संदेहो । अन्नत्थ वि जत्थ गया हंसा वि बया न भण्णंति ॥ ३ ॥ हंसा जहिं गया तहिं गया महिमंडणा हवंति । छेहउ ताहं महासरह जे हंसेहि मुच्चंति ॥ ४ ॥ मलउ सचंदणु चिय नइमुहहीरंतचंदणदुमोहो । पब्भट्ठं पि हु मलयाओ चंदणं जायइ महग्घं ॥५॥ अग्घायंति महुयरा विमुक्ककमलायरावि मयरंदं । कमलायरो वि दिट्ठो सुओ व किं महुअरविहूणो ? ॥ ६ ॥ इक्केण कोत्थुहेणं विणावि रयणायरु चिय समुद्दो । कोत्थुहरयणं पि उरे जस्स ठिओ सोवि हु महग्घो ॥७॥ पई मुक्काह वि तरुवर फिट्टइ पत्तत्तणं न पत्ताणं । तुह पुण छाया जइ होइ तारिसी तेहि पत्तेहिं ॥८॥ जे के वि पहू महिमंडलम्मि ते उच्छुदंडसारिच्छा । सरसा जडाण मज्झे विरसा पत्तेसु दीसंति ॥९॥ संपइ पंहुणो पिहुणो पहुत्तणं किं चिरं तणपंहुणं । दोसगुणा गुणदोसा एहिं कया न हु कया तेहिं ॥ १० ॥ खंडं विणा वि अखंडमंडलो जयइ पुण्णिमायंदो । हरसिरगयंपि सोहइ तहेय विमलं ससिखंडं ॥११॥" वाचयित्वा तदा लेखं सोत्कुण्ठमामभूपतिः । युक्तः कतिपयैर्भृत्यै-रचालीद्वन्दितुं गुरुम् ॥ गोदावरीनदीतीरे खण्डदेवकुले कले । नत्वा देवीं स्थितो रात्रा-वामभूमिपतिस्तदा ॥ रूपेण मोहिता देवी व्यन्तरी कमलाभिधा । भोगान् भुङ्क्ते स्म भूपेन सार्द्धं मुदितमानसा ॥ प्रगे आपृच्छ्य तां देवी-मुष्ट्रारूढो महीपतिः । नत्वा गुरुं च गाथार्द्ध-मुच्चचार रहः स्थितः ॥ अज्ज वि सा सुमरिज्जइ को नेहो एगराईए । सूरीन्द्रः प्रोक्तवानिति—गोलानइतीरे सुन्न-देउलंमि जंसि वासमिओ ॥ अद्य मे सफला प्रीति-रद्य मे सफला रतिः । अद्य मे सफलं जन्म अद्य मे सफलं कुलम् ॥१॥ आगुर्यत् ते मया मौढ्याद् वचसा मनसा कृतम् । तत् क्षन्त्वा मत्पुरः क्षोणी भूष्या त्वया निजागमात् ॥ स्वप्रतिज्ञास्वरूपं तु गुरवो जगदुस्तदा । आमः प्राह प्रगेऽहं त्वामेष्यामि वन्दितुं छलात् ॥ नृपस्य पश्यतोऽहं त्वां वन्दिष्ये परिवारयुग् । यथा त्वया मया कार्यं यथा धर्म्मो न वेद माम् ॥ कृत्वा गोष्ठीं नृपः सार्द्धं गुरुणा दिवसाऽऽत्यये । कृत्वा सङ्केतमुद्याने ययौ नानाद्रुमाकुले ॥ प्रातर्गुरुं प्रणम्याथ धर्म्मभूपः प्रमोदतः । व्याख्यां श्रोतुमुपायातः कियत्सेवकसेवितः ॥ इतस्तत्र समेत्यैको नरो वाढस्वरं जगौ । आमभूपानुगा अत्राऽऽयान्तः सन्त्यधुना ननु ॥

तेष्वागतेषु तत्राह गुरुरामाऽऽव्रजन्तु भोः । ततः सर्वे गुरुं नत्वो-पविष्टा गुरुसन्मुखाः ॥ जगौ गुरुरमी-आम-भूपभृत्या नरेश्वर ! । धर्म्मः पप्रच्छ मन्त्रीशं कीदृगामोऽस्ति भूपतिः ? ॥ मन्त्री प्रोवाच पत्राणि ददत् स्थगीधरोऽस्ति मे । यादृक् तादृग् समस्त्याम-भूप आकारतो नृप ! ॥ स्थगीधरो गुरुं नत्वा जगौ गोपगिरौ द्रुतम् । समेत्य भूपतिश्राद्धान् वन्दयध्वं निजागमात् ॥ गुरुः प्राह स्थगिस्तेऽत्र वागस्माभिः करिष्यते । धर्म्मलाभस्त्वया तस्य वक्तव्यो ज्ञेय एव च ॥ अत्रान्तरे गुरुः प्राह भोः ! स्थगिस्ते करेऽधुना ! किमस्ति ? स जगौ बीजउरा मे विद्यतेऽन्तिके ॥ क्षणार्द्धेन गुरूत्तंसैः किं वदत्युत्तरे तदा । मुक्तमेकं मनोह्लाद-कारकं वावतारितम् ॥ " तत्ती सीअली मेलावा केहा, धण उत्तावलि पियमंदसिणेहा।विरहिहिं माणुसुजं मरइं तसु कवणी निहोरा, कन्नि पवित्तडी जणु जाणइ दोरा ॥ १ ॥ ", इत्यादिगोष्ठिकायां तु वर्त्तन्त्यां गुरुपादयोः । आमः शनैर्विनिर्गत्य सङ्केतस्थानके ययौ ॥ वर्यवाहनिकाऽऽरूढ आमभूमिपति-श्चलन् । भूयिष्ठमार्गमुल्लङ्घ्य त्वरितं दूरतो ययौ ॥ इतो यामद्वयं याव-द्रसोऽपूर्वोऽवतारितः । तादृक् श्रीगुरुभिः सङ्गस्तदाऽभूच्चित्रलेख्यवत् ॥ व्याख्यान्ते आमभृत्याग्रे धर्म्मः प्राह भवत्पतिः । एकदाऽत्रैति कर्त्तव्यं तथा यथा नृपानुगाः ! ॥ आयात एव ज्ञातव्यो भवताऽत्र स भूमिभुग् । प्रोक्त्वा ते चलिता आम-पृष्ठौ आमानुगा द्रुतम् ॥ द्वितीयेऽह्नि प्रगे सूरि-र्मुत्कलापयितुं नृपम् । गत्वा जगावहं गोप-गिरौ याम्या-मसन्निधौ ॥ अस्माकं धर्म्मलाभोऽस्तु तवाऽतो धर्म्म ऊचिवान् । का गतिस्ते प्रतिज्ञाया आमस्याऽऽकारणं विना ॥ यतः—" सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः । सकृत् कन्या प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥ १ ॥ " आचार्या जगदुः पूर्णा प्रतिज्ञा मम साम्प्रतम् । राजाऽऽचष्ट कथं पूर्णा प्रतिज्ञा ते गुरूत्तम ! ॥ सूरिर्जगौ गते घस्रे व्याख्यानावसरे प्रगे । आम भूपानुगा एत्या-वन्दन्त मा यदादरात् ॥ तदाऽऽमोऽपि नृपो नन्तुं समागान्मम भूपते ! । मया चोचे छलादाम ! समागच्छाऽत्र तिष्ठ च ॥ स एवाम-महीपालो ज्ञातव्यो भवता नृप ! । स्थगिरूपधरेणाम-नृपेणाऽऽकारितोऽस्म्यहम् ॥ प्रोक्तं बीजउरा दो रा आमस्थगिसमोऽस्ति च । इत्यादि वचनान्यासन् मम तन्मन्त्रिणस्तदा ॥ इत्यादि बहुशो जल्पैस्त्वयाऽऽमो नृप ईक्षितः । न ज्ञातो भवताऽऽह्वातु-मागतो मामिहापि सः ॥ संशये नृपतिर्यावत् पतितो गणिकैकिका । आगत्याऽऽह्यागमद् भूप आमो नन्तुं गुरूत्तमम् ॥ आमेन गच्छता पश्चात् त्वरितं मम हस्ततः । अङ्गदो रुचिरो प्रैपि भक्त्यै तव महीपते ! ॥ अर्थिभ्यः कङ्कणद्वन्द्वं दत्तमामेन गच्छता । यत्तत् कस्यचिदास्यात्तु ज्ञातं मां महीभुजा ॥ आमं यातं पुरे स्वीये मत्वा धर्म्ममहीपतिः । शोचन् जगौ मया धिग्नो ज्ञातः सुहृदि-हागतः ॥ वप्पभट्या-मयोश्चारु चातुर्यं जगदद्भुतम् । ज्ञात्वा धर्मो गुरोः पादौ ननामाऽतीवभक्तितः बलात्पर्यवसाप्याऽथ धर्म्म भूपं गुरूत्तमः । चलन् मार्गेऽमिलत् कस्मिन् ग्रामे आमस्य भूपतेः ॥ एकः पुलिन्द्रको नीरादायशाय मध्ये जलं पिबन् । आस्येन छगवद् दृष्ट आमेन भूभुजा कचित् ॥ आमः सूरी-श्वरोपान्ते गाथार्द्धमूचिवानिति । " पसु जिम पुलिंदो पय पिवइ पंथिय कवण कारणिण ॥ " ततोऽम्बुपो नरो राज्ञा-ऽऽकार्य पृष्टो जगौ तदा । गुरुणा पूरिता सत्या समस्या मेदिनीपतेः ॥ इत्यादि भूरिशः प्रश्न-प्रतिप्रश्नादि भूपतिः । कुर्वाणो गुरुणा सार्द्धं गोपालगिरिमीयिवान् ॥ पताकातोरणोन्मञ्च-मञ्चादिक विधानतः । भूपो गुरुं पुरीमध्ये निनायोत्सवपूर्वकम् ॥ वप्पभट्टिर्गुरुस्तत्र तिष्ठन् धर्म्मकथादिभिः । रञ्जया-मास भूपालं चेतोऽन्येषां च धीमताम् ॥ इतो वार्द्धकभावेन श्रीसिद्धसेनसूरयः । असमर्था गृहीतुं स्व-भूवन्ननशनं हृदि ॥ वप्पभट्टिर्विनेयस्याऽऽकारणार्थं यतिद्वयम् । प्रेषितं गुरुणा चागात् समीपे गुरुलेख-

युग्॥ वप्पभट्टिर्गुरोर्लेखं नत्वा कृत्वा च मस्तके। उन्मुद्र्य वाचयामास स्वयमेव स्वचेतसि॥ अध्यापितोऽसि पदवीमधिरोपितोऽसि, न किञ्चनापि गुरुवत्सल ! वप्पभट्टे ! । प्रायोपवेशनरथं विनिवेश्य येन, संप्रेषयस्यमरधाम नितान्तमस्मान् ॥ ततो भूपतिमापृच्छ्य मोढेरकपुरे वरे । गत्वा गुरुपदाम्भोजं वप्पभट्टिर्ननाम च ॥ गुरवोऽपि च तं शिष्यं गाढमालिङ्ग्य हर्षतः । प्रोचुर्वत्स ! मनोऽस्माकं मुदितं भवदागमात् ॥ वत्स ! त्वं कारयाऽस्माक-माराधनपताकिकाम् । यया मे स्याद्गतिः स्वर्गे भूयास्त्वमनृणः पुनः ॥ ततः कारितयोरा-राधनाचतुःशरणयोः । पुण्यानुमोदनपरः सिद्धसेनो गुरूत्तमः ॥ १ ॥" स्मरन् पञ्चनमस्कारान् तीर्थमालां नमन् हृदि । आयुःप्रान्ते ययौ स्वर्ग-लोकेऽसत्त्वसुखप्रदे ॥ युग्मम् ॥ गुरुस्वर्गगमोद्भूतं शोकमुत्तार्य चेतसः । विशेषाद्विदधे वप्प-भट्टिसूरिः शुभाः क्रियाः ॥ श्रीमद्गोविन्दसूरीश-नन्नसूरीशयोर्द्वयोः । गच्छभारं समर्प्याऽगात स सूरिराममन्निधौ ॥ गोष्ठीं वितन्वतोर्वप्प-भट्यामभूपयोस्तदा । सुभाषितादिभिः शश्वत् क्षणवद्याति वासरः ॥ नर्त्तन्तीं नर्त्तकीं दृष्ट्वैकदा सूरिः सभान्तरे । पुस्तकाक्षरदत्ताक्ष-स्तस्थावर्थविलोकतः ॥ क्रमात्सूरिः पुरीनार्याः कञ्चुके शुकपिच्छले । ददाने लोचने भूपोऽपश्यन्नित्यपठन् हृदि ॥ सिद्धंततंतपारंगयाणं जोगीण जोगजुत्ताणं । जइ ताणंपि मयच्छी जयंति ता तच्चिअ पमाणं ॥ नर्त्तकीं नरवेषान्तां रात्रावामनरेश्वरः । अप्रेषीन् सूरिवसतौ परीक्षाहेतवे निशि ॥ विश्रामणां वितन्वत्यां तस्यां करस्य संस्पृशात् । ज्ञात्वा सूरिः स्त्रियं प्राह केनात्रैषि भामिनि ! ॥ ब्रह्मव्रतनिविष्टेष्वस्मादृशेषु च साधुषु । वालोऽपि नहि चाल्येत वातैः कञ्चनशैलवत् ॥ तयोक्तं तदेति ॥ राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ अपि च-प्रियादर्शनमेवाऽस्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते तेन निर्वाणं सरागेणापि चेतसा ॥ १ ॥" शुश्रुषार्थं तवेदानीं श्रीआमेन महीभुजा । प्रेषिताऽहं ततः सूरि-मुख्यो जगाद तां प्रति ॥ अस्माकं ज्ञानदृष्टीनां व्यामोहाय मनागपि । प्रगल्भन्ते मरुन्नारी-तुल्या नार्यः कदापि न ॥ यतः—" मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम् । रतिं करोतु को नाम सुधीर्वर्चोगृहेष्विव ॥ १ ॥" निर्विकारं गुरुं दृष्ट्वा घनतोषा पणाङ्गना । प्रातर्नृपान्तिकेऽभ्येत्य नैशं वृत्तान्तमूचुषी ॥ स्वामिंस्तव गुरुर्वज्र-मयचेताः सुराद्रिवत् । न क्षोभ्यते मरुत्त्रोमि-रस्माभिः किमु चाल्यते ? ॥ आजन्मशिक्षितापाया कूटादिरचनो खलु । अस्माभिस्ता इहास्माकं बभूवुर्निःफला नृप ! ॥ वेश्योपान्ते गुरोर्धर्म्म-स्थैर्यमाकर्ण्य भूपतिः । विस्मयोदयसम्पूर्णो व्यातवानिति चेतसि ॥ न्युञ्छने यामि वाक्यानां दृशोर्गम्यवतारणम् । बलिक्रिये तु सौहार्दा-च्छ्रीगुरूणां पदोस्तथा ॥ धन्यास्त एव धवलायतलोचनानां, तारुण्यदर्पघनपीनपयोधराणाम् । क्षामोदरोपरि लसत्त्रिवलीलतानां, दृष्ट्वाऽऽकृतिं विकृतमेति मनो न येषाम् ॥१॥" ध्यात्वेति भूपतिः सूरिं नत्वाऽवग् मूढतो मया । परीक्षा भवतो वेश्या-समीपात् कारिता हहा ! ॥ प्रसद्य त्वं मयेदानी-मपराधं क्षमस्व मे । मूढोऽहं यत् त्वयि स्वामिन् ! परीक्षा विदधेतराम् ॥ अन्येद्युर्भूपतिराम-रथे गच्छन् हलिप्रियाम् । एरण्डकबृहत्पत्र-समानस्तनविस्तराम् ॥ गृहपृष्ठे वितन्वान-मेरण्डस्य दलानि तु । दृष्ट्वा कृत्वा च गाथार्द्धमित्यवक् सूरिसन्निधौ ॥ युग्मम् ॥ " वइविवरनिग्गयदलो एरंडो साहइ व्व तरुणाण।" श्रुत्वैतत् सूरिराड् भूमि-पतेरग्रे जगावदः॥ "इत्थ घरे हलियवधू इद्दहमित्तत्थणी वसई॥" समस्यां पूरितां सूरि-राज्ञा ज्ञात्वा नृपोऽतुषत्॥ वासावासेऽन्यदा यान्तीं नारीं प्रोषितभर्तृकाम्। सायं दीपकरां वक्र-ग्रीवां दृष्ट्वा नृपोऽवदत्॥ " दिज्जइ वंकग्गीवाइ दीवउ पहियजायाए।" सूरिः प्राह—

" पियसंभरणपलुट्टंतअंसुहारानिवायभीयाए ॥ " एवं परस्परं बप्प-भट्टिभूमिपती सदा । प्रश्नोत्तरादि जल्पन्तौ निन्यतुः समयं बहु ॥ अन्येद्युरामभूपान्ते नत्वैको दूत ऊचिवान् । धर्म्मेण प्रेषितोऽत्राह-मागां तवान्तिकेऽधुना ॥ किमर्थमिति ? भूपोक्ते दूतः सादरमूचिवान् । धर्म्मभूपो मदास्येन त्वामेवं च व्यजिज्ञपत् ॥ छलेनाऽत्र त्वयाऽऽगत्य बप्पभट्टिगुरूत्तमः । तत्र नीतो यदा भक्ति मया न हि कृता तदा ॥ तेन मे दूयते चित्तं विना तं श्रीगुरूत्तमम् । अत्रैको वादिराड् वादं कर्त्तुं गौडः समागमत् ॥ विद्यासद्देन् सोऽस्यन्तं वादिवर्द्धनकुञ्जरः । तृणायापि न मन्येत त्रिजगत् पद्मया पुनः ॥ प्रतिज्ञेति कृता तेन यद्यहं हारयामि तु । तदा कोटिसुवर्णस्य दास्ये तुभ्यं नरेश्वर ! ॥ यदि जेष्याम्यहं मह्यं कोटिर्देया त्वया नृप ! । एवं वादी वदन् पुर्यो माहात्म्यमनयत् क्षयम् ॥ तथा तेन विधातव्यं त्वयाऽत्रामममहीपतिः । यथैति वादिनं जेतुं बप्पभट्टिगुरूत्तमः ॥ तत्र लक्ष्मीपुरे धर्म्म-भूपामभूपती क्रमात् । प्रवादिवादिसंयुक्तौ समेतौ वादहेतवे ॥ वादं कुर्वाणयोस्तत्र वादिनि प्रतिवादिना । मासाः षट् प्रययुः कोऽपि जयं न लभते मनाग् ॥ आमोऽवग् बप्पभट्ट्यन्ते राज्यं सीदति मां विना । बप्पभट्टिर्जगौ घस्राः पञ्चाऽत्रैव प्रतीक्ष्यताम् ॥ ततः सरस्वतीं सम्य-गाराध्य सूरिणोदितम् । भो भारति ! कथं वादी जेष्यते साम्प्रतं मया ? ॥ अथाऽवग् भारती वत्साऽमुना प्रवादिनाऽऽदरात् । आराधिता ददेऽहं तु मन्त्रसारस्वतं तदा ॥ [ भारत्योक्त मतीनीह आराधिताऽमुना मुदा ] मया तु गुटिकां दत्त्वा वादिनं जल्पितं हीति । गुटिकायां मुखस्थायां त्वं केनापि न जेष्यसि ॥ वादिना कुर्वता दन्त-नर्क तां गुटिकां वराम् । यदोऽऽस्यं घर्षयित्वाऽऽशु मुमुचे पार्श्वतो रहः ॥ तदा प्रेष्यजनं स्वीयं बप्पभट्टिगुरूत्तमः । गुटिकां तां निजोपान्ते निनाय छन्नमन्यदा ॥ ततः प्रातः प्रजल्पन्ते वादिनि गुटिकां विना । बप्पभट्टिर्जिगायाऽऽशु जयढक्काऽध्वनत् तदा ॥ राहुग्रस्त इव श्वेत-रश्मिः खण्ड इवार्पितः । हिमव्याप्तो गतो म्लानिं धर्म्मवादीश्वरस्तदा ॥ बप्पभट्टिगुरोर्वादि-कुम्भिकेसरिनाम च । ददे भूपेन लोकैश्च तस्यैव वादिनो जयात् ॥ तत्र कोटीसुवर्णस्य हारयित्वा स वादिराट् । हस्यमानो जनैः स्वीय-नगरे दीन ईयिवान् ॥ तांश्च कोटीं सुवर्णस्य धर्म्मामममेदिनीपती । अर्हज्जीर्णालयोद्धारे व्ययति स प्रमोदतः ॥ बप्पभट्टिस्तदा देशे विदेशेऽपि दिशोदिशम् । जयढक्काध्वनन् वादि-पराभवश्रुतेः क्रमात् । तदाऽऽमो भूरिकुम्भ्यश्व-रथपत्त्यादि भूरिशः । धर्म्मोऽपि दत्तवान् सोऽपि भूपायाऽऽमाय हर्षतः ॥ मुत्कलाप्य ततो धर्म्म-मामः श्रीगुरुसंयुतः । एत्य गोपगिरौ वीरं जिनाधीशमवन्दत ॥ उदारार्थमयैः काव्यैः स्तुवन् सूरीश्वरस्तदा । तुष्टाव श्रीजिनाधीशं वर्द्धमानं तदेति च ॥ शान्तो वेषः शमसुखफलाः श्रोत्ररम्या गिरस्ते, कान्तं रूप " मित्यादि काव्यमयं स्तोत्रं साधुभिः पठ्यते; तथापि, क्रमान्निजान्यसिद्धान्त-सूक्तैर्वैर्गुरूत्तमः । मांसादिभक्षणत्याग-मग्राहयन्नरेश्वरम् ॥ ततः सम्यक्त्वसंयुक्तां शिवदां द्वादशव्रतीम् । ग्राहयामास भूपालं बप्पभट्टिर्गणाधिपः ॥ अथ वाग्पतिनाऽन्ये-द्युर्महाविजयनामकम् । काव्यं प्राकृतसन्दृब्धं स्वस्याऽऽमाय प्रदर्शितम् ॥ काव्यं तद् वीक्ष्य रैलक्ष-मेकं भूपश्चमत्कृतः । कोशाददापयत् तस्मै न्यायवान् यतये मुदा ॥ यतः—" कियती पञ्चसहस्री कियती लक्षाश्च कोटिरपि कियती ॥ औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ १ ॥ " आमोऽन्यदा जगौ बप्प-भट्टेति विद्यया समः । कोऽप्यस्त्यद्य गुरूत्तंस आचष्ट भूपतिं प्रति ॥ गोविन्दनन्नसूरीशौ मत्तोऽधिकौ तु विद्यया । सद्गुणेगुर्जरक्षोण्यां मोढेरे स्तः पुरे वरे ॥ ततः स्तोकबलो भूप आमो मोढेरपत्तने । गत्वा नन्नगुरुं नत्वा धर्म्मं श्रोतुमुपाविशत् ॥ शास्त्रं वात्स्यायनप्रोक्त-मुचरन्तं गुरुं तदा । निशम्यावमन्यैव पश्चादामः समीयिवान् ॥

वन्दितुं न यदैत्यामस्तदा सूरिस्तमूचिवान्। कथं ते दृश्यते धर्म्मे प्रमादः साम्प्रतं नृप ! ॥ राजाऽवग् नन्नसूरीश-मगमं वन्दितुं यदा। तदा स कामशास्त्रादि-व्याख्यायां वीक्षितो मया ॥ अतोऽध्यायि मया नन्न-सूरियों वर्णितस्त्वया। स यदीदृग् तदा सर्वे भविष्यन्तीदृशाः पराः॥ सूरिर्जगौ स सूरीशः पुण्यवानस्ति कोविद !। केनापि हेतुना काम-शास्त्रार्थो जल्पितोऽस्ति च ॥ पापद्वारेण कामादि-शास्त्रार्थः कथितो वुधैः। जायते स्वर्गकल्याण-सातसन्ततिहेतवे ॥ इत्यादियुक्तितो भूपं स्थिरं कृत्वा धृपे तदा। वप्पभट्टिगुरुर्नन्नो-पान्तेऽभ्येत्य जगावदः॥ श्रीपूज्यैरामभूपस्य पुरो रागमयी कथा। प्रोक्ता तेनाभवत्तस्य मनो धर्म्मे विसंस्थुलम् ॥ नन्नसूरिर्जगौ पाप-द्वारे रागमयी कथा। मयोक्ताऽतः कथं भूपो विमनास्सुकृतेऽभवत् ? ॥ ततो द्वावपि गुरीशौ नन्नगोविन्दनामकौ। वर्णस्वरपरावर्त्तं कृत्वा गुटिकया स्थितौ ॥ ततो गोपगिरावेत्य नटवेषधरौ गुरू। आदिनाथस्य चरितं नाटकेन ववन्धतुः॥ यतः सूरीश्वरौ तौ तु नटान् वरतरांस्तदा। शिक्षयामासतुः सम्यग् यथा ते तद्विदोऽभवन्॥ तौ सूरी आमभूपं तु नृत्यं कर्त्तुं ययाचतुः। भूपेनावसरे दत्ते मिमिलुश्च समाजिकाः॥ तौ गुरू प्रथमं काम-परभूपनृणां कथाम्। जल्पन्तौ चेष्टितं तेषां हावभावादिलक्षणम्। दर्शयन्तौ च निःशेषा सभा भूपं च तन्मयम्। चक्रतुश्च तथा राजा-दयः सर्वे चमत्कृताः॥ युग्मम्॥ क्षणाद् भरतचक्रीश-बाहुबल्योर्महीशयोः। युद्धावतारणं साक्षात् पूर्ववत्तौ च चक्रतुः॥ ततो वाहुबलेर्दीक्षा-ज्ञानसम्बन्धमादितः। ज्ञानोत्पत्तिस्वरूपं च भरतस्यादिचक्रिणः॥ तथा तौ सूरिमुख्यौ तु दर्शयामासतुः भृशम्। यथा सभा सभा चित्र-लिखिते वाऽभवत् द्रुतम्॥ इत्यादि तौ नटौ सूरी दर्शयित्वा रसान्नव। तस्थतुर्यावता ताव-द्रैकोटिमानयन्नृपः॥ जगौ नृपो युवां स्वर्ण-कोटीं लातं नयोत्तमौ। तावूचतुर्महीपाला-वयोः किं क्रियते श्रिया ? ॥ राजाऽवग् रमया वर्य-भोजनाच्छादनादिभिः। जायते सुखवान् जीवो लातं श्रियं युवामिमाम्॥ युवां काविति भूपोक्ते स्वरूपं तौ तु तत्क्षणात्। प्रकटीकृत्य वैराग्य-कथां वक्तुं प्रवर्त्तितौ॥ नन्नसूरिवरं दृष्ट्वा राजा प्राह युवां कथम् ?। नटवेषधरौ जातौ नृत्यं च चक्रतुः कथम् ? ॥ नन्नसूरिर्जगौ ब्राह्मो प्रत्यक्षाऽस्त्यावयोः खलु। रसा नवाऽवतार्यन्ते तेनावाभ्यां नरेश्वर !॥ मोढेरादे पुरे काम-मयी व्याख्या मया कृता। पापद्वारा च धर्म्मार्थं विश्लेषोऽभूत् तदा तव॥ व्याख्याक्षणे तु कुर्वद्भि-र्व्याख्यानं विबुधैः सदा। रसा नवाऽवतार्यन्ते वोधाय भविनां खलु॥ ज्ञात्वेति भूमिभुगामो नत्वा गुरुपदौ तदा। क्षमयामास सूरीशौ सूरिभ्यां क्षमितश्च सः॥ वप्पभट्टिगुरुस्तत्रा-गत्य तौ सूरिशेखरौ। प्रणम्य कुशलोदन्तं पप्रच्छतुर्मिथस्तथा॥ सूरिभ्यां सह ये नृत्यं नटाश्चक्रुर्मनोहरम्। तेभ्यो नृपो नव स्वर्ण-लक्षान् दापितवान् किल॥ क्षेत्रेषु सप्तसु स्वर्ण-कोटी विश्राणिता तदा। गुरोरादेशतः क्षोणी-पतिनाऽऽमेन मोदतः॥ विहारं चक्रतुः सूरि-वप्पभट्टेरनुज्ञया। वप्पभट्टिगुरुस्तत्र तस्थौ भूमिधवाग्रहात्॥ चण्डालपेटकान्तस्थां वालिकां किन्नरस्वराम्। गायन्तीं वीक्ष्य भूपोऽवग् गुरोः पार्श्वे समेत्य च॥ वक्त्रं पूर्णशशी सुधाऽधरलता दन्ता मणिश्रेणयः, कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः। वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा; तत् किं चन्द्रमुखि ! त्वदर्थममरैरामन्थि दुग्धोदधिः॥ जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो, दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति। विश्वप्रार्थ्यः सकलसुरभिद्रव्यदर्प्पापहारी, नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः॥ सूरिभिश्चिन्तितं भूमीपतेरस्य स्वचेतसि। विकारोऽजनि वुद्धयाश्च विपर्यासश्च सत्तमः॥ यतः—भ्रत्रा काचन भूरिरन्ध्रविग-

लतातन्मलाह्लादिनी, सा संस्कारशतैः क्षणार्द्धमधुरां वाह्यामुपैति श्रुतिम्। अन्तस्तत्त्वरसोर्मिधौतमतयो-ऽप्येतां तु कान्ता धिया, श्लिष्यन्ति स्तुवते नमन्ति च पुरः कस्यात्र पूत्कुर्म्महे॥ मातङ्गीसङ्गपापेन मन्मित्रं मेदिनीपतिः। मा यातु नरकं घोरं नानावहुसुखप्रदम्॥ भूपेन कारितं गेहं पुर्या वहिर्मनोहरम्। मातङ्गी भोगमाधातुं ज्ञातं श्रीसूरिणा क्रमात्॥ पुरीवहिस्थितावास–भारपट्टे दिनात्यये। लिलेख श्रीगुरुः काव्य–चतुष्कं नृपवोधकृत्॥ तथाहि–शैत्यं नाम गुणस्तवैव भवता स्वाभाविकी स्वच्छता, किं ब्रूमः शुचितां व्रजन्त्यशुचयस्त्वत्सङ्गतोऽन्ये यतः। किंचातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां, त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः॥ सद्वृत्त! सद्गुण! महार्घ्य! महार्ह कान्त! कान्ताघनस्तनतटोचितचारुमूर्ते!। आः पामरीकठिनकण्ठविलग्नभग्न! हा हार! हारितमहो भवता गुणित्वम्॥ "जीयं जलविंदुसमं संपत्तीओ तरंगलोलाओ। सुमिणयसमं च पिम्मं जं जाणसि तं करिज्जासि॥१॥ लज्जिज्जइ जेण जणे मइलिज्जइ नियकुलक्कमो जेण। कंठट्ठिए वि जीए तं न कुलिणेहिं कायव्वं॥ प्रातरेतानि पद्यानि दृष्ट्वाऽऽमो वाचयन् पुनः। गुरुनिष्पादितान्येव दध्यौ मयि गुरोः कृपा॥ मया जनंगमीसङ्ग–पापं साङ्कल्पिकं कृतम्। तेनैनसाऽधुना श्वभ्र–पातो मम भविष्यति॥ क्व यामि? किं करोम्येष दर्शयिष्ये मुखं गुरोः। करिष्येऽहं तपस्तीर्थं सेविष्येऽहं तमश्छिदे॥ ऊर्ध्वं मुखं गृहीत्वाऽहं यामि कूपे पतामि वा। आत्मानं हन्मि शस्त्रेण रज्जुपाशादिभिः पुनः॥ चिन्तयन्निति भूपालः कारयित्वा चितां वहिः। प्रविशत्यनले यावत् सूरिस्तत्रागमत्तदा॥ चातुर्वर्ण्ये जने तत्र मिलिते दोपि भूपतिम्। धृत्वाऽवक् सूरिराड् भूप! शुद्धोऽसि खिद्यथा स्म मा॥ त्वया सङ्कल्पमात्रेण मातङ्गी सेविता नृप!। सङ्कल्पेन प्रविष्टोऽग्नौ शुद्धोऽसि त्वमतो चिरात्॥ यतः—"मनसा मानसं कर्म्म वचसा वाचिकं तथा। कायेन कायिकं कर्म्म निस्तरन्ति मनीषिणः॥१॥" काएण काइयस्स पडिकमे वाइयस्स वायाए। मणसा माणसियस्स सव्वस्स वयाइयारस्स॥२॥" एवं वचनतः शुद्ध–स्त्वं भूप! धर्म्मकर्म्म तु कुरु पाहि प्रजां न्यायाद् दानं विश्राणयाऽधुना॥ भूपो यावदगाद् गेहं तावदेको नरो जगौ। वाग्पतिः क्ष्मापतिर्जज्ञे श्रीपादाहस्त्रिदण्डभृत्॥ ततः आमो गुरूपान्ते प्राहाहं श्रावककृतः। यदि वाग्पतिराहत्यं वृत्तं लाति तदा वरम्॥ ततो वाग्पतिमाधातुं श्वेतवस्त्रं गुरूत्तमः। प्रतिज्ञां कृतवान् भूमी–पतेरग्रे कृतादरः॥ वाग्पतिं मथुरापुर्यां स्थितमाकर्ण्य सूरिराट्। ययौ तत्र प्रवोधाय वराहमन्दिरे वरे॥ तत्र ध्यानस्थितं नासा–दत्तलोचनगोचरः। वाग्पतिं वीक्ष्य तत्पृष्ठौ स्थित्वाऽऽशीरिति जल्पति॥ यतः—"सन्ध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे, धत्से यत्त्वपरां विलज्ज! सिरसा तच्चापि सोढं मया। श्रीर्जातामृतमन्थने यदि हरेः कस्माद्विषं भक्षितं, मा स्त्रीलम्पट! मा स्पृशेत्यभिहितो गौर्या हरः पातु वः॥१॥ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः, पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम्। अन्यद् दूरविकृष्टचापमदनक्रोधानलोद्दीपितं, शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः॥ रामो नाम वभूव हुं तदवला सीतेति हुं तां पितु–र्वाचा पञ्चवटीवने विचरतस्तस्याऽहरद्रावणः। निद्रार्थं जननीं कथामिति हरेर्हुंकारिणः शृण्वतः, पूर्वस्मर्तुरवन्तु कोपकुटिल-भ्रूभङ्गुरा दृष्टयः॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा, धृत्वा चान्येन वासो विगलित-कवरीभारमंसे वहन्त्याः। सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः, शय्यामालिङ्ग्य

नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ दधिमथनविलोलल्लोलदृग्वेणिदम्भा-दयमदयमनङ्गो विश्व-विश्वैकजेता । भवपरिभवकोपात्त्यक्तबाणः कृपाणः, श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्तिः ॥ हलमगु वलेः सैको नड्वान् हरस्य न लाङ्गलं, क्रमपरिमिता त्रिष्णोर्भूमिर्न गौर्न च लाङ्गलम् । न भवति कृपिस्तेषां गावं द्वितीयमहो ! विना, जगति सकले नेदृग् दृष्टं दरिद्रकुटुम्बकम् ॥ कृष्णात्प्रार्थय मेदिनीं धनपते ! बीजं बलेर्लाङ्गलं, प्रेतेशान्महिषं वृषस्य भवतः फालं त्रिशूलादपि । शक्ताहं तव भक्ष्यदानकरणे स्कन्दोऽपि गोरक्षणे, दग्धाहं तव भिक्षया कुरुषि किं गौर्या वचः पातु वः ॥ बप्पभट्टिर्गुरोर्वाणीं मत्वा ध्यानं विसृज्य च । वाग्पतिः सम्मुखी भूत्वा सूरिं प्रति जगावदः ॥ भो बप्पभट्टयो ! यूयं किमस्मत्पुरतोऽधुना । शृङ्गाररौद्रकाव्यानि पठताऽथ गुरुर्जगौ ॥ भवन्तः साङ्ख्याः । यतः—साङ्ख्या निरीश्वराः केचित् केचि-दीश्वरदेवताः । सर्वेषामपि तेषां स्या-त्तत्त्वानां पञ्चविंशतिः ॥ ज्ञात्वा साङ्ख्यं भवन्तं तु शिवभक्तं च वाग्पते ! । तव रोच्यानि काव्यानि प्रोच्यन्तेऽत्र मयाऽधुना ॥ वाग्पतिः प्राह मरण-समये परमात्मनः । ध्यानमेव विलोक्येत सर्वेषां शिवहेतवे ॥ बप्पभट्टिर्जगौ तर्हि किं सुरा न हरादयः ? । भवन्ति मुक्तिदा-तारो मनुष्वे वाग्पते ! यतः ॥ वाग्पतिः प्रोक्तवान् द्वेधा शिवोऽभिधीयते बुधैः । एकोह्यत्र सुखं दाता परः परत्र शं पुनः ॥ वीतरागं स्मरन् योगी वीतरागत्वमश्नुते । सरागं ध्यायतस्तस्य सरागत्वं तु निश्चितम् ॥ येन येन हि भावेन युज्यते यत्र वाहकः । तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥ बप्पभट्टिस्ततः प्राह भवतो वदनान्ननु । जिन एव भवेन्मुक्ति-दायकोऽन्यो न कर्हिचित् ॥ मदेन मानेन मनोभवेन, क्रोधेन लोभेन च संमदेन । पराजितानां प्रसभं सुराणां, वृथैव साम्राज्यरमा न्यगादि ॥ जं दिट्ठी करुणातरंगिअपुडी एयस्स सोम्मं मुहं, आयारो पसमायरो परियरो संतो पसन्ना तणू । तं मन्ने जरजम्म-मच्चुहरणो देवाहिदेवो इमो, देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ श्रुत्वेत्यादि वचः प्राह वाग्पतिः श्रीगुरुं प्रति । स जिनो विद्यते कुत्र सूरिराह शिवेऽस्ति सः ॥ उक्तञ्च—"न स्वर्धूनी न फणी न कपाल दाम, नेन्दोः कला न गिरिजा न जटा न भस्म । यत्रान्यदेवे नहि किञ्चिदुपास्महे तद्, रूपं पुराणमुनि शीलितमीश्वरेऽस्य ॥१॥" स्वरूपतो जिनो मुक्तौ मूर्त्तितस्तु जिनौकसि । निरागयोर्द्वयोर्ध्यानान् मुक्तिरेव सतां भवेत् ॥ वाग्पतेः प्रोक्तवान् तर्हि प्रभो ! दर्शयतां जिनम् । गुरुरामविहारं तं नीत्वा पार्श्वमदी-दृशत् ॥ रागादिचिह्नरिक्तं तं शान्तं दान्तं निरञ्जनम् । दृष्ट्वा वाग्पतिराचष्ट देवः सत्योऽस्त्ययं जिनः ॥ जिनधर्म्मेऽनुरक्तं च ज्ञात्वा बप्पो गुरूत्तमः । प्राह देवगुरुश्रेयस्तत्त्वसूक्तानि भूरिशः ॥ वाग्पती रञ्जित-स्त्यक्त्वा मिथ्यात्वं जिनशासनम् । अङ्गीकृत्याभवत् श्वेता-म्बरोऽस्तावीज् जिनं तथा ॥ मयनाहि-सुरहिएण इमिणा किं किर फलं निडालेन । इच्छामि अहं जिणवरपणामकिणकलुसिअं काउं ॥ १ " दोवि गिहत्था धडहड वच्चंइ को किर कस्स य पत्त भणिज्जइ । सारंभो सारंभं पुज्जइ कद्दमु कद्दमेण किमु सुज्झइ ॥ २ ॥ " आयुः प्रान्तेऽखिलां जीव-राशिं क्षान्त्वा शुभावतः । स्मरन् पञ्चनमस्कारान् वाग्पतिः स्वर्गमीयिवान् ॥ प्रबोध्य वाग्पतिं जैने धर्म्मे स्वर्गमितं क्रमात् । गुरुमिरनुगा ज्ञात्वा भूपस्याग्रे न्यवेदन् ॥ अङ्गीकार्यार्हतं धर्म्मं वाग्पतिं सूरिराट् यदा । अगाद् गोपगिरौ भूपस्तदोत्सवं नृपो व्यधात् ॥ तदा राजा गुरूत्तंसं प्रणम्य भक्तिपूर्वकम् । तुष्टाव वर्यया वाण्या गम्भीरार्थपुरस्सरम् ॥ आलोकवन्तः सन्त्येव भूयांसो भास्करादयः । कलावानेव तु ग्राव-द्रावकर्मणि कर्म्मठः ॥ एकदा भूभुजा पृष्टं हेतुः कोऽस्ति गुरो ! इह । येनान्तरान्तरा धर्म्मे तापसे जायते मनः ॥ गुरुः पूर्वभवं राज्ञो ज्ञात्वा चाग्रेतने दिने ।

प्राहेति सूरिराट् ब्रह्म-पाते भवो गदितस्थितिः ॥ कालञ्जरगिरौ वर्ये तपस्वी शालनामकः । एकान्तराद्-तश्चक्रे तपो वर्षाण्यनेकशः ॥ वारत्रयं तपस्वी सो त्यक्त्वा तपः पुनः पुनः । गृह्णाति च भवे तस्मिन् मनोभङ्गं व्यधात् स च ॥ मृत्वाऽतोऽत्र पुरे भूप ! त्वमामोऽभूद्विचक्षणः । तद्भवीया जटास्तत्र विद्यन्तेऽथ तरो-रधः॥ तत्रस्थास्तज्जटा वीक्ष्य भूपो नत्वा गुरुं मुदा । जैनं धर्म्मं विशेषेण कुरुते स्म शिवप्रदम् ॥ गवाक्ष-स्थोऽन्यदा भूपो-ऽपश्यद्भिक्षाकृते मुनिम् । प्रविष्टं धनदावासे दान्तं कृशवपुष्टमम् ॥ तदा तत्सदनस्वा-मि-पत्नी मन्मथपीडिता । समेत्य त्वरितं गेह-द्वारं दत्तवती दृढम् ॥ आलिङ्गय सा मुनेर्वक्षो यावत्तद्भो-गमादरात् । मुनिर्नेच्छति तां दोर्भ्यां प्राक्षिपत् दूरतस्तदा ॥ स्वांह्रिभ्यां मुनिपादौ तु घटयन्त्याः स्त्रिया-स्तदा । प्रविष्टं नूपुरं साधोः क्रमेऽकस्माद् विधेर्वशात् ॥ दृष्ट्वा मुनिनितम्बिन्योश्चरित्रं मेदनीपतिः । विधायैकां समस्यां तु प्रददाविति सूरये—"कवाडमासज्ज वरांगणाए अब्भत्थिओ जुव्वणगव्वियाए"। सूरिस्तदेत्यपूरयत् ताम्—"न मन्निअं तेण जिइंदिएण सनेउरो पव्वइअस्स पाओ ॥" विदेशगत-कान्तायाः स्त्रियाः सद्मनि भिक्षुके । भिक्षाहेतोः प्रविष्टे सा दातुमन्नं यदाऽनयत् ॥ तदन्नं भक्षितं चोर्ध्वं काकैस्त्रीनाभिमण्डले । मुनिर्ददौ दृशं सापि मुनेराननपङ्कजे ॥ तयोर्मुनिस्त्रियोर्वृत्तं निरीक्ष्याऽऽम-महीपतिः । समस्यां प्रोक्तवान् सूरे-रग्रेऽभ्येत्येति मोदितः ॥ "भिक्खायरो पिच्छइ नाभिमंडलं तस्स वि सा पिच्छइ आणणांवुजं" सूरिः प्राहेति तदा—"दुण्हंपि मज्झे कवालचड्डुयट्ठियं अन्नं तु काकेहि विडालियं तया" श्रीआमेन जिनागार-चतुष्कं कारितं वरम् । मथुरागोपगिर्योर्हि मोढेरे तारके पुरे ॥ तत्र श्रीवीरबिम्बानि वप्पभट्टिगुरूत्तमैः । प्रतिष्ठितानि विहिते महे श्रीआमभूभुजा ॥ आमभूमिपतेः पुत्रो दुन्दुको वरलक्षणः । तैस्तैर्गुणैर्जगत्श्लाघ-नीयैः ख्यातोऽभवद् भृशम् ॥ अन्यदा सिद्धशैलस्य माहात्म्यं गुरुणोदितम् । श्रुत्वाऽऽमोऽभिग्रहं श्रीमद्-गुरूणां पुरतो ललौ ॥ मया शत्रुञ्जये श्रीमद्-युगादिजिन-पुङ्गवम् । नत्वैव जेमनीयं तु सङ्घयुक्तेन सद्गुरो ! ॥ चचाल यावता भूमि-पतिरामः शुभाशयः । रुचिरे वासरे तावत् सङ्घ एवंविधोऽमिलत् ॥ शतमेकं सुवर्णस्य वर्या देवालयास्तदा । सहस्राणि रथाः सप्त लक्षाण्यष्टौ तुरङ्गमाः ॥ कोटीत्रयी मनुष्याणा-मोष्ट्राः सप्तशतानि तु । देवालया दारुमया शतत्रयप्रमिताः पुनः ॥ शुभेऽहनि क्षमाधीश-श्चलन् शत्रुञ्जयं प्रति । ग्रामे ग्रामे वितन्वान उत्सवं पुण्यमर्जयत् ॥ चल-तोऽध्वनि भूपस्य वपुः क्लान्तं दिनेऽष्टमे । यदा तदापि नैवात्ति गुर्वादिकथितेऽपि सः ॥ भूपस्य दृढतां ज्ञात्वा कपर्दी सिद्धपर्वतम् । कृत्रिमं रचयामास भाल्लाह्वे विषमेऽध्वनि ॥ तमारुह्य नृपः सङ्घ-पतिकृत्य-मशेषं तुःकं । कृत्वा पारणकश्चक्रे श्रीसङ्घेन समन्वितः ॥ ततः कपर्दिना शैलं संहृतं क्षणवद्यदा । तदा वागभवद् व्योम्नि पूरितोऽभिग्रहोऽस्ति ते ॥ ततः शत्रुञ्जये क्षोणी-धरतीर्थस्य शालिनः । अवतारं व्यधाद् भूपः प्रासादादिविधानतः ॥ कारयित्वा नृपस्तत्र प्रासादं प्रथमार्हतः । बिम्बं प्रातिष्ठिपद् वप्प-भट्टिः श्रीमान् गुरूत्तमः ॥ तत्र राजादनीस्वामि-पादुकादि समं नृपः । कारयामास भूयिष्ठ-विभवव्य-यतस्तदा ॥ खिसरण्डाभिधे ग्रामे भालभूमिविभूषणे । प्रासादो विद्यते बिम्बं पादुकादियुतोऽधुना ॥ ततः शत्रुञ्जये मुख्ये यात्रां कृत्वाऽतिविस्तरात् । भूपो गोपगिरौ चारूत्सव-पूर्वं समीयिवान् ॥ ततोऽ-न्यदाऽऽमभूपालो भूरिश्रीसङ्घसंयुतः । शत्रुञ्जये व्यधात् पूजां विस्तराद् वृषभप्रभोः ॥ प्रासादं जर्जरं तत्र निरीक्ष्याऽऽममहीपतिः । उद्धारं कारयामास भूरिकोटिधनव्ययात् ॥ तत आमनृपः सङ्घं परि-

धाप्याऽखिलं मुदा । समेत स्वपुरे राज्यं चकार न्यायनीरधिः ॥ आमभूपो बहून् शत्रून् निजित्य प्राज्यवन् दृढम् । साधयामास भूयिष्ठ-विषयान् भुजलीलया ॥ अन्यदा सूरिराट् व्याख्या-क्षणे रैवतवर्णनम् । वर्ण-यित्वा शिवासूनोराशीर्वादं जगावदः ॥ लावण्यामृतसारसागरमणिस्सा सा भोगभूः सौहृदा, सा स्वर्गीः स नवोद्गमस्तरुणिमा सा द्वारिका तज्जलम् चलं । ते गोविन्दशिवात्मजप्रणयिनःप्राणाः प्रियाः सेवका, यो तीर्थेषु कृपानिधिर्व्यधिते नोद्वाहः स नेमिः श्रिये ॥ १ ॥ " गमैः कुटुम्बजञ्जाले र्यैर्मिथ्याकामसङ्गतैः । सोऽज्ज-यन्ते नतो नेमिस्ते जीवन्तो मृताः पुनः ॥ इत्यादि रैवतस्याथ-महिमानं गुरोर्मुखात् । श्रुत्वा भूमिपतिः प्राह हर्षात् पुरो गुरोरिति ॥ रैवते नेमितीर्थेश-मवन्दित्वा मया गुरो ! । न भोक्तव्यमिति प्रौढा-स्ते धामे प्रजल्पिते ॥ गुरुः प्राहाभिग्रहो ऽयं दुःशको विहितोऽधुना । एवं जल्पति सूरीशे भूपो ऽत्यादभिग्रहम् ॥ ततः सङ्घयुतः सार्द्धं सूरिणा धरणीधवः । रैवतं प्रति याल्लभ्य-तीर्थं पुर्णां मर्मातिवान ॥ गताऽतिक्षुधया भूपो मूर्च्छिते सति तत्क्षणात् । भीतः सङ्घोऽभवत् खिन्नो नृपमृत्युभयात्तदा ॥ तदा श्रीसूरिणा ध्याता कुष्माण्डी निर्जरीतमा । श्रीनेमिसेविकाऽभ्येत्य सचेतनं नृपं व्यधात् ॥ तत एकां शिलां स्फारां नेमिबिम्ब-समन्विताम् । मुक्त्वा भूमिपतेरग्रे प्राहेति गुरुसाक्षिकम् ॥ अहमम्बा सुरी नाम्नी स्वामिनि मामियो नृपम् । विज्ञायेमां शिलामत्राऽऽनयं रैवतपर्वतात् ॥ नेमिबिम्बमतेन त्वं पूजयाऽभिग्रहं त्यज । अतो नियमभङ्गस्ते भविष्यति न भूपते ! ॥ युग्मम् ॥ ततो भूमिपतिस्तत्र स्नानाद्युत्सवसङ्गतः । कृत्वा पारणकं चक्रे प्रतिलाभ्य गुरूत्तमान् ॥ अद्यापि प्रतिमा सैव स्तम्भतीर्थे पुरोत्तमे । उज्जयन्तावतारेति श्रुत्वा प्रपूज्यते जनैः ॥ तत्रैत्याम्बिकया देव्या प्रोक्तमेवं नृपाग्रतः । गत्वाऽग्रतो जिनं नेमिं नम रैवतपर्वते ॥ ततः शत्रुञ्जये नत्वा जिनं रैवतभूधरे । गत्वाऽर्चित्वाऽऽदराद् भूपः स्वपुरीं समुपेयिवान् ॥ ततोऽत्यर्थं ददद् दानमामक्षोणीपतिर्मुदा । धर्मं जैनं सदा चक्रे पालयन् पृथिवीं नयात् ॥ एकदाऽऽममहीपालो गत्वा गुर्वन्तिके मुदा । गुरूक्तानि कवित्वानि शुश्रावेति कृतादरम् । " पच्चूसगय वम्मा भूलियाइं वहीण ससिविहंगाइ धवलाइं । गलंति निसालयाए नक्खत्ताइं कुसुमाइं ॥ १ ॥ अउ अ पउमरायमरगय सेवलिया नहयलाउ उवरइ पाणहसिरि कंठभट्टव्व कंठिया कीररिच्छोली ॥ २ ॥ तूणीव मधुमा-सेऽस्मिन् सहकारद्रुममञ्जरी । इयमुद्भिन्नमुकुलै-र्भाति न्यस्तशिलीमुखा ॥ कामस्य सम्बन्धः गुप्तः ॥ ग्राम मदो मधुमासः प्रबला रुग् प्रियतमो विदूरस्थः । असतीयं सन्निहिता हा ! हतशीला सखी निश्चलम् ॥ मधुमास इति सम्बन्धः गुप्तः ॥ इतो गोमण्डलपुरे श्राद्धो धाराभिधो धनी । त्रयोदशमितस्वर्ण-कोटिस्वाम्य-भवत् क्रमात् ॥ सोम-भीम-धनानन्द पद्म-चन्द्र-वनाह्वयाः । सप्ताऽभवन् सुता वर्य-विनया वरसंवराः ॥ श्रीशत्रुञ्जयमाहात्म्यं श्रुत्वा श्रीगुरुसन्निधौ । श्रीसङ्घं मेलयामास धारो यात्राकृतेऽन्यदा ॥ सप्तभिर्नन्दनै-र्योद्धैः सप्तशतमितैस्तदा । त्रयोदशशतैश्चारु-सज्जवाहैर्विमाननैः ॥ शतत्रयतुरङ्गैश्च भूरिभिश्च सुखासनैः । धर्मघोषगुरूत्तंसैः सार्द्धं धारोऽचलत्तदा ॥ विस्ताराद् वृषभं देवं नत्वाऽर्चित्वा च सङ्घयुग् । उज्जयन्त-गिरेः पार्श्वे ययौ धारः सुधर्मवित् ॥ तदोज्जयन्तभूमिधः पञ्चाशच्छरदो हठात् । आत्मीयो विहितो बौद्धैः राजाऽपि मदनाह्वयः ॥ जित्वा बौद्धान् यशोभद्र-शिष्यो बलिभद्रकः । आत्मीयं कृतवांस्तीर्थं गिरि-नाराभिधं हठात् ॥ पञ्चाशच्छरदो यावद् दिगम्बरतपोधनाः । गिरिनारं व्यधुः स्वीयं तीर्थं नेमिजिनार्च-नात् ॥ तदा दिगम्बराः प्रोचुः धारः श्वेताम्बरो यदि । अस्मन्मतं श्रयेदिच्छा चटितुं च तदा गिरौ ॥ धाराको ज्ञापयामास यदि प्राणा व्रजन्ति मे । तथापि न मतं तेऽत्र श्रयाम्यहं दिगम्बर ! ॥ अनत्वा नेमिनं

देवं प्राणान्तेऽपि दिगम्बर ! । स्वीये गोमण्डले देशे गमिष्यामि कदापि न ॥ चिन्तायां पतिते सङ्घे धाराक उचिवानिति । चिन्ता त्वया न कर्त्तव्या नेमिर्नमस्यते जिनः ॥ सप्तभिर्नन्दनैर्योद्धैः सहितश्चटितुं गिरौ । यदाऽऽरुध्यं तदा भूयः खङ्गारोऽप्यपयद् वलम् ॥ दिग्वासो भक्तिभृद्भूप-भृत्यानां वलतस्तदा । दिगम्बरा वलं किञ्चिदानिन्युः स्वीयसन्निधौ ॥ आदौ सङ्घपतेः पुत्रा यदैव चटितुं गिरौ । लग्ना यदा तदा योद्धुमेयुः सार्द्धं च तैर्द्रुतम् ॥ धारापुत्रास्तदा युद्धं कुर्वाणास्तैः समं दृढम् । भग्नाः केचिन्मृता भृत्याः केचिन्न-ष्टाश्च दूरतः ॥ ततः सङ्घयुतो धारो नो जेमति यदा मनाग् । उपवासत्रयं जातं सङ्घस्यैव तदा ध्रुवम् ॥ तदाऽम्बिका समेत्यावग् यदीच्छाऽस्ति तवाधुना । नेमिं नन्तुं तदा गच्छ गोपालनगरे द्रुतम् ॥ तत्राम-भूपतेर्वप्प-भट्टिसूरीश्वरा वराः । विद्यन्ते गुरवो भूपः स चास्ति वलवान् दृढम् ॥ यद्यत्रामनृपो वप्प-भट्टिसूरि युगेष्यति । तदा नेमिः सुखेनैवोज्जयन्ते वन्दयिष्यते ॥ एते दिगम्बरा मन्त्र-तन्त्रछद्मपरायणाः । विद्यन्ते तेन नो सार्द्धं वादं कर्त्तुं हि युज्यते ॥ श्रुत्वेति तत्र तं सङ्घं मुक्त्वा श्राद्धाष्टसंयुतः । गत्वा गोपगिरौ वप्प-भट्टिसूरिनतिं व्यधात् ॥ धर्म्मं शृण्वतमामं तु नत्वा स्थानं यथोचितम् । उपविष्टोऽशृणोत् सूरि-पार्श्वे धर्म्मोपदेशनाम् ॥ तीर्थस्य गिरिनारस्य स्वरूपं प्रोच्य धारकः । जगौ गुरुमहीशाभ्यां तीर्थं च वाल्यते वलात् ॥ अम्बिकाजल्पितोऽत्राह-मागतोऽस्मि नरेश्वर ! । तत्राऽऽगत्य ततस्तीर्थं सद्यः सम्प्रति वाल्यताम् ॥ वर्णिते रैवते तीर्थे सूरीशैरामभूपतिः । ललावभिग्रहं नेमिं नत्वा भोक्तव्यमेव तु ॥ तदा कमलदेवी तु भूपपत्नी जगाविति । नेमिसोमेश्वरौ देवौ नत्वोवाह्यं मया पुनः ॥ सहस्रश्रावकै राज्ञः पृष्ठे च नियमो ललौ । श्राविकाभिश्च वह्वीभिर्गृहीतोऽभिग्रहो मुदा ॥ देयालग्राः शतान्यष्टौ रथा लक्षमिताः पुनः । पृष्ठवाहाश्च लक्षं तु शतानि सप्त कुञ्जराः ॥ सहस्राणि शतिश्चोष्ट्रा लक्षत्रयं तुरङ्गमाः । पञ्चलक्षमिता भृत्याः श्राद्धा लक्षाष्टकं पुनः ॥ राज्ञस्त्रिंशत्तमे जाते क्षपणे सति सन्ततम् । स्तम्भतीर्थे पुरे रात्रा-वम्बकेति जगौ नृपम् ॥ भूपाल ! तव सत्त्वेन प्रगे श्रीनेमिनायकः । एष्यत्यभिमुखं पूर्णो-कर्त्तव्योऽभिग्रहस्त्वया ॥ प्रभाते सम्मुखे नेमौ समायाते सति प्रभौ । भूपेनाऽमाभिग्रहोऽपूरि सङ्घेन चार्चनाकृतेः ॥ ततः सोमेश्वरे लिङ्गे समेते सम्मुखे सति । राज्ञाऽप्यभिग्रहोऽपूरि सोमेश्वसुरार्चनात् ॥ कारयित्वा प्रासादं च श्रीनेमिजिननायकम् । अस्थापयन्नृपः प्रौढ-प्रतिष्ठादिपुरस्सरम् ॥ ततश्चलन्नृपः शत्रु-ञ्जये नत्वा जिनेश्वरम् । ययौ रैवतकोपान्ते भूरिसङ्घसमन्वितः ॥ तदा तत्रैत्य दिग्वास-सेवका योद्धुमुद्यताः । दृष्ट्वा दध्यौ नृपो भूरि-जीवनिर्वहणं भवेत् ॥ विचार्येति मिथः श्वेता-म्वरदिग्वसनौ गुरू । प्रोचतुर्यो जयेत् तस्य तीर्थमेतन्न संशयम् ॥ सभ्येष्वुपविष्टेषु केनापि हारितं नहि । यदा तदाऽऽमभूपेन प्रोक्तं जाता दिना घनाः ॥ ततः श्वेताम्बराकाश-वस्त्राचार्यनृपादिभिः । उक्तं च मण्डिते कुम्भे मोच्यते पत्रिकाद्वयम् ॥ यस्य स्यात्तीर्थमेतद्धि तस्य शासनसङ्गता । गाथा निर्यास्यति क्षिप्र-मर्हन्मतप्रभावतः ॥ ततश्चाग्रेतने घस्रे घटमध्याच्च पत्रिकाम् । कन्यका कर्षयामास गाथामेनां मनोरमाम् ॥ "इक्कोवि नमुक्कारो जिणवर-वसहस्स वद्धमाणस्स । संसारसागराओ तारेइ नरं व नारिं वा ॥१॥" पुनरन्यां गाथां च—"उज्जित-सेलसिहरे दिक्खा नाणं निसीहिया जस्स । तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥१॥" तत आम-नृपो धार-सङ्घेशसहितस्तदा । कृत्वा स्वं तीर्थमर्हनाय नेमेः स्नात्रार्चने व्यधात् ॥ आमभूमिपतिर्वप्प-

भट्टिना गुरुणा समम् । गोष्ठीं शश्वद्वितन्वानोऽजीगमत् समयं बहु ॥ तथाहि—"न करोतु नाम रोषं न वदतु पौरुषं न हंत्वयं शत्रून् । रक्षयति महीमखिलां तथापि वीरस्य धीरस्य ॥१॥ शरदिन्दुकुन्दधवलं नभनिलयरतं मनोरमं देवम् । यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥२॥" कर्तृ गुप्तम् ॥ एकदाऽऽमनृपोऽप्राक्षीदायुर्मे विद्यते कियत् । गुरो ! दृष्ट्वोच्यतां सूरिस्ततो लग्नं व्यलोकत ॥ लग्नाज्जगौ गुरुर्मासान् षडायुर्मेदिनीपते ! । तता विशेषतो ज्ञातं तच्च ध्यानं समाश्रयेत् ॥ ध्यानेनाकर्षिताऽभ्येत्य गुरुं नत्वाऽम्बिका जगौ । किमर्थं भवता ध्याता गुरुः स्वचिन्तितं जगौ ॥ अम्बिकाऽवग् नृपस्यायुः मासाः षट् सन्ति सत्तम ! । अतो विशेषतो धर्म्मः कर्त्तव्यो मेदिनीभुजा ॥ गुरोर्मुखात् स्वकीयायु-र्ज्ञात्वाऽऽमभेदिनीपतिः । सप्तक्षेत्र्यां धनं भूरि व्ययति स्म विशारदः ॥ ततो दिने दिने देव-गेहेषु जिनार्चनाम् । कुर्वाणः कुरुते वर्य-ध्यानारूढं स्वमानसम् ॥ वन्दिनो निखिलान् कारा-गृहाद्विमोच्य भूपतिः । सन्मान्य स्वजनान् दानं ददावर्थिभ्य आदरात् ॥ आकार्य भूपतीन् भूरीन् वप्पभट्टिं गुरूत्तमम् ॥ दुन्दुकाय स्वपुत्राय भूपो राज्यं ददौ मुदा ॥ अनृणं विषयं कृत्वा क्षमित्वाऽखिलमानवान् । दीनदुःस्थादिलोकेभ्यो ददौ दानं नृपो बहु ॥ स्मरन् पञ्चनमस्कारान् सर्वज्ञदृष्टिगोचरे । गृहीतानशनोऽसार-संसारं ध्यातवान् नृपः ॥ विक्रमार्कात् खनन्दाष्ट-मिताब्देषु गतेषु च । भद्रस्य शुक्लपञ्चम्या-मामोऽलङ्कृतवान् दिवम् ॥ सूरयोऽपि तदा तत्त्व-ज्ञातारोऽपि विशारदाः । रुरुदुर्मुक्तपूत्कारं जल्पन्त इति भूरिशः ॥ हा वदान्य ! कृपागार ! शरणागतवत्सल ! । सत्यवाग् धर्म्म-पुत्र त्वं मां मुक्त्वाऽत्र कथं गतः ॥ आलब्धा कामधेनुः सरसकिसलयश्चन्दनश्चूर्णितो हा !, छिन्नो मन्दारशोखी फलकुसुमभृतः खण्डितः कल्पवृक्षः । दग्धः कर्प्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला भौमः ( मित्रः ) कुम्भः सुधायाः कमलकुवलयैः केलिहोमं कृतोऽयम् ॥ पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं तमः, कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा । मध्याह्ने सरितां जलं प्रविततैरापीय दीप्तैः करैः, सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ॥ इति जल्पन् गुरुः शोकं त्यक्त्वा गोपगिरौ पुरे । दुन्दुकस्य शुचं चित्ता-दुत्तारयदिति स्फुटम् ॥ धर्म्मशोकभयाहार-निद्राकामकलिक्रुधः । यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी ॥ दुन्दुको भूपतिः शोकं त्यक्त्वा गुरुवचश्रुतेः । धर्म्मं जीवदयामूलं चकार प्रतिवासरम् ॥ दुन्दुकः सिद्धिभूमिध्रे भूरिसङ्घसमन्वितः । यात्रां विस्तरतश्चक्रे भूरिलक्ष्मीव्ययात्तदा ॥ दुन्दुकोऽपि महीपालो महावीरजिनालयम् । अचीकरद् धरापुर्यां व्ययित्वा विभवं बहु ॥ तत्र वीरजिनाधीश-बिम्बं शोभनवासरे । भूपकृतोत्सवे वप्प-भट्टिसूरिरतिष्ठिपत् ॥ वप्पभट्टिगुरूत्तंसः प्रबोधयन् वसुन्धराम् ॥ अर्जयामास पुण्यानि मुक्तियोग्यानि शीव्रतः ॥ भूपालो दुन्दुकोऽन्येद्युर्गच्छन् भूपतिवर्त्मनि । कंटिकाह्वां वरां वेश्यां दृष्ट्वा रागातुरोऽभवत् ॥ नीता सान्तःपुरे राज्ञा भूपो वशीकृतस्तया । न करोति मनाग् राज-चिन्तां तमेव सेवते ॥ यतः—"न पश्यति हि जात्यन्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तः अर्थी दोषं न पश्यति ॥१॥" तया वशीकृतो भूपो लीलावतीं कलावतीम् । श्रीमती पट्टराज्ञीं तां न मन्यते मनागपि ॥ कलावतीप्रियाजातो भोजः पुत्रो महीभुजा । धर्म्मकर्म्मादिशास्त्राणि शिक्षितः पण्डितान्तिके ॥ यतः—"आहारनिद्रा-भयमैथुनानि सामान्यमेतत् पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणां ज्ञानेन हीनाः पशवो मनुष्याः ॥१॥" एकदा रहसि क्षोणि-पतेरग्रे कलाकरः । नैमित्तिको जगौ तात भोजोभूवं वयं भृशम् ॥ अयं तव सुतो भोजो नीत्वा त्वां यमसद्मनि । राज्यं गृहीष्यते सद्यो

तत् त्वं कुरु यथोचितम् ॥ ज्ञात्वैतद् दुन्दुको भूपो वज्राहत इव क्षणम्। स्थित्वा दत्त्वा धनं ज्योति-षिकं विसृष्टवाँस्तदा ॥ एनां वार्त्तां तदा भोज-जननीदासिकाऽशृणोत्। ततस्तयोदिता भोज-जननीसन्निधौ च सा॥ कलावती मृतेः पत्यु-र्भियो सूनोश्च शङ्कया। सचिन्ता मुद्रिपादाभ्यां व्याप्ता बभूव तत्क्षणात् ॥ कण्डिका गणिका आह राजन्! श्यामसुखं किमु ?। राजोऽवक् क्रियते किन्तु कृतान्तः कुपितो मयि॥ ज्ञानिनोक्ता मृतिर्मे तु भोजपुत्रस्य पार्श्वतः। कण्टिका प्राह भोजं तु मारयाऽऽशु दुराशयम्॥ राज्यलुब्धः सुतं हन्ति मातरं पितरं गुरुम्। यो हन्ता ते सुतः सोस्ति सुतरूपात् स शात्रवः॥ कण्टिकोक्तेः सुतं हन्तुं छन्नं वाञ्छति दुन्दुकः। इतो भूपमनो जज्ञौ भोजमाता कलावती॥ ततः सा भोजजननी पाटलीनगरे वरे। लेखेनाऽज्ञापयद् भ्रातु-श्चन्द्रस्य पतिचिन्तितम्॥ भाग्नेयो भवतः सद्यो विनंक्ष्यति स्वभावतः। त्वयि सत्यप्यहं पुत्र-रिक्ताऽभविष्यमञ्जसा॥ ततश्चन्द्रपुरे तत्र समेत्य सोत्सवछलात्। भाग्नेयं पाटलीपुर्यां भोजं निनाय तत्क्षणात्॥ ततस्तत्र स्थितो भोजः शस्त्राभ्यासं करन् सदा। धनुःकलाप्रवीणोऽभूद् विशेषा-न्मातुलान्तिकात्॥ इतोऽवक् कण्टिका भूपं शत्रुरूपसुतस्तव। वर्द्धते मातुलस्यैव गृहे बलि-मतल्लिका॥ ततश्छन्नमन्त्रानीय पुत्रं नय यमालये। राजा प्राह त्वया सत्यं प्रोक्तं शत्रुसमः सुतः॥ तत आकारितो भोजं दुन्दुकेनाथ मातुलः। नाप्रेषयत्ततो भूपः सचिन्तो दुन्दुकोऽभवत्॥ चन्द्रोऽवक् शरणा-यातं भोजं भाग्नेयमत्र तु। प्रेषयिष्याम्यहं नैव तत्र भूरिप्रजल्पनात्॥ क्षत्रियैः शरणायातो रक्षितव्योऽन्य एव तु। भाग्नेयस्तु विशेषेण रक्ष्यो जीवितदानतः॥ करिष्यसि बलात्कारं यदि त्वं दुन्दुकाऽधुना। तदा युद्धं विना भोजं नार्प्पयिष्याम्यहं तव॥ भोजो जनकदुष्टत्वं ज्ञापितो मातुलेन तु। प्राह कर्म्म प्रमाणं स्यात् सुखासुखविधापने॥ ततोऽवग् दुन्दुको वप्प-भट्टिसूरेः पुरो रहः। भोजसूनोः शयान्मृत्युः प्रोक्तो ज्योतिषिकेन मे॥ तत्र गत्वा पुरे भोजं मानयित्वाऽत्र पत्तने। आनयाऽऽशु तथा मातु कुरु मानयते यथा॥ गुरवो भूपवचनाच्छलिता अर्द्धवर्त्मनि। प्राप्ता दध्युर्मम गिरा भोज एष्यति निश्चितम्॥ यद्यायाः तोऽत्र हन्येत भोजो दुन्दुकभूभुजा। तदा मे जायते श्वभ्र-गमनं दुर्यशः पुनः॥ इतो व्याघ्र इतः कूलं न्यायं ध्यात्वा गुरूत्तमाः। तत्रैवास्थुः क्रमादायुः स्तोकं स्वं जगुरेव हि॥ तस्मादनशनं मे तु शरणं मृतहेतवे। विमृश्येति जगुः सूरी-श्वराः संयतसन्निधौ॥ श्रीनन्नसूरिगोविन्द-सूरी स्तो दूरतोऽधुना। अतस्तेषां मम प्रोच्यं मिथ्यादुःकृतमेव हि॥ सङ्घस्यान्यस्य दातव्यं मे मिथ्यादुःकृतं पुनः। अहं कस्यापि नो मे को नास्ति प्रीतिं ममाऽस्तु च॥ न वयं युष्मदीयाः स्मो-ऽस्मदीया न हि यूयकम्। सम्बन्धाः कृत्रिमाः सर्वे क्षणनश्वरवीक्षणात्॥ अर्हत्पादान् जगद्वन्द्यान् सिद्धान् विध्वस्तबान्धवान्। साधून् श्रीजैनधर्म्मं च प्रपद्ये शरणं त्रिधा॥ महाव्रतानि पञ्चैव षष्ठं च रात्रिभोजनम्। विराधितानि यत्तत्र मिथ्यादुष्कृतमस्तु मे॥ इत्याद्युक्त्वा समां जीव-राशिं क्षन्त्वा स्वभावतः। स्मृतपञ्चनमस्कारा गुरवो बप्पभट्टयः॥ विक्रमार्कनृपात्पञ्च-नवाष्टाब्दशतेषु च। अलंचक्रुः सुरावासं शत्रुमित्रसमन्वतः॥ युग्मम्॥ वप्पभट्टिगुरोः स्वर्ग-गतिं श्रुत्वा नराननात्। मोढेरकस्थिता नन्नसूरयः शोकमादधु॥ यतः—

"शास्त्रज्ञाः सुवचोन्विता बहुजनस्याधारतामागताः, सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः। सर्वस्यामिमता गुणैः परिवृता भूमण्डनाः सज्जनाः, धातः! किं न कृता त्वया गतधिया कल्पान्त दीर्घायुषः॥ १॥" तदा वृद्धैः समागत्य नन्नसूरीशतुः स्फुटम्। शोकशङ्कुच्छिदे दत्त उपदेश इति ध्रुवम्॥ हित्वा जीर्णमयं देहं लभतेऽङ्गी पुनर्नवम्। कृतपुण्यस्य मर्त्यस्य मृत्युरेव रसायनम्॥

" तवनियमसुट्ठियाणं कल्लाणं जीवियंपि मरणं। जीवंति जंति गुणा मुयावि पुण सुग्गइं जंति ॥ १ ॥"
इतो दुन्दुकभूपेन सूरिभिः सह येऽनुगाः। प्रेषितास्ते समाजग्मुः दुन्दुकक्षोणिपान्तिके ॥ गुरूणां मृत-माकर्ण्य तेभ्यो दुन्दुकभूपतिः। वज्राहत इवातीव दुःखितोऽजनि चेतसि ॥ मन्त्रिभिः स्फुटितः शोको दुन्दुकस्य महीपतेः। वप्पभट्टिगुरोर्वर्य-गुणान् भूपोऽस्मरत् सदा ॥ भोजेन मातुलावास-स्थितेन पितृ-चेष्टितम्। वप्पभट्टिगुरुस्वान्त-चेष्टितं ज्ञातमेव च ॥ वप्पभट्टिगुरोर्मृत्युं श्रुत्वा भोजो नृपाङ्गजः। क्षणं वज्राहतो भूत्वा दुःखं वितनुतेतराम् ॥ वप्पभट्टिगुरोस्तुल्यो विद्यतेऽन्यो गुरुर्नहि। अस्मदर्थं यतो मार्गे देवलोकं समागमत् ॥ एकदा मालिकः पूर्व-भृत्यो भ्रान्त्वा भुवस्तलम्। भोजं नत्वा जगौ भीमवनेऽहं समुपागमम् ॥ गुरोर्मुखान्मया तत्र विदिता प्रापि सुन्दरा। तयाऽभिमन्त्र्यते मातु-लिङ्गं सूर्यदिने किल ॥ तेनाहता हया मात-ङ्गजा नरा बलान्विताः। निर्बला आशु जायन्ते वश्यो वैरी भवेद् द्रुतम् ॥ तेन दत्तं तु भोजेन गृहीतं वीजपूरकं। भूरि तस्मै ददे दानं सद्वस्त्रादिपुरस्सरम् ॥ अभिमन्त्र्य वहून् मातु-लिङ्गान् भोजोऽजयद् रिपून्। यदा तदा जगौ मातृ-भ्राता राज्यं पितुः श्रय ॥ मातुलोत्साहितो भोजः किचद्वलसमन्वितः। मातुलिङ्गप्रयोगेण जयन् शत्रून् चचाल सः ॥ आगत्याऽथ पितुर्देश-पार्श्वं ज्ञापितवानिति। राज्यार्थमिहायातो राज्यं वितर सूनवे ॥ त्वं पूज्योऽसि पिता मे तु राज्यं त्वत्तोऽथवा मृतिः। सुतस्य वचसा राजा तुष्ट आकारयत् सुतम् ॥ वीजपूरेण भूपस्य कुबुद्धिदायिनीं धुरि। कण्टिकां गणिकां भोजोऽप्रेषयद्यमसद्मनि ॥ दुन्दुको वलिनं पुत्रं विज्ञाय राज्यमञ्जसा। वितीर्य सूनवे तीर्थ-यात्रां च तनुतेतराम् ॥ गत्वा शत्रुञ्जये तीर्थे क्रमादनशनं तदा। गृहीत्वा निर्जरावास-मलंचक्रे सुभावतः ॥ उपविष्टः पितूराज्ये भोजो मातुः पदाम्बुजम्। सेवते स्म गुरोः पादौ पालयन् पृथिवीं नयात् ॥ प्रत्यर्थिनो महीपाला बिभ्यतोऽभ्येत्य सत्वरम्। सेवन्ते भोजभूपाल-चरणम्बुजयामलम् ॥ भोजोऽथ स्वानु-गान् प्रेष्य मोढेरकपुरे वरे। श्रीनन्नसूरिगोविन्द-सूरी व्यज्ञपयद्यथा ॥ मोढेरकपुरे गोप-नगराद् भोजभूपतिः। श्रीनन्नसूरिगोविन्द-सूरी व्यज्ञपयद्यथा ॥ श्रीवप्पभट्टिसूरीशाः प्रज्ञागङ्गाहिमाद्रयः। प्रबोधितजगल्लोका वाणीनिर्जितसूरयः ॥ महाशया लसत्सामा-चारीकरणतत्पराः। आराध्य सुचिरं दीक्षां स्वर्गलोकं समागमन् ॥ तत्स्थाने साम्प्रतं दीर्घा-युषो यूयं गुरूत्तमाः। सर्वशास्त्राब्धिपारीणा वर्तध्वे जगतीतले ॥ दृष्टिविज्ञप्तिमात्रेण विधाय करुणां मयि। अत्रागम्यं वयं सद्यो वन्दाप्या गुरुभिः किल ॥ वाचयित्वा तदा लेखं प्रेषितं भोजभूभुजा। मुक्त्वा मोढेरके-सूरिगोविन्दं नन्नसूरयः ॥ सुसाधुश्रेणिसं-युक्ताः सङ्घमापृच्छय वेगतः। शुभेऽह्नि चलिता गोप-गिरिं प्रति कृतत्वराः ॥ युग्मम् ॥ नन्नसूरिं समायातं निशम्य भोजभूपतिः। पादचारी पुरात् स्वीयात् सन्मुखं निर्ययौ रयात्। भोजभूपो गुरोः पादौ नत्वाऽ-र्थिभ्यो ददद्धनम्। अग्रे कृत्वा गुरुं राज-मार्गेऽचलन्मुदन्वितः ॥ स्थाने स्थाने वितन्वानो नृत्यादि गणिका-न्तिकात्। पूरयन् मौक्तिकैर्भोजश्चचाल स्वस्तिकं वर्त्म ॥ हारो हारं ददावस्यो वाहुभिर्बाहुरेव च। आस्फा-लन्तो जनाश्चेलुर्गुरुभिः सह तत्र तु ॥ भोजो लक्षमितान् टङ्कान् प्रवेशे श्रीगुरोः पुरे। व्ययमास मुदा सङ्घ-भक्तिं कुर्वन् पदे पदे ॥ उपाश्रये समागत्य सिंहासने मनोहरे। उपविष्टा गुरूत्तंसाः प्रददुर्धर्म्मदेशनाम् ॥ राज्यं सुसम्पदो भोगाः कुले जन्म सुरूपता। पाण्डित्यमायुरारोग्यं धर्म्मस्य तत्फलं विदुः ॥ धनदो धनमिच्छतां कामदः काममिच्छताम् ॥ धर्म्म एवापवर्गस्य पारम्पर्येण साधकः ॥ भोजः प्राह मया तातं हिंसितुं चिन्तितो भृशम्। तस्मात् पापान्मम श्वभ्र-पात एव भविष्यति ॥ आलोचनां गुरोः पार्श्वे लात्वा धर्म्मं जिनोदितम्।

जग्राह भोजभूपालः सम्यक्त्वमूलमात्मना ॥ पुरमध्ये जिनागारं दुन्दुकाह्वं मनोहरम् । कारयित्वाऽऽदिदेवस्य बिम्बं न्यवीविशन्मुदा ॥ विहारा अर्हतां वर्या अनेके मेदिनीतले । भोजेन कारिता मुक्ति-सौतसन्ततिहेतवे ॥ नन्नसूरीश्वरोऽन्येद्युर्भोजस्य पुरतो जगौ । यः पुण्डरीकभूमिध्रे स स्याच्छिवंगमी ध्रुवम् ॥ यत :—" शत्रुञ्जये जिने दृष्टे दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं तु ध्यानाल्लक्षमभिग्रहात् ॥ १ ॥" नमस्कारसमो मन्त्रः शत्रुञ्जयसमो गिरिः । गजेन्द्रपदजं नीरं निर्द्वन्द्वं भुवनत्रये ॥ यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्घेशार्हत्यपदकृत्त स जीयाद्विमलाचलः ॥ " आरम्भाणां निवृत्तिर्द्रविणसफलता सङ्घवात्सल्यमुच्चैर्निर्माल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यम् । तीर्थौन्नत्यं सम्यक् जिनवचनकृतिस्तीर्थसत्कर्म्मसत्त्वं, सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्राफलानि ॥ १ ॥ " पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥ श्रुत्वेति नन्नसूरीश-पार्श्वे भोजमहीपतिः । शत्रुञ्जयादितीर्थेषु यात्रां विस्तरतो व्यधात ॥ पूर्वराजर्षिभूपानां यशांसि विपुलान्यपि । उद्दधार करन् धर्म्म-कृत्यानि भोजभूपतिः ॥ भोजभूपं वितन्वानं धर्म्मं वीक्ष्यान्यमानवाः । विशेषतो मुदा चक्रुः धर्म्मकृत्यानि भूरिशः ॥

इति आमभूपतत्पुत्रदुन्दुकभोजबप्पभट्टिसूरिसम्बन्धः ॥

---

अमुक्तोऽपि सङ्क्षेपात् शिलादित्यभूप-धनेश्वरसूरिसम्बन्ध उच्यते । तथाहि—शशिगच्छनभः-सूर्यः सूरिरासीद् धनेश्वरः । अनेकशास्त्रपाथोधि-पारगो विमलाशयः ॥ वलभिनगराधीशं शिलादित्यं नरेश्वरम् । बोधयामास सर्वज्ञ-धर्म्मं सूरिधनेश्वरः ॥ तीर्थं शत्रुञ्जयं बौद्ध-गृहीतं वादसङ्गरे । जित्वा बौद्धान् लसद्वाद-बाणैरवालयद् गुरुः ॥ शिलादित्येन भूपेन स्वकीयमण्डलात्तदा । बौद्धा निष्कोशिता जग्मु-रन्यत्र विषये रयात् ॥ सप्तसप्तत्यधिकचतुः-शतेषु विक्रमात् । शिलादित्योऽभवद्राजा यात्राकृत सिद्धपर्वते ॥ वीरनिर्वाणतो वर्ष-शतेष्वेकोनविंशतौ । चतुर्दशसु वर्षेषु गतेषु केकिनन्दनः ॥ चैत्राष्टम्यां नृपे विष्टो पाटलीपुत्रपत्तने । कल्की भावी चतुर्वक्त्रो नामत्रयसमन्वितः ॥ रुद्रश्चतुर्मुखः कल्कीति नामभिस्त्रिभिः स च । वर्द्धिष्यतेऽथ चाण्डाल-सदने प्रतिवासरम् ॥ तस्य जन्मनि वातेन स्तुपौ गोगलिकृष्णयोः । पतिष्यतः कुठारेण छिन्नभूमीरुहाविव ॥ ततः सप्तेतयो भीति-दुर्भिक्ष डम्मरादयः । महीभुजविरोधश्च भविष्यन्ति महीतले ॥ अतिवृष्टिरनावृष्टि-मुख्यकाः शलभाः शुकाः । स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥ वर्द्धमानः क्रमादश्म-मयमश्वं चटिष्यति । यदा कल्की तदाऽश्वः स चलिष्यति चतुःपदैः ॥ अरिष्टमेतदित्युच्चैर्जल्पद्भिर्मानवैर्यदा । हन्तुमागत्यैत्यावत्तावन्नष्टः पुमान् स च ॥ तमेव देवताऽधिष्ठा-तृकं तुरङ्गमं वरम् । आरुह्य चलितः कल्की चतुर्वक्त्रोऽभ्रमद् भुवि ॥ स च षोडश वर्षाणि सामान्यनृपतिर्भवन् । षट्त्रिंशत्वत्सरान्ते स राजा कल्की भविष्यति ॥ पाटलिपुत्रनगरे तस्य राज्याभिषेचनम् । करिष्यन्ति नृपा एत्य शतसङ्ख्याः प्रमोदतः ॥ त्रिखण्डं मेदिनीपीठं साधयिष्यति सोऽचिरात् । खानयिष्यति नन्दस्य राज्ञः स्तुपांश्च रैमयान् ॥ द्रव्यार्थं नगरग्राम-मेदिनीं खानयन् सदा । प्राप्स्यति भूरि विभवं निर्द्रव्यान्तां करिष्यति ॥ खन्यमाने पुरे कस्मिन् धेनु-लवणसंज्ञिकाम् । निस्सरिष्यति भूम-

ध्यादाऽसमी घ्नन्ती मुनीन् रुपा ॥ भाव्यरिष्टं पुरे तत्र ज्ञात्वा केचन मानवाः । प्रयास्यन्त्यन्यतस्तत्र स्थास्यन्त्येव च केचन ॥ मार्गयिष्यति कल्की स धनं जैनमुनीनपि । निपेत्स्यते बलात् कल्की लोकैर्गृहंस्तदा ततः ॥ सप्ताहं जलदो वर्षन् प्लावयिष्यति तत्पुरम् । कल्की प्रातिपदः सूरिः कियान् लोकस्तदा पुनः ॥ स्थास्यन्त्युच्चक्षितौ केचिन्मज्जन्ति सलिले तदा । केचनात्मवधं कृत्वा मरिष्यन्ति नरा स्त्रियः ॥ युग्मम् ॥ विघ्ने तस्मिन् निवृत्ते तु नन्दद्रव्येण भूपतिः । विधास्यन्ति पुरीं नव्यां धनधान्यविराजिताम् ॥ याति कल्किनि भूपीठे द्रम्मेण द्रोण एककः । लभिष्यते सुभिक्षत्वात् द्रव्यं स्तोकं भविष्यति ॥ धनलुब्धा महीपाला भीषणाः कुनयस्थिताः । कुशीलाः कुलनार्योऽपि ग्रामाः प्रेतवनोपमाः ॥ निःकृपा गतजलपाका हीनसत्त्वाः कुमानसाः । धर्म्मस्य निन्दका लोका भविष्यन्ति क्रमादमी ॥ युग्मम् ॥ सुभिक्षं भावि पञ्चाश-दव्दानि सन्ततं ततः । वर्द्धिष्यन्ति जना धान्य-कुटुम्बैः सुभटैर्नृपाः ॥ आसन्नमरणे नीत्वा लिङ्गिनो द्रविणं नृपः । साधून् रोत्स्यति लक्ष्म्यर्थं वाटके कल्किभूपतिः ॥ प्रातिपदादिसङ्घेन कायोत्सर्गे कृते सति । सङ्घस्योपद्रवं ज्ञात्वा शक्रोऽगाद्विप्ररूपभृत् ॥ उक्तिप्रत्युक्तिभिः कल्की वार्यमाणोऽपि वज्रिणा । निवर्त्तिष्यति न यदा तदा तं स हनिष्यति ॥ आयुः सम्पूर्य वर्षाणां षडशीतिं स कल्किराट् । गतः श्वभ्रावनौ दुःखी भविष्यति चिरम् ॥ दत्तं तन्नन्दनं तस्य राज्ये न्यस्यानुशिष्य च । धर्म्मं जैनं गुरुं नत्वा शक्रः स्वर्गं गमिष्यति ॥ दत्तोऽन्यदा गुरूपान्ते गत्वा धर्म्मं जिनोदितम् । अश्रोपीदिति सस्नेहं सावधानः कृताञ्जलिः ॥ कर्त्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्ण्यनीयं, दानं देयं सुपात्रे प्रतिदिनममलं शीलनीयं च शीलम् । तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया, श्राद्धानामेष धर्म्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं, मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा । वेद्यं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं, प्राप्तं जन्मफलं कृतं जिनमतं गोत्रं समुद्योतितम् ॥ आकर्ण्यैतन्नृपः प्रौढः प्रासादान् कारयन् क्षितौ । सिद्धशैले जिनागार-मुद्धरिष्यति रैमयम् ॥ ग्रामे ग्रामे पुरे पुर्यां प्रासादान् कारयन्नृपः । अभिग्रहं ललावेवं गुरुणा पुरतोऽन्यदा ॥ प्रासादस्य निष्पत्तेर्वर्द्धापनिकमादरात् । प्रगे प्रगे समायाति तदाऽद्यं मयका गुरोः ॥ ततो दिने दिने सर्वे प्रासादस्यैककस्य तु । निष्पत्त्यामागतायां च भोक्ष्यति कल्किभूपसूः ॥ सूरेः प्रातिपदस्यान्ते धर्म्मकर्म्म करन् सदा । कारयिष्यति सर्वत्र-प्रासादान् भूरिशो नृपः ॥ अन्यदा श्रीगुरूपान्ते धर्म्मं जीवदयामयम् । दत्तः शृण्वन्-नदः श्रीमद्-गुर्वन्ते श्रोष्यति ध्रुवम् ॥ “ अभयं सुपत्तदाणं अणुकंपा उचियकित्तिदाणं च । दोहि वि मुक्खो भणिओ तिन्नि भोगाइअं दिंति ॥ १ ॥ ” सत्पात्रे महती श्रद्धा काले देयं-यथोचितम् । धर्म्मसाधनसामग्री वहुपुण्यैरवाप्यते ॥ श्रुत्वेति कल्किभूस्तत्र दानं दद्यथेप्सितम् । अनृणां मेदिनीं स्वीयां करिष्यति क्रमाद् ध्रुवम् ॥ एकदा कल्किसूभूपो यावन्मध्येसभं प्रगे । उपविष्टस्तदाऽभ्येत्य कविरेको वदिष्यति ॥ तैश्चन्द्रे लिखितं स्वनाम विशदं धात्री पवित्रीकृता, ते वन्द्याः कृतिनो नराः सुकृतिनो वंशस्य ते भूषणम् । ते जीवन्ति जयन्ति भूरिविभवास्ते श्रेयसां मन्दिरं, सर्वाङ्गैरपि कुर्वते विधिपरा ये तीर्थयात्रामिमाम् ॥ तस्मै विपश्चिते हेम्न-लक्षद्वयं प्रमोदतः । दत्तो महीपतिः सद्यो ध्रुवं विश्राणयिष्यति ॥ अन्येद्युः पुनरागत्य कविरेको मृदुस्वरः । काव्यमेकं जगौ चित्त-चमत्कारविधायकम् ॥ “ वन्दे जन्म मनुष्य-सम्भवमहं किं तद्विहीनं गुणैस्तानेव त्वरितं स्तुमः किमु समां लक्ष्मीं विना तैर्गुणैः । तां लक्ष्मीं समुपास्महे किमु तया दानादिभिर्वन्ध्यया दानं स्तौमि पृथैव भावरहितं भावो हि भद्रं ततः ॥ १ ॥ ” काव्यमेतत्

समाकर्ण्य कलिकिपुत्रश्चमत्कृतः । तस्मै विपश्चिते हेम्नां लक्षमेकं प्रदास्यति ॥ अन्येद्युः पुनरागत्य कविरेको मृदुस्वरम् । काव्यमेकं जगौ चित्त-चमत्कारकरं पुनः ॥ " काचिद्बालकवन्महीतलगता मूलच्छिदाकारणं, द्रव्योपार्जनपुष्पितापि विफला काचिच्च जातिप्रभा । काऽपि श्रीकदलीव भोगफलदा सत्पुण्यबीजच्युता, सर्वाङ्गीणशुभा रसालललतिकावत् पुण्यबीजान्विता ॥ १ ॥ " काव्यमेतत् समाकर्ण्य तस्मै पण्डितशालिने । दत्तो दास्यति कल्याण-लक्षमेकं चमत्कृतः ॥ सूरिः प्रातिपदस्यान्ते धर्म्मकर्म्म मुदा करन् । कारयिष्यति सर्वज्ञ-प्रासादान् भूरिशो नृपः ॥ पुरःकृत्य वहु सङ्घं गुरुं च दत्तभूधवः । सिद्धाचलादितीर्थेषु यात्रा बह्वीः करिष्यति ॥ सङ्घवात्सल्यमुख्यानि धर्म्मकृत्यान्यनेकशः । करिष्यति स्वयं दत्तः कारयिष्यति चापरान् ॥ स्वस्वकदाग्रहं मुक्त्वा निखिला यतयस्तदा । एकीभूय करिष्यन्ति धर्म्मं सर्वज्ञभाषितम् ॥ वर्षिष्यत्यम्बुदः काले काले जनेप्सितोऽनिशम् । नैवेतयो न दुर्भिक्षं दत्ते पाति महीं नयात् ॥ भूपा न्यायाश्रिता लोका भूपालहितकारकाः । समृद्धा धर्म्मिणोऽत्यन्तं भविष्यन्ति न संशयम् ॥ युग्मम् ॥ सूरिप्रातिपदस्यान्ते दत्तो धर्मधुरन्धरः । शक्त्याह्वं स्वं सुतं राज्ये न्यस्य यास्यति ताविषम् ॥ स शक्तिर्मेदिनीपालो धर्मकृत्यान्यनेकशः । करिष्यति स्वयं चान्यान् कारयिष्यति भक्तितः ॥ शक्ति-भूपोऽपि भूयिष्ठ-लक्ष्मीं व्ययन् निरन्तरम् । लभिष्यति क्रमात् कर्ण-भूपतेरुपमा किल ॥ ६२ ॥

इति ' संपइविक्कमवाहड ' इत्यादिगाथायाः कथाः सङ्क्षेपतः समाप्ताः ॥

---

जं कालयसूरिपुरो सरइ सुदिट्ठी सया विदेहे वि । इणमिअ सक्केणुत्तं तं सित्तुंजय महातित्थं ॥३०॥

कालकसूरेः पुरोऽभ्येत्य शक्रेणोक्तं,—यत्तीर्थं शत्रुञ्जयाभिधं महाविदेहेऽपि क्षेत्रे ' सुदृष्टयः ' सम्यग्दृष्टयो ' ऽस्मरन् ' वाञ्छति स्म देवान् नन्तुमिदं, तत्तीर्थं जयताच्चिरम् ॥

एकदाऽऽदिदिवः स्वामी विदेहे पूर्वनामनि । सीमन्धरं जिनं नन्तुं जगामानघमानसः ॥ तदा धर्म्मोपदेशं तु ददत् सीमन्धरो जिनः । शत्रुञ्जयस्य माहात्म्यं जनानां पुरतो जगौ ॥ तावद् गर्जन्ति हत्यादि-पातकानीह सर्वथा । यावच्छत्रुञ्जयेत्याख्या श्रूयते न गुरोर्मुखात् ॥ न रोगो न हि सन्तापो न दुःखं न वियोगता । तस्य यस्य मनो नित्यं तीर्थे शत्रुञ्जयाभिधे ॥ आसाद्य मानवं जन्म प्राप्य बोधिं गुरोर्मुखात् । येन शत्रुञ्जये देवो नतस्तस्याफलं जनुः ॥ विना तपो विना दानं विनाऽर्चां शुभभावतः । केवलं स्पर्शनं सिद्ध-क्षेत्रस्याऽक्षयसौख्यदम् ॥ शत्रुञ्जयसमं तीर्थ-मादिदेवसमः प्रभुः । जीवरक्षासमो धर्म्मो नास्ति विश्वत्रये परः ॥ इन्द्रादयोऽपि ये देवा देव्योऽपि भुवनत्रये । सेवन्तेऽयं सदा तीर्थ-राजं सद्गतिकाम्यया ॥ भारते दक्षिणे खण्डे तीर्थं शत्रुञ्जयाभिधम् । येऽर्चयन्ति जनास्तेषां सम्पदः स्युः करेऽखिलाः ॥ सर्वतीर्थमयं तीर्थं शत्रुञ्जयसहोदरम् । विद्यते न जगन्मध्ये मुक्तिसातौघदायकम् ॥ न हि कालकसूरीश-समो विचारवान् गुरुः । विद्यतेऽन्यो हि भरत-खण्डमध्ये हिताशयः ॥ श्रुत्वै-तद् वासवो नत्वा गुरुं सीमन्धरं तदा । वृद्धविप्रस्वरूपेण प्रतिष्ठानपुरे ययौ ॥ मध्याह्ने कालकाचार्यं

प्रणम्य प्रोक्तवानिति । अहं वृद्धोऽभवं सूरे ! गृह्णाम्यनशनं द्रुतम् ॥ यद्यायुर्मे भवेत् स्तोकं गृह्णाम्यनशनं तदा । ततो विलोक्य सूरीशो द्विजस्य पुरतो जगौ ॥ सागरद्वयमानं तु तवायुर्विद्यते द्विज ! । तेन त्वं प्रथमस्वर्ग-स्वाम्यसि द्विजसत्तम ! ॥ द्विजपृष्टस्तदा सूरि-र्निगोदस्याखिलस्य हि । विचारं प्रोक्तवान् सीम-न्धरस्वामिवदाऽऽदरात् ॥ ततः स प्रकटीकृत्य रूपं शक्रो गुरोः पदौ । नत्वोवाच यथा सीम-न्धरोऽवग् त्वं तथा भवान् ॥ यथा त्वं स्वामिना सीम-न्धरेणोक्तस्तथाऽसि भोः ! । शत्रुञ्जयस्य माहात्म्यं प्रभुणा जगदे पुनः ॥ अहं वन्दितुमिच्छामि साधूंस्ते शिवहेतवे । तेन यावदिहाऽऽयान्ति साधवोऽस्थामहं प्रभो ! ॥ गुरवो जगदुः शक्र ! रूपं वीक्ष्य तवाधुना । निदानं स्वर्गतेर्वाचं-यमैश्च बन्धयिष्यते ॥ अन्येषां रूपसम्पत्ति-प्रभृतीन् केचनाङ्गिनः । वाह्यारघट्टमेवेह विक्रीणते तपो निजम् ॥ पूर्वं चन्द्रपुरे चन्द्रो नैगमो दुस्थितो भृशम् । गुरुपार्श्वे वृषं श्रुत्वा जग्राह व्रतमञ्जसा ॥ गुरुणोक्तं तपस्तीव्रं कुर्वाणः स यतिः सदा । तृणायैव निजं देहं मन्यते क्वचिदेव तु ॥ यतः—" यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् । तत सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १ ॥" धर्म्मस्खलतः स्वर्गः श्वभ्रं पापफलाद् भवेत् । सुखं दुःखं विदित्वा च यदिष्टं तत् समाचर ॥ कुर्वाणं तं तपस्तीव्रं श्रुत्वा भूपादयो जनाः । अहमहमिकापूर्वं सेवन्ते प्रतिवासरम् ॥ अन्यदा भूपतिः सान्तः-पुरो भूर्यनुगान्वितः । वन्दितुं तं यतिं पुर्यां समागान्मुदिताशयः ॥ भूपः सान्तःपुरो भक्त्या वन्दित्वा तं यतीश्वरम् । स्थितो यावत्तदा धर्म्म-लाभं स ददौ किल ॥ भूपते ऋद्धिमालोक्याऽच्युतस्वर्गगमोचितम् । अर्जितं स्वतपः साधुर्व्यययामास वेगतः ॥ यद्यसि तपसः किञ्चिन्माहात्म्यं जायते स्वलु । तदा ममेदृशी ऋद्धिर्भूयाद् भवेऽग्रिमे द्रुतम ॥ मृत्वा प्रान्ते यतिः सोऽपि राज्यमग्रेतने भवे । प्राप्य पापं तथा चक्रे यथाऽगान्नरके क्रमात् ॥ ततो धर्म्मस्य शालाया द्वारमन्यत्र वासवः । कृत्वा स्वर्गेऽगमन्नत्वा गुरोश्चरणवारिजे ॥ विहृत्य साधवो द्वारमवीक्ष्योचुर्गुरुत्तम ! । क्वास्ति द्वारं ततः प्रोचुर्गुरवो विद्यतेऽन्वितः ॥ द्वारे गुरूदितेऽभ्येत्य साधवो जगदुर्गुरुम् । अन्यत्राभूत्कथं द्वारं शालायाः साम्प्रतं गुरो ! ॥ ततो गुरूदिते शक्रा-गमोदन्तेऽखिले तदा । साधवो बभणुः शक्रः कथं स्थाप्योऽभवत्त्वया ॥ गुरुः प्राह मरुद्रूपं दृष्ट्वा क्वचिच्च साधवः । निदानं बध्नतेऽतो न तस्थौ शक्रोऽत्र संयताः ! ॥ श्रुत्वैतत् साधवो वक्त्राद् गुरोः प्रतिदिनं तदा । तथा चक्रुस्तपो मुक्तिर्यथा स्यादग्रतः क्रमात् ॥ ३६ ॥

इति कालकसूरिसम्बन्धः ।

---

जावडि बिंबुद्धारे अणुवमसरमजियचेइअट्ठाणे । जहिं होहि जयउ तयं सिरि सित्तुंजय महातित्थं ॥३१॥

'जावडेः' भावडपुत्रस्य सौराष्ट्रप्राग्वाटकुलोद्भवस्य बिम्बोद्धारोऽजनि तथा क्रमादजितनाथचैत्यस्थाने अनुपमसरो भविष्यति, वस्तुपालतेजःपालौ मन्त्रिणौ तयोर्ललितादेवीअनुपमे पत्न्यौ जाते, ललितया ललितासरः कारितम्, अनुपमया-अनुपमसरः कारितमजिततीर्थप्रासादस्थाने, 'होही' भविष्यति यत्र गिरौ तत्तीर्थं शत्रुञ्जयाह्वं जयतात् ॥ आदौ जावडिबिम्बोद्धारः कथ्यते, तथाहि—

पाञ्चालविषये क्षोणी-भामिनीभालभूषणम् । स्थानकुण्डलनामाऽभूत् पुरं सुरपुरोपमम् ॥ तस्य चत्वारि नामानि विख्यातानि महीतले । बभूवुर्लोकदत्तानि चतुर्युग्या क्रमादिति ॥ कुङ्कुण्डोलकम्पिल्लि

स्थानकुण्डलनामभिः। विख्यातं विद्यते स्थान–कुण्डलं नगरं वरम् ॥ तत्र भीममहीपालः परमारकुलोद्भवः। न्यायाऽध्वना महीं रक्षन् विख्यातोऽजनि सर्वतः ॥ नेमदत्तधनेशस्य नेमिदत्ता प्रियाऽजनि। क्रमात्तयोः सुतो वर्यो जिनदत्ताभिधोऽभवत् ॥ छलं कृत्वाऽन्यदा भूपः स्वर्णलक्षं हठाद् ध्रुवम्। जग्राह जिनदत्तस्य समीपात् स्तैन्यतत्परः ॥ यतः—"लोकेभ्यः करमादाता चौरेभ्यस्तैन्यरक्षिता। तदीयैर्लिप्यते राजा पातकैरिति च स्मृतिः ॥१॥ जत्थ राजा सयं चोरो भंडओ य पुरोहिओ। दिसं वयह नागरया जायं सरणओ भयं ॥२॥" आलोच्येति ततः श्रेष्ठी मधुमत्यां पुरि क्रमात्। अर्द्धं वासं व्यधाल्लक्ष्मी-समुपार्जनहेतवे ॥ व्यवसायं वितन्वानो जिनदत्तो निरन्तरम्। यानानि प्रेषयामास वार्द्धौ विभवहेतवे ॥ यतः—"पापाणैर्व्रीहनैस्तार्क्ष्यैः कर्पासैः परसद्मनैः। लक्ष्मीमर्जयति स्मैव प्रायो जनोऽखिलः खलु ॥ १ ॥" बोहित्थेनान्यदा श्वेत–गजः शक्रगजोपमः। आगतो जिनदत्तस्य गृहे स्वरतरुवद् वरः ॥ श्रेष्ठी दध्यौ गजः श्वेतो घटते भूपमन्दिरे। न तिष्ठत्यपरेषां तु गेहेष्वेव कदाचन ॥ "सव्वत्थ अत्थि ठाणं रासहतुरयाणमहिसमेसाणं। इक्कं गयंदस्स पुणो रायहरं अहव वणवासो ॥१॥" तेनैव हस्तिना श्रेष्ठी विक्रमार्कं महीपतिम्। तोषयामास पाथोदो मयूरगर्जितेन वा ॥ ग्रामैश्चतुरशीत्या तु सहितं मधुकं पुरम्। प्रददौ जिनदत्ताय मुदितो मेदिनीपतिः ॥ समेत्य मधुमत्यां तु ग्रामान् सर्वान् विभज्य सः। दत्त्वा स्वकेभ्य आमोदाज्जैनं धर्म्मं सदा व्यधात् ॥ जिनदत्तप्रियाऽसावीद् देवी जयतलाभिधा। नन्दनं मदनं पद्म–वासेव शुभवासरे ॥ जन्मोत्सवं पिता कृत्वा भावडाह्वां प्रमोदतः। सूनोर्ददौ ततः शश्वल्लाल्यते स्वजनैः सदा ॥ यत :—"उत्पतन् निपतन् रिङ्खन् हसन् लालावलीं वमन्। कस्याश्चिद् देव ! धन्यायाः क्रोडमाक्रमते सुतः ॥ त्रिवार्षिके क्रमाज्जाते भावडे नन्दने सति। ययौ जयतला देवी देवस्य मन्दिरे रयात् ॥ यत :—"आयुषो राजचित्तस्य पिशुनस्य धनस्य च। खलस्नेहस्य देहस्य नास्ति कालो विकुर्वतः ॥ १ ॥" ज्योतिष्ककात्सुतस्यैव तस्य मत्वा शरच्छतम्। जिनदत्तोऽग्रहीद् ब्रह्म–व्रतं धर्म्मगुरोः पुरः ॥ यत :—"अक्खाण रसणी कम्माण मोहणी तह वयाण बंभवयं। गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंते ॥ १ ॥" क्रमेण भावडो वर्द्ध–मानः पण्डितसन्निधौ। विनयेनाऽपठद् भक्त्या शास्त्राणि धर्म्मकर्म्मणः ॥ मधुमत्या समीपस्थे ग्रामे आसन्ननामके। श्रेष्ठी वस्त्राकरोऽसावीत् पुत्रीं स ललिताभिधाम् ॥ वर्द्धमाना क्रमात्पुत्री तन्वती मोदमन्वहम्। मातापित्रोः सुशास्त्राणि पपाठाऽमलमानसा ॥ यत :—"तृतीयं लोचनं ज्ञानं द्वितीयो हि दिवाकरः। अचौर्यहरणं वित्तं विना स्वर्णं विभूषणम् ॥ १ ॥ ज्ञानाद् विदन्ति खलु कृत्यमकृत्यजातं ज्ञानाच्चरित्रममलं च समाचरन्ति। ज्ञानाच्च भव्यभविनः शिवमाप्नुवन्ति, ज्ञानं हि मूलमतुलं सकलश्रियां तत् ॥ २ ॥" पुत्रीं यौवनसम्प्राप्तां वीक्ष्य दध्यौ पिता हृदि। विलोक्यते वरो वर्यो ह्यस्याः पुत्र्याः पुरे पुरे ॥ तादृग्वर्यवराप्राप्त्या श्रेष्ठी वस्त्राकरस्तदा। दोदूया तनुते तीव्रहृदय वीक्ष्य नन्दिनीम् ॥ यत :—"जम्मंतीए सोगो वड्ढंतीए वड्ढए चिंता। परिणीयाइ दंडो जुवइपिया दुक्खिओ निच्चं ॥ १ ॥" गत्वा वस्त्राकरः श्रेष्ठी मधुमत्यां पुरि क्षणात्। जिनदत्तालये पुत्र्या विवाहार्थं गतो जगौ ॥ ममास्ति नन्दिनी पुत्रो वर्योऽस्ति तव भावडः। अतस्तयोर्विधीयेत विवाह आत्मगिर्द्रुतम् ॥ विवाहो मेल्यते यावत्ताभ्यां तावत् स भावडः। तत्रैत्यावग् विवादेन यो मां जयति भामिनी ॥ तामेवाहं लसद्रूपामपि चञ्चत्कुलोद्भवाम्। परिणेष्येऽन्यथा नैव प्रतिज्ञेति कृता मया ॥ ततः वस्त्राकरः कृष्णा–नन उत्थाय तद्गृहात्। ययौ निजे गृहेऽप्यौपी–दिदं सुललिता तदा ॥ ततः सरस्वतीं देवी-

माराध्य विलसद्विधि । वरं प्रापेति सा कन्या सरस्वत्याः समीपतः ॥ गच्छ तत्राधुना वत्से ! यद्यद् वक्षि वचः स्फुटम् । तत्तत् सर्वं विजेतैव भावडस्य भविष्यति ॥ यतः—अमोघा वासरे विद्युद्मोघं निशि गर्जितम् । नारीबालवचोऽमोघममोघं देवदर्शनम् ॥ ध्यात्वेति भारतीं नत्वा कन्या सुललिता क्षणात् । सखीयुता ययौ वादं कर्तुं मधुमतीपुरि ॥ श्रेष्ठिनो जिनदत्तस्य गृहोपान्ते कनी तु सा । तृणपूलं विमुच्याम्बु-घटमुच्चैर्जगाविति ॥ यो जेजेति तु वादेन मामत्र स्त्रीनृसाक्षिकम् । तं वृणीपेऽन्यथा वह्निः शरणं मेऽत्र भवे ध्रुवम् ॥ न यो जयति मा मर्त्यो वादे वचनयुक्तिभिः । खादतात् तृणपूलं स पिवतात् सलिलं पुनः ॥ जल्पन्तीं तां कनीं दृष्ट्वा भावडः प्रोक्तवानिति । रे मूर्खे ! किं त्वया-लज्जां मुक्त्वैवं जल्प्यते स्फुटम् ॥ लज्जा चेन्मुच्यते नार्या सतीत्वप्रतिपादिका । गच्छ तातगृहे वादं मुक्त्वा श्रेष्ठितनूभवे ! ॥ यतः—“ आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् । अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं, स्त्रीयन्त्रं केन लोके विषममृतमयं धर्म्मनाशाय सृष्टम् ॥ १ ॥ ” अलीकं वचनं माया लोभं दम्भं कदाग्रहम् । कुर्वाणा योषितो वञ्च-यन्ति स्वीयजनानपि ॥ यतः—“ स्त्रियोऽलीकवचोमाया-विन्योऽतिनिर्दया सदा । अपवित्रा जडा लोभ-बहुला दोषमन्दिरम् ॥ १ ॥ ” ततस्तासां कथं स्त्रीणां सङ्गः सद्भिर्विधीयते ? । स्त्रीभिर्जना न केऽनर्थे पात्यन्ते पातिताः पुनः ॥ अत्र कपटमायादिविषये मयूरिकाकथा ॥ अनृतं साहसं माया मूर्खत्वमतिलोभता । निःस्नेहो निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ श्रुत्वैतद्वचनं सोचे सत्याऽऽसील्लौकिकी श्रुतिः । पश्यत्यद्रौ ज्वलन् सर्वः पदार्थो नैव कश्चन ॥ “ राइसरिसवमित्ताणि परछिद्दाणि पाससे । अत्तणो विल्लमित्ताणि पासंतो न वि पाससे ॥ १ ॥ ” दोषाद्यैर्दूषिता नार्यः शास्त्रैर्वर्ण्यन्त एव तु । पुरुषा अपि नारीभ्यो-ऽधिका दोषैर्भवन्ति हि ॥ पुराणे कथ्यते सत्यवादी राजा युधिष्ठिरः । धर्मपुत्रो दयाशाली नरचूडामणिश्च यः ॥ स एव सङ्गरे द्रोणं गुरुं वृद्धं द्विजोत्तमम् । हतवान् वाक्प्रपञ्चेन वेत्तीदं निखिलो जनः ॥ अश्वत्थामा हतः पार्थवाणैरर्वाग् युधिष्ठिरः । क्षणाद्युधिष्ठिरः प्राह न नरः कुञ्जरः पुनः ॥ मायाविन्यः स्त्रियः प्रायः पुमांसः सरलाशयाः । इत्युक्तिर्वणिजां पुंसि समत्रापि निराकृता ॥ श्रुत्वा दुर्वाक्यमुच्चैर्हसति मुषति च स्वीयमप्यन्यलोकं, द्व्यर्द्धं गृह्णाति पण्यं बहु किमिति वदन्नर्द्धमेव प्रदत्तम् । स्त्रीयान्यायेऽपि पूर्वं व्रजति नृपगृहं लेखके कूटकारी, मध्ये सिंहप्रतापी प्रकटमृगठगः स्याद्वणिग् धूर्त्तराजः ॥ दारुमातङ्गकौटिल्यात् प्रद्योतः काननान्तरे । बबन्धोदयनं यच्च न ख्यातं विद्यतेऽभितः ? ॥ कूटप्रद्योतरचनात् प्रद्योतं भूमिभुक्पथि । यच्चाभयोऽहरन् मन्त्री तद्धि मायाविजृम्भितम् ॥ निर्दयत्वे-कंसोऽनैषीद्यमावासं वसोर्बालकसप्तकम् । मण्डयित्वा छलं सार्द्धं वसुदेवेन भूभुजा ॥ विश्वामित्रो जगत्ख्यातस्तपस्वी करुणापरः । वशिष्टं हतवान् क्रोधात्तथा पुत्रशतं पुनः ॥ अपावित्र्ये-नार्यो यान्ति विना कच्छां जिनावासादिषु स्फुटम् । सुस्नाता अपि नो यान्ति नराः किमत्र कारणम् ? ॥ मूर्खत्वे-मूर्खत्वात् सचिवाः के के वेद्य वेदितताहिताः । नियोगितां पुनर्लान्तो दृश्यन्ते सर्वतो जनैः ॥ लोभे-हन्तुं बाहु-बलिं स्वीयं भ्रातरं ऋषभाङ्गजम् । चक्रं न भरतोऽमुञ्चल्लोभेन किं हि भावड ! ॥ सोदरं मानितं वाचा चिन्तितं चापि मानवम् । न घ्नन्ति योषितः प्रायः घ्नन्त्येव पुरुषाः पुनः ॥ यतः—“ सहोदरः सहाध्यायी मित्रं वा रोगपालकः । मार्गे वाक्यसहायस्तु भ्राता पञ्चविधः स्मृतः ॥ १ ॥ ” लोभेन धातकीखण्डं साधितुं वारिधौ व्रजन् । स भूपः सार्वभौमोऽपि ममज्ज किं न सैन्ययुग् ? ॥ वैताढ्यात्

पुरतो देशान् साधितुं कोणिको नृपः। गच्छन् लोभान्मृतिं प्राप वैताढ्याद्रिगुहान्तिकात् ॥ दोपे–गोशालकाद्यो लोका निघ्नन्तो जिनपादिकान्। दोपलक्ष्युता एव दृश्यन्ते शतशो नराः ॥ रागाद्दशाननः सीतां सतीं नापजहार किम्? । द्वारकां नादहत् कृष्ण–द्वीपायनद्विजो रुपा ॥ व्यसनानि निपेवन्ते प्रायो नराः स्त्रियो न च। प्रायश्चौर्यं नराः कुर्युर्न नार्योऽमलमानसाः ॥ पुण्यश्लोको नलो राजा द्युताद्राज्यमपाहरत्। सुप्तां पत्नीं वने त्यक्त्वा किं जगाम न दूरतः ? ॥ भावडोऽवग् गृहिण्या तु प्रदेशी मेदिनीपतिः। विपप्रदानतः किं न निहतः श्रूयते जने ? ॥ जगौ सुललिता पाण्डु–पुत्रान् दुर्योधनो नृपः। हन्तुं नैच्छत् किमु क्ष्वेड–वह्नि-प्रमुखदानतः ॥ पाण्डवप्रेयसीं शील–शालिनीं द्रुपदात्मजाम्। वस्त्रापहारतः किं न व्यगोपयच्च कौरवः ? ॥ स्त्रीणां कुक्षौ समुत्पन्ना जिनेशाद्या नरोत्तमाः। भारतीयोपितो विज्ञा ज्ञायन्ते च नरा न किम् ? ॥ आदौ च लेखशालायां शास्त्राणि पठता त्वया। आराधिताऽऽदराद् ब्राह्मी पुण्यपूजादिदानतः ॥ सुरापा द्यूतकाराश्च चौरा बन्धकरा नराः। स्त्रियः काऽपि न दृश्यन्ते तादृशोऽतोऽबला वराः ॥ नार्यो हीना भृशं पुम्भ्य इति जल्पन्ति दुर्धियः। जननी मरुदेवी तन्निराचक्रे हि तत्क्षणात् ॥ सेवते देववत् कान्तं मृते तस्मिन् मृतिं व्रजेत्। पत्नी न च पतिः पत्न्यां मृतायां स म्रियात् क्वचित् ॥ मृते पत्यौ प्रिया सर्वं शृङ्गारं त्यजति ध्रुवम्। न क्वापि दृश्यते मुञ्चन् शृङ्गारं पुरुषः खलु ॥ मृतायां सहचर्यां तु नवीनार्याः कृते पुनः। परिधत्ते नरो वर्य–वस्त्राभरणसञ्चयम् ॥ मृते पत्यौ पतिं चान्यं नारी नाङ्गीकरोति हि। मृतायामपि पत्न्यां तु नरोऽन्यां वृणुते प्रियाम् ॥ प्रिया लक्षमिता अङ्गी–कुर्वन्नपि वरो नरः। द्वितीयं पुरुषं चाङ्गि–कुर्वती निन्द्यतेऽबला ॥ धारयन्ति धृतां नारीं ये तेऽपि स्युर्जना वराः। विंशविशोपकाद् स्वस्मिन् स्थापयन्ति सदा जने ॥ धृतपत्नीभवाः सर्वे विशोपका दश स्फुटम्। श्रूयन्ते कुतुकं ह्येतत् यत् कूटपरा नराः ॥ एवं पुंसां चरित्रं तु चमत्कारकरं भृशम्। अन्यायो निर्मितोऽन्येन पतेदन्यस्य मस्तके ॥ प्रेयस्यैवनराः प्रायः ख्याताः स्युः सुखिनः पुनः। गृहं च शोभते नार्या वर्यया सन्ततं ध्रुवम् ॥ यतः–" विधाता विश्रुतो ब्राह्म्या गिरीन्द्रो गिरिजातया। समुद्रोऽपि श्रिया जज्ञे कृष्णोऽपि रमया श्रुतः ॥ स्वस्मादन्यगृहे यान्ती स्त्रीभवत्यसती किल। नरो गृहशतेष्वेव भ्रमन्नपि च सन् स्मृतः ॥ गृहचिन्ताभरहरणं मतिवितरणमखिल-पात्रसत्करणं। किं किं न फलति गृहिणां गृहिणी गृहकल्पवल्लीवत् ॥ विद्यायाः क्रियते नैवा–हङ्कारो विदुषा क्वचित्। यतोऽहङ्कारतोऽमुत्र परत्र वाऽसुखं श्रयेत् ॥ यतः–" ज्ञानं मददर्पहरं माद्यति यस्ते-न तस्य को वैद्यः? । अमृतं यस्य विषायति तस्य चिकित्सा कथं क्रियते ? ॥ विषभारसहस्रेण वासुकिः नैव गर्जति। वृश्चिकस्तृणमात्रेणाप्यूर्ध्वं वहति कण्टकम् ॥ बलिभ्यो बलिनः सन्ति वादिभ्यः सन्ति वादिनः। धनिभ्यो धनिनः सन्ति तस्माद्दर्पं त्यजेद् बुधः ॥ अतस्त्यक्त्वा गुणिद्वेषं त्वं मुक्त्वा स्वं कदाग्रहम्। विमृश्य चेतसा सम्यग् गुणिरागत्वमाश्रय ॥ असङ्ख्यैरपि नात्मीयैः स्वल्पैरपि परस्थितैः। गुणैः सन्तः प्रहृष्यन्ति चित्रमेषां विचेष्टितम् ॥ यथा यथा परां कोटिं गुणः समाधिरोहति। सन्तः कोदण्डधर्म्माणो विनमन्ति तथा तथा ॥ एवं तस्या वचोयुक्त्या जितमात्मानमञ्जसा। मन्यमानोऽनुरागं स दध्यौ सुललितास्त्रियि ॥ मातापित्रोर्द्वयोः प्रीतौ जातायां तत्र तत्क्षणात्। हर्षाद्वैतमभूद् बोढमिन्दुः सिन्धोरिवामितः ॥ ततो महोत्सवाद्वैतं भावडस्तां कनीनिकाम्। परिणिन्ये शुभे लग्ने सर्वसज्जन-साक्षिकम् ॥ इतः श्रीविक्रमादित्ये धर्म्मध्यानपरायणे। दिवं गतेऽभवद् भूपो विक्रमाच्चरिताभिधः ॥ पालयन् स नृपः पृथ्वीं न्यायमार्गेण सन्ततम्। याचते स गजं श्वेतं जिनदत्तं धनाधिपम् ॥ वलक्षकुञ्जरा-

भावाद् जिनदत्तो महीभुजे । ग्रामान् सर्वान् वितीर्याऽभूद् धर्मी विद्धतिकृन् पुनः ॥ गृहभारं समारोप्य भावडो निजनन्दने । संसारासारतां मत्वा जिनदत्तो ललौ व्रतम् ॥ यत :—" संज्झरागजलबुब्बुओवमे जीविए जलविन्दुचंचले । जुव्वणे नईवेगसंनिभे पावजीव किमियं न वुज्झसे ॥ १ ॥" इत्यादि ॥ जिनदत्तो गुरूक्तानि वैयावृत्यानि नित्यशः । कुर्वंस्तपः परः प्राप देवलोकसुखं क्रमात् ॥ भावडो व्यवसायं तु कुर्वाणो धनमर्जति । दुष्टदोहदसंसूचि गर्भं सुललिता दधौ ॥ दुःस्वप्नैर्दुर्निमित्तैश्च मत्वा दुष्टं सुतं निजम् । जातमात्रमभूत् त्यक्तु-कामो भावडनैगमः ॥ सूनोर्जन्मनि विज्ञाय मृत्युयोगं स नैगमः । माल्हाणिसरितः कूले लात्वा पुत्रं समीयिवान् ॥ अनामकतरोः स्कन्धे मुक्त्वा दासीसमीपतः । सुतं श्रेष्ठी रहस्तस्थौ ज्ञातुं तच्चरितं तदा ॥ रुदित्वा क्षणमेकं स हसित्वा बालको जगौ । स्वर्णलक्षं मया लभ्यं किमदत्त्वा विमुञ्चथ ॥ तद्दाने महानर्थो भावडस्य भविष्यति । ज्ञात्वैतच्छ्रेष्ठिराड्-दास्यौ जग्मतुः स्वके सद्मनि ॥ कृत्वा वर्धापनं लक्ष्मीं व्ययन् स भावडो वणिग् । षष्ठीघस्रेऽव्ययत् स्वर्णलक्षमेकं सुभावतः ॥ रात्रौ स्खलहनं लात्वा पितुः पार्श्वान् स बालकः । जगाम त्रिदशावासं क्षीणे सर्वायुषि क्षणात् ॥ यत :—" सीदन्ति सन्तो विलसन्त्यसन्तः, पुत्रा म्रियन्ते जनकश्चिरायुः । दाता दरिद्रः कृपणो धनाढ्यः, पश्यन्तु लोकाः ! कलिचेष्टितानि ॥ याचित्वा पूर्ववत् स्वर्ण-लक्षत्रितयमङ्गजः । स्थितो यावत्तदा धर्म्मेऽव्ययीत् तदपि भावडः ॥ यतः " एकस्य दुःखं न यावदन्तं, गच्छाम्यहं पारमिवार्णवस्य । तावद् द्वितीयं समुपस्थितं मे, छिद्रेष्वनर्था बहुलीभवन्ति ॥ १ ॥" एवं सून्वोर्द्वयोर्मृत्युं गतयोरपि तत् क्षणात् । भावडो गेहिनीयुक्तो धत्ते शोकं मनाग् न हि ॥ यत :—" जे जिणधम्मह बाहिरा ते जाणो बाचारि । उगी उगी खयगया संसारीया संसारी ॥ १ ॥" अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसङ्ग्रहः ॥ षष्ठीजागरणे तत्र कृते मृत्युं गते सुते । जनाः प्रोचुर्गृहे नास्याभाग्याच्च तिष्ठतः सुतौ ॥ भावडस्य गृहे षष्ठी-जागरा सहते न हि । दुष्टो वा निर्जरो कोऽपि श्रेष्ठिनोऽस्याऽऽलये खलु ॥ " अनाज्यं भोज्यमप्राज्यं विप्रयोगः प्रियैः समः । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥ कियत्यपि गते काले गर्भं तृतीयकं शुभम् । दधौ सुललिता सुष्ठु स्वप्नोपसूचितं क्रमात् ॥ शुभेऽह्नि सुनिमित्तैश्च पूर्णे रुचिरदोहदैः । सुषुवे भावडप्राण-प्रिया पुत्रं सुलक्षणम् ॥ ततोऽनामकवृक्षस्या-धस्ताद् मुक्तः सुतः स च । हसित्वाऽवग् मया रैणां लक्षा एकोनविंशतिः ॥ देया सन्ति पितुस्तेनाऽवतीर्णोऽस्मीह साम्प्रतम् । अतो हर्षो विधातव्यो मातापित्रादिभिः सदा ॥ युग्मम् ॥ षष्ठीजागरणं कर्तु-कामोऽभूद्भावडो यदा । जिनदत्तसुताऽभ्येत्य जगादेति तदा स्फुटम् ॥ षष्ठीजागरणं सूनो-रस्य चेद्धि करिष्यते । तदा विषोदनान्मृत्युं साधयिष्यामि साम्प्रतम् ॥ नाम्ना जावडिरेषोऽस्तु जीवतान् म्रियतां च वा । मिथ्यात्वं मुच्यतां जैनो धर्म्मोऽत्र क्रियतां दृढम् ॥ यत :—" मिथ्यात्वं परमो रोगो मिथ्यात्वं परमं तमः । मिथ्यात्वं परमः शत्रुः मिथ्यात्वं परमं विषम् ॥ १ ॥" जन्मन्येकत्र दुःखाय रोगो ध्वान्तं विषं रिपुः । अपि जन्मसहस्रेषु मिथ्यात्वमचिकित्सितम् ॥ षष्ठीजागरणं मुक्त्वा धर्म्मकृत्यान्यनेकशः । भावडः कारयन् कुर्वन् वर्द्धयामास नन्दनम् ॥ पाठयोग्यं सुतं मत्वा भावडः पण्डितान्तिके । पठनायाऽमुचत्पुत्रं जावडिं विनयान्वितम् ॥ जावडिः प्रपठन् शश्वच्छास्त्राणि गुरुसन्निधौ । सुराचार्य इवाभीक्ष्णं जल्पति स्म बुधैः समम् ॥ यतः—" विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ १ ॥" लक्ष्मीः स्वर्णरूपापि पाणिपादेषु योज्यते

भूषयत्यन्तरात्मानं वर्णरूपापि भारती ॥ रूपयौवनसम्पन्ना विशालकुलसम्भवाः । विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ यौवने धनदश्रेष्ठि-सुतां सीतामियां वराम् । परिणिन्ये शुभे लग्ने जावडिः शम्भुवत् सतीम् ॥ कुर्वाणा विनयं पत्युः श्वश्रु-श्वशुरयोरपि । सीता वितनुते जैनं धर्म्मं शिवसुखप्रदम् ॥ यतः—“ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपातिवित्तमनघं शीलं सुगत्यावहम् । शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं, शीलं निर्वृतिहेतुरेव परमं शीलं तु कल्पद्रुमः ॥ १ ॥ ” पुण्डरीकाचले तीर्थे चतुर्दशीदिने सदा । गत्वा युगादिदेवस्य जावडिर्विदधेऽर्चनाम् ॥ त्रिवारं श्रीजिनेन्द्रार्चां प्रतिक्रान्ति करन् सदा । वन्दनानि गुरोः पाद-युग्मे दत्ते स्म भावडः ॥ पितृवज्जावडिरपि धर्म्मकर्माणि भावतः । कुर्वन् धर्म्मिष्ठलोकानां धुरि रेखामवाप्तवान् ॥ यतः—“ स्थाने निवासः सकलं कलत्रं, पुत्रः पवित्रः स्वजनानुरागः । न्यायर्यात्त-वित्तं स्वहितं, च चित्तं, निर्दम्भधर्म्मस्य सुखानि सप्त ॥१॥ ” पित्रा सार्द्धं गतोऽन्येद्युर्जावडिः सिद्धपर्वते । श्रुत्वा तीर्थस्य माहात्म्यं जगादेति पितुः पुरः ॥ एकोनविंशतिर्लक्षा रैणां तीर्थे इह ध्रुवम् । व्ययनीया मयार्चायाः स्थापनाच्छिवशर्म्मणे ॥ ततो भावड आचष्ट प्रतिज्ञा या कृता त्वया । पालनीया च सा लोह-वज्ररेखा-दिवद् दृढम् ॥ तत्र प्रभोर्विधायाऽर्चां भावडः सुतसंयुतः । आगत्य सन्ततं धर्म्मं जैनं चक्रे सुभावतः ॥ अन्ये-द्युर्भावडो मत्वा जातकात् स्वायुरल्पकम् । गुरुनाकारयामासा-राधनाकार्यहेतवे ॥ सम्यगाराधनां कृत्वा क्षमयित्वा जीवावलीं समाम् । कारयामास सार्वार्चां भावडो जिनसद्मसु ॥ यतः—“ जननं यदि जात-मङ्गिनां, मरणं तन्नियतं भविष्यति । इति निश्चयतः प्रमोदभाग्, तदिदं पण्डितमरणमाश्रय ॥ वीरम-मित्रमाकार्य क्षमयित्वा यथोचितम् । भावडोऽवक् सुतोऽयं ते खोलके स्थापितो मया ॥ आमस्तु वीरमे-णोक्ते प्रपद्यानशनं तदा । भावडः श्रीजिनाधीश-स्मृत्येकाग्रमना अभूत् ॥ जगौ सुललिता कान्तं त्वयेष्यामि सहाऽधुना । भावडोऽवक् कुलेऽस्माकं न चास्ति काष्ठभक्षणम् ॥ काष्ठभक्षणतो नार्यो नरा अपि निर-न्तरम् । लभन्ते दुर्गतिं भूरिदुःखसन्ततिदायकम् ॥ यतः—“ रज्जुगहविसभक्खण जलजलणपवेसतण्ह छुहदुहओ । गिरिसिरपडणाउ मुआ सुहभावा हुंति वंतरिया ॥ १ ॥ ” प्रपाल्याऽनशनं सप्त-विंशतिं वास-रान् क्रमान् । भावडः स्वरगाद्यावत्तावत्पत्न्यशृणोत् स्वयम् ॥ पत्युर्मृतेः श्रुतेऽकस्मात् हुङ्कारवज्रनन्दिनी । भावडप्रिया कुर्वाणा समं सुध्यानमानसाः ॥ परलोकस्य कृत्यानि मातापित्रोस्तयोस्तदा । जावडिः कृतवानेक-स्थानके धर्म्मशेखरः ॥ संसारासारतां ध्यायन् शोकं विहाय जावडिः । धर्म्मकर्म्मपरो जातो देवगुर्वोर्नि-षेवकः ॥ हायनेषु गतेष्वेव कियत्सु जावडिर्जगौ । अद्य वीरम ! मद्गेहे स्तोकैव श्रीर्निरीक्ष्यते ॥ पितुः पार्श्वे मयाऽभ्युक्तं लक्षा एकोनविंशतिः । स्वर्णानां व्ययितव्यैव सिद्धाद्रौ पुण्यहेतवे ॥ गृहलक्ष्मीं विलोक्याथ यानान्यष्टादश द्रुतम् । जावडिः सज्जयामास यातुं पाथोधिवर्त्मनि ॥ यतः—“ तावन्माता पिता तावत् तावत् सर्वेऽपि बान्धवाः । तावद्भार्या सदा हृष्टा यावल्लक्ष्मीर्गृहे स्थिरा ॥ १ ॥ ” आवगप्लवगौ कृत्वा नानाविधक्रयाणकैः । भृत्वा यानानि पाथोधि-मार्गेण वीरमोऽचलत् ॥ जावडिर्विहृतिं कुर्वन् धर्म्मध्यानपरायणः । गुरून् शुश्रूषयामास चक्रे देवार्चनं पुनः ॥ गत्वाऽऽदौ सिंहलद्वीपे व्यवसायं वितन्वतः । वीरमस्याभवल्लाभः चतुःपञ्चगुणः क्रमात् ॥ ततो यानानि गच्छन्ति स्वर्णकूलं प्रति त्वरा । वातेन निन्यिरे दूरं तथा यथाऽध्व वेत्ति न ॥ गोमुखो जावडेर्यान-पात्राणि समीरैस्तदा । चिक्षेप दूरतस्तूलपुञ्जवत् क्रुद्धमानसः ॥ यानानि यान्ति पाथोधौ समैयुरुद्वसे तटे । क्रमेण त्रुटितं सर्वं

शम्बलं यानमध्यतः ॥ ततोऽतिदुःखिता लोका धान्याभावान्निरन्तरम् । पत्रादि कुट्टयित्वा चोदरं बिभ्रुर्निजं निजम् ॥ यत :—" तावन्मनोनिवासान्तर्निवसन्ति गुणसम्पदः । बुभुक्षा राक्षसी सेयं यावद् धावति न क्षुधा ॥ १ ॥ " पञ्च नश्यन्ति पद्माक्षि ! क्षुधार्त्तस्य न संशयः । तेजो लज्जा मतिर्ज्ञानं मदनश्चापि पञ्चमः ॥ " जीवंति खग्गछिन्ना पव्वयपडिआवि केवि जीवंति । जीवंति उदहिपडिया चहुछिन्ना न जीवंति ॥ १ ॥ जीवंति अवहपडिया भचरय पडिया पुणोवि जीवंति । भूख भमाडी तओ भणिओ सब्बो वाई माइ मोरियाकुटथ्यो बाहिरओ माणुस आणइ ठाइ ॥ २ ॥ " खादन्तः कानने तत्र पत्राणि शाखिनां जनाः । वन्यानि समयं भूरि निन्युर्दुःखितचेतसः ॥ मुद्गा निष्पावा नीरखण्डिकास्तथा । मसुरराल- गोधूमाकलत्थस्तुवरी तथा ॥ श्यामाकश्च प्रियङ्गुश्च पवनालो चुगन्धरी । भद्रदीशण सिद्धार्थ तिलवे- जगवेधुकाः ॥ इत्यादि वन्यधान्यानि कङ्गुकलमवर्जरी । खादं खादं सुखं तस्थुर्यानिका मनुजास्तदा ॥ त्रिभिर्विशेषकम् ॥ धान्यानि शुष्कयित्वा ते जना यानानि हर्षितः । भृत्वा स्वकीयनिर्वाहं चक्रुर्धर्म्मपरा- यणाः ॥ ततश्च चालयन् यान–पात्राणि वीरमो वनात् । रत्नद्वीपे तदा गन्तुं वाञ्छति प्रतिवासरम् ॥ तदा गोमुखयक्षेणोत्पाटय यानानि वायुना । निन्यिरे सैन्धवद्वीपे सौवर्चलाद्रिशालिनि ॥ यतः—एकस्य दुःखस्य न यावदन्तं, गच्छाम्यहं पारमिवार्णवस्य । तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ सैन्धव- वैकचकैश्चापि भृत्वा यानानि वीरमः । ययौ द्वादशमे वर्षे स्वर्णद्वीपान्तिके क्रमात् ॥ तदानीं वीरमस्याङ्घ्रौ कर्पिते कण्टके सति । यदा रक्तं वहन्नेव तिष्ठति स मनागपि ॥ तदाऽवग् मालिमो गच्छ वीरमात्र तटे द्रुतम् । रक्षां लात्वा व्रणे देहि यथा तिष्ठति शोणितम् ॥ गत्वाऽथ वीरमस्तत्र बन्धित्वाङ्घ्रौ रजस्तदा । स्वर्णखण्डानि रक्षाया मध्येऽपश्यत्तमां तदा ॥ जायते काञ्चनं धूल्याऽनयेति वीरमस्तदा । ज्ञात्वा हृष्टोऽ- भवच्चित्ते कस्याग्रे तज्जगाद न ॥ स्थगयित्वा रजोभिस्तत् स्वर्णं वीरमो वणिग् । अभ्येत्य मालिमोपान्ते जगादेति वरस्वरम् ॥ ममाङ्घ्रितो वहद् रक्तं रजसाऽनेन साम्प्रतम् । स्थितं तेनामुना यानपात्राणि भ्रियतां दृढम् ॥ कदाचिद् गम्यते स्वीये पुरे घातांजिकास्तदा । बध्यते द्रव्यं स्थीयतेऽतः सुखं किल ॥ द्वार ढीका लगुः कारंकारं तव वचोऽनिशं । भग्नाः स्म छुटयते नैव त्वत्पार्श्वान्मरणं विना ॥ वारसोऽवक् स्वकग्रामे गम्यते कुशलेन चेत् । तदा यानानि वो धूलिर्ममैव भवताद् ध्रुवम् ॥ ततश्च साक्षिणः कृत्वा त्यक्त्वा सौवर्चलादिकं । धूलिं क्षेप्तुं यदा लेगु यानेपु ते च यानिकाः ॥ पूर्वस्थगितः हेमार्थं वीरमस्ते समं वहन् । धूलिं चिक्षेपतत् स्वर्णं यानमध्ये रहोऽखिलम् ॥ चालितेपु ततो यान–पात्रेपु वीरमो वणिग् । दध्यौ कथं तु गम्येत स्वपुरे वार्द्धिवर्त्मना ॥ न ज्ञायते कुकुभ् कस्यां दिश्यतो गम्यतेऽधुना । पुण्यमेवा- स्वतो मेऽत्र शरणं श्रीजिनक्रमौ ॥ यत :—" धर्म्मो महामङ्गलमङ्गभाजां धर्म्मो जनन्युदलि- ताखिलार्त्तिः । धर्म्मः पिता पूरितचिन्तितार्थो धर्म्मः सुहृद्वर्द्धितनित्यहर्षः ॥ इतो मधुमतीपुर्यां तन्तु वायुं कपर्दिकम् । प्रिये आडिकुहाड्यौ तु सेवते मद्यदानतः ॥ वपन् वस्त्रं कपर्दी तु तन्तुवायुः पिबन् सुराम् । पत्नी द्वयशयाद् दृष्टः स्वल्पायुर्गुरुणा तदा ॥ गुरुणोक्तं कुरु प्रत्या–ख्यानं ग्रन्थिसमन्वितम् । ततो लाभो महानेव भविष्यत्यग्रतो ध्रुवम् ॥ पोरिसि चउत्थछट्ठे काउ कम्मं खवंति जं मुणिणो । ततो नारयजीवा वाससयसहस्सलक्खेहि ॥ १ ॥ जे निच्चमपमत्ता गंठिं बंधंति गंठिसहियम्मि । सग्गा पवग्गसुक्खं तेहिं निबद्धं सगं ठिंमि ॥ २ ॥ भणिऊण नमुकारं निच्चं विम्हरण वज्जिया धन्ना । पारं ति गंठिसहिय गंठिं सह कम्मगंठीहिं ॥ ३ ॥ " गुरुणा गदिते प्रत्या–ख्याने चाङ्गीकृते सति । कपर्दिना

गुरुर्भीम-मध्ये च समुपेयिवान् ।। शकुन्यास्यात्तसर्पस्या-ननात् क्ष्वेडं सुरान्तरे । न्यपतत् सोऽपि तां मौढ्यात् पपौ मृत्युं गतः क्षणात् ।। पातालभवने तन्तु-वायुर्मृत्वा तदा क्षणात् । यक्षेष्वजनि यक्षः स कपर्द्याह्वो लसत्तनुः ।। दृष्ट्वा मृतं पतिं पत्न्यौ गत्वा मध्येपुरं द्रुतम् । आलं दत्त्वा गुरोः कारा-गारे प्राक्षिपतां नृपात् ।। यत :—" पापी रूपविवर्जितः पिशुनवाग् यो नारको नाऽभवत्, तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः । मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्यलोकागतो, यस्तु स्वर्गपरिच्युतः स सुभगः प्राज्ञः कविः श्रीयुतः ।। १ ।।" ज्ञात्वा कपर्दियक्षस्तु पातालस्थो निजं गुरुम् । कारागारस्थितं ग्रामो-परि प्रस्तरमादधौ ।। बलिना प्रीणितो यक्षो जगावेष गुरुर्मम । निरागः किं नृप ! क्षिप्तो गुप्तिगेहे त्वयाऽधुना ?।। राज्ञोदितं गुरुस्ते को-ऽक्षेपि कारागृहे मया। ततः स्वगुरुसम्बन्धं स सुरः प्रोक्तवान् समम् ।। देवेन कथिते स्वीय-गुरुसम्बन्ध आदितः। भूपतिः कर्पयामास तं गुरुं सेवते स्म च ।। अपसार्य शिलां नत्वा गुरुं यक्षो जगावदः । अहं त्वया गुरो ! नीतः स्वर्गसौख्ये मनोहरे ।। यतः—" मंसासी मज्जरउ इक्केण चेव गंठिसहिएणं । सोहं तु तंतुवाओ सुसाहुवाओ सुरो जाओ।। १ ।।" मया तमः कृतं भूरि पुरा ह्यविरतितः खलु । निष्पापोऽहं कथं स्यां तु ततः पापाद् गुरो ! वद ?।। गुरुर्जगाद पापानि लगन्ति देहिनां खलु। छुट्यते तु ततस्तीर्थ-सेवया पुण्यकृत्यतः।। यतः—" वरमेकदिनं सिद्धि-क्षेत्रे सर्वज्ञसेवनम् । न पुनस्तीर्थलक्षेपु भ्रमणं शभाजनम् ।। १ ।।" एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः प्रमुच्यते ।। न रोगा न च सन्तापो न दुःखं न वियोगिता । न दुर्गतिर्न शोकश्च पुंसां शत्रुञ्जयस्पृशाम् ।। शत्रुञ्जये महातीर्थे श्रीयुगादिजिनक्रमौ । सेवस्व त्वं तथा सङ्घः यथा निर्विघ्न एति च ।। ततो नत्वा गुरुं यक्षो यदाऽगात् सिद्धपर्वते । श्रयितुं वृषभं सार्वं पूर्वपातकपिष्टये ।। तदाऽऽदिदेवपादाब्ज-सेवको गोमुखः सुरः । न स्थातुं ददते तत्र कूणं-तस्य कपर्दिनः ।। ततो दध्यौ कपर्दी च गोमुखं यक्षमञ्जसा । दूरीकृत्य मया सेव्यं तीर्थं शत्रुञ्जयाभिधम् ।। ततो जावडिना धर्म्मव्ययं मनपितं पितुः । ज्ञात्वाम्भोधौ गतो नेतुं यानानि मधुके पुरे ।। आकाशस्थः सुरोऽवादीद् भो वीरम ! वणिग्वरः। मम पृष्ठौ तथाऽऽगच्छ यथा त्वां स्वपुरे नये।। तदा यक्षवचः श्रुत्वा वीरमो वहनानि तु। तस्य शब्दानुसारेणा-चालयद्धर्म्मतत्परः।। इतो जावडिरत्यन्त-दौस्थ्येन पीडितः क्रमात्। वभारोदरमात्मीयं दुःखात्प्रान्ते दिनस्य हि ।। मलक्लिन्नतनुं जीर्ण-वस्त्रं दुर्बलविग्रहम् । जावडिं वीक्ष्य जनता हसन्ति प्रतिवासरम् ।। यतः—" यस्याऽस्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च माननीयः, सर्वे गुणाः काञ्चनमाश्रयन्ते ।। १ ।। निर्दयत्वमहङ्कार-स्तृष्णा कर्कशभाषणम् । नीचपात्रप्रियत्वं च पञ्च श्रीसहचारिणः ।। २ ।।" भक्ते द्वेषो जडे प्रीति-ररुचिर्गुरुलङ्घनम्। मुखे कटुकता नित्यं धनिनां ज्वरिणामिव ।। केऽपि सहस्रम्भरयो लक्षम्भरयश्च केऽपि केऽपि नराः । नात्मम्भरयः केचन फलमेतत् सुकृतदुःकृतयोः ।। पितुर्मनीषितं चक्रे यत्पुरा मयका किल । तत्कथं पूर्यते लक्ष्म्यभावाद् दध्यौ स जावडिः ।। ततोऽन्यदा निशीथिन्यां सुप्तस्य जावडेः सतः। अभ्येत्यावक् कपर्दी स यक्षो जागृहि जावडे ! ।। लक्ष्म्यभावात्त्वया खेदः कर्त्तव्यो न हि चेतसि । एष्यन्ति तव यानानि कुशलेन न संशयः ।। जावडे ! तरसोत्तिष्ठ पितुर्मनीषितं दृढम् । त्वं पूरय समेष्यन्ति कल्ये यानानि दूरतः ।। ततस्त्वरितमुत्थाय कपर्दिकवचो दृढम् । स्थिरीकृत्य हृदि स्वीये जावडिर्मुमुदेतराम् ।। स्मरन् पञ्चनमस्कारान्

जावडिः स्वगृहात् प्रगे । गत्वा माण्डविकोपान्ते जगादेति मुदञ्चितः ॥ अद्येष्यन्ति मदीयानि यानानि कुशलेन हि । अर्द्धं शुल्कमहं दास्ये समेतस्यार्थवस्तुनः ॥ जगुर्माण्डविका हास्याज्जावडिः श्रेष्ठिराड्ढयम् । सुप्तो व्योम्नि निशीथिन्यां निःस्वत्वाद् ग्रथिलोऽजनि ॥ यतः—" निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसा, निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति । निर्विण्णः शुचमेति शोकसहितो बुद्धेः परिभ्रश्यते, निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्वापदामास्पदम् ॥ तेषां हास्यवचः श्रुत्वा जावडिः प्रोक्तवानिति । जायते भरितं रिक्तं रिक्तं च भरितं पुनः ॥ अरघट्टेषु नाड्यो रिक्ताश्च भरिताः क्रमात् । युष्माभिर्वीक्षिताः किं न भो ! माण्डविकाः किल ? ॥ मदो न क्रियते लक्ष्म्याः सद्भिः स्वहितमिच्छुभिः । अहं निःस्वोऽभवं पूर्वो-पार्जितासुकृतोदयात् ॥ सत्यामपि श्रियि प्रायो दुःखिनो मनुजा घनाः । दृश्यन्ते स्वेप्सिताभाव-सिद्धिर्ग्रामे पुरे पुरे ॥ यतः—" निर्द्रव्यो धनचिन्तया धनपतिस्तद्रक्षणे चाकुलो निःश्रीकस्तदुपायसक्तमतिः श्रीमानपत्येच्छया । प्राप्तापत्यपरिग्रहोऽपि सततं रोगैरभिद्रूयते जीवः कोऽपि कथंचनापि नियतं प्रायः सदा दुःखितः ॥ १ ॥ " तथापि क्रियतामर्द्धं शुल्कं भवद्भिरञ्जसा । ततो माण्डविका हास्य-परास्तं प्रत्यवदन्निति ॥ जावडे ! गच्छ ते प्रोक्त-मस्माभिर्मानितं दृढम् । जावडिः प्रोक्तवान् कोऽत्र साक्षी सम्प्रति कथ्यताम् ॥ ततो हास्यपराः शुल्क-ग्राहिणो जगदुः स्फुटम् । अयं वारिनिधिः साक्षी भवतात् प्रकटोदयः ॥ ततोऽम्भोधितटे गत्वा स्थित्वोच्चस्थानके तदा । यानानि प्रतिवीक्ष्येत पुनः पुनः स जावडिः ॥ हसन्ति स्म तदा लोका जावडिं मुदिताशयः । त्वं किं मद्यामम्बरे सुप्तोऽथवाऽभूर्ग्रथिलः किमु ॥ न द्व्येतिर्हायने याते येषां शुद्धिः श्रुता मनाग् । यानानि तानि किमद्य आगच्छन्त्यद्य जावडे ! ॥ चिन्तितं त्वरितं केषां न शुद्धयति विना वृषम् । पुण्येन जायते चित्त-चिन्तितं तरसा वणिग् ॥ एवं लोकेषु जल्पत्सु वार्द्धिमध्येऽतिदूरतः । प्रादुर्भूतानि यानानि समाजग्मुर्दृशां पुरः ॥ तत्रस्थजावडेर्याना-दुत्तीर्य वीरमो यदा । अमिलच्च तदाऽनंसी-द्वीरमाङ्घ्री स जावडिः ॥ धूल्यानया भावस्वर्णमित्युदन्तं स वीरमः । जावडेः पुरतोऽप्राक्षीत् (प्राह) ततो जहर्ष जावडिः ॥ यानेभ्यो निखिला धूलीरुत्तार्ययत्ततस्तदा । रहः स्वर्णगेहेऽनैषी-द्यानायातं स वीरमः ॥ बोहित्था हि समस्तापि नाविकेभ्यः स वीरमः । वितीर्य प्रीणयामास स्वन्नवस्त्रप्रदानतः ॥ तदा लोका जगुर्धूली-रभान्याज्जावडेर्गृहे । समागादन्यगेहेषु यानानि निखिलान्यपि ॥ धमं धमं ततो धूली-र्जावडिर्वीरमान्वितः । चक्रे स्वर्णं यदा जगु-स्तदा ते शुल्किनश्च ते ॥ लोभात्ते शुल्किनः शुल्कं पूर्णं जावडिपार्श्वतः । जगृहुर्हठतो दूनोऽजनिष्ट जावडिस्तदा ॥ यतः—" तृष्णा खानिरगाधेयं दुःपूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ १ ॥ " मुखं वलिभिराक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरलायते ॥ ततः खिन्नो भृशं चित्ते जावडिः सिन्धुसन्निधौ । गत्वोपालब्धवान् वार्द्धिं तादृशैर्वचनैरिति ॥ त्वयि साक्षिणि देवे तु सबलेऽपि पयोनिधे ! । शुल्किभिर्वञ्चितोऽहं हि पूर्णशुल्कस्य लानतः ॥ प्रादुर्भूय तदा सिन्धु-निर्जरः प्रोक्तवानिति । त्वमितो नगराद्बाह्य-देशे वासं विधेहि भोः ! ॥ ततो जावडिनाऽन्यत्र कृते गेहे पुराद्बहिः । लोका जगुस्तदा लक्ष्म्या श्रेष्ठ्यभूद् ग्रथिलः किमु ॥ यतः—" अन्धा इव धनान्धाः स्यु-रिति सत्यं तथापि ते । अन्योक्तेनाध्वनो गच्छ-न्त्यन्यहस्तावलम्बिनः ॥ १ ॥ मदिरामदमत्तो हि किं शृणोति च पश्यति । कमला मदमत्तस्तु न शृणोति न पश्यति ॥ महद्वेलाछलाद्वार्द्धि-सुरो रुष्टमनास्तदा । लोकान् माण्डविकादींश्च स्वमध्ये प्राक्षिपत् क्षणात् ॥ ततो मधुमतीलोको जावडेः स्वप्नतोऽभितः । उवासान्तः पुरं तच्च

मधुमत्यभिधं श्रुतम् ॥ ततो भावडभूर्भूत्वा महेभ्यः कमलां स्वीयाम् । विलसद्धर्म्मकृत्यानि व्यस्मार्षीत् पितुरञ्जसा ॥ यतः—"प्रायः स्मरति धर्म्मं तु दारिद्र्ये समुपागते । पुण्यं विस्मरति प्राप्ते धने पुंसां न संशयः ॥ १ ॥ निर्दयत्वमहङ्कार-स्तृष्णा कर्कशभाषणम् । नीचपात्रप्रियत्वं च पञ्च श्रीसहचारिणः ॥ लक्ष्मीर्लक्षणहीनस्य जातिहीनस्य भारती । कुपात्रे रमते नारी गिरौ वर्षन्ति माधवाः ॥ इतः कपर्दिकोऽभ्येत्य जगाद जावडिं प्रति । विस्मारितं त्वयेदानीं पितुर्मनीषितं धनम् ॥ उत्तमैर्जल्पितं यद्धि तदेव पाल्यते दृढम् । अतो मनीषितां लक्ष्मीं व्यय त्वं सिद्धपर्वते ॥ यतः—"सत्कृज्जल्पन्ति राजानः सत्कृज्जल्पन्ति साधवः । सकृत् कन्या प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥ १ ॥" जगाद जावडिः कुत्र व्ययामि विभवं वद ? । कपर्दी प्राह सिद्धाद्रौ व्यय पित्रुदितां श्रियम् ॥ व्ययिता कमला धर्म्म-स्थाने शत्रुञ्जयादिके । अनन्ता जायते मुक्ति-सुखं दत्ते क्रमात्पुनः ॥ यतः—"दायादा स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो, गृह्णन्ति छलमाकलय्य दहनो भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ते हठाद् दुर्वृत्तास्तनया नयन्ति निधनं धिग् बह्वधीनं धनम् ॥ १ ॥" क्लेशाय विस्तराः सर्वे सङ्क्षेपास्तु सुखावहाः । परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ गोशतादपि गोक्षीरं मानं मूढशतादपि । मन्दिरे मञ्चकस्थानं शेषाः परपरिग्रहाः ॥ जावडिः प्रोक्तवाँस्तर्हि पुण्यं किं सिद्धपर्वते । करोम्यहमद्य प्राह कपर्दी जावडिं प्रति ॥ पूर्वं तक्षशिलायां तु सूत्रधारगृहान्तरे । कारितं भरतेनादि-जिनबिम्बं समस्ति हि ॥ तदत्र शिवशैले त्वं समानीय धनव्ययात् । स्थापय मूलनाथस्य स्थाने जावडि नैगम ! ॥ कल्येऽत्र तुरगाः पञ्च-वर्णाः पञ्चशतीमिताः । समेष्यन्ति च ते ग्राह्या भवता बहुमूल्यतः ॥ पुनस्तुरङ्गमाः पञ्च-वर्णा रोगप्रपीडिताः । समेष्यन्ति शतान्यष्टौ तेऽपि ग्राह्यास्त्वयाऽचिरात् ॥ वीरमानीतधूल्याम्बु-सिक्ता रोगविमुक्तताम् । यास्यन्ति च ततस्तक्ष-शिलायां तान्नयाचिरात् ॥ तत्र पुरे प्रगे भूमी-पतेरश्वान् पृथक् पृथग् । प्राभृतीकुर्वतस्ते भू-नाथस्तुष्टो भविष्यति ॥ ततो भूमीपतिर्बिम्बं तत्र तव प्रदास्यति । आनीयात्र त्वया स्थाप्यं निर्विघ्नं नैगमोत्तम ! ॥ यक्षोक्तान् घोटकान्नीत्वा पञ्चवर्णान् धनार्पणात् । गत्वा तस्मिन् पुरेऽश्वानां पृथक् पृथक् प्रढौकनात् ॥ अनुकूल्य महीपालं सूत्रधारनिकेतनम् । ययौ च जावडिः सूत्र-धारस्तस्मै ददाति च ॥ नव लक्षा सुवर्णानां मार्गिते निजसद्मनः । सूत्रधारेण वणिजो सत्यङ्कारे ददेऽङ्गुली ॥ तदेत्य गोमुखो यक्षः सूत्रधारान्तिके जगौ । कोट्या हेम्नां न लभ्येत त्वदीयं सद्म साम्प्रतम् ॥ यतः—"यतोऽस्ति तव गेहस्य मध्ये भूमिगतं स्फुटम् । आद्यार्हत्प्रतिमा भूरि-कोट्या सैव न लभ्यते ॥१॥" बह्वीभिः कोटिभिर्हेम्नां त्वया जावडये मनाग् । दातव्यं स्वगृहं नैव कोटाकोटीं च मार्गय ॥ न दास्येऽहं गृहं तुभ्य-मित्युक्ते सूत्रधारिणा । विवादोऽभूद् द्वयोः शश्वद् वर्षं यावन्नृपाग्रतः ॥ एकदा सूत्रधारस्य मुखेऽवतीर्य वेगतः । कपर्द्याह ददस्व त्वं नव लक्षान् गरुत्मताम् ॥ ततः साक्षिणमुर्वीशं कृत्वा जावडिनैगमः । यावल्लक्षान्नवादत्त तावद् गोमुख ईयिवान् ॥ भोः सूत्रकृत् त्वयाऽदायि समर्घं स्वगृहं किमु ? । सूत्रधारो जगौ कुर्वे दत्तं गेहं मया मुधा ॥ साक्ष्याऽत्राजनि भूपालो गृहीतं तु धनं मया । अतो न शक्यते वक्तु-मन्यदेवाधुना मनाग् ॥ ततो रथकुले यत्ना-दारोह्य शोभनेऽहनि । तद् बिम्बं जावडिः शत्रु-ञ्जयं प्रत्यचलन्मुदा ॥ ततो भावडभूर्गच्छन् यामिन्यां यत्र तिष्ठति । नितराय प्रतिमां पश्चाद् गोमुखः स्थानकात्ततः ॥ एवं मासद्वये तस्मिन् कुर्वाणे गोमुखे हठात् । खिन्नोऽभूज्जावडिर्यावत्तावत् कपर्द्यवग् ध्रुवम् ॥ गोमुखो यक्षराट् शत्रु-ञ्जये युगादिसेवकः । सहते न मनाग् बिम्बं

तत्रागच्छद् वणिग्वर ! ॥ अधो रथकुलस्य त्वं पश्चात्तिष्ठ प्रियायुतः । यथा रथकुलः शीघ्रं सिद्धाद्रौ याति भद्र ! भोः ! ॥ सती तु विद्यते पत्नी तव त्वं च सुशीलवान् । अतो न गोमुखो विघ्नं कर्त्तुं शक्नोति तत्र तु ॥ यतः—" देवदाणवगंधव्वा जक्खरक्खसकिन्नरा । बंभयारिं नमंसंति दुक्करं जे करंति तं ॥ १ ॥ " ततः कपर्दियक्षोक्त-विधिना भावडाङ्गजः । अनैषीत् प्रतिमां सिद्ध-शैलस्योर्ध्वं प्रयत्नतः ॥ तदा गोमुख-यक्षस्तु कृत्वा विघ्नानि जावडौ । असमर्थोऽभवत् खिन्न-स्तस्थौ च प्रभुसन्निधौ ॥ मेलयित्वा जनान् कोटीः सप्ताष्टप्रमितान् वरान् । जावडिर्विभवं भूरिं व्ययन् सिद्धाद्रिमीयिवान् ॥ स्नात्रं कृत्वादिदेवस्य प्रतिमां तां पुरातनीम् । यदोत्थापयितुं लग्नो जावडिः सङ्घसंयुतः ॥ ततः स्वस्थानकादुत्था-प्यमान-विम्बमर्हतः । नोत्तस्थौ गोमुखेनैवा-धिष्ठितं स्वप्रभावभृत् ॥ तदा जावडिना सङ्घ-युक्तेनेति निवेदितम् । पूजादौ मूलनाथस्य कार्याऽन्येषां ततोऽर्हताम् ॥ उक्तञ्च—" आदौ नतिः स्नात्रपूजा-ध्वजाऽऽरात्रिक-मङ्गले । विधाय मुख्यनाथेऽस्मिन् ततोऽस्मिँश्च करिष्यति ॥ १ ॥ " ततो जावडिना सङ्घयुक्तेन च कपर्दिना । उत्थापितः प्रभुर्मुख्य-स्तथा राटिर्व्यधाद् दृढम् ॥ यथा द्विधाऽभवन्मुख्यं शृङ्गं सिद्धमहीभृतः । ततो जावडिनाऽस्थापि विम्बं तत्र निजं मुदा ॥ शुभोदर्कामिमां देव-प्रतिमां मुक्तिशंप्रदाम् । प्रत्यतिष्ठि-पदाचार्यो वज्रस्वामी शुभेऽह्नि 'तत्र वज्रगुरुः प्रत्यतिष्ठिपद् रुचिरेऽहनि' पाठान्तरम् ॥ विक्र-मार्काद्वसुव्योम-चन्द्रप्रमितवत्सरे । जावडिः स्थापयामास विम्बं नव्यं शिवाचले ॥ तदा मुदा समागत्य देवा अपि निजालयात् । महोत्सवं व्यधुर्विश्व-चमत्कारकरं नृणाम् ॥ अथ ध्वजादिरोपं तु कृत्वा पत्नीसमन्वितः । यावन्नृत्तं विधातुं हि प्रवृत्तः शिखरस्थितः ॥ यतः—" सयं पमज्जणे पुण्णं सहस्सं च विलेवणे । सयसाहस्सिआ माला अणंतं गीयवाईए ॥ १ ॥ " तदा उत्पाट्य यक्षेण गोमुखेन प्रियायुतः । मुक्तोऽरण्ये व्यधाद् ध्यानं सिद्धभूमीभृतो हृदि ॥ तत्रापि कुर्वतो धर्म्म-ध्यानं वर्यं च जावडेः । सप्रियस्या-भवत्तुर्ये स्वर्गे गमनमञ्जसा ॥ यतः—" एकाग्रचित्तस्य दृढव्रतस्य, पञ्चेन्द्रियप्रीतिनिवर्त्तकस्य । अध्यात्म-योगे गतमानसस्य, मोक्षो ध्रुवं नित्यसुखं न कस्य ? ॥ १ ॥ उक्तञ्च—" वाहुल्याद्धर्षसम्पत्ते-रायुषः क्षयतोऽपि तौ । हृदयस्फोटनतस्तुर्ये स्वर्गेऽभूतां सुरौ वरौ ॥१॥ " एके चैवं वदन्ति । ध्वजारोपादनूत्पाट्य जावडिः प्रेयसीयुतः । गोमुखेनोत्तरश्रेणौ मुक्तो वैताढ्यभूभृतः ॥ जावडेः स्वर्गतिं ज्ञात्वा श्रीवज्रस्वामि-पार्श्वतः । तत्पुत्रो जाजनागश्च तत्याज शोकमञ्जसा ॥ जाजनागस्ततः सङ्घं पुरस्कृत्य तमादरात् । रैवते नेमितीर्थेशं ननामाऽनघमानसः ॥ स्नात्रपूजाध्वजारोपा-वारिकादिविधानतः । जाजनागो निजं जन्म सफलीकृतवान् मुदा ॥ यतः—" पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदं, पुण्यं सञ्चिनुते श्रियं वितनुते पुष्णाति नीरोगताम् । वैराग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः, स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चार्हतां निर्मिता ॥ १ ॥ " जाजनागः पुरे स्वीये समेत्य रुचिरोत्सवम् । परिधाप्य समं सङ्घं विससर्जाऽन्नदानतः ॥ जाजनागो जिनावासान् कारयित्वा रमाव्ययात् । सुकृतान्यर्जयामास मुक्तिश्रीदानि भावतः ॥ श्रीसुव्रतगुरूपान्ते मण्डयित्वा मनोहराम् । नन्दिमुच्चीर्णवान् श्रीदं सम्यक्त्वं जावडिर्मुदा ॥ तदा सहस्रं सश्राद्धा श्राद्धयः पञ्च शतानि च । सम्यक्त्वं जगृहुर्मुक्तेः सातसन्ततिदायकम् ॥ जाजनागो वितन्वानो धर्म्मं प्रत्यब्दमादरात् । वारत्रयं सुसाधर्म्य-वात्सल्यं तनुते स्म स ॥ सङ्घपूजा गुरूणां तु वारत्रयं प्रमोदतः । जाजनागो व्यधाच्चारु-विस्तरान् स कुटुम्बयुग् ॥ एकां शत्रुञ्जये यात्रां गिरिनारगिरावपि । जाजनागो व्यधाद् भूरि सङ्घयुक्तः सदुत्सवम् ॥ ३४५ ॥

इति जावडिप्रबन्धः समाप्तः ॥

बोद्धैरङ्गीकृतं तीर्थं पुण्डरीकाभिधं वरम् । ज्ञात्वा धनेश्वराचार्यो वल्लभीनगरे ययौ ॥ शिलादित्यनृपं तत्र प्रबोध्य सूपदेशतः । जित्वा बौद्धांश्च सिद्धाद्रिं तीर्थं शीघ्रमवालयत् ॥ विक्रमार्कान्नृपाद्वर्षे सप्तसप्तचतुर्मिते । शिलादित्यनृपो जैन-धर्म्मकर्त्ताऽभवद्वरः ॥

इति शिलादित्य-प्रबन्धः ।

'अणुवमसरचेइयमजियठाणे' इति सम्बन्धः कथ्यते सङ्क्षेपात्—

अन्येद्युर्ललितादेवी वस्तुपालस्य गेहिनी । दध्यौ पत्या ममाऽकारि चैत्यं स्फारं शिवाचले ॥ कोट्योऽष्टादश द्रव्याणां लक्षा षण्णवतिप्रमा । व्ययिता सिद्धभूमीध्रे कान्तेन मम भावतः ॥ कोट्योऽष्टादश द्रव्याणां लक्षास्त्र्यशीतिसम्मिताः । व्ययिता गिरिनाराद्रौ पत्या मम सुभावतः ॥ कोट्यो द्वादश द्रव्याणां लक्षास्त्रिपञ्चसम्मिताः । पत्या ममार्बुदक्ष्माध्रे व्ययिता धर्म्महेतवे ॥ त्रयोदश सहस्राश्च त्रयोदशाधिकाः किल । नवीना जिनपागाराः कान्तेन कारिता मम ॥ त्रयोविंशतिशत्या च जीर्णे जिनेन्द्रसद्मनि । उद्धृतैर्मे पतिर्जन्म सफलीचक्रुवान्मुदा ॥ नव शतानि चतुर-शीत्यधिकानि मे पतिः । अचीकरन्मुदा धर्म्म-शाला धर्म्मस्य हेतवे ॥ दन्तसिंहासनान्येव शतानि पञ्च मे पतिः । अचीकरन् च गुरूणा-मुपवेशाय सुभावतः ॥ दन्तदुकूलसत्कानि पञ्चशतमितानि च । सत्समवसरणानि पत्याद्य कारितानि मे ॥ कोट्योऽष्टादश द्रव्याणां कान्तेन मम भावतः । व्ययिता स्तम्भतीर्थे च देवपुर्यां भृगोः पुरि ॥ कोट्योऽसङ्ख्याः सुशास्त्राणां श्लोकाः पत्या ममाधुना । लेखिता लेखकोपान्ताद् दायं दायं धनं बहु ॥ एकविंशतिराचार्य-पदानि बहुरैव्ययात् । मम पत्या कारितान्येव जैनधर्म्मं वितन्वता ॥ प्रत्यब्दं सङ्घवात्सल्य-चतुष्कं गुरुपूजनम् । कुर्वन्मम पतिः सन्ध्या-त्रये पूजयते जिनम् ॥ द्विवारं तु प्रतिक्रान्तिं संविभागं गुरौ सदा । कुर्वन् यथोचितं दानं ददतेऽर्थिभ्य आदरात् ॥ भूपचित्तानुरोधाय माहेश्वराः सुरालयाः । शतानि विंशतिः कान्तो मदीयोऽचीकरत् क्रमात् ॥ बहूनीश्वरलिङ्गानि ब्रह्मशालाश्च भूरिशः । तपस्विनां मठान् सप्त-शतीमचीकरत्पुनः ॥ शतानि सप्त सत्रस्योगारान् मदीयवल्लभः । वर्या वापीश्चतुश्चत्वा-रिंशच्चाकारयत् पुनः ॥ पाषाणबद्धकासारां-श्चतुरशीतिरद्भुतान् । नव शतानि कूपांश्च प्रपांश्चाकारयत्पतिः ॥ द्विजकार्प्पटिकादीनां बहूनां प्रतिवासरम् । दत्ते दानं सुसाधूंश्च शुद्धान्नै प्रतिलाभयन् ॥ वप्रानश्ममयान् प्रौढान् द्वात्रिंशद्रमणो मम । चतुःषष्टीर्मसीतीश्च कारयामास सुन्दराः ॥ स्वर्णलक्षत्रयेणैव सिद्धाद्रौ तोरणं वरम् । अचीकरत् पतिर्मे तु हज्जायां तु सकोरणम् ॥ हेमलक्षत्रयेणैव स्तम्भतीर्थे पुरे वरे । उच्चैस्तरं सुसमव-सरणं श्रागचीकरत् ॥ षट्त्रिंशति रणेष्वासीत् सिद्धयो रमणस्य मे । निधानानि मही दत्ते पदे पदे सुपुण्यतः ॥ त्रयोदश सहस्राणि सार्द्धाणि कर्म्मकारकाः । शतानि पञ्च पत्युर्मे सूत्रधाराश्च सुन्दराः ॥ शतानि त्रीणि सार्द्धानि दीपिकादीपधारकाः । पत्युर्मे बिरुदानि स्यु-श्चतुर्विंशतिः भान्ति च ॥ कान्तप्रथमयात्रायां देवालया रदात्मकाः । चेलु रथस्थिताश्चतु-र्विंशतिप्रमितास्तदा ॥ वर्याः काष्ठमया देवालया विंशत्युत्तरं शतम् । रथाश्चतुःसहस्राणि सार्द्धानि रेजिरे तथा ॥ चत्वारि च सहस्राणि सेज्जवालानि रेजिरे । वाहिन्योऽशीति शतं स्युः चेलुश्च पित्तलात्मिकाः ॥ सुखासनानि च नव शतानि रेजिरे तथा । शतानि पञ्च पालख्यः सद्दारुवसनात्मिकाः ॥ शतानि सप्त सूरीशाः श्वेतवस्त्रलसत्क्रियाः । यतयोऽष्टौ सहस्राणि तपस्तपनतत्पराः ॥ दिग्वस्त्राः सूरयश्चैका-दश दिग्वसनान्विताः । यात्रार्थं चलिता स्वस्वक्रिया-

करणतत्पराः ॥ अश्वास्त्रीणि सहस्राणि उष्ट्राः शतद्वयं तथा । सप्त लक्षा मनुष्याश्च महिषाः सप्त शतानि च ॥ सहस्रत्रितयं वर्याः सिकरयश्चामराणि च । चतुर्मितसहस्राणि कविगिजनगायनाः ॥ सार्द्धत्रय-सहस्राणि वर्या मङ्गलपाठकाः । विरुदानि तु मे पत्युः जगदू कविरस्वरम् ॥ एवंविधेन सङ्घेन सहितो मत्पतिः पुरा । यात्रां शत्रुञ्जये तीर्थे गिरिनारे व्यधान्मुदा ॥ ध्यात्वेति ललितादेवी सङ्घस्य भक्तिहेतवे । सरः कारयितुं पाली-ताणके पुर ईहते ॥ तत आकार्य भूयिष्ठान् सूत्रधारान् विशारदान् । जगाद ललितादेवी भवद्भिः क्रियतां सरः ॥ अश्मबद्धं सरो वर्यं तत्र कारयितुं तदा । आनिन्ये ललितादेवी पाषाणान् खानितो बहून् ॥ ततस्तस्य पुरः पार्श्वे कुम्भकारैर्विशारदैः । खनिते सरसि प्रौढे ललिता मुमुदेतराम् ॥ घटयित्वा ततः प्रौढ-प्रस्तरान् सूत्रधारकाः । बबन्धुस्तत् सरः सर्वं चतुःप्रतोलिकान्वितम् ॥ तस्यैव सरसः पालौ पार्श्वनाथालयं पृथुम् । कारयित्वा च तद्बिम्बं तत्रैव सा न्यवीविशत् ॥ ततः सा ललितादेवी सङ्घं भूरितमं तदा । मेलयित्वा सरःपालौ महान्तमुत्सवं व्यधात् ॥ जेमयित्वा वराहारैः श्रावकान् श्राविकांस्तथा । श्रीगुरून् प्रतिलाभ्यापि मुमुदे ललिता तदा ॥ सद्वस्त्रैः श्रीगुरूंस्तत्र परिधाप्य कृतादरम् । श्रावकान् श्राविकांश्चापि ललिता पर्यधापयत् ॥ तदैवानुपमादेवी दध्याविति स्वमानसे । ज्येष्ठान्या ललितादेव्या कारितं ललितासरः ॥ सङ्घभक्त्याप्यहं चेद्धि कारयामि सरो वरम् । तदा ममापि पुण्यं स्या-त्तीर्थेऽस्मिन् शिवपर्वते ॥ ततश्चानुपमादेवी तेजःपालस्य गेहिनी । पप्रच्छ भ्रातरं देव-पालं स्वीयमिति स्फुटम् ॥ अहं कारयितुं तीर्थेऽस्मिन्नेव विपुलं सरः । वाञ्छामि स्थानकं वर्यं कथय त्वं सहोदर ! ॥ भ्राता प्राह गिरावत्र जावडेर्वणिजः पुरः । आद्यार्हत्प्रतिमां नव्यां भक्त्या स्थापयतः सतः ॥ मूलं शृङ्गं द्विधा जातं गोमुखस्य खरारवात् । तत्रादौ प्रथमं शृङ्गं प्रथमार्हतसमन्वितम् ॥ द्वितीयं मरुदे-व्याख्यं शृङ्गं जातं जने श्रुतम् । तयोश्च शृङ्गयोर्मध्ये यत्राजन्यजिनालयम् ॥ ततदा पतितं देव-गृहं शून्योऽस्ति सा मही । तत्र चेत् कार्यते वर्यं सरः सङ्घस्तदा सुखी ॥ ततोऽनुपमया देव्या सारं सरोवरं वरम् । अजितार्हद्गृहस्थाने कारितं बहुरैव्ययात् ॥ तस्यैव सरसः पार्श्वे स्फारं जिनेन्द्रमन्दिरम् । देव्याऽनुपमयोऽकारि व्ययन्त्या विभवं बहु ॥ यतः—"प्रासादप्रतिमा यात्रा प्रतिष्ठा च प्रभावना । अमार्युद्घोषणादीनि महापुण्यानि भाग्यतः ॥ १ ॥" रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव, स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव । पाथोधिः पयसामिवेन्दुमहसां स्थानं गुणानाम-सावित्यालोच्य विरच्यतां भगवतः सङ्घस्य पूजाविधिः ॥ १ ॥" जायमानोत्सवेऽन्येद्युः पप्रच्छुः सज्जना इति । ललितादेवि ! द्रव्यं त्वं कस्याऽव्ययो वदाधुना ॥ ललितादेव्युवाचेति पत्युः सत्कं धनं बहुम् । व्ययितं सरसीदानी-मस्मिन्नेव मया मुदा ॥ कस्य द्रव्यं त्वया वास्मिन् सरसि व्ययितं वद । इत्युक्ते सज्ज-नैराहा-नुपमादेविका तदा ॥ पितुः सदनसत्कं तु धनं सरोवरे मया । व्ययितं सज्जना एव यूयं जानीथ साम्प्रतम् ॥ गदिते ललितादेव्या सूनृते सज्जनाग्रतः । बभूव पयसा पूर्णं तदैव ललितासरः ॥ गदितेऽ-नुपमा देव्या कूट एव सज्जनाग्रतः । बभूव पयसा रिक्तं तदैवानुपमासरः ॥ ततोऽनुपमया देव्या सर्वं सरोवरं स्फुटम् । ताम्रपट्टिकयाऽकारि खचितं बहुरैव्ययात् ॥ तथापि तत् सरो मेघ-वारिणा पूरितं स्फुटम् । रिक्तं प्रजायतेऽम्भोभिः सद्य एवाधुना सदा ॥ अतः केनापि नो कूटं जल्पनीयं हितेच्छुना । कूटोक्तित इहामुत्र जायते दुःखमङ्गिनाम् ॥ सत्योक्तितः सदा लोका सुखिनः स्युरिह स्फुटम् । परत्र स्वर्गसौख्यानि श्रियन्ते शिवशर्म्म च ॥ यतः—"विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं, मुक्तेः पथ्यदनं जलाग्नि-

शमनं व्याघ्रोरगस्तम्भनम् । श्रेयःसंवननं समृद्धिजननं सौजन्यसंजीवनं कीर्त्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ १ ॥ " ततः सङ्घोऽखिलो यात्रां शत्रुञ्जये समागतः । ललितासरसः पार्श्वे समुत्तरति सन्ततम् ॥ पुण्डरीकनिवहैर्विराजितं पुण्डरीकगिरिराजसन्निधौ । कारितं ललितया मनोहरं भाति यत्र ललिताभिधं सरः ॥ स्तुवतीति कवयः–यस्य पालितरौ शाखा–संस्थिताः पक्षिणः सदा । आगतं सङ्घमालोक्य हर्षन्ति च रवन्ति च ॥ ते श्लाध्याः पक्षिणो ये तु ललितासरसि स्थिताः । तीर्थं पश्यन्ति सङ्घं च शत्रुञ्जयसमागतम् ॥ वस्तुपालाभिधः स्वर्गा–रोहणाह्वार्हदालयौ । कारयित्वा तु द्रव्यस्याष्टादशैः कोटिभिस्तथा ॥ पण्णवत्याधिकैर्लक्षै– र्वस्तुपालः ससोदरः । आद्यार्हत्प्रतिमे यत्र तीर्थेऽथास्थापयन्मुदा ॥ ७३ ॥

इति ' अणुवमसरचेइयमजियठाणे ' इत्यादि ललितासरोऽनुपमासरःसम्बन्धः समाप्तः ॥

---

**मरुदेविसंतिभवणं उद्धरिही जत्थ मेहघोसनिवो । कक्किपपुत्तो तं इह सिरि० ॥३२॥**

**पच्छिम उद्धारकरो जत्थ विमलवाहणो निवो होइ । दुप्पसहगुरुवएसा तं सिरिसित्तुंजय महतित्थं ॥३३॥**

' जत्थ ' यत्र तीर्थे ' मरुदेव्या ' ऋषभदेवजनन्या ' भवनं ' प्रासादं शान्तिनाथस्य षोडश तीर्थङ्करस्य प्रासादं पूर्वमभूतामनयोरुद्धारं ' मेघघोषनृपः ' कल्किपुत्रः शक्तिस्तत्पुत्रो मेघघोषः ' कल्कि प्रपौत्र ' उद्धरिष्यति तत्तीर्थं जयताच्चिरम् । पश्चिमश्चरम उद्धारः–उद्धृतिः पश्चिमोद्धारकरो विमलवाहनो नृपो मेदिनीपालो दुःप्रसहगुरूत्तमानां सूपदेशात् ' होइ ' भविष्यति, यत्र तीर्थे तत् श्रीशत्रुञ्जयाह्वं तीर्थं जयताच्चिरम् । अनयोर्गाथयोः कथा सङ्क्षेपात् कथ्यते मया,—तथाहि—

कल्किभूपसुतः शक्ति–क्षोणीशो न्यायवर्त्मना । पालयन् जिननाथस्य धर्म्ममेव करिष्यति ॥ पत्नी प्रीतिमती प्रीति–भाजनं मेदिनीपतेः । विनयेन तथा रञ्ज–यिष्यति स्वान्तमन्वहम् ॥ भविष्यति तयोर्मेघ–घोषाह्वो नन्दनो वरः । रूपलावण्यसल्लक्ष्म्या जयन् चेतोभवश्रियम् ॥ धर्म्मकर्मकलाः सर्वाः पाठितः पण्डितान्तिके । भविष्यति बुधाचार्य इव विज्ञो नृपाङ्गजः ॥ शत्रुञ्जयस्य माहात्म्यं शक्तिभूपः समाहितः । आकर्ण्य सङ्घसंयुक्तः सिद्धशैले समेष्यति ॥ तत्र सङ्घेशकृत्यानि कृत्वा शक्तिमहीपतिः । वस्त्राणि सङ्घसंयुक्तं गुरुं गौरवयिष्यति ॥ कदा किल भविष्यन्ति मद्गृहाङ्गणभूतयः । श्रीसङ्घचरणोद्भूत–रजोराजिपवित्रिताः ॥ येन सङ्घे गुरुश्चापि भक्तितोऽन्नादिदानतः । स एव लभते स्वर्गा–पवर्गसुखसन्ततिम् ॥ तत्र शक्तिविहाराह्वं प्रासादं सम्भवार्हतः । शक्तिभूमिपतिर्लक्ष्मी व्ययेन कारयिष्यति ॥ ततः शक्तिनृपो गत्वा रैवताभिधभूभृति । विस्तारान्नेमितीर्थेश–मर्चयिष्यति सादरम् ॥ ततो मार्गेऽखिलं सङ्घ–मन्नपानादिदानतः । गोरव्यस्वपुरे शक्ति–महीपतिः समेष्यति ॥ क्रमाच्छक्तिनृपो लक्ष्मीं व्ययन् क्षेत्रेषु सप्तसु । स्वपुरे श्रीजिनावासं महान्तं कारयिष्यति ॥ शक्तिभूपः स्वपुत्राय मेघघोषाय शालिने । राज्यं दत्त्वाऽर्हतो धर्म्मं निश्चितं च करिष्यति ॥ धर्म्मकर्म्मपरः शक्ति–भूपाल आयुषः क्षये । गमिष्यति मरुद्गेहे विधायाराधनां मुदा ॥ ततो रक्षन् प्रजां मेघ–घोषक्षोणीपतिर्नयात् । रामभूमीपतिर्लोकान्

सततं कारयिष्यति ॥ मेलयित्वा बहुं सङ्घं ग्रामे ग्रामे पुरे पुरे । कुर्वन् स्नात्रोत्सवं मेघ-घोष-भूपश्चलिष्यति ॥ गत्वा शत्रुञ्जये शैले श्रीनाभेयजिनालये । वृषभं प्रथमं पुष्पैः पूजयिष्यति भूपतिः ॥ सर्वेषु जिनगेहेषु कुर्वन् पूजां जिनेशितुः । अर्जयिष्यति कल्याण-गमयोग्यं वृषं नृपः ॥ तत्र श्रीमरुदेवाया श्रीशान्तेर्वरमन्दिरे । कारयिष्यति भूपालो मेघघोषो धनव्ययात् ॥ ततो रैवतके शैले गत्वा नेमिजिनेशितुः । करिष्यत्यर्चनं सङ्घ-सहितो मेघभूपतिः ॥ आगत्य स्वपुरोपान्ते श्रीसङ्घं वसनैर्वरैः । सन्मानयिष्यति क्षोणी-पतिः कुर्वन् महोत्सवम् ॥ ततो विसृज्य निःशेषं सङ्घं मेघमही-पतिः । पुरप्रवेशमातन्वन् स्वीयावासं समेष्यति ॥ स्वपदे मेघसेनाह्वं पुत्रं न्यस्य सदुत्सवम् । मेघघोषो गुरुपान्ते चारित्रं लास्यति क्रमात् ॥ मेघघोषयतिः कुर्व-स्तपस्तीव्रं निरन्तरम् । गत्वा शत्रुञ्जये शैले स्वर्गं क्रमाद् गमिष्यति ॥ मेघसेनो महीपालः पालयन् पृथिवीं नयात् । साधयिष्यति निःशेष-विद्विषो भुजलीलया ॥ क्रमाच्छत्रुञ्जये यात्रां कृत्वा विस्तरतो नृपः । प्रासादं प्रथमाप्तस्य कारयिष्यति रैव्ययात् ॥ चन्द्रसेनं सुतं स्वीयपदे न्यस्य सदुत्सवम् । मेघसेनो नृपो स्वर्ग-लोके क्रमाद् गमिष्यति ॥ चन्द्रसेनोऽपि भूपालः पालयन् मेदिनीं नयात् । साधयिष्यति निःशेष-शात्रवान् भुजलीलया ॥ शत्रुञ्जयस्य माहात्म्यं निशम्य गुरुसन्निधौ । चन्द्रसेनो ययौ सिद्ध-शैले नन्तुं जिनेश्वरम् ॥ तत्र स्नात्रार्चनादीनि कार्याणि रुचिरोत्सवम् । विधाय नृपतिश्चक्रे सफलं स्वीयजन्म च ॥ तत्रादिमजिनेशस्य प्रासादं प्रवरं तदा । कारयित्वा प्रभोर्बिम्बं स्थापयिष्यति सोऽवनिराट् ॥ मल्लसेननृपं न्यस्य पट्टे लसदुत्सवम् । चन्द्रसेनो व्रतं लात्वा श्रीचन्द्राचार्यसन्निधौ ॥ मल्लसेनो बहुं सङ्घं मेलयित्वा शुभेऽहनि । शत्रुञ्जये जिनं नन्तुं गमिष्यति नरेश्वरः ॥ तत्र श्रीकुन्थुनाथस्य प्रासादं व्योमगं वरम् । कारयिष्यति कल्याण-सुखहेतोर्नरेश्वरः ॥ ततोऽन्येऽपि नृपा जैन-धर्म्मसक्ताश्च भूरिशः । सिद्धाद्रौ कारयिष्यन्ति प्रासादान् गगनाध्वगान् ॥ पञ्चमारकपर्यन्तं यावद् भूपा अनेकशः । धर्म्मं कृत्वाऽऽर्हतं प्रायो गमिष्यति सुरालयम् ॥ पञ्चमारकपर्यन्ते भूपाला लोलिनो जनाः । स्वल्पायुषो भविष्यन्ति रोगग्रस्तशरीरिणः ॥ तस्मिन् काले तु सिद्धाद्रौ भूपो विमलवाहनः । कारयिष्यति नाभेय-प्रासादं प्रतिमाश्रितम् ॥ स राजा पुण्डरीकाद्रौ गुरोर्दुःप्रसहस्य तु । उपदेशात् करिष्यति यात्रां सङ्घसमन्वितः ॥ आचार्यो दुःप्रसहाख्यो फल्गुश्रीर्यतिनी पुनः । नागिलः श्रावको नाम्ना सत्यश्रीः श्राविका पुनः ॥ विमलाद्वाहनो भूपो मन्त्रीशः सुमुखाभिधः । पञ्चमारकपर्यन्ते सङ्घ ईदृग् भविष्यति ॥ विमलाद्वाहनो भूपः ससङ्घः सिद्धपर्वते । गत्वाऽऽदिमार्हतः सद्मो-द्धारं च कारयिष्यति ॥ तदानीं बहवः श्राद्धाः कृत्वा यात्रां सुविस्तरात् । कारयिष्यन्ति सर्वज्ञ-प्रासादान् प्रवरान् क्रमात् ॥ एतेषां मेदिनीशाना-मन्तरा ये महाभुजः । करिष्यन्ति मुदोद्धारं तेषां सङ्ख्या न ज्ञायते ॥ ४४ ॥

---

इति मरुदेवीसंतिभवणगाथासम्बन्धः ॥

वुच्छिन्ने वि य तित्थे जं होही पूयजुयमुसहकूडं । जा पउमनाहतित्थं तं सिरि सित्तुंजय मह तित्थं ॥३४॥

'तित्थे' तीर्थे साधुसाध्वीश्रावकश्राविकारूपे, चतुर्विधे व्युच्छिन्ने-विच्छिन्नं गते क्षयं याते 'होही' भविष्यति 'जं' यत् पूजायुतं 'उसहकूडं' ऋषभकूटं प्रमाणं सप्तरत्नि-सप्तहस्तप्रमाणं जा

यावत् ' पउमनाहतित्थं '–पद्मनाभतीर्थं यावत्, अग्रेतनचतुर्विंशतिकाप्रथमजिनस्य तीर्थं श्रीसङ्घोत्पत्तिं यावत् ' तं ' तत् श्रीशत्रुञ्जयमहातीर्थं जयतादित्यवधार्यम् ॥ अत्र कथा—

पद्मनाभजिनोपान्ते जितारिर्मेदिनीभुजा । प्रक्ष्यते भगवन् ! तीर्थं विद्यते प्रवरं च किम् ? ॥ पद्मनाभजिनाधीशो वक्ष्यतीति तदग्रतः । सुराष्ट्राविषयो वर्यो विद्यते धनधान्यभृत् ॥ तत्र शत्रुञ्जयः शैलः सप्तहस्तमितोऽधुना । विद्यते स पुराऽशीति योजनानि निगद्यते ॥ तत्र मुक्तिं ययुः सङ्ख्या-तीता एव जनाः पुरा । यास्यन्ति साम्प्रतं यान्ति तीर्थमाहात्म्यतः खलु ॥ अधुना श्रीपुराधीश-श्चन्द्रचूडो मही-पतिः । त्यक्त्वा राज्यं व्रतं लात्वा ययौ सिद्धमहीधरे ॥ तत्र तस्य तपोऽत्यन्तं कुर्वाणस्य निरन्तरम् । उत्पेदे केवलज्ञानं भूयिष्ठसाधुशालिनः ॥ मदनाह्वे पुरे भीम-सेनो राज्यं नयाध्वना । कुर्वन् शिवङ्कराचार्य-पार्श्वे श्रोष्यति सादरम् ॥ न्यग्रोधे दुर्लभं पुष्पं दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म दुर्लभं देवदर्शनम् ॥ अनर्घ्याण्यपि रत्नानि लभ्यन्ते विभवैः सुखम् । दुर्लभं रत्नकोट्यापि क्षणोऽपि मनुजायुषः ॥ " दिवस-निसा घडिमालं आउसलिलं जियाण घित्तूणं । चंदाइच्चवइल्ला कालरहट्टं भमाडंति ॥ १ ॥ " श्रुत्वेति श्रीगुरूपान्ते भीमसेनो महीपतिः । त्यक्त्वा राज्यं सुते राज्य-भारमारोपयिष्यति ॥ सप्तशत्या महीपालैः सार्द्धं सुन्दरसेवकैः । सहस्रैः सप्तभिर्दीक्षां गृहीष्यति शुभेऽहनि ॥ ततः सूरिपदं प्राप्य लक्षसाधु-समन्वितः । सिद्धक्षेत्रावनौ मुक्तिं गमिष्यति तमःक्षयात् ॥ वर्द्धमानोद्रिरेखस्तु अशीतियोजनप्रमः । भविष्यति समस्तानां सुराणां सेव्य एव तु ॥ अस्मदीयो गणाधीशो धर्म्मघोषाभिधो ननु । गमिष्यति शिवक्षोणी-धरे भूयिष्ठसाधुयुग् ॥ प्रासादा अत्र सिद्धाद्रौ बहुभिर्मेदिनीधवैः । रैव्ययात् कारयिष्यन्ति प्रतिमाश्चार्हतां पुनः ॥ अस्य तीर्थपतेः स्पर्शात् दर्शनात् स्तवनात् पुनः । अनेके भविनो मुक्तिं याता यास्यन्ति यान्ति च ॥ यतः—" मयूरसर्प्पसिंहाद्या हिंस्रा अप्यत्र पर्वते । सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति प्राणिनो जिनदर्शनात् ॥ १ ॥ " तेषां जन्म च वित्तं च जीवितं सार्थकं च ये । सिद्धक्षेत्राचलं यान्ति परेषां व्यर्थमेव तत् ॥ श्रुत्वैतद्बहवो भव्या यात्रां सिद्धमहीधरे । करिष्यन्ति जनाः स्वीया-मर्जिष्यति शिवश्रियम् ॥२०॥

इति ' वुच्छिन्ने वि अ ' गाथाकथा समाप्ता ।

---

पायं पावविमुक्का जत्थ निवासीअ जंति तिरियावि । सुगईए जयउ तयं सिरिसित्तुंजय महतित्थं ॥३५॥

' प्रायः ' सामान्येन ' पापविमुक्ताः ' पापरहिता यत्र तीर्थे निवासिनो–वसनशीलाः ' सुगतौ ' उत्तमगतौ गच्छन्ति ' तिर्यञ्चोऽपि ' पशवोऽपि जयतात्तत्तीर्थं श्रीशत्रुञ्जयाख्यं महातीर्थम् ॥ अत्र कथा—

श्रीपुरे धनदेवाह्व–श्रेष्ठी भूरिधनो वरः । एकदा श्रीगुरूपान्ते शुश्रावेति जिनागमम् ॥ रम्यं येन जिनालयं निजभुजोपात्तश्रिया कारितं, मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा । वेद्यं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं, प्राप्तं जन्मफलं कृतं जिनगतं गोत्रं समुद्योतितम् ॥ अङ्गुष्ठ-मानमपि यः प्रकरोति बिम्बं, वीरावसानवृषभादिजिनेश्वराणाम् । स्वर्गप्रधानविपुलर्द्धिसुखानि भुक्त्वा,

पश्चादनुत्तरगतिं समुपैति धीरः ॥ श्रुत्वेति धनदेवस्तु चिकारयिषुरादरान् । सर्वज्ञसदनं भीम-श्रावकस्य पुरो जगौ ॥ मम श्रीजिनगेहस्य चिकीर्षा विद्यतेऽधुना । ततो मत्तो धनं लात्वा कारयार्हद्गृहं महत् ॥ सूत्रधारादिमर्त्यानां चैत्यकर्म्मविधायिनाम् । मद्दत्तं द्रविणं देयं भवना प्रतिवासरम् ॥ भीमः प्राह करिष्यामि त्वदुक्तं श्रेष्ठिपुङ्गव ! । कारयार्हद्गृहं स्फारं शिवसौख्याप्तिहेतवे ॥ सोऽपि लोभाभिभूतः सन् सूत्रधारादिकस्य तु । दत्ते रोक्यं न द्रव्यं हि किन्तु सर्पिर्गुडादिकम् ॥ समर्घाणि क्रयाणानि लात्वा महार्घ्यजल्पनात् । ददत् स्तेभ्यः सदा भीमो लाभं गृह्णाति किंचन ॥ देवद्रव्यक्रयाणं तु मध्याद् भीमो वणिग्वरः । काकिणीनां सहस्रं च लाभेऽन्तरान्तरा ललौ ॥ देवद्रव्याद्धनं सेन-भीमोऽर्जयन् घोरतरं तमः । मेलयामास नैवाऽलात् प्रायश्चित्तं गुरोः पुरः ॥ यतः—" जिणपवयणवुड्ढिकरं पभावगं नाणदंसण-गुणाणं । भक्खंतो जिणदव्वं अणंतसंसारिओ होइ ॥ १ ॥ " वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो० ॥ २ ॥ " ततो मृतोऽभवद्भीमो जलमानुष एव तु । ततो ययौ तृतीये तु नरके भूरि-दुःखदे ॥ वेदान्तेऽप्युक्तम्—" देवद्रव्येण या वृद्धि-र्गुरुद्रव्येण यद्धनम् । तद्धनं कुलनाशाय मृतोऽपि नरकं व्रजेत् ॥ १ ॥ " निर्गत्य नरकान्मत्स्योऽभवद्भीमासुमान् क्रमात् । चतुर्थे नरके जातो नारकी मकरस्ततः ॥ पञ्चमे नरके षष्ठे सप्तमे चान्तरान्तरा । प्राप्य मत्स्यभवं भीमो दुःखी जातो निर-न्तरम् ॥ यतः—" भक्खणे देवदव्वस्स परत्थिगमणेण य । सत्तमं नरकं जंति सत्तवारा य गोयमा ! ॥ १ ॥ " स गर्त्ताशूकरो जातो भूरिवारान् रुपोऽपि च । एडको हरिणः सर्प्पः शशो मार्जारमूषकौ ॥ शृगालः शबरो विष्ठा-कृमिः ऋच्छकवृश्चिकौ । सिंहश्चित्रकरः श्वानो गृहकोलद्विकः शुनी ॥ पृथिव्यम्बु-वृहद्भानु-वनस्पतिषु भूरिशः । उत्पद्य शुक्तिका जाता जलौका कीटिका खरः ॥ गर्दभो वेसरः शङ्खः वृषभो महिषो गजः । तुरङ्गो महिषी व्याघ्रो नकुलो नकुली ततः ॥ युग्मम् ॥ एवं भूरिभवेष्वेव सहित्वा दुःख-सन्ततिम् । भीमजीवोऽभवच्छत्रु-ञ्जयाद्रौ हरिणः क्रमात् ॥ तत्र प्रभोर्मुखं पश्यन् पश्यन् स हरिणस्तदा । मृत्वाऽभूत् त्रिदशः स्वर्गे भूरिदेवनिषेवितः ॥ ततश्च्युत्वाऽभवत् स्वर्ण-पुरे सोममहीपतेः । पुत्रो धनामिधो वर्य-रूपः प्रवरविक्रमः ॥ तत्र जीववधासक्तो मृत्वा कनकपत्तने । वसुदत्तस्य पुत्रोऽभूत् कनकाह्वो शुभेऽहनि ॥ मासस्यातिक्रमे माता परलोकमसाधयत् । स्तन्याभावात्ततो दुःखी बभूव कनको भृशम् ॥ पञ्चमे मासि जनको मृतस्तस्याशुभोदयात् । ततः कोटिमितं स्वर्णं गतं शीघ्रमदृश्यताम् ॥ कयाचित् कृपया नार्या वर्द्धितः स्तन्यपानतः । निःपुण्यकेति नामाऽदात् तस्य लोकस्तदाऽखिलः ॥ रङ्कवृत्त्या ततो भिक्षां मार्गयंश्च गृहे गृहे । वर्धते स तु दीनात्मा हन्यते च निरन्तरम् ॥ भक्षयन्नन्यदा नीतो मातुलेन निजालये । यदा तदा गृहं स्तेनै-र्मुषितं दिवसात्यये ॥ ततो निष्कासितस्तेन मातुलेन स यत्र तु । गृहे तिष्ठेद् गृहं तच्च दह्यते मुष्यतेऽथवा ॥ यतः—" यदा कोऽपि क्षणं स्थातुं न दत्ते स्वगृहे कचित् । तदा स दुःखितोऽ-त्यन्तं निःपुण्योऽजनि मानसे ॥ १ ॥ " तस उद्विग्नचेताः स निःपुण्यो दूरनीवृति । ताम्रलिप्तीं पुरीं प्राप्तो धनेभ्यसदने स्थितः ॥ तद्दिने तद्गृहे दग्धे गृहेशेनाथ कर्षितः । अलर्कश्वानवत्कस्य गृहे स्थातुं लभेत न ॥ ततोऽतिदुःखितो दीन-मना निःपुण्यको भृशम् । स्वकर्म्म प्राक्कृतं भूयो भूयो निनिन्द दीनवाग् ॥ " कम्मं कुणंति सवसा तस्सुदयम्मि अ परव्वसा हुंति । रुक्खं चडइ सवसो निवडइ परव्वसो तत्तो ॥ १ ॥ " गन्तव्यं नगरशतं विज्ञानानीक्षितव्यानि । नरपतिशतं च सेव्यं स्थानान्तरितानि भाग्यानि । ध्यात्वेति जलधौ यान-मारुह्य वहनेशितुः । भृत्यभावं प्रपन्नः स तदा निःपुण्यकोऽचलत् ॥ क्षेमेण कनक-

द्वीपे गते याने वरेऽहनि। दध्यौ निःपुण्यको भाग्यं ममाद्योद्घटितं ध्रुवम्॥ न भग्नं वहनं मय्यारूढे सति पयोनिधौ। तन्नूनं विद्यते भाग्यं मदीयमिह साम्प्रतम्॥ यदि वाऽहं विधेरत्रे-दानीं विस्मृत एव तु। चलनावसरे क्षेमाद् गम्यते चेत्तदा वरम्॥ यानेश्वरोऽथ विक्रीय क्रयाणं स्वं च तत्रजम्। लात्वा पयोधि-मार्गेण चचले स्वपुरं प्रति॥ चलमानस्य यानस्य प्रचण्डपवनाहतम्। आस्फाल्य पर्वते भग्नं पर्पटौघ इवाचिरात्॥ दैवान्निष्पुण्यकः प्राप्त-फलकोऽम्भोनिधेस्तटे। गत्वा चन्द्रपुराधीश-भीमस्य सेवते क्रमौ॥ तदा तत्रागता धाटी लुण्टयन्ती च तत्पुरम्। जघान ठकुरं भीमं धृतो निःपुण्यकः पुनः॥ धाटीश्वरो निजे ग्रामे गतो यावन्निशि ध्रुवम्। तावद्दग्धं गृहं तस्य भूरिलक्ष्मीसमन्वितम्॥ द्वितीये दिवसे गोषु चालितेषु स पल्लिपः। रिपुपृष्ठौ व्रजन् द्विड्भिर्युध्यन् नीतो यमालयम्॥ ततो निःपुण्यको ह्येष कृत्वेति पल्लिमानवैः। निष्काशितो गतोऽन्यत्र विषये दुःखिताशयः॥ तत्रैकस्मिन् मरुद्गेहे कुर्वन् क्षपणमन्वहम्। प्रमार्जयन् मरुत्सद्म यक्षं लक्ष्मीं स याचते॥ क्षपणैरेकविंशत्या तुष्टो यक्षो जगावदः। प्रगे यो रैमयूरस्तु मत्पुरो नृत्यति स्फुटम्॥ नृत्यान्ते स्वर्णपिच्छं तु मुञ्चत्येकं प्रगे प्रगे। तच्च त्वया गृहीतव्यं निःपुण्यक! निरन्तरम्॥ ततः प्रतिदिनं प्रातरेकं पिच्छं च रैमयम्। मयूरात्पतितं गृह्णन् शतमेकमलाच्च सः॥ निःपुण्यकोऽन्यदा दध्यौ कोऽत्र नित्यं समेष्यति। एकमुष्टयैव सर्वाणि स्वर्णपिच्छानि लाम्यहम्॥ विमृश्येति गृहीतुं स तानि यावत् समुत्थितः। तावत्केकी ध्विकीभूत उड्डीय क्वचिदीयिवान्॥ त्वरितं स्वगृहे गत्वा पिच्छानि यावदीक्षते। तावत्काकस्य पिच्छानि वीक्ष्य खिन्नोऽभवच्च सः॥ यतः—"दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत्। सरोम्भश्चातकेनाऽऽत्तं गलरन्ध्रेण गच्छति॥ १॥" निर्भाग्योऽहमिति ध्यायँ-स्ततो निःपुण्यको व्रजन्। दृष्ट्वैकं ज्ञानिनं साधुं नत्वाऽप्राक्षीत् कृताञ्जलिः॥ मया किं विहितं कर्म्म प्राग्भवे येन कर्म्मणा। दुःखितोऽहमभूवं तु भृशं ततोऽगदन् मुनिः॥ काकिणीनां सहस्रं तु जिनेश-द्रव्यमध्यतः। क्रय-विक्रयतो लातं त्वया नालोचि तत्तदा॥ कुर्वन् देवगृहे कर्म्म स्वयमेव निरन्तरम्। दीनारान् कोटिमेकां तु वालय त्वं वणिग्यदि॥ तदा तव ततो देव-द्रव्यात् स्याच्छुट्टनं द्रुतम्। श्रुत्वेति स जिनावासे कर्म्म चक्रे तथाऽऽदरात्॥ यथाऽभवदृणाभावो देवद्रव्यस्य तस्य तु। ततो निःपुण्यकश्चक्रे व्यवसायं नयात्तथा॥ क्रमाल्लक्षत्रयी हेम्नां जाता तस्य निकेतने। ततश्चक्रे विशेषेण देवद्रव्यस्य रक्षणम्॥ ततो लक्षद्वयेनैकं जिनागारं महत्तमम्। स तत्र कारयामास शान्तेर्बिम्बं प्रातिष्ठिपत्॥ ततो दिने दिने लक्ष्मी-र्वर्द्धमाना तदालये। हेमकोटयष्टकमिता बभूव पुण्ययोगतः॥ सारां जिनौकसां कुर्वन् कारयन्ननुमोदयन्। वर्द्धयामास देवस्य द्रव्यं देवधनावनात्॥ त्रिसन्ध्यं जिननाथस्य पूजां कुर्वन् वरैः सुमैः। निःपुण्यकोऽर्जयामास भूरिपुण्यं शिवप्रदम्॥ अन्यदा श्रीगुरूपान्ते गतो निःपुण्यको वणिग्। शत्रुञ्जयस्य माहात्म्यं शुश्रावेति कृतादरम्॥ प्राणिभिर्यं समारूढै-र्लोकाग्रमधिरुह्यते। प्राप्यते स गिरिः शत्रु-ञ्जयो भाग्येन देहिभिः॥ अनादितीर्थमेतद्धि सिद्धास्तीर्थकृतोऽत्र वा। अनन्ता मुनयश्चापि क्षिप्त्वा स्वं कर्म्म निर्वृताः॥ ये च शत्रुञ्जये शैले पक्षिणः पशवोऽथवा। सेवन्ति तेऽपि निर्वाणं लभन्तेऽल्पभवैः किल॥ मुक्तिं गतेषु सर्वेषु गते ज्ञाने महीतले। लोकानां तारकः सोऽयं श्रवणा-त्कीर्त्तनादपि॥ दुःषमाख्येति समये गते ज्ञानेऽपि केवले। धर्म्मे विसंस्थूले जाते तीर्थमेतज्जगद्धितम्॥ पूजाऽर्हतां गुरोर्भक्तिः शत्रुञ्जयस्य सेवनम्। चतुर्विधस्य सङ्घस्य सङ्गमः सुकृतैर्भवेत्॥ आकर्ण्यैतद् गुरो-रास्या-न्निःपुण्यकः सुधर्म्मवित्। यात्रां शत्रुञ्जये कर्त्तुं सङ्घं बहुममेलयत्॥ सुमुहूर्त्ते पुरे ग्रामे सर्वसर्वज्ञ-

सद्मसु । कुर्वन् पूजोत्सवं शत्रु-ञ्जयोपान्ते स ईयिवान् ॥ तत्र स्नात्रोत्सवं कुर्वन् ददद्दानमनर्गलम् । आरुरोह शिवक्षोणी-धरस्योर्ध्वं स सङ्घयुग् ॥ तत्रादौ ऋषभस्यार्चां कृत्वातिविस्तरात् स च । प्रभोः पादुकापूजां च चक्रे प्रियालुपादपे ॥ ततोऽन्येषु जिनौकस्सु जिनानामर्चनं व्यधात् । ततोऽनु श्री जिनस्यार्चां कृत्वा स्रग्परिधापनम् ॥ भूरिधनव्ययाचक्रे तत आरात्रिकं पुनः । ततो मङ्गलदीपं च भावपूजां व्यधात्ततः ॥ युग्मम् ॥ ततो रैवतके क्ष्माध्रे नेमिं नत्वाऽतिविस्तरात । समेत्य स्वपुरे चागात् निःपुण्यको वणिग्वरः ॥ स्वपुत्राय वितीर्यौको-भारं लात्वा व्रतं मुदा । शत्रुञ्जये समायातो निःपुण्यक-यतिस्ततः ॥ तत्र क्षिप्त्वाऽखिलं कर्म्म लक्षसाधुसमन्वितः । लात्वा व्रतं ययौ मुक्ति-नगर्यां सुन्दरेऽहनि ॥ यदा मुक्तिपुरीं यातो निःपुण्यकयतिः किल । तदा जगुर्जना एष सुपुण्योऽजनि साम्प्रतम् ॥८४॥

इति तिरश्चामपि मुक्तिगमने निःपुण्यककथा ॥

---

जस्स सयाऽऽईकप्पे वक्खाए झाइए सुए सरिए । होइ सिवं तइयभवे तं सित्तुंजय महतित्थं ॥३६॥

'यस्य' शत्रुञ्जयस्य 'सया' सदा 'आइकप्पे' आदिकल्पे-सर्वकल्पमुख्ये 'व्याख्याते' विस्तरात् ध्याते शुद्धमनसा 'श्रुते' कर्णाभ्यां 'सरिए' स्मृते उपयोगादिना 'होइ' भवति 'शिवं' मुक्तिः, अर्थात् पुरुषस्य स्त्रियो वा तृतीयभवे, तत् शत्रुञ्जयाख्यं महातीर्थं जयताच्चिरम् । तथाहि—

पद्माकरपुरे चैत्र-पुत्री मनोहराभिधा । विज्ञा दरिद्रिणं चैकं नरं वीक्ष्य जगावदः ॥ किं नास्ति सदने तेऽथ काकिण्येकापि नैगम ! । दरिद्राहैकया किं स्यात् काकिण्योदरपूर्त्तये ? ॥ यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ तावन्माता पिता तावत् तावत् सर्वेऽपि बान्धवाः । तावद्भार्याः सदा हृष्टा यावल्लक्ष्मीर्गृहे स्थिरा ॥ मनोहरा जगावेका यदि स्यात् काकिणी गृहे । तदा भवति दारिद्र्यं (किं) नरस्य स्त्रियोऽथवा ? ॥ दरिद्री प्रोक्तवान् प्रायो धनवान् मानवो नृपः । न वेत्ति वेदनामन्य-सत्कां दारिद्र्यसम्भवाम् ॥ यतः—
" लक्ष्मीवन्तो न जानन्ते प्रायेण परवेदनाम् । शेषे धराभराक्रान्ते शेते लक्ष्मीपतिः स्वयम् ॥१॥"
भक्ते द्वेषो जडे प्रीति-ररुचिर्गुरुलङ्घनम् । मुखे कटुकताऽत्यन्तं धनिनां ज्वरिणामिव ॥ श्रुत्वैतद् भूपति-श्छन्नं भीमोऽन्येद्युर्मनोरमाम् । परिणीय निजावासेऽनैषीत् परीक्षणाकृते ॥ अन्येद्युर्निशि भूपालः पत्न्या वस्त्राञ्चले रहः । वध्वैकां काकिणीमन्य-स्थाने सद्यः समीयिवान् ॥ विनिद्रा वसनप्रान्ते बद्धां चैकां च काकिणीम् । दृष्ट्वो मनोरमा दध्यौ दरिद्र्याग्रे पुरा हि यः ॥ काकिण्या अर्जनोदन्तः सोऽश्रावि भू भुजा कचित् । तेन कुर्वे निजप्रोक्तं सफलं द्रविणार्जनात् ॥ युग्मम् ॥ लात्वा तां काकिणीं छन्नं निर्गत्य नगरात्ततः । मनोरमा ययौ लक्ष्मी-पुरे मालिकमन्दिरे ॥ काकिण्या पञ्च पुष्पाणि लात्वा सा मालिकाकृतिः । गत्वा राज्ञ्यै ददौ राज्ञी हृष्टाऽदात् टङ्ककाष्टकम् ॥ तैः टङ्कैः कुसुमानि लात्वा (न्यस्त्वा) कृत्या चरणकं च सा । राज्ञ्यै पुनर्ददौ हृष्टा राज्ञी टङ्कशतं तदा ॥ ततः पुष्पाणि तैर्टङ्कैर्लात्वा सा नर-रूपभृत् । पुरस्सृष्टिं व्यधाद् भूप-महेभ्यावाससुन्दराम् ॥ पुरःसृष्टिं तु भूपाय प्राभृतीकृतवान् स च ।

राजा हृष्टो ददौ ग्रामान् दश तस्मै मनोहरान् ॥ सोऽपि लात्वा नरो ग्रामान् दश तस्थौ समाधिना। इतस्तत्राऽऽगतो भूप-पतिर्दृष्टस्तया तदा ॥ निमन्त्रितो महीपालो मनोरमेण भूभुजा। जेमितो रुचिराऽन्नादि-दानादादरपूर्वकम् ॥ एककाकिणीकापूग-नागवल्लिसमन्वितम्। वीटकं वनिता रूप-धराऽदात् सा नृपाय तु ॥ काकिणीं नृपतिर्वीक्ष्य स्वां पत्नीमवलक्ष्य च। यावज्जलपति तावत् सा पदयोर्न्यपतन्मुदा ॥ ततो भूमीभुजा पृष्टा ग्रामोपार्जनकारणम्। आमूलचूलमाचष्ट पत्नी तु नृपतेः पुरः ॥ ततो भूमिपतिर्नीत्वा स्वगृहे तां सधर्म्मिणीम्। पट्टराज्ञीं व्यधाद् भूरि-वस्त्रा-भूषणदानतः ॥ मनोरमा प्रसूते स्म सुतं शोभनवासरे। जन्मोत्सवे कृते तस्य सोमेत्याह्वां नृपो ददौ ॥ क्रमात् सोमं निजे पट्टे न्यस्य भूमिमहीपतिः। लात्वा दीक्षां धनाचार्यो-पान्तेऽपाठीज् जिनागमम् ॥ प्राप्ताचार्यपदस्तत्र विहारं मेदिनीतले। गत्वा शत्रुञ्जयेऽनंसी-न्नाभेयादिजिनाधिपान् ॥ ततो ग्रामे पुरेऽटव्यां वने पर्वतमस्तके। शत्रुञ्जयस्य तीर्थस्य माहात्म्यं ख्यातवान् स च ॥ यः शत्रुञ्जय-तीर्थे तु जिनानर्चति नौति च। नमत्यादरतो मुक्तिं स याति मानवोऽचिरात् ॥ "छट्ठेणं भत्तेणं अपाणएणं तु सत्त जत्ताए। जो कुणइ सित्तुंजे तइए भवे लहइ सो मुक्खं ॥ १ ॥" श्रीतीर्थपान्थ-रजसा विरजीभवन्ति तीर्थेषु बम्भ्रमणतो न भवे भ्रमन्ति। तीर्थे व्ययादिह नराः स्थिरसम्पदः स्युर्भवन्ति (पूज्या भवन्ति) जगदीशमथार्चयन्तः ॥ "नवि तं सुवण्णभूमी भूसणदाणेण अन्नतित्थेसु। जं पावइ पुण्णफलं पूजा ण्हवणेण सित्तुंजे ॥१॥" इत्यादि शिवशैलस्य माहात्म्यं वर्णयन् सदा। भीमसूरीश्वरः प्राप मृत आद्यं दिवं तदा ॥ ततश्च्युत उमापुर्यां रामनामाऽभवन्नृपः। क्रमाद्दाक्षगुरूपान्ते दीक्षां प्राप्याऽभवद् गुरुः ॥ ततः प्रबोधयन् भव्य-जीवान् सर्वज्ञधर्म्मणि। शत्रुञ्जयधरित्रीध्रे ययौ रामयतीश्वरः ॥ सर्वकर्म्मक्षयाद् भूरि-साधुसन्ततिसंयुतः। रामयतीश्वरो मुक्ति-नगरीं समुपेयिवान् ॥३५॥

इति शत्रुञ्जये व्याख्याते भीमकथा

---

'झाए' ध्याते कथा—

श्रीपुरे श्रवणश्रेष्ठि-पतेः कमलसेवकः। आसीच्चचाल सोऽम्बुधौ श्रेष्ठी सेवकसंयुतः ॥ उपार्ज्य द्रविणं भूरि चलमानस्य तस्य तु। यानं भग्नं तयोः पाण्योः फलकं चटितं द्वयोः ॥ दैवयोगात्तटं सिन्धो-स्तौ लभेते स्म दिनत्रये। मूर्च्छितं श्रेष्ठिनं दृष्ट्वा कमलोऽलाच्छ्रियं ततः ॥ गच्छन् स कमलो लक्ष्मी-पुरे निर्नन्दके नृपे। मृते राज्यं पृथु प्राप पञ्चदिव्यप्रयोगतः ॥ इतः सचेतनीभूतो भ्रमन् श्रेष्ठी रमापुरे। बुद्धिहट्टे ललौ बुद्धि-त्रयं रैत्रितयार्पणात् ॥ नीचोऽप्यवसरे मान्यो लघीयान् भवता ध्रुवम्। कार्यं दृष्टमदृष्टं च शुभं वाप्यशुभं त्वया ॥ जेमनायार्थितेनैव मान्यं वावसरे ध्रुवम्। ततः श्रेष्ठी चलन् लक्ष्मीपुरोपान्ते समीयिवान् ॥ आयान्तं श्रेष्ठिनं तादृ-गवस्थापतितं तदा। दृष्ट्वा राजाऽनमत्तोर्ध्या-दुत्तीर्य तातवत् किल ॥ त्वं मे श्रेष्ठिन्! पितुः स्थानेऽधुनाऽऽसीति गदन्नृपः। नीत्वा गोऽखयामास भक्तदानाच्च तं तदा ॥ श्रेष्ठ्यपि श्रयते भूपं भूपोऽपि मन्यते तकम्। श्रेष्ठिराट् प्रथमां बुद्धिं सश्लाघाऽनघमानसः ॥ कुत्रचिद् भूपतौ याते भूपपत्निं पुरोधसा। सार्द्धं भोगसुखासक्तां ददर्श श्रेष्ठिराट् स्फुटम् ॥ ताभ्यामपि

तदा तस्मिन् दृष्टे श्रेष्ठिनि गच्छति। कृत्वा दृष्टमदृष्टं च श्रेष्ठी बुद्धिं स्मरन् ययौ ॥ चकिता भूमिभुग्पत्नी श्रेष्ठिनं शूलमीक्षते। श्रेष्ठी तु निर्विकारः सन् कुमार्गे नैव गच्छति॥ ततोऽन्यदा महीपाले समेतेऽवग् नृप-प्रिया। एष ते जनकस्थानी श्रेष्ठ्यस्ति वल्लभः सदा॥ श्रेष्ठिराड् भोगहेतुं मां विलग्नो मे घनं दृढम्। मया निर्भर्त्सितोऽत्यन्तं दूरीभूतस्तदा पते!॥ एष च्छन्नं निहन्तव्यो दुष्टः श्रेष्ठी त्वया पते!। ततो राज्ञाऽन्यदा लेखो-ऽलेखीति निजपाणिना॥ एष शीघ्रं निहन्तव्यो निर्विचारं हि धीसख!। यतोऽसौ विद्यते दुष्टः पापिष्ठो दुष्टमानसः॥ मुद्रयित्वाऽथ तं लेखं वितीर्य श्रेष्ठिने तदा। नृपोऽवग् गच्छ कल्याण-ग्रामेऽर्पय च मन्त्रिणः॥ लेखं लात्वा व्रजन्तं तं दृष्ट्वा ध्यातं पुरोधसा। एष चेद् भोज्यते तर्हि मत्कृतं वक्ति न कचित्॥ ततः श्रेष्ठिनमाकार्य पुरोधाः प्रोक्तवानिति। भुक्त्वाऽद्यात्र व्रज स्वच्छ! तदा श्रेष्ठी जगाविदम्॥ एष भूपार्पितो लेखः सुमतेर्मन्त्रिणो द्रुतम्। दातुं विलोक्यते तेन भुक्त्वा स्थातुं न शक्यते॥ ततः पुरोधसा प्रोक्तं भुङ्क्ष्व त्वमत्र साम्प्रतम्। लेखं सुमतये दास्ये मुद्रितं त्वरितं वणिग्॥ स्मृत्वा मतिं तृतीयां तु श्रेष्ठी भोक्तुं स्थितस्तदा। लेखं लात्वा पुरोधाश्च ययौ सुमतिसन्निधौ॥ लेखं दत्त्वा स्थितो यावत् सोवाचि सुमतिना तदा। रहो नीत्वाऽसिना छिन्नं शिरस्तस्य च मन्त्रिणा॥ श्रेष्ठी भुक्त्वा नृपोपान्ते समेतो भूभुजोदितः। किं त्वं गतो न कल्याण-ग्रामे सुमतिसन्निधौ?॥ श्रेष्ठी जगावहं भोक्तुं बलात्पुरोधसाऽधुना। स्थापितः स्वगृहे तत्र पुरोधा लेखयुग् ययौ॥ राजा दध्यौ हतो नूनं पुरोधा मन्त्रिणा यदा। तदाऽकस्मादभूद् हा! नः पुरोधाः साम्प्रतं मृतः॥ ततो भूमिभुजा प्रोक्तं प्रेषितस्त्वं मया स्थितः। श्रेष्ठी बुद्धित्रयादान-फलं स्वं प्रोक्तवान् समम्॥ ततो राज्ञा प्रिया सा तु कर्पिता निजदेशतः। श्रेष्ठी तु मन्त्रिणां मुख्यो विहितो रुचिरोत्सवम्॥ क्रमात्तस्य नरेन्द्रस्य हस्तिनां शतपञ्चकम्। लक्षाष्टकं तुरङ्गाणामासन् कोटिश्च सेवकाः॥ अन्येद्युर्ज्ञानमाणिक्य-सूरिपार्श्वे नरेश्वरः। श्रेष्ठी च सिद्धशैलस्य माहात्म्यमशृणोदिति॥ कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च। शत्रुञ्जयं समासाद्य तिर्यञ्चोऽपि दिवं गताः॥ ध्यायन्हृदये शत्रु-ञ्जयं तीर्थं शिवप्रदम्। लभन्ते स्वर्गकल्याण-कमलां त्वरितं जनाः॥ यो दृष्टो दुरितं हन्ति प्रणतो दुर्गतिद्वयम्। सङ्केशार्हन्त्यपदकृत् स जीयाद् विमलाचलः॥ पल्योपम-सहस्रं तु ध्यानाल्लक्षमभिग्रहात्। दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम्॥ श्रुत्वेति भूपतिर्गन्तु-कामः श[illegible]ञ्जयाचले। ध्यानं वितनुते शश्वत् तीर्थस्य गमनेच्छया॥ क्रमाच्छत्रुञ्जये गन्तु-मशक्तो मेदिनीपतिः। तीर्थध्यानान्मृतः स्वर्गे प्रथमे वासवोऽभवत्॥ ततश्च्युतः कलापुर्यां चन्द्रभूमिपतेः सुतः। सोमचन्द्रा-भिधश्चासीत् रूपलावण्यसुन्दरः॥ वर्द्धमानः क्रमाच्छत्रु-ञ्जयतीर्थनतेः फलम्। सोमचन्द्रो ययौ सिद्ध-पर्वते सङ्घसंयुतः॥ तत्र नाभेयदेवस्य तस्य पूजां वितन्वतः। द्रव्यपूजां क्षयं कर्म्मराशिर्वह्नौ ययौ क्षणात्॥ ततो वितन्वतो भाव-पूजामादिप्रभोः पुरः। सोमचन्द्रस्य सञ्जातं केवलज्ञानमञ्जसा॥ तदैवायुः क्षयात् सोम-चन्द्रः केवलविद्वरः। अलञ्चकार कल्याण-नगरीं सिद्धशालिनीम्॥ ४२॥

इति 'ध्याते' कथा॥

'सुए' इति व्याख्यायते—

वर्द्धमाने पुरे चन्द्र–भूपो न्यायनिकेतनम् । अकारयत् पृथु स्वर्ग–विमानसोदरं वरम् ॥ तस्याग्रे चित्रशालां तु स्फारां चित्तचमत्करीम् । कारयित्वा ददौ चित्रकृतां चित्रयितुं नृपः ॥ तेषां चित्रकृतां चित्रशालां चित्रयतां तदा । एकश्चित्रकरो वृद्ध–श्चित्रं चित्रयते पुनः ॥ चित्रकृत्तनया भक्तं दातुं याति पितुर्यदा । तदा पिता बहिर्भूमौ याति दध्यौ ततश्च सा ॥ एष मे जनको मूर्खो यतो वेत्ति क्षणं न हि । यतो जेमनवेलायां हदितुं याति मे पिता ॥ एवं ध्यात्वा चिरं स्थित्वा जनकं भोजयेत् स्वयम् । मूर्खशीघ्र-मणिस्नातो मदीयो पञ्च नियतं (?) ॥ द्वितीयेऽह्नि पुनर्यान्ती यदा राजपथे ययौ । तदैव राट्पथे तार्क्ष्यं खेलयन् भूधरोऽभवत् ॥ खेलयन्तं तथा तार्क्ष्यं भूपं दृष्ट्वा निजेच्छया । चित्रकृत्तनया दध्यौ मूर्ख एषोऽपि भूपतिः ॥ घोटकस्य यदा घातात् पातितो मनुजः किल । मार्गयिष्यति नो नीरं जल्पिष्यति मनाग् नहि ॥ यतः—"शकटं पञ्चहस्तेभ्यो दशहस्तेन वाजिनम् । हस्तिनं शतहस्तेन देशत्यागेन दुर्जनम् ॥१॥" चित्रयन्ति महीं यावत्–प्रमाणामष्ट चित्रकाः । तावन्मात्रां निरीक्ष्य स्व–पितुर्दध्यौ तदेति सा ॥ एवं चित्रयितुं भूमिं ददन् चित्रकृतां किल । विद्यते नृपतिर्मूर्खो यतो न वेत्ति किञ्चन ॥ अन्येद्युश्चित्रकृत्पुत्री पितुश्चित्रक्षितौ रहः । आलिलेख मयूरं तु सत्पिच्छास्यांह्रिसुन्दरम् ॥ तच्चित्रं वीक्षितुं तत्र समेतो मेदिनीपतिः । लातुं पिच्छं क्षिपन् हस्तं न प्राप स्वशये च तम् ॥ पुनर्नखैर्महीभूमी–शस्योत्खन-यतस्तदा । नखा निपतिता राजा विलक्षोऽभूत्ततो भृशम् ॥ हसन्ती चित्रकृत्पुत्री तदेत्याह भूपं प्रति । खट्वाया अधुना पाद–श्चतुर्थोऽजनि सुन्दर ! ॥ ततो भूपो जगौ पादाः खट्वायाः के त्वयोदिताः । चित्रकृत्तनया प्राह पितैको मेऽभवत्पदः ॥ यतो जेमनवेलायां हदितुं याति मे पिता । त्वं खेलयन् हरिं भूप–मार्गे हि द्वितयं व्यधाः ॥ अष्टानां चित्रकर्तॄणां पितुर्मे चित्रमन्दिरम् । समं ददन् नृपोभूस्त्वं तृतीयं चरणं खलु ॥ मया चित्रितमयूर–पिच्छानि लातुमञ्जसा । प्रक्षिपन् स्वं शयं चक्रे चतुर्थं चरणं व्यधाः ॥ अतो महीपते ! जाता वीक्ष्यते साम्प्रतं खलु । तस्या एव च खट्वाया–श्चत्वारश्चरणा वराः ॥ चित्रकृत्तनयां विज्ञां विज्ञाय मेदिनीपतिः । परिणीय ददौ सद्म तस्य स्थितिकृते वरम् ॥ भूपं रञ्जयितुं राज्ञी शिक्षयित्वा सखीं निजाम् । आगते भूपतावेवं जल्पयामास कोविदम् ॥ सख्याचष्ट सुरावासे एक हस्तमिते वरे । चतुर्हस्तसुरो माति कथं प्रत्युत्तरं वद ? ॥ राज्ञी जगौ वदिष्यामि कल्ये प्रत्युत्तरं सखी । ततोऽभूच्चकितो राजा श्रोतुं तद्द्वारपार्श्वतः ॥ द्वितीयेऽपि दिने भूपे समेतेऽवक् सखी पुनः । सप्तहस्तसुरो हस्तत्रये माति कथं गृहे ॥ चतुःहस्तः सुरो हस्त–त्रये माति कथं गृहे । दशचापः सुरो हस्तत्रये माति कथं गृहे ॥ एवं दिने दिने सख्या प्रोक्ते राज्ञी जगाविति । कल्ये प्रत्युत्तरं दास्ये तुभ्यं सखि ! न संशयः ॥ इत्यादि जल्पने वर्षं यावद्भूपो निरन्तरम् । तस्याः पत्न्या गृहे भक्त्या समायातः प्रियान्तिके ॥ तदाऽन्या भूमिभुग्पत्न्य–श्चित्रकृत्सुपरिग्रहे । ईर्षांकुर्वन्त्युर्वी शं प्रति प्रोचुरिति स्फुटम् ॥ चित्रकृत्तनया ह्येषा कार्मणं कुर्वती सदा । तस्मौ त्वमप्यधुना नीचा पत्नो ते विद्यते यतः ॥ तस्याः पत्न्याश्चरित्रं तु द्रष्टुं भूपो यदा ययौ । तदा सा कान्तसत्कानि भूषणादीनि वीक्षते ॥ पितुः सत्कानि वाऽग्रे तु मण्डयित्वा जगाविति । एतानि कान्तसत्कानि पितुर्दत्तानि चात्मनः ॥ युग्मम् ॥ एवंविधां प्रतिष्ठां त्वं प्राप्ता पत्युः समीपतः । नीचा त्वया भवस्तात् स्तवास्ति न रमा तदा ॥ ज्ञात्वेति रुचिरां पत्नीं सर्वपत्नीषु मुख्यतां । अलम्भय-

न्नृपोऽदाच्च तस्यै भूषणसञ्चयम् ॥ एकहस्तालये देवश्चतुर्हस्तः कथं ध्रुवम् । मातीत्यादेर्वचो युक्तैर्वद प्रत्युत्तरं प्रिये ! ॥ पत्नी प्राह चतुर्हस्तो देवोऽच्युतो निगद्यते । सप्तहस्तो जिनो वीरः पार्श्वो नवशयः पुनः ॥ इत्यादिरुचिरे प्रत्यु-त्तरे दत्ते तया तदा । राजा हृष्टो विशेषेण पत्नीं ताममानयत् ॥ अन्यदा तत्र माणिक्य-सूरीशाः समुपागताः । तदा भूपः स्वपत्न्यादियुक्त स्तान् वन्दितुं ययौ ॥ गुरुराह जिनेन्द्रोक्तो धर्मो यैः क्रियते मुदा । तेषां न दुर्लभानि स्युः सुखानि देहिनां किल ॥ " चत्तारि परमंगाणि दुल्लहाणिह जंतुणो । माणुसत्तं सुई सद्धा संजमंमि य वीरियं ॥ १ ॥ " स्पृष्ट्वा शत्रुञ्जयं तीर्थं नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे पुनर्जन्म न विद्यते ॥ " एवं जम्मं सफलं सारं विहवस्स इत्तियं चेव । जं इच्छिज्जए गंतुं सित्तुंजे रिसहजिण नमिउं ॥ १ ॥ " निष्कलङ्कं कुलं तस्य जननी तस्य भाग्यभूः । करस्था तस्य लक्ष्मीः स्यात् सङ्घोऽभ्येति यदङ्गणम् ॥ तदा राजा जगौ दूरे तीर्थं शत्रुञ्जयाह्वयम् । तेन गन्तुं न शक्येता-स्मामिरेव गुरूत्तम ! ॥ तेन मे श्रोतुमिच्छाऽस्ति कल्पस्य सिद्धभूभृतः । ततो व्याख्यायते कल्पो गुरुभिर्भूपतेः पुरः ॥ श्रीशत्रुञ्जयकल्पस्तु चतुर्पु मास्सु सन्ततम् । श्रुतो भूमिभुजा भूरि-परिवारजुषा स्फुटम् ॥ क्रमान्मृत्वा नृपः पद्म-पुरे पद्मस्य भूपतेः । पद्मसेनाभिधः पुत्रो बभूवाऽनघमानसः ॥ तत्र शत्रुञ्जयस्यैव कल्पं शृण्वन् निरन्तरम् । अर्जयामास कल्याण-गमयोग्यं नरेन्द्रभूः ॥ मृत्वाऽथ पद्मसेनः स चन्द्रपुर्यां लसद्दिवि । भीमभूमिपतेः पुत्रो जिनचन्द्रध्वजाभिधः ॥ क्रमात्प्राप्य पितू राज्यं सर्वं सिद्धमहीधरे । गत्वा सङ्घयुतो नाभि-पुत्रादीनर्हतोऽनमत् ॥ तत्र तस्य महीशस्य शृण्वतः प्रतिवासरम् । शत्रुञ्जयस्य माहात्म्यं युक्तिप्राप्तिरनु क्षणात् ॥ ५२ ॥

इति श्रुतविषये कथा

---

'सरिए' स्मरिते तीर्थे कथा—

हरिपूर्यां धनक्षोणी-पतेः पञ्चाऽभवन् सुताः । चन्द्रसूरहरिश्रीद-बलिंदमाद्यो वराः ॥ क्रमाद् भूपेन पुत्रेभ्यश्चतुर्भ्यो राज्यसम्पदः । दातुकामोऽभवद्राजा पञ्चमस्य न कर्हिचित् ॥ पितुरग्रे तदा प्राह पञ्चमस्तनयस्त्विति । किं मे न देहि राज्यं तु किं मया ते विनाशितम् ॥ राजाऽवक् तर्हि राज्यं तु कियत्कालं प्रदास्यते । बलिंदमो जगौ बिल्वं मया खे क्षिप्यते बलात् ॥ यावत्कालं तु बिल्वं तत् न समेति महीतले । तावत्कालं ददस्व त्वं मह्यं राज्यं पितुर्द्रुतम् ॥ ओमित्युक्ते तदा पित्रा मन्त्रयोगान्नरेशभूः । बिल्वं प्रक्षिप्यते बाढं स्थापयामास स दृढम् ॥ प्रतिज्ञाप्रतिपन्नत्वात् तत्कलारञ्जितो नृपः । राज्यं बलिंदमायाऽदात् मानोत्सवपुरस्सरम् ॥ कुलं विश्वश्लाघ्यं वपुरपगदं जातिरमला, सुरूपं सौभाग्यं ललितललना भोग्यकमला । चिरायुः तारुण्यं बलमविकलं स्थानमतुलं, यदन्यच्च श्रेयो भवति भविनां धर्मत इदम् ॥ १ ॥ " तदा बलिंदमः प्राप्त-राज्यः पितुः समीपतः । सोदरेभ्यः स्वकीयेभ्यो बह्वीं भूमिं प्रदत्तवान् ॥ बलिंदमः सदा सिद्ध-शैलमाहात्म्यमादरात् । शुश्राव श्रीगुरूपान्ते नत्वा गुरुपदाम्बुजम् ॥ " छत्तं झयं पडागं चामरभिंगारण्हवणकलसा य । बलि थालं सित्तुंजे दिंतो विज्जाहरो होइ ॥ १ ॥ जो चडइ हु सित्तुंजे जै अड्ठमि चाउद्दसिं पण्णरसिं । दुण्ह वि पक्खाण फलं सो होइ परित्तसंसारी ॥२॥ नवकार पोरिसीए पुरिमड्ढेगासणे अ आयामं । पुंडरीयं सरंतो फलकंखी जिणइ भवतिण्हं ॥ ३ ॥

छट्टट्ठमदसमदुवालसाइं मासद्धमासखमणाइं । तिगरणसुद्धो लहइ सित्तुंजं संभरंतो य ॥ ३ ॥" इत्यादि सिद्धशैलस्य कुर्वाणः स्मरणं सदा । प्रत्याख्यानादि कुरुते बलिंदमो नृपस्तपः ॥ मृत्वा कालेऽथ स क्ष्मापः सिंहाह्वनगरे वरे । सिंहसेननृपस्याभूद् वैरिसिंहाभिधः सुतः ॥ क्रमात् प्राप्य पितू राज्यं सदा श्रीगुरु-सन्निधौ । शत्रुञ्जयस्य माहात्म्यं वैरिसिंहोऽशृणोदिति ॥ पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥ स्मृते शत्रुञ्जये तीर्थे दृष्टे स्मृते (ऽथवा श्रुते) पुनः । दुःकर्म्म क्षीयते पुंसां भूरिसागरसेवितम् ॥ श्रुत्वेति सिद्धभूमिध्रे गत्वा नत्वा जिनेश्वरान् । वैरिसिंहोऽर्जयामास भूरि पुण्यं शिवप्रदम् ॥ वैरिसिंहो मृतोऽन्येद्युः श्रीपुरे चन्द्रभूपतिः । वैरिकेतुसुतश्चन्द्र–रूपश्रीरभवत्तदा ॥ वितीर्य चन्द्रभूपोऽथ राज्यं स्वसूनवेऽन्यदा । दीक्षां लात्वा शिवक्ष्माध्रे ध्यानमेवं व्यधात् सदा ॥ यतः—"कालो न यातो वयमेव याता भोगा न भुक्ता वयमेव भुक्ताः । तृष्णा न जीर्णा वयमेव जीर्णास्तपो न तप्तं वयमेव तप्ताः ॥ १ ॥" एवं वितन्वतस्तस्य ध्यानं शोभनभावतः । बभूव केवलज्ञानं ततो मुक्ति-रजायत ॥ साधयित्वाऽखिलान् शत्रून् वैरिकेतुनरेश्वरः । शत्रुञ्जयस्य तीर्थस्य चकार स्मरणं हृदि ॥ स्वीयस्थानस्थितस्यापि स्मरतः सिद्धपर्वतम् ॥ उत्पन्नं केवलज्ञानं वैरिकेतुनरेशितुः ॥ प्रबोध्य भविनो भूरीन् वैरिकेतुर्यतीश्वरः । आयुःक्षये ययौ मुक्ति–नगर्यां सिद्धपर्वते ॥ २७ ॥

इति स्मरणे कथा ।

---

**जलजलणजलहिरणवनहरिकरिविसविसहराइ दुट्ठभयं । नासइ जं नाम सुई तं सित्तुंजय महातित्थं ॥३७॥**

'जलं' वारि 'ज्वलनो' वह्निः 'जलहि' जलधिः 'रणं' सङ्ग्रामं 'वनं' अरण्यादि 'हरिः' सिंहः 'करिः' हस्तिः 'विषः' 'विषधरः' सर्प्पः इत्यादि भयं दुष्टं नश्यति, यस्य नाम–अभिधा तस्याः श्रुतेः तच्छत्रुञ्जयतीर्थं जयताच्चिरम् ।

कान्त्यां पुरि धनक्षोणी–पतेर्भूरिपु सूनुपु । मीनध्वजः सुतो युद्ध–कलादक्षोऽभवत् क्रमात् ॥ वसन्तसमयेऽन्येद्युरुद्याने तनयान् नृपः । प्रैषीत् क्रीडाकृते लोका–नुग्रहाय दिनोदये ॥ राज्ञोक्तं नन्दनैः सर्वै–र्दीने रैकोटिरेकिका । वर्षं प्रति व्यये कार्या पृथक् पृथक् च नाधिका ॥ तदा पित्रुदिते सर्वै–र्नन्दनैर्विहिते सति । राजा हृष्टो ददौ मानं सर्वेषां च पृथक् पृथग् ॥ अन्यदा लघुपुत्रेण स्वर्णकोटिचतुष्टयी । याचकेभ्यो ददौ भूप–पुरः केनचिदीरितम् ॥ ततः क्रुद्धो नृपः पुत्रं हक्कयन् प्रोक्तवा-निति । रे सूनो ! किं त्वया भूरि भूरि दत्तं मया विना ॥ मद्दृष्टयोर्न समागम्यं मदुक्तं न कृतं यतः । ततो मीनध्वजो रात्रा–वेकाकी निर्ययौ पुरात् ॥ खरोऽभूद्दक्षिणो घूकोऽपरस्यां दक्षिणः पुनः । दक्षिणस्यां शिवारावो घोरो दुर्गारवः पुनः ॥ एते ह्यशुकुना जाता ममेति तत्र तस्थिवान् । विमलेन फलं वर्यं जायते पथि गच्छताम् ॥ घटीद्वयान्तरे नद्यास्तीरे शिवारवं वरम् । श्रुत्वा वंशचतुःशाखा–मध्ये हृष्टोऽभवत् स च ॥ वंशस्याधः स्थितं रत्न–चतुष्टयं मनोहरम् । ललौ स च चतुष्कोटि–मूल्यं भूपतिनन्दनः ॥ यतः—

"राजा यतिः सुहृद्वेश्या कुमारी वरवर्णिनी । दधिचन्दनदूर्वे च गजाश्वसुरभीवृषाः ॥ १ ॥" मद्यं मांसं मधुछत्रे चामराक्षतदर्पणाः । गोरोचना लतापुष्पं वस्त्रालङ्करणानि च ॥ रूप्यताम्रमणिस्वर्ण-प्रतिमा गोमयं ध्वजः । मृत्तिका शस्त्रशाकानि घृतमीनप्रदीपकाः ॥ फलं वर्द्धापणं वीणा पङ्कजानि नृपासनम् । दृष्ट्वैतानि नरः कुर्याद् दक्षिणेन प्रमोदितः ॥ चीवरी दक्षिणे कांगा दक्षिणे वृद्धतित्तिरः । लघुविनायको वामो मृगः प्रातः प्रदक्षिणा ॥ एकांगकौशिको वामः श्यमालीनिनदस्तथा । हनुमान् दक्षिणे-कांगे विचार्य परिगृह्यते ॥ ततः पश्चात् समागच्छन् जिनावासे मरुद्द्वयम् । श्रुत्वाऽभ्येत्य जिनं नत्वा यावत् स न्यविशन् मुदा ॥ तावद्देवद्वयं स्वर्गा-दागत्य पुरतोऽर्हतः । नृत्यं कुर्वन् निरीक्ष्यावग् भूपभूः संयतं प्रति ॥ एको देवः कथं वर्य-रूपवानपरः पुनः । हीनरूपोऽल्पऋद्धिश्च दृश्यते कारणं किमु ? ॥ अनेन मरुता दानं सुपात्राय ददे पुरा । अतोऽस्य रुचिरं रूपं समृद्धिश्च पराऽभवत् ॥ द्वितीयेन कुपात्राय दानं विश्राणितं ननु । अतोऽन्यस्याधमं रूपं स्वल्पर्द्धिरभवत्पुनः ॥ कुमारोऽवग् मया प्रायः सुपात्राय मुनीश्वर ! । देयं दानं यथाशक्ति कुपात्राय कदापि न ॥ यतः—"अभयं सुपत्तदाणं अनुकंपा उचिय कित्तिदाणं च । दोहि वि मुक्खो भणिओ तिन्नि वि भोगाइयं दिंति ॥ १ ॥" प्रातर्गृहे व्रजन् शेष-वन्धुभिर्हसितस्तदा । कुमारो न रुपं चक्रे प्रमोदं न हि चेतसि ॥ इतः कार्पटिकः कश्चित् राजद्वारे जगावदः । सुपितो वसति ग्रामे ततो जगौ महीपतिः ॥ किं गतं ते स च प्राह वार्द्धौ द्वादशवारकान् । गतोऽहं मेऽभवद्रत्न-चतुष्कं विलसद्युति ॥ रत्नकोटिचतुष्केण लभ्यते तन्न केनचित् । वंशजाल्यन्तरेऽमोचि तदद्य दिवसात्यये ॥ तत् कोऽपि मनुजो रत्न-चतुष्कं दिवसात्यये । लात्वा ययौ ततः सद्यो वाल्यतां मेदिनीपते ! ॥ ततश्च दापितो भूमि-भुजेति पटहः पुरे । येनात्तान्यस्य रत्नानि चौरदण्डोऽस्तु तस्य तु ॥ तदा मीनध्वजो रत्न-चतुष्कं तन्महीभुजे । दत्त्वा प्राहास्य माणिक्य-चतुष्कं विद्यते पितः ! ॥ ततो रुष्टेन भूपेन वधाय चालितो द्रुतम् । कुमारस्तातमानम्य हृष्टोऽचालीच्च भूपतिम् ॥ प्रत्यक्षीभूय देवेन तदेति गदितं किल । पुण्यवानेष ते पुत्रः त्वं धन्योऽसि नरेश्वर ! ॥ सत्यवादी नृरत्नं तु पितृभक्तो दृढं पुनः । असौ तव सुतः श्लाघ्यो विद्यते मरुतामपि ॥ मया वंशावलीमध्ये मुक्त्वा रत्नचतुष्टयम् । परीक्षितोऽस्ति ते पुत्रो नृरूपेण मयाऽधुना ॥ अहमादिदिवोऽत्रागां तव पुत्रं परीक्षितुम् । मीनध्वजाय दातव्यं राज्यं त्वया नराधिप ! ॥ ततो राज्यं महीपालो मृग (मीन) ध्वजाय सूनवे । दत्त्वा लात्वा व्रतं स्वर्गे चतुर्थे समुपेयिवान् ॥ तस्मिन् पुरेऽमितोऽन्येद्यु-र्नदीपूरेण भूयसा ॥ वेष्टिते जीविताशायां सन्देहे पतिता जनाः ॥ तदा भूपः पुरीलोक-युतः सिद्धाचलं हृदि । ध्यायन्नेकाग्रचित्तोऽभू-ज्जल्पंश्च सिद्धपर्वतम् ॥ ततो वंशस्थलीभूतः प्रवाहः सरितोऽचिरात् । अभूज्जयजयारावः सर्वत्र नगरेऽमितः ॥ ततो मीनध्वजो भूरि-सङ्घलोकसमन्वितः । यात्रां शत्रुञ्जये चक्रे जिनेन्द्राणां नतिं पुनः ॥ क्रमाच्छत्रुञ्जयध्यानात् कृत्वा कर्मक्षयं लघु । तस्मिन्नेव भवे मीनध्वजो मुक्तिं समीयिवान् ॥ ४२ ॥

इति जलोपसर्गनिवारणे मीनध्वजभूपकथा ।

---

उज्जयिन्यां पुरि कन्दर्प्प–राज्ञः प्रभावती प्रिया। श्रीमती तनया चासीत् रूपनिर्जितनिर्जरी॥ सभायामन्यदा भूप उपविष्टोऽनुगान् जगौ। भवतां सम्पदः कस्य प्रभावादभवन् खलु॥ तेऽप्यूचुस्त्वत्–प्रभावेणा–स्माकं स्युः सदने श्रियः। श्रीमत्याहाऽनुगा एते तव मायाविनः पितः!॥ यतः—"सर्वेषां देहिनां पूर्व–कृतात् कर्म्मसमूहतः। शुभाशुभानि जायन्ते नान्यत् पित्रादि कर्हिचित्॥१॥" सुखदुःखानां कर्त्ता हर्त्ता च न कोऽपि कस्यचिज्जन्तोः। इति चिन्तय सद्बुद्ध्या पुराकृतं भुज्यते कर्म्म॥ धनदो धन-मिच्छूनां कामदः काममिच्छताम्। धर्म्म एवापवर्गस्य पारम्पर्येण साधकः॥ तत्र रुष्टो नृपस्तत्रा–गतं कुष्ठिनरं द्रुतम्। दृष्ट्वा तस्मै ददौ पुत्रीं जीर्णवस्त्रादिभूषिताम्॥ नीत्वा च स नरः पुर्या बहिस्तृण-कुटीरके। कन्यां प्रति जगौ भद्रे! गच्छ त्वं स्वपितुर्गृहे॥ अहं पूर्वकृतं दुष्ट–कर्म्म भुञ्जन्निहाधुना। असि त्वं तु कथं पृष्ठौ मम लग्नासि भद्रके!॥ अहं कुष्ठी महीपाल–पुत्री त्वं चारुरूपभृत्। तेनातो गच्छ भोक्ष्येऽहं स्वकृतं कर्म्म साम्प्रतम्॥ कन्या कर्णौ पिधायावक् स्वामिन्! न्यायमयं (च्युतं) वचः। मा जल्पाहं न मुञ्चे त्वं जीवितव्यात्ययेऽपि हि॥ इत्युक्त्वा श्रीमती सुप्ता यावत्तावत्क्षणात् पुनः। उन्निद्रा रैमयं स्फार-मपश्यन्मन्दिरं वरम्॥ माणिक्यमयपल्यङ्के स्थितं स्वं विरुजं पतिम्। दृष्ट्वा सा प्राह किमिदं वीक्ष्यते सद्गृहादिकम्?॥ ततः स मानवोऽभाणीत् साहसं चेदृशं तव। यत्त्वया जल्पितो धर्म्म–मार्ग एव यदि ध्रुवम्॥ वैताढ्याद्रौ पुरे व्योम–वल्लभे श्रीप्रभः खगः। रात्रौ छन्नं भ्रमन् कस्य–चिदास्यादिदमश्रृणोत्॥ सर्वत्र वायसाः कृष्णाः सर्वत्र हारिताः शुकाः। सर्वत्र सुखिनां सौख्यं दुःखं सर्वत्र दुःखिनाम्॥ आकर्ण्यैतदहं श्लोक–परिज्ञानकृतेऽधुना। न्यस्य मन्त्रिषु राज्यं तु भ्रमितुं निर्गतः पुरात्॥ कुष्ठिरूपं विधायाहं भ्रमन्नहं क्षितौ क्रमात्। आगात्तव पितुः पुर्यां त्वत्पित्रा त्वं ददे मम॥ प्रातर्भूपादयो लोकाः समेत्य नगराद्बहिः। स्मरोपमं सुताकान्तं निरीक्ष्योचुः परस्परम्॥ धर्म्म एव सुखं दत्ते दुःखं दुष्कृतमेव तु। यतो वरं वरं प्राप श्रीमती धर्म्मजल्पनात्॥ धर्म्मादेव सुखं जीवाः प्राप्नुवन्तीति सर्वतः। जल्पन् भूपो गजारूढं जामातरं सुतान्वितम्॥ ददद्दानं सुपात्राय पञ्चशब्दपुरस्सरं। निजावासे समानीय सच्चक्रे स्वन्नदानतः॥ राजा पुत्रीमुखाच्छ्रुत्वा जामातुश्चरितं तदा। भक्त्या गौरवयामास गजाश्वादिप्रदानतः॥ ततो विद्याधरः पत्नी–युक्तः स्वकीयमन्दिरे। समेत्य श्रीजिनप्रोक्तं धर्म्मं वितनुतेतराम्॥ यतः—"परीक्ष्य सुकुलं विद्या शीलं शौर्यं सुरूपताम्। विधिर्ददाति निपुणं कन्या राज्यं दरिद्रताम्॥१॥" प्रदीपनेऽन्यदा लग्ने श्रीप्रभो गगनेचरः। ध्यानं शत्रुञ्जयस्याधाद् भूरिलोकसमन्वितः॥ तदा प्रदीपनं प्रायो प्रशमं तीर्थसंस्मृतेः। ततो जयजयारावः सर्वत्राभूत् पुरान्तरे॥ ततो विमानमारूढो गत्वा शत्रुञ्जयाचले। अर्चयन् श्रीयुगादीशं श्रीप्रभो व्योमगो मुदा॥ सोऽपि विद्याधरः प्राप्य क्रमात् संयममादरात्। क्षीण-कर्म्मा ययौ मुक्तिनगर्यां विदधत्तपः॥ २९॥

इति ज्वलनोपशमे विद्याधरकथा।

---

सामलिप्तीपुरे सोमोऽन्यदा मित्रेण संयुतः। जगौ न शोभते लक्ष्मीं विना वर्यतनुर्नरः॥ "यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् गुणज्ञः। स एव वक्ता स च दर्शनीयः, सर्वे

गुणाः काञ्चनमाश्रयन्ते ॥१॥ जाइ रूवं विज्जा तिन्नि निवडंतु कंदरे विवरे । अत्थुच्चिय परिवुड्ढउ जेण गुणा पायडा हुंति ॥ २ ॥" विमृश्येति ततः सोमो मित्रयुग् वार्द्धिवर्त्मना । ययौ मनोहरद्वीपे पद्मोपार्जनहेतवे ॥ षष्टिलक्षमितं हेमो-पार्ज्य जलधिवर्त्मना । चलमानस्य पाथोधि-रुत्कल्लोलोऽजनि भृशम् ॥ भज्यमाने तदा यान-पात्रे श्रेष्ठी जनान्वितः । ध्यानं कुर्वन्नभूच्छत्रु-ञ्जयस्यैकाग्रचेतसा ॥ तदाऽकस्माच्छुभे वाते समायाते पयोनिधौ । यानं सरलमार्गेण चलन् वार्द्धेस्तटे ययौ ॥ यतः—"यत्नः कामार्थयशसां कृतोऽपि निष्फलो भवेत् । धर्म्मकर्म्मसमारम्भ-सङ्कल्पोऽपि न निष्फलः ॥१॥" यावच्चित्तं च वित्तं च यावदुत्सहते मनः । तावदात्महितं कार्यं धर्म्मस्य त्वरिता गतिः ॥ प्रासादप्रतिमा यात्रा प्रतिष्ठा च प्रभावना । अमार्युद्घोषणादीनि महापुण्यानि देहिनाम् ॥ ततः सोमो जिनागारं स्फारं कारयितुं वरम् । पुरोद्याने ललौ भूमीं याचित्वा भूपपार्श्वतः ॥ आनायिता वराश्मानः शिलावट्टाश्च पण्डिताः । मुहूर्त्ते रुचिरे सार्वा-गारं तेन विधायितुम् ॥ उच्चैः कृत्वा शीलामर्द्ध-स्फाटितां कीलिकान्तिके । अवष्टभ्य शिलावट्टा ययुर्जेमनहेतवे ॥ अत्रान्तरे समायातं कपियूथं परिभ्रमन् । क्रीडां वितनुते सर्व-प्रस्तरेषु पृथक् पृथग् ॥ तत्रैको वानरो बाल-भावेन कीलकं हठात् । कर्षयन् वृद्धकपिना वारितोऽपि च न स्थितः ॥ कीलके चलितेऽकस्मा-त्तदाऽधो वानरः स्थितः । पतन्त्या शिलया क्षिप्तो ययौ यमनिकेतनम् ॥ तदैकेन समेतेन वानरेणेति प्रजल्पितम् । अव्यापारेषु कुर्वाणो व्यापारं मरणं व्रजेत् ॥ यतः—"अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति । स एव निधनं याति कीलोत्पाटी च वानरः ॥ कारयामास सम्पूर्णं प्रासादं श्रेष्ठिराट् तदा । ततस्तत्रादिदेवस्य बिम्बमस्थापयन्मुदा ॥ शत्रुञ्जयगिरेर्ध्यानात् वारान् द्वादश वारिधौ । उपार्ज्य द्रविणं भूरि श्रेष्ठी स्वगृहमीयिवान् ॥ सप्तक्षेत्रेषु भूयिष्ठां व्ययल्लक्ष्मीं निरन्तरम् । क्षीणकर्म्मा ययौ मुक्तिं सोमः श्रेष्ठीश्वरः क्रमात् ॥ २१ ॥

इति जलधिसमुत्तरणे कथा ।

---

ताम्रलिप्त्यां पुरि क्ष्मापो मित्रसेनोऽभवन्नयी । सुमित्रः सचिवश्चासी-च्चञ्चद्बुद्धिनिकेतनम् ॥ तत्रोद्यानेऽन्यदा धर्म्म-सेनसूरिक्रमाम्बुजम् । नन्तुं नृपो गतो धर्म्मं शुश्रावेति कृतादरः ॥ आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्म्मकर्म्म न करोति जडो यः पोतमुज्झति पयोधिगतः सः ॥ मिथ्यात्वं सर्वथा हेयं धर्म्मं वर्द्धयता सता । विरोधो हि तयोर्वाढं मृत्युजीवितयोरिव ॥ भावेन क्रियते धर्म्मो येन स्वहितमिच्छुना । स एव लभते स्वर्गा-पवर्गसम्पदः क्रमात् ॥ भावेन दानपुण्यादि क्रियमाणं शरीरिभिः । राज्यस्वर्गादिसातानि ददते नात्र संशयः ॥ राजा प्राहान्तरं भावाऽभावयोर्जायते कथम् । गुरुराह पुरे कान्य-कुब्जे सुरपुरोपमः ॥ विद्यते निधिदेवश्च भोगदेवश्च नैगमौ । तयोर्विद्धि स्वरूपं तु सद्भावाऽभावयोः किल ॥ युग्मम् ॥ कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोलोमतः, पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना, प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ ततो महीभुजा प्रेषि सुमित्रः सचिवेश्वरः । कान्यकुब्जपुरे ज्ञातुं तयोः स्वरूप-

मञ्जसा ॥ विंशतिस्स्वर्णकोटीनां निधिदेवो धनेश्वरः । भोगदेवोऽपि रैकोटि–विंशतीशोऽभवत्तदा ॥ निधिदेवगृहद्वारे जीर्णशीर्णं वरं नरम् । दृष्ट्वा पप्रच्छ मन्त्रीशो निधिदेवः क विद्यते ? ॥ निधिदेवो जगावत्र किमर्थमागतो वद ? । सचिवोऽवगहं तस्य प्राघूर्णकोऽस्मि साम्प्रतम् ॥ निधिदेवोऽभणत् प्राघूर्णकैरेवेह भक्षितः । त्वमप्यागच्छ मद्गेहे दास्ये जेमनमेव ते ॥ मलक्लिन्नतनुर्गत्वा प्राघूर्णकयुतो वणिग् । अधौतक्रमणो भोक्तु–मुपविष्टः क्षितेस्तले ॥ प्रथमं कङ्गुवल्लादि स्तोकं तैलसमन्वितम् । श्रेष्ठी भुञ्जन् समं तेन ममार्ग दुग्धमेव सः ॥ पादस्खलनतो दुग्धामत्र वण्ठोऽप्यभञ्जयत् । तदा रुष्टो भृशं श्रेष्ठी वण्ठस्योपरि निर्दयम् ॥ दध्यावेष निहन्येत तदा दोषो न जायते । तत आचमनं लात्वा श्रेष्ठी तेनोत्थितः समम् ॥ पश्चात्तेन समं श्रेष्ठ्युदग्राहण्या नगरेऽभ्रमन् । सायं यावत् समायातोऽपिवद् रब्वां विनां घृतम् ॥ रात्रौ त्रुटितशय्यायां संजीर्णास्तरकोपरि । शायितो मन्त्रिराट् दध्या–वहो ! अस्यास्ति गौरवम् ॥ श्रेष्ठिन्यवग् क्रिया कण्ठ ! वण्ठ ! दुग्धस्य भाजनम् । त्वयाऽभञ्जि मया सेहे नातः कार्यमिदं त्वया ॥ प्रातरुत्थाय मन्त्रीशो भोगदेवस्य सद्मनः । द्वारेऽभ्येत्य गृहं वर्यं वीक्ष्य चित्ते चमत्कृतः ॥ सप्तभौमे गृहे तस्मिन् सुरूपान् रुचिराम्बरान् । आयातो व्रजतो वीक्ष्य मन्त्र्यवग् द्वारपं प्रति ॥ अस्ति क भोगदेवेभ्य–स्तस्य प्राघूर्णकोऽस्म्यहम् । द्वास्थो वराम्बरः प्राहा-सने क्षणमुपाविश ॥ इतस्तुरङ्गमारूढो भोगदेवः सुवेषभृत् । सुपरीवारयुगा(तो चा)गात् स तस्य मिलितस्तदा ॥ सस्नेहं भाषितो मन्त्री भोगदेवेन तत्र सः । नीत्वा गौरवितोऽत्यन्तं सदन्नपानदानतः ॥ दिने दिनेऽन्नपानादि–दानं तस्मै स दत्तवान् । तथा यथाऽभवद्भोग–देवो हृष्टोऽभवद् भृशम् ॥ मिथ्यादृष्टिसहस्रेभ्यो वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेभ्यो वरमेको महाव्रती ॥ महाव्रतिसहस्रेभ्यो वरमेको जिनाधिपः । जिनाधिपसमं पात्रं न भूतं न भविष्यति ॥ जेमनादनु कर्प्पूर–मिश्रपत्राणि सादरम् । दत्ते श्रेष्ठी तु सन्ध्यायां तस्मै सच्छयनास्तरे ॥ आगतायार्थिने भूरि दानं विश्राणयति स च । साधुभ्योऽथ विशेषेण प्रासुकान्नं सुभक्तितः ॥ दृष्ट्वैतन्मन्त्रिराडेत्य भूपोपान्ते जगौ समम् । भोगदेवनिधिदेव–स्वरूपमादितस्तदा ॥ ततो भूपः समन्त्रीशः समेत्यावग् गुरोः पुरः । स्वरूपं भोगदेवस्य निधिदेवस्य जल्पताम् ॥ गुरुः प्राह रमापुर्यां चन्द्रसोमौ वणिग्वरौ । अभूतां भूरिलक्ष्मीशौ वररूपधरौ पुनः ॥ आद्यो जिनार्चनां कृत्वा साधुभ्यो वरभावतः । दत्त्वा जेमति सुश्राद्धैः सप्ताष्टभिः समं सदा ॥ "पढमं जईण दाऊणं अप्पणा पणमीऊण पारेइ । असई सुविहियाणं भुंजेइ कयदिसालोओ ॥ १ ॥ साहूण कप्पणिज्जं जं नवि दिन्नं कहिं चि किंपि तहिं । धीरा जहुत्तकारी सुसावया तं न भुंजंति ॥ २ ॥ सैव भूमिस्तदेवाम्भः पश्य पात्रविशेषतः । आमे मधुरतामेति कटुत्वं निम्बपादपे ॥ इतरेण विना भावं परेषामनुवर्त्तनात् । प्रासुकान्नं च पानं च ददे सोमेन कर्हिचित् ॥ अतोऽभवद्धनं तस्य न भोगः कर्हिचित् खलु । श्रुत्वैतन्मन्त्रिराडेत्य प्राह भूमीपतेः पुरः ॥ ततो राजा समन्त्रीशो भावाद् धर्म्मं निरन्तरम् । कुर्वाणः कारयत्यन्य–मनुमोदयति स च ॥ तत्रान्यदा द्विषच्चक्रे समे ते मनुजाः समे । अभूवन् व्याकुला बाढं जीवितव्ये गताशयाः ॥ तदा सन्मुखमागत्य मित्रसेनो महीपतिः । युद्धं कुर्वन् द्विषा सार्द्धं भग्नसैन्योऽभवत् क्षणात् ॥ क्रमाद् व्याप्तेऽखिले देशे वैरिणा मेदिनीपतिः । स्मरन् शत्रुञ्जयं युद्ध–कृते समरमीयिवान् ॥ सिद्धाद्रेर्ध्यानतः सर्वान् शत्रून् जित्वा क्षणात्तदा । सुखिनीजनताश्चक्रे मित्रसेनावनीपतिः ॥ ततः शत्रुञ्जये भूरि सङ्घयुग् शिवशर्म्मदे । ( गत्वा श्रीवृषभं देवं ) स्नात्रार्चादि द्रुपं चक्रे कल्याणकमलाकृते ॥ मित्रसेनो निजे

पट्टेऽभिषिच्य स्वीयनन्दनम् । गुरूपान्ते व्रतं लात्वा तपस्तीव्रं व्यधाद्बहु ॥ शत्रुञ्जयेऽन्यदा यातो मित्र-सेनः सुसाधुयुग् । कृत्वा कर्म्मक्षयं शीघ्रं जगाम शिवपत्तने ॥ ४८ ॥

इति रणे जयप्राप्तिविषये मित्रसेनकथा ।

---

सुखेनाटव्युल्लङ्घने कथा,—

सुरपुर्यां हरक्ष्मापे राज्यं कुर्वति सन्नयात् । परचक्रं समायात-मकस्मात्तत्र दुर्दमम् ॥ लुण्ट्य-मानेषु लोकेषु धनेषु रिपुभिस्तदा । धनेभ्यो जगृहे भीम-भटेन दुष्टचेतसा ॥ ततश्चलत्यपरे मार्गे धनेभ्य उपलक्षितः । यदा तदा धनकोटि-द्वयं वैरी स्म याचते ॥ तदा धनो जगौ लोका मुच्यतां निखिलं हृतम् । अहं कोटिमितं द्रव्यं तुभ्यं दास्ये रिपूत्तम ! ॥ अहमेकां तु कोटिं स्वमोचने वितरामि हि । तदा न मन्यते वैरी तं ताडयति निर्दयम् ॥ ताड्यमानो धनः शत्रु-ञ्जयध्यानं तदाऽऽदरात् । कुरुते प्रत्यहं घस्र-सप्तकं गत-मञ्जसा ॥ पश्यत्सु भूरिशूरेषु धनः शत्रुञ्जयाचलम् । ध्यायन्निर्यान्न केनापि दृष्टो वीरेण तत्र सः ॥ धनो व्रजन् महाटव्यां न पारं लभते यदा । तदा तृपाऽलगद्गाढं प्राणात्ययविधायिनी ॥ तदा धने शिव-क्ष्माध्र-ध्यानैकमानसे दृढम् । अटवीदेवताऽभ्येत्य जगौ तुष्टा वरं वृणु ॥ धनोऽवग् यदि तुष्टाऽसि तदाऽस्य काननस्य हि । पारमानयतात् सद्यो दर्शय त्वं जलाशयम् ॥ ततो धनो मुदाऽटव्या देव्या निजपुरे रयात् । नीतः पीत्वा पयः स्वस्थ-चित्तोऽजनि निरन्तरम् ॥ ततः शत्रुञ्जये गत्वा नत्वा श्रीवृषभं प्रभुम् । अर्जयामास सत्कर्म्म कल्याणगमनोचितम् ॥ १२ ॥

इति वनोल्लङ्घने कथा ।

---

सण्डेरकपुरे श्रीमान् यशोभद्रगुरूत्तमः । विहरन्नाययौ भव्यान् जनान् बोधयितुं क्रमात् ॥ तत्र भीमाभिधः श्रेष्ठी कारयित्वा जिनालयम् । सङ्घमाकारयद्बिम्ब-प्रतिष्ठावसरे बहु ॥ लक्षप्रमितलोकेषु मिलितेषु घृतं यदा । निष्ठितं प्रोक्तवान् भीमस्तदेति श्रीगुरुं प्रति ॥ निष्ठितं सर्प्पिरत्रैव गुरो ! किं क्रियते वद ? । गुरुः प्रोवाच रिक्तास्त्वं कुम्भीः सम्प्रति मण्डय ॥ ततः पालीपुरान्नीत्वा घृतं वीरेभ्यसद्मतः । कुम्भीर्बभार ताः सर्वा यशोभद्रगुरूत्तमः ॥ तदा भीमेन ते श्राद्धाः सर्वे गौरविता भृशम् । ततो घृतेन भूयांसः कृतपानभरद्दृढम् ॥ गत्वा पालीपुरे वीर-श्रेष्ठिनोऽग्रे जगौ स च । एतद् घृतं गृहाण त्वं मया देयं यतस्तव ॥ श्रेष्ठ्याचष्ट कदा सर्प्पिर्गृहीतं मे निकेतनात् । घृतानयनवृत्तान्तो भीमेन गदितोऽखिलः ॥ ततो बलात् सपादं तु घृतं तस्मै वितीर्य च । भीमः स्वसदनेऽभ्येत्य जैनं धर्म्मं करोति सः ॥ गुरुभि-र्विहितं तन्नो-पकारं श्रेष्ठिराट् स्मरन् । न मुञ्चते गुरुं चित्तात् क्वचित् कचित् कदापि च ॥ यतः—प्रथमवयसि पीतं तोयमल्पं स्मरन्तः, शिरसि निहितभारा नालिकेरा नराणाम् । उदकममृततुल्यं दद्यु-राजीवितान्तं, न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १ ॥" यात्रायां गच्छतः सङ्घ-पतेर्ग्रीष्मेऽखिलो जनः । तृपाया बाधितोऽत्यन्तं जीवितसंशयेऽपतम् ॥ सिद्धाद्रिध्यानतोऽकाले मेघवृष्टिर्गुरूत्तमैः । कारिता निर्जरोपान्तान् तथाऽभवन् सुखं हृदि ॥ एकदा गुरुराड् दष्टः कृष्णसर्पेण वर्त्मनि । सिद्धाद्रिध्यानतोऽ-

वालि विषं तु गुरुणा तदा ।। तच्छिष्यः क्षमकृष्ट्याह्व-श्चतुर्विंशतिमन्यदा । ललावभिग्रहानेवं गुरुपार्श्वे-सुभक्तितः ।। कान्दविकालये त्राणानेकविंशति सम्मिताः । राजपुत्रेण कुन्ताग्राद् गुडेन सहिता मुदा ।। दीयते चेत्तदा कार्यं पारणं मयका ध्रुवम् । मासत्रये गते पूर्णोऽभिग्रहस्तस्य तत्र तु ।। सिंधलक्ष्मी-पतेर्मर्त्यः कमलो गजशुण्डया । दास्यते मोदकान् पञ्च यदि मह्यं नृपाध्वनि ।। तदा मेऽभिग्रहः पूर्णी-भविष्यत्यन्यथा नहि । स एवाभिग्रहं पञ्च मासैरपूरि तस्य तु ।। ब्राह्मणप्रेयसी राजमार्गे यान्ती स्वम-स्तकात् । उत्तार्य शुण्डकं मध्या-ह्नि द्वादश मण्डकान् ।। सघृतान् दास्यते चेद्धि पूर्णो मेऽभिग्रहस्तदा । स एवाभिग्रहः पूर्णो मासत्रयदिनाष्टके ।। मण्डकान् मापसंयुक्तान् सप्त खण्डघृतान्वितान् । नवमीवा-सरे राजपुत्री दास्यति चेन्मम ।। तदा मया विधातव्यं पारणं नान्यथा पुनः । स एवाभिग्रहोऽपूरि पञ्च मासदिनत्रये ।। श्वेतखण्डकृष्णकेसरना किइं त्राटइ पुच्छडि वाडंउ चंड सिंगेकरी गुल भेलओ देइ तो खमरिसि पारणउ करेइ ।। १ ।। नवप्रसूत वाघिणि विकरालि नयर वाहिरि वीहावइ बाल । वडां वीसइ जइ प्रणमी देइ तओ खमरिसि पारणं करेइ ।। २ ।। देवतयाऽभिग्रहोऽपूरि तस्य, । काली कम्बलि कानडं संड नाकिइं सरडउं । पूंछडी छंड सीग करेइ गुलभेलउ देइ तो खमरिसि पारणं करेइ ।। ३ ।। ” इत्यादि भूरिशस्तस्याभिग्रहाः पूरितास्तदा । पुण्यप्रभावतः किं किं न जायेत शरीरिणाम् ।। शिवाद्रि-ध्यानतः सिंह आगच्छन् सम्मुखं किल । अभूज् जम्बूकवत् शान्त-चेतास्तस्य मुनीशितुः ।। २८ ।।

इति हरिविषये क्षमर्षिकथा ।

---

भूमण्डने पुरे चन्द्र-वीरसूरामराभिधाः । चत्वारः सुहृदो मैत्री-जुषोऽवसन् वराशयाः ।। चत्वा-रोऽपि गुरूपान्ते पठन्तः शास्त्रसञ्चयम् । बभूवुः कोविदा बाढं दयावासितमानसाः ।। लक्ष्म्यर्थमन्यदा सर्वे सुहृदः स्वीयपत्तनात् । निर्गता अर्जयन्ति स्म लक्ष्मीः काश्चित् स्वकर्म्मतः ।। यतः—“ जाई रूवं विज्जा तिन्नि वि निवडंतु कंदरे विवरे । अत्थुच्चिय परिवड्ढउ जेण गुणा पायडा हुंति ।। १ ।। ” तेषु गच्छत्सु मार्गेषु स्कन्धस्थछगलः पुनः । आगच्छन् ब्राह्मणोऽकस्मात् सम्मुखो मिलितो ध्रुवम् ।। ज्ञातं तैः छगलो ह्येष यागाय नीयतेऽधुना । ब्राह्मणेन कथं रक्ष्योऽस्माभिः सुकृतहेतवे ।। एको रूपं परावृत्या-भ्येत्य सम्मुख ऊचिवान् । भो विप्र ! त्वं कथं स्कन्धे श्वानं वहसि साम्प्रतम् ।। घटीद्वयादनु प्राह द्वितीयः सम्मुखागतः । मृगः किं क्रियते स्कन्धे भो विप्र ! साम्प्रतं त्वया ।। घटीद्वयादनु प्राह तृतीयः सन्मुखा-गतः । श्वानः किं क्रियते स्कन्धे विप्रेदानीं त्वया खलु ।। [ सर्वदेहिनाम् ] घटीद्वयादनुप्राह चतुर्थः सम्मुखागतः । वृकः किं क्रियते स्कन्धे विप्रेदानीं त्वया खलु ।। अथ दध्यौ द्विजः किं मे राक्षसोऽयं दुराशयः । यजमानेन दत्तोऽस्ति हनिष्यति स मां द्रुतम् ।। विमृश्येति निमील्येऽक्षि-द्वयीं बिभ्यन् द्विजस्तदा । स्कन्धादुत्तार्य चिक्षेप दूरं जीवितहेतवे ।। विमोच्य वाडवात् छागं चत्वारः सुहृदस्तदा । अग्रतश्चलिता द्रव्यो-पार्जनाय मुदा तदा ।। ततः—बहुबुद्धिसमायुक्ताः सुविज्ञातबलोत्कटाः । शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणादिव छागकम् ।। गच्छतामग्रतस्तेषा-मेको मत्तो मतङ्गजः । सम्मुखो मिलितोऽकस्मात् हन्तुकामोऽ-भवद्यदा ।। तदा ते सुहृदः सर्वे तीर्थं शत्रुञ्जयाभिधम् । हृदि कृत्वा दृढं तस्थु-स्तत्रैव गिरिशृङ्गवत् ।। अशक्तः कुञ्जरो हन्तुं तान् दृष्ट्वाऽपि व्यचिन्तयत् । किमेते मयका दृष्टाः पूर्वं मर्त्याः समे ध्रुवम् ।। चिन्तयन्निति

कुम्भी स प्राप्य जातिस्मृतिं तदा । तेषां नत्वा क्रमौ तस्था-वग्रतः शान्तमानसः ॥ ते दध्युः सुहृदः सर्वे किमेष नः क्रमौ गजः । नमन् पुनः पुनस्तस्थौ न यात्यन्यत्र कुत्रचित् ॥ इत्यकस्माद् यतिर्ज्ञानी तत्राऽऽयातो वने द्रुतम् । पृष्टः कुम्भिस्वरूपं तैः जगादेति च तान् प्रति ॥ भूमण्डनपुरे चन्द्र-वीरसूरामराभिधाः । चत्वारः सुहृदश्चासन् पञ्चमो धरणः पुनः ॥ चत्वारो जिनधर्म्मज्ञाः कुर्वाणा आर्हतं वृषम् । पञ्चमं प्रत्यवोचँस्ते धर्म्मं जैनं कुरुष्व भोः ! ॥ सोऽपि धर्म्मं कृत्वाऽथ मृतोऽयं कुञ्जरोऽभवत् । यूयं सुहृदश्चात्रागता दैववशाद्वने ॥ एष कुम्भ्यधुना भूयो भूयोऽनशनमेव तु । याचते प्राग्भवं स्मृत्वाऽग्रतः सद्गतिहेतवे ॥ गजोऽनशनं लात्वा प्रपाल्य जीवितावधि । स्मारितः शिवशैलेति स्वर्गं प्रथममीयिवान् ॥ तदा ते सुहृदो धर्म्मं जैनेन्द्रं सविशेषतः । प्रपद्य कदलीपुर्यां लक्ष्म्यर्थं च समागमन् ॥ उपार्ज्य विभवं भूरि चत्वारः सुहृदः क्रमात् । स्वपुरेऽभ्येत्य कुर्वन्ति धर्मं सर्वज्ञभाषितम् ॥ ततः शत्रुञ्जये तीर्थे चत्वारः सुहृदो मुदा । गत्वा नत्वा जिनान् भूरि कमलामव्ययन् ध्रुवम् ॥ विधाय सप्त षष्ठानि प्रान्ते चाष्टममेककम् । सुक्रियानोचितं कर्म्मो-पार्जयामासुराशु ते ॥ यतः—" छट्ठेणं भत्तेणं अपाणएणं तु सत्त जत्ताओ । जो कुणइ सित्तुंजे स तइयभवे लहइ सिवसोक्खं ॥ १ ॥ " चत्वारः सुहृदस्ते तु प्रान्ते मृत्वा सुरालये । प्रथमे समपद्यन्त मित्रदेवस्य सन्निधौ ॥ पञ्चापि सुहृदश्च्युत्वा क्रमाद्भोगपुरे वरे । अभूवन् जिनदत्तस्य तनया विनयान्विताः ॥ क्रमात्प्राप्य व्रतं शत्रु-ञ्जये गत्वा तपोऽनघम् । कृत्वा छित्त्वाखिलं कर्म्म श्रेष्ठिपुत्राः शिवं ययुः ॥ ३२ ॥

इति करिविषये चतुर्मित्रकथा ।

---

इन्द्राह्ननगरे कोन्त-सेनभूपेऽवति क्षितिम् । व्यवहार्यभवद्देव-सेनो भूपतिवल्लभः ॥ धनसेनौष्ट्रिका-वासान् निर्गत्यैकोष्ट्रिका किल । देवसेनाङ्गणे नित्यं तिष्ठति स्म सुखार्थिनी ॥ कुट्टयित्वौष्ट्रिकः स्वीय-गृहे चानयते यदा । तदा कृत्वा छलं याति देवसेनालयाङ्गणे ॥ तत इभ्येन मूल्येन समानीतोष्ट्रिका गृहे वहिश्चारं चरित्वाऽथ सन्ध्यायां स्वयमेति च ॥ एकदा जिनसूरीशं तत्रायातं वहिर्वने । इभ्योऽप्राक्षीत् कथं ह्येषो-ष्ट्रिकाऽभ्येति ममालये ? ॥ सूरिराचष्ट ते पत्नी ह्येषा पूर्वभवांप्रया । कृत्वा दीपं जिनस्याग्रे पश्चात्तस्मात्प्रदीपतः ॥ स्वकीयगृहदीपं तु विधायाथ जिनालये । चकार गृहकार्याणि सर्वाणि प्रतिवासरम् ॥ सन्धुक्षितोऽनया धूपा-ङ्गारेण चुल्हकः स्त्रिया । अनालोच्य मृता तिर्यग्-मध्ये जातोष्ट्रिकाऽधुना ॥ जातिस्मृत्या भवं पूर्वं ज्ञात्वा तव निकेतने । तस्थावेषोष्ट्रिका स्वीयं कृत्यं निनिन्द सन्ततम् ॥ ततः स्वभाषया पूर्व-भवे निषेवितं तमः । आलोच्यानशनान्मृत्वा स्वर्गलोकमुपागमत् ॥ ततः स उष्ट्रिकाजीव-श्च्युतः स्वर्गाद्रमापुरे । प्राप्य मानुष्यकं जन्म ययौ शत्रुञ्जये शिवम् ॥ १ ॥ " श्रीशत्रुञ्जयमाहात्म्यं देवसेनो धनेश्वरः । श्रुत्वा शिवाचलेऽनंसीद् ऋषभादिजिनेश्वरान् ॥ भुजङ्गेनान्यदा देवसेनो दष्टोऽतिदारुणः । शिवाद्रिमस्मरच्चित्ते भूयो भूयः सुभावतः ॥ उत्ततार क्षणात् क्ष्वेडं सर्पजं तस्य देहतः । सुखी जातस्ततो भूरि-कालं स देवसेनकः ॥ ततः शत्रुञ्जयं ध्यानं कुर्वाणः प्रतिवासरम् । देवसेनो गृहावासे केवलज्ञानमाप्तवान् ॥ ततो विबोधयन् भव्य-जीवान् साधुनिषेवितः । ययौ शत्रुञ्जये शैले महोदयसुखप्रदे ॥ उपदेशं ददानस्य देवसेनस्य तत्र तु ।' असङ्ख्यातनृणां ज्ञान-मक्षयं समजायत ॥ १७ ॥

इति विषहरविषमे देवसेनकथा ।

---

आदिशब्देनान्या अपि कथा ज्ञेया, तथाहि—

विश्वपुर्यां नृपः क्षेम-ङ्करो न्याय्यभवद् वरः। युगन्धराभिधः पुत्र-स्तस्याजनि मनोहरः॥ युगन्धरोऽन्यदा साधो-र्ज्ञानोत्पत्त्युत्सवं सुरैः। क्रियमाणं निरीक्ष्याथ जातिस्मृतिं मतिं स्फुटाम्॥ स्मृत्वा पूर्वभवं दीक्षां लात्वा युगन्धरः स्वयम्। ज्ञान्युपान्ते गतो वृत्तं शुद्धं पालयितुं तदा॥ राजादयो जना वन्द-नार्यै तत्र तदाऽऽययुः। तदेकः कुष्ठरोगार्त्तो रोरो दुःखी समागमत्॥ श्रुत्वा धर्म्मं तदा तस्य कुष्ठिनः प्राग्भवं भवम्। भूपोऽप्राक्षीत्तदा ज्ञानी जगाविति नृपाग्रतः॥ कुसुमाह्वे पुरे नन्द-नागदेवौ सहोदरौ। परस्परं सदा प्रीति-भाजौ संवसतः स्फुटम्॥ नन्दो वितनुते शुद्धं व्यवसायं वराशयः। तेन सर्वेषु लोकेषु श्लाघां प्राप स विस्तराम्॥ किंचिल्लोभपरो नित्यं कुर्वन् विह्वतिमात्मना। क्षीणस्वो देवद्रव्यं तु स्वल्पं भुङ्क्ते स्म कर्म्मतः॥ वारितोऽपि च नन्देन नागदेवः सहोदरः। अशुद्धं व्यवसायं तु चकाराधममानसः॥ ततो नन्दो-ऽस्मरच्चित्ते क्रियते किं मयाऽधुना। भ्राताऽपि रक्षितो नैव पापव्यापारतः खलु॥ नन्दः शुद्धं वृषं शश्वत् कुर्वन् स्वर्गे ययौ क्रमात्। ततश्च्युत्वा महीशस्य पुत्रोऽभूज्जिनसागरः॥ तत्रापि धर्म्ममासाद्य द्वितीये तविषेऽगमत्। ततश्च्युत्वाऽभवच्चन्द्र-सेनो भूपो रमापुरे॥ शुद्धं श्राद्धवृषं तत्र कृत्वा स्वर्गेऽच्युते गतः। तत्र स्वर्गसुखं भुञ्जन् बहुकालमभूत् सुखी॥ ततश्च्युतोभवत्पुत्रो युगन्धराभिधोऽभवत्। जात्य-स्मृत्या विलोक्य प्राग्-भवान् वीक्ष्य व्रतं ललौ॥ देवद्रव्यविनाशेन नागदेवोऽतरान्तरा। वर्यावर्यान् भवान् प्राप्य रोगवानभवत् स च॥ कथं रोगो ह्ययं ज्ञानी यास्यत्यस्य क्षयं क्रमात्। ज्ञानी प्राह शिव-क्ष्माध्रे गत्वा यद्येष रोगवान्॥ षष्ठे षष्ठे करिष्येत पारणं चैकभक्ततः। तदाऽस्य देहतः कुष्ठं याति सर्वं क्षयं क्रमात्॥ श्रुत्वैतद्रोगवान् सोऽपि ज्ञान्युक्तं कृतवान् समम्। कुष्ठिनो जग्मिवान् रोगः सार्द्धं प्राक्कृतकर्म्मणा॥ उत्पन्नं केवलज्ञानं सर्वविश्वावलोककम्॥ राजापि धर्म्ममार्हन्त्यं कृत्वा शत्रुञ्जया-चले। गत्वा च श्रीयुगादीशं ननामाऽनघमानसः॥ युगन्धरो बहून् भव्य-जीवान् प्रबोध्य धर्म्मिणि। शत्रुञ्जये गतो मुक्तिं निःशेषकर्म्मणां क्षयात्॥ २०॥

इति रोगोपशमे कुष्ठिकथा

---

इय भद्दबाहुरइया कप्पा सित्तुंजतित्थमाहप्पं। सिरिवयरपहुद्धरियं जं पायलित्तेण संखिवियं॥३८॥

'इय' इति भद्रबाहुगणधरेण 'कप्प' कल्पो 'रचितः' निष्पादितः शत्रुञ्जयतीर्थमाहा-त्म्ययुक्तः 'सिरिवयरपहुद्धरियं' 'श्रीवज्रप्रभूद्धरितं' ततः पादलिप्तसूरिणा सङ्क्षिप्तम्, आदौ भद्रबाहुना रचितस्तत्सम्बन्धः प्रोच्यते—

दक्षिणाशापथे वर्ये प्रतिष्ठानाभिधे पुरे। अभूज्जनार्दनो विप्रः सावित्री तत्प्रिया पुनः॥ क्रमात् तयोरभूतां तु पुत्रौ शोभनवासरे। भद्रबाहुवराहाह्वौ (द्वौ) वर्यलक्षणलक्षितौ॥ गतयोर्मरणं माता-पित्रोर्धनं गते सति। निर्धनौ तौ यशोभद्र-सूरिपार्श्वेऽन्यदा गतौ॥ संसारासारतां तत्र

धर्म्मं सारतरं तदा । भद्रबाहुवराहौ तु अश्रोष्टां गुरुसन्निधौ ॥ भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-स्तत्त्वस्येह कृते परिभ्रमत रे लोकाः सृतं चेष्टितैः । आशापाशशतोपशान्तिविशदं चेतः समाधीयतां, क्वाप्यात्यन्तिकसौख्यधामनि यदि श्रद्धेयमस्मद्वचः ॥ १ ॥ संझब्भरागजलबुब्बुयउवमे जीविए जलबिंदुचंचले । जुव्वणे नईवेगसन्निभे पाव जीव किमयं न बुज्झसि ॥ २ ॥ " श्रुत्वेति तौ गृहे यातौ प्रतिबुद्धौ सहोदरौ । मिथो निमन्त्रयेते स्म कथं जन्म तु नीयते ? ॥ यतः—" अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः, पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् । यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं, नो चेच्चेतः! प्रविश रहसा निर्विकल्पे समाधौ ॥ विमृश्येति तदा दीक्षां द्वावेव तु सहोदरौ । ललतुः श्रीगुरूपान्ते संसारारण्यच्छिदे ॥ भद्रबाहुश्चतुर्दश-पूर्वी सूरिगुणान्वितः । दशवैकालिकादीनां ग्रन्थानां कारकोऽभवत् ॥ तथाहि—" आवस्सयस्स दसकालियस्स तह उत्तरज्झ-मायारे । सूअगडे निज्जुत्तिं वुच्छामि तहा दसाणं च ॥ १ ॥ कप्पस्स य निज्जुत्तिं ववहारस्सेव परमनिउणस्स । सूरियपन्नतीए वुच्छं इसिभासियाणं च ॥ २ ॥ " एतेषां ग्रन्थानां निर्युक्तिं भद्रबाहुर-कार्षीत्; उक्तञ्च—" प्राप्तसूरिपदो भद्र-बाहुः सूरीश्वरः क्रमात् । एतेषां किल ग्रन्थानां बभूव कारकः स्फुटम् ॥ भद्रबाहुर्व्यधाद्भाद्र-बाहवीं संहितां किल । श्रीयशोभद्रसूरीणा-मभून् स्वर्गमनं तदा ॥ आर्यसम्भूतसूरीशः पूर्वाणि च चतुर्दश । धरणोऽजनि विख्यातो भव्यजीवप्रबोधकृत् ॥ चतुर्दश च पूर्वाणि पठित्वा सूत्रतोऽर्थतः । वराहः पाठयामास शास्त्राण्यन्यान् जनान् सदा ॥ भद्रबाहुसूरीशात् स्वभ्रातुः पार्श्वतोऽन्यदा । वराहो याचते सूरि-पदं विद्याभिमानवान् ॥ भद्रबाहुर्जगौ वत्स ! सगर्वोऽसि सदा भृशम् । तेन सूरेः पदस्यासि योग्यो नहि भवान् बुध ! ॥ बूढो गणहरसद्दो गोयममाइहिं वीर-पुरिसेहिं । जो तं ठवेइ अप्पत्ते जाणंतो सो महापावो ॥१॥ " ततो रुष्टो व्रतं त्यक्त्वा वराहो विप्रवेष-भृत् । सर्वशास्त्राब्धिपारिणो-ऽत्राहमस्मीति जल्पति ॥ वाराहसंहितादीनि शास्त्राणि भूरिशस्तदा । वराहो विदधेऽन्याञ्जान् पाठयामास तानि च ॥ अधीतार्थितनिःशेष-पूर्वो जानन् ग्रहस्थितिम् । भूतभाविभवत् सर्वं वराहो जल्पति स्म सः ॥ लोका जगुः कथं वेत्सि भाविभूतादि वाडव ! । प्रोक्ते एवं जनैः प्राह वराहः पुरतो नृणाम् ॥ बाल्येऽहं लग्नशास्त्राणि गुरोः पार्श्वे पठन् भृशम् । ततोऽन्यदा मयाऽरण्ये लग्नं चाऽमण्डि सुन्दरम् ॥ विस्मृत्यान्यत्र गत्वाऽह-मस्मरं लग्नमेव तत् । अमृष्टं च ततो मार्ष्टुं यावत्तत्रागमं वने ॥ तावत्तत्र स्थितं सिंहं दृष्ट्वाहं लग्नभक्तितः । हरेरधः करं मार्ष्टुं लग्नं प्रक्षिप्तवानभीः ॥ तावत् पञ्चाननः सूर्यो भूत्वा साक्षाज्जगाविति । अहं सूर्योऽस्मि ते लग्न-भक्त्या तुष्टोऽस्मि साम्प्रतम् ॥ वरं वृणीष्व यत्किञ्चित्ते रोचते तद् वराह भोः ! । देवानां दर्शनं नैव निष्फलं जायते क्वचित् ॥ ततोऽजल्प-महं स्वामिन् ! प्रसन्नो मयि चेद्यदि । तदा निजविमाने मां स्थापयित्वा प्रयत्नतः ॥ समस्तं दर्शय ज्योति-श्चक्रं चरन् नभस्तले । ततो मां स्वविमानस्थं रविश्चक्रे सुखं किल ॥ युग्मम् ॥ देवशक्त्या विमानस्थं कृत्वा मां तरणिस्तदा । दर्शयामास सूर्येन्दु-भादिचारं समं मम ॥ उत्तार्य स्वविमानात्तत्र लग्नस्थाने रविस्तदा । मुक्त्वाऽदादूरिशो विद्या ज्योतिष्कशास्त्रकारकाः ॥ सूर्यमापृच्छ्य विश्वस्यो-पकारायाहमन्वहम् । भ्रमन् भूमौ व्यधाज्ज्योतिः-शास्त्राणि भूरिशस्तदा ॥ वराहमिहिरेत्याह्वां स्वस्मिन् प्रख्यापयन् सदा । ज्योतिष्क-शास्त्रतत्त्वानि जजल्प पुरतो नृणाम् ॥ ततो लोके परां पूजां वराहमिहिरोऽन्वहम् । लभमानः प्रतिष्ठा-नपुरे स्वर्गोपमे ययौ ॥ स्वकलाकुशलत्वस्य दर्शनात् सूचितोक्तितः । वराहो रञ्जयामास जितशत्रुमहि-

पतिम् ॥ जितशत्रुमहीशेन रञ्जितेन पुरोहितः । वराहमिहिरश्चक्रे सर्वसेवकसाक्षिकम् ॥ यतः—" गौरवाय गुणा एव न तु ज्ञातेयडम्बरः । वानेयं गृह्यते पुष्प—मङ्गजस्त्यज्यते मलः ॥ १ ॥ " वराहमिहिरस्यैक कलाकुशलतां तदा । वीक्ष्य लोका जगुर्विद्वा—नेष एवापरो न हि ॥ अमी श्वेताम्बरा काका इव जल्पन्ति किं पुनः । मक्षिकावद्गुणभणा—यमानाः प्रवदन्ति च ॥ कारास्था इव कालं तु कुचेलाः क्षपयन्ति हि । श्वेताम्बरा अमी नित्यं मलक्लिन्नकलेवराः ॥ श्वेताम्बरावहीलां तु श्राद्धानां शृण्वतां तदा । शिरःशूलं समुत्पेदे दुःखमासीच्च चेतसि ॥ मिलित्वा श्रावका एक—स्थाने विचार्य वेगतः । भद्रबाहुं गुरूंस्तंस-माह्वयामासुरञ्जसा ॥ श्रीभद्रबाहुगुरवो यदाऽऽयुः तत्र सूत्सवम् । तदा श्राद्धाः समाजग्मु—र्धर्म्मं श्रोतुं सुभावतः ॥ यतः—" धर्म्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः । राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत् किं यन्न करोति किं च कुरुते स्वर्गापवर्गावपि ॥ १ ॥ " गुरूणां महिमानं च जायमानं निरन्तरम् । वराहमिहिरो दृष्ट्वा वाढं मम्लौ स्वचेतसि ॥ वराहमिहिरो नाप-कर्तुं शशाक तेष्वथ । ततः सर्वत्र विद्वत्त्व—ख्यातिरासीद् गुरो-स्तदा ॥ अत्रान्तरे वराहस्य जाते पुत्रे सति क्रमात् । वराहो व्यययामास धनं तस्य जनुर्महे ॥ लोका वर्द्धापनं तस्य गेहेऽभ्येत्य वितन्वते । वराहो जन्मपत्रीं तु चकार सुतजन्मनि ॥ आयुर्वर्षशतं मासाः पञ्च घस्राश्चतुर्दश । घटयः पञ्चदशास्यैव भविष्यन्ति सुतस्य तु ॥ एवं तेन वराहेण भूपादीनां नृणां पुरः । आयुः प्रघोषितं सूनोः स्वस्य ख्यातिरभूत्ततः ॥ एकदाऽवग् वराहः क्ष्मा—पतेः संसदि संस्थितः । जगौ सहोदरा एव वाह्या न स्वाः कदाचन ॥ श्रुत्वैतच्छ्रावका एत्य गुरूपान्ते जगुः स्फुटम् । गुरुराचष्ट तं क्लेश-कर्त्ता वारद्वयीगमे ॥ सप्तमे दिवसे रात्रौ विलाडिकाननाद् ध्रुवम् । मरिष्यति यदा तत्र तदाऽस्माभिर्ग-मिष्यते ॥ इयं वार्त्ता क्रमाद्भूमिपतेरग्रेऽभवद्यदा । तदा राजा जगौ कस्य सत्यं कूटं भविष्यति ॥ वराहः प्रोक्तवान् कूटं जल्पन्निति सिताम्बरः । भविष्यति मया प्रोक्त—मायुः सूनोर्ममैव तु ॥ आगते सप्तमे घस्रे सप्तमन्दिरमध्यतः । निष्कासितास्तु मार्जार्यः सर्वाः स्वस्वालयावधि ॥ वालं पाययितुं स्तन्यं धात्री यावदुपाविशत् । तावद् द्वारार्गला सूनोर्मस्तके न्यपतद् दृढम् ॥ ततो मृते सुते गेहे वराहस्याभिरुद्यते । मित्रादिभिर्भृशं तार—स्वरं दुःखेन पूरिते ॥ वराहसदने शोका—पनोदाय नरादिषु । गच्छत्सु भद्रबाहुस्तु गत्वेति प्रोक्तवाँस्तदा ॥ जातस्य हि ध्रुवं मृत्यु—र्ध्रुवं जन्म मृतस्य च । तस्मादपरिहारार्थे का तत्र परिदेवना ॥ संयोगाः स्युर्वियोगान्ता विपत्सीमाश्च सम्पदः । स्यादानन्दो विषादान्तो जन्मापि मरणान्तिकम् ॥ माता पिता भैषजमिष्टदेवो, विद्या प्रिया नन्दनबान्धवाश्च । गजाश्वभृत्या बल पद्मवासे नेशा जना रक्षितु-मन्तकाले ॥ ततो भूपादिलोकेषु जल्पत्सु सर्वतस्तदा । वराहजल्पितं कूटं बभूव निखिलं ध्रुवम् ॥ आकर्ण्येति विखिन्नः सन् वराहः पुस्तकं समम् । यावन्नीरेऽक्षिपत्ताव—च्छ्रात्रा हस्तधृतः करः ॥ उक्तश्चात्म-प्रमादेन त्वया श्रीगुरुसन्निधौ । पेठे शास्त्रं विना भक्तिं ततोऽसत्यं वचस्तव ॥ यतः—" अमन्त्रमक्षरं नास्ति नास्तिमूलमनौषधम् । अनाथाः पृथिवी नास्ति आम्नायाः खलु दुर्लभाः ॥१॥ प्रतिपच्चन्द्रं सुरभी नकुला नकुलीं पयश्च कलहंसः । चित्रकवल्लीं पक्षी सूक्ष्मं धर्म्मं सुधीर्वेत्ति ॥ २ ॥ प्रभुप्रसादस्तारुण्यं विभवो रूपमन्वयः । शौर्यं पाण्डित्यमित्येत—दमद्यं मदकारणम् ॥३॥ " सत्यानि पुस्तकान्येव सन्ति सत्या मतिः पुनः । अतो न पुस्तकं क्षेप्यं सलिले भवताऽधुना ॥ निषिद्धः सोदरेणाथ वराहमिहिरस्तदा । यावद्गले शयं दत्त्वा तस्थिवान् दीनमानसः ॥ अत्रान्तरे वराहेण गर्हितः श्रावकः पुरा । अन्योक्तिगर्भितं

काव्यं वराहस्य पुरो जगौ ।। युस्मादृशाः कृपणकाः कृमयोऽपि यस्यां, भान्ति स्म सन्तमसमव्ययगमन्निशाऽसौ । सूर्यांशुदिप्तदशदिग्दिवसोऽधुनाऽयं, भात्यत्र नेन्दुरपि कीटमणे ! किमु त्वम् ।। कीटमणिप्रभोऽहं तु जल्पितोऽनेन साम्प्रतम् । अतोऽस्य दीयते शिक्षा भूपपार्श्वान्मया द्रुतम् ।। अत्रान्तरे समायातो भूपः प्राह वुधं प्रति । न शोकः क्रियते सद्भि-र्यतोऽस्त्यशाश्वतं जगत् ।। अत्रान्तरे समायाताः श्राद्धाः प्रोचुरिदं स्फुटम् । अयं वालो गतो मृत्युं स्वल्पायुःकर्म्मयोगतः ।। श्रुत्वेति भूपतिः प्राह भोः श्राद्धा ! यैर्गुरूत्तमैः । स्वल्पायुर्जल्पितं सत्यं जातं शिशोरिहाधुना ।। तदा वराह आचष्ट विलाड्या वदनाच्छिशोः । मृत्युरुक्तो गुरूत्तंसै-र्नहि तन्मिलितं किल ।। आकर्ण्यैतद् गुरुस्तत्रा-भ्येत्येति प्रोक्तवान् स्फुटम् । अर्गलाया मुखे रूपं विलाड्या विद्यते दृढम् ।। तादृशीमर्गलां वीक्ष्य भूपोऽस्तावीद् गुरूत्तमम् । नेदृशं विद्यते ज्ञानं सत्यं सम्प्रति कुत्रचित् ।। ततः सन्मानिताः श्रीमद्–गुरवो मेदिनीभुजा । यदा स्वस्थानके जग्मुः वराहोऽभूत्तदाऽसुखी ।। पुनर्दध्यौ वराहश्च कूटं गुरुममुं द्रुतम् । करिष्यामि महीशस्य पुरोऽहं शुद्धजल्पनात् ।। अन्येद्युरात्ममाहात्म्यख्यापनाय नृपाग्रतः । वराहेणोदितं पञ्चा–यामेऽस्य दिवसस्य तु ।। अकस्मादागते मेघे वप्रस्य पूर्वगोपुरे । निम्बस्य पूर्वशाखायां मध्ये मत्स्यः पतिष्यति ।।युग्मम् ।। द्विपञ्चाशत्पलमितो गौरवर्णश्चतुर्मुखः । तोलितो निश्चितं भावी सत्यमेतद्वचो मम ।। श्रुत्वैतद् गुरुणाऽप्यापि नृपः श्रावकवक्त्रतः । दक्षिणस्यां दिशि श्याम-वर्णः श्वेतमुखच्छविः।। एकनेत्रो द्विवक्त्रश्च पञ्चाशत्पलसम्मितः । निम्बस्य याम्यशाखायां पतिष्यति वहिस्तटे ।।युग्मम्।। द्वयोः सत्यवचो ज्ञातुं भूपस्तत्रैत्य तद्दिने । गुरूक्तं पतितं मत्स्य–मपश्यन्मुमुदे ततः ।। ततोऽपि हसितः सर्वै–र्वराहः खिन्नमानसः । गत्वा निजालये तस्थौ नाऽऽस्यं कस्याप्यदर्शयत् ।। यतः–“ माणे पणट्ठइ जइवि न तणु तो देसगचइज्ज मा दुज्जणकरपल्लवहिं दंसिज्जतु भमिज्ज ।। १ ।। तावदाऽऽश्रीयते लक्ष्मीस्तावदस्य स्थिरं यशः । पुरुषस्तावदेवासौ यावन्मानान्न हीयते ।। २ ।। ” राज्ञा जैने धृपे तत्र प्रतिपन्ने सति ध्रुवम् । दीक्षां भागवतीमादा–द्वराहः कलुषाशयः ।। जिनेन्द्रधर्म्मविद्विष्टो वराहो मृत्युमागतः । व्यन्तरोऽभूत्ततो द्वेषात् साधुष्वासीद्विशेषतः ।। तपस्यतां तु साधूनां विघ्नं कर्त्तुमशक्नुवन् । व्यन्तरो विदधे मारिं श्राद्धेषु दुष्टमानसः ।। ततः श्राद्धैरुपेत्योक्तं भद्रवाहुगुरोः पुरः । कोऽपि देवोऽथवा दैत्यो विघ्नं च कुरुते सदा ।। भवादृशेषु गुरुषु सत्सु पीडा गुरूत्तम ! । कथं विधीयते दुष्टै–र्व्यन्तरादिसुरैरिह ।। कुम्भिस्कन्धाधिरूढः किं भक्ष्यते भषणैः पुमान् ? । जलमध्यस्थितो मर्त्यः सिंहेन भक्ष्यते किमु ? ।। वृक्षशाखास्थितो ना वा भक्ष्यते हरिणा किमु ? । जीवतोऽहेः शिरःस्थं किं रत्नं गृह्येत मानवैः ? ।। गुरुराह वराहः स मृत्वाऽभूद् व्यन्तरोऽधुना । विघ्नं कुर्वन्नसावस्ति भवतां साम्प्रतं सदा ।। यूयं मा भैषुः सोऽद्याय मया निषित्स्यते सुरः । पापी याति स्वयं मृत्यु–लोकं स्वतमसा किल ।। उपसर्गहरं स्तोत्रं पार्श्वार्हद्गुणगुम्फितम् । कृत्वा गुरुः प्रदायावक् श्रीसङ्घं प्रति सादरम् ।। इदं पार्श्वस्तवं यस्तु जपिष्यति नरः सदा । उपद्रोतुं न शक्तः स तं नरं कचिदेव तु ।। तच्चेदं स्तोत्रम्—“ उवसग्गहरं पासं पासं वंदामि कम्मघणमुक्कं । विसहरविसनिन्नासं मंगल–कल्लाण आवासं ।। १ ।। विसहरफुलिंगमंतं कंठे धारेइ जो सया मणुओ । तस्स गहरोगमारि–दुट्ठजरा जंति उवसामं ।। २ ।। चिट्ठउ दूरे मंतो तुज्झ पणामो वि वहुफलो होइ । नरतिरिएसुवि जीवा पावंति न दुक्खदोगच्चं ।। ३ ।। तुह सम्मत्ते लद्धे चिंतामणिकप्पपायवब्भहिए । पावंति अविग्घेणं जीवा अयरामरं ठाणं ।। ४ ।। इय संथुओ महायस ! भत्तिभरनिब्भरेण हियएण । ता देव ! दिज्ज वोहिं भवे भवे पासजिणचंद ! ।। ५ ।। ” अमुं पापठतां स्तोत्रं

श्राद्धानां प्रतिवासरम् । उपद्रोतुं न शक्तोऽथ व्यन्तरः स दुराशयः ।। ततः श्राद्धेष्वभूच्छान्तिः क्लेशा नेशुर्दिशोदिशम् । पार्श्वनाथस्तवं शश्व-दद्यापि पठ्यते जनैः ।। सोमचन्द्रनृपोऽन्येद्यु-र्गत्वा श्रीगुरुसन्निधौ । शत्रुञ्जयस्य माहात्म्यं शृण्वानः प्रोक्तवानिति ।। श्रीशत्रुञ्जयमाहात्म्यं ग्रन्थोऽयं विद्यते महान् । श्रोतुं न शक्यते तेन मयेदानीं गुरूत्तम ! ।। अतः सिद्धान्ततः स्वामिन् ! संक्षिप्य सिद्धभूभृतः । कल्पं श्रावय मां मुक्ति-सातसन्ततिहेतवे ।। ततः कोटिमितश्लोक-सुन्दरसिद्धभूभृतः । कल्पश्चक्रे तदा भद्र-बाहुना गुरुणा महान् ।। तं कल्पं नृपतिः शृण्वन् श्रीमत् सिद्धमहीधरे । यात्रां विस्तरतश्चक्रे कल्याणसुखहेतवे ।। श्रीभद्रबाहुसूरीशः कल्पमन्यत्तदा लघुं । लक्षत्रयमितश्लोकं रोचिष्णुः विदधे पुनः ।।११६।।

इति भद्रबाहुरचितकल्पसम्बन्धः ।

---

वज्रस्वामिसम्बन्धः प्रोच्यते, तथाहि—

वर्ये तुम्बवने सन्नि-वेशे पृथ्वीविभूषणे । आसीद् धनगिरिश्रेष्ठी धर्म्मकर्म्मसु कर्म्मठः ।। क्रमात्तस्य सुनन्दायाः पत्न्या गर्भे शुभेऽहनि । देवो जृम्भकदेवेभ्य-श्च्युत्वाऽवतीर्णवान् खलु ।। इतश्चासार-संसारं मत्वा सिंहगिरेर्गुरोः । लात्वा दीक्षां तपश्चक्रे पठन् धनगिरिर्व्रतिः ।। गृह्णानः शुद्धमाहारं कुर्वाणो विनयं गुरोः । धर्म्मध्यानपरो लीनः सोऽभूत्तपसि सन्ततम् ।। इतः सम्पूर्णमासेषु सुनन्दा सुषुवे सुतम् । माता जन्मोत्सवं सूनो-स्तस्य चक्रे स्वशक्तितः ।। तदा माता जगौ पुत्र ! यदि लाता पिता तव । न दीक्षां तु तदा जन्मो-त्सवं ते कारयिष्यते ।। एकाकिनी गृहे मुक्ता पित्रा तव व्रतेच्छुना । अतस्त्वं नन्दनेदानीं सुखं तिष्ठ ममान्तिके ।। गृहीतसंयमं तातं मत्वा मातुः समीपतः । जातजातिस्मृतिः पाको दध्यावेवं निजे हृदि ।। मया पूर्वभवे दीक्षां गृहीतुं वाञ्छताप्यहो । लातुं शक्तो न तेनात्र गृहीष्ये संयमं ध्रुवम् ।। यदि मे जनकेनात्र गृहीतः संयमः खलु । अतो मयाऽपि लातव्या प्रव्रज्या सुखदायिनी ।। यतः—“भणाइं (नेणीइ) बेटा ते संसारि जाइं जे बाप तणइ अणुसारि। निच्छइ लेइ संयमभारो इम चिंतइ सो बाल कुंआरो।।१।।” विना न रोदनं मातुः पार्श्वान्नहि छुटिष्यते। अतो मम शिशोः श्रेयो रोदनं श्राग् भविष्यति ।। अबलानां तु बालानां रोदनं जायते श्रिये । अनाथानां नृणां राजा शरणं गीयते बुधैः ।। यतः—“हव मज्झ किंमु मोकलिसे माए रोइ करी मेल्हावउं काए । मरु अनेरुं नथि विना ण रोवउ बाल पणि प्राण ।। १ ।।” ततो दिवानिशं बालो रुदन् बाढं कृपास्पदम् । मातरं रोदयामास पार्श्वस्थानपि मानवान् ।। क्षणमङ्के क्षणं स्कन्धे क्षणं शीर्षे क्षणं कटौ । क्षणं पालनकेडोल्यां क्षणं लाति प्रसूस्तदा ।। वत्स ! वत्स ! चिरं जीव त्वं स्वामी मम निश्चितम् । रोदनात्तिष्ठ मे वाञ्छा पूरयाऽऽननदर्शनात् ।। यतः—“उपाध्यायं दशाचार्या आचार्याणां शतं पिता । सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ।।१।।” आस्तन्यपानाज्जननी पशूना-मादारलाभावधि चाधमानाम् । आगेहिकर्म्मावधि मध्यमाना-माजी-वितं तीर्थमिवोत्तमानाम् ।। एवं रुदति बाले तु तस्मिन् मासेषु षट्सु च । गतेषु जननी दुःखं प्राप्य मर्त्तुमना जगौ ।। यद्यस्य जनकोऽभ्येति तदा तस्मायमुं शिशुम् । वितीर्याहं सुखं स्यां हि यतोऽसौ मेऽस्ति दुःखदः ।। वैरं बालयितुं सूनु-रेष मे समुपागमत् । यतो न रोदनादेव तस्थिवान् क्षणमेककम् ।। जल्प-

न्यामिति तस्यां तु तदा सिंहगिरिर्गुरुः । अकस्मादाययौ भव्यान् तत्र बोधयितुं किल ॥ गच्छन् धनगिरिर्भिक्षा-हेतोः पुरान्तरे तदा । गुरुणोक्तो लभेथास्त्वं यत्तन्नेयं त्वयाऽत्र हि ॥ भ्रमन् धनगिरिः स्वीय-गेहे यदा ययौ क्रमात् । सुनन्दाऽवक् तदा पुत्रं त्वमात्मीयं गृहाण भोः ! ॥ अनेन सूनुनाऽत्यन्तं रुदता करुणस्वरम् । विलक्षा विहिताहं तु ततोऽमुं लाहि नन्दनम् ॥ येन जाम्बुनदेनैव त्रुट्यतः श्रवणौ लघु । तेन किं क्रियते सद्भिः वाञ्छद्भिर्हितमात्मनः ॥ जगौ धनगिरिर्मह्यं सूनुं दत्से बलात्त्वकम् । पश्चाच्चेद्याचसे नैव दास्येऽहं तव निश्चितम् ॥ ततो धनगिरिः कृत्वा साक्षिणः श्रीगुरोर्वचः । स्मृत्वा झोल्यन्तरेऽक्षेप्सीत् तं शिशुं सुन्दराकृतिम् ॥ ददौ धनगिरिर्वोढ्वा गुरवे तं सुतं मुदा । तावद्वज्रमिवातीव भारं जज्ञौ गुरुर्जगौ ॥ शिशोरस्याऽस्तु वज्रेति नाम भूरिभराद् द्रुतम् । तदा स रोदनाद्बालो निवृत्तो मुदितोऽभवत् ॥ श्राद्धीपौषधशालायां शायितः पालने स च । स्तन्यपानप्रदानेन श्राद्धीभिः प्रविवर्द्धितः ॥ भक्त्या काचिद्वशा स्तन्यं कारयामास बालकम् । काचित् पर्यधापयेद्वस्त्रैर्वैर्विलोचनाञ्जनात् ॥ साध्वीषु प्रपठन्तीषु तदाऽङ्गानि निरन्तरम् । वज्रो जज्ञौ क्रमादेका-दशाङ्गी सूत्रतोऽर्थतः ॥ " जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ १ ॥ " सुनन्दाऽभ्येत्य स्वं पुत्रं रमयन्ति लसद्गिरा । लातुं ववाञ्छ पश्चाच्च जगावेहि गृहे सुत ! ॥ ततो दिने दिने पुत्रं गुरुसङ्घसमीपतः । सुनन्दा याचते सङ्घो न दत्ते तं शिशुं गुरुः ॥ ततो भूपान्तिके गत्वा सुनन्दा याचते सुतम् । सङ्घमाकार्य राजाऽवक् पुत्रोऽस्यै दीयतां लघु ॥ सङ्घः प्राह रुदित्वाऽलं गुरुपार्श्वे स बालकः । समेतोऽतः कथं याति मातुः पार्श्वे नरेश्वर ! ॥ यद्येति बालको मात्रा-ऽऽकारितो मातृसन्निधौ । तदा लातु सुनन्दा तु पुत्रं नैवान्यथा नृप ! ॥ ततो मोदकखर्जूर-खारिकासुखभक्षिकैः । स्थालं भृत्वा ययौ राज-पार्श्वे धनगिरि-प्रिया ॥ गुरवः सङ्घसंयुक्ता लात्वौघमुखवस्त्रिके । समेता भूपतेः पार्श्वे वज्रोऽप्यागाच्छिशुर्मुदा ॥ मोदकादिषु वर्येषु वस्तुषु स्वान्तहारिषु । मात्रा मुक्तेषु गुरुणा स्ववेषो मुमुचेऽचिरात् ॥ शीर्षे कृत्वा यतेर्वेषं स बालो गुरुसन्निधौ । यदा ययौ तदा माता विखिन्नाऽभूत् स्वचेतसि ॥ ततः सुनन्दया ध्यातं पतिपुत्रौ विनाऽधुना । किमु कालो मयाऽग्रे तु नेतव्यो नन्दनोत्तम ! ॥ यतः—" पत्यौ मृतेऽपि या योषि-द्वैधव्यं पालयेत् क्वचित् । सा पुनः प्राप्य भर्त्तारं स्वर्गभोगान् समश्नुते ॥ १ ॥ " स्त्रियाः कान्तः सुतो वाऽपि शरणं जायते खलु । अतोऽहं संयमं सार्द्धं गृहीष्यामि व्रतं द्रुतम् ॥ ततो वज्रो ललौ दीक्षां मात्रोऽमा गुरुसन्निधौ । यद्यद् शृणोति तत् तच्च समेति तस्य निश्चितम् ॥ उक्तञ्च—" राखइ छव्विह जीवनिकाय जस दरसिण नासइ बहु पाप । जं जं श्रवणे सुणइ स बाल तं तं आवइ सम विचार ॥ १ ॥ " एकाकी वसतौ वज्रः स्थितोऽन्येद्युर्गुरौ गते । अङ्गचिन्ताकृते चक्रे उपधीः संयतान् वरान् ॥ उच्चैरेकादशाङ्गानि पाठयामास सादरम् । यदा तदा गुरुर्द्वार-देशे समागमत् किल ॥ उपधीः संयतान् विद्या पाठयन्तं प्रगल्भतः । क्षुल्लं वीक्ष्य गुरुश्चित्ते चमत्कृतिं व्यधाद् दृढम् ॥ आगतं स्वं गुरुं मत्वा वज्रस्तानुपधीः पृथग् । मत्वा स्वस्थानकेऽभ्येत्य लग्नः पठितुमादरात् ॥ एकादशाङ्गिनं वज्रं क्षुल्लं मत्वाऽन्यदा गुरुः । गच्छन्नन्यत्र शिष्याणां पुरतः प्रोक्तवानिति ॥ वाचनामेष वो वज्रो दास्यत्यङ्गस्य संयताः ! । ततस्ते गुरुणा प्रोक्तं प्रपेदे रुचितं मुदा ॥ तदा तथा समे वाचं-यमा वज्रेण पाठिताः । तथाऽतो मेनिरे वज्रः पाठकोऽयं वरोऽस्ति नः ॥ अरण्ये गच्छतोऽन्येद्यु-र्गुरोर्मध्यंदिने सति । देवतैका विकुर्व्योरुं सार्थमेत्य जगावदः ॥ भगवन् ! विद्यतेऽस्माकं भिक्षा सुप्रासुका किल । तेन साधून् विहर्तुं च प्रेषयन्तु गुरूत्तमाः ! ॥

गुरुणा प्रेषितो वज्रो गत्वा तत्र नराऽबलाः । अलग्नभूपदा वीक्ष्य जगादेति च तान् प्रति ॥ भवन्त्यो देवतामाया-मीदृशीं विदधुः किल । अतो न कल्पते भिक्षे-दृक्षा साधोः कचिद् ध्रुवम् ॥ ततः सा देवता प्राहुः(ह)कृत्वा स्वरूपमञ्जसा । स्तुत्वा वज्रं गुरोरग्रे जगाम स्थानके निजे ॥ क्रमात् सूरिपदस्यैव योग्यं वज्र-मवेत्य च । सूरीश्वरपदं सिंह-गिरिसूरिरदान्मुदा ॥ शतसङ्ख्यान् यतीनेका-दशाङ्गीं पाठयन् सदा । वज्राचार्यो व्यधादेव-गुरुतुल्यान् सुविद्यया ॥ वज्रस्वामी महीपीठे बोधयन् भविकान् बहून् । दीक्षया-मास भूयिष्ठ-श्रावकान् श्राविकाः पुनः ॥ साध्वीनां पुरतोऽन्येद्युः श्रीवज्रस्वामिनो गुरोः । सुरूपे वर्णिते साधुं कन्या वरितुमीहते ॥ ततस्तया पितुः पार्श्वे प्रोक्तं परिणाययाधुना । मां वज्रस्वामिना सार्द्धं नो चेन्मे शरणं वसुः ॥ कोटिभिर्भूरिभिर्हेम्नां युतां स्वनन्दिनीं धनी । लात्वा दातुं चचाल स्व-गृहाद्वज्राय सूरये ॥ कदाग्रहात् कनीं तत्रा-यातां वरितुं कामुकाम् । मत्वा वज्रः कुरूपं स्वं चक्रे शीलावनाय सः ॥ ततस्तत्रा-गता कन्या कुरूपं सूरिदेहजम् । वीक्ष्याऽऽस्यं मोटयित्वाऽगात् पश्चात् स्वीयनिकेतने ॥ यतः—" कोटी सहिएहिं धणसंचयस्स गुणस्स भरियाइ कन्नाइं । नवि लुद्धो वयररिसी अलोभया एस साहूणं ॥ १ ॥ " अधीत्य दश पूर्वाणि बोधयन् भव्यमानवान् । तीर्थे प्रभावनां चक्रे वज्रसूरीश्वरोऽनिशम् ॥ उक्तञ्च—" गुरोः सिंहगिरेः पार्श्वे श्रुत्वा धर्म्मं विरागवान् । व्रतं धनगिरिः प्राप तत्पत्नी तत्सुतोऽपि च ॥१॥ तुंबवणसन्निवेसाउ निग्गयं पिउस्सगास समल्लीणं । छम्मासियं छसु जअं माऊइ समन्नियं वंदे ॥२॥" यः पालनस्थः श्रुतमध्यगीष्ट षण्मासिके यश्चरितामिलापी । त्रिवार्षिकः सङ्घसमानयद्यो योऽध्यापयत् साधुगणं प्रकामम् ॥ जो गुज्झगेहिं बालो निमंतिओ भोयणेण वासंते । नेच्छइ विणीयविणओ तं वयररिसिं नमं-सामि ॥ उज्जेणीए जो जंभगेहिं आणक्खिऊण थुयमहिओ । अक्खीणमहाणसीयं सीहगिरिपसंसियं वंदे ॥ जस्स अणुण्णाए वायगत्तणम्मि दसपुरम्भि नयरम्मि । देवेहिं कया महिमा पयाणुसारिं नमंसामि ॥ जेणुद्धरिया विज्जा आगासगमा महापरिन्नाओ । वंदामि अज्जवयरं अपच्छिमो जो सुयहराणं ॥ दुर्भिक्षे पतितेऽत्यन्तं सङ्घं संस्थाप्य सत्पटे । माहेश्वरीं पुरीं वज्रो नीतवान् सूरिराट् क्रमात् ॥ हुताशनाद् यक्षवनात् सुमानि, माहेश्वरीं तां तु पुरीं निनाय । तत्रैव बौद्धप्रतिबोधनाय, प्रभावनां यो महतीं चकारः ॥ एवं वज्रगुरोर्वर्य-विद्याऽम्भोधेर्निरन्तरम् । प्रभावनापरस्यैव बहवो वासरा ययुः ॥ वज्रसूरि-गुरोर्वाणीं श्रुत्वा के के न मानवाः । त्यक्त्वा मिथ्यात्वमह्नाय जैनं धर्म्मं प्रपेदिरे ॥ एवमन्येऽपि बहवोऽत्र-दाता सन्ति भूरिशः । तत्रैव च प्रवक्तव्या विद्वद्भिः स्वल्पपञ्चमये ॥ अन्येद्युर्वज्रगच्छेशः सोपारकाह्व-पत्तने । ययौ यावत्तदाऽनेके भव्या वन्दितुमाययुः ॥ तदा श्रीवज्र आचष्ट दानादिपुण्यमञ्जसा । कर्त्तव्यं विधिवद्भव्यै-र्मुक्तिसाताप्तये सदा ॥ यतः—" गोइत्थिभूमिदाणं सुवण्णदाणं च जे पउंजंति । ते पाव-कम्मगुरुया भमंति संसारकंतारे ॥ १ ॥ बंधण ताडणदमणं तु होइ गाईण दारुणं दुःखं । हलकुलिएसु य पुहइ दारिज्जइ सत्तसंघायं ॥ २ ॥ जोवि हु देइ कुमारिं सो विहु रागं करेइ गिद्धिं च । रागेण होइ मोहो मोहेण वि दोग्गईगमणं ॥ ३ ॥ हेमं भयावहं पुण आरंभपरिग्गहस्स आमूलं । तम्हा वज्जेइ मुणी चत्तारि इमाइं दाणाइ ॥ ४ ॥ " तदा श्राद्धैः शिवप्राप्त्यै दानानि कानि बोधिदैः । कथ्य-न्तेऽतो जगौ वज्र-स्वामी भव्याङ्गिनां पुरः ॥५॥ " नाणं अभयपयाणं फासुयदाणं च भेसजं चेव । एते हवंति दाणाओ उवइट्ठं वीयरागेण ॥ ६ ॥ " ज्ञानवान् ज्ञानदानेन निर्भयोऽभयदानतः । अन्नदानात् सुखी नित्यं निर्व्याधिर्भेषजाद् भवेत् ॥ ७ ॥ यतः—" नाणेण दिव्वनाणी दीहाउ होइ अभयदाणेण ।

आहारेण य भोगं पावइ दाया न संदेहो ॥ १ ॥ लहय दिव्वसरीरं साहूणं सज्जभेस दायारो । निरुव-हयंगोवंगो उत्तमभोगं च अणुहवइ ॥ २ ॥ जह वड्ढइ वडवीयं पुहइयले पायवो हवइ पुण्णे । तह मुणि वराण दाणं दिन्नं विउलं हवइ पुन्नं ॥ ३ ॥ जह खेत्तम्मि सुकिट्ठे सुबहुत्तं अब्भुयं हवइ वीयं । तह संजयाण दाणं महंत पुण्णावहं हवइ ॥ ४ ॥ जह ऊसरम्मि वीयं खेत्ते नय होइ तस्स परिवुड्ढी । तह मिच्छत्तमइलए पत्ते अफलं हवइ दाणं ॥५॥ सद्धा सत्ती भत्ती विण्णाणय हवेज्ज जं दिण्णं । तं दाणं विहि-दिण्णं पुण्णफलं होइ नायव्वं ॥ ६ ॥ विविहाउहगहियकरा सव्वे देवा स कसायसंजुत्ता । कामरइ-रागवसगा निच्चं कयभंडणा भरणा ॥ ७ ॥ जे एवमाइ देवा न हु ते दाणस्स होंति नेआरो । सयमेव जे न तिन्ना कहं ते तारंति अण्णजणं ॥ ८ ॥" इत्यादि धर्म्ममाकर्ण्य भविनो वहवस्तदा । धर्म्मं जिनोदितं भावाज्जगृहे शिवशर्म्मणे ॥ ९ ॥ श्रीशत्रुञ्जयमाहात्म्यं महन्तं वज्रसूरिराट् । मत्वा संक्षिप्त-वान् सत्त्वाऽनुग्रहाय दिने शुभे ॥ १० ॥ यतः—"श्रीशत्रुञ्जये गत्वा नौति वाऽर्चति वोधिदान् । तस्य स्वर्गापवर्गादि सुखमेति करे लघु ॥ १ ॥ एकमेवं पदं दत्ते यात्रायै सिद्धपर्वते । श्रियः सोऽचालीत् ध्रुवं मुक्तिपुर्यां पातु संशयम् ॥ २ ॥" ॥१०४॥

इति श्रीवज्रस्वामिसम्बन्धः, शत्रुञ्जयकल्पसंक्षेपगर्भितः ।

---

पादलिप्तसूरिसम्बन्धः प्रोच्यते, तथाहि—

पादलिप्तोऽन्यदा सूरि-र्जगाम सिद्धपर्वते । श्रीयुगादिजिनं नन्तु—मनन्तसुखहेतवे ॥ १ ॥ तदा सुरंडभूपालो भूरि सङ्घसमन्वितः । शत्रुञ्जये समायातो नन्तुं तीर्थं च पूजितुम् ॥ २ ॥ पूजयित्वा प्रभुं पुष्पैः स्वामिनः पादुकास्तदा । राजादन्या व्यधाद्भक्त्या महीपालः प्रदक्षिणाम् ॥ ३ ॥ ततोऽन्यानपि सर्वज्ञान् पूजयित्वा प्रणम्य च । भूपः सफलयामास निजं जन्म सुभावतः ॥ ४ ॥ ध्वजां दत्त्वादिमाप्तस्य प्रासादे सङ्घसंयुतः । आरात्रिकं नृपश्चक्रे ततो मङ्गलदीपकम् ॥ उपदेशं ततः पाद-लिप्तस्य सूरिस-न्निधौ । श्रोतुं याते नृपे सूरि-स्तीर्थ माहात्म्यमूचिवान् ॥ तदा राजा जगौ शत्रु—ञ्जयमाहात्म्यमद्भुतम् । महदस्ति ततः सूरेः सङ्क्षेपयाधुना किल ॥ बहुव्यापारसामग्रे—भव्यजीवैः शिवार्थिभिः । श्रोतुं न शक्यतेऽतीव विस्तरात् साम्प्रतं समम् ॥ ततः सङ्क्षिप्य सिद्धाद्रि—माहात्म्यं सूरिपुङ्गवः । लघु चक्रे च भव्याना—मनुग्रहाय शिवाप्तये ॥

प्राग् 'संपइ विक्कम' गाहा मध्ये प्रोक्तोऽस्ति, ततोज्ञेयो विस्तरात्;

इति पादलिप्तसूरिसम्बन्धः ।

---

ततो धनेश्वरः सूरिर्माहात्म्यं सिद्धभूभृतः । चकार भव्यसत्त्वानां लघु मुक्तिसुखाप्तये ॥

तं जह सुयं थुयं मे पढंतनिसुणंतसंभरंताणं । सित्तुंजकप्पसुत्तं देउ लहुं सत्तुंजय सिद्धिं ॥ ३९ ॥

'तत्' प्रसिद्धं तीर्थं शत्रुञ्जयाख्यं यथा पूर्वशास्त्रे 'श्रुतम्' आकर्णितं बहुश्रुतपार्श्वात् 'स्तुतम्' स्तोत्रपथे नीतं 'मे' मया यत्तदोर्नित्यामिसम्बन्धात् पठतां शृण्वतां संस्मरतां शत्रुञ्जयस्तोत्रं 'देउ' ददाति लहुः—लघुः शीघ्रं शाश्वत् सुखं भव्यानां शत्रुञ्जयं तीर्थं; कथा अत्र—

श्रीपुरे धनभूपालो–ऽपत्याभावाद्धनश्रियः। पत्न्या ऊर्ध्वं द्वितीयां तु परिणिन्ये प्रियां रमाम् ॥ तत आद्यप्रियाऽन्यां तु विघ्ने पातयितुं सदा। चकार कोटिशः कूट–श्रेण कपटतत्परा ॥ यतः—"आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्। अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरंड–स्त्रीयन्त्रं केन लोके विषममृतमयं धर्म्मनाशाय सृष्टम्?॥ १ ॥" आरूढो भूपतिः काष्ठ–मयमोरं महीं भ्रमन्। विलोकते बहुन्येवा–श्चर्याणि च पुरे पुरे ॥ द्वितीया गेहिनी काष्ठ–मोरमारुह्य मौढ्यतः। चकर्ष कीलिकां याव–त्तावद् व्योम्न्यगमत् स च ॥ भार्यायुक्ते गते मोरे राजा प्राह प्रियां प्रति। पत्न्या विलोकनकृते यास्याम्यहं प्रगे ननु ॥ सा प्रिया कुटिला प्राह गच्छाऽऽनय प्रियां द्रुतम्। शम्बलं गृह्यतां मार्गे गच्छतः सुखहेतवे ॥ शम्बलं मोदकादीनां बद्ध्वा सप्तसु ग्रन्थिषु। दत्तं पत्न्या नृपो हृष्टो लात्वाऽचालीत् प्रियाकृते ॥ भोजनावसरे याते प्रथमग्रन्थिशम्बले। भुक्ते भूपोऽभवत् सर्प–स्त्रिफणी कज्जलप्रभः ॥ द्वितीयग्रन्थिसत्के तु शम्बले भक्षिते सति। भूपरूपधरो जातः स सर्पस्तत्क्षणात्तदा ॥ तृतीयग्रन्थिसत्के तु० ओतुर्भूपो भवच्छीघ्रं तादृगौषधयोगतः ॥ चतुर्थग्रन्थि-सत्के तु०। भूपरूप० ॥ पञ्चमग्रन्थि०। सिंहोऽजनिष्ट षष्ठे तु सहजः समजायत ॥ सप्तम-ग्रन्थि०। मृगो भूत्वाऽचलत् स्वीय–ग्रामं प्रति कृतत्वरः ॥ मार्गे स मार्गणैर्व्याधैर्विद्धो भ्रष्टोऽध्वनोऽभवत्। तत आसन्नशैलस्य वने तस्थौ मृगः स च ॥ ततः काष्ठमयूरे तु भग्ने आस्फाल्य पर्वते। सा भूपगेहिनी भूमौ पतिताऽचेतनाऽभवत् ॥ क्षणात् सा वायुतो जाता सचेतनातिदुःखिता। रुदन्ती समगान्नाभि–पुत्र-प्रासाद आत्मना ॥ तत्रेक्ष्य वृषभं देवं प्रपूज्य कुसुमैर्वरैः। अनैष्ट समयं भूरि मेदिनीपतिगेहिनी ॥ वने तत्र समायातं मृगं दृष्ट्वा नृपप्रिया। हृष्टा चकर्ष बाणात् सा निःशल्योऽथ मृगोऽभवत् ॥ मृग-स्त्रियौ मिथः प्रीति–भाजौ तत्रादिमं जिनम्। नमतः स्माऽऽलये तस्मिन् तिष्ठतः स्म वने पुनः ॥ अन्य-दाऽभ्येत्य तत्रैव नत्वा श्रीवृषभं प्रभुम्। ज्ञानी धर्मोपदेशं तु दातुं समुपाविशत् ॥ विद्याधरास्तदा धर्म्मं शृण्वन्तो ज्ञानिसन्निधौ। दृष्ट्वा मृगस्त्रियौ ज्ञानि–पार्श्वेऽप्राक्षीदिति स्फुटम् ॥ भगवन्! स्त्रीमृगावत्र तिष्ठतः स्म जिनालये। ततो ज्ञानी तयोः सर्वं सम्बन्धमूचिवान् स्फुटम् ॥ खगाः प्रोचुस्तया पूर्व–पत्न्या चास्य तु शम्बलम्। प्रददे तादृशं किं हि ततो ज्ञानी जगाविति ॥ शिक्षां दातुं तया पत्न्या शम्बलं तादृशं ददे। असौ तु विद्यते पत्नी सती पत्युः हितैषिणी ॥ ततो विद्याधरैः तैस्तु नृपरूपो मृगः कृतः। ततस्तावपि सर्वज्ञं नमतः स्म पुनः पुनः ॥ तदा तयोः पुरः शत्रु–ञ्जयमाहात्म्यमद्भुतम्। ज्ञानिना गदितं ताभ्यां श्रद्दधे च हृदन्तरे ॥ ततः स भूपतिः पत्नी–युक्तः स्वनगरे द्रुतम्। समेत्य तां प्रियां त्यक्त्वा धर्म्मकर्म्मकरोऽभवत् ॥ ततो भूपतिराज्ञ्योः स्वपुरीस्थितयोरपि। शत्रुञ्जयस्य माहात्म्यं सततं शृण्वतोरिति ॥ पदे पदे विलीयन्ते भवकोटिभवान्यपि। पापानि पुण्डरीकाद्रे–र्यात्रां प्रति यियासताम् ॥ न रोगो न च सन्तापो न दुःखं न वियोगिता। न दुर्गतिर्न शोकश्च पुंसां शत्रुञ्जयस्पृशाम् ॥ भूरिजन्मभवं पापं सिद्धाद्रिमहिमश्रुतेः। तयोः सद्योऽभवज्ज्ञानं तृतीयं कर्म्मयोगतः ॥ ततः शत्रुञ्जये गत्वा राजा राज्ञी च भावतः। दत्त्वा राज्यं स्वपुत्राय लातः स्म संयमश्रियम् ॥ तत्रस्थयोस्तपस्तीव्रं तपो वितन्वतोः सतोः। उत्पन्नं केवलज्ञानं लोकालोकप्रकाशकम् ॥ ३३ ॥

इति शत्रुञ्जयस्मरणे भूपकथा।

दन्ताह्वनगरे दन्त-चक्रस्य मेदिनीपतेः । प्रिया प्रीतिमती शुद्ध-शीलमाणिक्यमन्दिरम् ॥ राजा न्यायाध्वना पृथ्वी-मपालयत्तथा सदा । यथाऽभूज्जनता सर्वा सुखिनी प्रतिवासरम् ॥ यतः—"राज्ञि धर्म्मिणि धर्मिष्ठा पापे पापाः समे समाः । राजानमनुवर्त्तन्ते यथा राजा तथा प्रजा ॥ १ ॥" प्रीतिमत्याः प्रियायास्त्व-न्येद्युः करटिनां रदैः । प्रासादकारणे जातो दोहदो नृपभप्रभोः ॥ राज्ञा वनेचराः कुम्भि-दन्तानयनहेतवे । आदिष्टा द्रविणं लात्वा कानने समुपागमन् ॥ अन्यैः कैरपि न दन्ता गृहीतव्या नरादिभिः । योन्तरा लान्ति दंतांश्च तस्य दण्डो विधास्यते ॥ इतस्तत्र पुरे सोम-मित्रस्य कमलोरमे । गेहिन्यौ समजायेतां रतिप्रीतिसमे श्रिया ॥ अन्यदा रमया प्रोचे रूपात्त्वं गर्विता कथम् । प्रीतिमत्या यथा सद्म हस्तिदन्तैर्विधीयते ॥ तथा किं ते विधीयेत कुम्भिदन्तैर्निकेतनम् ? । प्रोक्तं कमलया वाणी तव सत्या करिष्यते ॥ युग्मम् ॥ कृशां पत्नीं निरीक्ष्यावक् कमले ! किं त्वं कृशाऽभवः । कमला स्वचिन्तितं सर्वं पत्युरग्रे जगावदः ॥ चन्द्रमित्रेण मित्रेण पृष्टो दुःखस्य कारणम् । सोममित्र उवाच स्व-पत्न्या मनोरथं समम् ॥ चन्द्रमित्रः पुलिन्द्राणां मणिकालक्तकादिकम् । योग्यं लात्वा गतोऽटव्यां दन्तानयनहेतवे ॥ तृण-पूलकमध्ये स क्षिप्त्वा कुम्भिरदान् रहः । रथस्थान् नगरद्वारे चन्द्रमित्रो यदाऽगमत् ॥ तदा गोकृष्ट-पूलात्तु हस्तिदन्तानपि निर्गतान् । वीक्ष्य भूपानुगा भूप-पार्श्वेऽनैषीत् तदा तकम् ॥ भूपेनान्यायिनं मत्वा चन्द्रमित्रं तदा रुषात् । प्रोक्तं स्तेनस्य दण्डोऽस्य साम्प्रतं क्रियतां द्रुतम् ॥ तदाभ्येत्य नृपोपान्ते नत्वा भक्त्या नृपक्रमौ । प्राह चक्रे मया स्वामि-न्नन्यायः क्षम्यतां मयि ॥ सोमस्तत्र प्रियास्वान्त-चिन्तितं भूपतेः पुरः । यदा प्राह तदा दन्ता दत्तास्तस्मै महीभुजा ॥ तदा तं प्रणतं भूयो मत्वाऽवग् सोमचन्द्र प्रभोः (?) । अतः परं न भूपस्य विरुद्धं क्रियतां त्वया ॥ चन्द्रमित्रो नृपप्रोक्त-मङ्गीकृत्य तदा द्रुतम् । भूपसन्मानितः सोम-मित्रस्यान्तिकमीयिवान् ॥ तदा कुम्भिरदैः सोम-मित्रपत्नीमनोरथः । दन्तसद्मविधानेन पूरितः सुहृदा तदा ॥ राज्याश्च दोहदोऽपूरि कुम्भिदन्तैर्महीभुजा । नाभेयार्हन्महत्सद्म-करणात्तत्क्षणे तदा ॥ तत्रान्यदा कलाचार्या विहरन्तोऽवनीतले । आगता भव्यजीवानां प्रबोधायार्हतो मते ॥ सोममित्रः स्वमित्रेण समं पत्नीद्वयान्वितः । धर्म्मं श्रोतुं ययौ श्रीम-द्गुरूणां सन्निधौ तदा ॥ गुरुराह कृतो धर्म्मः स्तोकोऽपि प्रतिवासरम् । क्रमात् स्वर्गापवर्गादि जायते भव्यदेहिनाम् ॥ शत्रुञ्जयस्य तीर्थस्य भक्त्या पठति यः स्तवम् । तस्य स्तोकैर्भवैर्मुक्ति-सुखं भवति निश्चितम् ॥ श्रुत्वेति श्रीगुरूपान्ते सोममित्रः सुहृद्युतः । पत्नीद्वयान्वितोऽपाठीत् सिद्धाद्रिस्तवनं मुदा ॥ त्रिसन्ध्यं पठतां तेषां सिद्धाद्रिस्तवनं मुदा । प्रथम-त्रिदशावास-शर्माऽभूज्जीवितात्यये ॥ ततश्च्युताः समे देवा महाऽऽनन्दाभिधे पुरे । पद्मश्रेष्ठिसुताः जाताः कुन्दचन्द्रधनामराः ॥ तत्रापि श्रीगुरोः पार्श्वे माहात्म्यं सिद्धभूभृतः । तत्र गत्वा युगादीश-मनमन् भक्ति-पूरिताः ॥ तत्रैव ध्यायतां तेषां पठतां स्तवनं मुदा । उत्पन्नं केवलज्ञानं क्रमात् सिद्धिरभूत् पुनः ॥ २९ ॥

इति सिद्धाद्रिस्तोत्रपठने कथा ।

कनकाह्वे पुरे कृष्ण–द्विजस्य कमला प्रिया । मदनश्चन्दनः पुत्रौ क्रमेणासन् मनोहराः ॥ मदनः सरलः पुत्रो मायावी चन्दनः पुनः । कृष्णः पुत्रद्वयीपत्नी–युक्तो वितनुते वृषम् ॥ अन्यदा श्रीगुरूपान्ते माहात्म्यं सिद्धभूभृतः । शृण्वते सप्रियः कृष्णो मदनश्चन्दनः पुनः ॥ तावद्गर्जन्ति हत्यादि–पातकानीह सर्वतः । यावच्छत्रुञ्जयेत्याख्या श्रूयते न गुरोर्मुखात् ॥ न भेतव्यं न भेतव्यं पातकेभ्यः प्रमादिभिः । श्रूयतामेकवेलं श्री–सिद्धक्षेत्रगिरिकथा ॥ वरमेकं दिनं सिद्ध–क्षेत्रे सर्वज्ञसेवनम् । न पुनस्तीर्थलक्षेषु भ्रमणं क्लेशभाजनम् ॥ पदे पदे विलीयन्ते भवकोटिभवान्यपि । पापानि पुण्डरीकाद्रे–र्यात्रां प्रति यियासताम् ॥ एकैकस्मिन् पदे दत्ते पुण्डरीकगिरिं प्रति । भवकोटिकृतेभ्योऽपि पातकेभ्यः स मुच्यते ॥ न रोगा न च सन्तापा न दुःखं न वियोगिता । न दुर्गतिर्न शोकश्च पुंसां शत्रुञ्जयस्पृशाम् ॥ अन्यतीर्थेषु यद्यात्रा–शतैः पुण्यं भवेन्नृणाम् । तदेकयात्रया पुण्यं शत्रुञ्जयगिरौ खलु ॥ प्रत्यहं पुण्डरीकाद्रिं ध्यायेद्यस्तु सुवासनः । संसारतरुमुन्मूल्य प्राप्नोति परमं पदम् ॥ इत्यादि तीर्थमाहात्म्यं पुत्रद्वयप्रियायुतः । शृण्वन् कृष्णद्विजः प्रान्ते मृत्वाद्यं तविषं ययौ ॥ ततश्च्युतोऽभवत् कृष्ण–जीवो धनमहीपतेः । पुत्रो बलिन्दमो नाम्ना धाम्नाऽभून्मदनोपमः ॥ बभूव कमलाजीव–श्चन्द्रभूमिपतेः सुतः । पद्मपुरे कलक्षोणि–पतेः पुत्रश्च चन्दनः ॥ उमापुर्यां धरापाल–नृपतेर्मदनासुमान् । कुलसारः सुतो जातो वर्यलक्षणलक्षितः ॥ चत्वारोऽपि क्रमाद्राज्यं प्राप्य शत्रुञ्जयाचले । यात्रां कृत्वा व्रतं लात्वा तेपुश्च प्रवरं तपः ॥ सर्वकर्म्मक्षयं कृत्वा सर्वेऽपि नृपनन्दनाः । क्रमात् कल्याणनगरी–मलञ्चक्रुः शुभाशयाः ॥ १७ ॥

## इति शत्रुञ्जयमाहात्म्यश्रवणे कथा ।

---

कुङ्कुणाह्वपुरे पृथ्वी–पालो भूपः प्रजां नयात् । पालयन् धर्म्मकर्म्माणि चकार प्रतिवासरम् ॥ जित्वा शत्रून् समेत्य स्व–पुरे भूपो व्यचिन्तयत् । आवासो रुचिरश्चेद्धि कार्यते स्यात्तदा वरम् ॥ ध्यात्वेति सदनं स्वर्गि–विमानस्य सहोदरम् । अकारयन्महीपालो भूयिष्ठविभवव्ययात् ॥ तदा वैदेशिकः कोऽपि तत्रायातो महीभुजा । पृष्टो ममालयाभः किं विद्यतेऽन्यत्र जल्पताम् ॥ वैदेशिको जगौ हेम–पुरे मदनभूपतेः । विद्यते सदनं वर्य–चित्रशालामनोहरम् ॥ चित्रशालाऽत्र रुचिरा कार्यते चेन्नृपस्त्वया । तदेदं सदनं स्वर्ग–विमानं सदृशं भवेत् ॥ ततो भूमिपतिश्चित्र–शालां स्फारां गृहाङ्गणे । कारयित्वाऽऽहूय चित्र–कारौ द्वौ कुशलौ वरौ ॥ दत्त्वा भूरिधनं चित्रशालां चित्रयितुं तयोः । विभज्य दत्तवान् भूपः समां भूमिं मुदान्वितः ॥ बद्ध्वाऽन्तरे पटीं वर्यां तदा चित्रकरद्वयी । लग्ना चित्रयितुं चित्र–शालां स्वस्वकलाबलात् ॥ एकेन विदधे चित्रं षण्मास्या चित्रसद्मनि । द्वितीयेन तु वरा भूमिश्चक्रे घुण्टनकर्म्मतः ॥ अन्यदा नृपतिस्तत्रा–गत एकस्य चित्रिताम् । चित्रशालां निरीक्ष्यावग् द्वितीयं चित्रकं प्रति ॥ षण्मासी तु गता चित्र–शाला न चित्रिता कथम् । द्वितीयश्चित्रकृत् प्राह चित्रितं चित्रसद्मसु ॥ ततो यवनीकां पश्चा–दकारयद्यदा नृपः । तदाऽन्या चित्रशालाऽपि चित्रिता भूभुजेक्षिता ॥ उक्तश्च भूभुजा वर्य एष चित्रकरोऽधुना । दत्तं भूरि धनं तस्मै सन्मानदानपूर्वकम् ॥ अन्यदा बहिरुद्याने धर्म्मसूरिं गुरूत्तमम् । नत्वाऽनैषीन्नृपश्चित्रशालायां स्थितिहेतवे ॥ तत्र भूपो गुरूपान्ते शृण्वानो धर्म्ममार्हतम् । शत्रुञ्जयस्य

माहात्म्यं शुश्रावेति कृतादरः ॥ यो दृष्टो दुर्गतिं हन्ति प्रणतो दुर्गतिद्वयम् । सङ्घेशार्हन्त्यपदकृत् स जीयाद् विमलाचलः ॥ सिंहव्याघ्राहिशम्बर-पक्षिणोऽन्येऽपि पापिनः । दृष्ट्वा शत्रुञ्जयेऽर्हन्तं भवन्ति स्वर्गगामिनः ॥ एकोनसप्ततिकोटा-कोटियत्र जगद्गुरुः । पञ्चाशीतिकोटिलक्षाः प्राप्तवान् पादुकापदे ॥ चतुश्चत्वारिंशत् कोटी-सहस्रैरधिका पुरा । तं सिद्धाचलमानौमि सर्वतीर्थफलप्रदम् ॥ श्रुत्वेति भूपतिः शत्रु-ञ्जयमाहात्म्यमादरात् । सस्मार सन्ततं तीर्थ-स्तोत्रं च स्मरति स्म हि ॥ स्मरन् शत्रुञ्जयं तीर्थं स्वस्थानस्थो महीपतिः । सर्वकर्म्मक्षयं कृत्वा केवलज्ञानमाप्तवान् ॥ पृथ्वीपालयतिः पृथ्वीं बोधयन् जिनधर्म्मणि । आयुःक्षये ययौ मुक्ति-नगरीं भूरिसाधुयुग् ॥ २३ ॥

इति श्रीशत्रुञ्जयस्मरणविषये पृथ्वीपालभूपकथा ।

---

अत्रानुक्तोऽपि कियान् सम्बन्धो लिखितो मया सङ्क्षेपात्—

आदिचक्री विधायाद्य-यात्रां सिद्धमहीधरे । आद्यार्हत्सदनं प्रौढ-मकारयन्मनोहरम् ॥ विम्बं मणीमयं तत्र प्रासादे प्रथमप्रभोः । अस्थापयत्तदा चक्री महामहःपुरस्सरम् ॥ लक्षाणामेकनवति-श्चतुरष्ट सहस्रयुग् । भूपाश्छत्रधरा आसन् सङ्घेशे भरते सति ॥ भूपाश्छत्रधराश्चक्रवर्त्त्योराद्यद्वितीययोः । अन्तरे चाभवन् सङ्ख्या-तीता सङ्घाधिपाः क्रमात् [ सङ्घपतयस्तेषां सङ्ख्या न विद्यते ] ॥

उद्धारा येऽभवन् शत्रु-ञ्जये जिनेन्द्रसद्मनः । तेषां सङ्ख्या मया नैव ज्ञायते मन्दबुद्धिना ॥युग्मम् ॥ चक्रिणा सगरेणादि-जिनगेहोद्धृतिस्तदा । कारिता त्रपुणा स्थापि विम्बं मणीमयं पुनः ॥ पञ्चाशत्कोटयो लक्षा पञ्चभिर्नवतिर्युता । सहस्राः पञ्च सप्तत्य-धिका सगरवाटके ॥ भूपाश्छत्रधराः सङ्घ-पतीभूय शिवाचले । आगता वृषभं देवं नन्तुं स्वस्वपुरात्किल ॥ सगरात् पाण्डवान् याव-दुद्धारा येऽभवन् वराः । ज्ञायते नहि तेषां तु सङ्ख्या विचक्षणैरपि ॥ कीरकाष्ठमया नाभि-पुत्र सद्मोद्धृतिः पुनः । कारिता पाण्डवैर्लेप-मया च प्रतिमा प्रभोः ॥ वारके पाण्डवानां तु पञ्चविंशतिकोटयः । पञ्चनवतिलक्षाश्च सहस्राः पञ्चसप्ततिः ॥ सङ्घयुक्ताः शिवक्ष्माध्रे गत्वा नत्वा जिनेश्वरम् । स्वस्मिन् सङ्घाधिपत्वं तु स्थापयामासुरादरात् ॥ ॥युग्मम् ॥ मध्ये विक्रमभानोश्च पाण्डवानां महीभुजाम् । सहस्राश्चतुरष्टौ च सङ्घेशा अभवन् क्रमात् ॥ विक्रमार्काद्वसुखक्ष्मा-प्रमाणे वत्सरे गते । विम्बस्योद्धृतिमादध्रे जावडिर्नैगमोत्तमः ॥ सम्प्रति-विक्रमादित्य-साताऽऽम-पादलिप्तकाः । कारयामासुरुद्धारं शत्रुञ्जयमहीधरे ॥ प्रासादोद्धारमादध्रे श्रीमाली वाहडाभिधः । वत्सरे द्वादशशते द्वाविंशेऽब्दे च विक्रमात् ॥ तत्र नाभेयदेवस्य विम्बं त्रिभुवनार्चितम् । वाहडः स्थापयामास नानोत्सवपुरस्सरम् ॥ ऊकेशवंशकोटीरः समरः साधुशेखरः । प्रतिमा स्थापयामास समर्हं सिद्धपर्वते ॥ जावडेः श्रेष्ठिनो मध्ये श्रीसाधोः समरस्य तु । श्राद्धा लक्षास्त्रयःपञ्च-षष्टिसहस्रसम्मिताः ॥ सङ्घेशा अभवन् भाव-साराः सङ्घाधिपाः क्रमात् । सहस्राः सप्ततिः शत्रु-ञ्जये तीर्थाभिवन्दनात् ॥ युग्मम् ॥ सङ्घेशाः क्षत्रिया वर्याः षोडशप्रमिताः क्रमात् । पञ्चदश सहस्राश्च जैनाः सङ्घाधिपा द्विजाः ॥ सहस्रा द्वादशोनर्घ्या सङ्घनाथाः कुटुम्बिनः । लेतुकाश्च नव तथा सहस्रा अभूवन् क्रमात् ॥ सङ्घेशाः कांस्यकारास्तु सहस्राः पञ्च शोभनाः । शत्रुञ्जयेऽनमन् पञ्च-चत्वारिंशद्युता जिनम् ॥ अन्त्यजाः सङ्घपाः

सप्त सहस्रास्तलहट्टिकाम् । शत्रुञ्जयस्य तीर्थस्य समीयुर्नन्तुमर्हतः ॥ एवमन्येऽपि ये सङ्घ-नाथा भूत्वा शिवाचले । नन्तुं जिनं ययुस्तेषां सङ्ख्या को वेत्ति साम्प्रतम् ॥ आसापल्ल्यां लसल्लक्ष्मी–वदिभ्यशोभितः क्षितौ । अहम्मदः सुरत्राणः पपाल पृथिवीं नयात् ॥ तत्रोकेशान्वयोत्तंसः श्राद्धः साधुशिरोमणिः । आसीत्तस्याभवत्पुत्रो गुणराजाभिधो वरः ॥.... ...जिनप्रोक्त-धर्म्मकर्म्मपरायणः ॥ विक्रमार्कनृपादष्ट पट् वेदचन्द्रसम्मिते । वत्सरे गुणराजस्तु गुरुं नन्तुं समीयिवान् ॥ तपागच्छाधिपा देवसुन्दराभिधसूरयः । धर्म्मोपदेशना मध्ये दानधर्म्मं जगुस्तदा ॥ तथाहि—" पात्रे धर्म्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमम् । भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं, भट्टादौ च यशस्करं वितरणं न क्वाप्यहो ! निष्फलम् ॥१॥ श्रुत्वेति साधुकोटीर-गुणराजो गुणाकरः । दातुमन्नं प्रवृत्तः प्राग् बुभुक्षितेषु नृष्वलम् ॥ " ददौ दिने दिनेऽन्नस्य मूढकद्वितयं स च । निजज्ञातिपरज्ञाती जीवयामास चान्नतः ॥ विस्तरादेकका यात्रां श्रीसोपारकपत्तने । कुर्वन् स चाव्ययत् पष्टि-सहस्रान् टङ्ककस्य हि ॥ मुनिसुन्दरसूरीणा–मुपाध्यायपदं स च । कारयन् व्यययत् खद्वि-मिता सहस्रटङ्ककान् ॥ तस्य भ्राता-म्बको भोगी द्रमान् पञ्चशतप्रमान् । दिनं दिनं प्रति स्फाश्वा–न्यदा निर्वृतिकं व्यधात् ॥ भग्ने निर्वृतिके तस्मिन् भार्यया हठतः स च । वैराग्यवासितस्वान्तो दीक्षां लातुमना अभूत् ॥ अमानिते प्रियाभ्रातृ-सज्जनैस्त्यक्तवैभवः । अम्बाको व्रतमादाय स्वयमस्थाच्छरद्द्वयम् ॥ मानितेऽथ कुटुम्बेन वह्वीं लक्ष्मीं व्ययन्मुदा । भ्रातुः प्रादापयद्दीक्षां गुणराजो गुरोः शयात् ॥ देवसुन्दरसूरीश–पार्श्वे शुद्धं व्रतं क्रमात् । पालयन् विदधे प्राय आचाम्लादि तपः स च ॥ सोमसुन्दरसूरीश–पार्श्वे यात्राफलं तदा । श्रुत्वा शत्रुञ्जये यात्रां कर्त्तुकामोऽभवत् स च ॥ सोमसुन्दरसूरीशो–पदेशाद्विक्रमा-र्कतः । अश्वाश्ववेदशीतांशु-प्रमिते वत्सरे १४७७ गते ॥ गुणराजो बहुं सङ्घ–माकार्य शुभवासरे । शत्रुञ्जये जिनान् नन्तु–मुत्सुकोऽजनि भावतः ॥ अहम्मदसुरत्राणात् स प्राप्य फरमाणकम् । गुणराजो व्यधाद्देवा–लयं रथस्थमुच्चकैः ॥ स्वर्णपत्रावितशृङ्ग–श्वेतोऽक्षद्वययुद्धुरः । रथो लसद्ध्वजोऽत्यन्तं सर्वेषां मोदमादधौ ॥ एवमन्ये रथा वर्या नवापि चित्तमोददाः । आनीता अन्यसङ्घेश–स्तत्र रेजुर्जिनाश्रिताः ॥ षट्त्रिंशच्छतान्येयुः सेज्जवाला मनोहराः । रथा अस्थगिताः सप्त शतानि रेजिरे पुनः ॥ चतुःशत-मिता वर्या वाहिन्यः पित्तलात्मकाः । शतानि पञ्च तार्क्ष्याणां प्रौष्ट्रिकानां शताष्टकम् ॥ शतानि पञ्च महिषा महिष्यः स्युः शताधिकम् । सुखासनशतं ह्येकं महेभ्यस्त्रीविराजितम् ॥ लक्षद्वयी मनुष्याणां साधिका रुचिरा श्रिया । गायनानां न विद्येत सङ्ख्या कौतुकिनां पुनः ॥ श्रीसोमसुन्दरश्रीमन्मुनिसुन्दर-सूरयः । जयचन्द्राभिधाचार्या जिनसुन्दरसूरयः ॥ अन्य गच्छाश्रिताश्चेलुराचार्याः शतसङ्ख्यकाः । सङ्ख्या न लभ्यते साधु–साध्वीनां तु कोविदैः ॥ स्नात्रपूजोत्सवं ग्रामे ग्रामे पुर्यां पुरि स्फुटम् । कुर्वन् सङ्घपति-स्तीर्थ–द्वये यात्रां व्यधान्मुदा ॥ जिनसुन्दरसूरीश–पदे य उत्सवोऽभवत् । तं न वर्णयितुं शक्यः कोविदै-र्निर्जरैरपि ॥ सार्द्धं लक्षत्रयं टङ्क-कानां सद्धर्म्मकर्म्मणि । व्ययितं गुणराजेन सङ्घाधिपतिना क्रमात् ॥ ५६ ॥

इति शत्रुञ्जययात्रायां साधुगुणराजसम्बन्धः ।

---

( प्रशस्तिः )

वृद्धे श्रीद्धतपागणे वसुवसुद्विन्दुप्रमे वत्सरे, १२८८ आद्यः श्रीजगचन्द्रसूरिरभवद् १ देवेन्द्रसूरिस्ततः २ । तस्माच्छ्रीश्रितधर्म्मघोषगुरुराट् ३ सोमप्रभः सूरिराट् ४ श्रीसोमात्तिलकोऽ ५ जनिष्ट सुगुरुर्देवात्तथा सुन्दरः ॥ १ ॥ तस्मिँस्तथागणे वर्द्ध–मानसंयतसन्ततौ । वभूव रुचिराचाराः सोमसुन्दरसूरयः ॥ २ ॥ तच्छिष्याः सुन्दराचारा मुनिसुन्दरसूरयः । सूरयो जयचन्द्राश्च वभूवुर्विशदाशयाः ॥ ३ ॥ तत्पट्टोल्लासिनो रत्न–शेखराभिधसूरयः । भट्टारकशिरोरत्न–शेखरा अभवन् वराः ॥ ४ ॥ तच्छिष्याः साम्प्रतं श्रीम–ल्लक्ष्मीसागरसूरयः । श्रीसोमदेवसूरीशा विजयन्ते जयश्रिताः ॥५॥ गच्छाधिराजश्रीलक्ष्मी–सागरार्यप्रसादतः । विक्रमार्कनृपादष्ट–चन्द्रेषु सोमवत्सरे १५१८ ॥ ६ ॥ श्रीशत्रुञ्जयकल्पस्य माहात्म्ये कथिताः कथाः । विनेयः शुभशीलाह्वो विदधे वोधहेतवे ॥ ७ ॥ युग्मम् ॥ ग्रन्थाग्रम् १४२२४ ॥

इति श्रीशत्रुञ्जयकल्पवृत्तिः समाप्तिमगमत् ।

---

## शुद्धिपत्रकम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३ | १ | सुरि | सूरि | २१ | २८ | भमि | भूमि |
| ३ | २८ | आनीन्ये | आनिन्ये | २३ | २५ | भूपा | भूपो |
| ५ | ३-१६-२१ | पा | पो | २५ | १२ | भतान् | भूतान् |
| ७ | २ | शुण्डकान् | शूण्डकान् | २५ | २० | नश्छलं | न छलं |
| ७ | १८ | जलपत | जलपतः | २५ | २८ | कि | किं |
| ७ | २८ | तपेते | तेपेते | २८ | ३१ | धर्मसु | धर्मसूः |
| ९ | १ | पात | पतिं | ३० | २ | समुग्धा | समुग्धा |
| १० | २५ | लाके | लोके | ३० | ९ | याऽतु | या तु |
| ११ | १८ | रिवः | रिव | ३० | २० | श्चके वरं | श्चकेऽम्बरं |
| १२ | २७ | भूपति | भूप | ३० | २७ | नैतै | नैते |
| १४ | १६ | अह | अहं | ३० | २९ | अकार | आकार |
| १६ | २४ | सम्प्रयागश्च | सम्प्रयोगश्च | ३३ | १३ | जलपता | जलपतो |
| २० | २ | ततस्त्वोग | ततस्त्याग | ३३ | २५ | कुन्तां | कुन्तीं |
| २० | ९ | द्यतं | द्यूतं | ३३ | २८ | पत्न्यौ | पत्न्योः |
| २० | १५ | भूपः | भूपो | ३४ | ७ | मानसी | मानसा |
| २१ | ५ | मिष्यासं | मिष्वासं | ३७ | ३२ | दौषर | दौषर |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३८ | १६ | नक्ष्यति | नङ्क्ष्यति | ५७ | २९ | वस्सं | वरसं |
| ३९ | ५ | दुंन्दभ | दुंन्दुभ | ५९ | १ | ाक | किं |
| ३९ | २६ | गृप्त | गुप्त | ६१ | ४ | तृप्तन्ति | तृप्यन्ति |
| ३९ | २७ | जींम | जिम | ६२ | २८ | राज्ञ्या | राज्ञ्या |
| ३९ | ३१ | कामान्धा | कामान्धो | ६३ | २७ | जिधृक्षया | जिघृक्षया |
| ४० | २९ | ट्टे सृ | ट्टेऽसृ | ६६ | १ | प्रोचू | प्रोचु |
| ४१ | २२ | काचक | कीचक | ६६ | ६ | विणीआ | विणीओ |
| ४२ | ३ | सम्मवः | सम्भवः | ६९ | २४ | क्रमाद्व | क्रमाद्‌व |
| ४५ | २० | हता | हतो | ७१ | ३ | पया | पयो |
| ४५ | २८ | स्त्वये | स्तवे | ७१ | ३२ | जगत्रयः | जगत्त्रयः |
| ४६ | १६ | कूपाद | कूपोद | ७२ | १ | सप्तात | सप्तति |
| ४६ | १९ | सुनु | सूनु | ७२ | ३२ | तटागं | तटाकं |
| ४६ | २३ | द्वारका | द्वारिका | ७५ | १९–२२ | जंन | जुंन |
| ४६ | ३२ | रिपाः | रिपोः | ७९ | ६ | शूकर्याः | सूकर्याः |
| ४७ | ७ | दर्शा | दशा | ८० | २२ | रस्येव | रस्त्येव |
| ४८ | १ | ारपून् | रिपून् | ८० | ३० | चतुणा | चतुर्णां |
| ४८ | ६ | सवलरपि | सवलैरपि | ८२ | ३० | वदे | वंदे |
| ४८ | १३ | द्राणं | द्रोणं | ८३ | २८ | यातो | यान्तो |
| ४९ | १ | तस्यापरि | तस्योपरि | ८४ | २ | सुआ | सुओ |
| ४९ | २२ | भूङ्क्ते | भुङ्क्ते | ८४ | १४ | भूरिशा | भूरिशो |
| ५० | ५ | समा | समो | ८७ | १ | सूनू | सूनु |
| ५१ | १५ | स्वस्तिकं | सुस्थितं | ८८ | २७ | पुञ्छञ्च | पुच्छञ्च |
| ५२ | ४ | गृह | ग्रह | ९० | ५ | गन्थि | ग्रन्थि |
| ५३ | ३ | सः | स | ९० | १५ | ताह | तर्हि |
| ५४ | ९ | राट ! | राट् ! | ९१ | १३ | मुक्त | मुत्क |
| ५४ | २१ | भुजाः | भुजा | ९२ | १५ | कञ्चन | काञ्चन |
| ५५ | २४ | हाल | ज्ञात | ९२ | ३२ | यान्तां | यान्तीं |
| ५५ | २६ | तीथ | तीर्थ | ९३ | १९ | राट ! | राट् ! |
| ५६ | १८ | ददृध्यौ | दध्यौ | ९३ | २१ | ध्वनन् | ध्वनद् |
| ५६ | २२ | दशा–वर्यो | दश–वर्या | ९३ | २९ | लक्षाश्च | लक्षा च |
| ५६ | ३३ | वींजआ | वीजओ | ९३ | २९ | कियतीः | कियती |
| ५७ | १ | राह्व | राह्वे | ९४ | ८ | गुरीशौ | सूरीशौ |